**स०**-चः समुच्चये।कफो दोषमध्ये समुच्चीयते।इत्यनेन प्रकारेण समासतः संक्षेपात् त्रयो दोषाः । ननु प्रस्तुतत्वादिह धातुसंज्ञया वातादयो निर्देष्टुं न्याय्या न दोषसंज्ञया । अस्त्येवैतत् किंतु रसादिदूषणपूर्वकमेषां विकारकरणे सामर्थ्यमिति प्रदर्शनार्थं दोषसंज्ञया ते निर्दिष्टा न धातुसंज्ञया । नह्येते धातुरूपा जातु विरुद्धत्वं कुर्वते देहधारणवर्धकत्वात् । एते मुनिनापि चरकेण पूर्वं दोषसंज्ञयैव निर्दिष्टाः । तथा च तद्ग्रंथः । वायुः पित्तं कफश्चोक्तः शरीरे दोषसंग्रह इति । वातपित्तकफा दोषास्त्रय एव समासत इत्येवं निर्देशे कर्तव्ये यदेषां पृथग्विभक्त्या निर्देशः कृतः स प्रधानत्वख्यापनार्थः । बहुवचनादेव त्रित्वे लब्धे त्रिग्रहणं नियमार्थम् । त्रय एव दोषा न चतुर्थोऽस्तीति । तंत्रांतरीया हि चतुर्थं दोषमीहंते । तेषां ह्ययमभिप्रायः । यथा दोषाणां स्थानलक्षणकार्यविकारचिकित्साद्युपदेशस्तथा रक्तस्यापि । तत्र स्थानं सर्वदेहव्यापित्वेऽपि प्लीहयकृती । लक्षणं च पद्मेंद्रगोपहेमादीत्यादि । कार्यं देहस्योत्पत्तिस्थिती । विकारो विसर्पप्लीहादि । चिकित्सा सिराव्यधादिकं कर्मेति । तदेतदसारम् । वातादयो ह्यस्य दूष्यस्य सतः कथं दोषत्वं कर्तुं पारयंति । यतः प्राधान्यादन्वर्थनामत्वाच्च वातादीनामेव दोषत्वं न रसादीनाम् । वातादयो हि स्वातंत्र्यात्प्रधानाः । दूषयंतीति दोषा इति तेषामेव चानुगतार्था संज्ञा प्रवृत्ता । रसाद्यास्तु पारतंत्र्यादप्रधानाः । ते च वातादिभिर्दूष्यंत इति दूष्याः । तस्माद्रक्तस्य दूष्यत्वं न दोषत्वम् । यद्येवं वातादीनामन्योन्यदूषणाद्दूष्यत्वं स्यात् । पित्तेन हि श्लेष्मा दूष्यत इति दृश्यते । यथा पांडुरोगनिदाने । पित्तप्रधाना इत्यारभ्य यावत् श्लेष्मत्वग्रक्तमांसानि प्रदूष्येत्यादि । तदत्र श्लेष्मा पित्तेन दूष्यते तथा श्लेष्मवद्रक्तस्याऽपि दोषत्वप्रसंग इति यो मन्येत तं प्रति ब्रूमः । विषम उपन्यासः । वातादयो हि सर्वदैव रसादीन् दूषयंति नतु रसादयः कदाचिदपि वातादीन् दूषयंति ।वातादीनां तु मध्याद्यदि कश्चिद्दूष्यति स तेषामन्यतमेन । तथा च प्रकृतिलक्षणे वातप्रकृतेः पित्तप्रकृतेश्च यथा लक्षणं दृश्यते नैवं रक्तप्रकृतेः । तथा च तंत्रकारेण ज्वरादयो वातादिविशेषणविशिष्टा एवोक्ताः । यथा वातज्वरोऽयं पित्तज्वरोऽयं श्लेष्मज्वरोऽयम् । न तु रक्तज्वरोऽयमिति निर्दिष्टः । येऽपि रक्तजा विकारा विसर्पादयस्तेष्वपि घृतदग्धन्यायेन व्यपदेशो बोध्यः । यथा घृतस्यांतर्हितेनाग्निना दग्धो

---

इत्यादिवक्ष्यमाणप्रपञ्चस्य संक्षेपः । ननु शोणितस्यापि दोषत्वान्नात्र संग्रहः साधुः, यतो रक्तस्यापि वातादिवद्विशिष्टहेतुलक्षणविकारचिकित्सितानिर्देशः कृतः । तत्र हेतुनिर्देशो यथा— "काले चानवसेचनात्"इत्यादि । लक्षणं च यथा-"तपनीयेन्द्रगोपाभं पद्माऽलक्तकसन्निभम्" इत्यादि । रक्तविकाराश्च रक्तार्शःप्रदररक्तपित्तादय उक्ताः । उपक्रमश्च "स्रावणं शोणितस्य तु" इत्यादिनोक्ताः । तथा दोषसंज्ञा च चरके कृता । यदुक्तं "कफे वाते जितप्राये पित्तं शोणितमेव वा । यदि कुप्यति वातस्य क्रियमाणे चिकित्सिते । यथोल्वणस्य दोषस्य तत्र कार्यं भिषग्जितम्" इति । तथाच तन्त्रान्तरेऽपि शल्ये शोणितं दोषत्वेनोक्तं, "तैरेतैः शोणितचतुर्थैः" इति वचनात् । नैवं, दोषो हि स्वतन्त्रदूषणात्मक उच्यते । यतो न वातादयो वृद्धाःकिंचिदपेक्ष्य दूषयन्ति किन्तु स्वत एव,शोणितं तु दुष्टवातादिसंसर्गमपेक्ष्यैव दूषकं भवति । नहि शोणितं विकृतवातादिसम्बन्धमन्तरेण विकृतं स्यात्सर्वदा वातादिजनकैरेव शोणितदुष्टेः । तथा सर्वदा वातादिलक्षणयुक्तस्यैव शोणितस्य दुष्टत्वात् । यश्च हेत्वादिविशेष उक्तः स वातादियुक्तस्यैव शोणितस्य स्यात् । एतेन वातादय एव तत्रापि दूषणात्मकाः । शोणितं तु स्वप्रमाणातिरिक्तमपि दूष्यमेव, न च दूष्यस्य हेत्वादयो विशिष्टा न भवन्ति । यतो मांसादीनामपि हेत्वादिविशेषोऽस्ति, मांसदुष्टौ "मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतो दिवा" इत्यादि वक्ष्यति । मांसदुष्टिलक्षणं "शृणु मांसप्रदोषजान्" इत्यादिना विविधाशितपीतीये वक्ष्यति यान् विकारांस्ते ज्ञेयाः । यत एतानेव मांसदोषविकारान् स्रोतोविमाने मांसदुष्टिलक्षणत्वेनातिदेशादभिधास्यति । दुष्टमांसविकारश्चाधिमांसार्बुदादय उक्ताः । उपक्रमश्च "मांसजानां तु संशुद्धिः शस्त्रक्षाराग्निकर्म च" इत्युक्तः । तस्माद्दूष्याधिकारे दोषकृते कार्ये दूष्येन व्यपदेशः, रक्तजोऽयं मांसजोऽयमित्यादि । यथा—स्नेहाधारेण वह्निना दग्धे स्नेहदग्ध इति व्यपदेशः । दोषसंज्ञा तु पीडाकर्तृत्वसामान्याददोषेऽपि स्याद्यथा—"स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशनैः" । इत्यत्र पुरीषमेव दोषत्वेनोक्तम् । सश्रुते तु शोणितस्य दोषत्वम्, व्रणेषु प्रायः शोणितदुष्टिदर्शनादुपचरितमेवोक्तम् । यतः प्रदेशान्तरे व्रणप्रश्ने वातादयस्त्रय एव तत्राप्युक्ताः "वातपित्तश्लेष्माण एव देहसंभवहेतवो भवन्ति" इत्यादिना । किंच यदि शोणितं दोषः स्यात्तदा वातादिवत्प्रकृत्यारम्भकं स्यात् । नचारभते । तस्मात्त्रय एव दोषा इति सिद्धम् ।

ग्धृतदग्ध इत्युच्यते तद्वद्रक्तस्थैर्वातादिभिर्दोषैर्जातो रक्तजोऽयमित्युच्यते । यत्र कचिद्रक्तस्य दोषसंज्ञा कुष्ठचिकित्सितादौ दृश्यते सा संज्ञामात्रेणैव नासाऽनुगतार्था । तस्य दूष्यत्वेनैव प्रवृत्तिः । तथा चैवं पुरीषादीनामपि संज्ञामात्रेण व्यवहारो दृश्यते । यथा न घृतं बहुदोषाय देयं यन्न विरेचनं तेन दोषायेत्यादि । अत्र पुरीषस्य दोषत्वमुक्तम् । तथोदरचिकित्सिते चरकस्य ज्वरचिकित्सिते वा अस्य । दोषेण भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते। तस्मादादोषपचनाज्ज्वरितानुपवासयेदिति। तदेवं वातादयस्त्रय एव दोषा न रक्तमिति स्थिरमेतत्समासतो विस्तरतस्तु संसर्गसन्निपातक्षयसमतादिभेदभिन्नास्तारतम्यपरिकल्पनया च कल्प्यमाना आनंत्यं यांति ॥ ७ ॥

प०--यदर्थं चिकित्सा तान् दोषानाह–तत्र वायोः प्रागुपादाने कारणं वक्ष्यति "विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् । स्वातन्त्र्याद्बहुरोगित्वाद्दोषाणां प्रबलोऽनिलः ॥" तदनन्तरं प्रायेणैरिव हेतुभिः पित्तस्य परिग्रहः । तथा कफस्य हीनशक्तित्वादल्परोगित्वादन्ते निर्देशः । चशब्दो दोषान्तरास्तित्वसूचनार्थम् । दोषान्तरं रजस्तमसी उक्तमपि च केषांचित्। इतिशब्दः परसमाप्तिवचनम्। तावन्त एवादौ वक्तव्यतया परिसमाप्ताः । त्रय इति ग्रहणं नियमार्थम् । त्रय एव दोषा न चतुर्थोऽस्तीति यथाऽन्यतन्त्रोक्तादिति नियमयति । यतो व्याधिजनने केवलस्य तस्य सामर्थ्यं न दृष्टम् । तथा चाहुः–" पारतन्त्र्यान्न दोषत्वं शोणितस्यान्नदोषवत् । तैलदाहवदस्यायं व्यपदेशो गदः कृतः॥", तथा संग्रहेऽप्युक्तम्–"रसादिस्थेषु दोषेषु व्याधयः सम्भवन्ति ये । तज्जानित्युपचारेण तानाहुर्धृतदाहवत् ॥" रस आदिर्येषां ते रसादयः सप्तधातवः । तथाहि—रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः । तेषु तिष्ठन्ति । रसादिषु रसादिस्थेषु दोषेषु ये व्याधयः सम्भवन्ति उत्पद्यन्ते तानाहुः कथयन्ति । तत् जानन्ति तज्ज्ञाः आयुर्वेदवेद्वांस इत्येवंप्रकारं वक्ष्यमाणम् उपचारेण उपाधिकगुणाः किञ्चित् घृतदाहवत् । घृतेन दाहो घृतदाहः घृतदाह इव घृतं नैसर्गिकं गुणैः शीतलं तदेवाग्निना सन्तप्तम् अग्निरिव दहति तद्वत् । रसाद्या धातवः स्वभावेनाविकारिणस्तेऽपि वातादिदोषदूषिता रोगान् जनयन्तीत्यर्थः । दूषणात्मकत्वाद्दोषाः समासतः संक्षेपतः, विस्तरतः संसर्गसंनिपातक्षयसमतावृद्धिभिस्तथा तारतम्यपरिकल्पनया विकल्पमाना वातादय आनन्त्यं भजन्ते ॥ ७ ॥

हे०-दोषभेदानाह-वायुः पित्तं कफश्चेति-चकाराद्रक्तमपि दोषान्तरं सूचयति तेऽत्र त्रयः त्रित्वं च समासतः संक्षेपेण । विस्तरतस्तु प्राणादिपाचकाद्यवलम्बकाद्यवान्तरभेदप्रभेदैरानन्त्यं समासत इति । अध्यायपरिसमाप्तेः प्रतिवाक्यं संबन्धनीयम् ॥ ७ ॥

**विकृताऽविकृता देहं घ्नंति ते वर्तयंति च ८**

स०–विकृताः स्वभावप्रच्युता देहं घ्नंति । देहपदमत्र जीवितोपलक्षणार्थम् । जीवितेन विना कुर्वतीत्यर्थः । अविकृता पुनर्देहं वर्तयंति प्रापयंति । विकृतानां दोषाणां प्रागुपन्यासस्तेषां प्रकृत्यवस्थाने नित्यं भिषजा यत्नवता भाव्यमिति सूचनार्थम् । अन्यथा महान्प्रत्यवायः स्यात् ॥ ८ ॥

प०--ते वातादयो विकृता अविकृता घ्नन्ति वर्तयन्ति च । विकृताः स्वरूपात् प्रच्युताः शरीरं घ्नन्ति नाशयन्ति पीडयन्ति । अविकृताः स्वरूपस्थिताः समत्वेनावस्थिताः शरीरं वर्तयन्ति स्थापयन्ति ॥ ८ ॥

हे०-दोषावस्थाद्वयमाह-विकृताविकृतेति-तच्च विकृतत्वमविकृतत्वं चेति। तत्र विकृता देहं घ्नन्ति, अविकृता देहं वर्तयन्ति क्रमादितिवक्ष्यमाणं पदं वाक्यत्रयशेषत्वेन व्याख्यानादिह संबध्यते ॥ ८ ॥

इदानीमेषां व्यापिनामपि विशिष्टस्थानं विवक्षुराह—

**ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः९**

स०–अधश्च मध्यश्चोर्ध्वं चाधोमध्योर्ध्वानि तानि संश्रय आश्रयो येषां तेऽधोमध्योर्ध्वसंश्रयाः । हृच्च नाभिश्च हृन्नाभी

१ वातपित्तश्लेष्माण एव देहसम्भवहेतवस्तैरेवाव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिरतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्नाः प्रलयहेतवः इति सुश्रुतेनोक्तम् व्रणप्रश्नाऽध्याये ।

तयोर्हृन्नाभ्योस्ते वातादयो व्यापिनोऽपि सर्वशरीरचरा अपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः।विशेषेणेति वाक्यशेषः। किमिदं वाक्यशेषत्वं नाम । उच्यते । यस्मिन् खलु पदेऽनुच्चार्यमाणेऽर्थगतिं पश्यंत्याचार्यास्तच्छेषमित्युच्चारणकाले तेन विनाऽभिधेयसिद्धेर्व्याख्याकाले तु मंदबुद्धिव्युत्पत्तये व्याचक्षते । तत्र नाभेरधो वायोः स्थानम् । हृन्नाभ्योर्मध्ये पित्तस्य । हृदयादूर्ध्वं कफस्य । ननु हृन्नाभ्योरिति कथं निर्देशो यावता प्राण्यंगत्वादेकवद्भावे सनपुंसकमिति नपुंसकत्वे हृन्नाभि इति प्राप्नोति । अत्र ब्रूमः । प्राण्यंगानां समाहार एव द्वंद्व इत्यस्य प्रायिकत्वान्नैकवद्भावस्तदभावाच्च तदाश्रयं नपुंसकत्वं न भवति। तथा चोक्तम् । सर्वत्र द्वंद्वो विभाषयैकवद्भवतीति । दृश्यते चाऽन्यत्रापि । यथा च रुद्रभट्टः । कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते इत्यादि । तथाऽस्यैव ग्रंथकृतः शिरःपृष्ठोरसां भूमिरिति । तथा जानुजंघोरुकटयंसहस्तपादांगसंधिषु । तथा वायुः संध्यस्थिमज्जस्वित्यादि । तस्माद्हृन्नाभ्योरिति प्रयोगो न्याय्य एव ॥ ९ ॥

प०--ते दोषा वातादयो व्यापिनोऽपि सकलशरीरगोचरा अपि सन्तो नियतदेशस्था विज्ञेयाः । **हृच्च नाभिश्च हृन्नाभी तयोः हृन्नाभ्योः अधश्च मध्यं च ऊर्ध्वं च एतानि संश्रयो येषां ते तथोक्ताः । अस्यायमर्थः । हृन्नाभ्योरधो वायोः स्थानम् । तयोर्मध्ये पित्तस्य । तयोरूर्ध्वं कफस्य स्थानम् ॥ ९ ॥**

हे०--दोषस्थानान्याह-ते व्यापिन इति। तानि च-त्रीणि हृन्नाभ्योरधो वायोः स्थानं, मध्ये पित्तस्य, ऊर्ध्वं कफस्य। सर्वदेहव्यापित्वेऽपि यो यस्मिन्नितरामाधिक्येन वर्तते तत्तस्य स्थानं, हृन्नाभिशब्दाभ्यां तदुभयावधिः प्रदेशो लक्ष्यते अन्यथा हृदोऽप्यधोवायुर्नाभेरप्यूर्ध्वं कफस्तिष्ठेत् ॥ ९ ॥

अप्येषां सकलकालव्यापिनामपि नियतकालत्वं दर्शयन्नाह--

**वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् १०**

स०-वयश्चाऽहश्च रात्रिश्च भुक्तं च वयोऽहोरात्रिभुक्तानि तेषां क्रमाद्यथासंख्यं ते वातादयोऽन्तमध्यादिगा भवंति। अंतश्च मध्यश्चादिश्चांतमध्यादयस्तेषु गच्छंतीत्यंतमध्यादिगाः। अन्यत्रापि दृश्यत इति डः । तेनायमर्थो वयसः मनुष्यायुषोऽन्तः पश्चिमो भागो वायोः कोपकालः । मध्यो भागः पित्तस्य। आद्यो भागः कफस्यैवमह्नो रात्रेश्च योज्यम् । भुक्तमाहारस्तस्यांते जठराग्निसंयोगवशाद्रसानां जीर्णप्रायावस्था वायोः कोपकालः । मध्यो विदाहावस्था पित्तस्य । आद्यावस्था तु यस्यां मधुरीभाव आहारस्य तत्र कफस्य कोपकालः । यद्यपि चाहारस्य जठराग्निसंयोगवशाद्बह्वयोऽपि सूक्ष्मा अवस्थाः संभाव्यंते तथाप्येतासामेव सुतरामुपयोगित्वादिह निर्देशः । तथा हि। एता एव तिस्रोऽवस्थाः स्वकर्म दर्शयंति । वक्ष्यति हि। आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् । फेनीभूतं कफं यातं विदाहादम्लतां ततः । पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः । अग्निना शोषितं पक्वं पिंडितं कटुमारुतमिति ॥ १० ॥

प०--ते दोषा वयआदीनां अन्तमध्यादिगा वृद्धिभाजो भवन्ति क्रमात् परिपाटया न व्युत्क्रमतः।कालकृता शरीरस्यावस्था यौवनादिर्वयः। अहर्दिनं रात्रिर्यामिनी । भुक्तमशितम् । **वयश्चाहश्च रात्रिश्च भुक्तं च एतानि तेषाम् अन्तश्च मध्यं च आदिश्च तेषु गच्छन्तीति अन्तमध्यादिगाः । तेनैतदुक्तं भवति । वयसोऽन्ते वृद्धावस्थायां वायोर्वृद्धिः । मध्ये पित्तस्य यौवनावस्थायां वृद्धिः । आदौ बाल्यावस्थायां कफस्य वृद्धिः । तथा--अह्नोऽवसाने वायोर्वृद्धिः अह्नो मध्ये पित्तस्य वृद्धिः अह्नः पूर्वभागे कफस्य । रात्रेरवसाने वायोर्वृद्धिः रात्रिमध्ये पित्तस्य रात्र्यादौ कफस्य वृद्धिः। भुक्तावस्थायां वायोर्वृद्धिः भुक्तमध्येऽम्लावस्थायां पित्तस्य भुक्तस्यादौ मधुरावस्थायां कफस्य वृद्धिः ॥ १० ॥**

हे०--दोषकालानाह--वय इति।तत्र वयः शरीरपरिणामः तस्यान्तः वृद्धत्वावस्था वायोः कालः। मध्यः यौवनावस्था पित्तस्य। आदिर्बाल्यावस्था कफस्य । अह्नोऽन्तः अपराह्णः वायोः । मध्यो मध्याह्नः पित्तस्य। आदिः पूर्वाह्णः कफस्य। रात्रेरन्तोऽपररात्रः वायोः । मध्यो मध्यरात्रः पित्तस्य । आदिः पूर्वरात्रः कफस्य । भुक्तं निगीर्णमन्नं तस्यान्तः पक्वावस्था वायोः । मध्यो विदग्धावस्था पित्तस्य । आदिरामावस्था कफस्य । व्यापिनोऽपीत्यनुवर्तते कालविशेषस्तु स्थानविशेषवत् ॥ १० ॥

अधुनाऽग्निस्वरूपं प्रस्तौति--

**तैर्भवेद्विषमस्तीक्ष्णो मंदश्चाग्निः समैः समः ११**

**स०**-तैश्च वातादिभिः पुंसो यथाक्रमेणाग्निर्विषमस्तीक्ष्णो मंदश्च भवेत्। वातादयश्च समुदिता एव शरीरजनने समर्था इत्यवश्यं सर्वैरेव भवितव्यम्। इह तु य एकस्य व्यपदेशस्तत्रोत्कर्षो द्रष्टव्यः। वातोत्कर्षेण विषमः पित्तोत्कर्षेण तीक्ष्णः कफोत्कर्षेण मंद इति।समैर्हान्युत्कर्षवर्जितैः समः। लक्षणमेषामंगविभागे शारीरे वक्ष्यति। यः पचेत्सम्यगेवान्नमित्यारभ्य यावच्चिरात्पचेदिति। यत्र तु द्वयोर्दोषयोरुत्कर्षत्वं तत्र संद्वैधेन स्वधिया कल्प्यम्। यथा वातपित्तयोरुत्कर्षे वायोर्योगवाहित्वात्तीक्ष्णः। एवं वातकफयोरुत्कर्षे मंदः। कफपित्तयोस्तूत्कर्षे आहारविशेषवशात्कदाचित्तीक्ष्णः कदाचिन्मंद इति ॥ ११ ॥

**प०**-तैर्वातादिभिः क्रमादग्नयो विषमादयश्चत्वारो भवन्ति। विषमोऽग्निर्वातेन तीक्ष्णोऽग्निः पित्तेन मन्दोऽग्निः कफेन समोऽग्निः समैस्त्रिभिर्दोषैर्हान्युत्कर्षवर्जितैः। यः सम्यक् भुक्तमन्नं चिरात्पचति कदाचिदसम्यगप्यभ्यवहृतम् आश्वेव पचति स विषमः। यः सर्वदान्नमसम्यगुपयुक्तं शीघ्रं पचति स तीक्ष्णः। यः सर्वदान्नमसम्यगेवोपयुक्तं चिरात्पचति स मन्दः। अन्त्रकूजनाटोपादीन् कुर्वन् यस्त्वग्निः सम्यगन्नमुपयुक्तं शोभनं कृत्वा पचति स समः ॥ ११ ॥

**हे०**-अग्न्यवस्थाविशेषाख्यं दोषकार्यमाह-तत्र वातेनाग्निर्विषमो भवेत् तीक्ष्णः पित्तेन मन्दः कफेन क्रमादित्यनुवर्तते समैस्तु त्रिभिः समः पारिशेष्याद्विषमादयस्त्रयो विषमैः। वैषम्यं च वृद्धिरेव क्षीणानामीदृक्कार्यादर्शनात्। अनियतपाको विषमः, आशुपाकस्तीक्ष्णः, चिरपाको मन्दः शेषः समः। उक्तं हि संग्रहे--"यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समैः। पाकोऽग्नौ युक्तयोर्द्राक्तु तीक्ष्णे मन्दे पुनश्चिरात् ॥" इति युक्तयोरुचितयोः संसर्गसन्निपातजावस्थानिदर्शनं तन्त्रयुक्त्या ज्वरवदवगन्तव्यम्। यथा वातकफजे ज्वरे शीतं, वातपित्तजे दाहः वायोर्योगवाहित्वात्। पित्तकफजे सन्निपातजे च पर्यायेण दाहशीते मिथो विरुद्धत्वेन युगपदसम्भवान्न चोभयोरभावः विरुद्धकार्याणामप्यारंभकत्वदर्शनात्। उक्तं च संग्रहे--"आरम्भकं विरोधेऽपि मिथो यद्वद्गुणत्रयम्। विश्वस्य दृष्टं युगपद्व्याधेर्दोषत्रयं तथा ॥" इति। तद्वदिहापि वातपित्ताभ्यां तीक्ष्णत्वं, वातकफाभ्यां मन्दत्वं, पित्तकफाभ्यां सन्निपाताच्च पर्यायेण तीक्ष्णत्वमन्दत्वे। नचैवं रूक्षहानिः अव्यवस्थिततीक्ष्णमन्दत्वस्य वैषम्ये अन्तर्भावात् ॥ ११ ॥

अग्निचातुर्विध्यमुक्त्वा तदाश्रयस्य कोष्ठस्य चातुर्विध्यं विवक्षुराह—

**कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि १२**

**स०**-तैर्वातादिभिर्यथाक्रमं क्रूरमृदुमध्यलक्षणः कोष्ठो भवति। वातोत्कर्षेण क्रूरः। पित्तोत्कर्षेण मृदुः। कफोत्कर्षेण मध्यः। समैः पुनरेतैर्हान्युत्कर्षवर्जितै-

---

१ अग्निषु तु शारीरेषु चतुर्विधो विशेषो बलभेदेन भवति। तद्यथा—तीक्ष्णो मन्दः। समो विषम इति। तत्र तीक्ष्णोऽग्निः सर्वापचारसहस्तद्विपरीतलक्षणस्तु मंदः। समस्तु—खल्वपचारतः विकृतिमापद्यते, अनपचारतस्तु प्रकृताववतिष्ठते। समलक्षणविपरीतलक्षणस्तु विषम इत्येते चतुर्विधा भवन्त्यग्नयश्च चतुर्विधानामेव पुरुषाणाम्। तत्र समवातपित्तश्लेष्मणां प्रकृतिस्थानां समा भवन्त्यग्नयः। पित्तलानां तु पित्ताभिभूते ह्यग्न्यधिष्ठाने तीक्ष्णा भवन्त्यग्नयः। श्लेष्माभिभूते ह्यग्न्यधिष्ठाने मन्दा भवन्त्यग्नय इति रोगानीकविमाने **चरकः।**

शारीरेष्विति सामान्यवचनेन सर्वशरीरगतानग्नीन् ग्राहयति, विवरणे तु जठराग्निरेव "तीक्ष्णः सर्वापचारसहः" इत्यादिना यच्चातुर्विध्यमुक्तम्, तज्जठराग्नितीक्ष्णतादिमूलत्वगग्न्यादितीक्ष्णत्वादिरेवेति ज्ञेयम्। वचनं हि—"तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः" इति। यद्यपि समोऽग्निः शस्तत्वेनाग्रेऽभिधातुं युज्यते, तथापि समतश्च तीक्ष्णस्यैव प्राधान्योपदर्शनार्थमिहाग्रेऽभिधानम्। समस्य हि प्राधान्यं निर्विकारत्वेनैव सुस्थितम्, तीक्ष्णः सर्वापचारसहत्वेन प्रधानम्। तेन, तद्वीतलक्षणं सिध्यति,—स्वल्पापचारमपि यो न सहते,स मन्द इत्यर्थः। समलक्षणविपरीतलक्षण इति। कदाचिद्विषमोऽपचारादपि न विक्रियते। कदाचिद्विक्रियते। समवातपित्तश्लेष्मणामित्युक्तेऽपि 'प्रकृतिस्थानम्' इति पदम्,वृद्धानां समवातपित्तश्लेष्मणां प्रतिषेधार्थम्। 'प्रकृति' शब्दस्य कारणाद्यनेकार्थताव्युदासार्थं समवातपित्तश्लेष्मणमिति कृतम्। वाताभिभूतेऽन्यधिष्ठान इति वचनेन वातलानामपि यदेवाग्न्यधिष्ठानोपघातो वातेन क्रियते, तदेव वैषम्यं भवति। एवं पित्ताभिभूत इत्यादावपि व्याख्येयमिति **चक्रपाणिः।**

र्मध्य एव कोष्ठः । क्रूरादीनां तु लक्षणं वमनविरेचनविधौ वक्ष्यति । ननु समैर्वातादिभिः कथं मध्यकोष्ठता स्यादिति । ब्रूमः । समानां वातादीनां मध्ये द्वयोर्वातपित्तयोः स्वं स्वं क्रूरकोष्ठत्वमृदुकोष्ठत्वलक्षणाख्यं च विरुद्धं कर्म युगपत्कर्तुं न घटते । तृतीयस्तु सम एव कफः सोऽनयोर्मध्ये मध्यमां वृत्तिमाश्रित्य स्थितो नैकेनापि सह विरुध्यते । अतएव तत्कार्यं मध्यकोष्ठतालक्षणं ते वातपित्ते निषेद्धुं नैव घटेते। एवं च तेनावश्यमात्मीयं मध्यकोष्ठतालक्षणं कर्म कर्तव्यं यतो वातकर्मणः क्रूरकोष्ठतालक्षणस्य पित्तकर्मणो मृदुकोष्ठतालक्षणस्य च विरुद्धत्वात् । अतो मध्यकोष्ठतैव समैर्वातादिभिर्न्याय्या । इयांस्तु विशेषः । पूर्वो यो मध्यकोष्ठः सोऽवश्यं प्रमाणाधिकेन कफेन जन्यते । मध्यः स्यात्तैः समैरपीति समग्रहणलिंगात् । इतरस्तु मध्यकोष्ठः समदोषमध्यस्थितेन समेनैव स्वप्रमाणस्थितेन श्लेष्मणा भवतीत्यनया रीत्या हेतुभेदादन्यत्वम् । तथा मध्यकोष्ठयोर्लक्षणभेदोऽपि दृश्यते । यथा । श्लेष्माधिकश्छर्दयते हि दुःखं विरिच्यते मंदकफस्तु सम्यगिति । तदयमत्रार्थः । श्लेष्माधिके मध्यकोष्ठे न सम्यग् विरेचित्वं समकफे तु मध्यकोष्ठे सुविरेचित्वमिति ॥ १२ ॥

प०--तैश्च वातादिभिः कोष्ठश्चतुर्विधो भवति। वातोत्कर्षेण क्रूरः कोष्ठो भवति । श्यामादिभिर्दुर्विरेच्यः। पित्तोत्कर्षेण मृदुः कोष्ठो भवति । मस्तुक्षीरादिभिः सुविरेच्यः । कफोत्कर्षेण मध्यः कोष्ठ आरग्वधादिभिर्विरेच्यते । समैस्त्रिभिर्दोषैर्मध्य एव न क्रूरो न मृदुः ॥ १२

हे०--कोष्ठावस्थाविशेषाख्यं दोषकार्यमाह--कोष्ठ इति । तत्र वातेन क्रूरः कोष्ठः स्यात्, पित्तेन मृदुः, कफेन मध्यः,त्रिभिः समैरपि मध्यः। अत्रापि पारिशेष्यं पूर्ववद्व्याख्येयम् । यथा-पारिशेष्यात् क्रूरादयस्त्रयो विषमैः। वैषम्यं च वृद्धिरेव क्षीणानां च ईदृक्कार्यादर्शनात्। मध्यमेन शोधनेन हीनयोगी क्रूरः, अतियोगी मृदुः,सम्यग्योगी मध्यः संसर्गसन्निपातजास्तेषामवस्थाः पूर्ववत् योगवाहित्वं त्वत्र कफस्य यदाह-खारणादिः--"वातोल्बणा स्याद्ग्रहणी क्रूरकोष्ठस्य देहिनः । पित्तला मृदुकोष्ठस्य योगवाही तयोः कफः॥" इति तेन वातकफाभ्यां क्रूरः,वातपित्ताभ्यां कफपित्ताभ्यां सन्निपाताच्च मृदुः।ननु"बहुवातश्लेष्मभ्यां क्रूरः" इति सुश्रुतेन बहुकफस्य क्रूरत्वमुक्तम् । इह तु मध्यमत्वम्। इति विरोधः, मैवं सुश्रुतवाक्यस्य संसर्गपरत्वात् ॥१२॥

इदानीं प्रकृतिस्वरूपं प्रस्तौति--

**शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ।**
**तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ।**
**समधातुः समस्तासु श्रेष्ठा निंद्या द्विदोषजाः १३**

स०--तैश्च वातादिभिस्तिस्रः प्रकृतयः पृथग्भवेयुर्हीनमध्योत्तमाः । प्रकृतिः शरीरस्वरूपम् । शुक्रार्तवस्थैरिति शुक्रं पितुर्द्वित्रिबिन्दुकावस्थं रेतः । ऋतौ भवमार्तवं मातुर्द्वित्रिबिंदुकावस्थं शोणितम् । शुक्रं चार्तवं च तत्र तिष्ठंतीति शुक्रार्तवस्थास्तैस्तथाविधैर्जन्मादौ गर्भाधानकाले जन्मप्रारंभे गर्भादावित्यर्थः । ननु च यदा वातादयोऽधिकाः शुक्रार्तवे तिष्ठंति तदा कुतः शरीरस्य निष्पत्तिर्भवतीति । ततश्च यो दोषाणामधिको भावः सैव विकृतिः । तत्कथं दोषा आधिक्यं प्राप्ताः प्रकृतेः कारणतामुत्सहंते । विकृतत्वान्न हि विकृतिः कदाचित्प्रकृतेः कारणमिति वक्तुं युज्यते । कारणसदृशेन च कार्येण भवितव्यमित्याशंक्य सपरिहारं दृष्टांतमाह । विषेणेव विषक्रिमेरिति । यथा विषेण जीवितनाशहेतुनास्य विषक्रिमेर्जन्म प्रकृतिसंभवो दृश्यते । तथा एतैर्दूषणस्वभावैरपि हि प्रमाणाधिकैर्दोषैः शुक्रार्तवस्थैरेव जन्मादौ शरीरस्य निष्पत्तिर्भवतीति ।

१ न समवातपित्तश्लेष्माणो जन्तवः सन्ति विषमाहारोपयोगित्वान्मनुष्याणाम्, तस्माच्च वातप्रकृतयः केचित्, केचित् पित्तप्रकृतयः, केचित् पुनः श्लेष्मप्रकृतयो भवन्तीति । तच्चानुपपन्नम् कस्मात् कारणात्,समवातपित्तश्लेष्माणं ह्यरोगमिच्छन्ति भिषजः, यतः प्रकृतिश्चारोग्यम्, आरोग्यार्था च भेषजप्रवृत्तिः, सा चेष्टरूपा । तस्माद्भवन्ति समवातपित्तश्लेष्माणः । न तु खलु सन्ति वातप्रकृतयः, पित्तप्रकृतयः, श्लेष्मप्रकृतयो वा । तस्य तस्य किल दोषस्य हि आधिक्यभावात्सा सा दोषप्रकृतिरुच्यते मनुष्याणाम् । न च विकृतेषु दोषेषु प्रकृतिस्थत्वमुपपद्यते । तस्मान्नैताः प्रकृतयः सन्ति । सन्ति खलु वातलाः, पित्तलाः, श्लेष्मलाश्चाऽप्रकृतिस्थास्तु ते ज्ञेया इति रोगानीकविमाने चरकः ।

वातोत्कर्षेण हीना । पित्तोत्कर्षेण मध्यमा । कफोत्कर्षेणोत्तमा । सर्वासु प्रकृतिषु मध्ये या समधातुः प्रकृतिः सा समा श्रेष्ठोत्तमा चतुर्थी । समा धातवो यस्याः । धातुशब्दो दोषपर्यायः । धारणाद्धातव इति वचनात् । या मिश्रदोषजास्तिस्रः प्रकृतयस्ता निंद्या गर्हणीयाः अनारोग्यास्पदत्वात् । वातपित्तजा वातश्लेष्मजा पित्तश्लेष्मजा इति ॥ १३ ॥

प०-तैश्च वातादिभिस्तिस्रः प्रकृतयः पृथक् भवेयुः हीनमध्योत्तमाः । प्रकृतिः शरीरस्वरूपम् । शुक्रार्तवस्थैरिति । शुक्रं रेतः ऋतोर्भवमार्तवं रक्तं शुक्रं चार्तवं च तत् शुक्रार्तवम् । तत्र तिष्ठन्तीति शुक्रार्तवस्थास्तैस्तथाविधैर्जन्मादौ गर्भाधानकाले जन्मारम्भे गर्भादावित्यर्थः । ननु च यदा वातादयोऽधिकाः शुक्रार्तवे तिष्ठन्ति तदा कुतः शरीरस्य निष्पत्तिर्भवतीति । ततश्च यो दोषाणामधिकभावः सैव विकृतिस्तया दोषा आधिक्यं प्राप्ताः प्रकृतेः कारणतामुत्सहन्ते । विकृतत्वान्नहि विकृतिः कदाचित् प्रकृतेः कारणमिति वक्तुं शक्यते । कारणसदृशेन कार्येण भवितव्यमित्याशङ्क्य परिहारं दृष्टान्तमाह-विषेणेव विषक्रिमेरिति । यथा—विषेण जीवितनाशहेतुना अस्य विषक्रिमेः जन्मप्रकृतिसम्भवो दृश्यते तथैवैतैर्दूषणस्वभावैरपि स्वप्रमाणाधिकदोषैः शुक्रार्तवस्थैरेव जन्मादौ शरीरस्य निष्पत्तिर्भवतीति । वातोत्कर्षेण हीना प्रकृतिर्भवति, पित्तोत्कर्षेण मध्या, कफोत्कर्षेणोत्तमा । सर्वासु प्रकृतिषु मध्ये या समधातुः प्रकृतिः सा श्रेष्ठा । ज्येष्ठोत्तमतमा चतुर्थी समधातवो यस्याः। धातुशब्दो दोषपर्यायः, धारणाद्धातव इति वचनात् । या मिश्रदोषजास्तिस्रः प्रकृतयः ता निन्द्या गर्हणीयाः । अनारोग्यास्पदत्वात् । वातपित्तजा वातश्लेष्मजाः पित्तश्लेष्मजा इति॥१३॥

हे०--देहजन्माख्यं दोषकार्यमाह—तच्च शुक्रार्तवस्थैर्दोषैर्भवेत् शुक्रेण युक्तमार्तवं शुक्रार्तवं तत्र तिष्ठन्तीति तत्स्थाः शुक्रं पुंरेतः स्त्रीरेतसो जन्माहेतुत्वात् । उक्तं हि संग्रहे-"योषितोऽपि स्रवन्त्येव शुक्रं पुंसः समागमे । गर्भस्य तु न तत्किंचित्करोतीति न चिन्त्यते॥" इति । आर्तवं स्त्रीरजः कदा आदौ जीवसंक्रमणसमये उत्तरकालजैस्तु दोषैरविकृतैः स्थितिः, विकृतैर्नाशः तदुक्तं 'विकृताविकृता देहं घ्नंति ते वर्तयन्ति च" इति ।यस्त्वादौ शुक्रार्तवस्थास्तैर्विकृतैरपि जन्म भवति किंत्वविकृतैरविकृतशरीरत्वं, विकृतैर्विकृतशरीत्वमिति विशेषः । वक्ष्यति हि "वियोनिविकृताकारा जायन्ते विकृतैर्मलैः" इति। ननु विकृतैर्नाशहेतुभिः कथं जन्मेत्यत आह—विषेण विषक्रिमेर्यथेति । विषात्मकस्य क्रिमेर्नाशहेतुनापि विषेण जन्म यथा तथा दोषात्मकस्य शरीरस्य नाशहेतुभिरपि दोषैरित्यविरोधः । प्रकृतिविशेषाख्यं दोषकार्यमाह-तैश्चेति । तैर्जन्महेतुभिर्दोषजाः प्रकृतयश्च स्युः । ताश्च सप्त । तत्र पृथग्भूतैर्दोषैस्तिस्रः वातेन हीना, पित्तेन मध्या, कफेनोत्तमा । समधातुश्चतुर्थी । समधातुः समस्तासु श्रेष्ठा गुणैः पूर्णा सत्त्वगुणप्रधाना उत्तमाद्युत्तमा । धातवो दोषाः द्विदोषजास्तिस्रः समस्तासु निंद्याः हीनाद्या अपि हीनाः । तत्र पित्तकफजा हीना, ततो वातकफजा, ततो वातपित्तजेत्यूह्यम् । यद्यपि वातकफयोः परस्परयोगवाहित्वं तथापि वातकार्यं भवतीति वचनात् । तदुक्तं-"बलित्वादाशुकारित्वाद्विभुत्वादन्यकोपनात् । स्वातन्त्र्याद्बहुरोगत्वात् रोगाणां प्रबलोऽनिलः॥" ता द्विदोषजा निंद्याः विरुद्धोपक्रमत्वादुपदेशाच्च। उपदेशस्त्वतिदेशस्य बाधकः। ननु वायोर्योगवाहित्वात् वातपित्तजवातश्लेष्मजप्रकृत्योः मध्यमोत्तमत्वे प्राप्ते कथं निन्द्यत्वम् उच्यते योगवाहित्वेऽपि प्रकृतौ स्वकार्यकारित्वमुपदेशबलवद्भवति । तथा च सुश्रुतः-"सप्तप्रकृतयो भवंति दोषैः पृथग्द्विशः समस्तैश्च।" "तथाद्वयोर्वा तिसृणां वापि प्रकृतीनां स्वलक्षणैः। ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरितिनिर्दिशेत्" तथाच वक्ष्यत्यग्रे "प्रकृतीर्द्वयसर्वोत्था द्वंद्वसर्वगुणोदये । शौचास्तिक्यादिभिश्चैव गुणैर्गुणमयीं वदेत्" अत्र पारिशेष्यात् एकैकस्याधिकत्वेनारंभकत्वं त्रयाणां साम्येन तच्चाधिकत्वेनोपक्रमात्।सुश्रुतः--"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः । प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु" तथा—"शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु । यस्या दोषोऽधिकस्तेन प्रकृतिः सप्तधोदितात्" इति।यद्वा-"समैर्वा जायते त्रिभिःसमधातु" इति ततो वातपित्तजे तुल्ये । तत्र श्रेष्ठा गुणैः पूर्णा उत्तमादयस्तु क्रमात् , न्यूनदोषवैषम्यात्पारिशेष्याच्च ॥ १३ ॥

**तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः१४**

१ रूक्ष इत्यादि । भूरिदारुणविकारकरणाद् वातादीनां पूर्वपूर्वाभिधानम् । रूक्षादीनाञ्च प्रशस्ततमत्वेन प्रागभिधानं, तेन दारुणत्वादयोऽपि गुणा बोध्याः । रूक्षत्वं, शीतत्वं, लघुत्वं, सूक्ष्मत्वं, वैशद्यं, खरत्वञ्चोपदिष्टं गुणव्याख्यानेन । चलत्वं तु अस्थिरत्वं ततो दारुणत्ववेगयोर्नाभिधानम् । अत्र वायोः

स०—तत्रेति निर्धारणे । तत्र तेषु दोषेषु मध्येऽनिलो वायू रूक्षो लघुः शीतः खरो मृदुः सूक्ष्मः स्रोतःप्रचारित्वात् । चलो गमनशीलो नैकत्र तिष्ठतीति । नन्वनुष्णाशीतो वायुः काणादैः पठितः ।इह योगवाहानुज्ञानादनुष्णाशीत एवेष्यत इति । योगवाहः परं वायुः संयोगादुभयार्थकृत् । दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयादिति । तथा । पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् । दाहः पित्तयुत इति । उच्यते । सत्यमेतदनुष्णाशीत एव वायुः । तस्य योगवाहित्वेऽपि तावन्मात्राद्दाहोदयाच्छैत्यं स्वाभाविकं न विनश्यति । शीतगुणव्यावर्णने चेदं प्रयोजनमुष्णेनायमुपशाम्यतीति प्रतिपत्त्यर्थम् ॥ १४ ॥

प०--तत्रेति निर्धारणे । तत्र तेषु दोषेषु मध्ये अनिलो वायुः रूक्षः लघु शीतः खरः अमृदुः सूक्ष्मः स्रोतःप्रवेशितत्वात् । चलो गमनशीलः नैकत्र तिष्ठतीति । नन्वनुष्णाशीतो वायुः काणादैः पठितः । इहापि योगवाह्यनुज्ञानादनुष्णाशीत एवेष्यत इति । तथाच वक्ष्यति । योगवाही परं वायुः संयोगात्मकः। दाहकृत्तेजसा युक्तः शीतकृच्छ्लेष्मसंश्रयादिति । तथा पवने योगवाहित्वाच्छीतश्लेष्मयुते भवेत् । दाहः पित्तयुत इति उच्यते । सत्यमेतत् । अनुष्णाशीत एव वायुः । तस्य योगवाहित्वेऽपि तावन्मात्रदाहोदयात् शैत्यं स्वाभाविकं न विनश्यति । शीतगुणव्यावर्णने चेदं प्रयोजनमुष्णेनायमुपशाम्यतीति प्रतिपत्त्यर्थम् ॥ १४ ॥

हे०--वायोर्गुणानाह-तत्र रूक्ष इति । ते च रूक्षादयः षट् ॥ १४ ॥

**पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् १५**

स०—सस्नेहमीषत्स्निग्धम् । सशब्द ईषदर्थे । यथा । सतिक्ता यासशर्करा । एवमीषत्स्नेहो यस्य तत्सस्नेहम् । तीक्ष्णं शीघ्रकारि मंदविपरीतं सूचीव भिनत्ति । उष्णं लघु । विस्रं दुर्गंधि मत्स्यामगंधि । सरं व्याप्तिशीलं सरणशीलमूर्ध्वाधः प्रवर्तते न स्थिरमास्ते शकृद्विस्रंसि । द्रवं च ॥ १५ ॥

प०--सस्नेहमीषत् स्निग्धम् । स ईषदर्थे । यथा सतिक्ता यासशर्करा । एवमीषत् स्नेहो यस्य तत् सस्नेहम् । तीक्ष्णं शीतकारि मन्दविपरीतं सूचीव भिनत्ति । उष्णं, लघु, विस्रं, दुर्गन्धि मत्स्यामगन्धि । सरं व्याप्तिशीलम् । सरणशीलमूर्ध्वाधः प्रवर्तते न स्थिरमास्ते । शकृत् विस्रंसि वा द्रवं च ॥ १५ ॥

हे०--पित्तगुणानाह—ते च स्नेहादयः सप्त । सस्नेहमीषत्स्निग्धं सहशब्द ईषदर्थे । विस्रं दुर्गन्धि ॥ १५ ॥

**स्निग्धः शीतो गुरुर्मंदः श्लक्ष्णो मृत्स्नः स्थिरः कफः**

स०--स्निग्धगुणयोगात्स्निग्धः शीतोऽनुष्णो गुरुर्लघुर्न भवति । मंदश्चिरकारी तीक्ष्णविपरीतः । श्लक्ष्णोऽपरुषः । मृत्स्नो मृद्यमानोऽङ्गुलिग्राही पिच्छिलगुणयुक्तः चकचकायमानः । स्थिरो व्याप्तिशीलः । एवं तद्गुणयोगात् गुणगुणिनोरभेदोपचाराद्वातादयो गुणतो निर्दिष्टाः ॥ १६ ॥

प०-स्निग्धगुणयोगात् स्निग्धः शीतोऽनुष्णः गुरुर्लघुर्न भवति। मन्दश्चिरकारी तीक्ष्णविपरीतः।श्लक्ष्णोऽपरुषः । मृत्स्नो मृद्यमानोऽङ्गुलिग्राही पिच्छिलगुणयुक्तः चकचकायमानः (कचकचायमानः) । स्थिरो व्याप्तिशीलः । एवं तद्गुणयोगाद्गुणगुणिनोरभेदोपचारात् । वातादयो गुणिनो निर्दिष्टाः ॥ १६ ॥

हे०--कफगुणानाह—स्निग्ध इति । ते च स्निग्धादयः सप्त । मृत्स्नः पिच्छिलः ॥ १६ ॥

एषां च मिश्रीभूतानां तंत्रव्यवहारार्थं संज्ञाद्वयमाह ।

**संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः । १७ ॥**
**(तौ षोढा दशधा चोक्तावुत्कर्षादिविकल्पनात्[1])**

स०—एतदुक्तं भवति । द्वयोः स्वप्रमाणाधिक्ययोः क्षीणयोर्वा संयोगः संसर्गः । त्रयाणां दोषाणां वृद्धानां क्षीणानां वा संयोगः सन्निपातः ॥ १७ ॥

शीतत्वं पूर्वभूतानुप्रवेशेन न महतो वायोरभिप्रायेणोक्तं, महतो वायोरनुष्णाशीतस्पर्शः । तत् केवलस्पर्शतन्मात्रवाय्वभिप्रायेण बोध्यमिति । शीतेन वायोर्वृद्धिरुष्णेन शीतशान्तिर्हि दृश्यते, दृश्यते च केवलवातारब्धव्याधौ शीतमिति **गंगाधरः ।**

यद्यपि वैशेषिकेऽनुष्णाशीतो वायुस्तथापीह शीतेन वृद्धिदर्शनात् उष्णेन प्रशमदर्शनाच्च शीत एव वायुः, तथा केवलवातारब्धे रोगे शीतदर्शनाच्चेति **चक्रपाणिः ।**

1 अत्र कोष्टकान्तर्गतोऽधिकः पाठः ।

प०–एषां च मिश्रीभूतानां तत्र व्यवहारार्थं संज्ञाद्वयमाह–एकः संयोगः प्रकारः संसर्गसंज्ञः। द्वितीयः संनिपातसंज्ञः। द्वौ च त्रयश्च द्वित्रयः। क्षयश्च कोपश्च क्षयकोपम्। द्वित्रयाणां क्षयकोपं तेषां द्वित्रिक्षयकोपं, तत् द्वित्रयक्षयकोपं तस्मात् द्वित्रिक्षयकोपात् तत् द्वित्रिक्षयकोपतः तदुक्तं भवति। द्वयोः क्रुद्धयोः स्वप्रमाणाधिकयोः क्षीणयोर्वा संयोगः संसर्गः। त्रयाणां दोषाणां वृद्धानां क्षीणानां वा संयोगः सन्निपातः॥ १७॥

हे०–अवस्थाविशिष्टसंयोगनिमित्तं दोषसंज्ञाद्वयमाह-तच्च दोषसंज्ञाद्वयं संसर्गः। संनिपातश्चेति। तत्र द्वयोर्दोषयोः क्षीणयोः कुपितयोर्वा यः संयोगः स संसर्गः। त्रयाणां संनिपातः। द्वित्वत्रित्वयोः संसर्गसंनिपाताभ्यां यथासंख्यं नतु क्षयकोपाभ्यां, यतो दोषभेदीयेऽपि संसर्गस्यापि वृद्धिभेदात् संनिपातस्यापि क्षयभेदात् वक्ष्यति। इति दोषव्याख्या १७॥

दोषानुक्त्वा धातव उच्यंते–

**रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः। सप्त दूष्याः॥ १८॥**

स०–रसादयः सप्त धातुसंज्ञाः शरीरधारणाद्धातवस्ते च दूष्याः। वातादिभिर्दूष्यंत इति दूष्याः। यस्माद्वातादीनां दूषणस्वभावत्वाद्या दोषसंज्ञा सान्वर्थसंज्ञा। दूषयंतीति दोषाः। अतोऽवश्यं ते दूष्यमपेक्षंते। कर्म विना कर्तुः क्रियाया असंभवात्। कर्तारं विना कर्मणो न कर्मत्वम्। एवं दोषैर्विना रसादीनां दूष्यनाम न पतति। तैर्विनाऽपि वातादीनां दोषनाम न। तस्मात्परस्परापेक्षत्वादनयोर्दूष्यदोषयोर्दूष्यत्वेन च संज्ञालाभः॥ १८॥

प०–दोषानुक्त्वा धातव उच्यन्ते। सप्त दूष्या रसादयः सप्तधातुसंज्ञाः शरीरधारणाद्धातवः। ते च दूष्या वातादिभिः दूष्यन्त इति दूष्याः। यस्मात् वातादीनां दूषणस्वभावात् या दोषसंज्ञा साऽन्वर्थसंज्ञा। दूषयन्तीति दोषाः। अतोऽवश्यं दूष्यमपेक्षन्ते। कर्म विना कर्तुः क्रियाऽसम्भवात्। यथा कर्तारं विना कर्मणो न कर्मत्वम्। एवं दोषैर्विना रसादीनां दूष्यनाम न घटते। तैर्विनापि वातादीनां दोषनाम। तस्मात् परस्परापेक्षित्वादनयोर्दूष्यदोषयोर्दूष्यत्वेन च संज्ञालाभः॥१८॥

हे०–दूष्यान् परनामधेयान् धातूनाह-रसासृगिति। रसादयो ये सप्त धातवः ते दूष्याः॥ १८॥

**मला मूत्रशकृत्स्वेदादयोऽपि च॥१९॥**

स०–मूत्रशकृदादयो मला उच्यंते। अपिचेतिशब्दाद् दूष्याश्चेति। न केवलं रसादय एव दूष्या यावन्मलास्तेऽपि धात्वादिभिर्दूष्यंत इति। एवं च रसादीनां दूष्यसंज्ञा धातुसंज्ञा च। तथा विण्मूत्रादीनां मलसंज्ञा दूष्यसंज्ञा चेति दोषधातुमलनिर्देशेन देहो व्याख्यातः। तथा चोत्तरग्रंथे दोषधातुमला मूलं सदा देहस्येति॥ १९॥

प०-मलाः मूत्रशकृत्स्वेदादयोऽपि च। शकृदादयो मला उच्यन्ते। अपिचेतिशब्दाद्दूष्याश्चेति। न केवलं रसादय एव दूष्याः यावन्मलाः तेऽपि वातादिभिर्दूष्यन्ते। इत्येवं रसादीनां दूष्यसंज्ञा, धातुसंज्ञा च। तथाच–विण्मूत्रादीनां मलसंज्ञा, दूष्यसंज्ञा च। इति दोषधातुमलनिर्देशेन देहो व्याख्यातः। तथा चोत्तरग्रन्थो दोषधातुमलमूलं सदा देहस्येति॥ १९॥

हे०–मूत्रादयो ये[1] सप्त मलास्तेऽपि च दूष्याः। मूत्रशकृती अन्नमलौ, स्वेदो मेदोमलः आदिशब्दात् मांसास्थिमज्जसु मलाः। अत्र सप्तमो मलश्चिन्त्यः। वक्ष्यति हि"कफः पित्तं मलाः खेषु प्रस्वेदो नखरोम च। स्नेहोऽक्षित्वग्विशामाजो धातूनां क्रमशो मलाः॥" इति कफपित्तयोर्दोषत्वाच्च दूष्यत्वम्। संग्रहे तु-"रसादिस्थेषु दोषेषु व्याधयः संभवन्ति ये। तज्जानित्युपचारेण तानाहुर्घृतदाहवत्॥" इति दूष्यव्याख्या इत्यंतरंगो रोगहेतुः॥ १९॥

तस्य च देहस्य यथा संततं केनचिदुपायेन परिपालनं निष्पद्यते तमुपायं दर्शयितुमाह।

**वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः॥२०॥**

(१) अत्र **चरकः**–

सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्।
ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु॥ ४३॥

**चक्रपाणिः**–सर्वदेत्यादि। सर्वदा सर्वस्मिन् काले नित्यगे चावस्थिके च। सर्वभावानामित्यत्र सर्वशब्दः कृत्स्नवाची।

स०—सर्वेषां दोषधातुमलादीनां शरीराश्रितानां स-
मानैस्तुल्यसद्भावैर्वृद्धिः स्वप्रमाणाधिक्यम्। विपरीतैर्विशि-
ष्टतयाऽव्यवस्थितैर्विपर्ययः क्षयः । अयनमयोगतिर्विप-
रीता गतिर्विपर्ययोऽपचयः । सामान्यविशेषैर्द्रव्यगुण-
कर्मभेदेन त्रिप्रकारोऽधिगच्छति । तथा चाहुः ।
सर्वेषां सर्वदा वृद्धिस्तुल्यद्रव्यगुणक्रियैः । भावैर्भवति
भावानां विपरीतैर्विपर्ययः । द्रव्यतो यथोक्तं रक्तमाप-
द्यते रक्तेन मांसं मांसेन पार्थिवम् । तथा सलिला-
त्मकं पयस्तदात्मकमेव श्लेष्माणमभिवर्धयति । तद्व-
त्क्षीरजातं घृतं शुक्रं तथा जीवंतीकाकोल्यादयः

---

भवन्ति सत्त्वमनुभवन्ति इति भावा गुणद्रव्यकर्माणीत्यर्थः ।
नतु भवन्त उत्पद्यन्त इति भावाः । तथा सति पृथिव्यादिपरम-
णूनां नित्यानां सामान्यस्य पार्थिवद्व्यणुकादि वृद्धं कार्यमसं-
गृहीतं स्यात् । सामान्यं च ( सामान्यमेकत्वकरम् ) इत्या-
दिना वक्ष्यमाणलक्षणम् । वृद्धिराधिक्यं तत्कारणं वृद्धिकारणम्।
एतच्च सामान्यं सामान्यवतो मांसद्रव्यादेर्वृद्धिकारणस्य
लक्षणत्वेन वृद्धिकारणमित्युक्तम् । यतो न सामान्यं मांसत्वादि
जातरूपं वृद्धौ कारणं भवति । तथाहि सति सामान्यं मांस-
त्वरूपं यथा—वर्धके भोज्यरूपे मांसेऽस्ति तथा शरीरधातु-
रूपे वर्धनीयेऽप्यस्ति । ततश्च नित्यं मांसत्वसंबन्धादमांसा-
दानामपि मांसेन वर्धितव्यम् । तस्माद् वृद्धिकारणलक्षणत्वेन
सामान्यं वृद्धिकारणमित्युक्तम् । अत एव वैशेषिकेऽप्युक्तम्—
"त्रयाणामकार्यत्वमकारणत्वं च" इति।अत्र त्रयाणामिति सामा-
न्यविशेषसमवायानाम् । ये तु समानमेव सामान्यमिति कृत्वा
द्रव्याद्येव सामान्यशब्देनाभिदधति, तेषां च मते " सामान्यं
च विशेषं च" इत्यादि ग्रन्थोक्तस्य सामान्यस्य न किंचि-
दनेनोक्तं स्यादित्यसम्बद्धार्थत्वं प्रकरणस्य स्यात् । एतच्च
वृद्धिकारणत्वं सामान्यलक्षणं न भवति, किं तद्व्यायुर्वेदोपयो-
गिना धर्मेण निर्देशः । लक्षणं तु " सामान्यमेकत्वकरम् "
इति करिष्यति । एवं द्रव्यादावपि चोद्देशानन्तरं निर्देशं करि-
ष्यति "खादीन्यात्मा" इत्यादिना । ततो लक्षणं "यत्रा-
श्रिताः कर्मगुणा" इत्यादिना करिष्यति । सामान्यस्य च
वृद्धिकारणत्वं ह्यसति विरोधिकारणे बोद्धव्यम् । तेनामल-
कादिगतानामम्लत्वादीनां पित्तगताद्यम्लत्वावर्धकत्वमामलक-
गतशिशिरत्वप्रभावविरोधित्वादुपपन्नम् । एवमन्यत्रापि त्रिदो-
षहरद्रव्ये बोद्धव्यम्। इह च सामान्यस्य वृद्धिकारणत्वमित्यु-
च्यते, नतु सामान्यमेव वृद्धिकारणमित्युच्यते, तेनासमाना-
दपि घृतान्मेधाया या च वह्नेश्च वृद्धिः प्रभावादेवोपपन्ना, यदुक्तं
"घृतमग्निमेधे करोति" । तथा चिन्तया वातवृद्धिस्तथा
संकल्पाद्वृष्यपादयुगलेपाच्च शुक्रवृद्धिरित्यादिप्रभावादुपपन्नम् ।
सामान्यं चेह वृद्धिकारणमित्युच्यमाने समानस्येति गम्यते ।
नहि शोणितं प्रति मांसत्वं सामान्यं, किन्तु व्यावृत्तबुद्धि-
जनकत्वाद्विशेष एव ।

अथ वैशेषिकोक्तानामन्त्यविशेषाणामिह शास्त्रे चिकित्सा-
यामनुपयुक्तत्वात्तद्विशेषधर्मव्यावर्तकत्वायोगात्सामान्यविशेषा-
नेव ह्रासकारणत्वेनाह—ह्रासहेतुरित्यादि । अत्रापि सर्वदा
सर्वभावानामिति योजनीयम् । ह्रासोऽपचयः । विशिष्यते
व्यावर्तते इति विशेषः।सामान्यमेव गवेधुकत्वं मांसादीन् प्रति
विशेषः । गवेधुको हि गवेधुकत्वेन गवेधुकव्यक्त्यन्तरापेक्षया
समानः । मांसापेक्षया व्यावृत्तत्वाद्विशेषः । नहि मांसे गवे-
धुकत्वमस्ति।एवं मांसत्वं मांसान्तरापेक्षयानुगतत्वात् सामान्यं,
शोणिताद्यपेक्षया तु मांसानां व्यावृत्तत्वाद्विशेष एव ।
अत्रापि ह्रासहेतुकत्वं ह्रासहेतुद्रव्यादिलक्षणत्वेन सामान्यव-
ज्ज्ञेयम् । तथा ह्रासहेतुत्वमप्यसति विरोधके सामान्योक्तन्या-
येन ज्ञेयम् । तेन मन्दनिकुचादीनां वातादिविरुद्धानामपि
स्निग्धत्वादीनां वाताद्यशमकत्वं द्रव्यस्यापथ्यत्वं प्रभावादेव
ज्ञेयम् । विशेषश्चेह विरुद्धत्वविशेषोऽभिप्रेतः । तेनोत्तरत्र
विरुद्धविशेषमेव ह्रासहेतुतया तत्र तत्रोपदेक्ष्यति । यथा
"वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः" इति । तथा—
"विपरीतगुणैर्देशमात्राकालोपपादितैः" इत्यादि । तथा—
"विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति" इत्यादि । तथा जतु-
कर्णेऽप्युक्तं—"समानैः सर्वभावानां वृद्धिर्हानिर्विपर्ययात्"
इति।अविरुद्धविशेषस्तु यद्यपि ह्रासे वृद्धौ वाप्यकारणम्। यथा—
पृथिव्या अनुष्णाशीतस्पर्शो वातस्य शैत्यं न वर्धयति, नापि
ह्रासयति तथाप्यभिक्षयिमाणानां धातूनाम् असमानत्वेनाजन-
कत्वाद्ध्रासकारणमिव भवति । यतोऽसमानद्रव्योपयोगे सति
ह्रासो विनश्वराणां भावानाम् आपूरकहेत्वभावादुपलभ्यत एव।
यथा—वहतो जलस्य पूर्वदेशसेतुनोत्तरपरो जलस्य ह्रासः ।
एवंभूतं चाविरुद्धविशेषोपयोगेऽपि ह्रासं पश्यताऽऽचार्येण
सामान्येनैव इहोक्तम्—"ह्रासहेतुविशेषः" इति । चशब्दः सर्व-
भावानामिति समुच्चिनोति ।

अथ किम् असंबन्धावपि सामान्यविशेषौ वृद्धिह्रास-
कारणम् । नेत्याह—प्रवृत्तिरुभयस्य त्विति । कारणमिति शेषः ।
उभयस्य सामान्यस्य विशेषस्य च । प्रवृत्तिः प्रवर्त्तनं शरी-
रेणाभिसम्बन्ध इति यावत् । एवभूता प्रवृत्तिः धातुसामान्य-
विशेषयोर्वृद्धिह्रासे कारणमित्यर्थः । तुशब्दोऽवधारणे ।
तेन नासम्बद्धौ सामान्यविशेषौ स्वकार्यं कुरुत इति दर्शयति।
किंवा प्रवृत्तिरुचिता धातुप्रवृत्तिर्धातुसाम्यमिति यावत् । सा
उभयस्य सामान्यस्य विशेषस्य च कार्येति शेषः । तेन केवल-
समानोपयोगाद्धातुवृद्ध्या धातुवैषम्यं केवलविशिष्टोपयोगाच्च
धातुक्षयाद्वा धातुवैषम्यं युगपत्समानविशिष्टद्रव्योपयोगात्
प्रवृत्तिर्धातुसाम्यरूपा भवतीत्युक्तं भवति । तुशब्दः पूर्वपक्षा-
देकद्रव्योपयोगलक्षणरूपाद्व्यावर्तयति ॥ २० ॥

सोमात्मानो द्रव्यविशेषाः सौम्यधात्वेककारणानि स्नेह-बलपुंस्त्वौजांसि मरीचपंचकोलभल्लातकादयो बुद्धिमेधा-न्यादीन् संवर्धयंति । गुणतश्चोचमोचखर्जूराणि पार्थि-वानि द्रव्यतो निर्दिष्टान्यपि श्लेष्माणमुदकात्मक-मभिवर्धयंति । स्निग्धगुरुशीतादिगुणसामान्यात् । कर्मापि त्रिविधं कायवाङ्मनोव्यापारात्मकम् । तत्र कायिकानि धावनलंघनप्लवनादीनि चलत्वसा-मान्याद्वायोर्वृद्धये । वाचिकानि भाष्याध्ययनगेया-दीनि । मानसं मनोव्यापारश्चिताकामशोकभयानि । तान्यपि मनसः क्षोभणहेतुत्वाद्वायोर्वृद्धिकराणि । तथा संतापकत्वसामान्यात्क्रोधेर्ष्यादि पित्तस्य । स्वप्नालस्यश-य्यासुखादीनि स्थैर्यसामान्यात्कफस्येति । विपर्ययस्तु क्षयाय । यथाह । द्रव्यतो गवेधुकान्नं कर्शनीयानां तत्र वातात्मिकया गवेधुकया पार्थिवानां मांसादीनां कृशिमा क्रियते । तथा तैजसेन क्षारेण श्लेष्मणः । गुणतो यथा । आरनालमौदकं श्लेष्माणं तद्विपरीतैर्ल-घुरूक्षोष्णतीक्ष्णविशदगुणैः क्षपयति । कर्मतो निद्राल-स्यसौमनस्यानि सपरिस्पंदं वातमपरिस्पंदस्वभावत-याऽपचिन्वंति । तथा परिस्पंदरूपाश्चिताव्यवायव्या-यामा मंदपरिस्पंदवैपरीत्यात्कफमिति ॥ २० ॥

प०—तस्य देहस्य यथा—सततं केनचिदुपायेन परिपाल्यं निष्पद्यते तमुपायं दर्शयन्नाह—सर्वेषां दोषधातुमलादीनां शरीराश्रयाणां समानैः द्रव्य-गुणक्रियाभिस्तुल्यस्वभावैर्वस्तुभिः स्वप्रमाणाधिक्य-म् । विपरीतैः विशिष्टतया व्यवस्थितैर्विपर्ययः क्षयः । अयनं अयः गतिः । विपरीता गतिर्विपर्य-योऽपचयः । सामान्यविशेषैः द्रव्यगुणकर्मभेदेन त्रिप्रकारानधिगच्छन्ति । तथा चाहुः—"सर्वेषां सर्वदा वृद्धिस्तुल्यद्रव्यगुणक्रियैः । भावैर्भवति भावानां विपरीतैर्विपर्ययः ॥" दृष्टान्तो यथोक्तम् । रक्तमध्या-यतेन रक्तेन मांसं, मांसेन मेदो, मेदसा अस्थि, अस्थ्ना मज्जा, मज्जया शुक्रं तथा शुक्रं शुक्रेण, गर्भ आमगर्भेण । रक्तेन रक्तमित्युभयमप्यौदकम् । मांसं मांसेनेति पार्थिवम् । तथा सलिलात्मकं पयः । तथात्मकमेव श्लेष्माणमभिवर्धयति । तद्वत् क्षीरं घृतं शुक्रम् । तथा जीवन्तीकाकोल्यादयः सोमा-त्मानो द्रव्यविशेषाः सौम्यधात्वेककरणानि स्नेह-बलपुंस्त्वौजांसि । मरीचपंचकोलभल्लातकादयो बुद्धिमेधाग्न्यादीन् संवर्धयन्ति । गुणतश्चोचमोचखर्जू-राणि पार्थिवानि द्रव्यतो निर्दिष्टान्यपि श्लेष्माणमु-दकात्मकमभिवर्धयन्ति । स्निग्धगुरुशीतादिगुणसा-मान्यात् । कर्मापि त्रिविधं कायवाङ्मनोव्यापा-रात्मकम् । तत्र कायिकं—धावनलङ्घनप्लवनादीनि चलत्वसामान्याद्वायोर्वृद्धये । वाचिकानि—भाष्या-ध्ययनगेयादीनि । मानसं—मनोव्यापारश्चिन्ताका-मशोकभयादीनि । तान्यपि मनसः क्षोभहेतुत्वात् वायोर्वृद्धिकराणि । तथा संतापकत्वसामान्यात् क्रोधे-र्ष्यादि पित्तस्य । स्वप्नालस्यशय्यासुखादीनि स्थैर्य-सामान्यात् कफस्येति । विशेषस्तु क्षयाय । यथाह—द्रव्यतो गवेधुकानां कर्षणीयानाम् । तत्र वाय्वा-त्मिकया गवेधुकया पार्थिवानां मांसादीनां कृशिमा क्रियते । तथा तैजसेन क्षारेण श्लेष्मणः । गुणतो यथा आरनालमौदकं श्लेष्माणम् । तद्विपरीतैर्लघुरूक्षो-ष्णतीक्ष्णविशदगुणैः क्षपयति । कर्मतो निद्रालस्य-सौमनस्यानि सपरिस्पंदं वातमपरिस्पन्दस्वभावतया-ऽपचिन्वन्ति । तथा परिस्पन्दरूपाश्चिन्ताव्यवायव्या-यामा मन्दपरिस्पन्दवैपरीत्यात् कफमिति वर्णि-तम् । वृद्धिः समानैः क्षयो विपरीतैरिति । तौ तु वृद्धिक्षयौ यतो वाय्वादीनां भवतः ॥ २० ॥

हे०—अथ बहिरंगं व्याचष्टे-दोषदूष्यविकृत्युत्पादनद्वारेण यो व्याधीनां कारणं स बहिरंगः । स च द्वेधा-वृद्धिहेतुः क्षयहेतुश्च । तत्र वृद्धिहेतुमाह—वृद्धिरिति । सर्वेषां दोषदू-ष्याणां समानैस्तुल्यधर्मकैर्द्रव्यैर्वृद्धिर्भवेत् । यथा रूक्षादिगुण-स्य वायोः तद्गुणं श्यामाकादिवर्द्धनम् । सस्ने-हादिगुणस्य पित्तस्य तैलादिस्निग्धादिगुणस्य कफस्य क्षीरादि । दूष्येषु स्वेदरक्तयोः पित्तवत् वृद्धिहेतुः शेषाणां श्लेष्मवत् । वक्ष्यति हि—" तत्रास्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः । श्लेष्मा शेषेषु तेनै-षामाश्रयाश्रयिणां मिथः ॥ यदेकस्य तदन्यस्य वर्द्धन-क्षपणौषधम् । अस्थिमारुतयोर्नैवम् ।" इति क्षयहेतुमाह—सर्वेषां दोषदूष्याणां विपरीतैर्विरुद्धधर्मकैर्द्रव्यैर्विपर्ययः क्षयो भवेत् । यथा वायोर्गोधूमादिक्षपणम् । पित्तस्य यवादि । कफस्य कुलत्थादि । दूष्येषु स्वेदरक्तयोः क्षयहेतुः पित्तवत् । शेषाणां श्लेष्मवत् पूर्ववत् ॥ २० ॥

वर्णितमेव वृद्धिः समानैः क्षयो विपरीतैरिति । तौ तु वृद्धिक्षयौ यतो वाय्वादीनां भवतस्तत्प्रत्ययनार्थमाह–

**रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ।**
**षड् द्रव्यमाश्रितास्ते तु यथापूर्वं बलावहाः २१**

स०–स्वाद्वादयः षड्रसा रसनेंद्रियग्राह्यत्वाद्रसास्ते च रसा द्रव्यं पंचभूतात्मकमाश्रिता यथापूर्वं च बलावहाः। यो यः पूर्वो यथापूर्वं बलावहा बलप्रापकाः। बलमावहंति प्रापयंतीति यावत्। तस्मात्सर्वेभ्यो मधुरो रसः प्रकर्षेण देहिनां बलकरः कषायस्तु सर्वेभ्यो जघन्यबलावहः। तत्र स्वादुर्मधुरो घृतगुडादिः। अम्लोऽम्लिकामातुलुंगादिः। लवणः सैंधवादिः। तिक्तो भूनिम्बादिः। ऊषणः कटुको मरीचादिः। कषायो हरीतक्यादिः। स्वादुर्मधुरपर्यायः। ऊषणः कटुकपर्यायः। यथा त्र्यूषणं त्रिकटुकमुच्यते। कषाय एव कषायको यथा कटुरेव कटुकः। षडिति षडेव न न्यूना अधिका वा। यद्यपि ते रसा गुणाः स्वाद्वादिभेदतस्तथा संसर्गतस्तथाऽनुरसतस्तारतम्यपरिकल्पनावशतोऽपि भिद्यमानरूपा अपि षट्त्वं नातिवर्तते ॥ २१ ॥

प०–तद्वयापारार्थमाह–स्वाद्वादयः षड्रसाः रसनेन्द्रियग्राह्यत्वाद्रसाः। रसा द्रव्यं पञ्चभूतात्मकमाश्रितास्ते तु यथापूर्वं बलावहा बलप्रापका बलमावहन्ति। प्रापयन्तीति यावत्। तस्मात्सर्वेभ्यो रसेभ्यो मधुरो रसः प्रकर्षेण देहिनां बलकरः। कषायस्तु सर्वेभ्यो जघन्यः बलापहः। तत्र स्वादुर्मधुरो घृतगुडादिः। अम्लोऽम्लिका मातुलुङ्गादिः। लवणः सैन्धवादिः। तिक्तो निम्बादिः। ऊषणः कटुको मरीचादिः। कषायो हरीतक्यादिः। स्वादुर्मधुरपर्यायः। ऊषणः कटुपर्यायः। यथा त्र्यूषणं त्रिकटुकमुच्यते। कषाय एव कषायकः। यथा कटुरेव कटुकः। षडिति षडेव न न्यूनाः समधिका वा। यद्यपि ते रसगुणाः स्वाद्वादिभेदतस्तथा संसर्गतः तथानुरसतः तारतम्यपरिकल्पनावशतोऽपि भिद्यमानास्तथापि षट्त्वं नातिवर्तन्ते ॥ २१ ॥

हे०–अथ साधर्म्यवैधर्म्यज्ञानार्थं द्रव्यधर्मानाह–ते च रसप्रभाववीर्यविपाकगुणभेदात्पञ्च। तत्र रसनाग्राह्यो रसः शेषो गुणः कायाग्निपाकजो विशिष्टो रसो विपाकः। तथैवोत्सन्नो गुणो वीर्यं द्रव्यस्यात्मा प्रभावः। तत्र रसभेदानाह–रसा इति। ते च स्वाद्वादयः षट्। स्वादुर्मधुरः, ऊषणः कटुकः। नच द्रव्यमाश्रिता द्रव्यधर्मा इत्यर्थः। क्षारस्य द्रव्यविशेषणवाचित्वाद्रसविशेषवाचित्वेऽपि लवणवाचित्वान्न सप्तमरसत्वं बलावहाख्यं मुख्यं कर्माह–ते च रसा यथापूर्वं बलावहाः यो यस्मात्पूर्वः स तस्मादधिकं बलमावहतीति कषायो वल्यस्ततः उष्णरसततस्तिक्त इत्यादि ॥२१॥

**तत्राद्या मारुतं घ्नंति त्रयस्तिक्तादयः कफम् ।**
**कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥२२॥**

स०–तत्र तेषु रसेषु मध्ये आद्यास्त्रयः स्वाद्वम्ललवणामारुतं घ्नंति शमयंति। अन्ये तु तिक्तोषणकषायास्तमेव चानिलं कुर्वते कोपयंति। तिक्तादयस्त्रयस्तिक्तोषणकषायाः कफं घ्नन्ति प्रशमयंति। अन्ये मधुराम्ललवणास्तमेव कफं कुर्वते। कषायतिक्तमधुराः पित्तं घ्नंति। अन्ये त्वम्ललवणकटुकास्तदेव पित्तं कुर्वते। तेनेदमुक्तं भवति। मधुरो वातपित्तघ्नः श्लेष्मकरः। अम्लो वातं हंति कफपित्ते जनयति। लवणो मारुतं हंति कफपित्ते तु कुरुते। तिक्तः कफपित्ते नाशयति वातं तु जनयति। ऊषणः कफं नाशयति वातपित्ते तु जनयति। कषायः कफपित्ते हंति वातं तु करोतीति ॥ २२ ॥

---

१ 'क्षरणात्क्षारो नासौ रसः, द्रव्यं तदनेकरससमुत्पन्नमनेकरसं कटुलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाभिनिर्वृत्तम्' इति **चरकः** । क्षरणादधोगमनक्रियायोगात् क्षारो द्रव्यं नासौ रसः, रसस्य हि निष्क्रियस्य क्रियाऽनुपपन्नेत्यर्थः, क्षरणं च क्षारस्य पानीययुक्तस्याधोगमनेन वदन्ति हि लौकिकाः–'क्षारं स्रावयामः' इति, शास्त्रं च–"छित्त्वा छित्त्वाऽऽशयात्क्षारः क्षारत्वात् क्षारयत्यधः" इति। हेत्वन्तरमाह–द्रव्यं तदनेकरसोत्पन्नमिति, अनेकरसेभ्यो मुष्ककापामार्गादिभ्य उत्पन्नमनेकरसोत्पन्नं, यतश्चानेकरससमुत्पन्नमतएवानेकरसं, कारणगुणानुविधायित्वात्कार्यगुणस्येति भावः। अनेकरसत्वं चाह–'कटुकलवणभूयिष्ठम्' इति। भूयिष्ठशब्देनाप्रधानरसान्तरसंबन्धोऽस्ति इति दर्शयति। हेत्वन्तरमाह–अनेकेन्द्रियार्थसमन्वितमिति। क्षारो हि स्पर्शेन गन्धेन चान्वितः, तेन द्रव्यं, रसे हि गुणे न स्पर्शो नापि गन्ध इति भावः। हेत्वन्तरमाह–करणाभिनिर्वृत्तमिति। करणेन भस्मस्रावादिनाऽभिनिर्वृत्तं कृतमित्यर्थः। न रसोऽनेन प्रकारेण क्रियत इति भावः। इति **चक्रदत्त**टीकायाम्।

प०--तत्र तेषु रसेषु मध्यादाद्यास्त्रयः स्वाद्वम्ललवणा मारुतं वातं घ्नन्ति शमयन्ति । अन्ये तु तिक्तोषणकषायास्तमेव चानिलं कुर्वते कोपयन्ति । तिक्तादयस्त्रयः तिक्तोषणकषायाः कफं घ्नन्ति । अन्ये तु मधुराम्ललवणास्तमेव कफं कुर्वते । कषायतिक्तमधुराः पित्तं घ्नन्ति।अन्ये त्वम्ललवणकटुकास्तमेव पित्तं कुर्वते । एतेनेदमुक्तं भवति । मधुरो वातपित्तघ्नः श्लेष्मकरः । अम्लो वातं हन्ति, कफपित्ते जनयति । लवणो मारुतं हन्ति, कफपित्ते कुरुते । तिक्तः कफपित्ते नाशयति, वातं च जनयति । ऊषणः कफं नाशयति, वातपित्ते जनयति । कषायः कफपित्तं हन्ति, वातं करोतीति ॥ २२ ॥

हे०--वातादीनां साक्षाद्रसाकथनादस्पष्टे दोषद्रव्ययोः साधर्म्यवैधर्म्ये स्पष्टयति--तत्र तेषु रसेषु मध्ये आद्यास्त्रयो रसाः स्वाद्वम्ललवणाः मारुतं घ्नन्ति । तिक्तादयस्तिक्तोषणकषायाः कफं घ्नन्ति । कषायतिक्तमधुराः पित्तं घ्नंति । अन्ये कुर्वत इति । त्रिष्वपि योज्यते । न तिक्तोषणकषाया वायुं कुर्वन्ति । स्वाद्वम्ललवणाः कफम् । अम्ललवणकटुकाः पित्तम् । अतएव ते ते रसास्तत्र तत्र सन्तीत्यनुमेयम् । उक्तं च कपिलेन " कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः । कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः ॥ " इति ॥ २२ ॥

एषां च रसानामाश्रयो द्रव्यं तच्च त्रिप्रकारमित्याह--

**शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा २३**

स०--इत्यनेन प्रकारेण शमनादिभेदेन त्रिधा त्रिप्रकारं द्रव्यम् । अन्येन प्रकारेण द्विधाऽथवाऽनेकधा । इतिशब्दः प्रकारार्थेऽभिहितः । यत्तु वातादीन् दोषान् शमयति तच्छमनम् । यथा तैलं घृतं माक्षिकम् ।तत्र तैलं स्नेहौदार्यगौरवयोगाद्वातं तद्विपरीतगुणं शमयति । सर्पिर्माधुर्यशैत्यमांद्यगुणयोगात्तद्विपरीतगुणं पित्तम् । मधु च रौक्ष्यतैक्ष्ण्यकषाययोगात्तद्विपरीतगुणं कफम् ।यद्वातादीन् दोषान् रसादीन्धातून् मूत्रादीन्मलांश्च कोपयति तत्कोपनम् । यथा यवकपटलमाषमत्स्याममूलकसर्षपमंडकदधिकिलाटविरुद्धमत्स्यपयःप्रभृति । दोषादीनां मलपर्यन्तानां स्वप्रमाणस्थितानां साम्यानुवृत्तिहेतुर्यद्द्रव्यं तत्स्वस्थेभ्यो हितम् । यच्च स्वास्थ्यानुवृत्तिं करोति । ऋतुचर्याध्याये सेव्यत्वेनोक्तम् । तथा मात्राशितीयाध्याये रक्तशालिषष्टिकयवगोधूमजांगलमांसजीवंतीशाकदिव्योदकक्षीरादि । तथा यदूर्जस्करं रसायनवाजीकरणं सर्वदा शीलनीयत्वेन निर्दिष्टम् ॥ २३ ॥

प०--एषां च रसानामाश्रयो द्रव्यं त्रिप्रकारमाह--इत्यनेन प्रकारेण शमनादिभेदेन त्रिधा त्रिःप्रकारम् । अन्येन प्रकारेण द्विधाऽथवाऽनेकधेति । इतिशब्दः प्रकारार्थेऽभिहितः । यत् कुपितान् वातादीन् शमयति तत् शमनम् । यथा तैलं घृतं माक्षिकम् । तत्र तैलं स्नेहौष्ण्यगौरवयोगाद्वातं तद्विपरीतगुणं शमयति । सर्पिर्माधुर्यशैत्यमान्द्यगुणयोगात्तद्विपरीतगुणं पित्तम् । मधु च रौक्ष्यतैक्ष्ण्यकषाययोगात्तद्विपरीतगुणं कफम् । यद्वातादीन् दोषान् रसादीन् धातून् मूत्रादीन् मलांश्च कोपयति तत्कोपनम् । यथा यवकपाटलमाषमत्स्याममूलकसर्षपमंदकदधिकिलाटविरुद्धमत्स्यपयःप्रभृति । दोषादीनां मलपर्यन्तानां स्वप्रमाणस्थितानां साम्यानुवृत्तिहेतुर्यद्द्रव्यं तत् स्वस्थेभ्यो हितं तच्च स्वास्थ्यानुवृत्तिं करोति । ऋतुचर्याध्याये सेव्यत्वेनोक्तम् । तथा मात्राशितीयेऽध्याये रक्तशालिषष्टिकयवगोधूमजाङ्गलमांसजीवन्तीशाकदिव्योदकक्षीरादि । तथा यदूर्जस्करं रसायनं वाजीकरणं सर्वदा शीलनीयत्वेन निर्दिष्टम् ॥ २३ ॥

हे०--प्रभावभेदानाह--प्रभावो रसादिभ्योऽन्तरङ्ग इति द्योतयितुं द्रव्यशब्देनोक्तः।द्रव्यं त्रिधेति।शमनं कोपनं स्वस्थहितं द्रव्यम् इति । त्रिधेति चेति त्रैविध्यम्।यद् द्रव्यं समैः समविपरीतैर्वा रसादिभिर्युक्तमपि वातादीन् शमयत्येव तच्छमनम् । तद्यथा--मधुरशीतापि जीवंती कफं शमयति । कटुपाकरसो गुरुः स्निग्धोऽपि रसोनः कफवातौ । यद्द्रव्यं विपरीतैः समविपरीतैर्वा रसादिभिर्युक्तमपि वातादीन् कोपयत्येव । तत्कोपनं यथा--गुरुष्णस्निग्धमधुरमपि फाणितं वातं कोपयति । तैरेव गुणैर्माषः पित्तकफौ । यद्द्रव्यं वातादीनां क्षयवृद्ध्योर्हेतुरपि स्वस्थस्य न तथा तत्स्वस्थहितम् । यथा--गुरुमधुररूक्षशीतोऽपि यवः स्वस्थस्य पित्तं न क्षपयति । गुरुमधुरस्निग्धशीतमपि क्षीरं स्वस्थस्य कफं न कोपयति । एवं सर्वत्रापि प्रभावः उदाहरणीयः । वक्ष्यति च--" रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ।" इति । अन्ये अरुणदत्तचंद्रनंदनादयः । तथाहि--

यत्कुपितान् दोषान् शमयति तच्छमनम् । यथा—तैलं, घृतं, माक्षिकम् । तत्र तैलं—स्नेहोष्णगौरवयोगाद्वातविपरीत-गुणशमनम् । माधुर्यशैत्यमान्द्यगुणयोगात्तद्विपरीतगुणं पित्तम् । मधु च रौक्ष्यतीक्ष्णकषाययोगात्तद्विपरीतगुणं कफम् । यद्वातादीन् दोषान् रसादीन् धातून् मूत्रादीन् मलांश्च कोपयति तत्कोपनम् । यथा—यवकपाटलमाषमत्स्या-ममूलकसर्षपमण्डकदधिकिलाटविरुद्धमत्स्यपयःप्रभृतिदोषा-दीनां मलपर्यंतानां स्वप्रमाणस्थितानां साम्यात्तु वृद्धि-हेतुर्यद्द्रव्यं तत्स्वस्थेभ्यो हितम् । तच्च स्वस्थानवृत्तिं करोति। ऋतुचर्याध्याये सेव्यत्वेनोक्तम् । तथा मात्राशितीयेऽध्याये रक्तशालिषष्टिकयवगोधूमजांगलमांसजीवन्तीशाकदिव्योद-कक्षीरादि । अन्ये तु शमनादीन् द्रव्यभेदानाहुः । तत्तु न सम्यक् द्रव्यभेदत्वे यदेव शमनं तदेव कोपनं तदेव स्वस्थ-हितमिति संकरो न युक्तः । धर्मभेदत्वे तु रसा-दिसंकरवद्युक्तः । किंच द्रव्यभेदाश्चेदमी तद्रसादिधर्म-भेदानां प्राक्पश्चाद्वा अभिधेयाः न मध्ये तस्मात्प्रभावभेदा एव शमनादयः ॥ २३ ॥

तस्य वीर्यमाह—

**उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् २४**

स०—तत्र तस्मिन् द्रव्ये वीर्यं द्विविधम्।विंशतेर्गुणानां मध्याद्वावुष्णशीतौ तदुत्कर्षाद्वीर्यमिति सर्वायुर्वेदप्र-सिद्धौ द्वावेव गुणौ शीतोष्णौ वीर्यकरणहेतू । वीर्यं शक्तिः । उष्णगुणोत्कर्षे उष्णगुणातिशय एव कश्चि-दुष्णवीर्याख्यां लभते । तथा शीतगुणोत्कर्षः शीत-गुणातिशय एव शीतवीर्याख्याम् । यद्यपि नानागुण-कमपि द्रव्यं तथाप्यग्नीषोमात्मकत्वाज्जगतो द्विधैव वीर्यम् ॥ २४ ॥

प०—तस्य वीर्यमाह—तत्र तस्मिन् द्रव्ये वीर्यं द्विवि-धम् । विंशतिगुणानां मध्यात् द्वावुष्णशीतौ तदु-त्कर्षाद्वीर्यमिति सर्वायुर्वेदप्रसिद्धौ । द्वावेव गुणौ शीतोष्णौ वीर्यकार्यकारणहेतू । वीर्यं शक्तिरुष्ण-गुणोत्कर्षे उष्णगुणातिशय एव । कश्चिदुष्णवीर्या-ख्यां लभते । तथा शीतगुणोत्कर्षः शीतगुणातिशय एव शीताख्याम् । यद्यपि नानात्मकमपि द्रव्यं तथा-प्यग्नीषोमात्मकत्वाज्जगतो द्विधैव वीर्यम् ॥ २४ ॥

हे०—द्वैविध्यमाह—उष्णेति । तच्च उष्णं शीतं च । ननु गुरुलघुस्निग्धरूक्षमंदतीक्ष्णानामपि वीर्यत्वात्कथं द्वे एवेत्यत आह—उष्णशीतगुणोत्कर्षात् यद्यपि कायाग्निपाकादष्टौ गुणा जायन्ते तथाप्युष्णशीतयोर्गुणयोरुत्कर्षाद्द्वैविध्यम् ।गुणान्त-रतिरस्कारे शक्तिरुत्कर्षः । शक्त्युत्कर्षे वीर्यशब्दो लोकेऽ-पि प्रसिद्धः । तत्र द्रव्ये वीर्यमपि द्रव्याश्रय मित्यर्थः॥२४

द्रव्यविपाकमाह—

**त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः२५**

विपाकस्त्रिविधः सर्वद्रव्याणां परिणामकालभावी कार्यानुमेयो जाठराग्निसंबंधाद्रसस्य स्वरूपांतरप्रादुर्भावः। स त्रिधैव । रसषट्त्वेऽपि न षोढा । तेन किंचित्स्वा-दुपाकं किंचिदम्लविपाकं किंचित्कटुविपाकं द्रव्यम् । तत्र मधुरलवणयोर्मधुरो विपाकः । अम्लस्याम्लः । तिक्तकटुकषायाणां कटुकः । स च कार्यानुमेयः । तथा च वक्ष्यति—'जाठरेणाग्निना योगाद्यदुदेति रसां-तरम् । रसानां परिणामांते स विपाक इति स्मृतः ॥' अत एव सोपसर्गः पाकशब्द उपात्तः । विशिष्टः पाको विपाको न पाकमात्रस्वरूपः । तथा च भट्टार-कचरकमुनी—'रसो विपाके द्रव्याणां विपाकः कर्मनि-ष्ठया । वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते ।' एवं कर्मनिष्ठानुमत एकरूपावस्थो जाठराग्निसंयोगाद्यो रसा-नां रसांतरोद्भवः स एव विपाको न यो जाठराग्निसं-योगमात्राद्रसानामनेकावस्थः प्राङ्मधुरोऽनंतरं स एव पच्यमानोऽम्लस्ततो विपच्यमानः स एव कटु-विपाकः ॥ २५ ॥

प०—द्रव्ये विपाकः—विपाकस्त्रिविधः।सर्वद्रव्याणां परिणामकालभावी कार्यानुमेयः जाठराग्निसम्ब-न्धाद् द्रव्यस्य स्वरूपान्तरप्रादुर्भावः। स त्रिधैव रस-षट्केऽपि न षोढा।तेन किञ्चित् स्वादुविपाकं किञ्चि-दम्लविपाकं किञ्चित्कटुकविपाकं द्रव्यम् । तत्र मधुर-लवणयोर्मधुरविपाकः । अम्लस्याम्लः । तिक्तकटु-कषायाणां कटुकः स च कार्यानुमेयः । तथाच वक्ष्यति—"जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः ॥" अत एव सोपसर्गः पाकशब्द उपात्तः । विशिष्टः पाको विपाको न पाकमात्रस्वरूपः । तथाच भट्टा-रकचरकमुनी—"रसो विपाके द्रव्याणां विपाकः कर्मनिष्ठया । वीर्यं यावदधीवासान्निपाताच्चोपल-

भ्यते ॥" एवं कर्मनिष्ठानुमित एकरूपावस्थो जाठराग्निसंयोगाद्यो रसानां रसान्तरोद्भवः स एव विपाकः। ननु यो जाठराग्निसंयोगमात्रात् रसानामनेकावस्थः प्राङ् मधुरोऽनन्तरं स एव पच्यमानोऽम्लरूपो विपच्यमानः स एव कटुविपाकः॥ २५॥

विपाकभेदानाह—ते च त्रयः, स्वादुरम्लः कटुकश्चेति ॥ २५ ॥

द्रव्यस्य गुणानाह--

**गुरुमंदहिमस्निग्धश्लक्ष्णसांद्रमृदुस्थिराः। गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः २६**

स०-तत्र द्रव्ये गुर्वादयो दश गुणाः सविपर्यया विंशतिर्ज्ञेयाः। एषां क्रमाद्विपरीता लघुतीक्ष्णोष्णरूक्षखरद्रवकठिनसरस्थूलपिच्छिलाः। गुरुस्तद्विपर्ययो लघुः। मंदस्तद्विपर्ययस्तीक्ष्णः। हिमस्तद्विपर्यय उष्णः। स्निग्धस्तद्विपर्ययो रूक्षः। श्लक्ष्णस्तद्विपर्ययः खरः। सांद्रस्तद्विपर्ययो द्रवः। मृदुस्तद्विपर्ययः कठिनः। स्थिरस्तद्विपर्ययः सरः। सूक्ष्मस्तद्विपर्ययः स्थूलः। विशदस्तद्विपर्ययः पिच्छिलः॥ २६ ॥

प०—द्रव्यस्य गुणानाह—तत्र द्रव्येषु गुर्वादयो दश गुणाः सविपर्यया विंशतिर्ज्ञेयाः। एषां क्रमात् विपरीता लघुतीक्ष्णोष्णरूक्षखरद्रव्यकठिनसरस्थूलपिच्छलाः। गुरुस्तद्विपर्ययो लघुः। मन्दस्तद्विपर्ययस्तीक्ष्णः। हिमस्ताद्विपर्यय उष्णः। स्निग्धस्तद्विपर्ययो रूक्षः। श्लक्ष्णस्तद्विपर्ययः खरः। सान्द्रस्तद्विपर्ययो द्रवः। मृदुस्तद्विपर्ययः कठिनः। स्थिरस्तद्विपर्ययः सरः। सूक्ष्मस्तद्विपर्ययः स्थूलः। विशदस्तद्विपर्ययः पिच्छिलः॥ २६ ॥

हे०-गुणभेदानाह-गुरुमंदेति। तत्र गुर्वादयो दश,तद्विपर्ययाश्च लघुतीक्ष्णोष्णरूक्षखरद्रवकाठिनचलस्थूलपिच्छिला दश। द्रव्यस्य बृंहणे कर्मणि शक्तिर्गुरुः, लंघने लघुः, शमने मंदः, शोधने तीक्ष्णः, स्तंभने हिमः, स्वेदने उष्णः, क्लेदने स्निग्धः, शोषणे रूक्षः, रोपणे श्लक्ष्णः, लेखने खरः, प्रसादने सांद्रः, विलोडने द्रवः, श्लथने मृदुः, दृढने कठिनः, धारणे स्थिरः, प्रेरणे चलः, विवरणे सूक्ष्मः, संवरणे स्थूलः, क्षालने विशदः, लेपने पिच्छिल इति। ननु व्यवायिविकाश्याशुकारिप्रसन्नसुगंधादयः सविपर्ययाश्चान्येऽपि गुणा दृश्यन्ते। तद्यथा स्वयमेवाह-"तीक्ष्णोष्णरूक्षसूक्ष्माम्लव्यवाय्याशुकरं लघु। विकाशि विशदं मद्यमोजसोऽस्माद्विपर्ययः॥" चरकः-"स्वादुशीतमृदुस्निग्धं बहुलं श्लक्ष्णपिच्छिलम्। गुरु मंदं प्रसन्नं च गव्यं दशगुणं पयः॥ तदेवंगुणमेवौजः सामान्यादभिवर्धयेत्॥" सुश्रुतः—"कषायं कफपित्तघ्नं किंचित्तिक्तं रुचिप्रदम्। हृद्यं सुगन्धि विशदं लवलीफलमुच्यते॥" अयमेव—"पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम्॥" चरकः—"शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम्। प्रकृत्या दिव्यमुदकं भ्रष्टं पात्रमपेक्षते॥" इत्यादि। तत्कथं विंशतिर्गुणा इति। अत्रोच्यते य एतेऽतिरिक्ता गुणा दर्शिताः ते विंशतावेवांतर्भूताः। तथाहि—व्यवायिविकाश्याशुकारिणस्तावन्मद्ये पठ्यन्ते। प्रसन्नः क्षीरे। मद्यगुणा विपरीता ओजसि। य एवौजसि त एव क्षीरे।ततश्च। तद्गुणपरस्परविपर्ययपर्यालोचनया व्यवायी—द्रवेंऽतर्भूतः। विकाशी—खरे। आशुकारी—चले। प्रसन्नः—स्थूले। ते हि पारिशेष्यात् बहलश्लक्ष्णस्थिरसूक्ष्माणां विपर्ययाः स्वादुशीतमंदस्निग्धपिच्छिलगुरूणां ह्यम्लोष्णतीक्ष्णरूक्षविशदलघवो विपर्ययाः प्रसिद्धा एव। व्यवाय्यादि लक्षणं च द्रवादिष्वेव संभवति। यदाह सुश्रुतः—"व्यवायी देहमखिलं व्याप्य पाकाय कल्पते। विकाशी विकशन् धातून् संधिबन्धान् विमुञ्चति॥ आशुकारी तथाशुत्वात् धावत्यंभसि तैलवत्" इति। प्रसन्नत्वं स्फुटत्वं तच्च स्थूल एव। तस्य स्फुटप्रत्यक्षत्वात्।सुगन्धदुर्गंधौ तु मन्दतीक्ष्णविशेषौ इन्द्रियप्रसादनोद्वेजनद्वारा शमनशोधनरूपत्वात्। यदाह सुश्रुतः--"सुगन्धी रोचनो मृदुः दुर्गन्धो विपरीतोऽस्मात्"इति शुचिविमलौ तु विशदविशेषौ। प्रदिग्धानां हि मलानां क्षालने शक्तिः। शुचित्वं दुष्टानां विमलत्वम्। शिवं परिणामे हितम्। मृष्टं जिह्वाप्रियम्। ते च गुणकार्ये गुणशब्दस्तूपचारात्। यथा—"क्षुद्बोधनो बस्तिविशोधनश्च प्राणप्रदः शोणितवर्धनश्च। ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥" इत्यादौ। यत्तु व्यवायिविकाशि प्रस्तुत्योक्तं संग्रहे,—"सरतीक्ष्णप्रकर्षौ तु कश्चित्तौ परिकल्पितौ" इति। तदेकीयमतत्वादनादरणीयं, तदादरणे यत्तैले व्यवायिबद्धविट्कत्वयोरभिधानं तद्विरुद्धं स्यात्। यच्च मद्ये तीक्ष्णविकाशिनोस्तत्पुनरुक्तं स्यात्। यत्तु--पित्ते तीक्ष्णविस्रयोरभिधानं तादिन्द्रियोद्वेजकत्वे सत्यपि घ्राणेंद्रियस्योद्वेजनातिशयार्थम्। संग्रहे तु--"इन्द्रियार्था व्यवायी च विकाशी चापरे गुणाः। सत्त्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः॥" इति॥ २६ ॥

रोगकारणमाह—

**कालार्थकर्मणां योगा हीनमिथ्यातिमात्रकाः।**
**सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् २७**

स०--कालः शीतोष्णवर्षलक्षणस्त्रिविधः। अर्थाः शब्दस्पर्शरसरूपगंधा महाभूतगुणाः। तथाचागमः। अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः। कर्म क्रिया कायवाङ्मनश्चेष्टा। कालश्चार्थश्च कर्म च तानि कालार्थकर्माणि तेषां योगाः संबंधाः। कालार्थकर्मणां योगाः। किंभूताः हीनमिथ्यातिमात्रकास्तथा सम्यग्योगश्चेति। ये कालादीनां योगा हीनमिथ्यातिमात्रकास्ते रोगैककारणम्। तेषामेव यः सम्यग्योगः स आरोग्यैककारणं प्रधानकारणमिति। एकशब्दः प्रधानवचनो यथैकः पार्थो धनुर्धरः। कालस्य हीनयोगः स्वरूपहानिः। अतियोगः स्वरूपातिशयः। मिथ्यायोगः स्वरूपाद्वैपरीत्यम्। यथा हीनशीतता हीनोष्णता हीनवर्षता हीनयोगे। यथाऽतिशैत्यमत्यौष्ण्यमतिवर्षणमतियोगे। यथा शीतकालावसरेऽत्यौष् ष्णकालावसरे शीतं वर्षाकालेऽवृष्टिर्मिथ्यायोगे। द्योगत्रयं रोगकारणम्। सम्यग्योगो यथास्वरूपस्थि रारोग्यकारणम्। अर्थानां पुनः स्वेन स्वेनार्थेनेंद्रि हीनः संयोगो हीनयोगः। अत्यंतसंयोगोऽतियोग पुरुषानभिमतादिनार्थजातेनेंद्रियस्य योगो मिथ्यायो एते त्रयो रोगकारणम्। यथास्वं सम्यग्योग आरे कारणम्। कार्यादिकर्मणो हीनप्रवृत्तिर्हीनयोगः। अ प्रवृत्तिरतियोगः। वेगोदीरणादिकं सामिभुक्तभा दिकं रागद्वेषादिकं यथास्वमुत्तरत्र वक्ष्यमाणं मि योगः। सर्वेषां समा प्रवृत्तिः समयोगः। तेन ह दयो योगास्त्रयो रोगकरणम्। सम्यग्योगस्त्वारोग्य रणम्॥ २७॥

प०—रोगकारणमाह—कालः शीतोष्णव लक्षणस्त्रिविधः। अर्थाः शब्दस्पर्शरूपरसगन्धा म भूतगुणाः। तथा चागमः—"अर्थाः शब्दादयो ज्ञे गोचरा विषयास्तथा। कर्म क्रिया कायवाङ्मनश्चे कालश्चार्थाश्च कर्म च तानि कालार्थकर्माणि योगः सम्बन्धः कालार्थकर्मणां योगः। किंभूतः। ह मिथ्यातिमात्रकः। तथा सम्यग्योगश्चेति। ये का दियोगा हीनमिथ्यातिमात्रकाः ते रोगैककारण तेषामेव यः सम्यग्योगः स आरोग्यैककारण रोगारोग्ययोर्यथासंख्यज्ञापनार्थं सम्यग्योग इत्ये पृथक् निर्दिष्टम्। एकं च तत् कारणं एककारणं प्रधानकारणमिति। एकशब्दः प्र नवचनोः यथा—'एकः पार्थो धनुर्धरः' कालस्य हीनयोगः स्वरूपहानिः। अतियो स्वरूपातिशयः। मिथ्यायोगः स्वरूपाद्वैपरीत्यम् यथा—हीनशीलता हीनोष्णता हीनवर्षता हीनयोग यथा—शीतकालावसरेऽत्युष्णम्। उष्णकालावस च शीतम्। वर्षाकालेऽवृष्टिः मिथ्यायोगः यथा—अतिशैत्यमत्युष्णमतिप्रवर्षणमतियोगः एतद्योगत्रयं रोगकारणम्। समयोगो यथास्व रूपस्थितिरारोग्यकारणम्। अर्थानां पुनः स्वे स्वेनार्थेनेन्द्रियस्य हीनः संयोगो हीनसंयोगः अत्यन्तं संयोगोऽतियोगः। पुरुषानभिमतादिनार्थ जातेनेन्द्रियस्य योगो मिथ्यायोगः। मिथ्यायो

---

(१) संकलयति कालयति वा भूतानीति कालः। सूक्ष्मां कलामपि न लीयते वेति कालः। तस्यादित्यगतिविशेषेण निमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगप्रविभागा भवन्ति। तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिवेशः, पञ्चदशाऽक्षिनिमेषाः काष्ठा, त्रिंशत्काष्ठाः कला, विंशतिकलो मुहूर्तः, त्रिंशन्मुहूर्त्तमहोरात्रम्, पञ्चदशाहोरात्राणि पक्षः, स च शुक्लः कृष्णश्च, तौ मासः। इह तु भाद्रपदाद्येन द्विमासिकेन वर्षा-शरद्-हेमन्त-वसन्त-ग्रीष्म-प्रावृषो षडृतवो भवन्ति। त एते शीतोष्णा वर्षलक्षणादोषोपचयप्रकोपशमननिमित्तम्। तत्र चन्द्रादित्ययोः कालभागकरत्वात् द्वे अयने भवतः, दक्षिणमुत्तरञ्च, तयोर्दक्षिणं वर्षा-शरद्-हेमन्ताः। तेषु सोम आप्यायते, अम्ललवणमधुराश्च रसा बलवन्तो भवन्ति। प्राणिनामुत्तरोत्तरं बलमभिवर्धते। उत्तरं च शिशिर-वसन्त-ग्रीष्माः। तेषु अर्कश्चाप्यायते। तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्ति। उत्तरोत्तरं च प्राणिनां बलमपि हीयते। द्वे अयने संवत्सरो भवति। ते पञ्च युगमिति। एष निमेषादियुगपर्यन्तः चक्रवत् परिवर्तमानः कालः। कालचक्रश्चोच्यते।

अर्थाः शब्द-स्पर्श-रूप-रस-गन्धा महाभूतगुणाः पञ्च ज्ञानेन्द्रियाणां विषयाः। कर्म्म-क्रिया-वाङ्मनश्चेष्टाः कर्मेन्द्रियाणां विषयाः। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, एकं मनः। एषामेकादशानां हीनमिथ्यातियोगाः कालस्य च सर्वामयोत्पादका ज्ञेयाः।

रोगकारणम् । यथास्वं समयोगः आरोग्यकारणम् । कालादिकर्मणो हीनप्रवृत्तिर्हीनयोगः । अतिप्रवृत्तिरतियोगः । वेगोदीरणादिकं साभिभुक्तभाषणादिकं रागद्वेषादिकं च यथास्वमुत्तरत्र वक्ष्यमाणं मिथ्यायोगः । सर्वेषां समा वृत्तिः समयोगः । तेन हीनादयो योगास्त्रयो रोगकारणम् । सम्यग्योगस्त्वारोग्यकारणम् ॥ २७ ॥

हे०-उक्तधर्मकाणां द्रव्याणां सदोपयोगात्सदैव दोषवैषम्ये प्राप्ते विशेषमाह--कालार्थेति । द्रव्याणि चरकोक्तानि "खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः ।" इति । तत्र कालः साक्षादुच्यते । महाभूतानि त्वर्थद्वारेण । दिगात्ममनांसि कर्मद्वारेण । कालो वर्षाशीतोष्णभेदात् त्रिधा । शब्दस्पर्शरूपरसगंधभेदादर्थः पञ्चधा । कायिकवाचिकमानसिकभेदात्कर्म त्रिधा । तेषामसम्यग्योगो रोगकारणं, सम्यग्योगस्त्वारोग्यकारणम् । तत्रासम्यग्योगस्त्रिधा—हीनयोगो मिथ्यायोगोऽतियोगश्चेति । शीतादीनां काललक्षणानामल्पत्वं कालस्य हीनयोगः, विपरीतस्वलक्षणो मिथ्यायोगः, आधिक्यमतियोगः । इंद्रियैरिंद्रियार्थानां योऽल्पः संबंधः सोऽर्थस्य हीनयोगः, अनुचितो मिथ्यायोगः, अधिकोऽतियोगः । अल्पचेष्टा कर्मणां हीनयोगः, अनुचितो मिथ्यायोगः, अधिकोऽतियोगः । असम्यग्योगाद्विपरीतः,सर्वेषां सम्यग्योगः । एतदुक्तं भवति । यद्यपि सर्वदा द्रव्यैर्योगस्तथाप्य सम्यग्योगो यदा तदा दोषवैषम्यं, यदा सम्यग्योगस्तदा दोषसाम्यम् इति बहिरंगो रोगहेतुः ॥ २७ ॥

रोगारोग्ये कैरुच्येते इत्याह—

**रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ॥२८॥**

स०—दोषाणां वातादीनां स्वप्रमाणादेकस्य द्वयोस्त्रयाणां वा वृद्धिः क्षयो वा रुजाकरत्वाद्रोग एव वैषम्यं विषमता स्वरूपाच्च्यावः ततः कार्यकारणयोरभेदेन पठितो रोग इति ।दोषाणां साम्यं स्वरूपादप्रच्युतिः समभागोऽरोगताऽऽरोग्यं स्वास्थ्यमिति यावत् ॥ २८ ॥

प०-रोगारोग्ये कैरुच्येते इत्याह-दोषाणां वातादीनां स्वमानादेकस्य द्वयोस्त्रयाणां वा वृद्धिःक्षयो वा रुजाकरत्वाद्रोग एव । वैषम्यं विषमता स्वरूपाच्च्यावः चालः । ततः कार्यकारणयोरभेदेन पठितो रोग इति दोषाणां साम्यं स्वरूपादप्रच्युतिः । समभावोऽरोगता आरोग्यं स्वास्थ्यमिति यावत् ॥ २८ ॥

हे०—अथ लक्षणं व्याचष्टे रोगं लक्षयति—रोगस्त्विति । दोषदूष्याणां यद्वैषम्यं विकृतत्वं तद्रोगः । दोषशब्दोऽन्तरंगहेतुमात्रोपलक्षणः । प्रसंगादारोग्यं लक्षयति दोषदूष्याणां यत्साम्यमविकृतत्वं तदारोग्यम् ॥ २८ ॥

**निजागंतुविभागेन तत्र रोगा द्विधा स्मृताः२९**

स०—तत्र तयो रोगारोग्ययो रोगा द्विधा निजागंतुभेदेन । निजा वातादिदोषजन्मानः । आगंतवो बाह्यहेतवः । तथा चाचार्यवचनम् । निजास्त्रिदोषोत्था बाह्यहेतुजास्त्वागंतवः । अनयोरियानविशेषः । निजे रोगे वातादयः पूर्वं वैषम्यं गत्वा पश्चाद्व्यथामभिनिर्वर्तयंति । आगंतवः पुनः पूर्वमेवोत्पद्यंते अनंतरं तत्र वातादयः कुप्यंतीति । अनेनोभयस्य निजागंतुभेदभिन्नस्य व्याधेश्चेतःसंतापकत्वं बोद्धव्यम् ॥ २९ ॥

प०—तत्रतयो रोगारोग्ययो रोगा द्विविधा निजागन्तुविभागेन । निजा वाय्वादिदोषजन्मानः । आगन्तवो बाह्यहेतवः । तथाऽऽचार्यवचनम् । निजास्त्रिदोषोत्थाः । बाह्यहेतुजास्त्वागन्तवः । अनयोरियान् विशेषः । निजे रोगे वातादयः पूर्वं वैषम्यं गत्वा पश्चाद्व्यथामभिनिर्वर्तयन्ति । आगन्तौ पुनर्व्यथा पूर्वमेवोत्पद्यते अनन्तरं तत्र वातादयः कुप्यन्तीति । अनेनोभयस्य निजागन्तुभेदभिन्नस्य व्याधेश्चेतःसन्तापकत्वं बोद्धव्यम् ॥ २९ ॥

हे०-रोगभेदानाह-द्विविधो रोगः निज आगंतुश्चेति । तत्र यद्दोषवैषम्यं स्वयमुत्पाद्य व्यथां निर्वर्तयति इति च स निजो रोगः । यस्तु शस्त्रादिना हेत्वंतरेणोत्पन्नः स आगंतुः ॥२९॥

यत एवं देहमनसी रोगाधिष्ठानत्वेन स्थिते न केवलो देहो नापि केवलं मनस्तस्मादतोऽनंतरमिदमाह--

**तेषां कायमनोभेदादधिष्ठानमपि द्विधा ॥३०॥**

स०—तेषां निजागंतुकानां विकाराणां रोगाणां कायमनोभेदेन द्विविधमधिष्ठानं स्थानम् । ज्वरास्रपित्तकासादीनां कायो मदमूर्छासंन्यासग्रहभूतोन्मादापस्माररागद्वेषादीनां मनः । अधितिष्ठंत्यस्मिन्नित्यधिष्ठानम् । कायः शरीरम् । मनश्चेतः ॥ ३० ॥

प०—यत एवं देहमनसी रोगाधिष्ठानत्वेन स्थिते न केवलो देहो नापि केवलं मनः । तस्मादतोऽनन्तरमिदमाह-तेषां निजागन्तुकानां रोगाणां कायमनो-

भेदेन द्विविधमधिष्ठानम् । ज्वरास्रपित्तकासादीनां कायः । मदमूर्च्छासंन्यासग्रहभूतोन्मादापस्माररागद्वेषादीनां मनः । अधितिष्ठन्त्यस्मिन्नधिष्ठानम् । कायः शरीरं । मनश्चेतः ॥ ३० ॥

हे०--रोगाधिष्ठानाह---तेषामिति--तच्च द्विधा--शरीरं मनश्च ॥ ३० ॥

ननु कायिकानां रोगाणामुत्पत्तौ हेतवो वातादयो दोषाः प्रकुपिता उक्ताः मानसानां च रोगाणां को हेतुस्तदर्थमाह--

**रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ॥३१॥**

**स०**--मनश्चेतस्तस्य रजस्तमसी दोषावुपप्लवावविद्यासंभवौ। अत्र च प्राधान्यादादौ रजो निक्षिप्तम्। चशब्दः पवनादीनामप्युपसंग्रहार्थः । यस्मात्तेऽपि मनः संश्रित्य विकुर्वते । समये हि षडुन्मादा भवंति वातपित्तकफसन्निपाताद्विविधनिमित्ता उदाहृता इत्युदाहरणमात्रमुद्देशमात्रं वचनमात्रमत्रायुर्वेदशास्त्रे । रजस्तमसोर्न साकल्येन व्याकरणमनिलादीनामिव । ते खल्वत्र स्वभावस्थानादिभिः प्रकारैरशेषमुक्ता न तु रजस्तमसी ॥ ३१ ॥

प०--ननु कायिकानां रोगाणामुत्पत्तौ हेतवो वातादयो दोषाः प्रकुपिता उक्ताः । मानसानां च रोगाणं को हेतुस्तदर्थमाह--रज इत्यादि । मनश्चेतस्तस्य रजस्तमसी दोषावुपप्लवावविद्यासम्भवौ । अत्र च प्राधान्यादादौ रजो निक्षिप्तम् । चशब्दः पवनादीनामप्युपसंग्रहार्थः । यस्मात्तेऽपि मनः संश्रित्य विकुर्वते । समये हि षट् उन्मादा भवन्ति वातपित्तकफसन्निपाताधिविषयनिमित्ता उदाहृता इति उदाहरणमात्रमुद्देशमात्रं वचनमात्रमायुर्वेदशास्त्रे । रजस्तमसोर्न साकल्येन व्याकरणमनिलादीनामिव । ते खल्वत्र स्वभावस्थानसंस्थानादिभिः प्रकारैरशेषमुक्ताः । न तु रजस्तमसी ॥ ३१ ॥

हे०--दुष्टस्य मनसो रोगाधिष्ठानत्वा दुष्टिहेतुमाह--स च द्विधा---रजस्तमश्च । द्वौ दोषौ द्वे दुष्टिकारणे इत्यर्थः । न त्वनयोर्वातादिवद्दोषत्वं ततोऽनन्तरमनुक्तेर्दोषविज्ञानीयादिषु चाग्रहणात् । कायोऽपि दुष्ट एव रोगाधिष्ठानं तस्य तु दोषा एव दुष्टिकारणम् ॥ ३१ ॥

रोगोपहतशरीरज्ञानोपायमाह ।

**दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम् ॥३२॥**

**स०**-रोगोऽस्यास्तीति रोगी व्याधितः तं दर्शनादिभिः परीक्षेत । दर्शनेन दृष्ट्या कासमेहाद्यार्तेषु पीतशुक्लवर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दितादिकम् । स्पर्शनेन हस्तकायस्पर्शेन ज्वरगुल्मविद्रध्याद्यार्तम् । तथा शीतोष्णस्तब्धस्पंदे श्लक्ष्णखरस्पर्शादिकं च । प्रश्नेन पृच्छया शूलारोचकच्छर्दिप्रदर्दत्वं सुच्छंददुश्छंदत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्रद्विष्टेष्टसुखदुःखानि चेत्यातुरमुखात्परीक्षेत ॥ ३२ ॥

प०-रोगोपहतशरीरज्ञानोपायमाह-रोगोऽस्यास्तीति रोगी व्याधितः तं दर्शनादिभिः परीक्षेत । दर्शनेन

१ मानसः पुनर्दोषसंग्रहो रजस्तमश्चैव, न तु सत्त्वं शरीरत्वग्रसादिवत् मनोदूषणशीलत्वान्मानसदोषः संग्रहेणोद्दिष्ट इत्यर्थः । मनस्त्वाहङ्कारिकविकृतसत्त्वगुणप्रधानत्रिगुणविकारसमुदायात्मकं चेतनाधिष्ठानभूतमहदहङ्काराश्रयः। एतेन सत्त्वरजस्तमांसीति त्रयो गुणाः समविषमरूपेणाव्यक्तमहदहङ्कारमनसां प्रकृतिभूतधातवो मनसि वर्त्तन्ते तेषां दूषकौ यतो रजस्तमोगुणौ विषमावेव भवतो न तु समौ तस्मान्मानसदोषसंज्ञकौ, मनस आरम्भकौ ह्याहङ्कारिकौ रजस्तमोगुणौ मनसि वर्त्तेते । यथा--शरीरस्य भूतान्यारम्भकाणि शरीरे वर्तन्ते । समत्वे तु विधानधारणपोषणैः शरीरमनसोः क्रमाद्धातुर्वातादिश्च रजस्तमश्चेति **गङ्गाधरः** ।

आदौ रज उक्तं प्राधान्यात्, वचनं हि "नारजस्कं तमः" इति **चक्रपाणिः** ।

मानसास्तु--"क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति" इति **सुश्रुतः** ।

मानसास्त्वित्यादि । क्रोधः--पराभिद्रोहलक्षणः, शोकः--पुत्रादिवियोगे चित्तोद्वेगः, भयं--परस्मात्त्रासः, हर्ष--उत्सेकः, निर्निमित्तमन्यस्य दोषोत्पादनेनात्मनः प्रीतिजननं वा हर्षः, असिद्धिभयाद्विविधेषु कर्मसु सादोऽप्रवृत्तिः विषादः, ईर्ष्या--परसंपत्तावसहिष्णुता, छिद्रान्वेषितया परगुणेषु दोषारोपणमसूया, दैन्यं--क्लिष्टचित्तता, मात्सर्यं--परगुणेषु अमाध्यस्थम्, क्रौर्यं वा । काम--इन्द्रियार्थेषु अभिकाङ्क्षा, लोभः--परस्वग्रहणाभिलाषः, आदिग्रहणात् मानमददम्भादयः । इच्छाद्वेषभेदैर्भवन्तीति इच्छा--सातिशयोऽर्थाभिलाषः, सा च नानावस्त्ववलम्बिनी नानाकामतश्च भिन्ना भवति, तत्र हर्षशोकदैन्यकामलोभादय इच्छाभेदेन । द्वेषः-अप्रीतिः, सोऽपि नानावस्त्ववलम्बी नानारूपो भवति, क्रोधभयविषादेर्ष्यासूयामात्सर्याणि द्वेषभेदेन । अन्ये तु मानसाः--"क्रोधशोकभयदैन्येर्ष्यासूयामात्सर्यकामादयः" इति पठन्तीति **निबन्धसङ्ग्रहे** ।

दृष्टया कासमेहाद्यार्तेषु पीतशुक्लवर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दितादिकम् । स्पर्शनेन हस्तकायस्पर्शनेन ज्वरगुल्मविद्रध्याद्यार्तम् । तथा शीतोष्णस्तब्धस्पन्दश्लक्ष्णखरस्पर्शादिकं च । प्रश्नेन पृच्छया शूलारोचकसुच्छन्ददुश्छन्दत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्रद्विष्टेष्टसुखदुःखानि चेत्यातुरमुखात्परीक्षेत ॥ ३२ ॥

रोगित्वज्ञानोपायमाह—स च त्रिधा—दर्शनं स्पर्शनं प्रश्नश्चेति । तत्र दर्शनेन वैवर्ण्यादिकं, स्पर्शनेन शैत्यादि, प्रश्नेन शूलादिकं निर्धार्य रोग्ययमिति निश्चयः ॥ ३२ ॥

रोगविशेषाधिगमोपायमाह—

**रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥३३॥**

(१) **निदानमित्यादि** । एते पञ्च व्यस्ताः समस्ताश्च व्याधिबोधकाः । न च समस्तपक्षे कृतकरणत्वं वाच्यं, प्रमाणसंप्लवस्यापि दृष्टत्वात् । ( अनुमितवह्नौ प्रत्यक्षोपमानशब्दानामपि स्थितिसत्त्वात्, यतः प्रमातुः प्रमातव्य एकस्मिन्नर्थे चतुर्णां प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणानां सम्प्लवः=समूहो-दृष्टः, अतः समस्तपक्षे कृतकरणत्वं न वाच्यम् )। न यो ह्यनुमानेन प्रतीतो वह्निः स एव प्रत्यक्षागमाभ्यां नोपलभ्यते । ( अत्र नञ्द्वयं प्रकृतमर्थं दृढयति, तद्यथा–अनुमानेन प्रतीतो यो वह्निः स किं प्रत्यक्ष-शब्दाभ्यां नोपलभ्यते । इति नहि, अपि तु स ताभ्यामुपलभ्यत एवेत्यर्थः ) । न वा निदानादीनि प्रेक्षावन्तो ये नैवमालोचयेयुः । ( अत्रापि पूर्ववत्प्रकृतार्थबोधकं नञ्द्वयम्, यथा–अथवा ये प्रेक्षावन्तः । ( समालोचकाः ) ते निदानादीनि न सन्तीत्येवं कदाचिदालोचयेयुः । इति न कदापि, किन्तु सन्ति निदानादीनीत्यालोचयेयुरवति सरलार्थः ) एकेनैव प्रतिपादितो व्याधिरिति वयमिहोदास्महे । ( एतेषां निदानादीनां पञ्चानां मध्ये केनचिदेकेनैव प्रतिपादितो व्याधिरिति केषांचिन्मतं, किन्तु वयमिहोदास्महे=न श्रद्दध्महे न मन्यामहे तदित्यर्थः ) । किंच एकेन प्रतिपादितेऽपि व्याधावपरेऽवश्यमभिधातव्याः, भिन्नप्रयोजनत्वात् । तथाहि–यदि निदानं नोच्यते तदा तत्परिवर्जनं कथं लभ्येत । उक्तं हि **सुश्रुते**–। "संक्षेपतः क्रियायोगो निदानपरिवर्जनम्" इति ( **सु. उ. तं. अ. १** ) । किंच यथा मृद्भक्षणात्पाण्डुरोगः, मक्षिकाभक्षणाच्च छर्दिरवसीयते, न च तथा निदानेन सर्वत्र नियतरोगाध्यवसायः, ज्वरगुल्मादीनामेककारणत्वात् । यदाह **चरकः**–"एको हेतुरनेकस्य तथैकस्यैक एव हि । व्याधेरेकस्य बहवो बहूनां बहवस्तथा" इति ( **च. नि. स्था. अ. ८** ) । अपि च कदाचित्प्रत्यासन्नं निदानं बाधित्वा विप्रकृष्टनिदान-

**सु०**–रोगं निदानादिभिः पंचभिः परीक्षेत । निदानं कारणं हेतुरित्यनर्थान्तरम् । तच्चासन्नविप्रकृष्टभेदेन द्विधा ।

कृतो दोषसंचयो व्याधिं कुर्यात्, तस्मात्केवलान्निदानान्न व्याधिज्ञानं भवतीति पूर्वरूपादीनामुपादानमिति **वाप्यचन्द्रः** । असति पूर्वरूपाभिधाने तत्रोक्तः क्रियाविशेषो न सङ्गच्छते । उक्तं हि **चरके**,–"ज्वरस्य पूर्वरूपे लघ्वशनमपतर्पणं वा" इति ( **च. नि. स्था. अ. १** ) । तथा च **सुश्रुते**–वातिकज्वरपूर्वरूपे घृतपानमिति । तथाऽसाध्यत्वं च नोपलभ्येत । उक्तं च **चरके**–पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशत्येनं मृत्युज्वरपुरःसरः ॥ अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् । विशंत्यनेन कल्पेन तस्यापि मरणं ध्रुवम्" इति ( **च. इ. स्था. अ. ५** ) । तथा रक्तपित्त-प्रमेहयोर्विशेषज्ञानं च न जायते । उक्तं च **चरके**–"हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः । यो मूत्रयेत्तन्न वदेत्प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः" इति ( **च. चि. स्था. अ. ६** ) । असति रूपाभिधाने व्याधिरशेषेण स्वरूपमेव न व्यवच्छिद्यते; किंच साध्यासाध्यत्वं च न ज्ञायते । तथा हि—सुखसाध्यलक्षणे **चरकः**–"हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य वै । न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्" इति (**च.सू.स्था. अ१०**); कष्टसाध्यलक्षणे **चरकः**–"निमित्त-पूर्वरूपाणां रूपाणां मध्यमे बले" इति ( **च. सू. स्था. अ. १०** ) । तथा–"सर्वसंपूर्णलक्षणः । सन्निपातज्वरोऽसाध्यः" इति ( **च. चि. स्था. अ. ३** ) । असत्युपशयाभिधाने संकीर्णलक्षणोऽनभिव्यक्तलक्षणे वा व्याधौ विशेषबोधो न स्यात् । तदुक्तं **चरके** "गूढलिङ्गं व्याधिमुपशयाभ्याम्" ( परीक्षेत ) इति ( **च. वि. स्था. अ. ४** ) । असत्यां च संप्राप्तौ पूर्वरूपादिप्रतीतस्यापि व्याधेश्चिकित्सोपयोगिनोंऽशांशविकल्पनी–बल–कालादेरप्रतीतश्चिकित्साविशेषो न स्यात् । तस्मात्पञ्चापि निदानादयो वक्तव्याः । पञ्चविधमप्येतद्व्याधुत्पत्ति–ज्ञप्ति–हेतुभूतं निदानशब्देनोच्यते । यदाह **सुश्रुतः**–"हेतुलक्षणानिर्देशान्निदानानि" इति ( **सु. सू. स्था. अ. ३** ) । तत्रैव **निदानशब्दनिरुक्तिः**–"निर्दिश्यते व्याधिरनेनेति निदानम्"; "दिशेः पृषोदरादित्वाद्रूपसिद्धिः"–इति **गदाधरः** । "निश्चित्य दीयते प्रतिपाद्यते व्याधिरनेनेति निदानम्" इति **जेज्जटः** । **भट्टारहरिचन्द्रेणापि** तन्त्रयुक्त्या निदानादिविवरणप्रस्तावे एवैव निरुक्तिरुक्ता । निशब्दो निश्चये । **तथा च वररुचकपसर्गसूत्रम्**,–"**नि निश्चयनिषेधयोः**" इति । लोकेऽपि " अद्य ते निदानं करिष्यामि" इत्युक्ते निश्चयं करिष्यामीत्यवगम्यते । निदानमिति करणे ल्युट्; तेन '**व्याधिनिश्चयकरणं निदानम्** ' इति निदा-

आसन्नमपि द्विविधम् । आसन्नात्यासन्नभेदेन । आसन्नं रूक्षलघुशीतादिद्रव्योपयोगः । अत्यासन्नं तु यतः समनंतरमेव रोगोत्पत्तिः । यथा वातादयो दोषाः क्रुद्धाः । विप्रकृष्टं यदादिकाले ज्वरादीनां तथा हविःप्राशादि मेहकुष्ठादीनाम् । तेनैवंविधमर्थजातमेवंविधस्य रोगस्य हेतुत्वेनोपदिष्टमेवंविधश्चोत्पन्नोऽतो निदानाज्ज्ञायते रोगः । प्राग्रूपं पूर्वरूपं भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठितस्य लक्षणमुद्बुभूषुर्ज्वरादिरामयो वातादिदोषविशेषेणालिंगितरूपाभासो येनावभास्यते यथायथमल्पत्वाद्यदव्यक्तमस्फुटं लिंगं तत्प्राग्रूपम् । लक्षणं पुनस्तदेव प्राग्रूपाद्विलक्षणम् । येन सकलदोषविशेषालिंगितः स्फुटलिंगो व्याधिर्दृश्यते लक्ष्यते । उपशयः सुखानुबंध्याहाराद्युपयोगः । एवंविधेनाहारादिकेन हि तस्य पीडा नाभूदेवंविधेन चाभूदत उपशयाज्ज्ञायतेऽयं रोग इति । स व्याधिसात्म्यः स्वास्थ्यहेतुः सुखावहः । आप्तिर्निर्वृतिः सम्प्राप्तिरागतिर्जातिरित्यनर्थांतरम् । एवं दुष्टेनैवं स्थानस्थितेनैवमनुगतेनानया कल्पनयैवंमार्गेण दोषेणेति परिकल्पनमत आप्त्या ज्ञायतेऽयं रोग इति ॥ ३३ ॥

प०—रोगविशेषाधिगमोपायमाह—रोगं निदानादिभिः पंचभिः परीक्षेत । निदानं च कारणं हेतुरित्यनर्थान्तरम् । तच्चासन्नविप्रकृष्टभेदेन द्विधा । आसन्नमपि द्विविधम् । आसन्नात्यासन्नभेदेन । आसन्नं च रूक्षलघुशीतादिद्रव्योपयोगः । अत्यासन्नं यतः समनन्तरमेव रोगोत्पत्तिः । यथा वातादयो दोषाः क्रुद्धाः । विप्रकृष्टं यदादिकाले ज्वरादीनाम् । तथा हविःप्रशादि मेहकुष्ठादीनाम् । तेनैवंविधमर्थजातमेवंविधस्य रोगस्य हेतुत्वेनोपदिष्टमेवंविधश्चोत्पन्नोऽतो निदानात् ज्ञायते रोगः प्राग्रूपं पूर्वरूपं भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठितस्य लक्षणम् । उद्बुभूषुर्ज्वरादिरामयो वातादिदोषविशेषणालिङ्गितरूपाभासो येनावभास्यते । यथायथमल्पत्वाद्यद्यदव्यक्तमस्फुटं लिङ्गं तत्प्राग्रूपम् । लक्षणं पुनस्तदेव प्राग्रूपाद्विलक्षणं येन सकलदोषविशेषालिङ्गितस्फुटलिङ्गो व्याधिर्दृश्यते लक्ष्यते । उपशयः सुखानुबन्ध्यहोरात्राद्युपयोगः । एवंविधेनाहारादिकेन ह्यस्य पीडा नाभवदेवंविधेन । व्यथाऽभूत् अत उपशयात् ज्ञायते अयं रोग इति स व्याधिसात्म्यःस्वास्थ्यहेतुः सुखावहः । आप्तिः निर्वृत्तिः सम्प्राप्तिरागतिर्जातिरित्यनर्थान्तरम् । एवं दृष्टान्तेन एवं स्थानस्थितेन एवमनुगतेन अनया कल्पनयाएवं मार्गेण दोषेण विपरिकल्पनम् अत आप्त्या ज्ञायते अयं रोग इति ॥३३॥

हे०—रोगित्वे हि ज्ञाते कोऽसौ रोग इति विशेषं जिज्ञासते रोगविशेषज्ञानोपायमाह -स च पञ्चधा-निदानं प्राग्रूपं लक्षणम् उपशयः आप्तिश्च । आप्तिः—संप्राप्तिः । निदानं—बहिरंगो हेतुः । प्राग्रूपं—पूर्वजो रोगः । रोगस्य हि राजवत् प्रकाशमानस्य परिवारभूता रोगाः केचित्पूर्वं प्रकाशन्ते, केचित्सहैव, केचित्पश्चात् । तत्र ये पूर्वं ते पूर्वरूपं, ये सह ते रूपं, ये पश्चात्ते उपद्रवाः । ते चोभयेऽपि लक्षणपदेन संगृहीताः । उपशयः—व्याधिसात्म्यम् । आप्तिरंतरंगो हेतुः । इति रोगलक्षणम् ॥ ३३ ॥

उपशयादिप्रसंगे च देशकालावप्युपयुज्येते । अतस्तावपि पठति ।

**भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ॥ ३४ ॥**

स०—इहास्मिन्नायुर्वेदशास्त्र आचार्या द्विविधं द्विप्रकारं देशमाहुः कथयंति । भूमिभेदेन देहभेदेन च ३४॥

प०—उपशयादिप्रसङ्गे च देशकालावप्युपयुज्येते-अतस्तावपि पठति—इहास्मिन् आयुर्वेदशास्त्रे आचार्या द्विधा द्विप्रकारं देशमाहुः कथयन्ति । भूमिभेदेन देहभेदेन च । देहदेशः शिरःपाण्यादिलक्षणः प्रसिद्धः ॥ ३४ ॥

हे०-अथौषधं व्याचष्टे तच्च देशकालावपेक्षत इति प्रथमं तावद्देशः । तत्र देशे भेदद्वयमाह—**भूमिदेहेति**—तच्च भूमिर्देहश्च । इहेत्यायुर्वेदशास्त्रे शास्त्रान्तरेषु देशस्य देहव्यवहाराभावात् ॥ ३४ ॥

---

नादिपञ्चकसामान्यलक्षणम् । निदानशब्दोऽयं निदानविशेषे जातौ च वर्तते; यथा--तृणशब्दः तृणविशेषे तृणजातौ च वर्तते । यत्तु, **भट्टारहरिचन्द्रेण निदानस्थाने**—"या गौः सुदोहा भवति न तां निददीत"–इति व्यासप्रयोगमुपन्यस्य निबन्धार्थो निदानशब्दो व्याख्यातः । निदीयते निबध्यते हेत्वादिसंबद्धो व्याधिरनेन" इति कृत्वा, तत्तु निदानस्थानरूपग्रन्थाभिप्रायेण, नहि हेत्वादयो हेत्वादिसंबद्धं व्याधिं प्रतिपादयन्ति । इति मधुकोशव्याख्यायाम् ।

भूमिदेश उच्यते—

**जांगलं वातभूयिष्ठमनूपं तु कफोल्बणम् ।**
**साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥३५॥**

स०—भूदेशं पुनस्त्रिधा त्रिप्रकारमादिशेत् । तत्र जाङ्गलो देशोऽल्पोदकतरुपर्वततत्वेन वक्ष्यमाणलक्षणो वातभूयिष्ठो वातप्रचुरः।तत्र जातौषधिखगपुरुषमृगादयो वातप्रधाना भवंति । प्रचुरोदकवृक्षो यो निर्वातो दुर्लभातपः सोऽनूप इति । स च कफप्रधानः । तज्जाश्चौषध्यादयः स्निग्धा भवंति । साधारणः पुनरुभयलक्षणो मध्यपतितो व्यामिश्ररूपः । स च सममलो वातादिसमदोषः । अत्र दोषा एव मलशब्देनोक्ताः । वक्ष्यति हि । देहस्य मलिनीकरणादाहारमलत्वाच्च मलाः॥३५॥

प०—भूमिदेश उच्यते—तत्र जाङ्गलो देशोऽल्पोदकपर्वतत्वेन वक्ष्यमाणलक्षणो वातभूयिष्ठो वातप्रचुरः । तत्र जातौषधिखगपुरुषमृगादयो वातप्रधाना भवन्ति । प्रचुरोदकवृक्षो यो निर्वातो दुर्लभातपः सोऽनूप इति। स च कफप्रधानस्तज्जाश्चौषधादयः स्निग्धा भवन्ति । साधारणः पुनरुभयलक्षणो मध्यपतितो व्यामिश्ररूपः । स च सममलो वातादिसमदोषः । अत्र दोषा एव मलशब्देनोक्ताः । वक्ष्यति हि-देहस्य मलिनीकरणादाहारमलत्वाच्च मलाः॥३५॥

हे०—भूदेशभेदानाह—ते च त्रयः—जांगलोऽनूपः साधारणश्च । तत्र वातभूयिष्ठो वातरोगबहुलो जांगलः । कफोल्वणः कफरोगबहुलोऽनूपः । यः सममलः स समदोषत्वादारोग्यबहुलः तं साधारणमादिशेत् । देहभेदास्तु प्रकृतिभेदैरुक्ताः ॥ ३५ ॥

भेषजस्य सम्यग्योगहेतुं कालमाह--

**क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत् ३६**

स०--कालो द्विविधः क्षणादिलक्षणो व्याध्यवस्थालक्षणश्च । भेषजस्यौषधस्य योगं करोति । तदर्थसम्पादनसामर्थ्यं करोतीत्यर्थः । भेषजस्य योगो भेषजयोगः तं करोति । क्षणादिः प्रसिद्धः । आदिग्रहणाल्लवत्रुटिमुहूर्तयामाहोरात्रपक्षमासर्त्वयनसंवत्सराणां परिग्रहः । क्षणादिकालस्योदाहरणम् । यथा—"पूर्वाह्ने वमनं देयं मध्याह्ने तु विरेचनम् । मध्याह्ने किंचिदावृत्ते वस्तिं दद्याद्विचक्षणः ॥" व्याध्यवस्था सामनिराममृदुमध्यतीक्ष्णत्वात्तत्तद्योग्यौषधविसृष्टिः । यथा—"लंघनं स्वेदनं कालो यवागूस्तिक्तको रसः । मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा ॥" यथा—"ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् । त्र्यहं वा षडहं युंज्याद्वीक्ष्य दोषबलाबलम् ॥" यथा—"मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा । अचिरज्वरितस्यापि भेषजं योजयेत्तदा ॥" अस्यामवस्थायां दत्तमौषधमारोग्याय भवति ॥ ३६ ॥

प०—भेषजस्य सम्यग्योगहेतुकालमाह—कालो द्विविधः, क्षणादिलक्षणो व्याध्यवस्थालक्षणश्च । भेषजस्यौषधस्य योगं करोति । तदर्थसंपादनसामर्थ्यं करोतीत्यर्थः । भेषजस्य योगो भेषजयोगस्तं करोति । क्षणादिः प्रसिद्धः । आदिग्रहणाल्लवत्रुटिमुहूर्तयामाहोरात्रपक्षमासर्त्वयनसंवत्सराणां परिग्रहः । क्षणादिकालस्योदाहरणं यथा—"पूर्वाह्ने वमनं देयं मध्याह्ने तु विरेचनम् । मध्याह्ने किंचिदावृत्ते वस्तिं दद्याद्विचक्षणः॥" व्याध्यवस्था—सामनिराममृदुमध्यतीक्ष्णत्वेन तद्योग्यौषधविसृष्टिः । यथा—"लङ्घनं स्वेदनं कालो यवागूस्तिक्तको रसः । मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा ॥ ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् । त्र्यहं वा षडहं युञ्ज्याद्वीक्ष्य दोषबलाबलम् ॥" तथा—"मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा । अचिरं ज्वरितस्यापि भेषजं योजयेत्तदा ॥" अस्यामवस्थायां दत्तमौषधमारोग्याय भवति॥ ३६ ॥

हे०—कालभेदद्वयमाह—तत्र क्षणादिरूपो व्याध्यवस्थारूपश्च । क्षणो मात्रा आदिशब्दात्काष्ठाकलानाडिकामुहूर्तयामाहोरात्रपक्षमासर्त्वयनवर्षाणि । तत्राक्षिनिमेषो मात्रा, ताः पञ्चदश काष्ठा, तास्त्रिंशत्कला, ताः सप्तदश भागः, तेषां विंशतिर्नाडिकाः, ते द्वे मुहूर्तं, ते तुल्यरात्रिंदिवे राशिभागेन चत्वारः पादोना यामः, तैश्चतुर्भिरहो रात्रिश्च; पञ्चदशाहोरात्राः पक्षः, तौ द्वौ मासः, तौ द्वावृतुः, ते त्रयोऽयनं, ते द्वे वर्षम् । व्याध्यवस्था आमपच्यमानपक्वनवपुराणतीक्ष्णमृदुत्वादयः । देशकालयोरुपयोगमाह——देशकालवाक्ययोः शेषभूतोऽयं ग्रंथः योऽयमुक्तो देशः कालश्च । तदुभयं भेषजस्य योगं योग्यतां करोति । उक्तं हि संग्रहे-भेषजमवचारयन् प्रागेव तावदातुरं परीक्षेत । कस्मिन्नय

देशे जात इत्यादि । तस्मिन्देशे मनुष्याणामिदमाहारजातं हितमिदमहितमिति।तथा-स्थलोऽतिकृशो, दुर्बलो दुष्टमांस शोणितास्थ्यंगावयवोऽल्पाभिरल्पाहारोऽपचितः आहाररहितो व्याधिबलमेव तावदसमर्थः सोढुं किं पुनस्तथाविधो भेषजयोगम् । तथा—कालश्च भेषजस्य योग्यतामापादयतीत्युपक्रम्य शीतोष्णवर्षालक्षणा ऋतव इत्याद्युपक्रम्य औषधग्रामस्थित्यादि तस्मात्साधारणेष्वेव तदन्तरालेषु वमनादीनि योजयेत् । तथा—आतुरावस्थासु तु कालाकालसंज्ञा यथाऽस्यामवस्थायामस्यौषधस्य कालोऽकालो वा नह्यप्राप्तातीतकालमौषधं यौगिकम् ॥ ३६ ॥

तत्रौषधं द्विप्रकारमाह--

**शोधनं शमनं चेति समासादौषधं द्विधा॥३७॥**

स०--यत्किंचिज्जगत्यौषधं सम्भवति तदनेकप्रकारं संभवदपि द्वैरूप्यानतिक्रमाच्छोधनशमनलक्षणात् समासात्संक्षेपतो द्विधेत्युक्तम् । एकं शोधनरूपमपरं शमनरूपमिति । शोधनं यत् कुपितान् दोषान् बहिर्निःसार्य रोगोपशमनं करोति । शमनं यत्स्वस्थानस्थितानामेव साम्यहेतुः ॥ ३७ ॥

प०—तत्रौषधं द्विप्रकारमाह—समासात् संक्षेपतः यत्किञ्चित् जगत्यौषधं संभवति तदनेकप्रकारं संभवदपि द्वैरूप्यानतिक्रमात् शोधनशमनलक्षणाद्द्विधेत्युक्तम् । एकं शोधनरूपमपरं शमनरूपमिति । शोधनं यत् कुपितान् दोषान् बहिर्निःसार्य रोगोपशमनं करोति । शमनं यत् स्वस्थानस्थितानामेव साम्यहेतुः ॥ ३७ ॥

हे०—औषधभेदद्वयमाह-तच्च शोधनं शमनं च।समासतः इत्यनुवर्तमानेऽपि पुनःसमासग्रहणमतिसंक्षेपाय सामान्योत्तया विशेषसंग्रहः संक्षेपः। लङ्घनबृंहणे सामान्ये विहाय लङ्घनविशेषयोः शोधनशमनयोरुक्तिरित्यतिसंक्षेपः। स च बृंहणस्य शमनेऽन्तर्भावं मत्वा कृतः । वक्ष्यति हि—"बृंहणं शमनं त्वेवं वायोः पित्तानिलस्य च । " इति । शोधनम् अधिकं बहिर्निरसनेन दोषसाम्यकरणं, शमनं त्वधिकक्षपणक्षीणवर्धनाभ्याम् । अतएवाभ्याधिके दोषे शोधनमधिकक्षीणयोः शमनमिति विभागः सिद्धः ॥३७॥

औषधमुक्तं तस्य विषयमाह--

**शरीरजानां दोषाणां क्रमेण परमौषधम् ।**
**बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ॥३८॥**

स०--शरीरजानां वातादीनां क्रमेण यथासंख्य परिपाट्योद्देशनिर्देशेन परमौषधं प्रधानौषधं वस्त्यादिवमनांतं शोधनरूपं तैलादिमध्वंतं शमनरूपम् तेन वातस्य वस्तिर्गुदप्रणिधेयस्नेहक्वाथादि परमौषधम् पित्तस्य विरेको मुखपीतं गुदमार्गेणांतःस्थित निःसारणं परमौषधम् । कफस्य वमनं मुखेन पीतं तेनैव दोषस्य निःसारणं परमौषधमिति शोधनरूपं दोषाणामौषधम्।तैलादि तु शमनस्वरूपेणौषधम्।तथे क्रमेणैव वातस्य तैलं पित्तस्य घृतं कफस्य माक्षिकं परमौषधम् । प्रधानमौषधमिति यावत् ॥ ३८ ॥

प०—औषधमुक्तं तस्य विषयमाह—शरीरजानां वातादीनां क्रमेण यथासंख्येन परिपाट्योद्देशनिर्देशेन परमौषधं वस्त्यादिवमनान्तं शोधनरूपम् । तैलादिमध्वन्तं शमनरूपम् । तेन वातस्य वस्तिगुदप्रणिधेयस्नेहक्वाथादि परमौषधम् । पित्तस्य विरेको मुखपीतं गुदमार्गेणान्तःस्थितस्य निःसारणं परमौषधम् कफस्य वमनं मुखेन पीतं तेनैव दोषस्य निःसारणं परमौषधमिति शोधनरूपेण दोषाणामौषधम् । तैलादि तु शमनस्वरूपेणौषधम् । तथेति क्रमेणैव वातस्य तैलं, पित्तस्य घृतं, श्लेष्मणो मधु परमौषधं प्रधानमौषधमिति यावत् ॥ ३८ ॥

हे०—शोधनशमनविशेषाणां विषयविभागमाह—तत्र शोधनविशेषा बस्त्यादयः क्रमेण परमौषधम्। वातस्य बस्तिः पित्तस्य विरेकः । तथा कफस्य वमनम् । तथा शमनविशेषास्तैलादयः । वातस्य तैलं, पित्तस्य घृतं, कफस्य मधु किं सर्वेषां नेत्याह—शरीरजानां शरीरे जाताः द्वितीयं रोगाख्यं जन्म प्राप्ताः शरीरजाः शरीराश्रितास्तेषां कः परमतिशयेन । एतदुक्तं भवति सर्वेषां दोषाणां बस्तिरौषधं विशेषाद्वातस्य । सर्वाणि शोधनानि वातस्यौषधं विशेषाद्बस्तिः । तथा नःशरीराश्रयाणां दोषाणां बस्तिरौषधं विशेषाच्छरीराश्रयाणाम्। एवं विरेकादिषु वाच्यम् अमूर्तस्य शमनस्य ॥ ३८ ॥

कायादिदेशमाश्रित्य सर्वत्र सममेव शरीरजातानां दोषाणां क्रमेण परमौषधमुक्तम्। अथ मानसयोर्दोषयोः किंतत्परमौषधं स्यादिति तदर्थमाह—

**धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥३९॥**

स०–मनोदोषयो रजस्तमसोः रोगविघ्नकारि धैर्यादिकं परमौषधम् । धीश्च धैर्यं चात्मादिविज्ञानं च तत्तथाविधम् । तत्र धीर्बुद्धिर्बाह्याध्यात्मिकानां भावानां हिताहितपरिच्छेदविभागकारिणी । धैर्यं धृतिश्चेतसः स्थिरत्वमचापलम् । येन प्रतिषिद्धेषु न प्रवर्तते अहितेषु च न सीदति । आत्मविज्ञानं योगाभ्याससमाधिना परमात्मस्वरूपविज्ञानम् । आदिग्रहणाज्ज्ञानविज्ञानस्मृतिदेशकालादीनां परिग्रहः । मनोदोषसमुत्थकामादिजरोगार्थः परशब्दो विशेषणत्वेन निर्दिष्टः ॥ ३९ ॥

प०–काला (या) दिदेशमाश्रित्य सर्वत्र सममेव शरीरजानां दोषाणां क्रमेण परमौषधमुक्तम् । अथ मानसयोर्दोषयोः किं तत् परमौषधं स्यादिति तदर्थमाह–मनोदोषयो रजस्तमसोः रोगविघ्नकारि धीधैर्यादिकं परमौषधं स्यादिति । धीश्च धैर्यं च आत्मादिविज्ञानं च तत्तथाविधम् । तत्र धीर्बुद्धिः बाह्याध्यात्मिकानां भावानां हिताहितपरिच्छेदविभागकारिणी, धैर्यं धृतिश्चेतसः स्थिरत्वमचापलम् । येन प्रतिषिद्धेषु न प्रवर्तते । अहितेषु च न सीदति । आत्मविज्ञानं योगाभ्याससमाधिना परमात्मस्वरूपविज्ञानम् । आदिग्रहणात् स्मृतिदेशकालादीनां परिग्रहः । मनोदोषसमुत्थकामादिजरोगार्थः । परशब्दो विशेषणत्वेन निर्दिष्टः ॥ ३९ ॥

हे०–विशेषमाह–तच्च धीप्रभृति धीर्बुद्धिः यया हिताहितविवेकः । धैर्यं दुःखसहत्वं येन हितसेवनमहितत्यागः । आत्मादिविज्ञानमात्मादयः आत्मदेशकालास्तेषां विज्ञानमीदृशोहऽमीदृशे काले व्यवहरामीति ज्ञानं, येन हितमेव तस्याविच्छेदः । एतत्सर्वं मनोदोषौषधं हृदयाश्रयाणां वातादीनामौषधं परं सर्वमेव मनोदोषाणामौषधं विशेषाद्धीप्रभृति । तथा मनःशरीराधिष्ठानानां दोषाणां धीप्रभृत्यौषधं विशेषान्मनोऽधिष्ठानानामित्यर्थः।इति रोगौषधम्३९

एवं तावदनेन सकलचिकित्सितमुक्तं, तच्च पादचतुष्टययुक्तं कार्यकरं तदर्थमाह–

**भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।**
**चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ४०**

स०-चिकित्सितस्य रोगोपशमलक्षणस्य।पादचतुष्टयमंगचतुष्टयमुक्तं प्रत्येकं तच्चतुर्गुणमेवं षोडशगुणं चिकित्सितं भेषजं भिषजो भाषन्ते । भिषग्वैद्यः । तस्य प्राधान्याद‌ग्रे निर्देशः । तथा चागमः–"योक्ता प्रयोक्ता शास्ता च प्रधानो भिषगत्र तु ॥" तथा संग्रहेऽपि–"यद्वैद्ये विगुणे पादा गुणवंतोऽप्यनर्थकाः । सपादहीनानप्यार्तान् गुणवान्यश्च यापयेत् ॥ चिकित्सायास्तमेवातः प्रधानं कारणं विदुः ।" द्रव्याण्यौषधानि । उपस्थाता परिचारकः । रोगी आतुरः । एतत्पादचतुष्टयं निर्दिष्टमाचार्येण ॥ ४० ॥

प०–एवं तावदनेन सकलं चिकित्सितमुक्तम् । तच्च पादचतुष्टययुक्तं कार्यकरं तदर्थमाह–चिकित्सितस्य रोगोपशमलक्षणस्य पादचतुष्टयमङ्गचतुष्टयमुक्तम् । प्रत्येकं तच्चतुर्गुणमेवं षोडशगुणं चिकित्सितं भेषजं भिषजो भाषन्ते । भिषक् वैद्यस्तस्य प्राधान्यादग्रे निर्देशः । तथा चागमः–"योक्ता प्रयोक्ता शास्ता च प्रधानो भिषगत्र तु ।" तथा संग्रहेऽपि–"यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थकाः । स पादहीनानप्यार्तान् गुणवान् यश्च यापयेत् ॥ चिकित्सायास्तमेवातः प्रधानं कारणं विदुः । " द्रव्याण्यौषधानि । उपस्थाता–परिचारकः । रोगी–आतुरः । एतत्पादचतुष्टयं निर्दिष्टमाचार्येण ॥ ४० ॥

हे०–औषधपादानाह । भिषगिति–ते च चत्वारः-भिषग्द्रव्यमुपस्थाता रोगी चेति । उपस्थाता परिचारकः, चिकित्सितस्यौषधस्य पादत्वं चैषां क्रियानिष्पादकावयवत्वात् । पादान्विशिनष्टि-तत्पादचतुष्टयं प्रत्येकं तच्चतुर्गुणं ज्ञेयं, तद्गुणवतामेवैषां पादत्वमित्यर्थः ॥ ४० ॥

तेषां गुणानाह–

**दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक्४१**

स०–दक्षः कर्मणि चतुरः । तीर्थादुपाध्यायाद्विहितागमादात्तो गृहीतः शास्त्रार्थो येन स तीर्थात्तशास्त्रार्थः । आगमप्राप्तशास्त्रस्वरूपः । बहुशो दृष्टं कर्म येन चिकित्सालक्षणं स दृष्टकर्माऽभ्यस्तकर्मा शतशश्चिकित्सितरोगः । शुचिः कायवाङ्मनोव्यापारैर्मलीमसैरपरामृष्टोऽलिप्सावानर्थोपजीविकाहेतोर्न करोति परं धर्मोपार्जनेनेति शुचिः ॥ ४१ ॥

प०–तेषां गुणानाह–दक्षः कर्मणि चतुरः । तीर्थादुपाध्यायाद्विहितागमात् आत्तो गृहीतः शास्त्रार्थो

येन स तीर्थात्तशास्त्रार्थः । आम्नायात् आगमात् आप्तशास्त्रस्वरूपः । बहुशो दृष्टं कर्म येन चिकित्सालक्षणं दृष्टकर्मा अभ्यस्तकर्मा शतशश्चिकित्सितरोगः। शुचिः कायवाङ्मनोव्यापारैर्मलीमसैरपरामृष्टः अलिप्सावान् अर्थोपजीविकाहेतोर्न करोति परं धर्मोपार्जनेनेति शुचिः ॥ ४१ ॥

हे०--भिषग्गुणानाह-दक्ष इति । दक्षः शीघ्रकारी, तीर्थात्तशास्त्रार्थो गुरोर्गृहीतायुर्वेदार्थः । तीर्थं गुरुः। दृष्टकर्मा- बहुधानुष्ठितशास्त्रार्थः । शुचिर्मनोवाक्कायैः शुद्धः । संग्रहे तु-"अभेद्योऽनुद्धतोऽस्तब्धः सूरतः प्रियदर्शनः । ( सूरतः कारुणिकः ) बहुश्रुतः कालवेदी जितग्रन्थोऽर्थकर्मवित् ॥ अनाथान् रोगिणो यश्च पुत्रवत्समुपाचरेत् । गुरुणा समनुज्ञातः स भिषक् शब्दमश्नुते ॥ यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः । स मुह्यत्यातुरं प्राप्य यथा भीरुरिवाहवम् ॥ यः पुनः कुरुते कर्म धाष्ट्याच्छास्त्रार्थवर्जितः । स सत्सु गर्हामाप्नोति वधं चेच्छति राजतः ॥ हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे । ज्ञानं चतुर्विधं यस्य स राजार्हो भिषग्वरः ॥ शास्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये । पात्रापेक्षीण्यतः प्रज्ञां बाहुश्रुत्येन बृंहयेत् ॥ प्रदीपभूतं शास्त्रं हि दर्शनं विपुला मतिः । ताभ्यां मनःसुयुक्ताभ्यां चिकित्सन्नापराध्यति ॥ आहूत एव यो याति सुवेशः सुनिमित्ततः । गत्वातुरार्थादन्यत्र न निधत्ते मनः क्वचित् ॥ व्याधिं परीक्षते सम्यङ्गिदानादिविशेषतः । गोपनीयां च तद्वार्तां न प्रकाशयते बहिः ॥ सहसा न च तस्यापि क्रियाकालं न हापयन् । जानाति चोपचरितं स वैद्यः सिद्धिमश्नुते ॥ नाददीतामिषं स्त्रीभ्यस्तदध्यक्षे पराङ्मुखे । ताभिश्च रहसि स्थानं परिहासं च वर्जयेत् ॥ जिजीविषुर्व्याधितोऽपि पूर्वोक्तगुणवर्जितान् । क्रियाविक्रयिणो वैद्यान् मृत्योरग्रेसरा हि ते ॥ यद्वद्वै विगुणे पादा गुणवन्तोऽप्यनर्थकाः । सपादहीनानप्यातान् गुणवान् यच्च यापयेत् ॥ चिकित्सायास्तमेवातः प्रधानं कारणं विदुः । व्याधिं पुरा परीक्ष्यैवमारभेत ततः क्रियाम् ॥ स्वार्थविद्या यशोहानिमन्यथा ध्रुवमाप्नुयात् । साध्ययोरपि संयोगो बली नो यात्यसाध्यताम् ॥ विद्यादसाध्यमेवातः साध्यासाध्यसमागमम् । नासाध्यः साध्यतां याति साध्यो यातित्वसाध्यताम् ॥ पादापचाराद्दैवाद्वा यात्यवस्थान्तरं गदः । वरमाशीविषविषं दीप्तमग्निमयोऽपि वा ॥ उपयुञ्जीत नत्वार्तादामिषं कृपणाज्जनात् । पुरोभूतदयाधर्म इत्यार्त्तेषु भिषग्वरः ॥ वर्तते यस्तु सिद्धार्थः स सर्वमतिवर्तते" इति ॥ ४१ ॥

औषधमपि चतुर्विधम्—

**बहुकल्पं बहुगुणं संपन्नं योग्यमौषध**

स०—बहवः कल्पा यस्मिन् भवंति स्वर धास्तद्बहुकल्पं व्याधीनां निवारणक्षमं न तु कल्पम् । तद्धि सुखमुपयुज्यते । नानाशक्तयो बहवो गुणा यस्य गुरुमंदादयस्तद्बहुगुणम यदनेकरोगविनाशनसमर्थम् । संपन्नं स विपन्नम् । प्रशस्तभूमिदेशजातम् । तथ "धन्वसाधारणे देशे समे सन्मृत्तिके शुचौ चैत्यायतनश्वभ्रवल्मीकवर्जिते । इति ।" प्रश जातादिगुणयुक्तम् । अथवा पाकसंस्का योग्यं दातुं यद्यत्रार्हति तच्च योग्यम् । व्य दोषदूष्यदेहवयोबलादीन् ज्ञात्वा युज्यते तद्योग्यं रोगस्य रोगिणश्च ॥ ४२ ॥

प०--औषधमपि चतुर्विधम्-बहवःक सम्भवन्ति स्वरसकाथचूर्णाद्यास्तद्बहुकल नां निवारणक्षमं न तु लवणवदे तद्धि सुखमुपयुज्यते । नानाशक्तयो ि बहवो गुणा यस्य गुरुमन्दादयः णम् । अथवा यदनेकरोगविनाशनसमर्थ सम्पत्तियुक्तम् । अथवा पाकसंस्कार योग्यं दातुं यद्यत्रार्हति तत्र योज्यम् । कालदोषरूपदेहवयोबलादीन् ज्ञात्वा इति तत् योग्यं रोगस्य रोगिणश्च ॥ ४२

हे०—द्रव्यगुणानाह—बहवः कल्पाः स्वरसाद हुकल्पं, बहवो गुणाः गुरुमन्दादयो यस्य तद दिसंपत्त्या यद्युक्तं तत्संपन्नं, देशकालाद्युचितं धमत्र द्रव्यं चिकित्सितरूपस्यौषधस्यांगत्वायोग

उपस्थातापि चतुर्विधः—

**अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिच**

स०-अनुरक्तो दृढभक्त आतुरस्य । शु ङ्मनोव्यापारैर्दुष्टैरपरामृष्टः । दक्षः सर्वचेष्ट बुद्धिमान् विशिष्टया बुद्ध्या युक्तः । यावत् ॥ ४३ ॥

प०--उपस्थातापि चतुर्विधः-अनुरक्तो तुरस्य । शुचिः कायवाङ्मनोव्यापारैर्दुष्टै

दक्षः सर्वचेष्टासु चतुरः। बुद्धिमान्-विशिष्टया बुद्ध्या युक्तः प्रवीण इति यावत् ॥ ४३ ॥

हे०-परिचारकगुणानाह-अनुरक्त इति-अनुरक्तः स्नेहलः। शुचिदक्षौ वैद्यवत् बुद्धिमान् प्राज्ञः ॥ ४३ ॥

रोग्यपि चतुर्विधः—

**आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि॥४४**

स०-आढ्यो धनवान्। भिषग्वश्यो वैद्यायत्तस्तदुक्तकारी। ज्ञापको निदानादीनामावेदको वैद्यं रोगाहारविहारादीनामन्वयव्यतिरेकं बोधयितुं समर्थः। सत्त्ववान् धैर्ययुतो मोहवर्जितः। धैर्येण प्रायश्चित्तवच्चिकित्सां करोति। अपिः संभावनार्थे ॥ ४४ ॥

प०-रोग्यपि चतुर्विधः-आढ्यो-धनवान्। भिषग्वश्यो-वैद्यायत्तः तदुक्तकारी। ज्ञापको निदानादीनामावेदकः। वैद्यं रोगाहारविहारादीनामन्वयव्यातिरेकं बोधयितुं समर्थः। सत्त्ववान्-धैर्ययुक्तो मोहवर्जितः धैर्येण प्रायश्चित्तवत् चिकित्सां करोति। अपिः सम्भावनार्थे ॥ ४४ ॥

हे०-रोगिगुणानाह-आढ्यो धनवान्, भिषग्वश्यो वैद्याधीनः। ज्ञापक स्वानुभूयमानरोगावस्थानिरूपणसमर्थः; सत्त्ववान् रोगौषधक्लेशसहः। इति भिषगादिचतुष्टयमुक्तम् ॥ ४४ ॥

सुखसाध्यादिकस्य व्याधिचतुष्टयस्य लक्षणमुच्यते—

**सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः।**
**अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः॥**
**अतुल्यदूष्यदेशर्तुप्रकृतिः पादसंपदि।**
**ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ॥ ४५॥**

स०-सर्वौषधक्षमे देह उत्पन्नो व्याधिः सुखसाध्यः सुखोपायः। तथा च ग्रंथः-'सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते।' सर्वाण्यौषधानि यः क्षमते सहते तीक्ष्णमध्यमृदुरूपाणि नानादेशजानि शमनानि तथा शोधनरूपाणि तथा विषक्षारादीनि। यूनः वयस्य तरुणस्येत्यर्थः। पुंसो न स्त्रियाः। पुंग्रहणं स्त्रीनिवृत्त्यर्थम्। यतस्तस्याः सर्वदा भीरुत्वमबुद्धिमत्त्वं चातो यथोक्तानुरूपगुणाभावः। सा तु यस्मात्तीक्ष्णोष्णौषधानि न सहते सौकुमार्यादियोगात्। जितात्मनोऽलोलुपस्य। जित आत्मा येन। विषयाभिलाषं परिहरतः। अमर्मगोऽमर्मस्थः मर्माणि शिरोहृदयबस्तिप्रभृतीनि तेषु गच्छतीति मर्मगः न मर्मगोऽमर्मगो हृत्कंठादिपीडाकरणासमर्थः। अल्पहेत्वग्ररूपरूप इति। हेतुश्चाग्ररूपं च रूपं तानि हेत्वग्ररूपरूपाण्यल्पानि हेत्वग्ररूपरूपाणि यस्य स तथाविधः। हेतुर्निदानम्। अग्ररूपं पूर्वरूपम्। रूपं लक्षणम्। एतान्यल्पानि यस्य। अनुपद्रव इति। न विद्यते उपद्रवो यस्योत्पन्नस्य व्याधेरनंतरं जायते योऽन्यो व्याधिर्न तल्लक्षणभूतोऽप्रधानो न यथास्वलक्षणस्तदुपक्रमनिरोधकः स उपद्रवः। तथा चागमः—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः। उपक्रमविघाती च स ह्युपद्रव उच्यते॥"अतुल्यदूष्यदेशर्तुप्रकृतिरिति। दूष्यश्च देशश्च ऋतुश्च प्रकृतिश्च ता दूष्यदेशर्तुप्रकृतयः। अतुल्या दूष्यदेशर्तुप्रकृतयो यस्य। अतुल्या न सदृशाः। यथा दूष्ये मेदोमज्जादावनूपदेशे शीतर्तावातुरो वातप्रकृतिस्तस्य कुपितं पित्तं सुखसाध्यमिति। अतुल्यदूष्यो यथा श्लेष्मणा शीतेन रक्तमुष्णं दूषितम्। अतुल्यदेशो व्याधिर्यथा—अनूपदेशे पित्तसंभूतः। अतुल्यर्तुर्यथा—शरदि कफोद्भवः। अतुल्यप्रकृतिर्यथा—पित्तप्रकृतेः श्लेष्मोद्भवो व्याधिः नन्वतुल्यदूष्यदेशर्तुप्रकृतित्वादसौ कृच्छ्रसाध्यो यथा वा याप्यो न सुखसाध्योऽनेकसुखोपक्रमसाध्यत्वात्। यतो दूष्यादीनामतुल्यत्वात्परस्परमन्य एवोपक्रमः। एकसुखोपक्रमः सुखसाध्यो व्याधिः। अत एव साध्ययाप्यपरित्याज्या मेहाः श्लेष्मपित्तवातोत्थाः समासमक्रियतया महात्ययतयापि चेत्येवं निर्दिशति। अत्रोच्यते। तथा प्रभावत्वात्प्रमेहाख्यस्य व्याधेर्यदुत श्लेष्मप्रमेहः समक्रियत्वात्साध्यः। पित्तप्रमेहो विषमक्रियत्वाद्याप्यः। महात्ययत्वाच्च वातप्रमेहः प्रत्याख्येयः। किंचातुल्यदूष्यदेशर्तुप्रकृतित्वान्महारंभो निष्प्रत्यनीको व्याधिर्जायतेऽतोऽसौ न सुखसाध्यः। कुत्रचिद्व्याधौ तुल्यदूष्यादिरपि सुखसाध्यत्वेन ज्यायान्। तथा च ग्रंथः—"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे।

राणत्वं सुखसाध्यत्वहेतवः॥" पादसंपदि भिषगादीनां चतुर्णां पादानां संपत्समृद्धिस्तस्यां सत्यामंगचतुष्टये परिपूर्णे सति । ग्रहेष्वनुगुणेष्विति । ग्रहाः सूर्यादयस्तेष्वनुगुणेष्वनुकूलराशिस्थितेषु शोभनस्थानगतेषु सत्सु । एकदोषमार्ग इति । दोषश्च मार्गश्च दोषमार्गम् । एकं दोषमार्गं यस्य स तथोक्तः । दोषो वातादिः । मार्गस्त्रिविधः शाखादिर्वक्ष्यमाणो बाह्याभ्यंतरमध्यभेदेन । तेनैकेन वातादीनामन्यतमेन दोषेण यो जातो न द्वाभ्यां त्रिभिर्वा तथैकेनापि मार्गेण बाह्येन मध्येनाभ्यंतरेण वा जातो नवो न जरठः । अचिरोत्पन्न इत्यर्थः । यस्माद्वत्सरातीता व्याधयोऽसाध्याः । स तथाविधो व्याधिः सुखेन साध्यते । तथा च ग्रंथः—'सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते' ॥ ४९ ॥

प०-सुखसाध्यादिचतुष्टयलक्षणमुच्यते सर्वौषधक्षमे देहे उत्पन्नो व्याधिः सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते । सर्वाण्यौषधानि यः क्षमते सहते तीक्ष्णमध्यमृदुरूपाणि नानादेशजानि शमनानि तथा शोधनरूपाणि तथा विषक्षारादीनि च । यूनो- वयस्यस्य तरुणस्येत्यर्थः । पुंसः न स्त्रियाः । पुंग्रहणं स्त्रीनिवृत्त्यर्थम् । यतस्तस्याः सर्वदा भीरुत्वमबुद्धित्वम् । अतो यथोक्तातुरगुणाभावः । सा तु यस्मात्तीक्ष्णान्यौषधानि न सहते सौकुमार्यादियोगात् । जितात्मनः—अलोलुपस्य जित आत्मा येन विषयाभिलाषं परिहरतः । अमर्मगो—न मर्मस्थः । मर्माणि शिरोहृदयवस्तिप्रभृतीनि तेषु गच्छतीति । न मर्मगोऽमर्मगः हृत्कण्ठादिपीडाकरणासमर्थः । अल्पहेत्वग्ररूपरूप इति, हेतुश्चाग्ररूपं च रूपं च तानि हेत्वग्ररूपरूपाणि । अल्पानि हेत्वग्ररूपरूपाणि यस्य स तथाविधः । हेतुर्निदानम् । अग्ररूपं—पूर्वरूपम् । रूपं लक्षणम् एतान्यल्पानि यस्य । अनुपद्रव इति । न विद्यते उपद्रवो यस्य उत्पन्नस्य व्याधेरनन्तरं जायते योऽन्यो व्याधिर्न तल्लक्षणभूतोऽप्रधानो न यथास्वलक्षणस्तदुपक्रमनिरोधकः स उपद्रवः । तथा च आगमः—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमविघाती च स ह्युपद्रव उच्यते ॥ " अतुल्यदूष्यदेशर्तुप्रकृतिरिति—दूष्यं च देशश्च ऋतुश्च प्रकृतिश्च ताः दूष्यदेशर्तुप्रकृतयः । अतुल्या दूष्यदेशर्तुप्रकृतयो यस्य । अतुल्या विसदृशी । यथा—दूष्ये मेदोमज्जादावनूपदेशे शीततौ आतुरो वातप्रकृतिस्तस्य कुपितं पित्तं सुखसाध्यमिति । अतुल्यदूष्यो यथा—न श्लेष्मणा शीतेन रक्तमुष्णं दूषितम् । अतुल्यदेशे व्याधिर्यथा—अनूपदेशे पित्तं संभूतम् । अतुल्यर्तुर्यथा—शरदि कफोद्भवः । अतुल्यप्रकृतिर्यथा—पित्तप्रकृतेः श्लेष्मोद्भवो व्याधिः । नन्वतुल्यदूष्यदेशर्तुप्रकृतित्वादसौ कृच्छ्रसाध्यो यथा वा याप्यो न सुखसाध्यः । अनेकसुखोपक्रमसाध्यत्वात् । यतो दूष्यादीनामतुल्यत्वात् परस्परमन्य एवोपक्रमः । एकसुखोपक्रमः सुखसाध्यो व्याधिरत एव साध्ययाप्यपरित्याज्या मेहाः श्लेष्मपित्तवातोत्थाः समासमक्रियतया महात्ययतयापि चेत्येवं निर्दिशति । अत्रोच्यते । तथा प्रभावत्वात् प्रमेहाख्यस्य व्याधेर्यदुत श्लेष्मप्रमेहः समक्रियत्वात् साध्यः । पित्तप्रमेहो विषमक्रियत्वात् याप्यः । महात्ययत्वाच्च वातप्रमेहः प्रत्याख्येयः । किंच तुल्यदूष्यदेशर्तुप्रकृतित्वान्महारम्भो निष्प्रतीको व्याधिर्जायते । ततोऽसौ न सुखसाध्यः । कुत्रचिद्व्याधौ तुल्यदूष्यादिरपि सुखसाध्यत्वे ज्यायान् । तथाच ग्रन्थः—" ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः ॥ " पादसंपदि भिषगादीनां चतुर्णां पादानां संपत् समृद्धिः तस्यां सत्यामङ्गचतुष्टये संपूर्णे सति । ग्रहेष्वनुगुणेष्विति ग्रहाः सूर्यादयः तेष्वनुगुणेष्वनुकूलराशिस्थितेषु शोभनस्थानगतेषु सत्सु । एकदोषमार्ग इति—दोषश्च मार्गश्च दोषमार्गम् । एकं दोषमार्गं यस्य स तथोक्तः । दोषो वातादिः । मार्गस्त्रिविधः शाखादिर्वक्ष्यमाणो बाह्याभ्यन्तरमध्यभेदेन । तेनैकेन वातादीनामन्यतमेन दोषेण यो जातो न द्वाभ्यां त्रिभिर्वा तथा नैकेनापि मार्गेण बाह्येन मध्येनाभ्यन्तरेण वा जातः नवो न जरठः अचिरोत्पन्न इत्यर्थः । यस्माद्वत्सरातीता व्याधयोऽसाध्याः । स तथाविधो व्याधिः सुखः सुखेन साध्यते । तथाच ग्रन्थः—" सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते " ॥ ४५ ॥

हे०-औषधमसाध्ये व्याधौ निरोद्धुं साध्ययाप्यासाध्यविवेकं करोति । तत्र साध्यो द्विविधः-सुखः कृच्छ्रश्च।तत्र सुखसाध्य लक्षयति—सर्वौषधेति । सर्वौषधक्षमदेहत्वाद्येकोनविंशति—

लक्षणो रोगः सुखसाध्यः । तानि च लक्षणानि विपर्ययात्यंतविपर्ययाभ्यां सह लिख्यन्ते—कृच्छ्रादिषूपयोगात् । सर्वौषधक्षमदेहजत्वम्, औषधमात्राक्षमदेहजत्वं, युवजत्वं, बालवृद्धजत्वं, अतिबालातिवृद्धजत्वं, स्त्रीनपुंसकजत्वं, गर्भिणी—सूतिका—स्त्रीलक्षणनपुंसकजत्वं, विषयानासक्तेंद्रियजत्वं, विषयासक्तेन्द्रियजत्वम्, असद्विषयासक्तेन्द्रियजत्वम्, अमर्म्मगत्वं, प्राणहरमर्म्मगत्वम्, अल्पनिदानत्वं, बहुनिदानत्वं, यावदुक्तनिदानत्वम्, अल्पसंप्राप्तित्वं, बहुसंप्राप्तित्वं, यावदुक्तसंप्राप्तित्वम् । हेतुर्निदानं, संप्राप्तिश्च, अल्पपूर्वरूपत्वं, बहुपूर्वरूपत्वं, यावदुक्तपूर्वरूपत्वम्, अल्परूपत्वं, बहुरूपत्वं, यावदुक्तरूपत्वम्, अनुपद्रवत्वं, सोपद्रवत्वं, यावदुक्तोपद्रवत्वम्, उत्पादकदोषापेक्षया विपरीतदूष्यत्वं यथा—पित्तजे रसगत्वम्, अतुल्यदूष्यत्वं यथा—पित्तजे रक्तगत्वं, तुल्यानेकदूष्यत्वं यथा—पित्तजे रक्तस्वेदगत्वं, विपरीतदेशत्व । यथा—कफजे जांगलत्वं, तुल्यदेशत्वं यथा—कफजेऽनूपगत्वं, तुल्यदेशजन्मत्वं यथा—कफजे जन्मप्रभृतिसेवितानूपगत्वम्, अतुल्यर्तुत्व । यथा-वातजे शारदत्वं, तुल्यर्तुत्वं यथा—वातजे ग्रीष्मत्वं, तुल्यप्रकोपर्तुत्वं यथा—वातजे वार्षिकत्वं, विपरीतप्रकृतित्व । यथा—पित्तजे कफप्रकृतित्वं, तुल्यप्रकृतित्वं यथा—पित्तजे पित्तप्रकृतित्वं तुल्यानिंद्यप्रकृतित्वं यथा—पित्तजे वातपित्तप्रकृतित्वं, वातस्य योगवाहित्वात् । पादसंपद्भावत्वं, पादविकृतत्वं, सर्वपादविकृतत्वं, अनुकूलग्रहत्वं, प्रतिकूलग्रहत्वं, प्रतिकूलसर्वग्रहत्वम् । एकदोषत्वं, द्विदोषत्वं, सर्वदोषत्वम् । एकमार्गत्वम्, अनेकमार्गत्वं, सर्वमार्गत्वम् । अनतिक्रान्तवत्सरत्वम्, अतिक्रान्तवत्सरत्वं, बह्वतिक्रान्तवत्सरत्व म् ॥ ४५ ॥

कृच्छ्रसाध्यं व्याधिमाह—

**शस्त्रादिसाधनः कृच्छ्रः संकरे च ततो गदः॥४६॥**

**स०** यो गदो रोगः शस्त्रादिसाधनः शस्त्रादिभिः साध्यते स कृच्छ्रसाध्यः कृच्छ्रप्रतीकारो महद्भिरुपायैः साध्यते तथा चिरेण । तथा च ग्रंथः“—कृच्छ्रैरुपायैः कृच्छ्रैस्तु महद्भिश्च चिरेण च ।” आदिग्रहणेन क्षाराग्निकर्मविषलेपादयो गृह्यंते । तथा संकरे च ततः पूर्वोक्तात्साध्यलिंगात्संकीर्णत्वे सति यो गद उत्पन्नः सोऽपि कृच्छ्रसाध्यः । चशब्दः समुच्चये । ततस्तस्मादुक्तसाध्यलक्षणाद्यः संकरे द्वित्रिविपर्यये सति स्थितः । तथा च युवा आतुरः किंतु न विजितात्मा विजितात्मा वा किंतु रोगो मर्मस्थानगः । सर्वौषधक्षमे देहे न जातः किंतु वृद्धः । कदाचिद्युवा न सर्वौषधक्षमो देहः । एवमनया दिशा सर्वमप्यूह्यम् ॥ ४६ ॥

**प०**—कृच्छ्रसाध्यं व्याधिमाह—यो गदो रोगः शस्त्रादिसाधनः शस्त्रादिभिः साध्यते स कृच्छ्रसाध्यः कृच्छ्रसाध्यप्रतीकारः महद्भिरुपायैः साध्यते तथा चिरेण । तथा च ग्रन्थः-“कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च ।” आदिग्रहणेन क्षाराग्निकर्मविषलेपादयो गृह्यन्ते । तथा संकरे च । ततः पूर्वोक्तात् साध्यलिङ्गात् संकीर्णत्वे सति यो गद उत्पन्नः सोऽपि कृच्छ्रसाध्यः । च शब्दः समुच्चये । ततः तस्मादुक्तसाध्यलक्षणाद्यः संकरे द्वित्रिविपर्यये सति स्थितः । तथा च युवा आतुरः किन्त्वजितात्मा विजितात्मा वा किन्तु रोगो मर्मस्थानगः । सर्वौषधक्षमे देहे न जातः किन्तु वृद्धः । कदाचिद्युवा न सर्वौषधक्षमो देहः । एवमनया दिशा सर्वमप्यूह्यम् ॥ ४६ ॥

हे०-कृच्छ्रसाध्यं लक्षयति-**शस्त्रादीति** । यो गदः शस्त्रादिसाधनः स कृच्छ्रः कृच्छ्रसाध्यः, यश्च गदस्ततस्तेभ्यः सुखसाध्यलक्षणेभ्यो जाते संकरे स्थितः सोऽपि कृच्छ्रः । सुखसाध्यलक्षणविपर्ययेण सहैकत्रावस्थानं संकरः । यथा-युवजत्वस्य स्त्रीजत्वेन, बालजत्वस्य वृद्धजत्वेन तु सहावस्थानान्न संकरः । एवं सर्वत्र अस्य च संकरत्रैविध्यात्त्रैविध्यम् । अल्पविपर्यये संकरे कृच्छ्रः, तुल्यविपर्यये कृच्छ्रतरः, बहुविपर्यये कृच्छ्रतमः । तथा-शस्त्रक्षाराग्निसाधनत्वात्त्रैविध्यम् । एतेषां संकरे तारतम्यं स्वयमूह्यम् । याप्यं लक्षयति-तत इत्यनुवर्तते । यो गदः सुखसाध्यलक्षणविपर्यये स्थितः स याप्यः । नन्वौषधैर्निवर्तते चेत्साध्यत्वं नो चेदसाध्यत्वम् ॥ ४६ ॥

याप्योऽत उच्यते—

**शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्यये ४७**

**स०**—बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थपथ्यैराहारविहारैर्याप्यो यापनीयो नासौ प्रत्याख्येयः । एतावानेवास्य प्रत्याख्येयाद्व्याधेर्विशेषो यदायुःशेषत्वं याप्यस्य व्याधेरायुःशेषमात्रं वर्जयित्वा यदन्यत्तत्सर्वं समानं प्रायेणास्य च प्रत्याख्येयस्य व्याधेः । कस्य विपर्यये सति । प्रकृतत्वात्सुख-

साध्यस्य। पथ्यैराहारविहारैरभ्यसनमभ्यासः पुनःपुनः करणं तस्माद्धिताहारविहारसेवनाद्याप्यः। स च चिकित्सायामल्पं सुखं दत्त्वा पुनः सोऽल्पेनैव हेतुना प्रतीयते। तथा च ग्रंथः—"दत्त्वाल्पं सुखमल्पेन हेतुना स प्रजायते। याति नाशेषतां रोगः कर्मजो नियतायुषः। प्रपतन्निव विष्कंभैर्धार्यस्तत्रातुरो हितैः" ॥ ४७ ॥

प०-याप्य उच्यते-बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थः पथ्यैराहारविहारैर्याप्यो यापनीयो नासौ प्रत्याख्येयः। एतावानेवास्य प्रत्याख्येयाद्व्याधेर्विशेषो यदायुःशेषत्वं याप्यस्य व्याधेरायुःशेषमात्रं वर्जयित्वा तदन्यत्सर्वं समानं प्रायेणास्य च प्रत्याख्येयस्य च व्याधेः कस्य विपर्यये सति प्रकृतत्वात्सुखसाध्यस्य पथ्यैराहारविहारैरभ्यसनमभ्यासः पुनः पुनः करणं तस्माद्धिताहारविहारसेवातो याप्यः। स च चिकित्सया तुल्यसुखं दत्त्वा पुनः सोऽल्पेनैव हेतुना प्रतन्यते। तथा च संग्रहे—"दत्त्वाल्पसुखमल्पेन हेतुना स प्रजायते। याति नाशेषतां रोगः कर्मजो नियतायुषः॥ प्रपतन्निव विष्कम्भैर्धार्यस्तत्रातुरो हितैः" ॥ ४७ ॥

हे०—किमिदं तृतीयं याप्यत्वं नामेत्यत आह-पथ्याभ्यासात् शेषत्वात् पथ्यस्यौषधाभ्यासो नित्यसेवनंतरमाद्यच्छेषत्वं ततो याप्यःशिष्यते।निवर्तमानोऽपि कार्त्स्न्येन न निवर्तत इति शेषः।स च निःशेषानि वर्तनान्न साध्य एव किंचिन्निवर्तनान्नासाध्य एव किन्तु साध्यासाध्या याप्याख्यः स च कियन्तं कालं याप्य इत्याह—आ आयुषः यावदायुरस्ति तावद्याप्यः। उक्तं हि संग्रहे—"दत्त्वाल्पं सुखमल्पेन हेतुना स प्रतन्यते। याति नाशेषतां रोगः कर्मजो नियतायुषः ॥ प्रपतन्निव विष्कंभैर्धार्यतेऽत्रातुरो हितैः" इति ॥ ४७ ॥

प्रत्याख्येय उच्यते—

**अनुपक्रम एव स्यात्स्थितोऽत्यंतविपर्यये।**
**औत्सुक्यमोहारतिकृद्दृष्टरिष्टोऽक्षनाशनः॥४८॥**

स०—न विद्यत उपक्रमः प्रतीकारो यस्य सोऽनुपक्रमोऽचिकित्स्यः। प्रत्याख्येय इति यावत्। कोऽसावनुपक्रमो योऽत्यंतविपर्यये स्थितः योऽर्थाद्याप्यलक्षणादवशिष्टायुःशेषरूपादत्यंतविपर्यये स्थितः सर्वक्रियापथातिक्रांतो मज्जाशुक्रादिगंभीरधातुगतो मर्मसंधिसमाश्रितः सोऽनुपक्रम एवाचिकित्स्यः। साधयितुमशक्यत्वात्। तथौत्सुक्यादिकृदपि। औत्सुक्यं च मोहश्चारतिश्च ताः करोतीत्यौत्सुक्यमोहारतिकृत्। औत्सुक्यं गर्वादिविषयोत्कंठा। मोहो वैचित्यं चित्तनाशोऽज्ञानम्। अरतिरसुखं न कुत्रचिदवस्थितिः स्थानासनादिष्वनिर्वृतिश्चेतसः। एतावतो यः करोति सोऽनुपक्रमः। तथा दृष्टरिष्टोऽक्षनाशनः दृष्टं रिष्टं मरणख्यापकं चिह्नं यस्मिन् स दृष्टरिष्टः तथाऽक्षनाशन इति। अक्षाणींद्रियाण्युच्यंते। चक्षुरादीन्यपि नाशयति सोऽक्षनाशनः इन्द्रियोपरोधी रोगोऽनुपक्रमो यः शीघ्रमिंद्रियविघातकृत्। एवं पुरा परीक्ष्य व्याधिचिकित्सामारभेत। अन्यथाऽवश्यं स्वार्थादिहानिमवाप्नुयाद्वैद्यः। तथा च ग्रंथः—"व्याधिं पुरा परीक्ष्यैवमारभेत ततः क्रियाम्। स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्" ॥ ४८ ॥

हे०-प्रत्याख्येय उच्यते—न विद्यते उपक्रमः प्रतीकारो यस्यासावनुपक्रमः अचिकित्स्यः। प्रत्याख्येय इति यावत्। कोऽसावनुपक्रमोऽत्यन्तविपर्यये स्थितः यो गदो याप्यलक्षणादविशिष्टादायुःशेषरूपादत्यन्तविपर्यये स्थितः सर्वक्रियापथातिक्रान्तो मज्जाशुक्रादिगम्भीरधातुगतो मर्मसन्धिसमाश्रितः सोऽनुपक्रम एवाचिकित्स्यःसाधयितुमएशक्यत्वात्तथौत्सुक्यकृदपि।औत्सुक्यं च मोहश्चारतिश्च ताः करोतीत्यौत्सुक्यमोहारतिकृत्। औत्सुक्यं-विषयोत्कण्ठा, मोहो-वैचित्यम्।चित्तनाशोऽज्ञानम्। अरतिर्न कुत्रचिदनवास्थितिः स्थानासनादिष्वनिर्वृतिश्चेतसः। तावतो यः करोति सोऽनुपक्रमः। तथा दृष्टरिष्टोऽनुपक्रम एव प्रत्याख्येयः। दृष्टं रिष्टं मरणचिह्नं यस्मिन् स दृष्टरिष्टः। तथाक्षनाशन इति। अक्षाणीन्द्रियाण्युच्यन्ते चक्षुरादीनि तानि विनाशयति। सोऽक्षविनाशन इन्द्रियोपरोधी रोगोऽनुपक्रमः। यः शीघ्रमिन्द्रियविघातकृत्। एवं पुरा परीक्ष्य व्याधिचिकित्सामारभेत। अन्यथावश्यं स्वार्थादिहानिमाप्नुयात् वैद्यः। तथा च ग्रन्थः—"व्याधिं पुरा परीक्षेत चारभेत ततः क्रियाम्। स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्॥ ४८ ॥

हे०—असाध्यं लक्षयति—अनुपक्रम इति। यो गदः सुखसाध्यलक्षणात्यन्तविपर्यये स्थितः यश्च औत्सुक्यमोहारतिकृत्, यश्च दृष्टरिष्टः दृष्टमरणचिह्नः, यश्च अक्षनाशनः सर्वेन्द्रियविघाती, स चतुर्विधोऽनुपक्रम एव स्यात् नास्त्युपक्रमः प्रतीकारोऽस्येत्यनुपक्रमः। एवशब्दो याप्यव्युदासार्थं, याप्योऽपि हीनः निःशेषान्निवर्तमानोऽनुपक्रमः किन्तु किंचिन्निवर्तनात्सोपक्रमोऽपि अयं त्वनुपक्रम एव। तस्मात्तत्रौषधं कुर्यादित्यर्थादुक्तम् ॥ ४८ ॥

साध्यलक्षणयुक्तोऽप्यातुरो नोपक्रमणीय इति दर्शयति—

**त्यजेदार्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम्।**
**हीनोपकरणं व्यग्रमविधेयं गतायुषम्।**
**चंडं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ॥४९॥**

स०—एवंविधमार्तमातुरमुपक्रम्यमपि त्यजेत्परिहरेत्। भिषग्भूपैर्द्विष्टं भिषग्भिस्तथा भूपै राजभिर्द्विष्टम्। वैद्या राजानश्च यं द्विषंति। तथा तेषां द्विषं शत्रुं भिषग्भूपान्यो द्वेष्टि तमपि त्यजेत्। द्विषं शत्रुं चात्मनः। हीनोपकरणमिति। उपकरणविकलं हीनचिकित्सांगम्। व्यग्रं कार्यबहुलमन्यकार्यापेक्षिणं कार्यांतरासक्तचेतसम्। अविधेयं भिषजः तदाज्ञां यो न करोति तमपि त्यजेत्। गतायुषं परिक्षीणजीवितम्। चंडं सहसापकारकरणबुद्धिं क्रूरकर्माणम्। शोकातुरं स्त्र्यादिविरहोत्थेन शोकेन शुचार्तम्। भीरुं सभयम्। कृतघ्नं यः कृतोपकारोऽप्यपकारं करोति। वैद्यमानिनम् अवैद्योऽपि यो वैद्यमिवात्मानं मन्यते नैवौषधं करोति मूढस्तमपि त्यजेत् ॥ ४९ ॥

प०—साध्यलक्षणयुक्तोऽप्यातुरो नोपक्रमणीय इति दर्शयति—एवंविधमार्तमातुरमुपक्रम्यमपि त्यजेत् परिहरेत्। भिषक भूपैः राजभिर्द्विष्ट वैद्या राजानश्च यं द्विषन्ति। तथा तेषां द्विषं शत्रुं भिषग्भूपान् यो द्वेष्टि तमपि त्यजेत्। द्विषं शत्रुं चात्मनः। हीनोपकरणमिति—उपकरणविकलं हीनचिकित्साङ्गम्। व्यग्रं—कार्यबहुलमन्यकार्यापेक्षिणं कार्यान्तरासक्तचेतसम्। अविधेयं—भिषजः तदाज्ञां यो न करोति तमपि त्यजेत्। गतायुषं परिक्षीणजीवितम्। चण्डं—सहसापकारकरणबुद्धिं क्रूरकर्माणम्। शोकातुरं—स्त्र्यादिविरहोत्थेन शोकेन शुचा आतुरम्। भीरुं सभयम्। कृतघ्नं—यः कृतोपकारोऽप्यपकारं करोति। वैद्यमानिनम्। अवैद्योऽपि यो वैद्यमिवात्मानं मन्यते स्वमतेनैवौषधं करोति मूढस्तमपि त्यजेत् ॥ ४९ ॥

हे०—आतुरविशेषेऽप्यौषधं निषेधति—भिषग्भूपैर्द्विष्टमार्तं रोगिणं त्यजेत्। भिषजश्च भूपाश्च भिषग्भूपाः तैर्द्विष्टं ते यं द्विषन्ति तेषां द्विषं भिषग्भूपान् यो द्वेष्टि, द्विषमात्मानं यो द्वेष्टि, हीनोपकरणम्—औषधसामग्रीरहितं, व्यग्रं कार्यांतरव्याकुलम्, अविधेयं वैद्यस्यानधीनं, गतायुषमुत्पन्नस्वारिष्टम्, चंडं कोपनं, शोकातुरमिष्टजनवियोगजनितशोकपीडितं, भीरुं व्यापद्भयात् त्यक्तौषधं, कृतघ्नमुपकारेऽप्यपकारिणं, वैद्यमानिनम्—अवैद्योऽपि य आत्मानं वैद्यं मन्यते एवं साध्यानामप्यौषधं न कार्यमित्यर्थः। इति सुखसाध्यादिलक्षणम्। इत्येष व्याधिप्रतीकारःसामान्यसंक्षेपाभ्यां व्याख्यातः४९

एवं च प्रथमेऽध्याये सकलतंत्रार्णवस्य तात्पर्यं व्याख्यातमनंतरं सुखस्मरणार्थमध्यायनामसंग्रह उच्यते—

**तंत्रस्यास्य परं चातो वक्ष्यतेऽध्यायसंग्रहः ॥५०॥**

स०—तंत्र्यंते धार्यंतेऽनेनायुर्वेदार्था इति तंत्रम्। अध्यायानां संग्रहः संक्षेप एकत्र राशीकरणमतोऽनंतरं सुखस्मरणाय मया वक्ष्यते ॥ ५० ॥

प०—एवं प्रथमेऽध्याये सकलतन्त्रस्य तात्पर्यमाख्यातम्। अनन्तरं सुखस्मरणार्थमध्यायनामसंग्रह उच्यते—तन्त्र्यन्ते धार्यन्तेऽनेनायुर्वेदार्था इति तन्त्रम्। अध्यायानां संग्रहः संक्षेपः एकत्र राशीकरणम्। अतोऽनन्तरं सुखस्मरणाय मया वक्ष्यते ॥ ५० ॥

हे०—एतावानेवार्थोऽस्मिन् शास्त्रे व्याख्येय इति ज्ञापनार्थम्। एवं हि ज्ञाते शास्त्रतात्पर्यं ज्ञायते शास्त्रे हि केचिदर्था विधीयन्ते केचिदनूद्यन्ते केचित्प्रस्तुतसिध्यर्थम्। अप्रस्तुताः अप्युच्यन्ते। शास्त्रतात्पर्यज्ञस्तु विधेयादीन्विविच्य शास्त्रार्थं सुखेन गृह्णाति। अध्यायसंग्रहोऽपि सुखग्रहणोपायः तेनाध्यायसंग्रहव्याख्यां प्रतिजानीते ॥ ५० ॥

**आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः।**
**अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः ॥**
**दोषादिज्ञानतद्भेदतच्चिकित्साद्युपक्रमाः।**

शुद्ध्यादिस्नेहनस्वेदरेकास्थापननावनम् ॥
धूमगंडूषदृक्सेकतृप्तियंत्रकशास्त्रकम् ।
सिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः ।
सूत्रस्थानमिमेऽध्यायास्त्रिंशत् शारीरमुच्यते ५१

स०—इमे पूर्वोक्तास्त्रिंशदध्यायाःसूत्रस्थानमुक्तम् । आयुष्कामश्च दिनर्त्वीहे च रोगानुत्पादनं च द्रवश्चेति द्वंद्वः । ईहा चर्या चेष्टेत्येकोऽर्थः । तेन आयुष्कामीयो दिनचर्या ऋतुचर्या रोगानुत्पादनीयो द्रवद्रव्यविज्ञानीयोऽन्नस्वरूपविज्ञानीयोऽन्नसंरक्षा मात्राशितीयो द्रव्यादिविज्ञानीयो रसभेदीयो दोषादिविज्ञानीयो दोषभेदीयो दोषोपक्रमणीयो द्विविधोपक्रमणीयः शोधनादिगणसंग्रहः स्नेहविधिः स्वेदविधिर्वमनविरेचनविधिर्बस्तिविधिर्नस्यविधिर्धूमविधिर्गंडूषविधिराश्चोतनांजनविधिस्तर्पणपुटपाकविधिर्यंत्रविधिः शस्त्रविधिः शिराव्यधविधिः शल्याहरणविधिः शस्त्रकर्मविधिः क्षाराग्निकर्मविधिः । सूचनात्सूत्रम् सूच्यतेऽनेन सकलस्तंत्रार्थ इति सूत्रस्थानं सकलस्य तंत्रस्य शिरःस्थानीयम् । अधुना शारीरमुच्यते । शारीरं शारीरस्थानमुच्यते । किंस्थानमध्यायसंग्रहः ॥ ५१ ॥

प०—इमे पूर्वोक्तास्त्रिंशदध्यायाः सूत्रस्थानमुक्तम् । आयुष्कामश्च दिनर्त्वीहा च रोगानुत्पादनं च द्रवश्चेति द्वन्द्वः । ईहा चर्या चेष्टेत्येकार्थः । तेनायुष्कामीयः, दिनचर्या, ऋतुचर्या, रोगानुत्पादनीयः, द्रवद्रव्यविज्ञानयिः, अन्नस्य रूपविज्ञानीयः, अन्नसंरक्षा, मात्राशितीयः, द्रव्यादिविज्ञानीयः, रसभेदीयः, दोषादिविज्ञानीयः, दोषभेदीयः, दोषोपक्रमणीयः द्विविधोपक्रमणीयः, शोधनादिगणसंग्रहः, स्नेहविधिः, स्वेदविधिः, वमनविरेकविधिः, बस्तिविधिः, नस्यविधिः, धूमविधिः, गण्डूषादिविधिः, आश्चोतनाञ्जनविधिः, तर्पणपुटपाकविधिः, यन्त्रविधिः, शस्त्रविधिः, सिराव्यधविधिः, शल्याहरणविधिः, शस्त्रकर्मविधिः, क्षाराग्निकर्मविधिः । सूचनात् संचनात् सूत्रम्। सूच्यतेऽनेन सकलस्तन्त्रार्थ इति सूत्रस्थानम्। सकलस्य तन्त्रस्य शिरःस्थानीयम् । अधुना शारीरमुच्यते । शारीरं शारीरस्थानमुच्यते । किंस्थानम् अध्यायसंग्रहः ॥ ५१ ॥

हे०--अतःपरं संग्रहानंतरम् अध्यायान् संगृह्णाति तत्र आयुष्कामादयस्त्रिंशदध्यायाः—सूत्रस्थानम् ॥५१॥

के पुनस्ते--

गर्भावक्रांतितद्व्यापदंगमर्मविभागिकम् ।
विकृतिर्दूतजं षष्ठम् ॥ ५२ ॥

स०--तत्र गर्भावक्रांतिशारीरम् । तस्य व्यापत् तस्येतिगर्भपरामर्शः गर्भव्यापच्छारीरम् । अंगविभागं शारीरम् । मर्मविभागं शारीरम् । विकृतिविज्ञानं शारीरम् । दूतविज्ञानीयं शारीरम् । एवमेते षडध्यायाः शारीरस्थानम् ॥ ५२ ॥

प०--के पुनस्ते—तत्र गर्भावक्रान्तिशारीरं, तस्य व्यापत् तद्व्यापत्। तस्येति गर्भस्य परामर्शःगर्भव्यापच्छारीरम्,अङ्गविभागं शारीरं, मर्मविभागं शारीरं, विकृतिविज्ञानीयं शारीरं, दूतविज्ञानीयं शारीरम् । एवमेते षडध्यायाः शारीरस्थानम् ॥ ५२ ॥

हे०—गर्भविक्रांत्यादयः षट्-शारीरम् ॥ ५२ ॥

निदानमुच्यते--

निदानं सार्वरोगिकम् ।
ज्वरासृक्कश्वासयक्ष्मादिमदाद्यर्शोऽतिसारिणाम् ।
मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ॥
पांडुकुष्ठानिलार्तानां वातास्रस्य च षोडश ५३॥

स०—सर्वरोगनिदानम् । ज्वरनिदानम् । रक्तपित्तकासनिदानम् । श्वासहिक्कानिदानम् । राजयक्ष्मादिनिदानम् । मदात्ययादिनिदानम् । अर्शोनिदानम् । अतिसारग्रहणीदोषनिदानम् । मूत्रावातनिदानम् । प्रमेहनिदानम् । विद्रधिवृद्धिगुल्मनिदानम् । उदरनिदानम् । पांडुशोफविसर्पनिदानम् । कुष्ठश्वित्रक्रमिनिदानम् । वातव्याधिनिदानम् । वातशोणितनिदानम् । इत्येवं षोडशाध्याया निदानस्थानम् ॥ ५३ ॥

प०--निदानमुच्यते—सर्वरोगनिदानं, ज्वरनिदानम, रक्तपित्तकासनिदानम्, श्वासहिक्कानिदानम्, राजयक्ष्मादिनिदानम्, मदात्ययादिनिदानम्, अर्शोनिदानम्, अतीसारग्रहणीदोषनिदानम्, मूत्राघातनिदानम्, प्रमेहनिदानम्, विद्रधिगुल्मनिदानम्, उदरनिदानम्, पाण्डुशोफविसर्पनिदानम्, कुष्ठश्वि-

क्रमिनिदानम्, वातव्याधिनिदानम्, वातशोणित-
दानम्। इत्येवं षोडशाध्यायानिदानम् ॥ ५३ ॥

हे०--सर्वरोगनिदानादयः षोडशनिदानम् ॥ ५३ ॥

चिकित्सितमुच्यते।

किस्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि।
गौ मदात्ययेऽर्शःसु विशि द्वौ द्वौ च मूत्रिते॥
द्रधौ गुल्मजठरपांडुशोफविसर्पिषु।
श्वित्रानिलव्याधिवातास्रेषु चिकित्सितम्॥
वैंशतिरिमेऽध्यायाः कल्पसिद्धिरतःपरम् ५४

स०--चिकित्सितस्थानं द्वाविंशतिरध्यायाः। ज्वर-
केत्सितम्।रक्तपित्तचिकित्सितम्।कासचिकित्सितम्।
हिक्काचिकित्सितम्। राजयक्ष्मचिकित्सितम्।
हृद्रोगतृष्णाचिकित्सितम्। मदात्ययचिकित्सितम्।
श्चिकित्सितम्। अतीसारचिकित्सितम्। ग्रहणीचि-
त्सितम्। मूत्राघातचिकित्सितम्। प्रमेहचिकित्सि-
। विद्रधिवृद्धिचिकित्सितम्। गुल्मचिकित्सितम्।
चिकित्सितम्। पांडुरोगचिकित्सितम्। श्वयथुचि-
सतम्। विसर्पचिकित्सितम्। कुष्ठचिकित्सितम्।
क्रमिचिकित्सितम्। वातव्याधिचिकित्सितम्। वात-
तचिकित्सितम्। इमे द्वाविंशतिरध्यायाश्चिकि-
स्थानम् अत ऊर्ध्वं कल्पस्थानम्॥ ५४ ॥

०--चिकित्सास्थानमुच्यते--द्वाविंशतिरध्याया
चिकित्सितम्,रक्तपित्तचिकित्सितम्, कासचिकि-
म्, श्वासचिकित्सितम्, हिक्काचिकित्सितम्,
क्ष्मचिकित्सितम्, छर्दिहृद्रोगतृष्णाचिकित्सि-
मदात्ययचिकित्सितम्, अर्शश्चिकित्सितम्,
ारचिकित्सितम्, ग्रहणीरोगचिकित्सितम्,
तचिकित्सितम्, प्रमेहचिकित्सितम्, विद्रधि-
चिकित्सितम्, उदरचिकित्सितम्, पाण्डुरोग-
त्सितम्, श्वयथुचिकित्सितम्, विसर्पचिकित्सि-
कुष्ठचिकित्सितम्, क्रमिचिकित्सितम्, वात-
चिकित्सितम्, वातशोणितचिकित्सितम्,
विंशतिरध्यायाः चिकित्सास्थानम् अत ऊर्ध्वं
द्धिस्थानम् ॥ ५४ ॥

--ज्वरचिकित्सादयो द्वाविंशतिश्चिकित्सितम् ॥ ५४ ॥

कल्पो वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना।
सिद्धिर्बस्त्यापदां षष्ठो द्रव्यकल्पोऽत उत्तरम् ५५

स०--अत्र कल्पे वमनकल्पः विरेचनकल्पः वमन-
विरेचनव्यापत्सिद्धिः। बस्तिकल्पः।बस्तिव्यापत्सिद्धिः।
षष्ठो भेषजकल्पः। इत्येवं षडध्यायाः कल्पसिद्धिस्था-
नम् ॥ ५५ ॥

प०--तत्र कल्पे वमनकल्पः, विरेचनकल्पः, वमन-
विरेचनव्यापत्सिद्धिः, बस्तिकल्पः, बस्तिव्यापत्सि-
द्धिः, षष्ठो द्रव्यकल्पः।इत्येवं षडध्यायाः कल्पसिद्धि-
स्थानम् ॥ ५५ ॥

हे०--वमनकल्पादयः षट् कल्पस्थानम् ॥ ५५ ॥

अत उत्तरं अतोऽस्मात्कल्पसिद्धिस्थानादूर्ध्वमुत्त-
रतंत्रम्।

बालोपचारे तद्व्याधौ तद्ग्रहे द्वौ च भूतगौ।
उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु संधिषु॥
दृक्तमोलिंगनाशेषु त्रयो द्वौ द्वौ च सर्वगौ।
कर्णनासामुखशिरोव्रणे भंगे भगंदरे॥
ग्रंथ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम्।
विषे भुजंगे कीटेषु मूषकेषु रसायने॥
चात्वरिंशोऽनपत्यानामध्यायो बीजपोषणः ५६

स०--बालोपचरणीयः। बालामयप्रतिषेधः।
बालग्रहप्रतिषेधः। भूतविज्ञानीयः। भूतप्रतिषेधः।
उन्मादप्रतिषेधः।अपस्मारप्रतिषेधः। वर्त्मरोगविज्ञा-
नीयः। वर्त्मरोगप्रतिषेधः। संधिसितासितरोग-
विज्ञानीयः। संधिसितासितप्रतिषेधः। दृष्टिरोगविज्ञा-
नीयः। तिमिरप्रतिषेधः। लिंगनाशप्रतिषेधः। सर्वा-
क्षिरोगविज्ञानीयः। सर्वाक्षिरोगप्रतिषेधः। कर्णरोग-
विज्ञानीयः। कर्णरोगप्रतिषेधः। नासारोगवि०।
नसारोगप्र०। मुखरोगवि०। मुखरोगप्र०। शिरोरो-
गविज्ञा०। शिरोरोगप्र०।व्रणविज्ञानीयप्रति०।सद्यो-
व्रणप्रति०। भंगप्रति०। भगंदरप्रति०। ग्रंथ्यर्बु-
दश्लीपदादिवि०। ग्रंथ्यर्बुदादिप्रति०। क्षुद्ररोगवि०।
क्षुद्ररोगप्र०। गुह्यरोगवि०। गुह्यरोगप्रति०। विष-
प्रति०। सर्पविषप्र०। कीटलूतादिविषप्र०। मूषि-

कालर्कविषप्र० । रसायनाध्यायः । वाजीकरणाध्यायः। इति । एवमेते चत्वारिंशदध्याया उत्तरतंत्रम् । तदिति बालस्य परामर्शः । द्वौ द्वाविति । वर्त्मनि द्वौ संधौ द्वौ यथासंख्येन । त्रय इति । दृक्तमोलिंगनाशेषु प्रत्येकमेकैकः । ग्रंथ्यादिक्षुद्ररोगगुह्यरोगेषु पृथग्द्वयं प्रत्येकं द्वौ द्वौ । अनपत्यानामप्रजानां पुंसां चत्वारिंशोऽध्यायो वीजपोषणः शुक्रवृद्धिहेतुरिति ॥ ५६ ॥

प०—अत उत्तरम् अतोऽस्मात् कल्पसिद्धिस्थानादूर्ध्वमुत्तरमुत्तरतन्त्रम्—बालोपचरणीयः, बालामयप्रतिषेधः, बालग्रहप्रतिषेधः, भूतविज्ञानीयः, भूतप्रतिषेधः, उन्मादप्रतिषेधः, अपस्मारप्रतिषेधः, वर्त्मरोगविज्ञानीयः, वर्त्मरोगप्रतिषेधः, संधिसितासितरोगविज्ञानीयः, संधिसितासितरोगप्रतिषेधः, दृष्टिरोगविज्ञानीयः, तिमिरप्रतिषेधः, लिङ्गनाशप्रतिषेधः, सर्वाक्षिरोगविज्ञानीयः, सर्वाक्षिरोगप्रतिषेधः, कर्णरोगविज्ञानीयः, कर्णरोगप्रतिषेधः, नासारोगविज्ञानीयः, नासारोगप्रतिषेधः, मुखरोगविज्ञानीयः, मुखरोगप्रतिषेधः, शिरोरोगविज्ञानीयः, शिरोरोगप्रतिषेधः, व्रणप्रतिषेधः, सद्योव्रणप्रतिषेधः, भङ्गप्रतिषेधः, भगन्दरप्रतिषेधः, ग्रन्थ्यर्बुदश्लीपदापचीनाडीप्रतिषेधः, ग्रन्थ्यर्बुदापचीनाडीविज्ञानीयः, क्षुद्ररोगविज्ञानीयः, क्षुद्ररोगप्रतिषेधः, गुह्यरोगविज्ञानीयः, गुह्यरोगप्रतिषेधः, विषप्रतिषेधः, सर्पप्रतिषेधः, कीटलूतादिप्रतिषेधः, मूषिकालर्कप्रतिषेधः, रसायनम्, वाजीकरणम् । इत्येवमेते चत्वारिंशदध्याया उत्तरतन्त्रम् । तदिति बालस्य परामर्शः । द्वौ द्वाविति वर्त्मनि द्वौ संधौ द्वौ यथासंख्येन । त्रय इति । दृक्तमोलिङ्गनाशेषु प्रत्येकमेकैकः । तमस्तिमिरलिङ्गनाशः । पटले द्वौ द्वाविति सर्वाक्षिरोगात् प्रभृति व्रणपर्यन्तेषु विज्ञेयौ । भंगभगन्दरयोरेकैकः । ग्रन्थ्यादिक्षुद्ररोगगुह्यरोगेषु पृथग्द्वयम् । प्रत्येकं द्वौ द्वौ । अनपत्यानामप्रजातानां पुंसां चत्वारिंशोऽध्यायो वीजपोषणः शुक्रवृद्धिहेतुरिति ॥ ५५ ॥

हे०—बालोपचरणीयादयश्चत्वारिंशदुत्तरमिति ॥५६॥

**इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम् ॥**

**स०**—इत्येवमनेन प्रकारेण सविंशमध्यायशतं षड्भिः स्थानैःसूत्रशारीरनिदानचिकित्साकल्पसिद्ध्युत्तरतंत्रैरुदीरितमिति भवेत् ॥ ५७ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थान आयुष्कामीयोऽध्यायः प्रथमः ॥ १ ॥

प०—इत्यनेन प्रकारेण विंशमध्यायशतं षड्भिः स्थानैः सूत्रशारीरनिदानचिकित्साकल्पसिद्ध्युत्तरतन्त्रे एभिरुदीरितमुक्तमिति भद्रम् ।

इति श्रीचन्द्रनन्दन विरचितायां पदार्थचान्द्रिकाभिधानटीकायामष्टाङ्गहृदयविवृतौ सूत्रस्थाने आयुष्कामीयोऽध्यायः प्रथमः ॥ १ ॥

हे०—षड्भिः स्थानैर्विंशमध्यायशतमस्मिन् शास्त्रे उक्तम्। अत्रायुष्कामरोगानुत्पादनवादिशब्दाः-आयुष्कामीयरोगानुत्पादनीयद्रवद्रव्यविज्ञानीयादीनां लक्षकाः, दिनर्त्वादिशब्दाः—दिनचर्यर्तुचर्यादिसंज्ञानां वाचकाः,शुद्ध्यादयः—शोधनादिद्रव्यगुणाः, दृक्सेक आश्चोतनं क्षाराग्निकर्मके एकोऽध्यायः, मदादयो मदात्ययादयः, विशि विड्रोगयोरतीसारग्रहण्योः, मूत्रिते मूत्ररोगयोः, कृच्छ्रमेदयोः भूतगौभूतविज्ञानीयतत्प्रतिषेधयोः, वर्त्मसु वर्त्मरोगविज्ञानप्रतिषेधयोः, संधिषु संधिगतरोगविज्ञानप्रतिषेधयोः, दृगादिषु त्रयः, न तु प्रत्येकं सर्वगादिषु षट्सु प्रत्येकं द्वा विज्ञानप्रतिषेधभेदात्, द्वौ व्रणौ व्रणसद्योव्रणभेदात्, सर्वगे सर्वाक्षिरोगे भंगे अस्थिभंगे, ग्रन्थ्यादिप्रभृतिषु त्रिषु पृथक्,द्वयं विज्ञानप्रतिषेधभेदात् । कीटे कीटलूताविषयप्रतिषेधः, अनपत्यानां बीजपोषणो वाजीकरणं, विंशं विंशत्युत्तरम् ॥ इत्यध्यायसंग्रहः ॥ ५७ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने अध्यायः आयुष्कामीयः सामस्त्येन निरूपितः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

**अथातो दिनचर्याध्यायं व्याख्यास्यामः ॥ १॥**

**स०**—अथेति सर्वेष्वध्यायेषु मंगलार्थः । मांगलिको ह्याचार्यः । प्रत्यध्यायारंभे मंगलार्थमथशब्दं प्रयुंक्ते । दिने दिने चर्या दिनचर्या । दिनस्य वा चर्या दिनचर्या । चरणं चर्या । उभयलोकहितमाहारचेष्टितं प्रति-

दिने यत्कर्तव्यं तमध्यायं व्याख्यास्यामः । प्रस्तुतादायुष्कामीयादध्यायादनंतरं कोऽस्य संबंधः । उच्यते । यस्मादायुष्कामेण पुरुषेण यत्प्रधानमायुष्यं तदासेव्यं प्रथमतस्तदन्वन्यानि यान्यायुष्याणि । अतः प्रथमं तावदाचारप्रधानेन भवितव्यम् । यत आचारादायुर्लभ्यत इत्याचार्याः । यद्यप्यत्र रात्रिचर्याऽपि विहिता तथाऽपि प्राधान्याद्दिनचर्याऽस्मिन्नध्याये निर्दिष्टा । अतो दिनचर्याध्यायोऽयमुच्यते ॥ १ ॥

प०–अथेति सर्वेष्वध्यायेषु मङ्गलार्थः । तथा अथ इत्यानन्तर्ये प्रस्तुताभिसम्बन्धे वा । अथेत्यादि शब्दानां पूर्वेऽध्याये वर्णित एवार्थः । माङ्गलिको ह्याचार्यः प्रत्यध्यायारम्भे मङ्गलार्थमथशब्दं प्रयुङ्क्ते । दिने दिने चर्या दिनस्य वा चर्या दिनचर्या । चरणं चर्या। उभयलोकहितमाहारविहारचेष्टेति यावत् । प्रतिदिनं यत्कर्तव्यं तमध्यायं व्याख्यास्यामः। प्रस्तुतादायुष्कामीयादध्यायादनन्तरं कोऽस्य सम्बन्धः । उच्यते । यस्मादायुष्कामेण पुरुषेण यत्प्रधानमायुष्यं तदासेव्यम् प्रथमतः तदन्वन्यानि यान्यायुष्काणि । अतः प्रथमं तावदाचारप्रधानेन भवितव्यम् । यत आचारादायुर्लभ्यत इत्याचार्याः । यद्यपि च रात्रिचर्यापि विहिता तथापि प्राधान्याद्दिनचर्याऽस्मिन्नध्याये निर्दिष्टा । अतो दिनचर्याध्यायोऽयमुच्यते १॥

हे०–दिनचर्याध्यायं व्याख्यातुं प्रतिजानीते-अथातो दिनचर्याध्यायं व्याख्यास्याम इति-यतः पूर्वाध्याये व्याधिप्रातिकारः सामान्यसंक्षेपाभ्यां व्याख्यातः स एवेदानीं सामान्यविस्तराभ्यां व्याख्येयः, स च हेत्वादिक्रमेण तत्रादौ च बहुवक्तव्यत्वाद्बहिरंगो हेतुः स द्वेधा–विहारः आहारश्च । विहारो द्वेधा–नियतकालोऽनियतकालश्च । नियतो द्विधा–दैनंदिनः आर्तवश्च । तत्र दैनंदिनोऽस्मिन्नध्याये। अत एवायं दिनचर्याख्यः स च प्रबोधादिः १

अस्मिंस्तंत्रे आयुःपालनं प्रकृतम् । तद्द्विविधम् । स्वस्थवृत्तमातुरवृत्तं च । तत्र मंगल्यत्वात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते ।

**ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः ॥२॥**

रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्तो विषुवति समरात्रिदिने काले द्विघटिकालक्षणः । मुहूर्तस्य चेह द्विघटिकोपलक्षणार्थत्वात्सर्वस्मिन् काले रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति स्थितम् । स्वस्थो नीरोगः कल्पः स आयुषो यथोपचरितस्य जीवितस्य रक्षार्थं ब्राह्मे मुहूर्त उत्तिष्ठेदभ्युत्थानं कुर्यात् । मुहूर्तो नाडिकाद्वयम् । ब्रह्म ज्ञानं तदर्थमध्ययनाद्यपि ब्रह्म तस्य योग्यो मुहूर्तो ब्राह्मः पाश्चिमयामस्य नाडिकाद्वयं तस्मिन् ब्राह्मे मुहूर्त उत्तिष्ठेत् । किंभूतः । स्वस्थोऽनातुरः । 'समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेंद्रियमनाः स्वस्थ इत्यभिधीयते ।' इति स्वस्थलक्षणम् । किमर्थमुत्तिष्ठेत् । रक्षार्थमायुषो जीवितस्य । तदा ह्युत्तिष्ठतो व्याध्यलक्ष्म्याद्यभाव एवायुषो रक्षा भवति । आतुरेण धातुसाम्यार्थं स्वप्तव्यमेव ॥ २ ॥

प०–स्वस्थो नीरोगकल्पः स आयुषो यथोपचरितस्य जीवितस्य रक्षार्थं ब्राह्मे मुहूर्त उत्तिष्ठेदभ्युत्थानं कुर्यात् । मुहूर्तो नाडिकाद्वयं ब्रह्मज्ञानं तदर्थमध्ययनाद्यपि ब्रह्म तस्य योग्यो मुहूर्तो ब्राह्मः पश्चिमयामस्य नाडिकाद्वयम् । स्वस्थवृत्ताधिकारश्चायं विज्ञेयः अभ्युत्थानं कृत्वा किमासेव्यम् ॥ २ ॥

हे०–तत्र प्रबोधं विधत्ते–रात्रे रुपान्त्यो मुहूर्तो ब्राह्मः । उत्तिष्ठेत् प्रबुध्येत । स्वस्थो नीरोगः रोगिणस्त्वनियमः । शौचं विधत्ते–ततः प्रबोधानन्तरं कृतशौचावीधिर्भवेत् । स्मृत्युक्तविधिना मलोत्सर्गाद्याचमनपर्यंतं कुर्यात् ॥ २ ॥

**शरीरचिंतां निर्वर्त्य कृतशौचविधिस्ततः ॥**
**अर्कन्यग्रोधखदिरकरंजककुभादिकम् ।**
**प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥**
**भक्षयेद्दंतधवनं दंतमांसान्यबाधयन् ॥ ३ ॥**

---

१ "ब्राह्मे मुहूर्ते बुद्ध्येत स्वस्थो रक्षार्थमायुषः । तत्र सर्वाघशान्त्यर्थं स्मरेच्च मधुसूदनम् ॥" इति सुश्रुतः ।

१ "आयुष्यमुषसि प्रोक्तं मलादीनां विसर्जनम् । तदन्त्रकूजनाध्मानोदरगौरवकारणम् ॥ गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम् । पवित्रकरमायुष्यमलक्ष्मकिलिपापहृत् ॥ प्रक्षालनं मतं पाण्योः पादयोः शुद्धिकारकम् । मलश्रमहरं वृष्यं चक्षुष्यं तापनाशनम् ॥" २ दन्तकाष्ठविधिः–"तत्रादौ दन्तपवनं द्वादशांगुलमायतम् । कनिष्ठिकापरीणाहमृज्वग्रथितमव्रणम् ॥ अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम् । अवेक्ष्यर्तुं च दोषं च रसं वीर्यं च योजयेत् ॥ कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः । निम्बश्च

स०--शरीरस्य चिंता शरीरचिंता जीर्णाजीर्णनिरूपणादिका तां निर्वर्त्य ततो मूत्रपुरीषादेः कृतशौचविधानस्ततोऽनन्तरं दन्तधावनमर्कादिकं भक्षयेत् । संग्रहेऽप्युक्तम्—'ब्राह्मे मुहूर्त उत्तिष्ठेज्जीर्णाजीर्णं निरूपयन् ।' इत्यादि । अर्कः सूर्याह्वः । न्यग्रोधो यक्षावासः । खदिरो गायत्री । करंजश्चिरिबिल्वः । ककुभोऽर्जुनः । आदिग्रहणेन मालतीकरवीरादिग्रहः । कथं भक्षयेत् । दंतानां मांसान्यबाधयन्नपीडयन् । प्रातः प्रत्युषसि भुक्त्वा दंतधावनकाष्ठरसं भक्षयित्वा । मृद्वग्रं कूर्चिताग्रम् । तथा कषायकटुतिक्तकम् । रसत्रयेण ह्यनेन मुखवैशद्यारोचकश्लेष्मापनयाः सम्यक् संपद्यंते । अर्काद्युपादानादेव कषायादित्वे लब्धे कषायादिग्रहणं संग्रहादिगृहीतस्य संग्रहार्थं स्पष्टार्थं च । अर्कादिग्रहणमुदाहरणार्थं ज्ञेयम् । संक्षेपविवक्षया न दंतधावनस्य गणसंग्रहः । द्वादशाद्यंगुलप्रमाणत्वं श्लेष्मातकाद्यनिष्टदन्तधावननिषेधश्च तंत्रांतरोक्तमपि नेहोक्तम् । **सुश्रुते**नोक्तम्—"अजग्धमनुपक्लिष्टं षडष्टद्वादशांगुलम् । प्रदेशनीमुखसमं मृदु स्याद्दंतधावनम्" ॥ ३ ॥

तदर्थमाह—

प०--**शरीरचिन्तां विनिवर्त्य मूत्रपुरीषोत्सर्गादिलक्षणामवश्यकार्यापरपर्यायामनन्तरकृतशौचविधिः सन् दन्तपवनं दन्तकाष्ठं भक्षयेत् समानयेत् । प्रातः प्रत्युषसि भुक्त्वा च भोजनं कृत्वा, तच्च मृद्वग्रं कूर्चिताग्रं क्षुण्णमर्कवृक्षभवं, न्यग्रोधजं, करंजजं, ककुभजं तथा कषायकटुतिक्तकम् । अन्यदप्येवंविधम् । आदिग्रहणेन सर्जारिमेदोऽपामार्गमालत्यादिपरिग्रहः । तच्च दन्तमांसान्यबाधयन् अहिंसन् भक्षयेत् । दन्तमांसदुःखापनात् तत्पाकोऽकस्माज्जायते ॥ ३ ॥**

हे०--किं कृत्वा शरीरचिन्तां निर्वर्त्य निष्पाद्य कीदृशं मे शरीरं, किंच मया अस्य हितमनुष्ठितं, किंवा अद्यानुष्ठेयमित्यादिविमर्शः शरीरचिन्ता । वक्ष्यति हि-"नक्तंदिनानि मे यान्ति कथंभूतस्य संप्रति । दुःखभाङ्न भवत्येवं नित्यं सन्निहितः स्मृतिः ॥" धर्मशास्त्रेऽपि—"ब्राह्मे मुहूर्त उत्थाय चिन्तयेदात्मनो हितम्" इति । तदा हि-कृतो विमर्शो यथार्थो भवति मनसः प्रसन्नत्वात् । दन्तधावनं विधत्ते । अर्केति प्रातभुक्त्वा चेति द्विकालं दन्तपवनं भक्षयेत्, दन्ताः पूयन्ते शोध्यन्तेऽनेनेति दन्तपवनं दन्तकाष्ठं, तच्चार्कादिजम् । ककुभोऽर्जुनः । आदिशब्दादसनादयः । तच्च मूलम् उक्तं हि **संग्रहे** "वटासनार्कखदिरकरञ्जकरवीरजम् । सर्जारिमेदोपामार्गमालतीककुभोद्भवम् ॥ कषायतिक्तकटुकं मूलमन्यदपीदृशम् । विज्ञानवृक्षं क्षुण्णाग्रं मृद्वग्रन्थि सुभूमिजम् ॥" इति । कनीन्यग्रसमस्थौल्यं कनिष्ठाङ्गुल्यग्रभागवत्स्थूलं, प्रगुणम्—ऋजुकषायादिरसमर्कादिभ्योऽन्यत्र न ग्राह्यम् अर्काद्यनभिव्यक्तकषायादिरसमपि ग्राह्यमित्युभयोर्ग्रहणं, भक्षणेन भक्षणपूर्वकं दन्तघर्षणं लक्ष्यते दन्तमांसबाधननिषेधान्यथानुपपत्तेः । नहि भक्षणमात्रेण दन्तमांसानां पीडा उक्तं च **संग्रहे**—" प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम् । वाप्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेत् ॥ इति वाप्यं—कुष्ठं, त्रिवर्गत्रितयं—त्रिफला, त्रिकटुकम् । त्रिजातकं च।शनैस्तेन ततो दंतान् दंतमांसान्यबाधयन्निति । घर्षणं चाधो दंतपूर्वकम्।उक्तं हि **संग्रहे**—"दन्तान् पूर्वमधो घर्षेत्प्रातः सिञ्चेच्च लोचने । तोयपूर्णमुखो ग्रीष्मशरदोः शीतवारिणा" इति । ऋत्वंतरे कोष्णवारिणा ॥ ३ ॥

**( लिखेदनुसुखं जिह्वां जिह्वानिर्लेखनेन च । तथाऽस्यमलवैरस्यगन्धा जिह्वाऽऽस्यदन्तजाः । रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥ )[1]**

**नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ॥**
**तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत्॥४॥**

अजीर्णादीनां द्वंद्वः । एतानि विद्यंते यस्येति 'अत इनिठनौ'इति इनिः । एवं तृष्णास्येत्यादौ द्वंद्वादिनिश्च ।

---

तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥ मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा । क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैंधवेन च ॥ चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् । एकैकं घर्षयेद्दंतं मृदुना कूर्चकेन च ॥ दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् । तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणं चापि कर्षति ॥ वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च । न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे ॥ तथास्यपाके श्वासे च कासहिक्कावमीषु च । दुर्बलोऽजीर्णभक्तश्च मूर्च्छार्तो मदपीडितः ॥ शिरोरुगार्तस्तृषितः श्रान्तः पानक्लमान्वितः । अर्दितः कर्णशूली च दन्तरोगी च मानवः ॥" **जिह्वामलहरणं च** "जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च । तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशांगुलम् ॥ मुखवैरस्यदौर्गन्ध्यशोषजाड्यहरं सुखम् । दन्तदार्ढ्यकरं रुच्यं स्नेहगंडूषधारणम् ॥" इति **सुश्रुतः** ।

1 अत्र कोष्टकान्तर्गतः पाठ अधिको दृश्यते ।

तद्दंतधावनमजीर्णी न भक्षयेत् । एवं वमथ्वादीनां मत्वर्थीयांतानां सम्बन्धो योज्यः ॥ ४ ॥

प०—तदनु दन्तकाष्ठभक्षणादनन्तरं जिह्वां लिखेत्। तेन मुखस्य मलवैरस्यादयो दोषा न भवन्ति । रुच्यादयो गुणा भवन्ति । किं सर्वे तद्भक्षयन्त्याहोस्वित् केचित् तदर्थमाह—तद्दन्तपवनं नाद्यान्न भक्षयेत् । अजीर्णमपरिणतमन्नम् । वमथुः छर्दिः । श्वासादयो वक्ष्यमाणलक्षणाः । अजीर्णमस्यास्तीत्यजीर्णी । एवं सर्वत्र योज्यम् । अर्दितं वदनार्धं वायुना वक्रम् । आमयशब्देन रोगपर्यायेण तृष्णादीनां सम्बन्धः । तेन तृष्णामयी मुखपाकमयी हृदामयी नेत्रामयी शिरआमयी कर्णामयी च तद्दन्तकाष्ठं वर्जयेत् ॥ ४ ॥

हे०-रोगविशेषे दंतधावनं निषेधति—नाद्यादिति । अजीर्ण्यादिरोगी तद्दंतपवनं नाद्यान्न भक्षयेत् । अर्दितः एकायामः। संग्रहे तु-"नैव श्लेष्मातकारिष्टबिभीतधवधन्वनात्। बिल्वबब्बूलीनिर्गुंडीशिग्रुतिंदुकतिल्वकान् ॥कोविदारशमीपीलुपिप्पलेंगुदगुग्गुलून् । पारिभद्रकमम्लीकामोरक्यौ शाल्मलीं ॥स्वाद्वम्ललवणं शुष्कं सुषिरं पूतिपिच्छिलम्। पालाशमासनं दंतधावनं पादुके त्यजेत् ॥" इति ॥ ४ ॥

**सौवीरमंजनं[1] नित्यं हितमक्ष्णोस्ततो भजेत्॥५॥**
**(लोचने भवतस्तेन सुस्निग्धे घनपक्ष्मणी।**
**व्यक्तत्रिवर्णे विमले मनोज्ञे सूक्ष्मदर्शने[2] ॥)**

स०—ततो दन्तधावनभक्षणानंतरं सौवीराख्यमंजनं भजेत् । कस्मात् यतो हितमक्ष्णोः ॥ ५ ॥

प०--दन्तधावनादनन्तरमंजनं कार्यं तदर्थमाह-तेन सौवीरांजनेन नेत्रे स्निग्धादिगुणयुते भवतः । नित्यं सर्वकालं सततं प्रातः सायं चाक्ष्णोर्नेत्रयोः सौवीराञ्जनं हितं पथ्यम् तस्माद्भजेत् शीलयेत् ॥५॥

हे०-अंजनं विधत्ते-सौवीरमिति । ततो दंतधावनानंतरं सौवीराख्यमंजनं भजेत् । अस्मादक्ष्णोर्नेत्रयोः सर्वदा हितं पथ्यम् । अस्य च मृदुचूर्णांजनत्वात्तिस्रः शलाकामानम् संग्रहे तु फलमुक्तं "लोचने तेन भवतो मनोज्ञे सूक्ष्मदर्शने । व्यक्तत्रिवर्णे विमले सुस्निग्धघनपक्ष्मणी ॥" इति । सुश्रुतस्तु स्रोतोंऽजनमाह—" मतं स्रोतोंऽजनं श्रेष्ठं विशुद्धं सिन्धुसंभवम् । दाहकंडूमलघ्नं च दृष्टेः क्लेदरुजापहम् ॥" इति । उभयोः प्रामाण्याद्विकल्पः ॥ ५ ॥

**चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मणो भयम्[1]।**
**योजयेत्सप्तरात्रेऽस्मात्स्रवणार्थं रसांजनम् ॥६॥**

स०—अस्मात्कारणात्स्रावणार्थं सप्तरात्रे सति रसांजनं दार्वीक्वाथसमुद्भवाख्यं योजयेत् । यस्माच्चक्षुस्तेजोमयमाग्नेयम् । यद्यपि पंचमहाभूतात्मकं सर्वमपि तथापि बाहुल्येन व्यपदेशात्तेजोमयमुच्यते । अत एव तद्रूपाण्यालोचयति । तथा च लोके कश्चिदाह—नरपतिरेतीति । न चासौ नराणामेव पतिः किंतर्हि नारीणामपीति । तस्य चक्षुषो वातपित्ताभ्यामपि भयमस्ति विशेषेण तु कफाद्भयं ततो रसांजनं योजयेत् ॥ ६ ॥

प०—किं सर्वकालं तदर्थमाह—यतश्चक्षुस्तेजोमयमग्निरूपम् । व्यपदेशोऽत्र भूयसा, यतः पंचमहाभूतात्मकमिन्द्रियं तस्य च वातादितो विशेषात् श्लेष्मतो द्रवत्वाद्भयं विरुद्धत्वादतोऽस्मात् कारणात् कफस्य स्रावनिमित्तं कफनिर्हरणाय सप्तरात्रे सप्तरात्रे गते सप्ताहात् सप्ताहादनन्तरं रसाञ्जनं योजयेत्। ततो नावनादिकं कार्यम् । क्रमेण तदर्थमाह । तथा च संग्रहे-" अंजनोत्क्लेशितं नस्यैः कवलैर्नावनेरितम् । धूमेन कवलोत्क्लिष्टं क्रमाद्घातकफापहम्" ॥ ६ ॥

हे०-सौवीरापवादेन रसांजनं विधत्ते-योजयेदतंरार्थे सप्तमी सप्तरात्रमंतरं कृत्वेत्यर्थः । किमर्थं—स्रावणार्थं श्लेष्मनिर्बर्हणार्थं, यस्माच्चक्षुस्तेजोमयं ततस्तस्य श्लेष्मतः कफाज्जलालपकाद्विशेषाद्भयं, वातपित्तयोस्तु विशेषभयाभावान्नित्यांजनेन च प्रसादनेनोपशमापृथक् प्रतीकाराभावात् । अस्य च तीक्ष्णपिंडांजनत्वाद्रेणुमात्रत्वं, पिंडत्वं च दार्वीक्वाथजत्वात् । उक्तं हि—" दार्वीक्वाथमजाक्षीरपादं पक्त्वा यदा घनम् । तदा रसांजनाख्यं तन्नेत्रयोश्च प्रयोजयेत् ॥" इति । ननु " पञ्चसप्ताष्टरात्रे वा स्रावणार्थं रसाञ्जनम्।"इति चरकवचनम् । इह तु सप्तरात्र इति विरोधः, नैवं पञ्चसप्ताष्टरात्राणां बहुमध्याल्पकफविषयत्वात् । ननु "निशायां ध्रुवमंजनमिष्यते " इति

[1] मतं श्रोतोंऽजनं श्रेष्ठं विशुद्धं सिन्धुसंभवम्। दाहकण्डूमलघ्नं च दृष्टिक्लेदरुजापहम् ॥ अक्ष्णो रूपावहं चैव सहते मारुतातपौ । न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत् ॥ " सुश्रुतः ।

[2] कोष्ठकान्तर्गतोऽधिकः पाठः ।

[1] पित्तमयमिति पाठान्तरम् ।

चरकेणांजनस्य रात्रिकाल उक्तः । इह तु दंतधावनानंतरमिति विरोधः, मैवं चरकवाक्यस्य ह्ययमर्थः । यदा नित्याञ्जनं बाधित्वा पूर्वाह्णे रसाञ्जनं प्रयुज्यते तदा ध्रुवं नित्यसेव्यमंजनं निशायामिष्यते, अन्यदा तु प्रातरेवेत्यविरोधः । तथाच मनुः-" मैत्रं प्रसाधनं स्नानं दंतधावनमंजनम् । पूर्वाह्ण एव कुर्वीत देवतानां तु पूजनम् । " इति । मैत्रं सूर्याराधनम् ॥ ६ ॥

**ततो नावनगंडूषधूमतांबूलभाग्भवेत् ॥ ७ ॥**

**स०**-नावनादीनां नस्यादिविधिषु गुणा वक्ष्यमाणा विधानं च । तांबूलस्य तु वैशद्यरुचिहरत्वसौगंध्यादिगुणा प्रसिद्धा एव । नावनादीनां तांबूलांतानां द्वंद्वः। ततोऽञ्जनादनंतरं नावनगण्डूषधूमतांबूलानि भजते यः सएवंविधो भवेत् । 'भजो ण्विः' इति ण्विः ॥७॥

**प०-ततोऽञ्जनानन्तरं नरो नावनादिभाग् भवेत् । नावनं नस्यम् । गण्डूषो मुखपूर्णे काथादिभिः । धूमो वक्ष्यमाणः प्रायोगिकः । ताम्बूलं प्रसिद्धम्॥७॥**

हे०-नस्यादीन् विधत्ते-ततोऽञ्जनादनंतरं क्रमेण नावनादीन् भजेत् । उक्तं हि **संग्रहे**-"अणुतैलं ततो नस्यं ततो गंडूषधारणम् । घनोन्नतप्रसन्नत्वं स्कंधग्रीवास्यवक्षसः ॥ सुगन्धिवदनाः स्निग्धनिस्वना विमलेन्द्रियाः । निर्वलीपलितव्यंगा भवेयुर्नस्यशीलिनः ॥ रूक्षस्फुटनपारुष्यमुखशोषद्विजामयाः । न स्युः स्वरोपघाताश्च स्नेहगण्डूषधारिणः ॥ खदिरक्षीरवृक्षारिमेदोऽम्बुकवलग्रहाः । अरोचकास्यवैरस्यमलपूतिप्रसेकजित् ॥ सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ।" इति । प्रायोगिकं ततो धूमं गंधमाल्यादि वाचरेत् । धूमपस्योर्ध्वजत्रूत्था न स्युर्वातकफामयाः ॥ अञ्जनोत्क्लेशितं नस्यैः कवलैर्नावनैरितम् । धूमेन कवलोत्थं च क्रमाद्वातकफं जयेत्॥"ताम्बूलं तु जातीफलादियुक्तम् उक्तं हि **संग्रहे** "रुचिवैशद्यसौगंधमिच्छन् वक्त्रेण धारयेत् । जातीलवंगकर्पूरकंकोलकटुकैःसह॥ कटुलताकस्तूरिकाफलम् । तांबूलीनां किसलयं हृद्यं पूगफलान्वितम्" इति ॥७॥

येषां तु तांबूलमपथ्यं तानाह ।

**तांबूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम् ॥**
**विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि ॥८॥**

**स०**-क्षतं विद्यते येषांते क्षताः । अर्शआदित्वादच् एवं पित्तास्राः । उत्कुपितमभिष्यन्नं चक्षुरेकं द्वे वा येषां ते । ये च क्षताश्च पित्तास्राश्च रूक्षाश्चोत्कुपितचक्षुषः तेषामपथ्यमहितम् । तथा विषार्तानां मूर्छार्तानां मदार्तानां शोषिणां चेत्यपिशब्दस्यार्थः । शोषिणो राजयक्ष्मिणः ॥ ८ ॥

**प०-तत् किं सर्वैरासेव्यमुत कैश्चित्तदर्थमाह-क्षतरक्तपित्ताद्युपहतानां शोषिणां च तत्तांबूलमपथ्यम् क्षतमुरःक्षतम् । पित्तास्रं रक्तपित्तम् । रूक्षेण निमित्तेनोत्कुपितानि चक्षूंषि येषां ते रूक्षोत्कुपितचक्षुषस्तेषामथवा रूक्षाणामुत्कुपितचक्षुषां च विषं शृङ्गीविषादि। मूर्छा मूर्छायः । मदो मदात्ययं वक्ष्यमाणः । शोषो राजयक्ष्मा तेषामपथ्यम् ॥ ८ ।**

हे०-क्षतादौ ताम्बूलं निषेधति-तांबूलमिति । क्षतं-क्षतकासः, पित्तास्रं-रक्तपित्तं, रूक्षो-निस्नेहांगः, उत्कुपितचक्षुः-अभिष्यन्दाख्योऽक्षिरोगः, शोषो-मुखशोषो राजयक्ष्म च उक्तं हि **सुश्रुते**-"रक्तपित्तक्षतक्षीणतृष्णामूर्छापरीतिनाम् रूक्षदुर्बलमत्तेभ्यो न हितं मुखशोषिणाम् ॥ " इति ॥८॥

तदेतत्सर्वं विधाय भोजनासान्ने कालेऽभ्यंगं आचरणीय इत्याह—

**अभ्यंगमाचरेन्नित्यं स जराश्रमवातहा ॥**
**दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत्॥९॥**

**स०**-अभ्यंगं नित्यं सततमाचरेत् । नित्यग्रहणं चोपलक्षणार्थम् । एकद्वित्रिदिनांतरमपि यथोचितमाचरतोऽपि न दोषः । सोऽभ्यंगं आचर्यमाणो जरा च श्रमश्च वातश्च तान् हंतीति क्विप् । तथा दृष्टीत्यादि ।

---

( १ ) "प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा । निशासु चूर्णमधिकं ताम्बूलं भक्षयेत्सदा॥आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता । तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत् ॥ पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः । पर्णचूर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ आद्यं विषोपमं पीतं द्वितीयं भेदि दुर्जरम् । तृतीयादि तु पातव्यं सुधातुल्यं रसायनम् ॥"
**( भा. प्र. )**

" कर्पूरजातिकंकोललवङ्गखदिराह्वयैः । सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभम् ॥ मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् । हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनम् ॥ प्रसेकशमनं हृद्यं गलामयविनाशनम् । पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ॥" **( सुश्रुतः )**

ष्टेः प्रसादो वैमल्यं दृष्टिप्रसादः । शोभना चासौ त्वक् तस्या भावः सुत्वक्त्वम् । दृढस्य भावो दार्ढ्यम् । दृढादिभ्यः ष्यञ् । दृष्टिप्रसादादीनां द्वंद्वः । तानि करोति योऽभ्यंगः स एवम् ॥ ९ ॥

प०—नस्यादि कृत्वाऽभ्यङ्गः कार्यस्तदर्थमाह—नित्यं सर्वकालमभ्यङ्गमाचरेत् । सोऽभ्यङ्गो जराश्रमवातान् हन्तीति तथा दृष्टेः प्रसादं नैर्मल्यं करोति शरीरस्यैव पुष्टिं पोषमायुषोऽभिवृद्धिं निद्रां सुत्वक्त्वं च । शोभना त्वक् सुत्वक् तस्या भावः सुत्वक्त्वम् । दार्ढ्यं दृढता कर्मणि सामर्थ्यम् ॥ ९ ॥

हे०—अभ्यङ्गं विधत्ते—स चोत्पन्नायां क्षुधि विधेयः, तथाहि शुद्धस्रोतस्तया रोमकूपैः स्नेहो देहं व्याप्नोति, तं चोष्मा पचति । उक्तं च संग्रहे—"अथ जातान्नपानेच्छो मारुतघ्नैः सुगन्धिभिः । यथर्तुसंस्पर्शसुखैः तैलैरभ्यङ्गमाचरेत् ॥" इति । अभ्यंगफलमाह—सोऽभ्यंगो जरादीन् हंति, दृष्टिप्रसादादींश्च करोति, सुत्वक्त्वं—निर्मलीकत्वं त्वचः, संग्रहे तु "रथाक्षचर्मघटवद्भवत्यभ्यङ्गतो गुणाः । स्पर्शनेऽभ्यधिको वायुः स्पर्शनं च त्वगाश्रयम् ॥ त्वच्यश्च परमभ्यंगो यस्मात्तं शीलयेदतः ।" इति ॥ ९ ॥

**शिरःश्रवणपादेषु तं विशेषेण शीलयेत् १०॥**

स०—तमभ्यंगं शिरःश्रवणपादेषु विशेषेणातिशयेन शीलयेदभ्यसेदिति वचनाचावश्यं न तथा सर्वशरीरेऽभ्यंगःकार्यो यथैतेषु शिरःश्रवणपादेषु । अत्र च पूर्ववदेकत्वाभावः ॥ १० ॥

प०—तमभ्यङ्गं शिरःप्रभृतिषु विशेषेणात्यर्थं शीलयेत्

हे०—अभ्यंगाभ्यासं विधत्ते—तमभ्यङ्गं शीलयेदभ्यसेत्सर्वेष्वङ्गेषु विशेषान्मूर्धकर्णाङ्घ्रिषु एकस्मिन्नेव प्रयोगे पुनः पुनः सेवनमभ्यासः, प्रत्यहं प्रयोगाभ्यासस्तु नित्यत्वेनोक्तः । संग्रहे तु—"सकेश्यः शीलितां मूर्ध्नि कपालेन्द्रियतर्पणः । हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ॥ पादाभ्यङ्गस्तु तत्स्थैर्यनिद्रादृष्टिप्रसादकृत् । पादसुप्तिश्रमस्तंभसंकोचस्फुटनप्रणुत् ॥" इति ॥ १० ॥

अथैतदपवादमाह—

**वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः ११**

स०—अभ्यंगो वर्ज्यो वर्जनीयः । कफग्रस्तेन कृतसंशुद्धिनाऽजीर्णिना च ॥ ११ ॥

प०—सचाभ्यङ्गः कफग्रस्तादिभिः वर्ज्यः न सेव्यः ॥ कफग्रस्तश्लेष्मरोगार्तः कफेनाक्रान्तः । ग्रस्तग्रहणमतिशयप्रतिपादनार्थम् । कृतसंशुद्धिर्वमनादिना चिरकालं निर्हृतदोषः तेन न सेव्यः । तथाऽजीर्णे न सेव्यः ॥ ११ ॥

हे०—अभ्यंगं कफग्रस्तादौ निषेधति—कफग्रस्तोऽतिवृद्धश्लेष्मा, कृतसंशुद्धेस्तदहरेव निषिद्धः । उक्तं हि सुश्रुते—"तरुणज्वर्यजीर्णी च नाभ्यक्तव्यः कथंचन । तथा वान्तो विरिक्तश्च निरूढो यश्च मानवः ॥ पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा ॥ शेषाणां तदहः शेषा अग्निमान्द्यादयो गदाः ॥" इति ॥ ११ ॥

**लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।**
**विभक्तघनगात्रत्वं व्यायामादुपजायते ॥ १२ ॥**

स०—शरीरायासजननं कर्म व्यायामः । तस्मादेवंगुणाः लाघवादयो निष्पद्यंते । विभक्तानि विभागेन स्थितानि घनानि गात्राणि यस्य स विभक्तघनगात्रस्तस्य भावस्तत्त्वमिति ॥ १२ ॥

प०—शेषान्नेनाभ्यङ्गं कृत्वा व्यायाममाचरेत्तदर्थमाह—शरीरायासजननं कर्म व्यायाम उच्यते । तस्माद्व्यायामादुपसेविताल्लाघवादिकमुपजायते । लाघवं

[1]"शरीरायासजननं कर्म व्यायामसंज्ञितम् । तत्कृत्वा तु सुखं देहं विमृद्नीयात्समन्ततः ॥ शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता । दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ॥ श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता । आरोग्यं चापि परमं व्यायामादुपजायते ॥ तथास्ति सदृशं तेन किंचित्स्थौल्यापकर्षणम् । न च व्यायामिनं मर्त्यं मर्दयंत्यरयो भयात् ॥ न चैनं सहसाऽऽक्रम्य जरा समधिरोहति ॥ स्थिरीभवति मांसं च व्यायामाभिरतस्य च ॥ व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च । व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव ॥ वयोरूपगुणैर्हीनमपि कुर्यात् सुदर्शनम् । व्यायामं कुर्वतो नित्यं विरुद्धमपि भोजनम् ॥ विदग्धमविदग्धं वा निर्दोषं परिपच्यते । व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम् ॥ स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः । सर्वेष्वृतुष्वहरहः पुम्भिरात्महितैषिभिः ॥ बलस्यार्धेन कर्तव्यो व्यायामो हन्त्यतोऽन्यथा । हृदि स्थाने स्थितो वायुर्यदा वक्त्रं प्रपद्यते ॥ व्यायामं कुर्वतो जन्तोस्तद्बलार्धस्य लक्षणम् । वयोबलशरीराणि देशकालाशनानि च ॥ समीक्ष्य कुर्याद्व्यायाममन्यथा रोगमाप्नुयात् ।" इति सुश्रुतः ।

देहलघुत्वम् । कर्मणि सामर्थ्य-शक्तता दृढता । दीप्तोऽग्निर्वह्निर्दीप्तता । मेदसो-धातोः क्षयः अल्पता । विभक्तानि-विभागस्थितानि, घनानि-निबिडानि दृढानि, गात्राणि-शरीरावयवाः, यस्य स विभक्तघनगात्रः । तस्य भावस्तत्त्वमिति ॥ १२ ॥

हे०-इष्टसाधनत्वकथनद्वारा व्यायामं विधत्ते ॥१२॥

इदानीं येनासौ न कार्यस्तं दर्शयति-

**वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत्॥**

**स०**-वातपित्तामयी बाल आषोडशाद्वर्षाद् वृद्धः सप्ततेरूर्ध्वमजीर्णी च तं जह्यात् ॥ १३ ॥

**प०**-वातपित्तरोगार्तो बालो वृद्धश्च व्यायामं त्यजेत् परिहरेत् । वातामयी-वातरोगी, पित्तामयी-पित्तरोगी । तथा पित्तरोगी वातपित्तामयी व्यस्तसमस्तत्वादिति ज्ञेयम् । बाल आषोडशाद्वर्षात्, सप्ततेरूर्ध्वं वृद्धः ॥ १३ ॥

हे०-वातरोगादौ व्यायामं निषेधति ॥ १३ ॥

**अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः शीतकाले वसंते च मंदमेव ततोऽन्यदा ॥१५॥**

**स०**-तुरवधारणे । बलवद्भिः पुरुषैः स्निग्धभोजिभिरर्धशक्त्यैव निषेव्यो व्यायामः । प्राक् श्रमाद्व्यायामवर्जनं कार्यमित्यर्थः । कदासौ विधातव्य इत्याह-हेमंते शिशिरे वसंते च सेव्यः । शीतवसंताभ्यामन्यदा मंदमेव सेव्यः । मंदमिति क्रियाविशेषणम् । क्रियाविशेषणानां कर्मत्वं नपुंसकलिंगता च वक्तव्येति ॥ १४ ॥ १५ ॥

**प०**-स च व्यायामो बलिभिः पुरुषैः शीतकाले वसन्ते हेमन्तशिशिराख्ये च स्निग्धान्नभोजिभिः सद्भिरर्धशक्त्या यावन्नातिश्रान्तस्तावन्निषेव्योऽभिषेवणीयः यावान् शक्यते । ततोऽर्धमिति । ततोऽन्यस्मिन्नृतौ ग्रीष्मवर्षाशरदाख्ये मन्दमेव स्वल्पमेव ॥ १४ ॥ १५ ॥

हे०-तं व्यायामं व्यायाममात्रामाह-अर्धशक्त्या व्यायामो निषेव्यः, किं सर्वैः नेत्याह-बलिभिः स्निग्धभोजिभिरिति मिलितं विशेषणम् । किं सर्वदा नेत्याह-शीतकाले-हेमन्तशिशिरौ । अन्यदा तु ततोऽर्धशक्तेर्मंदमल्पः निषेव्यः, अन्यदेत्यन्यस्यामवस्थायाम् अन्यस्मिंश्च ऋतौ अन्यावस्था बलित्वस्निग्धभोजित्वविपर्ययः । अन्य ग्रीष्मादित्रयम् । एवशब्देन मंदत्वविपर्यये अर्धशक्तेर्न वेद्यः, अर्द्धशक्तिविषये तु मंदत्वप्रवेशोऽस्तीति द्योत अर्द्धशक्तिलक्षणं सुश्रुतेनोक्तं-" हृदिस्थानस्थितो व यदा वक्त्रं प्रपद्यते । व्यायामं कुर्वतो जंतोस्तद्बलाध लक्षणम् " इति ॥ १४ ॥ १५ ॥

**तं कृत्वाऽनुसुखं देहं मर्दयेच्च समंततः ॥ १६**

**स०**-तं व्यायामं कृत्वा अनुसुखं यथा शरीरे ब न स्यात्तथा देहं मर्दयेत् । समंततः परितः ॥ १६

**प०**-तं च व्यायामं कृत्वा निर्वर्त्य यथासुखं मर्दयेत् । समंततः सर्वमापादतलमस्तकं, पः पीडयेत् ॥ १६ ॥

हे०-मर्दनं विधत्ते-अनुसुखं सुखानतिक्रमेण समं सर्वांगेष्विति अतिव्यायामदोषकथनात्पूर्वं मर्दनवि मर्दनस्य व्यायामांगत्वख्यापनार्थम् अंगत्वं चोक्तमेव कृत्वेति वचनात् । अत एवोक्तं-सुश्रुतव्याख्यायां जज्ज मर्दनमपि व्यायामांतः पात्येवेति तच्च विशेषात्पद्भ्या उक्तं हि सुश्रुते-" व्यायामस्विन्नगात्रस्य पद्भ्यामुद्व तस्य च ॥ व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव इति ॥ १६ ॥

**तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लम अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ।**

**स०**-अतिव्यायामतस्तृष्णादयो भवंति।तृष्णेति पृ पदम् । तेन तृष्णादीनां पदानामकृतसमासानां निर्दे दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतर सर्वेषां चातिव्यायामव्यापत्त्वद्योतनार्थः ॥ १७ ॥

**प०**-यथोक्तप्रमाणातिक्रमात् अतिव्यायामादा वितात् तृष्णादिर्जायते ।तृष्णा-पिपासा।क्षयो-रा यक्ष्मा । प्रतमकः-तमःप्रवेशः श्वासो वा । तथा र पित्तं-शोणितपित्तम् । श्रमः-खेदः । क्लमो-ग्लानि ज्वरः छर्दिश्च वातोत्थौ ॥ १८ ॥

हे०-व्यायामप्रमाणातिक्रमे दोषमाह-क्षयो-राजयक्ष्म प्रतमकः-श्वासभेदः,श्रमः-कर्मेन्द्रियाणां स्वव्यापाराक्षम क्लमोऽबुद्धींद्रियाणाम् ॥ १७ ॥

अतिव्यायामप्रसंगेनातिजागरादीनामपि व्यापदो दर्शयति—

**व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम् ।
गजं सिंह इवाकर्षन् भजन्नतिविनश्यति॥१८॥**

स०—व्यायामादीनां भाष्यांतानां द्वंद्वः।तान्यादिर्यस्य साहसस्य धनुराकर्षणादेस्तदेवम् । अयथाबलमारंभः साहसं तद्भजन्सेवमानो विनश्यति । क इव । सिंह इव गजमतिमहावर्ष्माणमाकर्षन्नाक्रामन्यथा विनश्यति तथाऽयथाबलमारंभेण व्यायामादिना नरो मार्यत इति १८॥

प०—प्रसङ्गेनाह–प्रतिषेधमन्यत्रापि–व्यायामादीनां साहसमतिसेवां भजन् पुरुषो विनश्यति। यथा सिंहो विक्रमवानिति स्वल्पबलो महाबलं दन्तिनमाकर्षन् स्वयमेव त्रुटयति । यद्यपि सिंहो धैर्यवांस्तथापि किं गजं स्थानात् स्थानान्तरं नेतुं शक्तः संगमाकर्षन्नेव प्राणांस्त्यजेत् । एवं ननु धनुराकर्षणादिकं साहसं भजन् विनश्यति । जागरमस्वप्नः । अध्वा पन्थाः । स्त्रीसेवा । हास्यं भाषणमेवमादिव्यायामादनन्तरं कषायद्रव्यैरुद्वर्तनं कार्यम् ॥ १८ ॥

हे०—व्यायामप्रसंगाज्जागरादीनां यथोक्तप्रमाणातिक्रमे दोषमाह—गजमाकर्षन् सिंह इव यतः साहसतः अयथाबलमारंभः—साहसं, नहि व्यायामाद्यतिभजनपर्याप्तं पुंसां बलमस्ति। अध्वस्त्रीशब्दाभ्यां गमनसंभोगौ लक्ष्येते, आदिशब्देन धनुराकर्षणादि ॥ १८ ॥

**उद्वर्तनं कफहरं मेदसः प्रविलापनम् ॥
स्थिरीकरणमंगानां त्वक्प्रसादकरं परम् ॥१९॥**

स०—उद्वर्तनस्य कफहरादयश्चत्वारो गुणाः॥१९॥

प०—अतस्तद्गुणानाह–भवतीति वाक्यशेषः। उद्वर्तनं–कफहरं कफघ्नं, मेदसो–धातोः, प्रविलापनं–विलीनविग्रहकारि । तस्यापकर्षकम् । अङ्गानां–शिरः–पाण्यादीनां स्थिरीकरणं दार्ढ्यावहम्। तथा परमत्यर्थं त्वक्प्रसादकरम् । त्वचः प्रसादं नैर्मल्यं करोति । कृते चोद्वर्तने स्नानं विधेयम् ॥ १९ ॥

हे०—इष्टसाधनकथनद्वारोद्वर्तनं विधत्ते—उद्वर्तनं कफहरणादिगुणम्। अतः कुर्यादित्यर्थसिद्धम्। प्रविला (प) यनं द्रवीकरणं, द्रवीकृत्य मेदसः शोषणमित्यर्थः। उद्वर्तनं कषायादिचूर्णैर्गात्रोद्धर्षणम् ॥ १९ ॥

**दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ॥
कंडूमलश्रमस्वेदतंद्रातृड्दाहपाप्मजित् ॥ २०॥**

स०—स्नानं दीपनं वृष्यमायुष्यं च भवति । ऊर्जा उत्साहः । बलं प्राणनम् । एते प्रददाति करोति यत्तदेवम् । कंड्वित्यादि । कंड्वादीनां द्वंद्वः । एतान् जयति स्नानस्य प्रभावादायुष्यत्ववृष्यत्वदीपनत्वानि बोद्धव्यानि। अथवा स्नानेन प्रहर्षो भवति । हर्षणत्वाच्च वृष्यत्वम् । तथा च वक्ष्यति—"यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् । मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते॥" इति । यथा स्नानं जाठराग्नेर्बहिर्निर्गतानि रोमकूपाश्रितान्यर्चींषि रुद्ध्वाऽन्तर्नयति ततश्चाग्नेः प्रबलत्वं कुर्वद् दीपनं संपद्यते । यथा शीतकाले शीतानिलस्पर्शसंरुद्धस्य जाठराग्नेः प्रबलत्वम् । बालादित्यस्तु व्याचक्षिष्ट । स्नानेन आजकाल्यं त्वगाश्रितं पित्तमंतःप्रविशदूष्माणं संवर्धयति तेन तद्दीपनम् । अत एव परिषेके जलमुष्णमिष्यते । यस्माच्छीतं निर्वापयति तेजो न देहस्यांतः प्रवेशयति । शीतकाले यच्छीतानिलस्पर्शसंरुद्धस्याग्नेः प्रबलत्वं तत्काल एव तस्मिन् कालस्वाभाव्यादिति बोद्धव्यम् । तथा चान्यर्तौ शीते सति मंदाग्नित्वमेव दृश्यते । यथा वर्षास्वग्निमांद्यादेवांतर्बहिर्वह्निसंधुक्षणं भोजनं समुपदिष्टम् । तथा च मुनिः—'व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि ।' विशेषशीत इत्यादि ॥ २० ॥

प०—तदर्थमाह-स्नानं दीपनादिगुणयुक्तम्, कण्ड्वादिघ्नं,दीपनं स्नानमित्यभेदं वस्तुतत्त्वम्।जाठराग्निमर्चींषि वर्चोरूपाणि रोमकूपेभ्यो निर्गच्छन्तीति तानि शीतस्पर्शस्वभावं रोमकूपानपिधायान्तर्नीत्वा जाठराग्निमुत्तेजयति । यथा हेमन्ते शीतानिलस्पर्शसंरुद्धकायाग्निर्वहिर्निगमाद्विवृद्धः संपद्यते । वृष्यं–शुक्रवृद्धिकारि । आयुष्यमायुषे हितम् । ऊर्जस्तेजः कान्तिमत्वम् । बलं–सामर्थ्यं, तद्ददाति। कण्ड्वादिजिच्च । तन्द्रा–सुप्तस्येव सुप्तता । तथा चागमः॥ " निद्रार्तस्य विषयग्रहणं तन्द्रा ।" पाप्मा-पापम्–तानि जयति ॥ २० ॥

हे०—इष्टसाधनकथनद्वारा स्नानं विधत्ते-स्नानं-दीपनत्वादिगुणम् अतः कुर्यादित्यर्थसिद्धं,दीपनं प्रभावात् । केचिदत्र युक्तिमाहुः—"बाह्योऽगसेकैः शीताद्यैरुष्मान्तर्यामपीडितः । नरस्य स्नानमात्रस्य दीप्यते तेन पावकः ॥ " इति । वृष्यं वृषाय स्त्रीप्रसंगिने हितं शुक्रवर्धनमित्यर्थः । ऊर्जोत्साहः, मलस्त्वगुपलेपः, मनःकर्मेंद्रियव्यापारे सति बुद्धींद्रियोपरमस्तंद्रा । दह्यमानवत् दुःखं दाहः,पाप्मा-पापम्॥२०॥

**उष्णांबुनाऽधःकायस्य परिषेको बलावहः ॥**
**तेनैव चोत्तमांगस्य बलहृत्केशचक्षुषाम् ॥२१॥**

स०—उष्णांबुनाऽधःकायस्य परिषेको बलावहः प्राणकृत् । तेनैवोष्णोदकेनैवोत्तमांगस्य शिरसः परिषेको विधीयमानः केशचक्षुषां बलहृत् । प्राण्यंगानां समाहार एव द्वंद्व इत्यस्य प्रायिकत्वात्केशचक्षुषामित्युपपन्नमेव ॥ २१ ॥

प०—कायस्याधोऽधरविभागे यः उष्णाम्बुना परिषेकः,स बलावहो बलप्रापकः,प्रकृतत्वात्तस्यैवाधः-कायस्य तेनैवोष्णाम्बुना परिषेकः स्नानमुत्तमाङ्गस्य—शिरसः, केशचक्षुषां बलहृत् । केशाश्चक्षुषी च तेषां बलमपहरति ॥ २१ ॥

हे०—उष्णशीतभेदभिन्नस्य स्नानस्य विषयमाह-उष्णाम्बुना यः परिषेकः सोऽधःकायस्य बलावहः सएवोत्तमांगस्योर्ध्वकायस्य केशचक्षुषां बलहृत्, तस्मात्केशचक्षुर्बलार्थिभिः शीतेन वारिणा स्नातव्यमितरैरुष्णेनेत्यर्थसिद्धं नत्वेकस्मिन् स्थाने शीतोष्णयोः प्रयोगः क्रियासंकरे दोषापत्तेः । संग्रहे तु—" नाऽनाप्लुत्य शिरः स्नायात् न जलेऽल्पे न शीतले । " इति ॥ २१ ॥

स्नानं येषामपथ्यं तान् दर्शयितुमाह—

**स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥**
**आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् २२॥**

स०—नेत्रे चास्यं च कर्णौ च तत्र रोगाः । अर्दितं च नेत्रास्यकर्णरोगाश्चातिसारश्च ते विद्यंते येषां त एवम् । तेषु गर्हितमहितम् । एवं शेषेषु योज्यम् । अर्दितादीनां द्वंद्वस्ततो मतुप् । तेनार्दितादिमत्सु गर्हितमिति योज्यम् । एवं शेषेष्वपि ॥ २२ ॥

प०—अर्दितादिवातानां स्नानं गर्हितं निन्द्यम् । अर्दितो-वातव्याधिर्वक्ष्यमाणलक्षणः । नेत्ररोगश्चक्षुष्पीडा । आस्यरोगः आसिकाया आस्यम् । अतिश्लेष्मावृतत्वात् कर्मण्य आसिका । कर्णरोगः श्रवणपीडा । अतिसार प्रतिहतपुरीषव्याधिः । आध्मानं वायुना जठर पीनसो नासास्रावः । अजीर्णमामविष्टब्ध भेदेन त्रिविधम् । भुक्तवान्-कृताहारः । गर्हितं निन्दितमसेव्यमित्यर्थः ॥ २२ ॥

हे०—अर्दितादौ स्नानं निषेधति-अर्दित—ए आध्मानमुदरापूरणं, भुक्तवान्—कृतभोजनः, निषिद्धम् ॥ २२ ॥

**जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्ब**
**न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यम**

स०—जीर्णे सम्यक्परिणते पूर्वं आहारे अद्या किमद्यात् । हितं पथ्यम् । मितं मात्रया युक्तम् । ह्यतिमात्रं वा भुक्तं दोषाय स्यादतो मितम् । दित्यादि । वातविण्मूत्रादीनां संबंधिनो वेगा भूतानपि बलान्नेरयेन्न प्रवर्तयेत् । न वेगित संजातवातविण्मूत्रवेगस्तमकृत्वा नान्यकार्यः नान्यत्कार्यं कुर्यादित्यर्थः । नाजित्वेत्यादि । शक्यः साध्यस्तं रोगमजित्वा नान्यकार्यः योज्यम् । स ह्युपेक्षितो दुःसाध्यो साध्यो वा साध्यशब्दोपादानादसाध्यामयप्रतिपन्नो न ना श्चिकित्सानैष्फल्यादिति द्योतयति ॥ २३ ॥

प०—कृते स्नाने भोजनं भोक्तव्यमित्यत अ सम्यक्परिपाके ह्यस्तनेऽन्ने, हितं पथ्यं,मितं म तद्भोजनमद्यात्—भक्षयेत् । वेगान्—वात दीन्, बलात्प्रयत्नात् नोदीरयेत्-न प्रे वेगितः सन् जातवेगः प्रत्युपस्थितवा दिः सन् नान्यकार्यः स्यात् नान्यानि का भेत । यस्माद्वेगविधारणेन व्याधयो जा साध्यं-साधलक्षणयुक्तमामयं, नाजित्वा-तस्य त्सामकृत्वा, नान्यकार्यकृत् स्यात् । यस्मा व्याधिरुपेक्षितोऽसाध्यतां याति । वचनं चा साध्यः साध्यतां याति साध्यो याति त्वसाध मिथ्योपचाराद्देवाद्वा यात्यवस्थान्तरं गदः" ॥

भोजनं विधत्ते-ह्यस्तने जीर्णेऽन्नेसत्यद्याद्भुञ्जीत । देशकालाद्युचितं, मितं—यथोक्तमात्रं, ननु विहारे

स्योक्तिरप्रस्तुता मैवं, क्रियाप्राधान्याद्विहारत्वमाहारस्य । क्रियाप्रधानो हि विहारः, द्रव्यप्रधान आहारः, अयमेव विहाराहारयोर्भेदः क्रियाद्रव्ययोरुभयत्र भावात् । संग्रहे तु—"अन्नपानविधानेन भुञ्जीतान्नं विनाऽत्ययात् । अभिनन्द्य प्रसन्नात्मा हुत्वा दत्त्वा च शक्तितः ॥ पक्कं सजलमेकांते यथासुखमिति ब्रुवन्। प्रयच्छेत्सर्वमुद्दिश्य पाचयेन्नान्नमात्मने। नान्नमद्यान्मुमूर्षूणां मृतानां दुःखजीविनाम् । स्त्रीजितक्लीबपतितक्रूरदुष्कर्मकारिणाम् ॥ गणारिगणिकासत्रधूर्तानां पणिनां न च । नोत्संगे भक्षयेद्भक्ष्यान् जलं नांजलिना पिबेत् ॥ सर्वं च तिलसंबंधं नाद्यादस्तमिते रवौ ॥ न भुक्तमात्र आयस्येन्न निषिद्धं भजेत्सुखम् ॥ " इति । एवं प्रबोधादयो भोजनांता बद्धक्रमा विहारा उक्ताः । तांश्चावश्यकर्तव्यान्मन्यमानेषु नरेषु वेगोदीरणवेगधारण—व्याध्युपेक्षाः संभाव्येरन् अतस्तत्प्रतिषेधं करोति । तत्र वेगोदीरणं निषेधति—वेगाः वातविण्मूत्रादयः, किं प्रवर्तमानानपि न प्रवर्तयेत् नेत्याह—बलादप्रवृत्तान्न प्रवर्तयेदित्यर्थः । वेगधारणं निषेधति—वेगितः— संजातवेगः सन्नन्यकार्यो न स्याद्वेगानेवोत्सृजेदित्यर्थः । व्याध्युपेक्षां निषेधति— आमयमजित्वाऽन्यकार्यो न स्यात्, आमयमेव जयेदित्यर्थः । किं सर्वमित्यत आह-साध्यम् । असाध्यस्तु प्रयत्नवैयर्थ्यादुपेक्ष्य एव इति बद्धक्रमविहारव्याख्या ॥ २३ ॥

**सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।**
**सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् २४**

**स०**—सर्वभूतानामशेषप्राणिनां यस्मात्सुखार्थाः प्रवृत्तयः कर्माणि । मता अभिप्रेताः सुखं च शर्मारोग्यं धर्माद्विना न भवति तस्मात्कारणाद्धर्मपरो धर्मप्रधानः स्यात् । धर्मादिति पृथग्विनेति पंचमी ॥ २४ ॥

**प०**—सर्वभूतानां-सर्वप्राणिनां, सर्वाः प्रवृत्तयः-सर्वाः क्रियाः, सुखार्थाः-सुखनिमित्ता, मता-अभिप्रेताः । सुखं-दुःखाभावः । धर्माद्विना-धर्मादन्यत्र धर्मं वर्जयित्वा, सुखं नोत्पद्यते । तस्माद्धेतोर्धर्मप्रधानो धर्मपरः स्यात् । तेनैतदुक्तं भवति । या या क्रिया क्रियते कायादिभिः सा सा धर्ममूला कार्येति ॥ २४ ॥

अथाबद्धक्रमान् विहारान् व्याचष्टे—ते च प्रायेण धर्मरूपाः। तत्र धर्मस्यायुर्वेदाङ्गत्वेन हेतुमाह-सुखार्था इति।सुखमारोग्यम्।उक्तं हि चरके-"सुखसंज्ञकमारोग्यं विकारो दुःखमेव च " इति । यद्यपि षोडशात्मकाच्चिकित्सनादारोग्यं तथापि धर्मसहकृतादेवेति धर्मस्यायुर्वेदाङ्गत्वम् ॥ २४ ॥

**भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ॥२५॥**

**स०**- कल्याणे शुभकर्मणि मित्राणि सहाया उपदेशादिना कल्याणमित्राणि तानि भक्त्या अदंभमतिः सन् भजेत् । इतराणि कल्याणमित्रापेक्षयेतराणि पापमित्राणि तेभ्यो दूरगस्तद्वर्जनपरः । सत्संगो हि दृष्टादृष्टानर्थकरः । दूरग इत्यस्माद् दूरे स्थितः ॥ २५ ॥

**प०**—कल्याणमित्राणि-श्रेयःसुहृदो, भक्त्या वाक्कायमनोभिः प्रह्वतया-प्रयत्नेन, सेवेत । इतरदूरगः सन् इतराणि—कल्याणमित्रापेक्षया पापकर्तॄणि, तेषु दूरगः । दूरे तिष्ठन् वर्ज्यास्ते इत्यर्थः । कल्याणमित्राणि यानि ज्ञानादिकमुपदिशन्ति लोकद्वयहितैषीणि वृद्धगुरुब्राह्मणादीनि ॥ २५ ॥

**हे०**—सन्मित्रसेवां विधत्ते—कल्याणानि कल्याणहेतुत्वात्, इतराण्यकल्याणानि तेभ्यो दूरगः, सन्मित्राणि कल्याणानि मित्राणि, सेवेत। कया भक्त्या।यद्यपि भक्तिः सेवैव तथापि फलानुसंधाननिवृत्त्यर्थमेव सुक्तम् एवं हि कृतं कर्म महाफलं भवति। अतएव वक्ष्यमाणान्यपि कर्माणि अवश्यकर्तव्यबुद्ध्या कर्तव्यानि न तु फलानुसंधानेन ॥२५ ॥

**हिंसा स्तेयान्यथाकामं पैशुन्यं परुषानृते ।**
**संभिन्नालापव्यापादमभिध्यादृग्विपर्ययम् ॥**
**पाप कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् २६॥**

**स०**--हिंसा प्राण्युपघातः। स्तेयं चौर्यम्। अन्यथाकामो निषिद्धकामसेवा पशुस्त्रीगमनादि । एतत्त्रिविधं कायिकं पापं कर्म । पैशुन्यं परेषां भेदकृद्वचनम् । परुषममृदुवचनम् । अनृतमसत्यवचनम् । संभिन्नालापोऽसंबद्धप्रलपनम् । चतुर्विधमेतद्वाचिकम् । व्यापादः प्राण्युपघातचिंता । अभिध्या परगुणाद्यसहिष्णुता । दृग्विपर्ययं शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वादित्रिविधमेत-

१ तत्रालौकिकत्वाद्दृष्टार्थत्वादप्रवृत्तानां यज्ञादीनां शास्त्रात्प्रवर्तनं, लौकिकत्वाददृष्टार्थत्वाच्च प्रवृत्तेभ्यश्च मांसभक्षणादिभ्यः शास्त्रादेव निवारणं धर्मः । अथवा यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । धर्मः पुरुषगुणः कर्तुः प्रियहितकरो मोक्षहेतुः, अतीन्द्रियोऽन्त्यसुखसंविज्ञानवरोधी, पुरुषान्तःकरणसंयोगविशुद्धाभिसंधिजो वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः ।

न्मानसम् । तदेतद्धिंसादि दशधा पापं कर्म कायवाङ्मानसैस्त्यजेन्न कुर्यादित्यर्थः ॥ २६ ॥

प०--इत्येवं दशधा पापकर्म कायवाङ्मनोभिस्त्यजेत्।तत्र हिंसा-प्राण्युपघातो मारणम्। स्तेयं परद्रव्यापहारश्चौर्यम् । अन्यथाकामोऽगम्यागमनं, परस्त्रीगमनमेवं कायिकं त्रिविधम्। पैशुन्यं परदोषसूचनम्। परुषं-तीक्ष्णवचनम् , परमर्मस्पर्शनं वा । अनृतमसत्यवचनम् । संभिन्नालापं परेषां भेदजननम् । विपरीतभाषणमसंबद्धप्रलापः।एवं वाचिकं चतुर्धा । व्यापादः-सत्त्वावद्वेषः । अभिध्या अन्यायेन परद्रव्ये स्पृहा । दृष्टिविपर्यया मिथ्यादृष्टिः । शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वम् । नास्ति दत्तं नास्ति हुतं, नास्ति इह लोके नास्ति परलोके एवं दृग्विपर्ययः । एवं मानसं त्रिविधमिति ॥ २६ ॥

हे०-पापं निषेधति-तद्दशाविधम्। तत्र हिंसा-प्राणिवधः, स्तेयं चौर्यम्, अन्यथाकामोऽगम्यागमनं, पैशुन्य--परस्य प्रत्यक्षं तद्दोषकीर्तनं, प्रत्यक्षं तु परुषम्, अनृतमसत्यम्, संभिन्नालापोऽसत्प्रलापः, व्यापादः-परानिष्टचिंता, अभिध्या-परस्वापहरणेच्छा , दृग्विपर्ययः--आप्तवाक्येष्वप्रामाण्यबुद्धिः, दृक्शब्देनात्र दृष्टोऽर्थ उच्यते ॥ २६ ॥

**अवृत्तिव्याधिशोकार्ताननुवर्तेत शक्तितः॥२७॥**

स०--न विद्यते वृत्तिर्येषां तानवृत्तीन् । शक्त्या यथासामर्थ्यमनुकूलं गच्छेत् । तथा व्याधिना शोकेन चार्तांश्च ॥ २७ ॥

प०--अवृत्तिकान्-वर्तनोपायरहितान् । व्याधिभिरार्तान् पीडितान् शोकिताननुवर्तेत । दानचिकित्साशोकापनोदनैः प्रतिकुर्वीत । शक्तितः यथाशक्ति ॥ २७ ॥

हे०-आर्तानुवृत्तिं विधत्ते-अवृत्तिः-जीवनोपायाभावः,शोक इष्टवियोगजं दुःखम्,अनुवर्तेतार्तिनिवारणे प्रयतेत ॥२७॥

**आत्मवत्सततं पश्येदपि कीटपिपीलिकम् २८॥**

स०--कीटान् पिपीलिकांश्चात्मवत्पश्येत्।स्वशरीरतुल्यानित्यर्थः।किमु सतोऽसाधूंर्वा । कीटपिपीलिकमप्यात्मवत्पश्येदित्यपिशब्दस्यार्थः । कीटपिपीलिकमिति क्षुद्रजंतव इत्येकत्वम् ॥ २८ ॥

प०--कीटाःवृश्चिकादयः कृमयः।पिपीलिकाः-सूक्ष्मप्राणिनः । एवमपि क्षुद्रजन्तूनात्मवत् आत्मना तुल्यं सततं नित्यकालं पश्येत् ईक्षेत । यथात्मनि सुखदुःखादीनि जीवितप्रियत्वं च तथा ऽन्येषां सुखदुःखजीवितप्रियत्वादीनि । एवं तेषु हिंसादिकं न कार्यमिति ॥ २८ ॥

हे०--भूतदयां विधत्ते--कीटपिपीलिकमप्यात्मवत्पश्येत् किं पुनर्ब्राह्मणादिकम् "आत्मनः प्रतिकूलानि परेषां न समचारेत्" इति ॥ २८ ॥

**अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ॥ २९ ॥**

स०--देवादीनां द्वंद्वः । देवादीनर्चयेत् । वृद्धा ज्ञानवृद्धाः शीलतपोवृद्धाश्च । नृपो राजा । अतिथिरसमानग्रामी वैश्वदेवांते समुपस्थितः ॥ २९ ॥

प०--देवादीनर्चयेत्-पूजयेत् । विप्रा-ब्राह्मणाः । वृद्धाः-ज्ञानशीलतपोब्रह्मचर्यव्रतादिषु सक्ताः । नृपा भूपालाः । अतिथय--आगन्तुका अभ्यागता इति ॥ २९ ॥

हे०--पूज्यपूजां विधत्ते--पूज्या देवादयः वृद्धश्रुतादिभिरात्मनोऽधिकः ॥ २९ ॥

**विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत्३०**

स०--अर्थिनो याचकान्प्रत्याख्यानेन विमुखान्न कुर्यात् । नावमन्येत नावमानयेन्न च परुषवचनादिना क्षिपेत् परिभवेत् ॥ ३० ॥

प०--अर्थिनो-मनुष्यान् विमुखान्-हतेप्सान् प्रत्याख्यानावज्ञानजननपरुषवचनैर्न कुर्यात्। अवमानम-पूजा । तिरस्कार-आक्षेपः । किं भवद्भिः पठितं श्रुतं विज्ञातं वा वितण्डारूपो नो क्षेपणमिति ॥ ३० ॥

हे०--याचकद्वेषं निषेधति सा द्विधा विमुखीकरणमवज्ञापरुषभाषणं चेति ॥ ३० ॥

**उपकारप्रधानः स्यादपकारपरेऽप्यरौ ॥ ३१ ॥**

स०--अरौ शत्रावपकारपरेऽपि सत्युपकारप्रधानः स्यात् । ननु रिपुरपकारक एव तत्किमपकारपर इति विशेषणेन । तथा च माघः । उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा । उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः । नहि सर्वदैवारिरपकारं कर्तुं शक्यः स्यात् किं तर्हि कदाचिदेव । हेत्वधीनत्वादपकारकारित्वस्य । वाता दिदोषवत् । यथा वातादयो दोषा दूषणस्वभावा अपि

संतः कदाचिद्विकारकत्वे समर्था भवंति कदाचिन्नैव। दोषत्वं सर्वदैव तेषाम् । तस्मादपकारपर इति युक्तं विशेषणम्। अपकारिण्युपकारकृत्स्यात् किं पुनरुपकारक इत्यपिशब्दार्थः ॥ ३१ ॥

प०—अरौ शत्रावपकारकरेऽप्ययुक्तकारिण्युपकारप्रधानस्तत्पर एव स्यात्। अरेर्यदरित्वं तत्सर्वदैवास्य मनसि वर्तते किन्त्वपकारकारित्वं कदाचित्कं, तस्यापकारं तस्यापकारकारित्वं न सर्वदेति। एवमपकारकरेऽपि शत्रौ उपकारप्रधानेन भवितव्यं, किं पुनस्तमपकारमकुर्वति। अपकारशब्दो विशेषणार्थो बोद्धव्यः ॥ ३१ ॥

हे०--परोपकारं विधत्ते--किंपुनरपकारपरे मित्रादौ अपकारासमर्थोऽप्यरिरस्तीति न पौनरुक्त्यम् ॥ ३१ ॥

**संपद्विपत्स्वेकमना हेतावीर्ष्येत्फले न तु ॥३२॥**

स०—संपत्सु विपत्सु चैकमनाः समचित्तः। संपत्सु विषक्तेन विपत्सु विषादादिना न भाव्यमित्यर्थः। हेताविल्यादि। हेतौ कारणे ईर्ष्येत्। यथा। अयमेवं श्रुतत्यागादिगुणवान् कस्मादहमप्येवं न भवेयम्। फले नतु परकीये शोभने फले वस्त्रालंकारादिके नेर्ष्येत् ३२

प०--संपदः समृद्धयः, विपदस्तासामेव विघटनं, तास्वेकमना आत्मनैव समचित्तः स्यान्न संपत्सूत्सिक्तो न विपत्सु विषादी। हेतावीर्ष्येत्—संपत्करे वस्तुनि ईर्ष्यां कुर्यात्, न फले परसमृद्धिसद्वृत्तश्रुतत्यागादिके परस्य गुणैर्जाते तन्निमित्त एव ईर्ष्येत नतु तत्प्राप्तौ। अयमेव गुणवान् तुल्येऽपि पुरुषत्वेऽहमप्येवं गुणविभूषितो न कथं भवेयमित्येवं हेतौ यत्नः कार्यो, येनापूर्वं श्रुतादिकमुपजायेतेति ॥ ३२ ॥

हे०--निर्विकारत्वं विधत्ते-हर्षहेतुषु संपत्सु विषादहेतुषु विपत्स्वेकमना हर्षविषादरहितचित्तो भवेत्। ईर्ष्यां निषेधति--परोत्कर्षासहनमीर्ष्या तां न कुर्यात्। यो हि बुद्धिमान् स हेतावीर्ष्येन्न फले। एतदुक्तं भवति एकं फलमुद्दिश्य, तत्साधनमनुतिष्ठद्भिः परस्परेर्ष्ययाऽनुष्ठेयं तथाह्यनुष्ठितं सम्यगाशु निष्पद्यते। अथ दैवानुकूल्यादेकस्य फले सिद्धे तत्रेतरैरीर्ष्या न कर्त्तव्या,सा हि न फलस्य साधनं, प्रत्युत पापपरितापयोरिति ॥ ३२ ॥

**काले हितं मितं ब्रूयादविसंवादि पेशलम् ३३॥**

स०—काले प्रस्तावे। हितं पथ्यम्। मितं न बहु अविसंवादि सत्यम्। पेशलं मनोज्ञं ब्रूयात् ॥ ३३ ॥

प०—वचो ब्रूयाद्वदेत्, काले योग्ये प्रस्तावे हितं धर्म्यमत्यर्थं प्रियं, पथ्यम्। मितं स्वल्पं,परिमितमविसंवादि--तथ्यं, सत्यरूपम्। पेशलं श्रुतिसुखं, स्निग्धभाषितं मनोज्ञम्। रम्यमिति यावत् ॥ ३३ ॥

हे०—भाषणं विधत्ते-काले प्रस्तावे ब्रूयात्। तच्च हितं—पथ्यं, मितं--विवक्षितार्थप्रकाशनमात्रम्, अविसंवादि-सत्यं, पेशलं—मधुरम् ॥ ३३ ॥

**पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः। नैकः सुखी न सर्वत्र विश्रब्धो न च शंकितः३४**

स०—पूर्वाभिभाषी पूर्वालापी स्यात्। सुमुखो गतभ्रुकुटिः। सुशीलः शोभनस्वभावः। तथा करुणया मृदुरार्द्रसंतानो मातेव पुत्रे। एकोऽद्वितीयः सन्सुखी न स्यात्। तथा च भगवान् व्यासः। मायाचारे मायया वर्तितव्यमिति। तथा सर्वत्र मित्रस्वजनादिष्वपि शंकितोऽविश्वस्तो न स्यात्तेषां वैमुख्यदोषप्रसंगभयात् ॥ ३४ ॥

प०--करुणया मृदुः करुणामृदुः। पूर्वाभिभाषी-प्रथमतरालापी। सुमुखः—शोभनवदनः, विगतभ्रुकुटिः। सुशीलः—शोभनस्वभावः, अपरुषचेष्टः, दयालुः, शुद्धसंतानः, आर्द्रचित्त इति। पुमान्नैकः सुखी स्यात्, किं तर्हि ब्राह्मणज्ञातिमित्रभृत्यादिभिः सह साधारणविभवेन भाव्यम्। न सर्वत्र- न सर्वविषये, विश्रब्धो-विश्वासी स्यात्। नापि सर्वत्र विश्वसेत्। तेषु स्वजनमित्रभृत्यादिषु शङ्कितः साशङ्कः स्यात् ॥ ३४ ॥

हे०—पूर्वाभिभाषित्वादिकं विधत्ते-पूर्वाभिभाषी यदृच्छासङ्गते सुहृदि तद्वचनात्पूर्वं कुशलप्रश्नादिकारी भवेत् तथा सुमुखः प्रसन्नवदनः,सुशीलः—शिष्टानुमतव्यवहारः,करुणामृदुः—सत्येऽपि सामर्थ्ये कृपालुत्वात्परापकारसहिष्णुः। एकसुखित्वादिकं निषेधति-एकः सुखी न भवेत्। ज्ञातिभृत्यादिभ्यो यथायथमविभज्य सुखसाधनं नोपभुञ्जीत तथा सर्वत्र न विश्रब्धो नच शंकितो भवेत्। अविश्वसनीयेषु विश्वासमशंकनीयेषु च शंकां न कुर्यात् ॥ ३४ ॥

शत्रूणां च निषेधनम् । अवष्टंभनमायुष्यं भयघ्नं दंडधारणमिति । मौली शिरोवेष्टनयुक्तः । अनेनोपरि पततां पतंगकीटादिमूत्रपुरीषादीनां रक्षा । तथा सहायवान् । अनेनापि चित्तावष्टंभः । दंडशब्दादत इनिठनाविती निः । मौलिशब्दाच्च व्रीह्यादित्वात्तस्य ह्याकृतिगणत्वमिति केचित् । आत्ययिक इति । अत्ययः कृच्छ्रं तस्मिन् भवमित्यध्यात्मादित्वाठ्ञ् ॥ ४३ ॥

प०—निशि रात्रौ न विचरेत्। आत्ययिके तु प्रयोजनवशतो रात्रिविचरणसाध्ये कार्ये दण्डी, मौली, सहायवान् विचरेत्। अर्थबलायुक्तमनात्ययिके नैव विचरेन्निशीति। दण्डोऽस्यास्तीति दण्डी। दण्डशब्दो दण्डः—सर्पादीनां तु त्रासनार्थं, स्खलितप्रतिष्ठानार्थं, शत्रुनिवारणार्थम्। मौली—वेष्टितशिराः। शिरसि प्रावृतमुपरिष्टात्पततां लूतापतङ्गकीटादीनामारक्षणार्थम्। सहायवान्—चौरयक्षरक्षःपिशाचादिप्रतिभयनिषेधार्थम् ॥ ४३ ॥

हे०—रात्रिपर्यटनं नियच्छति-यत्कार्यं कालप्रतीक्षां न सहते तदाऽत्ययिकं, तस्मिन्साति दण्डादियुक्तः सन् रात्रौ विचरेत्। मौलिः शिरोवेष्टनम् ॥ ४३ ॥

**चैत्यपूज्यध्वजाशस्तच्छाया भस्मतुषाशुचीन् ।**
**नाक्रामेच्छर्करालोष्टबलिस्नानभुवोऽपि च ४४॥**

स०-चैत्यस्तु विशिष्टदेवताधिष्ठितो लोकप्रसिद्धो वृक्षविशेषः। बुद्धालय इत्यन्ये। पूज्यो गुरुपुत्रादिः। ध्वजश्चिह्नम्। अशस्ताश्चण्डालादयः। एषां छायाः। तथा भस्म भूतिः। तुषो धान्यादित्वक्। अशुचिर्विट्। यद्वा उच्छिष्टं वस्तु। तदेतन्नाक्रामेत्। शर्कराः सूक्ष्मपाषाणाकृतिर्मृत्खंडिका। तथा लोष्टं मृत्पिंडादिखंडः। बलिर्देवताद्यर्चनम्। स्नानं प्रसिद्धम्। बलिश्च स्नानं च बलिस्नाने तयोर्भुवौ बलिस्नानभुवौ। शर्करा लोष्टं च बलिस्नानभुवौ च ता नाक्रामेत् ॥ ४४ ॥

प०-चैत्यः विशिष्टदेवताधिष्ठितो वृक्षविशेषो लोकप्रसिद्धः। यः प्रसिद्धः पूज्यो—गुर्वादिः। ध्वजो—देवतागारमस्तके शूलचक्रादिसम्बद्धः पटेनोपलक्षितः। अशस्तममङ्गल्यवस्तु; एषां छायां नाक्रमेत् पादाभ्यां न लङ्घयेत्। भस्म—दग्धानां गोमयादीनां सम्बन्धि। तुषो—धान्यच्छदि। अशुचि—शकृन्मूत्रादि। शर्करा—शिलाचूर्णः। लोष्टं—मृन्मयं पाषाणतुल्यम्। बलिभूमिर्भूतादीनामुपहारस्थानम्। स्नानभूर्यत्र कश्चन स्नातः तत्सर्वं पादाभ्यां नाक्रमेत् परिहरेदिति ॥ ४४ ॥

हे०—चैत्यादिच्छायास्वाक्रमणं निषेधति—चैत्यो—गृहाधिष्ठितो वृक्षः, पूज्यो—देवादिः, ध्वजो—यूपादिः, अप्रशस्तश्चण्डालादिः तेषां छायां नाक्रमेत्। तथा भस्म भूतिं, तुषं—धान्यत्वक्त्रम्, अशुचि विण्मूत्रोच्छिष्टादि। शर्करादिव्याप्तान् भूप्रदेशान् शर्करा—वालुका, लोष्टं—मृत्पिण्डः, बलिः— पूजा, स्नानं स्नानोदकम् ॥ ४४ ॥

**नदीं तरेन्न बाहुभ्यां नाग्निस्कंधमभिव्रजेत् ।**
**संदिग्धनावं वृक्षं च नारोहेद्दुष्टयानवत् ॥४५॥**

स०—नदीं तरंगिणीं दोर्भ्यां न तरेत्। अग्निस्कंधमभि अग्निराशेरभिमुखं न व्रजेत्। सन्दिग्धा चासौ नौश्च तां नारोहेन्नोचलेत्। संदिग्धायाः शिथिलबंधनत्वाज्जर्जरत्वादतिभाराक्रांतत्वात्पारगमनं प्रति संदेहः। चेति समुच्चये। वृक्षं च नारोहेत्। कथम्। दुष्टयानवत्। यथा दुष्टयानमश्वादिकं नारोहेत् तथेति। दुष्टयानारोहणमपि चोक्त्यानया निषिद्धम्॥४५॥

प०-नदीं सरितं, बाहुभ्यां भुजाभ्यां, न तरेन्न लंघयेत्, मकरकर्मादिभिर्विघातभयात्। तथाऽग्निस्कंधमहान्तमग्निराशिं, नाभिव्रजेत्-न संमुखो गच्छेदिति। सन्दिग्धां नावं—शिथिलबन्धनां, जर्जरितां, पारगमनासमर्थाम्। तथा सन्दिग्धवृक्षं—विषादिनिर्दिष्टं, देवताधिष्ठितं वा भंगुरं वा नारोहेत्—तयोरुपरि न तिष्ठेत्। कथं दुष्टयानवत्। यथा—दुष्टे यानेऽश्वादिके, एवं भङ्ग्या तस्याप्यारोहणं निषिद्धं भवति ॥ ४५ ॥

हे०—बाहुभ्यां नदीतरणं निषेधति—नदीमिति। अग्निस्कन्धाभिमुखं गमनं निषेधति—अग्निस्कन्धो महाग्निराशिः। संदिग्धनावाद्यारोहणं निषेधति—संदिग्धा—शङ्क्यमानमज्जना। दुष्टं यानं शङ्क्यमानपतनमश्वादि तस्य दृष्टान्तत्वेनोपादानं तदारोहणस्य निषेधोपायत्वख्यापनार्थम् ॥ ४५ ॥

**नासंवृतमुखः कुर्यात्क्षुतिहास्यविजृंभणम्॥४६॥**

स०—नासंवृतास्यः क्षुत्यादीन्कुर्यात्। हस्तादिना मुखं

पिधाय कुर्यादित्यर्थः । क्षुतिश्छिक्का । हास्यं हसनम् । विजृम्भणं जृम्भिका । एषां समाहारद्वन्द्वः ॥ ४६ ॥

प०—असंवृतमुखो-नाच्छादितास्यो हतवस्त्रादिभिः, क्षुतिः—छिका, हास्यं--हसनं, विजृम्भणं--जृम्भां न कुर्यात् । आच्छाद्यास्यं पुनः जृम्भादिकं कार्यमित्युक्तं भवति ॥ ४६ ॥

हे०—अनाच्छादितमुखस्य क्षवथ्वादिकं निषेधति ४६॥

**नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम् ।**
**नाङ्गैश्चेष्टेत विगुणं नासीतोत्कटकश्चिरम्[१] ॥४७॥**

नासां न विकर्षेत् । मलोत्सारणमात्रं तु कार्यमेवेति विशब्देन द्योतयति । अकस्मात्कारणं विना भुवं पृथ्वीं न विलिखेन्नोत्कर्षेत् । अङ्गैर्हस्तपादादिभिर्विगुणमननुगुणं यथा भवति तथा न चेष्टेत न व्याप्रियेत । उत्कटकं स्थितमवस्थानं यस्य स एवंभूतो नासीत । चिरं न तिष्ठेदित्यर्थः । अर्शोरोगाद्युत्पत्तेः ॥ ४७ ॥

प०—नासिकां-घ्राणं, न विकुष्णीयात् न निष्कर्षेत् । अर्शोऽर्बुदादिभयात् । भुवं भूमिमकस्मात्कारणं विना न विलिखेत्-निर्घर्षयेत् । अकारणमङ्गुल्यादिभिर्लेखनं तस्या न कुर्यादित्यर्थः । अङ्गैर्हस्तपादादिभिर्विगुणमननुगुणं विस्पष्टं कृत्वा न चेष्टेत नेहेत, तेन करचरणविकारान् वर्जयेदित्युक्तं भवति । शूलाङ्गभङ्गादिभयात् । तथोत्कटकः स्थितः सन्नासीत । उत्कटकस्थानाच्चिरावस्थानेन गुदस्थाने अर्शआद्या उत्पद्यन्ते ॥ ४७ ॥

हे०—नासिकानिष्कर्षणं निषेधति-नासिकाच्छिद्रोपलक्षणम्। उक्तं हि सुश्रुते-"न बालकर्णनासास्रोतोदशनाक्षिविवराण्यभिनिष्कुष्णीयात्" इति निष्कारणं भूमिविलेखननं निषेधति—नाकस्मादिति विगुणामङ्गचेष्टां निषेधति—नाङ्गैरिति विगुणमनार्जवं, चिरकालमुत्कटासनं निषेधति—नासीतेति ॥ ४७ ॥

**देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत् ।**
**नोर्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमम् ॥४८॥**

स०—देहादीनां द्वन्द्वः।एषां सम्बंधिनीश्चेष्टाः क्रियाः श्रमात्खेदात् पूर्वं विनिवर्तयेत् । तावद्धनुराकर्षादि कुर्याद्यावन्नातीव श्रमः स्यादित्यर्थः । तथा ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुश्चिरं नासीत । नक्तं रात्रौ द्रुमं तरुं न सेवेत । तदाश्रितकीटमूत्रशकृदादिपातरक्षार्थम् ॥ ४८ ॥

प०—देहश्च वाक् च चेतश्च तानि देहवाक्चेतांसि तेषां चेष्टाः क्रियाः, प्राक् श्रमात्-खेदात्पूर्वं, यावन्नातीव श्रमो भवेत्तावद्विनिवर्तयेत्-परिहरेत् । तेनैतदुक्तं भवति । तावद्देहवाक्चेतोभिर्गमनाध्ययनचिन्तनादिकर्म कार्यं, यावन्नातीव श्रमो भवेदिति । ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुः । उत्तानः सन् जानुनी सङ्कोच्य न चिरं तिष्ठत् । तथा नक्तं रात्रौ, वृक्षं न सेवेत ॥ ४८ ॥

हे०—श्रमोत्पत्तेः प्रागेव सर्वचेष्टोपरमं विधत्ते—व्यायामस्य श्रमैकफलत्वान्निवृत्तिकालाभिधानाच्च तद्व्यतिरेकोऽत्र देहचेष्टा ग्राह्या । चिरकालमूर्ध्वजानुस्थितिं निषेधति—यो जङ्घे संकोच्योत्तानः शेते, यश्चोर्ध्वं तिष्ठत्यूर्ध्वजानुः । रात्रौ द्रुमादिसेवां निषेधति ॥ ४८ ॥

**तथा चत्वरचैत्यान्तश्चतुष्पथसुरालयान् ।**
**सूनाटवीशून्यगृहश्मशानानि दिवापि न ॥४९॥**

स०—चत्वरं त्रिपथम् । अन्ये त्वाहुः । यत्र प्रदेशे नगरनिवासिनो ग्राम्यः या समेत्य नानाविधाः कथाः कुर्वंति स चत्वर उच्यते । चत्यांतश्चैत्यसमीपः । चतुष्पथं मार्गचतुष्टयसंगमः । सुरालयो देवगृहम् । एतांश्च नक्तं न सेवेत । सूना वध्यस्थानम् । अटवी निर्जनो देशः । शून्यगृहमुजटभवनम् । श्मशानं पितृवनम् । तानि दिवाऽपि न सेवेत । अपिशब्देन रात्रौ नितरामसेवनमाह ॥ ४९ ॥

प०-तथा-चत्वरादीन् नक्तं न सेवेत। चत्वरं-त्रिपथमाहुः । चत्वरः-प्रदेशविशेषो नगराद्ग्रामाद्बहिर्निर्गत्य यो भवति यत्र नगरनिवासिनो ग्रामनिवासिनो वा स्वैरेणागत्य नानाविधाः कथास्तास्ताश्चिन्तयन्ति स चत्वर इति । केचिच्चैत्यान्तश्चैत्यसमीपं, चतुष्पथं चत्वारो मार्गाः यत्रैकीभवन्ति । सुरालयो देवगृहम् । सूनादिकं दिवापि न सेवेत । सूना-यातनास्थानम् । अटवी-अरण्यम् । शून्यगृहं-निर्जनमन्दिरम् । श्मशानं-शवदाहस्थानम् । एतानि दिवापि न सेवेत किमुत रात्रौ ॥ ४९ ॥

१ अत्र "नासीतोत्कटकश्चिरम्" इति पाठान्तरम् ।

हे०—ग्रामाद्वहिर्यत्र ग्राम्याः सर्वे कथाः कुर्वते यश्च त्रयाणां पथां संक्रमः स चत्वरः, चैत्यांतः--चैत्यसमीपं, चतुष्पथश्चतुर्णां पथां संगमः, सुरालयो-देवकुलं, सूनादिसेवां निषेधति-सूना-वध्यस्थानम्, अटव्यरण्यम् अपिशब्दाद्रात्रावपि न ॥ ४९ ॥

**सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत् ॥**
**नेक्षेत प्रततं सूक्ष्मदीप्तामेध्याप्रियाणि च॥५०॥**

स०—आदित्यं सर्वथोद्यंतमस्तं यांतं प्रतिमागतं जलादर्शादिषु प्रतिबिंबितमुपरक्तं राहुग्रस्तं वा नेक्षेत । तथा भारं शिरसा न च वहेन्न नयेत् । प्रततमविरतं सूक्ष्मवस्तु नेक्षेत । दीप्तं चामेध्यं चाप्रियं चातिप्रततं नेक्षेत । ननु तर्हि सर्वथा नेक्षेतेत्यनेन कोऽर्थो यतो रविरपि दीप्तो दीप्तग्रहणेनैवास्य दर्शननिषेधः सिद्धः । अस्त्येवैतत् किन्तु सर्वप्रकारमादित्यं नेक्षेत । दीप्तं त्वनवरतं नेक्षेतेति ॥ ५० ॥

प०--सर्वथा-सर्वप्रकारेण, आदित्यं नेक्षेत न पश्येत् ।"नोद्यन्तमस्तमायान्तं तपन्तं प्रतिमागतम् । उपरक्तं च भास्वन्तं वाससा वा तिरोहितम् ।" तथा-शिरसा-मूर्ध्ना, भारं न वहेत्, स्थानात् स्थानान्तरं न नयेत् । सूक्ष्मं-दुर्निरीक्ष्यम् । प्रततं-संततमनवरतो, नेक्षेत-न पश्येत् । तथा दीप्तं वह्न्याद्यन्यदप्यतितेजस्विरूपं, नेक्षेत । अमेध्यमशुचिविण्मूत्रादिकं, विप्रियमनभिप्रेतं द्विष्टं नेक्षेत ॥ ५० ॥

हे०—आदित्यदर्शनं निषेधति-ननु "नोद्यंतमस्तमायांत तपंतं प्रतिमागतम् उपरक्तं च भास्वन्तं वाससा वातिरोहितम् ॥" इति संग्रहे । इह तु "सर्वथा" इति विरोधः । मैवं, योह्यदृष्टमेव दोषं जिहासुस्तं प्रत्युदयादिनिषेधः । यस्तु दृष्टमपि तं प्रति सर्वथाप्रकारमित्यविरोधः । पुरस्ताद्दीप्तनिषेधादेव निषेधे सिद्धेऽप्युदयाद्यदीप्तावस्थासु निषेधार्थमिदम् । शिरसा भारवाहनं निषेधति न भारमिति । प्रततादिदर्शनं निषेधति—प्रततं-विस्फारिताक्षं क्रियाविशेषणमिदं, सूक्ष्ममणु, दीप्तं तेजस्वि, अमेध्यमशुचि, अप्रियं-द्विष्टम् ॥ ५० ॥

**मद्यविक्रयसंधानदानादानानि नाचरेत् ॥५१॥**

स०—विक्रयो विनिमयः । इयत्प्रमाणमधुनेदं दीयत इति । सन्धीयते येन तत्सन्धानमनेकद्रव्यसम्भारो येन तन्मद्यं यथावत्प्रमाणेन सन्धीयते । दानं यथाशा स्वत्वनिवृत्तिः परस्वत्वापादनम् । आदानं च यश शास्त्रमेव परस्माद्ग्रहणम् । एतेषां द्वंद्वः । ततो म शब्देन षष्ठीसमासः । मद्यविक्रयादीनि नाचरेत् । द्वि विषयं चैतद्वाक्यमिति बोध्यम् । सर्वस्य तु निषेध क्रयादिव्यवहारोच्छेदः स्यात् ॥ ५१ ॥

प०--विक्रयो-विनिमयः, पण्यम् । सन्धीयतेऽ नेति सन्धानम् । दानं-यथाशास्त्रं स्वत्वनिवृत्तिपर त्वापादनम् । आदानं च यथाशास्त्रमेव परस्माद्ग्र णम् । मद्यविक्रयादिद्विजातिर्नाचरेत् न कुर्यात् ॥५

हे०—मद्यस्य विक्रयादीनि निषेधति-विक्रयो मूल्येन द संधानमुत्पादनम्, आदानं प्रतिग्रहः, मद्यस्यौषधेषु वि नात् क्रयपानयोरनिषेधः ॥ ५१ ॥

**पुरोवातातपरजस्तुषारपरुषानिलात् ।**
**अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ॥**
**कूलच्छायानृपद्विष्टव्यालदंष्ट्रिविषाणिनः ।**
**हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ॥**
**संध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम् ।**
**शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ॥**
**गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम् ।**
**तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥**
**मद्यातिसक्तिं विश्रंभस्वातंत्र्ये स्त्रीषु च त्यजेत्॥**

स०—त्यजेदिति क्रिया वक्ष्यमाणा । पुरःशब्द वातातपाभ्यां प्रत्येकं सम्बन्धः । पुरोवातः पूर्वदिगा वातः । पुर आतपः पूर्वातपः । पुरोवातादीन्पञ्च त्यजे अनृजुर्विषमस्थितशरीरः । क्षवथ्वादीन् षट् त्यजेत अनृज्विति क्रियाविशेषणमिति केचिद्व्याचक्षते । अ मत्र शाल्यादि । कूलं वप्रस्तच्छायां त्यजेत् । हि तिष्ठतस्तत्पाताद्भयं स्यात् । नृपद्विष्टं राज्ञोऽ त्यजेत् । व्यालो दुष्टहस्त्यादिः । दंष्ट्रिणः सर्पाद्या विषाणिनो गवाद्यास्तांस्त्यजेत् । हीनाः कुलशील त्तादिभिर्न्यूनाः । अनार्या असाधवः । अतिनि अतिगणनापरास्तेषां सेवां त्यजेत् । उत्तमैरिति सह गम्यमाने तृतीया । उत्तमैः सह विग्रहं त्यजेत् सन्ध्यास्वभ्यवहारादीन्पञ्च त्यजेत् । शत्रुसत्रेत्या

शत्र्वशनं त्यजेत् । सत्रं यज्ञस्तस्याशनं त्यजेत् । ऋत्विगादीन् वर्जयित्वाऽन्यस्य हि तदशनं निषेधति । तथाहि । यज्ञांते तदुद्भूतपापोपशमनाय प्रायश्चित्तं श्रूयते । गणाः कथकचारणादयस्तैराकीर्णं व्याप्तमशनं त्यजेत् । गणिका वेश्या तस्याः संबंध्यशनं त्यजेत् । तदशनाद्धि तत्पापसंक्रमणं स्यात् । पणिकः पणोपजीवी । नौद्व्यच इति ठन् । पणिको हि पापीयान्निदितपण्यादिविक्रीणानः प्रशंसतीत्यादिहेतोः । गात्रेत्यादि । गात्राण्यंगानि तैस्तथा वक्त्रेण नखैश्च वाद्यं त्यजेत् । हस्तावधूननं केशावधूननं च त्यजेत् । अवधूननं कंपनम् । तोयेत्यादि । मध्यशब्दः प्रत्येकं युज्यते । तोययोर्द्वयोर्मध्येन यानं त्यजेत् । न यायादित्यर्थः । एवमग्न्योर्मध्येन । तथा पूज्ययोर्मध्येन । समासकरणात्तोयाग्न्योस्तोयपूज्ययोरग्निपूज्ययोरपि मध्येन न यायादिति बोद्धव्यम् । तथा धूमं शवाश्रयं शवोद्भूतं त्यजेत् । मद्येत्यादि । मद्येऽतिसक्तिरतिसेवा तां त्यजेत् । स्त्रीषु योषासु विश्रंभं विश्वासं स्वातंत्र्यं च त्यजेत् ॥ ५२ ॥

प०--पुरोवातादीन् पुमान् त्यजेत् । पूर्वस्यां दिशि आगतः आतपोऽर्कसन्तापः । रजो-धूलिः । तुषारं-हिमम् । परुषानिलश्चण्डो वातः । अनृजुः-वक्रःसन्, क्षवथ्वादिकांस्त्यजेत् । क्षवथुश्छिक्का । उद्गार-ऊर्ध्वं वातस्य प्रवृत्तिः। कसनं-कासः । स्वप्नो-निद्रा । अन्नमाहारोपयोगः । मैथुनं-व्यवायः । कलच्छाया-नदीसमीपे श्वभ्रच्छाया । नृपद्विष्टो-राज्ञः शत्रुः । व्यालो-सिंहादयः। दंष्ट्रिणः-सर्पाः । विषाणिनो-महिषाद्याः । हीनादीनां सेवामाश्रयं त्यजे । हीनोऽकुलीनः कुलाचारादिभिः । अनार्योऽसाधुः । अतिनिपुणः कुलाचारादीनामत्यन्तमादरो यस्य दुराश्रयत्वात् । सन्ध्यास्वभ्यवहारादीन् त्यजेत् । अभ्यवहारो-भोजनम् । स्त्री-योषित् । स्वप्नो-निद्रा । अध्ययनं-ग्रन्थपाठः । चिन्तनं-श्रुतादौ भूयःस्मरणम् । शत्रुवत् सत्रादीनामशनमन्नं त्यजेत् । शत्रुः-अरिः । यज्ञाशनमग्निष्टोमादियज्ञाशनम् । ऋत्विगादीन् वर्जयित्वा । अन्यस्य तदशनात् पापं सङ्क्रमते । यतो यज्ञान्ते तदुद्भूतपापक्षपणार्थं प्रायश्चित्तं श्रूयते । गणाकीर्णं-बहुगणाध्यापितम् । गणैः कथकचारणैर्वा व्याप्तम् । गणिका-वेश्या, तत्सम्बन्धि यदशनं तदपि नाद्यात्, पापसंक्रमणात् । पणिको-वणिक्, तदशनं पापसंक्रमणात् त्यजेत् । तथा गात्रवक्त्रनखैरङ्गमुखकरजैर्वाद्यं त्यजेत् । हस्तकेशानां चावधूननं कम्पनं चालनं त्यजेत् । तोयाग्निपूज्येषु सलिलवह्निपूजनीयेषु मध्ये यानं गमनं त्यजेत् । पूज्या गुर्वादयः। धूमं शवाश्रयं मृतकशरीरजातं त्यजेत् । तथा मद्यादिसक्तिं मद्यद्यूतस्त्रीविषयातिसक्तिं पुनः पुनरासेवां त्यजेत् । तथा स्त्रीषु नारीषु विश्रंभं स्यातन्त्र्यं विश्वासाधिक्यां त्यजेत् परिहरेदिति ॥ ५२ ॥

हे०--पुरोवातादीन् निषेधति--पुरोवातः--पूर्वदिग्वायुः, आतपो-घर्मः, रजो--धूलिः, तुषारो--ऽवश्यायः, परुषानिलश्चण्डवातः । अनृजुरिति । क्षवथ्वादिषट्कविषयं कर्तृविशेषणम् । अन्नं भोजनं, कूलरोधः--तस्य छाया, नृपद्विष्टो-राजद्वेष्यः, व्यालो-दुष्टगजादिः, दंष्ट्री-सर्पादिः, विषाणी--महिषादिः। संध्यास्वित्यभ्यवहारादिपञ्चकविषयम् । अभ्यवहारो--भोजनं, स्त्रीशब्देन संभोगो लक्ष्यते। चिंतनमधीतपरामर्शः, शत्र्वादीनामशनम् । शत्रुर्वैरी, सत्रं--यज्ञः, गणा--बहवो मिलित्वा दातारः, आकीर्णो--योग्यायोग्यमविचिंत्यान्नदाता, गणिका-वेश्या, आपणिको-वणिक्, गात्रादिभिर्वाद्यं--वाद्यशब्दानुकारः, वक्त्रेण वंशादेः नखेन वीणादेर्वादनं निषेद्धुं पृथग्ग्रहणम् । अवधूननं--कंपनम् । तोययोः, अग्न्योः, पूज्ययोः, तोयाग्न्योः, अग्निपूज्ययोश्च मध्येन यानं त्यजेत्, शवाश्रयो धूमः--प्रेतधूमः मद्यातिसक्तिं--मद्यपानरतिं स्त्रीष्विति। विश्रंभस्वातंत्र्यविषयं, विश्रंभो--विश्वासः ॥ ५२ ॥

**आचार्यः सर्वचेष्टासु लोक एव हि धीमतः ।**
**अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः॥५३॥**

स०--हि यस्माद्धीमतो बुद्धियुक्तस्य सर्वचेष्टासु निःशेषव्यापारेषु लोक एवाचार्य उपदेष्टाऽतोऽस्माद्धेतोस्तमेव लोकं लौकिकेऽर्थे परीक्षकः पुरुषोऽनुकुर्यात् । यथा लोको व्यवहरति तथा व्यवह्रियादित्यर्थः ॥५३॥

प०--धीमतो बुद्धिमतः सर्वचेष्टासु सर्वक्रियासु लोक एव विशिष्टलोक आचार्य उपदेष्टा। अतोऽस्मात्कारणात्तमेव विशिष्टलोकमेवानुकुर्यात् । तत्सदृशमेवाचारं कुर्यात् । यो लौकिकेऽर्थे परीक्षकः परीक्षापूर्वकारी हेयोपादेयरूपं शोभनाशोभनं जानाति ॥५३॥

हे०--लोकादेवाचारशिक्षां विधत्तेहि यस्माद्धीमतः पुरुषस्य सर्वत्र लोक एवाचार्यः शिक्षकः ।

अतोऽस्मात्तमेवानुकुर्यादिति। यथा लोकः आचरति तथा आचरेदित्यर्थः। कथंभूतः लौकिकेऽर्थे परीक्षकः। को लोकः, किमर्थं, किमाचरतीति परीक्षां कुर्वन् ॥ ५३ ॥

**आर्द्रसंतानता त्यागः कायवाक्चेतसां दमः ॥**
**स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ५४॥**

स०—आर्द्रसन्तानता सर्वसत्त्वेषु कृपालुत्वम्। त्यागो दानम्। कायवाक्चेतसां त्रयाणां दम उपशमः। परार्थेषु परप्रयोजनेषु स्वार्थबुद्धिः। यथा यः परार्थः अयमेव स्वार्थः इत्युभयलोकहितत्वम् इत्येवंप्रकारं सद्व्रतं पर्याप्तम्। समाप्तमित्यर्थः। सत् शोभनं च तद्व्रतं च सद्व्रतम् ॥ ५४ ॥

प०—आर्द्रसंतानता=सर्वसत्त्वेषु कृपालुत्वं, करुणाविशिष्टचेतस्त्वम्। तथा त्यागो यथाशक्ति यथाशास्त्रं स्वत्वनिवृत्तिपरस्वत्वापादनम्। कायवाक्चेतसां देहवचनचित्तानामुपशमः, परार्थेषु परप्रयोजनेषु परकार्येषु स्वार्थबुद्धिः। अयमेव मे स्वार्थो यो परार्थेषु बुद्धिरित्येवं मन्यते। पर्याप्तं परिसमाप्तमित्येव सद्व्रतं सतां साधूनां व्रतं सद्व्रतम्। अथवा—सच्च तद्व्रतं च सद्व्रतं शोभनव्रतमित्यर्थः ॥ ५४ ॥

हे०—उक्तेषु व्यवहारेषु धर्मं विचारयति-आर्द्रः-करुणाभावितत्वात् त्यक्तकाठिन्यः, संतानश्चित्तवृत्तिपरंपरा यस्येति आर्द्रसंतानः तस्य भावः आर्द्रसन्तानता परमकारुणिकत्वम्, त्यागो—दानं, कायादीनां दमस्तच्चापलनिग्रहः। स्वार्थबुद्धिः--परार्थेषु परकार्येषु स्वार्थवत्तात्पर्यम् इत्येतच्चतुष्टयं पर्याप्त। सद्व्रतं--संपूर्णो धर्मः सतां व्रतमवश्यं कर्तव्योऽर्थः ॥ ५४ ॥

**नक्तंदिनानि मे यांति कथंभूतस्य संप्रति ॥**
**दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ५५**

स०—नक्तंदिनानि रात्रिदिनानि संप्रतीदानीं कथंभूतस्य कीदृशस्य सतो मे मम यांति। एवं नित्यं सन्निहितस्मृतिः सन् पुमान् दुःखभाङ् न भवति ॥ ५५ ॥

प०—मे मम नक्तंदिनानि रात्रिदिनानि कथंभूतस्य किंधर्मादिक्रियस्य च यान्ति गच्छन्ति, सम्प्रत्यधुना एवमनुचिन्तयन् नित्यस्मृतिः सर्वकालं स्मृतिमान् दुःखभाजनं न भवति। परत्रेह च मोदते ॥ ५५ ॥

हे०—इष्टसाधनकथनद्वारेणाचारावहितत्व किंदेशस्य किंकालस्य, किंवयसः, किंमनस मम संप्रति नक्तंदिनानि यांतीत्येवं सन्निहित

**इत्याचारः समासेन यं प्राप्नोति स**
**आयुरारोग्यमैश्वर्यं यशो लोकांश्च श**

स०—इति समाप्तौ। समासेन संक्षेपे चारः पूर्वोक्तो यं समाचरन्ननुतिष्ठन्नायुराद तथा लोकान् भूर्भुवःस्वःप्रभृतीन् शा ननु शाश्वतशब्दो न युक्तः। यतः कालवाचित्वात् कालाट्ठञिति ठञ् प्राप्न अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्या पश्च प्राप्नोति। नैतदस्ति। नस्तद्धि ष्युक्तम्। शाश्वत इत्यादौ तु टिले कालादिति योगविभागाण्णिति। तस्म न्याय्य एवेति ॥ ५६ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचि दयटीकायां सर्वांगसुंदराख्यायां सूत्रस्थ योऽध्यायः समाप्तः ॥ २

प०—इतिशब्दः समाप्तिवचनः। आचा सेन संक्षेपेणोक्तः। यमाचारं पुरुष स आयुरादिकं प्राप्नोति। आयुर्जीवितम्। स्थ्यम्। ऐश्वर्यं-विभवः। यशः-कीर्तिः। श अक्षयस्थानं नित्यमविनाशि तत्समस्तं

इति श्रीचन्द्रचन्दनविरचितायां प कायामष्टाङ्गहृदयटीकायां द्वि ध्यायो द्वितीयः ॥२॥

हे०--स दुःखभाक् न भवति अतः भवितव्यमित्यर्थसिद्धम्। अध्यायार्थमुपसंहर शिष्टानुमतो व्यवहारः, समासेनेति नत्वायुर्वेदांतरापेक्षया न्यूनत्वदोषापत्तेः, विर आचारफलमाह--यमिति। ऐश्वर्यम्--आ शाश्वतान् लोकान् विष्णुलोकादीन्। संग्रहे उत्तिष्ठेत् जीर्णाजीर्णे निरूपयन्। रक्षार्थं जातवेगः समुत्सृजेत् ॥ उदङ्मुखो मूत्र खो निशि। वाचं निशाम्य प्रयतः संवीतांगो प्रवर्तयत्प्रचालत नतु यत्नादुदीरयेत्। नामे

-गोस्थानाकीर्णगोमये ॥ पुरांतिकाग्निवल्मीकरम्योत्कृष्टचितिद्रुमे । न नदीपूज्यगोऽर्केन्दुवाय्वाग्निजलं प्रति ॥ नचातिरस्कृत्य महीं भयाद्वात्त्ययोस्तु कामतः । न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयम् ॥ निःशल्यादुष्टमृत्पिण्डीपरिमृष्टमलायनः । अभ्युद्धृताभिः शुचिभिर्मृद्भिरद्भिश्च योजयेत् ॥ लेपगन्धापहं शौचमनुत्पातितविन्दुभिः । स्पृष्ट्वा धातून्मलानश्रुदृशां केशनखान् च्युतान्॥स्नात्वा भोक्तुमना भुक्त्वा सुप्त्वा क्षुत्त्वा सुरार्चने। रथ्यामाक्रम्य चाचामेदुपविष्ट उदङ्मुखः॥प्राङ्मुखो वा विविक्तस्थो न बहिर्जानुनाऽन्यदृक् । अजल्पन्नुत्तरासंगी स्वच्छैरंगुष्ठमूलगैः॥ नोद्वृत्तैर्नानतो नोर्ध्वं नाग्निपक्वैर्न पूतिभिः । न फेनबुद्बुदक्षारैर्नैकहस्तार्पितैर्जलैः ॥ नार्द्रैकपाणिर्नामेध्यहस्तपादो न शद्ववत् । लिखेदनुमुखं जिह्वां जिह्वानिर्लेखनेन च ॥ तथास्यमलवैरस्यगन्धजिह्वास्यदन्तजाः । रुचिवैशद्यलघुता भवन्ति न भवन्ति च॥ प्रणम्य देवान्वृद्धांश्च मङ्गलाष्टशतं शुभम् । शृण्वन् कांचनविन्यस्तं सर्पिः पश्येदनंतरम् ।" दाधिघृतमधुलाजपुष्पाक्षतोदुम्बराश्वत्थमुक्तामणिच्छत्रदूर्वांकुरादर्शकन्याध्वजस्यंदनाष्टापदाक्षानृपश्रीतरुभद्रपीठानि सस्यानि ।मत्स्याः, हयाः, हंसचाषौ, वृषः,केसरी,दक्षिणावर्तशंखाब्जसिद्धार्थका रोचना, स्वस्तिकस्तोरणं,कीचका वेणवः, वरुणमधुमदासिक्तगंडो गजस्तोयलंबोऽबुदः,पूर्णकुंभोऽद्रिरिंद्रः,फलान्याममांसं, सित चामरं,गौः, सवत्साङ्गना पुत्रिणी,मानुषं वर्द्धमानं, सहस्रं नराणां, प्रयुक्तानि यानानि, धन्वंतरिर्वामनौ,भूमिरभ्युद्धृता, सिद्धमन्नं,वराहश्च तोयोत्थः, त्रिनयनमधुसूदनस्कंदपद्मासना, लोकपालाः, सुराः, खं,दिशोऽग्निः,सरांसि,स्रवंत्यः,समुद्राः, मखाः, मारुतो, ज्योतिषं, धर्मशास्त्राणि, तीर्थानि, धर्मार्थकामामृतं, वालखिल्यादयो, वेदवाक्यं, निधिः, कौस्तुभः, कांचनं, मणिभद्रः, सुमेरुः, प्रियंगुः, प्रदीपो, नचामोदको दितिरदितिररुंधतीबुद्धिसाविव्युमाकाशगंगाशचीदेवसेनासुधाशांतिलक्ष्मीसरस्वत्यपत्यक्षमास्वस्तिशब्दावषट्कारओंकारपुण्याहधर्मक्रियाश्चेतदष्टोत्तरं मंगलानां शतम्। दर्शनात्स्पर्शनात्कीर्तनाच्चाशुभानि व्यपोह्यार्थसिद्धिं दिशत्युत्तमाम् । अष्टापदं—शारिफलम् ,अक्षः—पाशकः,वरुणमधुवारुणी—सुराः । "गन्धमाल्यादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनम् । वासो न धारयेज्जीर्णं मलिनं रक्तमुल्वणम् ॥ माल्यं न लंबं न बहिर्नरक्तं जलजादृते । नैवं चान्येन विधृतं वस्त्रं पुष्पमुपानहौ ॥ उत्तिष्ठेत ततोऽत्यर्थमर्थेष्वर्थानुबंधिषु । निंदितं दीर्घमप्यायुरसंनिहितसाधनम् । कृषिं वाणिज्यं गोरक्षामुपायैर्गुणितं नृपम् । लोकद्वयाविरुद्धां च धनार्थी संश्रयेत्क्रियाम् ॥ मुक्तवेगस्तु गमनस्वप्नाहारसभाश्रियः । पाणिनालभ्य निष्क्रामेत् रत्नपूज्याज्यमङ्गलम् ॥ प्रावृत्य पर्यटेद्रात्रौ न प्रावृत्य शिरोऽहनि ।मध्याह्ने संध्ययोरात्रावर्धरात्रे चतुष्पथम् ॥ न सेवेत न शर्वर्यां वृक्षचैत्यांतचत्वरम् । न हुंकुर्याच्छिवपूजां प्रशस्तां मङ्गलानि च ॥ नापसव्यं परिक्रामेन्नेतराण्यनुदक्षिणम् । चतुष्पथं नमस्कुर्यात्प्रज्ञातांश्च वनस्पतीन् ॥ न व्यालव्याधिताशस्तैर्नादांतक्षुत्पिपासितैः । न च्छिन्नपुष्पैर्नकाक्षिगोष्ठांतेन च न व्रजेत् ॥ नातिप्रगेऽतिसायं वा न नभोमध्यगे रवौ । नासंनिहितपानीयो नातितूर्णं न संततम् । न शत्रुणा नाविदितैर्नैको नाधार्मिकैः सह । दद्यादृत्मार्त्तवृद्धस्त्रीभारिचक्रिद्विजन्मने ॥ (चक्री रथी) स्नानभोजनपानानि बाह्येभ्यो नाचरेत्पुनः । स्नानोदकावतरणं स्वप्नं नग्नो न चाचरेत् ॥ पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिणि॥ नात्मानमीक्षेत जले न तटस्थो जलाशयम् ॥ न प्रतिस्फालयेदम्बु पाणिना चरणेन वा । स्नात्वा न मृज्याद्गात्राणि धुनुयान्न शिरोरुहान् ॥ निवसीतार्द्र एवाशु सोष्णीषो धौतवाससी । न त्वंबरं पूर्वधृतं न च तैलवसे स्पृशत् ॥ वासोऽन्यदन्यच्छयने निर्गमे देवतार्चने । धर्मोत्तराभिरर्थ्याभिः कथाभिस्त्रिगुणात्मभिः ॥ मध्यं दिनस्य गमयेदिष्टशिष्टसहायवान् । न लोकभूपविद्विष्टैः संगच्छेत न नास्तिकैः॥कलिवैररुचिर्न स्याद्धीरसंपद्विपत्तिषु । श्रुतादन्यत्र संतुष्टस्तथैव च कुतूहली ॥ क्षांतिमान्दक्षिणो दक्षः सुसमीक्षित कार्यकृत् । ह्रीमान् धीमान् महोत्साहः संविभागी प्रियानिधिः । अक्षुद्रवृत्तिर्गंभीरः साधुराश्रितवत्सलः। वित्तबंधुवयोविद्यावृत्तैः पूज्या यथोत्तरम् । आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् । सुतरामप्युपेक्षेत नरकार्चिष्मदिन्धनम् ॥ परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैतं निपातयेत् । अन्यत्र पुत्राच्छिष्याद्वा शासनार्हाद्धिताशयः ॥ नृत्यवादित्रगीतादि नोल्बणं नाचरेत्क्रियाम् । ऊर्ध्वं नाभेः शरीरस्य स्पृशेन्नाधरवाससा ॥ न कुर्यान्मिथुनीभूय शौचं प्रतिविलंबनम् । पाणिद्वयेन युगपत्कण्डूयान्नात्मनः शिरः ॥ पादं पादेन नाक्रामेन्न कण्डूयेन्न शौचयेत् । न कांस्यभाजने तौ च चोपविष्टः प्रसारयेत् ॥ त्रिः समिधमुपासीत हुताशं नैव चाशुचिः। नानुवातो न उद्वृत्तो न क्लांतो नान्यमानसः॥ धमेन्नास्येन न स्कन्देन्नाधः कुर्यान्न पादतः। सततं न नि-

रीक्षेत चलसूक्ष्माप्रियाणि च ॥ नाप्रशस्तं न विण्मूत्रं न दर्पणममार्जितम् । नान्यदप्यतितेजस्वि न क्रुद्धस्य गुरोर्मुखम् ॥ स्त्रीं न स्रवंतीं नोदक्यां न नग्नां नान्यसंगताम् । न पर्वीं भोजने स्वप्ने क्षुतिजृंभासुखासने ॥ शयीत नैकशयने नचाश्नीयात्तया सह । तामनीर्ष्यश्च गोपायेत्स्वैरिणी नाशयेद्गृहम् ॥ नोच्छिष्टस्तारकाराहुतुहिनांशुदिवाकरान् । पश्येन्न यायान्न पठेन्न स्वप्यान्न स्पृशेच्छिरः ॥ वत्सं पाययतीं वा नान्यस्मै गां च निवेदयेत् । अर्केन्दुपरिवेषोल्काशतक्रतुधनूंषि च ॥ नान्यद्देवार्चने कुर्यात्कर्म धावेन्न वर्षति। तिथिं पक्षस्य न ब्रूयान्नक्षत्राणि न निर्दिशेत् ॥ नात्मनो जन्मलग्नर्क्षं धनसारं गृहे मलम् । सशब्दमनिलं हस्तभ्रूनेत्रोत्क्षेपणं त्यजेत् ॥ हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः । आरोग्यजीवितैश्वर्यविद्यासुस्थितिमानिताम् ॥ नैकाहमप्यधिवसेद्वास्तुतच्छास्त्रगर्हितम् । न देशं व्याधिबहुलं नावैद्यं नाप्यनायकम् ॥ नाधर्मिजनभूयिष्ठं नोपसृष्टं न पर्वतम् । वसेत्प्राज्याम्बुभैषज्यसमित्पुष्पतृणेन्धने ॥ सुभिक्षक्षेमरम्यांते पण्डितैर्मण्डिते पुरे । नरामराणां सिद्धानां शास्त्राणां चाजुगुप्सुकः ॥ आराधकस्त्रिवर्गस्य यथायोगं जनस्य च । देशधर्मपथान् रक्षेत् जयत्वाभ्यन्तरानरीन्॥ परोपघातक्रियया वर्जयेदर्जनं श्रियः । अर्थानां बहुनर्थानामदातापि ह्यसंभवात् ॥ स्वर्गापवर्गविभवा न यत्नेनाधितिष्ठति । सायं भुक्त्वा लघु हितं समाहितमनाः शुचिः ॥ शास्तारमनुसंस्मृत्य शर्वर्यां चाथ संविशेत् । देशे शुच्यावनाकीर्णे द्वित्राप्तपरिचारकः ॥ युक्तोपधानं स्वास्तीर्णं विस्तीर्णाविषमं सुखम् । जानुतुल्यं मृदु शुभं सेवेत शयनासनम् ॥ प्राग्दक्षिणशिराः पादावकुर्वाणो गुरुं प्रति । पूर्वापरनिशाभागे धर्ममेवानुचिन्तयन्॥ आददीत सदा देहाच्छिन्सारमसारतः । बिभ्येत्प्रतिक्षणं मृत्योरयथायथचेष्टितात् ॥ आरोग्यविभवप्रज्ञावयोधर्मक्रियावतः । सुखमायुर्हितं चोक्तं विपरीतं विपर्यये ॥ सर्वतेजोनिधानं हि नृप इत्युच्यते भुवि । अदूषयन्मनस्तस्माद्भक्तिमांस्तमुपाचरेत् ॥ पर्यस्तिकोपाश्रयकोपहासविवादनिष्ठीवनजृंभणानि । सर्वाः प्रकृत्यभ्यधिकाश्च श्रेष्ठास्तत्संनिधाने परिवर्जयेच्च ॥ सत्त्वाद्यवस्था विविधाश्च तास्ताः सम्यक् समीक्ष्यात्महितं विदध्यात् । अन्योऽपि यः कश्चिदिहास्ति मार्गो हितोपदेशेषु भजेत तं च ॥ " इति । इत्यबद्धक्रमा विहाराः ॥ ५६ ॥

इति हेमाद्रिटीकायाम् आयुर्वेदरसायने दिनचर्याप्रकरणं सामस्त्येन निरूपितम् ॥ २ ॥

# तृतीयोऽध्यायः ।

दिनचर्याध्यायादनंतरमृतुचर्याया उपोद्घातः। पूर्वाऽध्याये सामान्येन दिनचर्योपदिष्टा । ऋतुविशेषवशाच्चाहारविहारसेवनप्रतिपादनार्थमृतुचार्याया आरम्भ इत्याह-

**अथात ऋतुचर्याध्यायं व्याख्यास्यामः। १ ।**

स०—पूर्ववद्व्याख्येयम् ॥ १ ॥

प०--इह स्वस्थवृत्तं प्रकृतं, तच्च पूर्वस्मिन्नध्याये ऋतुसामान्येनोक्तम् । ऋतुविषयप्रदर्शनार्थमध्यायारम्भः । तस्यैव न्याय्यत्वात् । यतो दिनं—मुहूर्तावयवं,चर्या च मुहूर्तोपलक्षितैव निर्दिष्टा "ब्राह्ममुहूर्ते" इत्यादिना ग्रन्थेन दिनावयवश्च पक्षः, पक्षावयवश्च मासः,मासावयवश्च ऋतुः, ऋत्ववयवमयनमिति । ऋतौ ऋतौ चर्या । ऋतुचर्या । ऋतुः कालविभागः। अथेत्यादि पूर्ववदिति ॥ १ ॥

हे०--अथात ऋतुचर्याध्यायं व्याख्यातुं प्रतिजानीते यतः पूर्वस्मिन्नध्याये दैनंदिनो विहारः, इह त्वार्तवः अत एवायमृतुचर्याख्यः ॥ १ ॥

**मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड्तवः स्मृताः ।**
**शिशिरोऽथ वसंतश्च ग्रीष्मवर्षाशरद्धिमाः ॥**
**शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।**
**आदानं च तदादत्ते नृणां प्रतिदिनं बलम् । २**

---

१ तत्र पूर्वाह्णे वसन्तस्य लिंगं, मध्याह्ने ग्रीष्मस्या पराह्णे प्रावृषः, प्रदोषे वार्षिकं, शारदमर्द्धरात्रे, प्रत्यूषसि हेमन्तमुपलक्षयेत् । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमनैर्जानीयात् । तत्राऽव्यापन्नेष्वृतुष्व व्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमानाः प्राणायुर्बलवीर्यौजस्कर्य्यो भवन्ति । तेषां व्यापदोऽदृष्टकारिता। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपः तासामुपयोगात् विविधरोगप्रादुर्भावो मारको वा भवेदिति तत्राऽव्यापन्नानामोषधीनामपां चोपयोगः । कदाचिदव्यापन्नेष्वृतुषु कृत्यापिशाचरक्षःक्रोधाऽधर्मैरुपध्वस्यन्ते जनपदाः विषौषधिपुष्पगन्धेन वायुनोपनीतेनाऽऽक्रम्यते यो देशस्तत्र दोषप्रकृत्याविशेषेण कास-श्वास-वमथु-प्रतिश्याय-शिरोरुग्ज्वरै रुपतप्यन्ते । ग्रहनक्षत्रचरितैर्वा गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा । तत्र स्थानपरित्यागशान्तिकर्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाऽभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति ॥

स०--मासैरित्यादिना कालोपवर्णनमाह--ननु कालोपवर्णनं दिनचर्यायां कस्मान्न कृतम्।उच्यते।ऋतुगौरवोद्भावनार्थम्। ऋतवो हि विशेषेणोपयोगिनो विप्रतिपत्तेश्च। यथैके चातुर्मासिकमृतुं कृत्वा शीतोष्णवृष्टिलक्षणान् हेमन्तग्रीष्मवर्षाख्यांस्त्रीनृतूनिच्छंति। अपरे तु द्विमासिकान् शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तलक्षणान् षड्तूनिति। द्वे संख्ये येषां ते द्विसंख्यास्तैर्द्विसंख्यैः माघ आद्यो येषां फाल्गुनादीनां त एवम्। तैर्द्विसंख्यैर्माघाद्यैर्मासैः क्रमात्परिपाट्या षड्तवः स्मृताः। के त इत्याह--शिशिराद्याः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। उपचारादेव षट्त्वे लब्धे षड्ग्रहणं परमतक्षेपार्थम्। तथा केचित् त्रय एव ऋतव इति मन्यन्ते। तैस्तु ऋतुभिस्त्रिभिः शिशिरादिभिरुत्तरायणं विद्याज्जानीयात्। अयनमुत्तरं सवितुरुत्तरमार्गप्रतिपत्तिरुत्तरायणम् आदानं तज्जानीयात्। आदानमिति चान्वर्थमिति प्रतिपादयति। तदा तस्मिन् काले नृणां प्रतिदिनमन्वहं बलमादत्ते सारं गृह्णाति। कोऽसौ। प्रकृतत्वादादित्यः॥२॥

प०--द्विसंख्यैः द्विसंख्यावच्छिन्नैर्मासैर्वा दशभिर्माघादिभिः--माघफाल्गुनप्रभृतिभिः क्रमात् परिपाट्या न व्युत्क्रमतः। शिशिराद्याः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः--षड् ऋतवः कालविभागाः स्मृता उक्ताः। तत्र माघफाल्गुनौ--शिशिरः। चैत्रवैशाखौ--वसन्तः। ज्येष्ठाषाढौ--ग्रीष्मः। श्रावणभाद्रपदौ--वर्षाः। आश्वयुजकार्तिकौ--शरत्। मार्गशीर्षपौषौ--हेमन्तः। अतोऽयनद्वयविभागः। तैस्त्रिभिः ऋतुभिः शिशिरवसन्तग्रीष्माख्यैरुत्तरायणं विद्याज्जानीयात्। सवितुरुत्तरदिक्प्रवृत्तेरुत्तरायणम्। तच्चोत्तरायणमादानं जानीयात्। तस्मात्तदा तस्मिन् काले नृणां पुंसाम् आदत्ते गृह्णाति प्रतिदिनं प्रतिदिवसं बलं सारं कोऽसौ प्रकृतत्वात् सहस्ररश्मिरश्मिभिः॥२॥

हे०--तत्र ऋतुविशेषान् लक्षयति--मासैरिति। द्विसंख्यैरिति षट्कृत्य आवर्त्यैकशेषः कर्तव्यः इति। तत्र माघफाल्गुनौ--शिशिरः, चैत्रवैशाखौ--वसन्तः,ज्येष्ठाषाढौ--ग्रीष्मः, श्रावणभाद्रपदौ--वर्षाः, आश्विनकार्तिकौ--शरत्, मार्गपौषौ--हेमन्तः। ननु सुश्रुतेन भाद्रपदाद्यैर्वर्षादय ऋतव उक्ताः। तद्यथा--"भाद्रपदाश्वयुजौ--वर्षाः, कार्तिकमार्गशीर्षौ--शरत्, पौषमाघौ--हेमन्तः, फाल्गुनचैत्रौ--वसन्तः, वैशाखज्येष्ठौ--ग्रीष्मः, आषाढश्रावणौ--प्रावृट्" इति। इह त्वन्यथेति विरोधः। मैवं, नहि फाल्गुनचैत्रौ वसंतः, नापि चैत्रवैशाखौ। किं तर्हि मीनमेषौ यदा तु फाल्गुनादौ मीनसंक्रांतिस्तदा फाल्गुनचैत्रौ वसंतः, यदा तु फाल्गुनांते तदा चैत्रवैशाखौ, एवं तु वृषमिथुनौ--ग्रीष्मः, कर्कटसिंहौ वर्षाः, कन्यातुले--शरत्, वृश्चिकधनुषी--हेमन्तः, मकरकुंभौ--शिशिरः। उक्तं च ज्योतिःशास्त्रे--"मृगादिराशिद्वयभानुभोगात् षड् र्तवः स्युः शिशिरो वसन्तः। ग्रीष्मश्च वर्षाश्च शरच्च तद्वद्धेमन्तनामा कथितोऽत्र षष्ठः॥" वर्षायनर्तुयुगपूर्वकमत्र सौरादिति च सौरश्च मासस्तत्रैवोक्तः। "दर्शावधिं मासमुशन्ति चांद्रं सौरं तथा भास्कर राशिचारात्। त्रिंशद्दिनं सावनसंज्ञमार्या नाक्षत्रमिन्दोर्भगणभ्रमाच्च॥" इति। अवश्यं चैवमंगीकर्तव्यम् अन्यथा अधिमासनिपाते मासत्रयमृतुः स्यात्। संग्रहे तु--"मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम्। यथोत्तरं भजेचर्या तत्र तस्य बलादिति" मासलक्षणाद्राशिलक्षणं बलवत्। अतो राशिलक्षणमेवांगीकृतं स्वरूपलक्षणस्य ऋतुविपर्ययपर्यवसानात्। उक्तं हि तत्रैव--"ऋतुष्वेवंविधेष्वेव विधिः स्वास्थ्याय देहिनाम्।निर्दिश्यतेऽन्यरूपेषु विरुद्धज्ञानिको विधिः॥" इति। तस्माच्छिशिरषट्क--प्रावृट्षट्कयोः संज्ञामात्रेणैव भेदः। संज्ञाभेदं च देशभेदेनाह काश्यपः--"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे तटे। अतः प्रावृट् च वर्षाश्च ऋतू तत्र प्रकल्पितौ॥ तस्या एवोत्तरे देशे हिमवद्विन्ध्यसंकुले। भूयः शीतमतस्तत्र हेमन्तशिशिरावुभौ॥" इति दक्षिणदेशीयैर्वृष्टिसंबन्धिनोर्द्वयोः प्रावृड्वर्षाख्यत्वं कृत्वा पारिशेष्याच्छीतसंबन्धिनोः शरद्धेमन्ताख्यत्वं कृतम्। उत्तरदेशीयैस्तु शीतसंबन्धिनोर्द्वयोर्हेमन्तशिशिराख्यत्वं कृत्व पारिशेष्याद् वृष्टिसंबन्धिनोर्वर्षाशरत्संज्ञत्वं कृतमित्यर्थः। वृष्टिशीतबाहुल्योपन्यासस्तंत्रान्त्वर्थसंज्ञार्थः, नतु संज्ञासंकरे लक्षणसंकरः, दोषाणां दोषधातुमलसंज्ञावत्। अन्ये पुनर्भेदं मन्वाना अन्नरसान् बलं चाधिकृत्य, शिशिरषट्कं चयादीन् शोधनं चाधिकृत्य, प्रावृट्षट्कम् इति व्यवस्थापयंति तदसत्। चरके खारणादि--प्रभृतिभिः शिशिरषट्कमेवाधिकृत्य। चयादीनामुक्तत्वात्। शोधनस्य तु चैत्रश्रावणकार्तिकेषु विधानात् नर्तुत्वापेक्षा, ऋत्वपेक्षायामपि साधारणर्तूनां शिशिरषट्केऽपि विद्यमानत्वान्न प्रावृट्षट्कापेक्षा। अन्ये तु दक्षिणे गङ्गायां तु वृष्टिबाहुल्यात् प्रावृट्षट्कम्, उत्तरे शीतबाहुल्यात् शिशिरषट्कम्। इति व्यवस्थापयन्ति, तदप्यसदुभयत्र चातुर्मासिकवृष्टिशी

तोपलम्भात् । आश्विने दिव्योदकग्रहणस्योभयदेशविषय-त्वात्। भेदपक्षे ह्युत्तरदेशे तदनार्तवं स्यात् । यत्तु-सुश्रुतस्य "तापात्यये हितान्नित्यम्" इत्यादिवर्षाचर्यायाः पृथक् प्रावृड्चर्याभिधानं तदतिदुर्दिनविषयं, तथाच चरकः— "व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि । विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये ॥" इति । अत एव सुश्रुते तापात्ययशब्दः प्रयुक्तः । तापस्यार्कप्रकाशस्यात्ययोऽत्य न्तापगमः स चातिदुर्दिन एवेति सर्वसमंजसं, तस्माद्वाग्भ-टाचार्याभिमतभेदपक्षमेवाश्रयध्वमिति । प्रथमर्तुत्रयस्य संज्ञाद्वयमाह--तैः शिशिराद्यैस्त्रिभिरुत्तरायणमादानं च विद्यात् । आदानसंज्ञां निर्वक्ति—तच्छिशिरादित्रयं नृणां प्रतिदिनं बलमादत्त इत्यत आदानम् अंगवलविसर्गं प्रति सौम्यत्वस्य हेतुत्वेनोपादानाद्बलादानं प्रत्याग्नेयस्य हेतुत्वं ज्ञेयम् ॥ २ ॥

कया युक्त्या बलमादत्त इत्याह--

**तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः ।**
**आदित्यपवनाः सौम्यान् क्षपयंति गुणान् भुवः ।**
**तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ३**

आदित्यश्च पवनाश्चादित्यपवनास्ते तस्मिन् काले यस्मात्सौम्यान् गुणान् भुवः संबंधिनः क्षपयंति विना-शयंति । कीदृशास्ते अत्यर्थमतिशयेन तीक्ष्णाश्चोष्णाश्च रूक्षाश्चात्यर्थतीक्ष्णोष्णरूक्षाः। कस्मादेवंविधास्त इत्याह। मार्गस्वभावतो वर्त्मस्वाभाव्यात् । स च स्वभावः पर्यनुयो-गमर्हति । मार्ग उष्णांशोरुत्तरदिग्गमनम् । यतश्चादि-त्यपवना रूक्षास्ततस्तिक्तादयो रसा बलिनो भवन्ति । क्रमादित्यनेन यथासंख्यमत्र बोधयति । तेन तिक्तः शिशिरे वसन्ते कषायो ग्रीष्मे कटुको व्यवतिष्ठते न सर्वे तिक्तादय एकैकस्मिन्नृताविति । तिक्त इत्याद्यस-मासकरणं ज्ञापनार्थम् । तिक्तादिरेकैको बली भवति । द्वौ तु स्वप्रमाणावस्थितौ । नैवर्तौ पृथग्भूय तिक्तादेर्ब-लवत्त्वमित्यर्थः ॥ ३ ॥

प०—किं च—तस्मिन् काले यस्मात् तीक्ष्णोष्णरूक्षाः अतिशयेन मार्गस्वभावात् आदित्यपवनाः सौम्यान् गुणान् क्षपयन्ति अपचिन्वन्ति भुवो भूमेः सम्ब-न्धिनः । यत एवंरूप आग्नेयो रूक्षः स्वभावादादा-नाख्यः कालः तस्मिन् काले रूक्षा रसाः सम्भवन्ति। अत्रास्मिन् काले तिक्तादयो रसाः बलिनो भवन्ति क्रमाद्यथासंख्येन । शिशिरे तिक्तो—रसो ब वसन्ते कषायः, ग्रीष्मे कटुक इति । बलग्रहणे द्रमयति, न तदैते रसाः तिक्तादयो रसा उत्पद किं तर्हि स्वप्रत्ययोत्पन्ना एव तदानीं भवन्त्युत्कृ क्षयः संपद्यन्ते ॥ ३ ॥

हे०—आग्नेयत्वे हेतुमाह—हि यस्मात् तस्मिन्काले सौम्यान् गुणानादित्यपवनाः क्षपयन्ति । ननु आदित्यपव सर्वदा सन्तोऽपि तदैव कुतः क्षपयन्ति । इत्यत अ अत्यर्थतीक्ष्णोष्णरूक्षा मंदादिसौम्यगुणविपरीततीक्ष्णा गुणोद्रेकादित्यर्थः । तदैव कुत इत्याह-मार्गस्वभा स्वभावात्प्रत्यक्षत्वात्कालस्य । उक्तं हि **संग्रहे**—"काल भावमार्गपरिगृहीता" इति मार्गो मकरादिराशिपरिचि आकाशभागः यतश्चात्रास्मिन्काले तिक्तादयो रसा बलि क्रमादिति । यथासंख्येनोत्तरोत्तराश्च तेन शिशिरे ति बली, ततोऽपि वसंते कषायः, ततोऽपि ग्रं कटुक इति ॥ ३ ॥

**तस्मादादानमाग्नेयम् ॥ ४**

स०--यत एवं भूमेः सौम्यगुणहानिर्वर्धनं च रूक्षा रसानां तस्मात्कारणादादानमाग्नेयम् ॥ ४ ॥

प०--तस्मादादानमाग्नेयम् । यत एवं भूमेः सौम्य णापचयो रूक्षरसाभिवृद्धिश्चादित्यस्तीक्ष्णो जगतस्ने मादत्ते । वायुश्चधातुं शोषयति तस्मादाग्नेयमग्निदै काल आदानमिति ॥ ४ ॥

हे०—तस्मादिति—आग्नेयगुणैर्विपरीतानां सौम्यगुण हानेस्तुल्यगुणानां च तिक्तादीनां वृद्धेश्चादानमाग्नेयम् ॥

**ऋतवो दक्षिणायनम्**
**वर्षादयो विसर्गश्च यद्बलं विसृजत्ययम् ॥**
**सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः**

स०--त्रयो वर्षादय ऋतवो दक्षिणायनं भगव दिवाकरस्य दक्षिणदिग्गमनम्।स च कालो विसर्गाख्य यद्यस्माद्बलमयं कालो विसृजति ददाति दक्षिणायन ख्यस्तस्माद्विसर्गोऽन्वर्थसंज्ञः कालः । हि यस्माद विसर्गाख्ये काले सौम्यत्वात् सोमभूयिष्ठत्वात् सो बलवान् । तदाश्रितरात्रिवृद्धिदर्शनात् । हीयते रविस्त दाश्रितदिनहान्युपलब्धेर्हीनशक्तिः संपद्यते ॥ ५ ॥

प०—ऋतवो-वर्षादयः वर्षाशरद्धेमन्ताख्यास्त्रयः दक्षिणायनं सूर्यस्य दक्षिणदिग्गमनम् । स च काल

विसर्गाख्यः, सौम्यश्च यस्मादादानकालगृहीतं क्षपितं बलं सारं नृणां प्रतिदिनं भगवान् सहस्रदीधितिः दीधितिभिः पुनर्विसृजति ददात्यतो विसर्जनाद्विसर्गोऽन्वर्थसंज्ञोऽसौ कालः सौम्यत्वात् कालस्य सौम्यरूपत्वादत्र विसर्गाख्ये काले यस्मात् सोमश्चन्द्रो बलवान् उत्कृष्टशक्तिर्हीयते रविः। तदानीं हीनशक्तिर्भानुः संपद्यते, हीनशक्तित्वं चास्य प्रवृद्धैः सोमरश्मिभिः शीतस्वभावैः क्रियते मार्गस्वभावाच्च॥ ५॥

हे०—द्वितीयस्यर्तुत्रयस्य संज्ञाद्वयमाह-वर्षादयस्त्रयऋतवो दक्षिणायनम्। विसर्गश्चोच्यते विसर्गसंज्ञां निर्वक्ति-यद्यस्मादयं कालः सौम्यत्वाद्धेतोर्बलं विसृजति अतो विसर्गाख्यः। सौम्यत्वे हेतुमाह—हि यस्मादत्र अस्मिन् काले मार्गे च तद्वशात्सोमो बलवान् भवति। रविश्च हीयते—त्यज्यते प्रकृतत्वाद्बलेन, न केवलं कालमार्गवशात्॥ ५॥

मेघवृष्ट्यनिलैः शीतैः शांततापे महीतले।
स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः॥ ६

स०—कदा। महीतले भूपृष्ठे शांततापे सति। कैर्मेघवृष्ट्यनिलैः। शीतैरित्युपलक्षणार्थम्। विसर्गकालत्वान्मृदुभिः स्निग्धैरपीति। अत एव स्निग्धा रसा अम्ललवणमधुरा बलिनो भवन्ति। अत्रापि क्रमादित्यनुवर्तते। पूर्ववच्च व्याख्येयम्॥ ६॥

प०—इहास्मिन् काले विसर्गाख्ये स्लिग्धा रसास्त्रयोऽम्ललवणमधुराः स्वप्रत्ययोत्पन्ना महाभूतानामूनाधिकभावेन ते बलिनः संपद्यन्ते। कालस्य सौम्यत्वात्तथा मेघवृष्ट्यात्र वर्षणानिलैर्वातैः शीतैः शीतलैः शान्ततापेऽपगतसंतापे महीतले भूदेशे सत्यत्रापि कर्मग्रहणमनुवर्तते। तेन वर्षास्वम्लो रसो बली, शरदि—लवणो, हेमन्ते—मधुर इति॥ ६॥

हे०—शीतैर्मेघवृष्ट्यनिलैश्च वृष्ट्या विनाऽपि छायाया एव कारणत्वान्मेघानां पृथग्ग्रहणं। तथा इहास्मिन् काले अम्लाद्याः-स्निग्धरसा बलिनो भवन्ति। कस्मिन्सति तैरेव मेघाद्यैः शान्तातापे महीतले सति आदाने ह्यादित्यपवनतापितायां भुवि सौम्यगुणक्षयाद्रूक्षा रसा बलिन आसन्, विसर्गे पुनः शान्ततापायां भुवि सौम्यगुणलाभात् स्निग्धारसा बलिन इत्यर्थः। चकारेण क्रमादित्यनुवर्तते तेन वर्षास्वम्लो बली ततोऽपि हेमन्ते मधुर इति सिद्धम्। सोमवृद्ध्या, सूर्यहान्या, स्निग्धरसबलित्वेन च विसर्गस्य सौम्यत्वमिति वाक्यार्थः। कालमार्गयोः कारणत्वं संग्रहेऽप्युक्तं "कालमार्गमेघवातवर्षाभिहतप्रतापे [illegible] शशिनि चाव्याहतबले" इति। मार्गोऽत्र कर्कटादिराशिपरिच्छिन्न आकाशमार्गः, येनैव च क्रमेण [illegible] [illegible]त इत्यत आह॥ ६॥

शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः ७

स०—शीतस्वभावकाले हेमन्तशिशिराख्ये नृणामग्र्यं बलं भवति। वृष्टिश्च घर्मश्च तस्मिन्वृष्टिघर्मे प्रावृड्ग्रीष्माख्ये कालेऽल्पम्। तुरवधारणे। शेषयोः शरद्वसन्तयोर्मध्यमेव बलम्। ननु वसंत आदानकालत्वादर्कानिलोष्णरूक्षैरादित्यपवनैः शोष्यमाणेषु बलवृद्धिहेतुषु भुवः सौम्येषु गुणेषु कथं मध्यबलत्वमिति। उच्यते। वर्षादिष्वृतुषु बलमुपचितं क्रमेणैवापचीयते। यथा कृष्णपक्षे चन्द्रः। तस्माद्विसर्गकालानुवृत्तं बलं वसन्ते क्रमेणैवापचीयत इति मध्यबलत्वं युक्तम्। [illegible] शिशिरेऽग्र्यबलत्वम्। यतः [illegible] विसर्गेण [illegible] बहुपचितमतिशयेन बलं तत् शिशिरे [illegible]ऽपचीयमानमपि बलं न हीनं लक्ष्यते। यथा कृष्णपक्षादौ चन्द्रः क्षीयमाण इति युक्तमुक्तं शीतेऽग्र्यं बलमिति। वसन्ते च मध्यं बलमित्यवददिह शास्त्रकृत्॥ ७॥

प०—शीते—शीतस्वभावकाले हेमन्तशिशिराख्येऽग्र्यं श्रेष्ठं बलं भवति। अत्र शीतशब्दप्रयोगाख्ये द्वावप्येतौ हेमन्तशिशिरौ द्रष्टव्यौ। वृष्टिघर्मे वर्षाग्रीष्मे स्वल्पं बलं नृणां भवति। शेषयोः शरद्वसन्तयोः मध्यं बलं भवति॥ ७॥

हे०-शीते-हेमन्तशिशिरयोरग्र्यं [illegible] बलं, वृष्टिघर्मे प्रावृड्ग्रीष्मयोरल्पं—भागद्वयोनं, [illegible]—[illegible]वसन्तयोर्मध्यमेकभागोनं, यावद्बलं विसर्गस्यान्ते [illegible] तावदादानस्याद्ये, यावद्विसर्गस्यान्ते तावदादानस्य [illegible]। एवं यावद्विसर्गस्याद्ये तावदादानस्यान्ते [illegible] वाच्यम्। इति ऋतुनिर्णयः॥ ७॥

बलिनः शीतसंरोधाद्धेमंते प्रबलोऽनलः॥
भवत्यल्पेंधनो धातून् स पचद्वायुनेरितः॥ ८

स०—किल विसर्गाभिनवबलत्वात्पुमान् बली भवति। तस्य बलिनः पुंसो हेमंते काले शीतसंरोधाद्धेतोरनलो-

ऽग्निर्बली भवति । यतः सर्वतः स्रोतोरोधाज्जाठरोऽग्निरांतरैरेव स्वैरर्चिर्भिरभिवर्धते । वर्धितश्चासौ भुक्तमाहारं सम्यक्पचति । पक्वाच्चाहाराद्बलमभ्यधिकं जायते । हेमंते हेमंततौं । द्योतयति अस्मिन्नेव काले शीतसंरोधात् । तथा ह्यन्यर्तुजेन शीतेनाग्निसादो भवति । यथा वर्षासु । तत्र हि वृष्टिवाताभ्यां भवति शीतं न चाग्निदीप्तिः । तथा चाष्टांगसंग्रहे । वृष्टिवाताकुले त्वह्नि भोजनं क्लेदवातजित् । परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेदिति । इह पुनरनेकरूपगौरवयुक्तं भोजनं शस्यते । वक्ष्यति हि । अतो हिमेऽस्मिन्नित्यारभ्य यावद्रसान् स्निग्धान्पलं पुष्टमित्यादि । तथोक्तम् । ऊष्मा बहिः प्रतिहतो हिमशीतवातैरंतःशरीरविवरं प्रतिपद्यमानः । स्वस्थानपिंडितवपुर्भवति प्रचंडः शीतेऽनिलानलहरो विधिरिष्यतेऽत इति । तथा यद्यपि तत्र सत्त्वशरीरेत्यारभ्य यावत्तथोर्जस्करयोगजमित्यादिना ग्रंथेनाहारो युक्तिजस्यैकस्यैव बलस्य हेतुरित्युक्तो ग्रंथकृता । तथाऽपि युक्त्या निरूप्यमाणः सहजकालजयोरपि बलयोराहार एव हेतुत्वात्तथा ह्याहारं विना शरीरमेव न स्यात् । तदनया युक्त्या त्रिविधमपि बलमाहारजमपि बोद्धव्यम् । ननु यदि प्रबलोऽनलो भवति ततः किमित्याह । अल्पेंधन इत्यादि । अल्पमिंधनमाहाराख्यं यस्य सोऽल्पेंधनः सन् सोऽनलो धातून्रसादीन्पचेत् । कीदृशः वायुनेरितः वातोद्दीपितः ॥ ८ ॥

प०—हेमन्ते तामृतुचर्यामाह-बलिनः पुंसः हेमन्तेऽग्निर्बलवान् भवति हेमन्ते । चिरकालसंभृतत्वान्नृणां बलं स्थिरीभूतं, प्रारब्धे मात्र आदौ कालोऽनासादितबलस्तद्बाधितुमसमर्थस्तस्माद्धेमन्तेऽग्र्यं बलं सिद्धम् । अतएव आदावेव बलिनः शीतसंरोधादित्यत्र बलिनः एवं करोति विसर्गकादिसबलत्वात्तदा बली पुमान् तस्य बलिनः शीतसंरोधात्पक्ता बली भवति । अत्रैवं वस्तुतत्त्वम् । जाठराग्नेर्यान्यर्चींषि शरीरस्रोतोभ्यो बहिर्निर्गच्छन्ति तानि तदा शीतस्पर्शैः स्रोतःसंरोधं कृत्वाऽन्तर्नयन्त्यन्तःप्रविष्टैः स्वैरात्मीयैरर्चिर्भिः स एव जाठरानलोऽभिवर्धते । वर्धितश्चासौ जाठरानलः किंकरोत्यत आह—वायुनेरितो ध्मातोद्दीपितोऽल्पेन्धनः किंचिदाहारेन्धनरसादीन् धातून् पचतीत्यतो हेमन्ते काले सौहित्यमवश्यमेव कर्तव्यमग्निरक्षणार्थम् । तस्मिन् काले हि जाठरोऽग्निर्मात्राद्रव्यगुरुक्षमः । अन्यस्मिन् काले पुनरर्धसौहित्यत्रिभागसौहित्यं वा न तथा प्रत्यपायकरम् । यथान्यस्मिन् काले एवं वायुनेरितः तदा जाठरोऽनलो बली भवति ॥ ८ ॥

हे०—अथ ऋतूनिर्णीय ऋतुचर्यामाह—तां च शिशिराद्युद्देशेऽपि हेमन्तादिक्रमेण शिशिरचर्याया हेमन्तचर्यामूलत्वात् । तत्र सोपपत्तिं मधुरादिसेवां विधत्ते— यतो हेमन्तेऽनलः प्रबलो भवति सचाल्पेन्धनो धातून्पचेत् अतो मधुरादीन् सेवेत । प्राबल्ये हेतुमाह—शीतसंरोधात् रोमकूपानावृण्वता शीतेनार्चिषां बहिःप्रचारे वारिते पिण्डितोष्मत्वात् प्रबलः । नन्वेवं वर्षास्वप्यापद्यते इत्यत आह-बलिनः बलित्वे सति शीतसंरोधात् वर्षासु पुनर्बलहानिः । ननु प्रबलश्चेत्तत्किं स्निग्धोष्णवीर्याम्ललवणान्सेवेतेत्यत आह—वायुनेरितः शीतजनितवायुना संधुक्षितः स धातून्पचेत् ॥ ८ ॥

**अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान् ९**

स०-अस्मादनंतरोक्ताद्धेतोरल्पेंधनत्वे सति धातुपाकः स्यात् । अतः अस्मिन् हिमे शीते स्वाद्वम्ललवणाख्यान् रसान् सेवेत । नान्यर्तुसंभवे हिम इत्यस्यार्थस्य द्योतनाय हिम इत्युक्तम् ॥ ९ ॥

प०—अतस्तद्विजयार्थमतोऽस्मिन् काले हिमे हिमकाले हिमपाते रसान् स्वाद्वम्ललवणाम् सेवेत ॥९॥

हे०—अम्ललवणौ च स्निग्धोष्णवीर्यत्वाच्छीतस्य तज्जनितवायोश्च विपरीतौ । अयं विधिः किं हेमन्तमात्रे नेत्याह—हिमे शीतयुक्ते हेमन्ते विशेषे सत्यप्यस्मिन्निति पदं हेमन्त एव हिमे अयं विधिर्नान्यदेति नियमार्थम् । इदं चोपलक्षणं यस्यर्तोर्यल्लक्षणं तद्युक्त एव तस्मिन्नेव तद्विधिरिति । सुश्रुतस्तु तिक्तकटुकसेवामप्याह—"हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम् । ससर्पिस्तैलमहिममशनं हितमुच्यते ॥" साप्युचिता चीयमानकफप्रत्यनीकत्वात् । हेमन्ते हि वातकफौ चीयेते । यदाह खारणादिः—पित्तं शाम्यति, तच्छैत्याद्वायुः श्लेष्मा च चीयत इति ॥ ९॥

**दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ।**
**अवश्यकार्यं संभाव्य यथोक्तं शीलयेदनु १०॥**

स०—एतर्हि एतस्मिन्काले बुभुक्षितः प्रातरेव प्रत्युषसि नान्यकाले यत्किंचिद्दिनातिक्रांतौ सत्यामवश्यं कार्यं मूत्रोत्सर्गादिकं दिनचर्योक्तं च संभाव्य संपाद्य यथोक्तं यथानिर्दिष्टमनु पश्चाद्वातघ्नतैलाभ्यंगादिकं शीलयेत् । यद्यपि बुभुक्षितोऽवश्यकार्यं संभाव्य यथोक्तं शीलयेदित्युक्तं तथापि बुभुक्षितेन न तथान्यत्कार्यं यथा भोजनम् तथा चोक्तम्—"आहारकाले संप्राप्ते यो न भुंक्ते बुभुक्षितः । तस्य सीदति कायाग्निर्निरिंधन इवानलः॥" इति। तस्मादौचित्याद्बुभुक्षितेनाहारः कार्य इति वेद्यम्। नन्वन्यस्मिन्नपि काले बुभुक्षितस्यैवाहारानुज्ञानाद्बुभुक्षितग्रहणं न कार्यम् । युक्तमाह भगवान् । किंत्वस्मिन्काले जाठराग्निरत्यग्निच्छायानुकारी भवति । ततोऽस्य जाठराग्नेरिवोपचारो युक्तः । यथा—"मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् । निरिंधनोंऽतरं लब्ध्वा यथैनं न विपादयेत् ॥" इति अबुभुक्षितस्यैव भोजनाधिकारित्वमिति भ्रांतिनिरासायेह बुभुक्षितग्रहणम् । निशानां दैर्घ्यादिति विशिष्टकालोपलक्षणार्थं कृतम् । यदात्र हेमंते शर्वर्यो दीर्घा जायंते तदैव विधिः सर्वोऽनुष्ठेयो न प्रारब्धमात्र एवास्मिन्निति । नन्वत्र सेवेत शीलयेद्भजेदित्येकार्थाभिधायीनि बहूनि क्रियापदानि किं निर्दिष्टान्येकेनैवार्थाधिगतेः । अत्र ब्रूमः । कार्यान्तरसूचनार्थमेतत्पदत्रयम् । तथाहि । अतो हिमेऽस्मिन्सेवेतेत्यत्र यः सेवेतशब्दः सः इदं द्योतयति । स्वाद्वम्ललवणरसाः पवनविजयार्थमस्मिन् काले नितरामुपयोक्तव्याः । न कादाचित्क एषामस्मिन्नृतावुपयोगो विधेय इति । अत एव वातघ्नतैलाभ्यंगादेः पृथगेषां रसानामुपन्यासः। यथोक्तं शीलयेदित्यत्र यः शीलयेदित्येष शब्दः स वातघ्नतैलादेः सर्वस्य तुल्यकक्षतां द्योतयति । तथा प्रावाराजिनेत्यादौ यो भजेच्छब्दः स सकलस्याहारविहारशीलनस्य शयनविधेश्च तुल्यतां प्रथयति । तथा च वक्ष्यति—"आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः । शरीरं धार्यते नित्यमागारमिव धारणैः ॥" इति १०

प०—निशानां रात्रीणां दैर्घ्यात् दीर्घभावात् एतर्हि अस्मिन्काले प्रातरेव प्रत्युषस्येव बुभुक्षितः सजात इव भोक्तुमिच्छन् नरोऽवश्यकार्यं मलोत्सर्गशौचविधिं दन्तधावनगण्डूषादिकम् । यथोक्तं दिनचर्याध्यायोक्तम्। सम्भाव्य निष्पाद्य कृत्वाऽनु पश्चात् ॥ १० ॥

हे०—दिनचर्याविहितस्याभ्यङ्गादेर्विशेषमाह—एतर्हि एतस्मिन्काले अभ्यंगादि शीलयेत् । कदा प्रातः किमवश्यकार्यं बाधित्वा नेत्याह-यथोक्तमवश्यकार्यं शौचादिकं संभाव्य सम्यक् कृत्वा किमजातान्नपानेच्छो नेत्याह--बुभुक्षित एव । ननु कथं प्रातर्बुभुक्षित इत्यत आह--निशाने दैर्घ्यात् संभाव्येत्यनेन पश्चादर्थे सिद्धे नैरंतर्यार्थमनुग्रहणम् ॥ १० ॥

**वातघ्नतैलैरभ्यंगं मूर्ध्नि तैलं विमर्दनम् ।**
**नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः ११**

स०—वातघ्नतैलैरभ्यंगं शीलयेत् । तैलस्य सर्वस्यैव वातघ्नत्वाद्वातघ्नेति विशेषणमतिशयप्रतिपादनार्थम् । तेन बलातैलादिभिरिति बोध्यम् । मूर्ध्नि तैलं शिरोऽभ्यंगादि । विमर्दनं शरीरसंवाहनमेतदौचित्यादभ्यक्तः सन् शीलयेत् । कुशलैस्तद्विद्भिः सार्धं नियुद्धं बाहुयुद्धं शीलयेत् । पादाघातं पादेन विमर्दनम् । युक्तित इत्यनेनार्थशक्त्यैव शीलनं द्योतयति । बाहुयुद्धपादाघातयोश्चानभ्यक्तस्यैव शीलनं युक्तम् ॥ ११ ॥

प०—वातघ्नतलैर्वातव्याधिचिकित्सानिर्दिष्टैरभ्यङ्गम्रक्षणं शीलयेत् अभ्यस्यात् । तथा मूर्ध्नि शिरसि तैलं शीलयेत् । विमर्दनं विशेषेणाङ्गस्य कराभ्यां पीडनम्। नियुद्धं बाहुयुद्धं कुशलैरभिज्ञैः कृताभ्यासैः सार्धं सह तथा पादाघातं पादाभ्यां मर्दनं युक्तितो युक्त्या यथा त्वङ्गदूषणं रोमादिविघातो नोत्पद्यते ॥ ११ ॥

हे०—"अभ्यङ्गसेकपिचवो वास्तिश्चेति चतुर्विधम्" मूर्द्धतैलमिति । अभ्यंगस्य पृथगुपादानमितरावयवार्थं, विमर्दनं--कराभ्यां पीडनम्, अभ्यङ्गमूर्द्धतैलविमर्दनानि वातघ्नतैर्बलातैलादिभिः शीलयेत् । नियुद्धं बाहुयुद्धं, कुशलैर्मल्लैः पादाघातं--पदाभ्यां मर्दनं युक्तितः मात्राद्यनतिक्रमेण ॥ ११ ॥

**कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।**
**कुंकुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ १२ ॥**

स०—कषायेण रोध्रादिनाऽपहृतोऽपनीतः स्नेहो यस्य स एवम् । ततोऽनंतरं यथाविधि शास्त्रोदितेन विधानेन स्नातः । कुंकुमेन काश्मीरेण प्रदिग्धोऽनुलिप्तः । दर्पः कस्तूरिका तेन सह वर्तते यत्कुंकुमं तदेवम् । तथाऽगुरुणा जोंगकेन धूपितः ॥ १२ ॥

प०—ततोऽनन्तरमभ्यङ्गादीन् कृत्वा कषायैर्मसूरप्रभृतिभिरपहृतो निवारितः स्नेहो यस्य स तथाविधः। अनन्तरं स्नातो यथाविधि विध्यनतिक्रमेणोष्णाम्बुनाधःकायस्य परिषेक इत्यादिना दिनचर्याध्याये-ऽोक्तेन विधिना अनन्तरं प्रदिग्ध उपलिप्तांगः कुङ्कुमेन सदर्पेण सकस्तूरिकेण दर्पो नाभिश्च कस्तूरीति वचनात् । अगुरुणा धूपितोऽगुरुधूपितः पुमान् ॥ १२ ॥

हे०—उद्वर्तनादेर्विशेषमाह—कषायापहृतस्नेहादिको भूत्वा रसादीन् भजेत् । कषायेणापहृतः स्नेहः स्नेहापहरणमात्रमुद्वर्तितः न त्वन्यकालवदुत्पादितरौक्ष्यः यथाविधि स्नातः, विधिश्चात्र शीतकालोचितत्वात् सर्वाङ्गानामुष्णोदकेन स्नानम्।उक्तं च चरकाचार्येण "अभ्यङ्गोत्सादने मूर्द्धतैलं जेताकमातपम्" जेताकं सर्वांगोष्णोदकस्नानमिति बाष्पचंद्रः । सदर्पेण सकस्तूरिकेण प्रदिग्धोऽनुलिप्तः ॥ १२ ॥

**रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम्।**
**गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः॥**
**नवमन्नं वसां तैलं शौचकार्ये सुखोदकम्।**
**प्रावाराजिनकौशेयप्रवेणीकौचवास्तृतम् ॥**
**उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ।**
**युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा १३॥**

स०—रसान्मांसरसान् स्निग्धान् भजेत् । मांसरसानां स्निग्धत्वेऽपि स्निग्धानिति विशेषणमतिशयद्योतनार्थम्। पलं मांसं पुष्टं मेदुरं भजेत् । तथा गुडस्येदं गौडं तन्मद्यम् । तथाऽच्छसुरां सुरामंडं मदिरां च भजेत् । अन्नेन कषायद्र०यैश्च या क्रियते सा सुरा भण्यते । ननु द्विधैव सुरा सेव्यत्वेनेहाभीष्टा तत्सुराशब्द एव निर्देष्टुं न्याय्यः । तस्मिन्हि सामान्यपदे निर्दिष्टे द्विधैव सुरा निर्दिष्टा भवति । सत्यमेतत् । किंत्वच्छसुरां नितरां भजेन्न तथा सुरामिति ज्ञापनार्थं द्वयोरुपादानम् । अत एवाच्छसुरामिति पूर्वं निर्दिष्टम्। गोधूमेत्यादि । गोधूमश्च पिष्टं च माषश्च इक्षुश्च क्षीरं च तान्येवम् । गोधूमपिष्टमाषेक्षुक्षीरेभ्य उत्थानं यासां विकृतीनां ता एवम् । उत्पूर्वात्तिष्ठतेः सुपीति योगविभागाद्भावे कः। उदः स्थास्तंभोः पूर्वस्येति सस्य तकारः । गोधूमपिष्टमाषेक्षुक्षीरोत्थाश्च ता विकृ यश्च ताः शुभा रम्या भजेत् । तथा नवमपुरा मन्नं तथा वसां भजेत् । शुद्धमांसस्य यः स्नेहः वसा परिकीर्तिता । तथा तैलं भजेद्भक्षयेत् । अ गस्तु प्रागनुज्ञात एव । शौचकार्ये शौचक्रिय सुखोदकमुष्णोदकं भजेत् । प्रावारः कार्पासो रोमव घनः पटस्तूलपटकादिः । अजिनं सुखस्पर्शरोमचर्म कौशेयं पट्टवसनम् । प्रवेणी सूचीबाणाख्यो वस विशेषः । कौचवं रांकववस्त्रभेदः । तवरक इ न्ये । एतैरास्तृतं दत्तप्रतिच्छदपटं शयनं भजेत् कीदृक् शयनं भजेत् । उष्णस्वभावै रोमशिक लिकाप्रायैः प्रावृतः प्रकर्षेणाच्छादितः । तथा अ किरणान्भजेत् । कथम् । युक्त्या सम्यग्योगलक्षणय अतिसेविता हि ग्लान्यादीन्कुर्युः । तथा स्वेदं भजेत् युक्त्यैवेत्यत्रापि योज्यम् । अतिसेवितो हि स्वे ग्लान्यादीन् जनयेत् । पादत्राणं च पादुकादि सर्वदा भजेत् ॥ १३ ॥

प०—मांसरसान् स्निग्धान् घृतादिसंयुतान् । प मांसं पुष्टं भृशं शीलयेत् तथा गौडं गुडकृतंमद्यम् अच्छ सुरांसुरामपरं घनां शीलयेत्।तथा गोधूमविकृती मो काद्याश्च शीलयेत्। शुभा हृद्याःपिष्टविकृतीः शालि ष्टविकृतीः,पूपलिकाद्या माषविकृतीर्भक्ष्कशरादिका इक्षुविकृतीः-पानकगुडाद्याः, क्षीरविकृतीः-किलाट धिकूर्चिकाद्यास्ताः सर्वाः शीलयेत् । तथा-नवमन्नं वर्षोषितम् । वसां—शुद्धमांसस्यामेदुरस्य पक्वस्योप यो दृश्यते स्नेहः स वसाशब्दवाच्यः । तथा आगमः-"शुद्धमांसस्य यः स्नेहः सा वसा परिकी र्तिता ।" तां शीलयेत् । तैलं तिलोद्भवम्। यथा-शौच कार्ये स्नानादिके सुखोदकं सुखोष्णं पानी शीलयेत्।प्रावारादिभिरावृतःप्रच्छादितः।प्रावारं-वर्ण कम्बलम् । अजिनं-चर्म। काशेयं-पट्टवस्त्रम् । प्रवेणी सूचीधानम् । कौचवो-राङ्कवः । उष्णप्रायैः-रोमसि कास्वभावैर्लघुभिः तनुभिः प्रावरणैः प्रावृतः प्रकर्षे छादितः पुमान् शयनं भजेत् । तथा युक्त्या प्रयोगेण भ्रमादिं परिहरन् अर्ककिरणानादित्यरश्मीन् भजेत तथा स्वेदं तापादिभेदेन यथायोग्यं चतुर्विधमपि भजेत् । पादत्राणं—पादत्रं सर्वस्मिन् कालेऽस्मिन्नृतौ भजेत् इति ॥ १३ ॥

हे०-- रसान्-मांसरसान्, स्निग्धान्-घृतादिसंस्कृतान्, पलं-मांसं, पुष्टं-मेदुरं, गौडं-गुडकृतं मद्यम्, अच्छसुरां-सुरामण्डं, सुरां-घनसुराम्, अच्छसुरायाः पृथग्ग्रहणमतिशयभजनार्थं गोधूमाद्युत्था गोधूमादिकृता मोदकाद्याः। पिष्टं-शालिपिष्टं, शुभा-हृद्याः, नवमनीतक्रांतवत्सरम्, अन्नं-धान्यं, वसां-मांसस्नेहं, रसादितैलांतं भोजनोपयोगि। सुखोदकं-कवोष्णमुदकं तच्च शौचकार्ये पाने तु शीतमेव। प्रावारः-कार्पासरोमवान् घनः पटः, अजिनं-चर्म, कौशेयं-कृमिकोशोत्थं, प्रवेणी-सूचीवाणाख्यं वस्त्रं, कुथकः-कंबलः। उष्णस्वभावैर्लघुभिर्वस्त्रैः प्रावृतः अर्ककिरणान् स्वेदं च युक्त्या सम्यग्योगेन भजेत्। पादत्राणं सर्वदा बहिश्चरणं विनापि बहिश्चरणे तु दिनचर्यायामुक्तमेव ॥ १३ ॥

**पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः।**
**हरंति शीतमुष्णांग्यो धूपकुंकुमयौवनैः ॥१४॥**

स०-ऊरू च स्तनौ च श्रोणिश्च ऊरुस्तनश्रोणि। पीवरं पीनमूरुस्तनश्रोणि यासां ता एवंभूताः प्रमदा विलासिन्यः शीतं हरंति नुदंति। पीनत्वेनातिकार्श्यमत्रनिषिध्यते। तथा चाह। ग्राम्यधर्माधिकारे त्यजेदतिकृशामिति। किंभूताः। सह मदेन यौवनोद्भूतेन सुरादिपानजेन कामोद्रेककारिणा वा वर्तंते समदाः। तथा प्रिया वल्लभाः शीतं हरंति। किंभूताः उष्णांग्यो धूपकुंकुमयौवनैरगुर्वादिधूपेनोष्णांग्यः। तथा कुंकुमानुलेपनेनोष्णांग्यः। तथा यौवनोष्मणा सहजेनोष्णांग्य इति योज्यम् ॥ १४ ॥

प०—प्रमदा नार्यः समदा सह मदेन वर्तमाना मदयुक्ताः। प्रिया-वल्लभाः। धूपादिभिरुष्णाङ्ग्यः शीतं हरन्ति। ऊरू च स्तनौ च श्रोणी च ताः पीवरा उपचिताः पीना यासां तास्तथाविधाः। ऊरुः-जानुन ऊर्ध्वं शरीरदेशः। श्रोणी-कटिः। यौवनं-प्रत्यग्रवयस्त्वम् ॥ १४ ॥

हे०—शीतापहंतृत्वकथनद्वारा स्त्रासेवां विधत्ते—प्रमदाः स्त्रियः यौवनोत्थं मद्यजं च मदं बिभ्राणाः ॥१४॥

**अंगारतापसंतप्तगर्भभूवेश्मचारिणः।**
**शीतपारुष्यजनितो न दोषो जातु जायते १५**

स०-अंगाराणां तापोऽगारतापस्तेन संततं च तद्गर्भेऽभ्यंतरे भूवेश्म च तत्तस्मिंश्चरंति नित्यं यस्तस्यांगारतापसंततगर्भभूवेश्मचारिणः पुंसो यतः शीतपारुष्यजनितो दोषो दुःखं न जातु कदाचिज्जायते ततोऽगारतापसंततगर्भभूवेश्मचारी स्यादिति भावः ॥ १५ ॥

प०—अङ्गाराणां तापोऽङ्गारतापः तेन सन्तप्तं गर्भभूवेश्म तदङ्गारतापसंतप्तगर्भभूवेश्म तत्र चरणं शीलनं तस्य जन्तोः शीतपारुष्यजनितःशीतपरुषभावेनोत्पन्नो दोषो जातु कदाचन न जायते उत्पद्यते। गर्भगृहं यत् गृहस्याभ्यन्तरे गृहं, भूमिगृहं यद्भूमिं विखन्य क्रियते इति ॥ १५ ॥

हे०—शीतापहंतृत्वकथनद्वारा निवातोष्णगृहसेवां विधत्ते—अङ्गाराणां तापेन संतप्तं यद्वेश्म, यच्च गर्भवेश्म—गृहान्तर्वर्तिगृहं, यच्च भूवेश्म—भूम्यन्तर्वर्तिगृहं तेषु यश्चरति स तथा। शीतेन यत्पारुष्यं तज्जनितो दोषो जातु कदाचित्तस्य न जायते तस्मात्तानि भजेदित्यर्थसिद्धम् ॥१५॥

**अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः।**
**तदा हि शीतमधिकं रौक्ष्यं चादानकालजम्१६**

स०-अयमेव हैमंतो विधिः पूर्वोक्तः शिशिरे च विशेषतोऽतिशयेन कार्यः। कुत इत्याह। यस्मात्तस्मिन् काले शीतमधिकं भवति। कालस्वाभाव्यात्। तथा आदानकालाज्जातमादानकालजं च रौक्ष्यं भवति। ततो हेतुद्वयाद्विशेषेण हैमंतिको विधिः सेव्यः। हेमंते रसान् स्निग्धान् शीलयेदित्युक्तम्। शिशिरे तानतिशयेन शीलयेत्। एवं सर्वेष्वपि हैमंतिको विधिर्योजनीयः। आदानकालजमित्यनेनैतद्द्योतयति। आदानकाल एव रौक्ष्यस्य कारणं नान्यत्। अत एव हेमंते शीतेऽपि रौक्ष्यं नास्त्येवेति। आदानस्य च प्रारंभमात्रत्वम्। एवं शिशिरस्य संभव इति शिशिरे किंचिदेव रौक्ष्यं वेद्यम्। ननु यथा रौक्ष्यमादानकालजं तथौष्ण्यमपि। तथा चोक्तम्। तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा इति। एवं चौष्ण्यसद्भावाच्छीतस्य हेमंततो हानिः प्राप्ता न त्वाधिक्यम्। कथं तदा हि शीतमधिकमिति। ब्रूमः। रौक्ष्यस्य द्वौहेतू। एकस्तावद्भगवद्दिवाकरकरैर्जगतः स्नेहादानम्। द्वितीयस्त्वग्रेः कालः। तदेवं रौक्ष्येणोभयहेतुजेन शिशिरे काले वाताः शीतस्वभावा आहिताधिकशक्तयो जायंते हैमंतेभ्यो मारुतेभ्यः। तथावि-

घाश्चोष्णेनादानकालप्राधान्यादप्राप्तबलेन शिशिरे नाभिभूयंते । अनभिभूताश्च शीतस्वभावत्वाच्च शीतमेव वर्धयंति । अतो युक्तं शीताधिक्यं शिशिर इति १६ ॥

प०—अथ शिशिरचर्यामाह—अयमेव है—मन्तिको विधिः शिशिरेऽपि काले विशेषतोऽतिशयेन कार्यः करणीयः । तेन रसान् स्निग्धरसान् हेमन्ते शीलयेदित्युक्तं, शिशिरे तेनातिशयेन स्निग्धादीन् शीलयेदेवमन्यदपि च यत्किंचित्सेवनीयत्वेनोक्तं तत्तस्मिन् काले अतिशयीकृत्य सर्वं शीलनीयम् । तदा तस्मिन् काले यस्माद्धेमन्तकालादप्याधिकं शीतं भवति । कालस्वभावात्तथा रौक्ष्यं रूक्षत्वम् आदानकालजं तदोत्पन्नं किञ्चित् संभाव्यमिति ॥ १६ ॥

हे०—शिशिरचर्यामाह—अयं हेमन्तोक्तः स्वयुक्त्या न्यूनाधिकप्रयोगनिषेधार्थमेवशब्दः विशेषतोऽत्यभ्यासेन । हि यस्मात्तदा तस्मिन्कालेऽधिकं शीतमादानकालजं रौक्ष्यं च चकाराद्वातकोपबलक्षयौ च । यथोक्तं-खारणादिना—"स्वभावशैत्याद्रौक्ष्याच्च वातकोपाद्बलक्षयात् । विधिर्विशेषात्स्निग्धोष्णः शिशिरे हैमनो मतः ॥" इति । वातकोपः सुश्रुतेनोक्तः—"स वायुः शिशिरे कोपं यात्येवोपचयं कफः ।" इति ॥ १६ ॥

संप्रति वसंतचर्यां विवक्षुरिदमाह ।

**कफश्चितो हि शिशिरे वसंतेऽर्कांशुतापितः ।**
**हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् १७**
**तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ।**
**व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्बणम् ॥**
**स्नातोऽनुलिप्तः कर्पूरचंदनागुरुकुंकुमैः ॥१८॥**

स०—यस्मात् शिशिरे मधुरस्निग्धादिनाऽऽहारेण कालस्वाभाव्याच्च श्लेष्मा संचितोऽतिशयेन स्त्यानत्वादतिकुपितो वसंते ऋतावर्कांशुतापितः सूर्यप्रभाभिर्विलायितो द्रवस्वरूपत्वाज्जलमिव विपरीतं जाठराग्निं हत्वा हि यस्माद्रोगान्विकारान् कुरुते जनयति । अतोऽस्मात्कारणात्तं कफं त्वरया शीघ्रमेव जयेत् । दोषानिति केचित्पठंति । अर्कतापित इत्यनेनैव सिद्धे अंशुशब्दोऽत्र रश्मीनां पटिमानं सूचयति न तथा शीते । तत्र हि धूमधूम्ररजोमंदा इत्यधिरोगकैर्वर्जयेत् । तीक्ष्णैर्वमननस्यविरेकादिभिरुपक्रमेत् । तथा लघूनि रूक्षाणि यानि भोजनानि तैश्च । तथा व्यायामश्चोद्वर्तनं आघातश्च तैश्च कफं जयेदिति । चशब्दो लुप्तनिर्दिष्टः । ततः कफमुल्बणमुद्धतं जित्वाऽनंतरं स्नातोऽनुलिप्तः समालब्धः कर्पूरचंदनागुरुकुंकुमैः ॥१७॥ १८

प०—वसन्तचर्यामाह-हिशब्दो यस्मादर्थे।शीतसामान्याद् द्वावपि शीतस्वभावौ हेमन्तशिशिरं गृहीतौ बोद्धव्यौ । कफः—श्लेष्माचितः संचितः यतः शीतकाले शीताख्ये शिशिरे काले च स्निग्धोपयोगात् । तथा कालजेन शीतेनाधिकेन स्त्यानीभूतोऽपि वसन्तसमयं पुनः प्राप्य रविकरसन्तापेतापितो विलीनविग्रहतां प्रापितः, उदकमिवाग्निप्रतिपक्षो भवत्यस्माज्जाठराग्निं हत्वा निर्वाप्य रोगान् कुरुते जनयतीत्यतः प्राप्तमात्र एव वसन्ते तत्क्षशीघ्रं जलमिव प्रवाहयितुं सेतुभेदादि प्रख्यैस्तीक्ष्णैर्वमनाद्युपक्रमैर्जयेदुपक्रमेत्तीक्ष्णद्रव्यनिष्पादितैः श्लेष्मप्रतिपक्षे तथा लघुरूक्षैर्भोजनैस्तिक्तकषायप्रायैरन्नैस्तथा व्यायामादिभिः श्लेष्माणमुद्धतमुल्बणं जित्वा निर्घात्यानन्तरं स्नातः कर्पूरादिभिरनुलिप्तः स्यात् प्रदिग्धाङ्गः ॥ १७ ॥ १८ ॥

हे०—अथ वसन्तचर्या—सा च द्वेधा शोधनी शमनी च तत्र चयपूर्वके प्रकोपे शोधनी,अचयपूर्वके शमनी । तत्र कृतायां पूर्वर्तुचर्यायां पूर्वेणर्तुनाचितस्य दोषस्योत्तरेण यः प्रकोपः स चयपूर्वकः स एवापथ्यजः पूर्वर्तुसेवितापथ्यजातत्वात्, यस्तु कृतायां तस्यां पूर्वेणाचितस्योत्तरेण प्रकोपः सोऽचयपूर्वकः । स एव पथ्यजः पूर्वर्तुसेवितपथ्यजातत्वात् उक्तं च—"दोषप्रकोपो द्विविधः पथ्यापथ्यनिमित्तजः तत्रापथ्यनिमित्तो यः स संशोधनमर्हति ॥ पथ्यजः शमनीयश्च प्राय आगन्तुजश्च यः ।" इति । तत्र संशोधनविधिस्ते-यस्माच्छिशिरे चितः कफो वसन्ते सूर्यरश्मिभिर्द्रवीकृतः सन् जलमिव प्रत्यनीकत्वात् वह्निं हत्वा रोगान्करोति अतस्तं चितम् अकुपितं कफं वसन्तारम्भ एव तीक्ष्णद्रव्यकृतैर्वमननस्यधूमगण्डूषाद्यैः शोधनैर्जयेत् । तथा लघुरूक्षैस्तिक्तकटुकषायैः संसर्जनक्रमेण भोजनैश्च शिशिरशब्देन शीतपर्यायेण शिशिरहेमन्तयोर्ग्रहणं द्वयोरपि कफचयात् । यदाह-खारणादिः—"हेमन्ते निचितः श्लेष्मा शिशिरेऽपि न कुप्यति । आहारैश्चापि सुस्निग्धैर्भृशमेवोपचीयते॥" इति। उल्बणं श्लेष्माणं व्यायामाद्यैर्जित्वा स्नात

कर्पूराद्यैरनुलिप्तः पुराणयवादीन् भुञ्जान आसवादीन् पिबेत्। प्रकोपे प्रकृतेऽत्युल्वणग्रहणमचयपूर्वकं प्रकोपार्थम्, आघातः पद्भ्यां मर्दनं, कफग्रस्तस्याभ्यंगनिषेधाद्रूक्षा एव व्यायामादयः स्नानशील इति वचनात्प्राप्तेऽपि स्नाने। स्नात इति श्लेष्मकालीनप्रातःस्नाननिषेधार्थं व्यायामादीन्कृत्वैव स्नायान्न पूर्वमित्यर्थः ॥ १७ ॥ १८ ॥

**पुराणयवगोधूमक्षौद्रजांगलशूल्यभुक् ।**
**सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान् ।**
**प्रियास्यसंगसुरभीन् प्रियानेत्रोत्पलांकितान् ।**
**सौमनस्यकृतो हृद्यान्वयस्यैः सहितः पिबेत् ।**
**निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान् ॥ १९ ॥**

स०—तथा पुराणं च तद्यवगोधूमं च तथा क्षौद्रं माक्षिकं तथा जांगलं च तच्छूल्यं भटित्रं च तत्तानि भुंक्ते पुराणयवगोधूमक्षौद्रजांगलशूल्यभुक् । शूल्य इति शूलात्पाक इति यः। एवंविधः सन् वयस्यैर्मित्रैः सहित आसवादीन् पिबेत् । किम्भूतान् । निर्गदान् निर्दोषान् । पिबेदिति वक्ष्यमाणेन संबधोऽत्र दीपकत्वात् । आसवो यो द्रव्याण्यासुत्य क्रियते । उक्तं च--"मद्याकाराधिकद्रव्यमदिराद्यैः कृतस्तु यः। सोऽरिष्टः स्यादासवस्तु द्रव्याण्यासुत्य यः कृतः ॥" इति। सीधुरिक्षुरसोद्भवः । मार्द्वीकं मृद्वीकारसोद्भवम् । माधवो मधुना संस्कृतः । किंभूतानासवादीन् । सहकाररसोन्मिश्रान् प्रियया आस्वाद्य किंचित्पीत्वाऽर्पितान् ढौकितान् । तथा प्रियास्यसंगेन सुरभीन् सुगंधीन् । तथा प्रियानेत्राण्येवोत्पलानि तैरंकितान् संजातशोभान् । तथा सौमनस्यकृतश्चित्तप्रसादकृतः । तथा हृद्यान् हृदयाय हितान् ॥ १९ ॥

प०—यवाश्च गोधूमाश्च यवगोधूमाः।पुराणाश्च ते यवगोधूमाश्च पुराणयवगोधूमाः । जाङ्गलानां शूल्यं जाङ्गलशूल्यम्, शूले संस्कृतं शूल्यम् । पुराणयवगोधूमाश्च क्षौद्रं च जाङ्गलशूल्यं च ताभिर्यो भुङ्क्ते स आसवादीन् पिबेत् । सहकारश्चूतस्तस्य रसेनोन्मिश्रान् अधिवासितांस्तथा प्रियया कान्तयाऽऽस्वाद्य पीत्वार्पितान् दत्तान् । तथा प्रियाया आस्यसङ्गेन मुखसंश्लेषेण सुरभीन् सुगन्धान् । प्रियाया नेत्रे प्रियानेत्रे ते एवोत्पले प्रियानेत्रोत्पले ताभ्यामङ्कितान् चिह्नितान् पिबेत् । शोभनस्य मनसो भावः सौमनस्यं शोभनचित्तत्वं तत् कुर्वन्ति एतान् सौमनस्यकृत आसवादीन् पिबेत् । तथा हृद्यान् हृदयाह्लादकारिणः तथा वयस्यैः सहितः सुहृद्भिः सहितस्तान् पिबेत् । निर्गदान् निर्वृत्तो गदात् निर्गतगदान्निर्दोषान्, वर्णगन्धरसरूपसंपन्नानासवादीन् मद्यविशेषान् पिबेत् । आसुत्या ये क्रियन्ते ते आसवाः । निःक्वाथ्यद्रव्याणि ये क्रियन्ते तेऽरिष्टाः । सीधुस्त्विक्षुरसेन तु । मृद्वीकाया इदं मार्द्वीकम् । माधवं—मधुना कृतम् ॥ १९ ॥

हे०—पुराणत्वं यवगोधूमक्षौद्राणां, जांगलं-मृगादिमांसं तस्य शूल्यं-भटित्रम्, सहकारोऽतिसुराभिराम्रः तस्य रसः तत्फलवृन्तनिर्यासः तेन उन्मिश्रान् अधिवासितान्, प्रियया रसविशेषज्ञानार्थं स्वयमास्वाद्यार्पितान्, गन्धविशेषज्ञानार्थं संगं गतेन सहजसुरभिणा प्रियामुखेन सुरभीकृतान्, वैमल्यादिज्ञानार्थमवलोकयन्त्याः प्रियायाः प्रतिबिम्बिताभ्यां नेत्राभ्यामुत्पलैश्च साक्षान्निक्षिप्तैरंकितान्, सौमनस्यकृतः-परिणामेन मनःप्रशांतिकरान्, हृद्यानास्वादे निर्गदान् निर्दोषान्; अक्वथितैरौषधैः कृतं मद्यमासवः, क्वथितैररिष्टः, इक्षुरसेन सीधुः, द्राक्षारसेन मार्द्वीकं, मधुना माधवः ॥ १९ ॥

**शृंगबेरांबु सारांबु मध्वंबु जलदांबु वा ॥ २० ॥**

स०—तथा शृंगबेरांबु शुंठीक्वथितजलं पिबेत् । तथा सारः असनचंदनादिजस्तेन क्वथितमंबु पिबेत् । तथा मधुना युक्तमंबु मध्वंबु । जलदेन मुस्तया च क्वथितमंबु पिबेत् । वेति समुच्चये ॥ २० ॥

प०—तथा शृङ्गबेराम्बु—शुण्ठितोयम् । साराम्बु दाडिमफलसारतोयम्, असनादिसारसंस्कृतं वा जलम् । मध्वम्बु—माक्षिकोदकम् । जलदाम्बु—मुस्तैरुत्क्वथितं तोयं वा पिबेत् ॥ २० ॥

हे०—शृङ्गबेराम्बु-शुण्ठ्या क्वथितं जलम्, असनादिसारैः साराम्बु, मुस्ताभिर्जलदाम्बु, मधुमिश्रं जलं मध्वम्बु, अनेकद्रवविधानं यस्य यत्सात्म्यं तत्तेन सेव्यमित्यर्थः ॥ २० ॥

**दक्षिणानिलशीतेषु परितो जलवाहिषु ।**
**अदृष्टनष्टसूर्येषु मणिकुट्टिमकांतिषु ॥**
**परपुष्टविघुष्टेषु कामकर्मांतभूमिषु ।**

**विचित्रपुष्पवृक्षेषु काननेषु सुगंधिषु ।**
**गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ २१ ॥**

स०—काननेषूपवनेषु स्थितो मध्याह्नं गमयेदतिवाहयेत् । अह्नो मध्यो मध्याह्नः । संख्याविसायेत्यादिज्ञापकात्पूर्वापरेत्यादिना एकदेशिसमासः । अह्नोऽह्न एतेभ्य इत्यह्नादेशः ।कथम् । गोष्ठ्यां क्रीडायां कथा गोष्ठीकथास्ताभिश्चित्राभिः कमनीयाभिर्व्यवहारसंबंधिनीभिरित्यर्थः । कीदृशः सन् । सुखी रागद्वेषादिरहितः । किंभूतेषु काननेषु दक्षिणदिक्प्रवृत्तैरनिलैः शीतानि तेषु दक्षिणानिलशीतेषु । तथा परितः समंताज्जलं नित्यं वहंति यानि तेषु । आभीक्ष्ण्ये णिनिः । तथा क्वचित्प्रदेशेऽदृष्ट ईषद्दृष्टः क्वचिदतिघनत्वान्नष्टो न दृश्यते सूर्यो येषूपवनेषु तान्येवं तेषु । तथा मणीनां वज्रमरकतादीनां कुट्टिमानि विशिष्टा भुवस्ताभिः कांतिः शोभा येषां तान्येवं तेषु । तथा परपुष्टैः कोकिलैर्विघुष्टेषु कृतशब्देषु तथा कामस्य कर्मान्ताः कामकर्मांता मदनव्यापाराः । अंतशब्दोऽत्र प्रशंसावचने । यथोद्भटस्य वचनम् । वनांतदेवतावेण्य इति । कामकर्मांतनिमित्तभूमयो येषां वनानां तान्येवं तेषु । विचित्राणि नानारूपाणि पुष्पाणि येषां ते तथाविधा वृक्षा येषां तान्येवं तेषु । सुष्ठु गंधो येषां तेषु । गंधस्येदितीत्समासांतः । अस्मिन्काले कफोपचयदोषभयात् ॥ २१ ॥

प०—काननेषूपवनेषूपविष्टः सुखी भूत्वाऽऽतुर उत वा रोगाद्यनुपहतसमा गमयेदतिवाहयेत् । कथं गोष्ठीकथाभिश्चित्राभिः गोष्ठ्यो गांधर्वमृदङ्गादिभिः कृत्वा कथाः काव्यकथाः । दक्षिणानिलशीतेषु दक्षिणा अनुकला वायवो येषु । न पांसुशर्करासिकतावाहिनस्तैस्तथाविधैरनिलैः शीतानि यानि काननानि तेषु तथाविधेषु काननेषु । अथवा दक्षिणदिक्प्रवृत्तैरनिलैः शीतेषु तथा परितः समन्तात् जलवाहिषु जलवहनशीलेषु । तथा अदृष्टनष्टसूर्येषु—अदृष्टः क्वचित्प्रदेशेऽदृष्टः ईषद्दृष्टः क्वचिदतिघनत्वान्नष्टः न दृष्टः सूर्यो येषु तेषु । तथा मणिकुट्टिमकान्तिषु मणीनां वज्रमरकतादीनां कुट्टिमानि तः कान्तिः शोभा येषां तानि मणिकुट्टिमकान्तीनि तेषु । तथा परपुष्टविघुष्टेषु—परपुष्टैः कोकिलैः विघुष्टानि कृतशब्दा येषु तानि परपुष्टविघुष्टानि तेषु । तथा कामकर्मान्तभूमिषु—कामकर्मान्ताः कामनिमित्तं भूमयो येषां तानि तेषु । तथा विचित्रपुष्पवृक्षेषु विचित्राणि पुष्पाणि येषां तादृशा वृक्षा येषु तानि तेषु । तथा सुगन्धिषु सुगन्धयुक्तेषु । एभिर्लक्षणैर्युक्तेषु काननेषु मध्याह्नं गमयेदतिवाहयेत् ॥ २१ ॥

हे०—भोजनानन्तरमुद्यानसेवां विधत्ते-काननेषु मध्याह्नं गमयेदतिवाहयेत् । सुखी अव्याकुलः सन् गोष्ठ्यो लोकवार्ताः, कथाः शास्त्रवार्ताः, जलवाहिषु-जलाशययुक्तेषु, अदृष्टसर्येषु-घनच्छायेषु, अनष्टसूर्येषु-प्रकाशवत्सु, मणिमयैर्बद्धभूमिकैः कान्तिमत्सु, परपुष्टैः कोकिलैर्नादितेषु कामकर्ममदनव्यापारमन्तान्तिबध्नन्ति स्वसौंदर्येणोत्तरोत्तरं वर्द्धयंतीति कामकर्मान्ताः । "अति बन्धने" इत्यस्मात्कर्मण्यण् ॥ २१ ॥

**गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजत् ॥ २२ ॥**

स०—गुरुशीतादींस्त्यजेत् । ननु लवणमपि श्लेष्माणं करोति तत्कस्मादिह न निषिद्धम् । अतो ब्रूमः । लवणः पूर्वं कफमम्लमधुराविव न करोति किं तर्हि निधने चिरंतनसंचितं स्रुतिरूपं श्लेष्माणं विधत्ते विष्यंदित्वात् । न च लवणस्य मधुरादेरिव बहुतरस्य प्रयोगः प्रसिद्धः किंतह्यल्पस्यैव । तस्माल्लवणस्यात्रानिषेध एव न्याय्यः ॥ २२ ॥

प०—अनन्तरं ाक त्याज्यमिदमाह—गुरु गरिष्ठगुणयुक्तम् । शीतं—पर्युषितान्नम् । दिवास्वप्नं दिने शयनम् । दिवा इति रात्रिनिषेधार्थम् । तथा स्निग्धान्-स्नेहनगुणयुक्तान् । तथा अम्लान्—अम्लरसान्, दाडिमामलकव्यतिरिक्तान् । तथा मधुरान्—गुडादीन् मधुसितादिरहितांस्त्यजत् जह्यात् । इति वसन्तः ॥ २२ ॥

हे०—गुर्वादीन्निषेधति—अथ ग्रीष्मचर्या-सोपपत्तिकं पट्वादीन्निषेधति ॥ २२ ॥

अधुना ग्रीष्मचर्यामुपदिदिक्षुराह—

**तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ॥**
**प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ॥ २३ ॥**

स०—यद्यस्मात्तीक्ष्णांशुर्भास्करोऽतितीक्ष्णा अंशवः करा यस्य स एवंभूतः सन् ग्रीष्मे संक्षिपतीव जगत्स्नेहमि-

त्यत्रानुक्तमप्यर्थाल्लभ्यते । केचित्तु स्नेहमर्कोऽतितीक्ष्णांशुरिति पठंति । स्नेहस्तेजोबलं सारमित्येकोऽर्थः । तं स्नेहमर्कः संक्षिपतीव यत्संबंधः संहरतीव पिबतीव । इवशब्देनैतत्सूचयति--हेतुप्रत्ययपरतंत्रेषु सर्वभावेषु न कश्चित्कचित्तद्बुद्धिपूर्वकं संहरति । परमार्थतो बलहानिकृत्त्वादेषाम् ॥ २३ ॥

प०--ग्रीष्मचर्यामाह-ग्रीष्मऋतौ-उष्णकाले, तीक्ष्णांशुः-तीक्ष्णा अंशवः करा यस्य स तथाविधः रविरतितीक्ष्णांशुरतिकठोरकिरणः सन् यत् संक्षिपति संक्षिपतीव जगत्स्नेहमित्यत्रानुक्तमप्यर्थाल्लभ्यते । केचित्तु स्नेहमर्कोऽतितीक्ष्णांशुरिति पठन्ति ( ग्रीष्मे[1]ऽतसीपुष्पनिभस्तीक्ष्णांशुरतिदीपितः । ग्रीष्मे ऋतौ तीक्ष्णांशुरतिदीपितः अत्यन्तप्रज्वालितो भवति।किंविशिष्टस्तीक्ष्णांशुः अतसीपुष्पनिभः उमाकुसुमानिभस्तुल्य इत्यर्थः । "दिशो ज्वलन्ति भूमिश्च मारुतो नैर्ऋतोऽसुखः। पवनातपसंस्वेदैर्जन्तवो ज्वरिता इव ॥" दिशः प्राच्यादयः च पुनः भूमिः पृथिवी ज्वलन्ति ज्वलिता भवन्ति । मारुतः पवनः नैर्ऋतः निर्ऋतसम्बन्धी,असुखो दुःखदो भवति । औष्ण्यात् पवनश्चातपश्च संस्वेदश्च पवनातपसंस्वेदास्तैर्जन्तवः प्राणिनः ज्वरिता इव ज्वरयुक्ता इव भवन्ति । "तापार्तातुङ्गमातङ्गमहिषः कलुषीकृताः । दिवाकरकराङ्गारनिकरैः क्षिपिताम्भसः॥प्रवृद्धरोधसो नद्यः" नद्यः प्रवृद्धरोधसो भवन्ति । प्रवृद्धे उद्घटिते रोधसी) तीक्ष्णांशुरादित्यस्तदानीं ग्रीष्मे अतितीक्ष्णांशुः संपन्नप्रकृष्टादानकालस्वाभाव्यात् स यस्मात्संक्षिपतीव संहरतीव प्राङ्निरूपितमेव नान्यत् कर्मान्तरं प्रहीतुं न्याय्यम् । एवं भू पः साम्यगुणं जगत्स्नेहं संक्षिपतीव ॥ २३ ॥

हे०--यद्यस्माद्ग्रीष्मे तीक्ष्णांशुः सूर्योऽतितीक्ष्णांशुः सन् संक्षिपतीव-संहरतीव, संहारप्रवृत्त इवाभाति ॥ २३ ॥

**अतोऽस्मिन्पटुकम्लव्यायामार्ककरांस्त्यजेत् ॥**

स०--अतोऽस्मात्कारणादस्मिन् ग्रीष्मकाले पट्वादींस्त्यजेत् ॥ २४ ॥

प०--अतोऽस्मिन् काल पट्वादिकान् परिहरेत् बलहानिकृत् । अस्मिन्नित्यनेनैतद्गमयति न हीनातिमिथ्यायोगलक्षणे ग्रीष्मे पट्वादीन् परिहरेत् । किं तर्हि यथा स्वलक्षणे पटुलवणं कटुमरीचादि । अम्लं--तक्रचुक्रादि । व्यायामः-शरीरायासजननं कर्म । अर्ककराः-आदित्यरश्मय इति ॥ २४ ॥

हे०--अतः पट्वादींस्त्यजेत् । अस्मिन् अतिक्रमविह्वल्लोके ग्रीष्मे पट्वादीनां क्रमहेतुत्वात् ॥ २४ ॥

किमत्र सेव्यमित्याह--

**भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् २५॥**

स०--मधुरमेवान्नं भजेत् । बाहुल्येन मधुरमन्नं सेव्यं न तथाऽन्यरसजातमित्येवकाराल्लभ्यते । तथा लघु स्निग्धं हिमं द्रवं चेति । चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः॥२५॥

प०--अथ तस्मिन्काले किं सेवेतेत्यत्राह-भजेन्मधुरमेव भूयसा सेवेत नान्यरसाघ्रातम्।एतदर्थमेवकारोऽवधारणार्थं कृतः । तथा लघ्वन्नं भजेत् । उभयथापि मात्राप्रकृतिभ्यां यल्लघु स्निग्धं घृतक्षीरादिमिश्रम् । हिमं-शीतलम् द्रवं-द्रवद्रव्यप्रायं न कठिनम् ॥२५॥

हे०--मधुरादिसेवां विधत्ते-अन्न मधुरमेव मधुरैकरसम्। पानं तु मधुराम्लादिरसमपि "नित्यं सर्वरसाभ्यास" इति वचनाद्रसालादिविधानाच्च ॥ २५ ॥

सामान्येन भोजनमुक्त्वा विशेषेणाह--

**सुशीततोयसिक्तांगो लिह्यात्सक्तून्सशर्करान् ।**

स०--सक्तून् सशर्करान् लिह्यात् । सुष्ठु शीतं सुशीतं च तत्तोयं च तेन सिक्तमाप्लुतमंगं कायो यस्य स एवंभूतः सन् ॥ २६ ॥

प०--सुशीतेन तोयेन सिक्तमंगं येन स तथाविधः पुमान् सक्तून्-यथार्हद्रवलुलितान् सशर्करान् लिह्याद्द्यादिति ॥ २६ ॥

हे०--लोकस्य तीव्रतापश्रान्तत्वाच्छ्रान्तस्य च भोजननिषेधात्पूर्वं श्रमहरं विधत्ते--स्नानं सक्तवश्च श्रमहराः ॥ २६॥

**मद्यं न पेयं पेयं वा स्वल्पं सुबहुवारि वा २७॥**

स०--अस्मिन्काले मद्यं न पेयम्। पेयं वा स्वल्पमिति। वातश्लेष्मप्रकृतिना वातक्षयार्थमन्यर्तुवद्बहु न पेयं किंतर्हि स्वल्पमेव पातव्यम् । सुबहुवारि वेति पित्तश्लेष्मप्रकृतिना मद्योचितेन श्लेष्मप्रतिक्रियार्थं पित्तप्रतीकारमपी-

1 अत्र कोष्ठकान्तर्गतमधिकं पाठान्तरम्।

च्छता सुबहुवारि तन्मद्यं पेयमित्यत्रानुक्तोऽप्येवमर्थाद्विषयविभागो बोध्यः । अन्यथा निषेधविध्योर्विरोधः स्यात् ॥ २७ ॥

प०-ग्रीष्मकाले मद्यं न पेयं न पातव्यम्।तदौचित्ये स्वल्पं पेयम् । सुबहुवारि-जलाढ्यं वा पेयम्२७ ॥

हे०--मद्यस्य श्रमहरेष्वग्र्यत्वात्कामतः प्रसक्तं पानं निषेधति-अन्यथा श्रमापनुत्तौ सत्यां मद्यं न पेयं तक्ष्णादिगुणत्वात्, असत्यां पेयं वा किंतु स्वल्पं स्वल्पेनाप्यसत्यां पूर्णमात्रं, न पेयं वा किंतु सुबहुवारि--बहुतरोदककृतं पानानुग्रहश्च मद्यसात्म्यानामेव ॥ २७ ॥

उक्तविध्यतिक्रमे दोषमाह--

**अन्यथा शोफशैथिल्यदाहमोहान् करोति तत्॥**

स०--तन्मद्यमन्येन प्रकारेण पीतं सत् शोफादीन् करोति । शोफः श्वयथुः । शैथिल्यमंगानामनैष्ठुर्यम् । दाहः सर्वांगीणस्तापः । मोहोऽज्ञानं जंतोः ॥ २८ ॥

प०--तन्मद्यमन्यथापीतं बहुपीतं वारिरहितं च पीतं शोषं-मुखशोषं, शैथिल्यं-शरीरशैथिल्यं, दाहं-सर्वांगीणं, मोहं वैचित्यं करोति । मद्यं न पेयमित्यत्र प्रकृतिः तदा नैकविषया एते पक्षाः, किं तर्हि भिन्नविषयास्त्रयः । एवं सति विधिनिषेधौ नैकविषयो न विरोधः स्यात् । समप्रकृतिं यावदुद्दिश्य स्वास्थ्यवृत्तकोऽयमार्त्तवादिविधिः सर्वोऽवश्यं हितः । तस्मात्सर्वप्रकृतिना मद्योचितेन यत्किंचिन्मद्यं तन्न पेयं सुतरां पित्तप्रकृतिनापि । यतः प्रायशो मद्यस्य वातपित्तकर्तृत्वं पित्तमारुतपर्यन्तं प्रायेण हि मदात्यये मद्योत्थो व्याधिजायेत इत्येतैस्त्रिभिः ग्रीष्मकाले मद्यं न पेयमेव निषेधस्य विषयः । वातश्लेष्मप्रकृतिना तावत् क्षयार्थमन्यर्तुवन्मद्यं बहु न पेयं किं तर्हि स्वल्पं पेयं तत्सात्म्येन । तथा पित्तश्लेष्मप्रकृतिना मद्योचितेन श्लेष्मक्षयार्थं पित्तप्रतीकारमपीच्छता मद्यं सुबहु न पेयम् । इत्येष विधिर्विषयः । अथवा अवस्थाभेदतद्विषयभेदः । येनैव तन्मद्यं पेयं यस्मिन् काले, तेनैव कस्यांचिदवस्थायां स्वल्पं, क्वचिदवस्थायां सुबहुवारि पेयम् ॥ २८ ॥

हे०--उक्तविध्यतिक्रमे दोषमाह--शोषो--मुखशोषः, तन्मद्यम् ॥ २८ ॥

१ अत्र "शोषशैथिल्य-" इति पाठान्तरम् ।

**कुंदेंदुधवलं शालिमश्नीयाज्जांगलैः पलैः २९ ।**

स०-कुंदः पुष्पविशेषः।इंदुश्चंद्रः।तयोर्द्वंद्वः। कुंदेंदुवद्धवलं शुक्लं शालिं जांगलैः पलैर्मांसैः सहाश्नीयादद्यात् 'क्षुण्णसितः स्मृतः शाली रक्तो व्रीहिरुदाहृतः'॥२९॥

प०--शालिं रक्तादिं कुन्देन्दुधवलां तद्वत् शुक्लामश्नीयात् भक्षयेत् । जाङ्गलैः पलैः जांगलगणोद्दिष्टैर्मांसैः सह ॥ २९ ॥

हे०--अन्नं विधत्ते--कुन्दः--पुष्पविशेषः कुन्देन्दुग्रह लघुस्निग्धशीतगुणाविशिष्टधवलत्वात् । पलैर्मांसैः सह शालिमश्नीयात् ॥ २९ ॥

**पिबेद्रसं नातिघनं रसालां रागखांडवौ ॥**
**पानकं पंचसारं वा नवमृद्भाजनस्थितम् ।**
**मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ३०**

स०--रसं नातिघनं पिबेत् । रसशब्देनादिलोपाख्यतंत्रयुक्त्या मांसरस उच्यते।तथा रसालां मर्जिकाख्यां पिबेत्।तथा रागखांडवौ पानकं च पंचसाराख्यम्।एतेषां लक्षणं तंत्रांतर उक्तम्। यथा-"सितामध्वादिमधुरा रागास्तत्राच्छकांतयः । ते साम्लाः खांडवा लेह्याः पेयाश्चांशुकगालिताः ॥ स्वाद्वम्लपटुकट्वाद्याः प्रलेहास्तत्र खांडवाः गुडदाडिममांसाद्या रागाश्चांशुकगालिताः ॥ हृद्या वृष्या रुचिकरा ग्राहिणो रागखांडवाः" इति । तथा-"द्राक्षा मधूकखर्जूरकाश्मर्यः सपरूषकाः । तुल्यांशैः कल्पित पूतं शीतं कर्पूरवासितम् ॥ पानकं पंचसाराख्यं दाहतृष्णानिवर्तकम् ।"अन्यत्र चोक्तम् । यथा-"गुडदाडिमादियुक्ता विज्ञेया रागखांडवाः । त्रिजातमरिचाद्यैस्तु संस्कृताः पानकास्तथा ॥"इति।कीदृशं पानकं पिबेदित्याह नवं च यन्मृद्भाजनं तत्र स्थितम् । तथा मोचं कदलीफलं, चोचं पनसफलं तयोर्दलानि तैर्युक्तम् । तथ

( १ ) मोचं-कदलीफलं, चोचं-पनसफलमिति सर्वाङ्गसुन्दरा । मोचं-कदलीफलं, चोचं-नारिकेलमिति पदार्थचन्द्रिका । मोचं--कदलीफलं, चोचं--नारीकेलमिति **हेमाद्रिः** । इति सर्वमसमञ्जसम् , अयौगिकत्वात्। मम मते तु मोचं-गुडत्वक्, चोचं--तेजपत्रम्, यौगिकत्वात्, "त्रिजातमरिचाद्यैस्तु संस्कृताः पानका स्तथा " इति वचनाचेति ।

साम्लम् । तित्तिडीकादियोगात् खांडवरसानुगतम् । केचित्तु क्षीरं घृतपिप्पलीशशिमाक्षिकशर्करोपेतं पंचसारं पानकमित्याहुः । केन पिबेदित्याह । मृन्मयशुक्तिभिः ॥ ३० ॥

प०–रसं मांसरसं पिबेत् नातिघनं नातिबहुलम्। रसालां–सितां पिबेत् । तथा रागखाण्डवौ पिबेत् । रागो–द्राक्षादि मधुरद्रव्यकृतो लोहितप्रायः । खाण्डवो–द्राक्षादाडिमादिकृतोऽम्लप्रायः । पानकं वा पिबेत् । तोयमाक्षिकत्रिजातकादिकृतं पंचसारं वा रक्तपित्तचिकित्सोक्तं मन्थं पिबेत् । मृद्भाजने स्थितं स्थापितम् । "मधुखर्जूरमृद्वीकापरूषकासिताम्भसा। मन्थो वा पञ्चसारेण सघृतयैर्वसक्तुभिः।" इति रक्तपित्तचिकित्सायां प्रोक्तः । मोचचोचदलैर्युक्तं कदलीनालिकेरफलेन सहितं साम्लं दाडिमामलकादिभिरभक्ष्णं कृतं मृन्मयशुक्तिभिर्मृन्मयैस्तनुकैश्चषकैः ३०॥

हे०--पानं विधत्ते—रसं–मांसरसं, नातिघनमीषत्सांद्रं, रसाला–शिखरिणी, मधुराम्ललवणं पानकं–रागः, मधुराम्ललवणकटुकषायकं– खाण्डवः । पञ्चसारं पानकं–मध्वादिभिः पञ्चभिः कृतं, वक्ष्यति हि—"मधुखर्जूरमृद्वीकापरूषकसितांभसा । मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभिः॥"इति। तच्च नवे मृन्मये पात्रे स्थितं मोचं-कदलीफलं, चोचं–नालिकेरं तयोर्दलैः शकलैर्युक्तं दाडिमाद्यैरम्लीकृतं, मृन्मयीभिः शक्तिभिः पिबेत् ॥ ३० ॥

**पाटलावासितं चांभः सकर्पूरं सुशीतलम्॥३१॥**

स०–पाटलया वासितं सुरभीकृतं तथा सकर्पूरं सुशीतलं चांभः पिबेत् । मृन्मयशुक्तिभिरित्यत्रापि योज्यम्। सुश्रुते चोक्तम्–"परिपेलवया तुल्यास्तथा गुग्गुलुमुस्तकाः । चूर्णिताः शशिनोपेता नवभाजनधूपनम् ॥ कुष्ठमुस्तकसंयुक्तैः पेलवोशीरवालकैः । मृदिता मृत्सु पिष्टैस्तैः खदिरांगारपाचिताः॥ सहकाररसाभ्यक्ताश्चंपकोत्पलवालकैः । पद्मकुंजकर्कुदैश्च यथालाभादिवासिताः ॥ श्रेष्ठः सलिलवासोऽयं स्मृतः सर्वर्तुको बुधैः" ॥ ३१ ॥

प०–तथाम्भः-पानीयं पिबेत् ,तच्च पाटलावासितं-पाटलापुष्पैः सुगन्धीकृतं, सकर्पूरं–कर्पूरादिभिः सहितं सुशीतलं च ॥ ३१ ॥

हे०-तथा अम्भः पिबेत् । तच्च पाटलापुष्पैरधिवासितं, सकर्पूरं, सुशीतलं च ॥ ३१ ॥

**शशांककिरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत् ससितं माहिषं क्षीरं चंद्रनक्षत्रशीतलम्॥ ३२ ॥**

स०–माहिषं क्षीरं ससितं सशर्करं रजन्यां रात्रौ पिबेत् किंभूतम् । चन्द्रेण नक्षत्रैश्च शीतलम् । रजन्यां रात्रावाकाशे शैत्यार्थं स्थापितमित्यर्थः । किं कुर्वन् पिबेत् । भक्षयन् भक्ष्यान् भुंजन् । कीदृशान् । शशांककिरणान् कर्पूरनाडिकाख्यान् ॥ ३२ ॥

प०–शशाङ्ककिरणान् भक्ष्यान् कर्पूरनाडिकासितशर्करादिकृतान्त्रोचानिकादीन् रजन्यां रात्रौ भक्षयन् खादयन् पिबेन्माहिषं क्षीरं ससितं सशर्करं चन्द्रनक्षत्रशीतलं शशिनः किरणैः शीतलीभूतमिति ३२॥

हे०--रात्रिभोजनं विधत्ते–रजन्यां पुनः शशाङ्ककिरणान् भक्ष्यान् भक्षयन् चन्द्रनक्षत्रशीतलं माहिषं क्षीरं पिबेत् । शशांकः कर्पूरः कीर्यते विक्षिप्यते येषु ते शशाङ्ककिरणाः– कर्पूरनालिकादयः । चन्द्रेण तस्यासंभवे नक्षत्रैर्वा शीतीकृतं चन्द्रनक्षत्रशीतलम् ॥ ३२ ॥

**अभ्रंकषमहाशालतालरुद्धोष्णरश्मिषु ॥ वनेषु माधवीश्लिष्टद्राक्षास्तबकशालिषु॥ ३३ ॥**

स०–अभ्रमाकाशं कषंत्युल्लिखंत्यत्युच्चतयाऽभ्रंकषाः महांतश्च शालाश्च तालाश्च महाशालतालाः। अभ्रंकषाश्च ते महाशालतालाश्च तै रुद्धः स्थगित उष्णरश्मिर्दिनकरो येषु वनेषु तेषु मध्यंदिने मध्याह्नेऽर्कतापार्तः सन् स्वप्याच्छयीत । वनेष्विति । माधव्यो लताविशेषा अतिमुक्तकाख्यास्तासु श्लिष्टा माधवीश्लिष्टाः द्राक्षायास्तबका गुच्छका द्राक्षास्तबकाः । माधवीश्लिष्टाश्च ते द्राक्षास्तबकाश्च तैः शालितुं श्लाघितुं शीलं येषां वनानां तानि माधवीश्लिष्टद्राक्षास्तबकशालीनि तेषु वनेषु ॥ ३३ ॥

प०–वनेषु कायमाने तल्पे मध्यान्दिनेऽर्कतापार्तः पुमान् स्वप्यात् । किंभूतेषु वनेषु । शालाश्च तालाश्च शालतालाः। महान्तश्च ते शालतालास्तै रुद्धा उष्णरश्मयो रविदीधितयो येषु वनेषु । माधव्यो लताविशेषास्तबका–गुच्छका लताजालसमूहा इत्यर्थः । माधवीषु श्लिष्टा माधवीश्लिष्टाः द्राक्षाया स्तबका द्राक्षास्तबका एकलग्ना पलसंहतिस्तबकशब्देनोच्यते । माधवीश्लिष्टाश्च ते द्राक्षास्तबकाश्च माधवीश्लिष्टद्राक्षास्तबकास्ते शीलितुं श्लाघ-

यितुं शीलं येषां वनानां तानि तेषु वनेषु मध्यन्दिनेऽर्कतापार्तः सन् सुप्यात् ॥ ३३ ॥

हे०-स्थानविशेषे निद्रां विधत्ते—अभ्रंकषाः-अत्युच्चाः, महान्तः-स्थूलाः । माधवीषु-वासन्तीषु संश्लिष्टा लग्ना द्राक्षास्तवका यासु शालासु लतागृहेषु तद्वन्ति यानि वनानि ॥ ३३ ॥

कस्मिन् स्वप्यादित्याह—

**सुगंधिहिमपानीयसिच्यमानपटालिके ।**
**कायमाने चिते चूतप्रवालफललुंबिभिः ॥ ३४ ॥**

स०-कायमाने वेण्वादिनिष्पादिते गृहविशेषे। कीदृशे सुगंधि च तद्धिमं च तत्पानीयं च तत्सुगंधिहिमपानीयम्। पटानां वस्त्राणामालिः पंक्तिः पटालिः । सुगंधिहिमपानीयेनसिच्यमाना पटालिर्यस्मिन्नसौसुगंधिहिमपानीयसिच्यमानपटालिकस्तस्मिंस्तथाविधे कायमाने । तथा प्रवालाः किसलयानि । फलानां लुंबयस्तबकाः । प्रवालाश्च फललुंबयश्च प्रवालफललुंबयः । चूतानां प्रवालफललुंबयस्ताभिश्चिते परितो व्याप्ते ॥ ३४ ॥

प०-कायमाने वेण्वादिनिष्पादिते वेश्मविशेषे सुगन्धिना कर्पूरादिपरिमललग्नेन हिमेन शीतलेन वारिणा तोयेन सिच्यमानाऽऽर्द्रीक्रियमाणा पटानामालिः पंक्तिर्यस्य तास्मिंस्तथाविधे तथोचिते चूतप्रवालफललुम्बिभिः चूता आम्राः प्रवालाः प्रवालसदृशा अभिनवाः पल्लवाः प्रवालाश्च फलानि च चूतस्य प्रवालफलानि चूतप्रवालफलानि तेषां लुम्बाः संघातास्ते विद्यन्ते येषां ते प्रवालफललुम्बिभिः तैश्चिते समन्ताद्व्याप्ते कायमाने किं तेषु वनेषु ॥ ३४ ॥

हे०-पटालिकाः-पंक्तिवत्तनुवस्त्रतृणादिरचिता भित्तयः। कायमाने-शिबिरे प्रवालाः-पल्लवाः, फललुम्बयः-फलस्तवकाः ॥ ३४ ॥

ईदृशे कायमाने स्थितो यादृशे शयने शयीत तन्निरूपयन्नाह—

**कदलीदलकह्लारमृणालकमलोत्पलैः ॥**
**कल्पितेकोमलैस्तल्पे हसत्कुसुमपल्लवे ।**
**मध्यंदिनेऽर्कतापार्तः स्वप्याद्धारागृहेऽथवा ३५॥**

स०-तल्पे शयने कल्पिते । कैः। कदलीदलादिभिः। कदल्या रंभाया दलानि पत्राणि । कह्लारं सौगंधिकम् । मृणालं बिसम्। कमलं पद्मम्। उत्पलं कुमुदम् । एतेषां द्वंद्वः तैः कदलीदलादिभिः कोमलैः सुकुमारस्पर्शैः कल्पिते रचिते । किंभूते । कुसुमानि च पल्लवाश्च कुसुमपल्लवाः । हसंत इव कुसुमपल्लवा यत्र तस्मिन् धारागृहेऽथवा स्वप्यादित्यनुवर्तते । धारागृहमविरतममलजलधाराः पतंति यत्र ॥ ३५ ॥

प०-तथा कामयमाने एवमेव शय्यां विना स्वप्यात्, उत शय्यायामत आह-कल्पिते तल्पे रचिते शयने। कैः कदलीदलादिभिः। कोमलैः-मृदुभिः । कदल्या दलानि कदलपित्राणि । कह्लारो-गन्धसोमकः, मृणालानि कोमलान्यभिनवानि बिसानि कमलमुत्पलं नीलोत्पलम्, अन्यच्च किंभूते हसन्त इव कुसुमपल्लवाः पुष्पपलाशा यस्मिन् तथाभूते । अथवा हसन्ति कुसुमानि किंचित् फुल्लानि पल्लवपर्यन्ते यस्य तल्पस्य तस्मिन् स्वप्यादिति अथवा धारागृहे स्वप्यात् ॥ ३५ ॥

हे०-कह्लारं-सन्ध्याविकाशि पद्मिनीपुष्पं, कमलं-दिनविकाशि, उत्पलम्-रात्रिविकाशि, मृणालानि-बिसानि, तल्पे-शयने, हसत्कुसुमाः-विकसन्मल्लिकादिपुष्पाः पल्लवाः पर्यन्ताः यस्य तत्तथा अथवा धारागृहेषु स्वप्यात् । यत्र रचनाविशेषेण रचिता जलसीकराः प्रसरन्ति तद्धारागृहम् ॥ ३५ ॥

किंभूते----

**पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि ॥ ३६ ॥**

स०-पुस्तस्त्रीस्तनहस्तास्यैः प्रवृत्तमुशीरवारि यत्र तस्मिन्। पुस्तो दार्वादिमय्याः स्त्र्याद्याकृतेरुपादानकारणं यद्वस्तु तदुच्यते ॥ ३६ ॥

प०-मध्यन्दिनेऽर्कतापतप्तः सन्। पुस्तस्त्रियो दारुमन्त्रमय्यस्तासां स्तनहस्तास्यैः प्रवृत्तमागतं धारावारि यस्मिन् गृहे ॥ ३६ ॥

हे०-पुस्तस्त्रियो-दार्वादिमयाः पुत्रिकाः, तासां स्तनादिभ्यः प्रवृत्तमुशीरवारि यन्त्रोदकं यत्र तत्र ॥ ३६ ॥

**निशाकरकराकीर्णे सौधपृष्ठे निशासु च ।**
**आसना ॥ ३७ ॥**

स०—निशासु च रात्रिषु सौधपृष्ठे हर्म्यतले आसना स्थितिः । कार्येत्यध्याहार्यम् । तत्रासीतेत्यर्थः । किंभूते सौधपृष्ठे । निशाकरः शीतांशुस्तस्य करा गभस्तयस्तैराकीर्णे व्याप्ते॥ ३७ ॥

प०—निशासु रात्रिषु सौधपृष्ठे-हर्म्यमूर्ध्नि निशाकरकराकीर्णे चन्द्रमसो रश्मिभिर्व्याप्ते स्वप्यात् शयीत। आसना आस्या हर्म्यमस्तके रात्रौ शस्यते ॥ ३७ ॥

हे०—तथा निशासु पुनश्चन्द्ररश्मिव्याप्ते हर्म्यमस्तके स्वप्यात् ॥ ३७ ॥

**स्वस्थचित्तस्य चंदनार्द्रस्य मालिनः ।**
**निवृत्तकामतंत्रस्य सुसूक्ष्मतनुवाससः ॥**
**जलार्द्रास्तालवृंतानि विस्तृताः पद्मिनीपुटाः ।**
**उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ॥**
**कर्पूरमल्लिका माला हाराः सहरिचंदनाः ।**
**मनोहरकलालापाः शिशवः सारिकाः शुकाः ॥**
**मृणालवलयाः कांताः प्रोत्फुल्लकमलोज्ज्वलाः ।**
**जंगमा इव पद्मिन्यो हरंति दयिताः क्लमम् ॥३८॥**

स०-स्वस्थचित्तस्य रागाद्यनुपहतमनसो जलार्द्राः क्लमं हरंति । एवं तालवृंतादयो योज्याः । अंतर्दीपकत्वादस्य । तस्य च कीदृशस्य । चंदनार्द्रस्य चंदनेनानुलिप्तस्य । तथा मालिनः स्रग्विणः । तथा निवृत्तं कामतंत्रं पुष्पधन्वपरिच्छेदो यस्य । तथा सुष्ठु सूक्ष्मे तनुनी स्वच्छे वाससी यस्य स एवम् । जलार्द्राः पानीयक्लृतार्द्राः शाटिकाः । तालवृंतानि मयूरपिच्छादिकृतानि तालवृंताकृतीनि व्यजनानि । तथा विस्तृता महांतः पद्मिनीपुटा नलिनीपत्राणि वीजनार्थम् । तथोत्क्षेपाः मयूरपिच्छादिकृता व्यजनविशेषाः । ते च किंभूताः । मृदुरुत्क्षेपो येषु ते मृदूत्क्षेपाः । जलवर्षी हिमोऽनिलो येषु मृदूत्क्षेपेषु ते जलवर्षिहिमानिलाः । शीतजलाभ्युक्षितैरेतैर्वातः कार्य इत्यर्थः । कर्पूरेत्यादि । मालाशब्दः प्रत्येकं प्रयुज्यते।स्फटिककर्पूरग्रथिता माला मल्लिकामालाश्चेत्यर्थः । तथा हारा मुक्तादामानि । किंभूताः—सह हरिचंदनेन सहरिचंदनाः । यच्छेदे लोहितमतिसुगंधं सुष्ठु शीतवीर्यं च तद्धरिचंदनमुच्यते । मनोहरेत्यादि । मनोहरो रम्यः कलो मधुर आलापो येषां ते मनोहरकलालापाः । शिशवो बालकाः । तथा सारिकाः शारायः । शुकाः कीराः । मृणालेत्यादि । मृणालान्यतिकोमलानि बिसानि वलयाः । कटकानि यासां ता दयिता योषितः । किंभूताः । कांता रम्याः । तथा प्रफुल्लैर्विकसितैः कमलैरुज्ज्वलाः शोभिता एवंभूताश्च । उत्प्रेक्ष्यंते । जंगमाः संचारिण्य इव पद्मिन्यः । क्लमं हरंतीति योज्यम् । स्वस्थचित्तस्येति प्राधान्यख्यापनार्थं प्रागुपात्तम् । स्वस्थचित्तस्यैव ते जलार्द्रादयः क्लमं हरंति न तथोपतप्तमनसः । चित्तायत्ता हि सर्वभावानां शुभाशुभवृत्तयः । तथा च स्निग्धमधुरोऽप्याहार उपयुक्तः सुखशय्यादिरपि विहारः सेवितः शोकाविष्टचेतसो न तथा शरीरस्य पुष्टिमादधाति । अत एव शोकः शोषणानामित्यष्टसंग्रहे प्रोक्तम् । तथा रूक्षोऽप्याहारस्तथाविधो विहारश्च सेवितो निर्वृत्तमनसः पुष्टिमेवादधाति न कार्श्यम् । तथाचोक्तम् । निर्वृतिः पुष्टिहेतूनामिति । सुश्रुते च क्लमस्य लक्षणमुक्तम् । योऽनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः । क्लमः स इति विज्ञेयमिंद्रियार्थप्रबाधक इति ॥ ३८ ॥

प०—स्वस्थचित्तस्यादुःखचेतसः निवृत्तचेतसः । तथा चन्दनार्द्रस्य चन्दनेनानुलिप्ताङ्गस्य तथा मालिनो मालाविभूषितस्य तथा निवृत्तकामतन्त्रस्य विरलानङ्गसङ्गमस्य मैथुनाद्विरतस्य तथा सुसूक्ष्मतनुवाससः —सुष्ठु सूक्ष्माणि तनूनि लघूनि वासांसि वसनानि यस्यस सुसक्ष्मतनुवासास्तस्य तथाविधस्यासनाहिता। जलार्द्रादिका अस्मिन् काले क्लमं ग्लानिं हरन्ति विनाशयन्ति । जलार्द्राः जलक्लिन्नशाटका जलप्लुतवस्त्रकृताः । तालवृन्तानि-तालवृक्षपत्राणि । अथवा वृन्तानि मयूरपिच्छनिष्पादितानि तालवृन्त-सदृशाकृतीनि घर्मापनोदकार्याणि यानि क्रियन्ते तानि तालवृन्तानीत्युच्यन्ते ।विस्तृता विस्तारिताःपद्मिनीपुटाःनलिनीपलाशास्तथोत्क्षेपाःमयूरपिच्छादिकृताः ते च मृदूत्क्षेपा मृदूत्क्षेपणं सविलाससमूर्ध्वनयनं येषान्ते मृदूत्क्षेपाः । तथा जलवर्षिणो हिमाः शीता अनिला येषां ते जलवर्षिहिमानिलाः । एवंविधा उत्क्षेपाः कर्पूरेणाधिवासिता मल्लिका तस्याः मालाः-कर्पूरम-

ल्लिकामालाः । अथवावशिष्टैव मल्लिका हारा-मौक्तिकाभरणानि सह हरिचन्दनेन लोहितचन्दनेन वर्तन्त इति सहरिचन्दनाः । अथवा शिशवो-बालाः मनोहराः-रम्याः कलो मधुर आलापो वचनं येषान्ते मनोहरकलालापाः। तथा सारिकाः शुकाश्च पक्षिणः मृणालान्यतिकोमलान्याभिनवानि बिसान्युच्यन्ते तैः कृता आभरणविशेषा यासां ता मृणालवलयाःकान्ता दयिता नार्यः प्रफुल्लैरिति विकसितैः पद्मैरुज्ज्वलाः शोभितास्तथा प्रफुल्लकमलोज्ज्वलाः । एवमुत्प्रेक्षन्ते जङ्गमा इव पद्मिन्यः संचारिण्य इव कमलिन्य इति ॥ ३८ ॥

हे०--क्लमहरत्वकथनद्वारेणासनादीनि विधत्ते-स्वस्थचित्तत्वादिविशिष्टस्य या आसना आस्या सा क्लमं हरति। स्वस्थचित्तस्य-निवृत्तमनसः,मालिनः-मालाभूषितस्य, निवृत्तकामतन्त्रस्य-सुरतविमुखस्य न तु विरलम् । जलार्द्रादयो-व्यजनविशेषाः क्लमं हरन्ति । जलार्द्रवस्त्रमयानि व्यजनानि, तालवृन्तानि-तालपत्रमयानि, उत्क्षेपाः-नलिकाप्रविष्टदण्डत्वादूर्ध्वमधश्चोत्क्षिप्यन्ते, मृदूत्क्षेपाः-मन्दान्दोलनाः, जलवर्षी हिमानिलो येषां ते । तथा कर्पूरमालादयः-क्लमं हरन्ति, कर्पूरग्रथिता-मल्लिका, ग्रथिताश्च मालाः, सहरिचन्दना हाराः-पीतचन्दनमणिमिश्रिता मुक्तावलयः, मनोहराः-सुन्दराकाराः, मधुरालापाः। शिशवः-शुकसारिकाः, मृणालादिधारणाज्जङ्गमाः पद्मिन्य इव यास्त्रियश्च क्लमं हरन्ति ॥ ३८ ॥

इदानीं वर्षाचर्यां निर्दिदिक्षुरिदमाह—

**आदानग्लानवपुषामग्निःसन्नोऽपि सीदति।**
**वर्षासु दोषैः ॥ ३९ ॥**

स०—आदानमुक्तम्। तेनादानाख्येन कालेन ग्लानं सक्लमं वपुः शरीरं येषां पुरुषाणां त आदानग्लानवपुषस्तेषामपचितधातूनामग्निरप्यपचितः सन्नो मंदः सन् पुनर्वर्षासु सीदति हानिं याति। अपिशब्दः पुनरर्थे। अनेकार्थत्वान्निपातानाम्। वर्षास्विति नित्यबहुत्वाद्बहुवचनम्। केन सीदतीत्याह। कालस्वभावादोषैर्वातपित्तश्लेष्मभिर्दुष्टैरित्यनुक्तमप्यर्थाद्गम्यते। यतोऽग्निसादहेतुत्वमदुष्टानां तेषां न संभवति। तस्माद्दुष्टैर्दोषैरग्निः सीदतीत्यर्थाल्लभ्यते ॥ ३९ ॥

प०--वर्षासु दोषैःशिशिराद्या ग्रीष्मान्ता ऋतवस्त्र आदानकालाः। तेनादानाख्येन कालेन ग्लानमपचितवपुःशरीरं येषां ते आदानग्लानवपुषस्तेषामग्निः स न्नोऽपि पूर्वमेव मन्दः पुनर्वर्षासु दोषैर्वातादिभिःकुपितैः सीदत्यवद्यं सादं याति मंदत्वं गच्छति॥३९

हे०--अथ वर्षाचर्या-सा च चयपूर्वके प्रकोपे शोधनी अचयपूर्वके शमनी। तत्र सोपपत्तिकमुभयचर्या साधारणं विधत्ते-यत्साधारणं-सर्वदोषहरं, यच्चोष्मणस्तेजनः अग्निदीपिकरं, तत्सर्वं वर्षासु भजेत्। केषु सत्सु तेष्वग्निदोषेष्वन्योन्यदूषितेषु कृतपरस्परेण दूषणेषु सत्सु सर्वेषां दुष्टत्वात्सर्वं साधारणं भजेदित्यर्थः। कथमन्योन्यदूषणम् इत्यनेन प्रकारेण आदानेनावसन्नदेहानामग्निर्देहावयवत्वादवसन्नोऽपि पुनर्दोषैः सीदति-मन्दत्वलक्षणं दुष्टिं याति ॥ ३९ ॥

ननु कथं वर्षासु दोषाणां दुष्टत्वं स्यादित्याह—

**दुष्यंति तेंबुलंबांबुदेंऽबरे॥**
**सतुषारेण मरुता सहसा शीतलेन च।**
**भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा ४०।**
**वह्निनैव च मंदेन तेष्वित्यन्योन्यदूषिषु।**
**भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत्॥४१।**

स०-ते दोषा दुष्यंति। कदा। अंबरे वियत्यंबुलंबांबुदेऽबुना लंबा अतिनिर्भरत्वादंबुलंबा ईदृशा अंबुदा मेघा यस्मिन्नेवंविधे।अनेन चविशेषणेनास्यकालस्य स्वरूपमुपलक्षयंत्याचार्याः। यदैवंविधो वर्षाकालः संपद्यते तदैवैते दोषा दुष्यंति स्वकर्मण्ययोग्याः संपद्यंते न वर्षाकालमात्रेऽनासादितस्वरूपे। तथा सतुषारेण सजलकणेन मरुता पवनेन सहसा ग्रीष्मतापसंतापानंतरमेव शीतलेनाभ्यंतरो वायुर्दुष्यति। तथा भुवो बाष्प ऊष्मा भूबाष्पस्तेन। तथा कालस्वाभाव्यादम्लपाकेन वारिणा पित्तं दुष्यति। तथा मलिनेन वारिणा लूतादितन्तुविण्मूत्रेल्यादिकलुषेण वर्षाजलेन कालस्वाभाव्याद्यातिशयेन मंदत्वं गतेनाग्निना श्लेष्मा दुष्यति। तदेतदेवमस्मिन्काले वातपित्तश्लेष्माणो युगपत्कालस्वाभाव्याद्दुष्यंति। नन्विह त्रयाणामपि दोषाणां कोपोऽनुज्ञायते। वक्ष्यति तु। चय-

प्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिष्विति। तदिमे वचसी परस्परं व्याघाते। अत्रोच्यते। नानयोर्वाक्ययोर्मिथो विरोधः संभाव्यते। यस्मादिह दुष्यंतीत्युक्त्या स्वस्था एव दुष्टिं प्राप्ता विषादिरपृष्टद्रव्यवत्कार्यकरणेऽसमर्था जायंते इत्युक्तम्। चयप्रकोपप्रशमा इत्यत्र च प्रकर्षेण कोपः स्थानांतरगतिलक्षणो गदितः। तदेवमस्मिन् काले वायोः कदाचिद् दुष्टत्वं स्यात् कदाचित्कोपश्चेति वचनाभ्यामेताभ्यां प्रत्यपादि। पित्तश्लेष्मणोस्तु दुष्टत्वमात्रमेवेति नकिंचिदत्रासमंजसम्। इति प्रकारे। अन्योन्यं दूषयितुं शीलं येषां वातादीनां त एवं तेष्वनेन प्रकारेण परस्परं दूषणस्वभावेषु सत्सु भजेत्। साधारणं सर्वं यत्किंचिद्वातादीनां युगपत् प्रशमनं तत्सर्वं सेवेत। यच्चोष्मणो जाठराग्नेस्तेजनमुद्दीपनं तद्भजेत्। ऊष्मणस्तेजनस्यात्र च शब्दयुक्तस्योपादानं प्राधान्यख्यापनार्थम्। अग्निर्हि सर्वभावानां प्रधानम्। तथा च वक्ष्यति। शांतेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः। रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यत इति। तस्मादग्न्युत्तेजनार्थं यत्नः कार्य इति भावः भजेदिति क्रियापदं दीपकत्वाद्भोजनं त्वतिदुर्दिन इति यावत्सर्वेषु योज्यम्॥ ४०॥ ४१॥

प०-ते दोषा दुष्यन्ति दुष्टतां यान्ति। अम्बुलम्बाम्बुदेऽम्बरे तोयपूर्णप्रावृषेण्यव्योम्नि सति यः सजलकणः शीतलो महान् वायुः सहसातिमात्रेण वेगेनोत्थितस्तेन च सतुषारेण मरुता सता तथा शीतलेन शीतरूपेण तथा भूबाष्पेणोत्थितेन तथाम्लपाकेन तथा वारिणा मलिनेन—समलेन, वह्निना-अग्निना, मन्देन—स्वल्पेन ते दोषा दुष्यन्तीति। अन्योन्यं-परस्परं दूषयितुं शीलं येषां तेऽन्योन्यदूषिणः परस्परदोषकारिणः स्वभावप्रच्युतकारिण इत्यनेन प्रकारेणान्योन्यदूषिषु सत्सु वातादिषु साधारणं त्रिदोषनिवारणं सर्वमन्नपानौषधादिकं भजेत् सेवेत। यद्यत्सूक्ष्मणोऽग्नेस्तेजनं संधुक्षकं पंचकोलकं तदपि भजेत्॥ ४०॥ ४१॥

हे०--ते च दोषा आदानमन्देन वह्निना दुष्यन्ति दुष्टिं यान्ति। वह्नेः सहकारिण्याह--अम्बुलम्बाऽम्बुदेम्बरे जलभरलम्बमानमेघे नभसि सति सजलकणेन सहसा प्रवृत्तेन शीतलेन वायुना दुष्यन्ति, भूबाष्पेण च दुष्यंति, अम्लपाकेन मलिनेन च वारिणा दुष्यन्ति। दुष्टिश्चात्र वायोश्चयपूर्वकः प्रकोपः, "चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु" इति वचनात्पित्तस्य चयलक्षणा दुष्टिः। "वर्षादिषु तु पित्तस्य" इति वचनात्कफस्य चयपूर्वकः प्रकोपः। उक्तं हि चरकेण—"भूबाष्पान्मेघनिस्यन्दात्पाकादम्लाज्जलस्य च। वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः॥" इति। चरकवचनेऽपि पित्तप्रकोपसम्बन्धेन [illegible] लक्ष्य, "चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्। भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु॥" इति वचनविरोधभयात्॥ ४०॥ ४१॥

किं तत्साधारणमिति तदुदाहरणार्थमाह—

**आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान्।**
**जांगलं पिशितं यूषान् मध्वरिष्टं चिरंतनम्॥**
**मस्तु सौवर्चलाढ्यं वा पंचकोलावचूर्णितम्।**
**दिव्यं कौपं शृतं चांभो भोजनं त्वतिदुर्दिने॥**
**व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु॥४२॥**

स०-शुद्धा तनुर्यस्य स एवंभूतः कृतविरेकादिः सन्नास्थापनं निरूहं भजेत्। तथा जीर्णं धान्यं पुराणयवगोधूमादिकम्। तथा रसान् मांसरसान्। किंभूतान्। कृतान् स्नेहशुंठ्यादियुतान्। तथा जांगलं पिशितं हरिणैणादिकं मांसम्। तथा यूषान् मुद्गदाडिमादिकृतान्। तथा मधु मार्द्वीकमरिष्टं द्वयमप्येतच्चिरंतनं पुराणं नतु नवमग्निमांद्यभयात्। मस्तु सौवर्चलाढ्यमक्षलवणसंयुक्तम्। वेति समुच्चये। किंभूतं मस्तु। 'पिप्पलीपिप्पलीमूलचव्यचित्रकनागराः' पंचकोलं तेनावचूर्णितम्। तथा दिव्यमाकाशजं तथा कौपं तथा शृतं क्वथितं चांभः पिबेत्। चः समुच्चये। दिवि भवं दिव्यम्। दिगादित्वाद्यत्। कूपे भवं कौपम्। प्राग्दीव्यतोऽण्। अतिदुर्दिने वातवर्षाकुलेऽहनि व्यक्ताः प्रधाना अम्ललवणस्नेहा यत्र तद्भोजनं भजेत्। तथा संशुष्कं शुष्कप्रायम्। तथा क्षौद्रवत्समाक्षिकम्। तथा लघु। ननु वातले मध्विति वक्ष्यति। पवनश्चात्र कुप्यतीत्युक्तम्। अतो माक्षिकस्यात्रोपयोगो न युक्तः। अत्रोच्यते। देहधातवोऽस्मिन् काले क्लेदमुपयांति। ततश्च क्लेदसंरक्षण

एवोपक्षीणप्रभावत्वान्मधु मरुत्कोपं विधातुमसमर्थम् । तस्मान्मधूपयोगो न्याय्य एव ॥ ४२ ॥

प०–शुद्धतनुः शुद्धदेहः वमनादिभिरास्थापनं निरूहं भजेत् । तथा–जीर्णं धान्यं वर्षोषितं रसान् मांसरसान् कृतान् संस्कृतान् भजेत् । जाङ्गलं पिशितं मांसं, यूषान्–मुद्गादिकृतान् । मधु-माध्वीकमारिष्टं–मद्यविशेषं तच्च चिरन्तनं निगदं भजेत् । मस्तु वा भजेत्, सौवर्चलाढ्यं सौवर्चललवणसंयुक्तम् । तथा पंचकोलेनावचूर्णितम् । अथवा क्वथितं दिव्यमम्भस्तोयं कौपं वा तोयं क्वथितं भजेत् । अतिदुर्दिने वातवर्षाकुले दिवसे भोजनमाहारजातं व्यक्ताऽम्ललवणस्नेहं व्यक्ताः स्फुटाः अम्ललवणस्नेहा यस्मिन् तथोक्तम् । संशुष्कं–शुष्कप्रायम् । क्षौद्रवत्-समाक्षिकं लघुमात्रावत् स्वभावतो वा तथाविधं भोजनं भजेत् । अस्मिन् काले धातवः संक्लेदयन्ति । ततश्च क्लेदसंरक्षणा एव उपक्षीणशक्तित्वान्मधुना वातकोपं कर्तुमसमर्थम् । तथाच ग्रन्थः–"वातलं वातकोपेऽपि वर्षासु मधु शस्यते" ॥ ४२ ॥

हे०—शोधनीं विधत्ते–शुद्धतनुः कृतविरेचनः सन्नास्थापनं–बस्तिकर्म भजेत्, शमनीं विधत्ते–जीर्णं–पुराणं, रसान्मांसरसान् कृतान् पटुकटुवम्लस्नेहयुतान्, पिशितं मांसं, यूषान्–धान्यक्वाथान्, तानपि कृतान्, मधु–मार्द्वीकम्, अरिष्टं–क्वथितौषधं, मद्यं द्वयमपि चिरन्तनम् । पञ्चकोलावचूर्णितं, सौवर्चललवणाढ्यं च । मस्तु दधिमण्डं, दिव्यमांतरिक्षं, तच्चातीताश्विनगृहीतं काचादिपात्रस्थं वर्षासु ग्रहणनिषेधात्, तदभावे कौपं तच्च शृतम् । उक्तं च संग्रहे–" दिव्यं क्वथितकूपोत्थं चौढ्यं सारसमेव च । " वर्षाविशेषे भोजनविशेषमाह " मेघच्छन्नेऽह्नि दुर्दिनम् " इत्युक्तत्वात् । अतिदुर्दिने वातवर्षाकुलेऽहनि । संशुष्कं कुल्माषादि, क्षौद्रवत्समाक्षिकं, वातलमपि मधुक्लेदघ्नत्वात्कालसात्म्येन न वातघ्नत्वाच्च विहितम् । उक्तं हि संग्रहे– " वातलं वातकोपेऽपि वर्षासु मधु शस्यते" इति ॥४२॥

अथाऽत्र काले यादृशः पुरुषः स्यात्तं दर्शयति–

**अपादचारी सुरभिः सततं धूपितांबरः ॥**
**हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ॥ ४३ ॥**

स०–पादाभ्यां चरति नित्यं पादचारी नैव यः सोऽपादचारी यानयायी स्यात् । तथा सुरभिः शोभनगंधयोगात्(स्नानशीलः सुसुरभिरित्यनेनैवास्योक्तत्वात्सुरभिग्रहणमतिशयार्थम् । तथा सततमविरतं धूपितेऽम्बरे यस्य स एवम् । तथा हर्म्यपृष्ठे धवलगृहतले वसेत् तिष्ठेत् कीदृशे । बाष्पश्च शीतं च शीकरश्च तैर्वर्जिते॥४३

प०–तासु वर्षास्वपादचारी स्याद्यथोक्तः रेणुमुख्यभिः सुरभिः सुगन्धकायोऽगुरुकर्पूरकुंकुमादिभिर्दिग्देहःस्यात । सततं—सर्वकालं, वरागुर्वादिभिर्धूपितवासः स्यात् । हर्म्यपृष्ठे गृहमस्तके बाष्पादिवर्जिते वसेत् । बाष्पमूष्मा, शीकरा—जलकणाः ॥ ४३ ॥

हे०—अपादचारित्वादि विधत्ते–अपादचारी-सततं हस्त्यादिवाहनगामी, धूपिताम्बरः—अगर्वादिधूपितवस्त्रः सततमपि त्रिष्वपि संबन्धनीयम् । अतएव स्नानशील सुसुरभिरित्यस्यापौनरुक्त्यम् । स्थानविशेषे वासं विधत्ते हर्म्यपृष्ठे हर्म्यमस्तके ॥ ४३ ॥

**नदीजलोदमंथाहःस्वप्नायासातपांस्त्यजेत् ४४।**

स०–तथा नदीजलादीन्पंच त्यजेत् । उदकालोडिता सक्तवः ससर्पिष्का उदमंथवाच्या जलावक्षारीसंज्ञाः तदत्र काले सात्म्यत्वात्सक्तवस्तक्रादिसंयोगान्नात्यंतमनिष्टाः । पानीयसंयोगात्तु वातलाः प्रकृष्टवातले काले नाभीष्टा एव । मुनिना त्वेवमुक्तम् । उदमंथं दिवास्वप्नमवश्यायं नदीजलम् । व्यायाममातपं चैव व्यवायं चात्र वर्जयेदिति ॥ ४४ ॥

प०–तत्र वर्षासु नदीनां जलम् । उदमन्थं द्रवेणालोडितान् सक्तून् ससर्पिष्कान् अहःस्वप्नं—दिवास्वापम् आयासं–व्यायामम् । आतपमादित्यरश्मींश्च त्यजेत् परिहरेत् ॥ ४४ ॥

हे०—नदीजलादीन् निषेधति—द्रवालोडिताः सक्तवो मन्थः स एव उदके द्रवे उदमन्थः, आयासो व्यायामः ॥ ४४ ॥

अधुना शरच्चर्यां विवक्षुराह–

**वर्षाशीतोचितांगानां सहसैवार्करश्मिभिः ।**
**तप्तानां संचितं वृष्टौ पित्तं शरदि कुप्यति ॥**
**तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ४५॥**

स०–वर्षासु शीतं वर्षाशीतं वर्षाशीतमुचितं सात्म्यं यस्य तदेवंविधमंगं वपुर्येषां ते वर्षाशीतोचितांगा नरास्तेषा सहसैव झटित्येव शरदि जातायामर्करश्मिभिर्भानुभाभिस्तप्तानां सतां पित्तं कुप्यति । किंभूतम् । वृष्टौ

संचितं वर्षासु वृद्धिं गतम् । यतश्चैवं ततश्च तज्जयाय तिक्तं घृतं कुष्ठचिकित्सितोक्तं योज्यमिति वाक्यशेषः । यदि वा तिक्तैर्द्रव्यैः साधितम् । तथा विरेको योज्यः । तथा रक्तमोक्षणं च सर्वोपक्रमेभ्यः पित्ते विरेकस्य ज्यायस्त्वादिह पूर्वमुपन्यासः । तथा ह्याह । विरेचनं पित्तहराणामिति । ततोरक्तमोक्षणं पित्ताधारत्वाद्रक्तस्य । विरेचनांगत्वाच्च तज्जयाय घृतं तिक्तमिति घृतस्य पूर्वमुपन्यासः न ह्यस्निग्धस्य विरेचनप्राप्तिरस्ति । तथा च वक्ष्यति । स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः । दारु शुष्कमिवानामे शरीरं तस्य दीर्यत इति । तथा विरिक्तस्य स्रुतरक्तस्य च पवनप्रकोपभयम् । कालस्वाभाव्याच्च पित्तकोपभयम् । तदेतत्परिहर्तुं तथा पुष्ट्यर्थमग्निसंधुक्षणार्थं च तिक्तघृतोपयोगः कार्यः । इत्यनेन कार्यकारणत्वेन प्राधान्याच्च तिक्तघृतस्य पूर्वमुपन्यासः । असमासकरणं च ज्ञापनार्थम् । नैतानि सर्वाण्यवश्यं तिक्तघृतादीनि तदा कार्याणि । किं तर्हि देशाद्यनुरोधात्कदाचित्पित्तविजयाय तिक्तं घृतं कदाचिद्विरेकः कदाचिद्रक्तमोक्षः कदाचिद् द्वयं कदाचित्सकलान्येवेति । विरेकस्तु पित्तविजयार्थमवश्यं शरदि कार्यः । तथा वसंते श्लेष्मविजयाय वमनम् । वर्षासु च पवनविजयाय वस्तिः । अत एव प्राङ्निर्दिष्टं वसंते च वमनं वर्षासु चास्थापनं शरदि विरेक इति ॥ ४५ ॥

प०—शरच्चर्यामाह—"शरदि व्योम शुभ्राभ्रं किञ्चित्पङ्काङ्किता मही । प्रकाशकाशसप्राह्वकुमुदाशालिशालिनी ॥ विक्षिप्ततीक्ष्णकिरणो मेघौघविषमाद्रविः । बभ्रुवर्णातिविमलाः क्रौञ्चमालाकुला दिशः ॥कमलान्तरसंलीनमीनहंसादिघट्टितैः । तरंगभङ्गतुङ्गानि सरांसि विमलानि च ॥" वर्षाशीतोचितांगानां–प्रावृषि शीतसात्म्यशरीराणां सहसैव झटित्येव शरदि प्राप्तायामर्करश्मिभिर्भानुभाभिस्तप्तानां पुंसां वृष्टौ वर्षासु सञ्चितस्वधाम्न्येव वृद्धिं गतं पित्तं कुप्यति, स्वशक्त्याधिक्येन स्वस्थानात् स्थानान्तरं गत्वोपतापं करोत्यसाधुजनवदिति । अतस्तज्जयाय पित्तनिवारणाय घृतं तिक्तं कुष्ठोक्तं प्रयोज्यं, विरेको–विरेचनम् । रक्तमोक्षणं–रक्तनिर्हरणं शरादिभिः कार्यम् ॥४५॥

हे०—अथ शरच्चर्या-सा च चयपूर्वके शोधनी, अचयपूर्वके शमनी । तत्र सोपपत्तिकां शोधनीं विधत्ते--वर्षासु संचितं पित्तं वार्षिकशीतसात्म्यशरीराणां नृणां शरदर्करश्मिभिः सहसैव [illegible]कुप्यति ॥ अतस्तस्य पित्तस्य जयाय तिक्तं [illegible] कुष्ठचिकित्सितोक्तं घृतं स्नेहार्थं योज्यं, ततो विरेकस्ततो रक्तमोक्षणम् ॥ ४५ ॥

**तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ॥**
**शालिमुद्गसिताधात्रीपटोलमधुजांगलम् ॥४६॥**

स०—क्षुधितोऽन्नं भोजनं तिक्तादिगुणयुक्तं भजेत् । क्षुधितग्रहणमतिबुभुक्षितप्रतिपादनार्थम् । अक्षुधितस्य भोजनाधिकाराभावात् । किं तत्तिक्तादिगुणयुक्तमित्याह । शालीत्यादि । शाल्यादीन् सप्त भजेत् ॥ ४६ ॥

प०--क्षुधितो–बुभुक्षितः, अन्नं–तिक्तं स्वादुकषायं लघु भजेत् । तथा शालिमुद्गान्, सितां-शर्कराम्, आमलकं, पटोलशाकं, माक्षिकं, जाङ्गलं च मांसं भजेत् सेवेत ॥ ४६ ॥

हे०—शमनीं विधत्ते—क्षुधितः सन् तिक्तादिकमन्नं लघु । शाल्यादिकमन्नं भजेत् । क्षुधितग्रहणमतिक्षुधितस्य भोजनार्थं, तथाहि—पित्ताधिक्यादसम्यक् क्षुध्यति क्षुधितत्वबुद्धिः । उक्तं च चरकेण—"पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ।" इति शाल्यादिग्रहणं तत्तुल्यानामेव तिक्तादीनां प्राप्त्यर्थं, धात्री—आमलकी, सिता शर्करा ॥ ४६ ॥

**तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ।**
**समंतादप्यहोरात्रमगस्त्योदयनिर्विषम् ॥**
**शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ।**
**नाभिष्यंदि न वा रूक्षं पानादिष्वमृतोपमम् ४७**

स०—समंतात्सर्वतः सूर्यप्रभाभिरहनि तप्तं कथितं च चंद्रकिरणैर्निशि शीतीकृतम् । तथा अगस्त्योदयेन निर्विषीकृतम् । तथा शुचि पवित्रम् । वर्षासु ह्यशुचीत्युक्तम् । तच्च हंसोपभोग्यतया हंसवदतिनैर्मल्याद्धंसोदकं नाम तंत्रकारैरायुर्वेदशास्त्रे संज्ञितम् । तथा निर्मलमकलुषम् । तथाऽमलत्वात् पित्तश्लेष्माणौ जयतीति मलजित् । अगस्त्योदयनिर्विषशब्देन विशेषणेनैतत्प्रतिपादयति । तथा यदंतरिक्षप्रभवं सरस्तडागादि-

१ अत्र कोष्ठान्तर्गता एते श्लोकाः क्वचिन्मूलेऽपि दृश्यन्ते।

किमन्यस्मिन्नृतौ प्राप्ते पूर्वर्तुचर्या सहसैव त्याज्याऽन्या च सेव्या नेत्याह—

**ऋत्वोरंत्यादिसप्ताहावृतुसंधिरिति स्मृतः ।**
**तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात्**

स०-ऋत्वोः शिशिरवसंतयोर्ग्रीष्मप्रावृषोरित्यादिकयोरंत्यश्चादिश्च यौ सप्ताहौ तावृतुसंधिरिति स्मृत उच्यते। तत्र सप्ताहद्वयलक्षणे ऋतुसंधौ पूर्वः पूर्वर्तुसंबन्धी विधिस्त्याज्यः।अपर एष्यदृतुसंबंधी सेवनीयः । कथम् । क्रमात्क्रमेण पादेनापथ्यमभ्यस्तमित्यादिना । सप्तानामह्नां समाहारः सप्ताहः । सप्ताहश्च सप्ताहश्च सप्ताहौ । "राजाहःसखिभ्यष्टच्" इति टच् समासांतः । "नसंख्यादेः समाहारे" इत्यह्नादेशनिषेधः ॥ ५३ ॥

प०-"ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः" इत्यादिसंग्रहेऽभिहितमाचार्येण कैश्चिदिहानीतमिति कृत्वा न व्याख्यातं तथाऽन्यान्यपि वाक्यानि बहून्यपि संग्रहोक्तानि भिषग्भिरिह प्रदर्शितानि,तान्यपि मया न व्याख्यातानि । आगमभ्रंशभयात् । किंच साधारणदेशे समधातुं प्रत्येष नियमः, यदुतास्मिन्नृताविदं सेव्यमिदं न सेव्यम् ॥ ५३ ॥

हे०-पूर्वापरयोर्ऋतुचर्ययोः क्रमेण त्यजनभजने विधत्ते-क्रमो यथा-पूर्वस्य ऋतोरंत्याः सप्ताहा, उत्तरस्य च आद्याः सप्ताहा एवं चतुर्दशाहा ऋतुसंधिः स्मृतः।तस्मिन्। ऋतुसन्धौ पूर्वर्तुसंबन्धिविधिः क्रमात् त्याज्यः, उत्तरर्तुसंबंधी क्रमात्सेव्यः ॥ ५३ ॥

ननु किमेवं त्यागः सेवनं च क्रियत इत्याह--

**असात्म्यजा हि रोगाःस्युःसहसा त्यागशीलनात्**

स०-यत्सहसा त्यागशीलनादसात्म्यादनुचिताजाता असात्म्यजा रोगाः स्युः । ततः सहसा त्यागशीलनं न कार्यमिति शेषः ॥ ५४ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुंदराख्यायां तृतीयोऽध्यायः संपूर्णः ॥ ३ ॥

प०—आनूपदेशे जाङ्गले वा विषमधातोरन्य धातुसाम्योत्पादनार्थं देहदेशानुगुणमन्यर्तुविहितमृतुविधानमन्यस्मिन्नप्यृतावनुष्ठेयम् । न यथोक्तं स सर्वथाऽनुष्ठेयमिति । इयं च चर्या आर्तानप्यपेक्ष "तामालोच्य प्रयुञ्जीत व्याधिकालबलाबलम्।" इ भद्रम् ॥ ५४ ॥

**इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकाया अष्टाङ्गहृदयटीकायामृतुचर्याऽध्यायस्तृतीयः ।३**

हे०-सहसा हि त्यागशीलने च क्रियमाणे असात्म्य रोगाः स्युः।ऋतुसंधेः प्रथमे दिने पूर्वस्याहारस्य त्रयः पाद उत्तरस्यैकः, द्वितीये पूर्व एवाहारः, तृतीये प्रथमवत् ,चत् पूर्वस्य द्वौ पादौ, उत्तरस्य द्वौ, पंचमषष्ठयोः प्रथमवत सप्तमे चतुर्थवत्, अष्टमे पूर्वस्यैक उत्तरस्य त्रयः, नव दशमैकादशेषु चतुर्थवत्, द्वादशेऽष्टमवत् , त्रयो उत्तराहार एव, चतुर्दशेऽष्टमवत् । अतःपरमु एवाहारः। अमुं च क्रमं पादेनापथ्यमित्यत्रोपपादयिष्याम सुश्रुतस्त्वहोरात्रे षड्ऋतूनाह—तत्र पूर्वाह्णे वसन्त लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षि शारदमर्द्धरात्रे, प्रत्युषसि हैमन्तमुपलक्षयेत एवमहोरात्रम शीतोष्णवर्षदोषोपचयप्रकोपोपशमैर्जानीयादिति । ततः कस्य दोषस्यैकस्मिन् काले चयप्रकोपशमैर्विरुद्धे चापद वार्षिकाणामाहोरात्रिकाणां च चयादीनां तथा समावेशात यथा—वसन्तस्य पूर्वाह्णे, मध्याह्ने ग्रीष्मस्य । मैवम् आ रात्रिकैश्चयादिभिरनवकाशैः सावकाशा वार्षिकाश्चयाद बाध्यन्ते । आहोरात्रिकः कफस्य हि प्रशमो, माध्याह्नि तस्यावकाशो मध्याह्न एव, प्रकोपस्तु वासंतिकस्तस्या काशाः सायाह्नादयोऽपि तेषामपि वसंतत्वात्।न ग्रीष्मा मध्याह्नो माध्याह्निकस्य प्रशमस्यावकाश इति वाच्यं, ग्री तावद्ग्रीष्मत्वादेव प्रशमे सिद्धे वैयर्थ्यं, वर्षासु दोषत्रयदुष्टि शरद्यपि किंचित्प्रकोप इष्टः । " कुर्यात्पित्तं च शर तस्य चानुबलः कफः" इति वचनात् । हेमन्तशिशिरः संचयः स्पष्टमेव । एवं चयप्रशमयोरपि वाच्यं, चयप्रको योस्त्वविरोधः द्वयोर्वृद्धिरूपत्वात् । यच्च प्रचलितत्वं प्रच विशेषः । तं प्रति चयहेतोरुदासीनत्वम् । एवं वातपित्तय रापि वाच्यम् । ननु "वयोऽहोरात्रिभुक्तानां तेंऽतमध्यादिग क्रमात् ।" इति वाक्ये पित्तकफवातानां मध्याह्नपूर्वरात्र पररात्रेषु प्रकोप उक्तः । सुश्रुतवाक्ये तु वातचय--वा प्रकोप—कफचया उक्ताः इति विरोधः, मैवं, दोषभेदेन विरोधात् । अथर्तुलक्षणं--संग्रहे--" धूमधूम्रारजोमंदार् षाराविलमण्डलाः । दिगादित्या मरुच्छैत्यादुत्तरो रोः हर्षणः ॥ रोध्रप्रियंगुपुन्नागा लवल्यां कुसुमोज्ज्वलाः दृप्ता गजाजमहिषवाजिवायसशूकराः ॥ हिमानीपटलच्छि

न्ना लीनमीनविहङ्गमाः । नद्यः सबाष्पाः सोष्माणः कूपापश्च हिमागमे ॥ देहोष्माणो विशन्तोऽन्तःशीते शीतानिलाहताः। जठरे पिण्डितोष्माणं प्रबलं कुर्वतेऽनलम् ॥ विसर्गे बलिनां प्रायः स्वभावादिगुरुक्षमम् । बृंहणान्यन्नपानानि योजयेत्तस्य युक्तये ॥ वसंते दाक्षिणो वायुराताम्रकिरणो रविः । नवप्रवालत्वकपत्राः पादपाः ककुभो मलाः ॥ किंशुकाशोकचूतादिवनराजिविराजिताः । कोकिलालिकुलालापकलकोलाहलाः कुलाः॥ग्रीष्मेऽतसीपुष्पनिभस्तीक्ष्णांशुर्दवदीपिताः। दिशो ज्वलन्ति भूमिश्च मारुतो नैर्ऋतोऽसुखः । पवनातपसंस्वेदैर्जन्तवो ज्वरिता इव । तापार्ततुङ्गमातङ्गमहिषैः कलुषीकृताः ॥ दिवाकरकराङ्गारनिकरैः क्षपिताम्भसः । प्रवृद्धरोधसो नद्यश्छायाहीना महीरुहाः ॥ विशीर्णजीर्णपर्णाश्च शुष्कवल्लीलताङ्किताः । वर्षासु वारुणो वायुः सर्वसस्यसमुद्भवः ॥ भिन्नेन्द्रनीलनीलाभ्रवृन्दमन्दाविलं नभः । दीर्घिकानववार्योघमग्नसोपानपंक्तयः ॥ वारिधाराभृद्याघातविकाशितसरोरुहाः । सरितः सागराकारा भूरव्यक्तजलस्थला ॥ मन्द्रस्तनितजीमूतशिखिदर्दुरनादिता । इन्द्रगोपधनुःखण्डविद्युदुद्योतदीपिता ॥ परितः श्यामलतृणा शिलंध्रकटुकोज्ज्वला।शरादि व्योम शुभ्राभ्रं किंचित्पङ्काङ्किता मही। प्रकाशकाशसप्ताह्वकुमुदाशालिशालिनी । विक्षिप्ततीक्ष्णकिरणो मेघौघविगमाद्रविः ॥ बभ्रुवर्णोऽतिविमलाः क्रौञ्चमालाकुला दिशः । कमलान्तरसंलीनमीनहंसांसघट्टनैः । तरङ्गभङ्गतुङ्गानि सरांसि विमलानि च । '' इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ऋतुचर्याप्रकरणं सामस्त्येन निरूपितम् ॥ ३ ॥

# चतुर्थोऽध्यायः ।

स्वस्थवृत्तिप्रवृत्तस्य वेगाधारणशीलस्य च स्वास्थ्यसंभवः। अतो वेगधारणप्रतिषेधेन या रोगानुत्पत्तिस्तामधिकृत्याध्याय आरभ्यते—

## अथातो रोगानुत्पादनीयाध्यायं व्याख्यास्यामः

स०—व्याख्याऽत्र प्रथमाध्यायवद्बोद्धव्या। रोगाणामनुत्पादोऽनुत्पादनं तस्मै हितो रोगानुत्पादनीयः।उपदर्शनमिदं निदर्शनाख्यम् । तंत्रयुक्त्या चोत्पन्नरोगोपशमप्रदर्शनाद्रोगोपशमनीयोऽपि वातादिरोधोत्थानां रोगाणामुपशमस्याप्युपदेशात् । तथा च वक्ष्यति—"अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः । निजागंतुविकाराणामुत्पन्नानां च शांतये॥" इति ॥ १ ॥

प०—प्रस्तुतादृतुचर्याऽध्यायादनन्तरं रोगानुत्पादनीयोऽध्याय आरब्धः । यस्मात् सत्यपि यथायथयोक्तार्तवविध्यनुष्ठाने वेगोदीरणधारणादवश्यं रोगमेव रोगस्तथाभूतः सम्भवति । यथोक्तार्तवविध्यनुष्ठानसन्यथा कुर्वते ततोऽस्यारम्भः। रोगाः कायमनोऽधिष्ठानभेदात् द्विधा व्याख्याताः, तेषामनुत्पादः स यस्मिन्नध्यायेऽस्ति तं व्याख्यास्यामः । स्वस्थवृत्ताधिकारश्चायम् । तेन स्वस्थेन सता दिनचर्याध्ययोक्तमाचारविधानमनुष्ठेयम् तथर्तुचर्याध्यायोक्तमेवं रोगोत्पादनं परिहरता वातादीनां वेगानामविधारणमनुष्ठेयं भवति ॥ १ ॥

हे०—अथातो रोगानुत्पादनीयमध्यायं व्याख्यातुं प्रतिजानीते । यतः पूर्वयोरध्याययोर्नियतकालो विहारो व्याख्यातः । इहानियतकालः, स च पञ्चधा--वेगधारणं, वेगोदीरणं, शोधनं, बृंहणं, भूताद्यस्पर्शनं च । तेषां च हानोपादानाभ्यां रोगाणामनुत्पादनं प्रागभावप्रध्वंसहेतुत्वात् । तत्र धारणोदीरणयोर्हानात्प्रागभावः शोधनाद्युपादानादुभयम् । अतएवायं रोगानुत्पादनहेतुत्वाद्रोगानुत्पादनीयः।ननु रोगानुत्पादनीयो यद्ययमध्यायस्तदौषधस्कंधे प्रणिधीयतां सत्यं य एव हि हेतवः तान्येवौषधानि, असम्यग्योगसम्यग्योगावेवात्र भेदकौ।किं त्वनुत्पन्नेषु व्याधिषु ये विहाराहारा रागतो विधितो वा प्राप्ताः प्रायः सेव्यंते हेतुस्कंधे विधीयंते। तेषामेव हि प्रमादात्प्रतिकूलदैवाद्वा सत्यस्य सम्यग्योगे।हेतुत्वं, य उत्पन्नेषु ते भेषजस्कंधे तेषामेव ह्यप्रमादादनुकूलदैवाद्वा सति सम्यग् योगे भेषजत्वं,पूर्वयोरुत्तरेषां च प्रणामध्यायानामनेनैवाभिप्रायेण हेतुस्कंधे प्रणिधानामिति सकलमनाकुलं रोगानुत्पादनीयत्वं च यद्यपि सर्वेषामेवाध्यायानां तथाप्यस्यैव संज्ञाकरणमतिशयद्योतनार्थम् ॥ १ ॥

**वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् । निद्राकासश्रमश्वासजृंभाश्रुच्छर्दिरेतसाम् ॥२॥**

स०—वातादीनां वेगान्न धारयेत् । सर्वत्र द्वंद्वसमासः । क्षवश्छिक्का । श्रमेण श्वासः श्रमश्वासः ॥ २ ॥

प०—तदर्थमाह—प्रवृत्तेराभिमुख्येनोपस्थितत्वं वेगः। तांश्च वेगान् वातादीनां सम्बन्धिनो न धारयेत् । श्रमेण जनितश्वासः श्रमश्वासः । तत्र वातस्य

प्राधान्यात्तद्रोधजानां रोगाणामतिप्रत्ययपायभयात्पूर्वं निर्देशः ॥ २ ॥

हे०—तत्र वेगधारणं निषेधति—प्रवृत्त्युन्मुखत्वं वेगः, वातशब्देनाधोवातश्चोर्ध्ववातश्च, क्षवः—क्षवथुः, श्रमेण श्वासः श्रमश्वासः, अश्रु—आनंदजं, शोकजं वा नेत्रोदकम् ॥ २ ॥

वातस्य प्राधान्यात्तद्रोधजान्रोगान् पूर्वं निदर्शयन्नाह----

**अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ।**
**वातमूत्रशकृत्संगदृष्ट्यग्निवधहृद्गदाः ॥ ३ ॥**

स०—अधोवातस्य रोधेन गुल्मादयो जायंते । ऊर्ध्ववातस्योद्गाररूपस्य रोधात् सुखसाध्या अरुच्यादयः । अत एवाधोवातरोधाद्ये रोगा अतिप्रत्ययपायरूपा गुल्मादयोऽत्र ते पूर्वं निर्दिष्टाः । उदावर्तोऽर्शोनिदाने वक्ष्यते । रुक् पीडा । क्लमो ग्लानिः । वातमूत्रशकृत्संगो वातादीनामप्रवृत्तिः । दृष्टेरग्नेश्च वधो नाशः । हृद्गदो हृद्रोगः ॥ ३ ॥

प०—पायुद्वारेणाधोवातस्य रोधाद्गुल्मादयो जायन्ते । उदावर्तः शकृदादीनामूर्ध्वगमनम् । रुक्—शूलम् । क्लमो-ग्लानिः । वातमूत्रशकृतां सङ्गोऽप्रवृत्तिः दृष्ट्यग्न्योर्वधो विनाशः । हृद्गदो—हृद्रोगः ॥ ३ ॥

हे०—तत्र निषेधातिक्रमे दोषं दर्शयन् वेगाधरणजान् रोगानाह—तत्राधोवातजान् रोगानाह—रुक्--कोष्ठशूलं, वातादीनां संगः--स्वाभाविकप्रवृत्तिरोधः, दृष्टिवधस्तिमिरम्, अग्निवधोऽग्निमांद्य, हृद्गदो--हृद्रोगः, अधोवातजानन्तरमूर्ध्ववातरोधजेषु वाच्येषु शकृन्मूत्ररोधजानां वचनं वातरोधजतुल्ययोगक्षेमत्वात् ॥ ३ ॥

**स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ।**
**पानानि बस्तयश्चैवं शस्तं वातानुलोमनम् ॥४**

स०—तत्र वातोत्थे विकारे स्नेहः कर्तव्यः, स्वेदः कर्तव्यः । फलवर्तयः कार्याः । वातहराणि भोजनानि कार्याणि । पानानि सुखोष्णोदकपानानि कार्याणि । बस्तयश्च कार्याः । यत्किंचिद्वातानुलोमनं तच्छस्तम् ॥ ४ ॥

**शकृतः पिंडिकोद्वेष्टप्रतिश्यायशिरोरुजः ।**
**ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम् ॥**
**मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृत**

स०—शकृतो रोधेन पिंडिकोद्वेष्टादयो जाय उद्वेष्टनमिवोद्वेष्टः।पिंडिकयोरुद्वेष्टः पिंडिकोद्वेष्टः । पिं जंघाकांडस्य पश्चिमे भागे पिंडाकृति कठिनं मां तत्रोद्वेष्टनेनेव रुग्भवतीत्यर्थः । प्रतिश्यायः पीन चः समुच्चये । न केवलमेत एव यावत्पूर्वोक्ता गु दयश्च स्मृताः ॥ ५ ॥

प०—शकृतः--पुरीषस्य रोधात् पिण्डिकयोरु भवेत् । पिण्डिकयोर्जंघयोः पश्चिमे भागे म उच्येते तयोरुद्वेष्टनं परिवर्तनं हस्तादिभिरिव नम् । प्रतिश्यायः—पीनसो मुखगतः । शिरोरुः वेदनाः । तथा मुखेनास्येन विट्प्रवृत्तिः—पुरीषप्र नम् ॥ पूर्वोक्ताश्चामया अधोवातरोधोक्ता गुल्मा स्तेऽपि भवन्ति ॥ ५ ॥

हे०—तत्र विड्रोधजानाह--जङ्घायाः पश्चिमे पिण्डिकाकृतिर्मांसपिण्डिका तस्या उद्वेष्टनम् उद्वेष्ट योरिव दुःखं, पूर्वोक्ताः अधोवातरोधजाः ॥ ५ ॥

**अंगभंगाश्मरीबस्तिमेढ्रवंक्षणवेदनाः ॥**
**मूत्रस्य रोधात्पूर्वे च प्रायो रोगाः ॥ ६ ॥**

मूत्रस्य रोधादंगभंगादयो जायंते । अंगानां स्फोटनमिवांगभंगः । बस्त्यादीनां वेदनया संबंध मेढ्रं शिश्नम्।पूर्वे च प्रायो रोगा अधोवातशकृद्रोध स्तेऽपि मूत्रस्य रोधाज्जायंते,प्रायोग्रहणाद्वातादिरो केचिदेवोत्पद्यंते केचिन्नेति बोधयति ॥ ६ ॥

प०—मूत्रस्य रोधादङ्गभङ्गादयो जायन्ते । अ नां भङ्गोऽङ्गभङ्गः । अङ्गानि भज्यन्त इव, मृद इव, वेष्टयन्त इव, कुट्यन्त इव। मूत्राश्मरी मूत्रकृ निदाने वक्ष्यमाणा । बस्त्यादिवेदना रुजा बस्ति त्राधारः । मेढ्रं--लिङ्गम् । वंक्षणावूरुसन्धी केवलमेते रोगा जायन्ते यावत्पूर्वे च रोगाः प्रा वातादिरोधजा गुल्मादयोऽपि मूत्रस्य रोधाज्जायन प्रायोग्रहणाच्च सर्वे वातादिरोधजा नोत्पद्यन्

किंतर्हि केचित् केचिन्नेति प्रायोग्रहणं किञ्चिन्न्यूनतामाचष्टे । तथाच आगमः--"प्रायः शब्दो विशेषार्थे किञ्चिन्न्यूने च दृश्यते" ॥ ६ ॥

हे०--मूत्ररोधजानाह--अङ्गभङ्गो भज्यमानेष्विवाङ्गेषु दुःखं बस्त्यादीनां च वेदनाः पर्वे रोगाः अधोवातविड्रोधजाः । ते च प्रायोग्रहणान्न सर्वे ॥ ६ ॥

**तदौषधम् ।**
**वर्त्यभ्यंगावगाहाश्च स्वेदनं बस्तिकर्म च ॥७॥**

स०--तदौषधं तेषां वातादिरोधजानां रोगाणामौषधं चिकित्सितं भवति । किं तदित्याह--वर्तिर्मदनफलादिकृता फलवर्तिसंज्ञा । अभ्यंगोऽभ्यंजनम् । अवगाहो वातहरद्रव्यसाधिते द्रवे द्रोण्यां निहिते पायुदेशस्यावस्थापनम् । स्वेदनं स्वेदः। वस्तिकर्म मलप्रवृत्तये वस्तिविधौ वक्ष्यमाणम् ॥ ७ ॥

प०--तेषां वातादिवेगत्रयरोधोत्थितानां व्याधीनामेकहेलयैव चिकित्सामाह--तदौषधम् । तेषां वातशकृन्मूत्ररोधजानां विकाराणामौषधं चिकित्सितं वर्त्यादि। वर्तिर्मदनफलागारधूमलवणादिकृता वक्ष्यमाणा फलवर्तिः। अभ्यङ्गस्तैलादिभिर्म्रक्षणम् । अवगाहो--द्रव्यक्वथिततोयतैलादिपूर्णायां द्रोण्यां निमज्जनम् । स्वेदनं वक्ष्यमाणं तापादिभेदेन चतुर्विधम् । बस्तिकर्म--पायुद्वारेण क्वथिततैलद्रव्यादीनां प्रक्षेपः । एतत्त्रिष्वसाधारणम् ॥ ७ ॥

हे०--उक्तानां वातादिरोधजानां रोगाणामौषधमाह--तेषामधोवातविण्मूत्ररोधजानामौषधं वर्तिः गुदे प्रणिधेया फलवर्तिसंज्ञा । अवगाहस्तैलादिपूर्णद्रोण्यां निमज्जनम् ॥७॥

पुरीषरोधोत्थेष्वन्यमप्यसाधारणमुपक्रममाह--

**अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ।**

स०--पुरीषवेगधारणजेषु यक्ष्मसु रोगेषु [illegible] पुरीषस्य भेदि भेदकमन्नपानं यावकमस्तु[illegible]मौषधम् । चशब्दात्पूर्वोक्तं वर्त्यादि च ॥ ८ ॥

प०--यक्ष्मसु--व्याधिषु, विड्रोधोत्थेषु-पिण्डिकोद्वेष्टनादिषु विड्भेद्यन्नपानं यावक--वाट्यालक--माष--कुल्माष--वास्तुक--[illegible]--मस्तु--काञ्जिकादि प्रयुञ्जीत ॥ ८ ॥

हे०--विड्रोधजानां [illegible]दिकं,यक्ष्मसु--रोगेषु, चकारः [illegible] "ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय" [illegible] मान्यबाधः स्यात् ॥ ८ ॥

**मूत्रजेषु च पाने च प्राग्भक्तं शस्यते घृतम् ।**
**जीर्णांतिकं चोत्तमया मात्रया योजनाद्वयम् ।**
**अवपीडकमेतच्च संज्ञितं ॥ ९ ॥**

स०--मूत्ररोधजेषु पुनः प्राग्भक्त[illegible] पाने शस्यते । जीर्णांतिकं[illegible] उत्तमया मात्रयाऽहोरात्रजरणलक्षणया । योजनाद्वयं तच्चावपीडकमुच्यते । योजनयोर्द्वयं योजनाद्वयं प्राग्भक्तस्नेहयोजना जीर्णांतिकस्नेहयोजना च । [illegible] प्राग्भक्तं यत्र घृतपानसमनंतरं भक्तं भुज्यते । जीर्णांतिकं यत् ह्यस्तनेऽन्ये जीर्णे घृतं प्रयुज्यते । प्रदेशांतरेष्ववपीडकशब्देन योजनाद्वयमेतदस्मिंस्तंत्रे वेद्यम् तथा च वक्ष्यति । रसैः कोष्णैश्च सर्पिर्भिरवपीडकयोजितैः । तथाऽष्टांगावतारे मूत्रोदावर्तचिकित्सायाम् । अवपीडकसर्पिश्च विशेषान्मूत्रजे गद इति ननु वेगधारणेन बाहुल्येन मरुत एव कोपः । तथा च वक्ष्यति। ततश्च नैकधा प्रायः पवनो यत्प्रकुप्यति पवनविजये च तैलं यथा वरं न तथा घृतमतस्तैलस्यैवावपीडकयोजनमत्रोचितं न सर्पिषः । अत्रोच्यते तैलस्य वातजितोऽपि बद्धविट्कात्पमूत्रत्वभावत्वादयोग्यं पानम् । तथा च । तैलं त्वयोनित्वा[illegible] त्यारभ्य यावद्बद्धविट्कमिति । त्वयोनित्वादित्युक्तेश्चाल्पमूत्रत्वम् । तथा च वक्ष्यति । उष्णस्त्वक्[illegible] हिमस्पर्शः केश्यो बल्यस्तिलो गुरुः । अल्प[illegible]

१ यद्यप्यत्र व्याख्यासुधाकारेण "वस निवासे" इत्यस्माद्वसन्ति मलमूत्रादयोऽस्मिन्निति विग्रहे "वसेस्तिः" इत्युणादिसूत्रेण तिप्रत्यये दन्तोष्ठ्यादिर्वस्तिः साधितस्तथापि कौमुद्यां भ्वादिगणे "बसु स्तम्भे" इत्योष्ठ्यादिपठिताद्धातोः स्तम्भनं स्तम्भः (धारणमिति यावत्) बस्यन्ते धार्यन्ते मलमूत्रादयोऽनया इति विग्रहे "स्त्रियां क्तिन्" इति सूत्रेण क्तिनि दृश्यतेऽनया दृष्टिः, श्रूयतेऽनया श्रुतिरितिवदोष्ठ्यादिर्बस्तिरिति प्रयोगोऽपि साधीयान् ।

इति। तदेवं तैलस्य बद्धविट्काल्पमूत्रस्वभावतया तदीयोऽवपीडको मूत्ररोधोत्थेषु रोगेष्वौषधत्वेन युक्तोऽपि न सर्पिष इव युक्तः ॥ ९ ॥

प०--मूत्रजेषु व्याधिष्वङ्गभङ्गादिषु सर्पिषश्चावपीडकं प्रयुञ्जीत। अवपीडकशब्देन स्नेहस्योत्तमा मात्रा भण्यते। याऽहोरात्रेण जीर्यते सा च प्राग्भक्तात् जीर्णाऽन्तिका वा। द्वयमप्येतदवपीडकसंज्ञम् ॥ ९ ॥

हे०मूत्ररोधजानां विशेषमाह--अवपीडो द्विविधः--ह्रस्वया मात्रया प्राग्भक्तप्रयोगः। उत्तमया अनन्नप्रयोगश्च। उक्तं हि संग्रहे--"मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम्। जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्। अवपीडकमेतच्च संज्ञितं धारणात्पुनः। चकारः सामान्यानुप्रवेशार्थम् ॥ ९ ॥

**धारणात्पुनः ॥**
**उद्गारस्यारुचिः कंपो विबंधो हृययोरसोः ॥**
**आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम्१०**

स०--पुनरपि व्यतिरेके। उद्गारस्य धारणादरुच्यादयो भवंति। उरो वक्षस्तस्याधो हृदयं तयोर्विबंधोऽतस्तंभ इव। तत्र तेषु रोगेषु हिध्मावद्भेषजम्। श्वासहिध्माचिकित्सिते हिध्मायाश्चिकित्सितं वक्ष्यति ॥ १० ॥

प०--उद्गारस्य रोधादरुच्यादयो जायन्ते। तत्रारुचिरन्नानभिनन्दनमरोचक इति यावत्। कम्पः--शिरःपाण्यादीनां वेपथुः। हृदयोरसोर्विबन्धो रोधोऽन्तस्तम्भ इव। आध्मानमुदरापूरः। कासहिध्मा यथास्वं वक्ष्यन्ते। तत्र तेष्वरुच्यादिषु व्याधिष्वौषधं चिकित्सितं हिध्मावत् हिध्माचिकित्सावत्। सा च वक्ष्यमाणा हिध्माचिकित्सितेऽध्याये ॥ १० ॥

हे०-उर्ध्ववातरोधजानाह--प्रकृतत्वाल्लभ्यते कंपः सर्वांगानां; हृदयोरसोर्विबंधः रज्ज्वादिभिर्बध्यमानयोरिव दुःखम् आध्मानमुदरापूरः। उद्गाररोधजानामौषधमाह--हिध्माया इव हिध्मावत् ॥ १० ॥

**शिरोऽर्तींद्रियदौर्बल्यमन्यास्तंभार्दितं क्षुतेः ११**

स०-क्षुतेः क्षवथोर्धारणाच्छिरोऽर्त्यादयः स्युः। दुर्बलस्य भावो दौर्बल्यम्। गुणवचनेत्यादिना ष्यञ्। इंद्रियाणां दर्शनादीनां दौर्बल्यं विषयग्रहणाशक्तित्वमिंद्रियदौर्बल्यम्। ननु च पूरणगुणेत्यादिना समासप्रतिषेधेन भवितव्यम्। अत्रोच्यते। य एव गुणशब्दा गुणिनावच्छिन्ना गुणमात्रे वर्तंते कदाचिद् गुणिन्यपि त ए[व] प्रतिषेधस्य विषयाः। यथा पटस्य शुक्लो गुडस्य मधु[र] इत्यादयः। ये तु गुणमात्र एव वर्तंते न गुणिनि [तेषां] समासस्य। यथा पटहशब्दः पुत्रस्पर्शः कन्यारू[पं] द्राक्षारसश्चंदनगंध इत्यादयः। तथेंद्रियदौर्बल्यमित्याद[ा]वपि भावप्रत्ययांतस्य सदा व्यतिरेककारणत्वाद् गुणाभि[धा]यित्वमेव। तस्मादेवमादौ तत्स्थैश्च गुणैः षष्ठी सम[ा]स्यत इति समासः। तस्यायमर्थः। तेषु गुणेष्वे[व] तिष्ठतीति तत्स्थाः। एतदुक्तं भवति। गुणा एव [ये] गुणा वर्तंते न द्रव्यात्मनि तैः सह षष्ठी समस्यते [।] शुक्लादिशब्दानां तु कदाचिद्द्रव्यवृत्तित्वात्सामानाधिक[र]ण्येनापि वृत्तिर्दृष्टा। यथा शुक्लः पट इति। गुण[वृ]त्तित्वात् वैयधिकरण्येनापि। यथा पटस्य शुक्ल इति [।] तदेषां प्रतिषेधविषयत्वम्। पटहशब्दादीनां तु तत्स्[थ]त्वात्समासविषयत्वमिति स्थितम्। नन्वेवं सति बल[ा]कायाः शौक्ल्यमित्यत्रापि पूर्वोक्तान्न्यायात्समासः प्राप्[नु]यात्। अत्रोच्यते भाष्यकारवचनान्न भविष्यति। [न] हि गुणवचनग्रहणमेव कस्मान्न क्रियत इत्युक्त्वाऽभि[धा]धात्। बलाकायाः शौक्ल्यमित्यत्रापि यथा स्यादिति समासस्यात्राभावः। गदितं वातव्याधिनिदाने ॥ ११ ॥

प०--क्षुतेः--क्षवथोर्विधारणात् शिरोऽर्त्यादयो ज[ा]यन्ते। शिरोऽर्तिः--शिरोवेदना। इन्द्रियाणां--च[क्षु]रादीनां दौर्बल्यं--स्वविषयाग्रहणासमर्थता। मन्[य]योः स्तम्भो मन्यास्तम्भः मन्ये द्वे मर्मणी स्मृते। त[त्]स्तम्भः--स्तब्धता निश्चलत्वम्, अर्दितं वायुना व[क्री]भूतं मुखस्यार्धम् ॥ ११ ॥

हे०-क्षवथुरोधजानाह-शिरोऽर्तिः-शिरोव्यथा, इन्द्रियदौर्बल्यं--विषयग्रहणाशक्तिः, अर्दितमेकायामः, क्षु[तेः] क्षवथोः ॥ ११ ॥

**तीक्ष्णधूमांजनाघ्राणनावनार्कविलोकनैः।**
**प्रवर्तयेत्क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत्**

स०--क्षुतिं सक्तामप्रवर्तमानां तीक्ष्णधूमादि[भिः] प्रवर्तयेत्। तीक्ष्णधूमो धूमपानविधौ वक्ष्यते। ती

चांजनमक्षिरोगेषु । तीक्ष्णाघ्राणं यन्नासया मरीचादिग्रहणम् । तीक्ष्णं नावनं तस्य विधौ वक्ष्यति । स्नेहश्च स्वेदश्च तौ च शीलयेदभ्यसेत् । क्षुतिः क्षुतम् । सुश्रुते चोक्तम् । प्राणापानौ समौ स्यातां मूर्ध्नि स्रोतःपथे स्थितौ । नस्तः प्रवर्तते शब्दः क्षुतं तत्र विनिर्दिशेत् ॥ १२ ॥

प०--अत्र क्षुतिं--क्षवथुं, सक्तामप्रवर्तमानां तीक्ष्णैर्धूमादिभिः प्रवर्तयेत् । तीक्ष्णो धूमो वक्ष्यमाणो धूमपानविधौ तीक्ष्णैर्मरीचादिभिरञ्जनं तीक्ष्णाञ्जनम् । तीक्ष्णानामौषधानां नासिकया घ्राणं सिंघनं तीक्ष्णघ्राणम् । नावनं--नस्यं तथापि तीक्ष्णमेव अर्कविलोकनमादित्यस्य वीक्षणम् । तथा तत्र स्नेहस्वेदावपि कुर्यात् ॥ १२ ॥

हे०—क्षवरोधजानामौषधमाह-क्षुत्यवरोधजेष्ववरुद्धायाः क्षुतेरतीक्ष्णैर्धूमादिभिः सूर्यविलोकनेन च प्रवर्तनम् तथा स्नेहस्वेदौ च शीलयेत् । संग्रहे तु-योज्यं वातघ्नमन्नं च घृतं चोत्तरभक्तकम् । " इति ॥ १२ ॥

**शोषांगसादबाधिर्यसंमोहभ्रमहृद्गदाः ।**
**तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः १३**

स०-तृष्णाया निग्रहान्निरोधाच्छोषादयो भवंति । तत्र तृष्णाया रोधजेषु विकारेषु सर्वः शीतो विधिः स्नानान्नपानादिको हितः ॥ १३ ॥

प०--तृष्णाया निग्रहात्--तृड्रोधात्, शोषादयो जायन्ते । शोषो--मुखशोषः । अङ्गस्य सादोऽङ्गसादः-शरीरावसादोऽनुत्साह इति यावत् । बाधिर्यं-जडत्वं कर्णयोरश्रुतिः । संमोहो--विचेतनत्वम् । भ्रमणं--भ्रमः, चक्रोपारूढस्येव चलनम् । हृद्गदो--हृद्रोगः । तत्र--तेषु व्याधिषु सर्वो विधिः-स्नानान्नपानादिकः, शीतो हितः ॥ १३ ॥

हे०—तृड्रोधजानाह--शोषो--मुखशोषः, अङ्गसादोऽङ्गवैक्लव्यं संमोहो--ज्ञानाभावः, भ्रमश्चक्रारूढस्येव भ्रमणं, हृद्गदो--हृद्रोगः । तृड्रोधजानामौषधमाह--तत्र तृष्णारोधजेषु ॥ १३ ॥

**अंगभंगारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ।**
**तत्र योज्यं लघुस्निग्धमुष्णमल्पं च भोजनम् १४**

स०—क्षुध इति । निग्रहादित्यनुवृत्तिः । निग्रहापेक्षया षष्ठी । एवं निद्राया इत्यत्रापि योज्यम् । क्षुधो बुभुक्षाया निग्रहादंगभंगादयः षड् भवंति । सामान्येनापि शूलशब्दनिर्देशे पक्वाशयगतः शूलो गृह्यते । क्षुद्वेगनिग्रहेणानिवारणः प्रभंजनः कुप्यति । तस्यावस्थानं पक्वाशये । वक्ष्यति हि । पक्वाशयकटीत्यारभ्य यावत्पक्वाधानं विशेषत इति । तत्र क्षुधो निग्रहे भोजनं लघु स्निग्धमुष्णमल्पं च योज्यम् ॥ १४ ॥

प०--क्षुधो--बुभुक्षाया विधारणादङ्गभङ्गादयो भवन्ति । अङ्गानां भङ्गोऽङ्गभङ्गः अरुचिररोचकः । ग्लानिरप्रहर्षः, कार्श्यं--कृशता, शूलं--रुक्, भ्रमो भ्रमणमिव । तत्र-तेषु रोगेषु, भोजनं-लघुरक्तशाल्यादिभिर्लघुभिः कृतं योज्यम् । स्निग्धं घृतमांसरसादिभिर्युक्तम् । उष्णं तप्तं सोष्म । अल्पं मितं मात्रावत् ॥ १४ ॥

हे०—क्षुद्रोधजानाह--ग्लानिः--क्लमः, शूलं--कोष्ठशूलं, क्षुद्रोधजानामौषधमाह--तत्र क्षुधारोधजेषु ॥ १४ ॥

**निद्राया मोहमूर्धाक्षिगौरवालस्यजृंभिकाः ॥**
**अंगमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च । १५**

स०-निद्राया निग्रहान्मोहादयो भवंति । तत्र निद्रावेगरोधोत्थे विकारे स्वप्न इष्टः । संवाहनानि स्वल्पानि मर्दनानि च ॥ १५ ॥

प०--निद्रासंधारणात् मोहादयो भवन्ति । मोहो--वैचित्यम् । मूर्ध्नः शिरसो--ऽक्ष्णोश्च गौरवं गुरुत्वम् । आलस्यमलसता जृम्भिकाऽङ्गविनामेन सह मुखस्योद्घटनं साङ्गभङ्गम् तथाङ्गमर्दोऽङ्गानि मृद्नन्त इव । तत्र तेषु रोगेषु स्वप्नः स्वापः इष्टः । तथा संवाहनानि सुखं कृत्वा कायस्य मर्दनानीष्टानि ॥ १५ ॥

हे०-निद्रारोधजानाह-मूर्ध्नः अक्ष्णोश्च गौरवम् ,आलस्यमनुत्साहः, अङ्गभङ्गोऽङ्गमर्दः । निद्रारोधजानामौषधमाह--संवाहनं--सुखस्पर्शमर्दनम् ॥ १५ ॥

**कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ॥**
**शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः १६**

स०-कासस्य कासवेगस्य रोधात्तद्वृद्धिः तस्य कासस्य वृद्धिराधिक्यं स्यात् । तथा श्वासादयः । तत्र कासचिकित्सितोक्तः सुतरामतिशयेन विधिः कार्यः ॥ १६ ॥

प०--कासस्य रोधात्तद्वृद्धिः तस्यैव कासस्याधिक्यं भवेत्। श्वासारुचिहृदामयाश्च भवन्ति। तथा शोषो राजयक्ष्मा हिध्मा च जायते। तत्र तेषु रोगेषु कासहा--कासघ्नः कासचिकित्साविहितो विधिः सुतरामतिशयेन कार्यः ॥ १६ ॥

हे०--कासरोधजानाह--तद्वृद्धिः--कासवृद्धिः, शोषो--राजयक्ष्मा । कासरोधजानामौषधमाह--अत्र--कासरोधजेषु ॥ १६ ॥

**गुल्महृद्रोगसंमोहाः श्रमश्वासाद्विधारितात्।**
**हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः १७॥**

स०-श्रमेणाध्वव्यायामादिना साहसेन सद्यो जातः श्वासः श्रमश्वासः। तस्माद्विधारिताद्वेगरोधाद्गुल्मादयः स्युः। तत्र विश्रमणं हितम्। वातघ्नश्च क्रियाक्रमो हितः॥ १७॥

प०--श्रमश्वासो व्यायामादिभिरासेवितैर्यः सद्य एवोत्पन्नस्तस्मात् श्वासाद्विधारितात् गुल्महृद्रोगसंमोहा जायन्ते। तत्र तेषु रोगेषु विश्रमणं व्यायामादिवर्जनत्वं निरीहत्वं हितम्। तथा वातघ्नः क्रियाक्रमो वातव्याधिनिर्दिष्टो हितः ॥ १७ ॥

हे०--श्रमश्वासरोधजानाह--गुल्मेति। श्रमश्वासरोधजानामौषधमाह--हितमिति ॥ १७ ॥

**जृम्भायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः १८**

स०-जृंभाया रोधात् क्षुतिवद्रोगाः। तत्र सर्वा च वातघ्नक्रिया हितेति शेषः। जृंभा मुखविकासो गात्रविनामः ॥ १८ ॥

प०--जृम्भाया विधारणात् क्षववत् क्षुतिवत् रोगाः शिरोऽर्तीन्द्रियदौर्बल्यादयो जायन्ते।तेषु रोगेषु सर्वो विधिरनिलजित् वातघ्नः कार्यः ॥ १८ ॥

हे०--जृंभारोधजानाह--क्षववत् क्षवथोरिव शिरोऽर्त्यादयः। जृंभारोधजानामौषधमाह--सर्व इति। प्रकृतत्वाज्जृंभारोधजानाम् ॥ १८ ॥

**पीनसाक्षिशिरोहृद्रुङ्मन्यास्तंभारुचिभ्रमाः।**
**सगुल्मा बाष्पतस्तत्रस्वप्नोमद्यंप्रियाःकथाः १९॥**

स०-बाष्पतोऽश्रुणो विधारितात् पीनसादयो भवंति। पीनसो नासास्रावः। अक्षिशिरोहृदां रुजा संबंधः।सशब्दश्चार्थे। गुल्माश्चेत्यर्थः। तत्र स्वप्नादिका चिकित्सा॥ १९॥

प०--बाष्पतोऽश्रुविधारणात् पीनसादयः सगु[ल्माः] भवन्ति। पीनसो--नासास्रुतिः, अक्षिशिरोहृदि पीडा। मन्ययोः स्तम्भो मन्यास्तम्भः। अरुच्या[दयः] व्याख्याताः। तत्र तेषु रोगेषु स्वप्नो निद्रा हिता। मार्द्वीकादि। प्रियाः कथाः सुखजनकाः धर्म[सम्बन्धिन्यो] सम्बन्धिन्यो हिताः ॥ १९ ॥

हे०--बाष्परोधजानाह-अक्षिरोगः, शिरोरोगो, हृ[द्रोगः] बाष्पमश्रु। बाष्परोधजानामौषधमाह--तत्र बाष्परो[ध]... प्रियाः--मनोहराः ॥ १९ ॥

**विसर्पकोठकुष्ठाक्षिकंडूपांड्वामयज्वराः।**
**सकासश्वासहृल्लासव्यंगश्वयथवो वमेः॥ २[०]**

स०--वमेश्छर्दिषो विधारिताया विसर्पादयः ... कोठो लोहितं काठिनं च मंडलम्। अक्षिकंड्वा... मामयेन संबंधः ॥ २० ॥

प०--वमेश्छर्दिषो विधारणात् विसर्पादयः क... दिभिः सह प्रादुर्भवन्ति। विसर्पो निदाने व... णः। कोठो--लोहितानि मण्डलानि। कुष्ठं--त्व... कारः। अक्षिरोगादयः स्वे स्वेऽध्याये वक्ष्य... श्यामलं मण्डलं व्यङ्गम्। वक्त्रादन्यत्र नीलि... हृल्लासो हृदयपरिवर्तनम्। हृदयस्य छ... उत्क्लेशः ॥ २० ॥

हे०--वमिरोधजानाह--कोठः-क्षुद्ररोगविशेषः अ... मयः कंड्वामयः, पांड्वामयः, हृल्लासः--हृद... व्यथासहितः, सलवणपानीयोद्गिरणं व्यंगः--क्षुद्र... विशेषः ॥ २० ॥

**गंडूषधूमानाहारान् रूक्षं भुक्त्वा तदुद्वमः**
**व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेच[नम्]**
**सक्षारलवणं तैलमभ्यंगार्थं च शस्यते।**

स०-तत्र गंडूषादयः शस्ताः। अनाहारोऽभोज[नम्]। एतेषां द्वंद्वः। तथा रूक्षं भुक्त्वा तस्य रूक्षस्योद्ग[ि]र्दनम्। एवं प्राणो वायुः स्वमार्गं प्रत्येति ततो व... मात्र शस्तम्। तथा क्षारलवणाभ्यां युक्तं तैल... गार्थं शस्यते हितं भवति ॥ २१ ॥

प०--तत्र गण्डूषो-द्रव्यकाथेन मुखपूरणं हि... धूमश्च तीक्ष्णः। अनाहारो--लंघनम्। तथा रू... हारं भुक्त्वा तस्यैवोद्वमः पुनर्वमनं हितम्। त...

व्यायामः-शरीरायासजननं कर्म । अस्रस्य रक्तस्य शस्त्रादिभिः स्रुतिः स्रावः । तथा विरेचनं चात्र हरीतकीमाक्षिकादिभिः शस्तम् । तथाभ्यङ्गे सक्षारलवणं तैलम् हितं ॥ २१ ॥

हे०--छर्दिरोधजानामौषधमाह--क्षारलवणाभ्यां युक्तं तैलम्, अनाहार---उपवासः, रूक्षमन्नं भुक्त्वा तस्यैवान्नस्य उद्गमः---वमनम्, अस्रस्रुतिरस्रस्रावः ॥ २१ ॥

**शुक्रात्तत्स्रवणं गुह्यवेदना श्वयथुर्ज्वरः ।**
**हृद्व्यथा मूत्रसंगांगभंगवृद्ध्यश्मषंढताः ॥२२॥**

स०--शुक्राद्विधारितात्तस्य शुक्रस्य स्रवणम् । तथा गुह्यवेदना पायुवेदना वृषणशूलम् । तथा श्वयथुः प्रकृतत्वाद् गुह्य एवेति योज्यम् । वृद्धिर्वर्ध्म। अश्मशब्देनाश्मरी कथ्यते । षंढता स्त्रीगमनाशक्तित्वम् ॥ २२ ॥

प०--शुक्रविधारितात्तस्यैव शुक्रस्य स्रवणं निर्गमनं भवेत् । गुह्यवेदना-लिङ्गरुजः । श्वयथुः ज्वरः स्यात् । हृदि व्यथा हृदि पीडा । मूत्रस्य सङ्गो मूत्राप्रवृत्तिः । अङ्गानां भङ्गोऽङ्गभङ्गः । वृद्धिर्वर्ध्म । अश्म--अश्मरी । षंढता--क्लैब्यं स्त्रीष्वहर्षः ॥ २२ ॥

हे०--शुक्ररोधजानाह-तत्स्रवणं-शुक्रस्रावः, गुह्यस्य-मेढ्रस्य वेदना, श्वयथुः---शोफः, वृद्धिर्मुष्कवृद्धिः अश्म---अश्मरी, षण्ढता---अपत्यजननासामर्थ्यम् ॥ २२ ॥

**ताम्रचूडसुराशालिबस्त्यभ्यंगावगाहनम् ॥**
**बस्तिशुद्धिकरैः सिद्धं भजेत्क्षीरं प्रियाः स्त्रियः २३**

स०--तत्र ताम्रचूडादिकं भजेत् । तथा बस्तिशुद्धिकरैः कूष्मांडादिभिः सिद्धं क्षीरं भजेत् । प्रियाश्च कांताः प्रियत्वेन हिता इति शेषः । निरनुबंधेन रमसेन प्रवर्तते शुक्रम् ॥ २३ ॥

प०--तत्र ताम्रचूडादिकं भजेत्।ताम्रचूडः कुक्कुटः। सुरा--प्रसन्ना घना वा । शालयो-रक्ताद्याः । बस्तिर्निरूहाऽनुवासनोत्तरबस्तिभेदेन त्रिविधः । अवगाहो-द्रोण्यां क्वाथादिपूर्णायां निमज्जनम् । बस्तिशुद्धिकरैः कूष्माण्डगोक्षुरकवर्णादिभिः सिद्धं क्षीरं भजेत् । स्त्रियः प्रिया वल्लभा भजेत् ॥ २३ ॥

हे०--शुक्ररोधजानामौषधमाह---ताम्रचूडः कुक्कुटः, बस्तिर्बस्तिकर्म । बस्तिशुद्धिकरैर्मूत्राशयशोधनैर्यवक्षारादिभिः सिद्धं क्षीरं भजेत् । एवं वेगरोधजा रोगा उक्ताः२३

वेगरोधिनो ये न चिकित्स्यास्तान्दर्शयन्नाह--

**तृट्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम् २४**

स०--तृट् च शूलं च ताभ्यामार्तमातिपीडितं तथा क्षीणं क्षीणदेहं वेगरोधिनं च त्यजेन्न चिकित्सेत् । तथा विशं यो वमति तं च वेगरोधिनं त्यजेत् ॥२४॥

हे०--तृडाद्युपद्रुतस्य वेगरोधिनम् उपक्रमं निषेधति--क्षीणं---क्षीणधातुं, विड्वमं---पुरीषवमनम् ॥ २४ ॥

अथ किमेते रोगा वेगोदीरणधारणाद्भवंति नेत्याह--

**रोगाः सर्वेऽपि जायंते वेगोदीरणधारणैः॥२५॥**

स०--सर्वेऽपि रोगा जायंते न केवलं पूर्वोक्ता एव। वेगानां पुरीषादिसंबंधिनां यान्युदीरणान्यनागतानां प्रवर्तनानि तैः । तथा तेषामेवागतानां यानि विधारणान्यनुत्सर्गलक्षणानि तैः । अत्रेयं युक्तिः । वेगोदीरणधारणं नाम वायोः कर्म तस्य क्रियावत्त्वात् । तेन च वेगोदीरणधारणलक्षणेन स्वकर्मणा स एव वायुः कोप्यते। स कुपितः सर्वानेव विकारान् जनयति । तथा चोक्तम्। शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवांगजाश्च। ये संति तेषां नतु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति । विट्श्लेष्मपित्तादिमलायनानां विक्षेपसंहारकरः स यस्मादिति ॥२५॥

प०--वेगोदीरणधारणैः सर्वेऽपि रोगाः-समस्ता अपि व्याधयो जायन्ते । न केवलं वेगरोधिनां य उक्तास्त एव रोगा जायन्ते । यावत्सर्वेऽप्यन्ये न ज्वरादयः इत्यपरोऽर्थः ॥ २५ ॥

हे०---वेगधारणवत्सर्वरोगहेतुत्वकथनद्वारा वेगोदीरणं निषेधति--उक्तानां वेगानामुदीरणैर्धारणैश्च सर्वेऽपि रोगा जायन्ते न पुनः पूर्वोक्ता एव, प्रवृत्तावनुन्मुखस्य बलादुन्मुखीकरणं वेगधारणवत्सर्वरोगहेतुत्वाद्वेगोदीरणमपि त्यजेदित्यर्थसिद्धम् ॥ २५ ॥

**निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥**
**ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति ॥**
**अन्नपानौषधं तत्र युंजीतातोऽनुलोमनम् ॥२६॥**

स०--तत्र तेषु वेगोदीरणधारणोत्थेषु सर्वेषु मध्याद्ये तु भूयिष्ठं बाहुल्येन भवंति गुल्मोदावर्तादयस्तान् प्रति वर्त्यभ्यंगेत्यादिना साधनं निर्दिष्टं चिकित्सोक्ता । ततश्च वेगोदीरणधारणादनेकधा वायुर्यस्मात्कुप्यति । अतोऽस्माद्धेतोस्तस्यानुलोमनं मार्गयोजकमन्नपानौषधं युंजीत । यद्यपि वेगोदीरणधारणात्सर्वे रोगा जायंत इत्युक्तम् । तथापि यथा वेगधारणाच्चिरकालभाविनः सप्रत्यया रोगा भवंति न तथोदीरणात् । अत एव तन्त्रकारोऽधोवातस्य रोधेनापि रोगा भवंति । शकृतो रोधादमी भवंतीत्युवाच । नतु तदुदीरणादमी रोगा भवंतीति । प्रायोग्रहणं क्वचित् कफादेरपि प्रकोप इति समापादयति । तथा च वमिनिग्रह उक्तम् । विसर्प-कोठकुष्ठाक्षीत्यादि । तत्र गंडूषधूमानाहार इत्यादिचिकित्सा । न चैवंरूपो विधिर्वायावुपदिश्यते तस्मात्प्रायोग्रहणम् ॥ २६ ॥

प०--ये पुनः व्याधयो भूयिष्ठं बाहुल्येन जायन्ते तान् प्रति साधनं चिकिस्सितमिह निर्दिष्टं प्रोक्तम् । ततश्च वेगानामुदीरणात् धारणाच्च प्रायो-बाहुल्येन पवनो-वायुरनेकधा-ऽनेकप्रकारं कृत्वा यद्यस्मात् प्रकुप्यति प्रकोपमायाति, अतोऽस्मात् कारणात्तस्य वायोरन्नपानौषधं वातानुलोमनं वातसाम्यकरं विमार्गस्थस्य स्वमार्गयोजकं विबन्धहरं युञ्जीत ॥ २६ ॥

हे०--सर्वेषां साधनानुक्तौ हेतुमाह—सर्वेषां साधने वक्तव्ये यत्केषांचिद्गुल्मोदावर्तादीनां साधनमुक्तं तत्रायं हेतुः यद्गुल्मादयो बहुलमुत्पद्यन्ते इतरे तु विरलम् । अनुक्तसाधनानां सामान्येन साधनमाह—यद्यस्मात्ताभ्यां वेगोदीरणधारणाभ्यां पवनः कुप्यत्यनेकधा अनेकव्याधिरूपेण प्रायोग्रहणात्पित्तकफावपि अतः कारणात्तस्य वायोरनुलोमनमन्नपानौषधं युञ्जीत ॥ २६ ॥

यदि वेगरोधाद्रोगा जायंते तर्हि लोभादीनामपि नरकादिहेतूनां वेगा न धार्या इति प्राप्ते सतीदमाह--

**धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ।**
**लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेंद्रियः॥२७॥**

स०-तुशब्दोऽवधारणे । सदा सर्वकाले लोभेर्ष्यादीनां वेगान् धारयेदेवं हितैषी यः पुरुषः स्वहितमिच्छन् । क । प्रेत्य चेह च परलोके तथेहलोके च । किंभूतः सन् । जितानि दांतानींद्रियाणि मनःषष्ठानि चक्षुरादीनि विषयाणामनभिलाषुकतया येन स जितेंद्रियः । जितेंद्रियशब्देन लोभादिवेगविधारण उपायं दर्शयतिः। जितेंद्रिय एवैतान् धारयितुं शक्तो नान्य इत्यर्थः । द्वेषो वैरम् । मात्सर्यं परगुणासहिष्णुत्वम् । रागः प्रीतिः । आदिशब्देनाभिध्यादिपरिग्रहः । प्रेत्येह चेति कर्तव्ये द्विश्चकारकरणं रागादीनां वेगविधारणेन प्रेत्येह वास्मिन् लोके तुल्यकक्षत्वज्ञापनार्थम् । अन्यथा प्रेत्येत्यस्य पूर्वनिर्देशाद्भूयसैषां रागादीनां विधारणं प्रेत्य न तथेहलोके । पश्चान्निर्दिष्टत्वात् ॥ २७ ॥

प०--इमान् पुनर्वेगांल्लोभादीनां जितेन्द्रियो नरं हितैषी हितेप्सुर्हितमिच्छुः प्रेत्य चेह च इहलोकपरलोकयोरपि हितैषी सर्वदा सर्वस्मिन् काले धारयेत् लोभोऽन्यस्वे स्पृहा । ईर्ष्याऽक्षमा । द्वेषः प्राणिन द्वेष्टि । मात्सर्य-मत्सरत्वम् । रागस्त्र्यादिष्वभिलाषः । आदिग्रहणाद्भयक्रोधदम्भमदादीन ग्रहणम् ॥ २७ ॥

हे०--लोभादिवेगधारणं विधत्ते—प्रेत्य परलो इह इहलोके, लोभो--लोलुपत्वम्, ईर्ष्या परोत्कर्ष सहनं, द्वेषः—परापकारेच्छा, मात्सर्यं क्रोधः, रागो विषयासक्तिः, आदिशब्दाच्छोकादयः, जितेन्द्रियः सन्निद्रियजयवान् धारयेन्ननु भयादिना भयादिधृतानां रोगहे तुत्वात् । इति वेगोदीरणधारणम् ॥ २७ ॥

अन्यच्च हितैषी किं कुर्यादित्याह—

**यतेत च यथाकालं मलानां शोधनं प्रति ।**
**अत्यर्थसंचितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः**

स०--मलानां वातपित्तश्लेष्मपुरीषादीनां यथाका शोधनं प्रति यतेत यत्नं कुर्यात्।यो यस्य मलस्य शोध कालः स तस्मिन्काले शोधनीय इत्यर्थः। किमर्थं मला शोधनं कार्यमित्याह। अत्यर्थेत्यादि। यस्मात्ते मला अत्यर्थसंचिता अतिशयेन स्वस्थाने वृद्धिं गताः कुतोऽप्याहा विहाररूपात् कोपहेतोः क्रुद्धाः कुपिताः संतः कद चिज्जीवितच्छिदः स्युर्भवेयुः । तस्मात्ते शोधनीयाः

---

१ "जितेन्द्रियं नानुपत ( ह ) न्ति रोगाः" इति **चरकः**। जितेन्द्रियमित्यनेन च रोगहेतुप्रज्ञापराधाऽसात्म्येन्द्रियार्थवर्जनमिति **चक्रपाणिः** ।

अत्यर्थसंचितग्रहणेनैतद्द्योतयति । यदि ते मला अत्यर्थसंचिताः स्युस्तदैव तेषामन्योपक्रमेभ्यः शोधनाख्य उपक्रमो ज्यायान्। लंघनपाचने तूपक्रममात्रे ॥ २८॥

प०—मलानां--वातपित्तश्लेष्मपुरीषादीनां शोधनं ाति--निर्हरणं प्रति यतेत--यत्नं कुर्वीत । यथाकाले--कालानतिक्रमेण। यस्मात्ते मला अत्यर्थं संचिताः ।तिशयेन स्वस्थाने वृद्धिं प्राप्ताः, कदाचित् कोपतुमासाद्याहारविहाररूपं यदा क्रुद्ध्यन्ति तदा क्रुद्धास्ते मलाः सन्तो जीवितच्छिदः स्युः आयुषो ार्तारो भवेयुः। ततस्ते शोधनीयाः । एवमत्यर्थसंचितानां प्रधानोपक्रमः शोधनाख्यो यतः शीघ्रमेव ोपशयो जायते । चिरेण पुनर्लंघनपाचनाभ्यां ंचितप्रायाणां लंघनपाचने प्रधानोपक्रमः । ईषत्संचितानां लंघनमेव प्रधानोपक्रमः । एवं क्वचित्संशोनं प्रधानं क्वचिच्च लंघनपाचनैः, क्वचिच्च लंघनमेव धानोपक्रमः । यत एवं ततोऽयं ग्रन्थ आरब्धुं ाय्यः ॥ २८ ॥

हे०--शोधनं विधत्ते-मलानां-वातपित्तकफानां, शोधर्थं प्रयत्नं कुर्यात्।हि यस्मात्ते शोधनं विना अत्यर्थं संचिाः स्युःततो जीवितच्छिदःयथाकालं यस्य यस्य दोषस्य यस्य ाधनस्य च यो यः कालः तदा तदा तस्य दोषस्य तत्तच्छोनं कुर्यात्, अत्यर्थसंचयाद्यथा जीवितच्छित्त्वं न स्यात् । थोक्तं संग्रहे—"चयकाष्ठामपारूढ्य कुर्वते तेह्युपेक्षिताः । ायशः सुचिरेणापि भेषजद्वेषिणोगदान् ॥अतिस्थौल्यातिसनकुष्ठमेहहतौजसः।स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपांडुताः॥ ामोरुस्तंभजठरक्रुच्छ्रालसकदण्डकान् । तृप्तिप्रमीलकालग्रहमर्शोभगन्दरान् ॥ प्लीहविद्रधिवीसर्पमदसंन्यासपीनन्। छर्दिगण्डक्रमिग्रन्थितन्द्रादुःस्वप्नदर्शनम्॥ कण्ठामया र्धरुजः प्रणाशो बुद्धिनिद्रयोः।तेजोवर्णबलानां च तृप्यतो हणैरपि॥उचितैरुचिताचारैर्यस्मादस्य वहंति न । दोषेण ग्नवदना रसं रसवहाः शिराः ॥ वमनादितरे युंज्यात्स्वप्रस्यैव यथाविधिः ।" इति । ननु"भिषजः शोधनं प्राहुर्ज्यं स्वस्थेन सर्वदा॥पन्नगस्येव घोरस्य समुदीरणम्"इति श्रुतादिभिः शोधनं निषिद्धम्, इह च विहितमिति विरो: । मैवं विषयभेदात्, द्विविधो—हि स्वस्थः संचितदोषो- संचितदोषश्च । तत्राद्यो विधिविषयः परः प्रतिषेधस्येति । नु संचयो वैषम्यं, वैषम्यं च रोगः । निरोगः—स्वस्थ; ति संचितदोषस्य न स्वास्थ्यं मैवं,—"चयो वृद्धिः धाम्न्येव प्रद्वेषो वृद्धिहेतुषु । विपरीतगुणेच्छा च कोपस्तून्मार्गगामिता ॥ लिङ्गानां दर्शनं स्वेषामस्वास्थ्यं रोगसंभवे।" इति । यत्र चयलक्षणोपलक्षणात्स्वं रोगसंभवत्वं च, अतएव कोपलक्षणेषु पठितम् आचार्येण संचितदोषोऽप्यस्वस्थ इति ज्ञापितम् ॥ २८ ॥

तदेवैतच्चेतसि कृत्वा दोषा इत्यादिश्लोकं ग्रंथकृदुवाच—

**दोषाः कदाचित्कुप्यंति जिता लंघनपाचनैः ।**
**ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः २९॥**

**स०**-दोषा वातादयो लंघनपाचनैर्जिताः संतः प्रकृतिं प्रापिताः कदाचित्कस्मिन्नपि काले कुप्यंति । ये पुनः संशोधनैः शुद्धास्तेषां न पुनरुद्भव उत्थानं भवति ॥ २९ ॥

प०—दोषाः-वातादयो लंघनपाचनैर्जिताः सन्तः कदाचित्—कुत्रचित् कुप्यन्ति-कोपं यान्ति । ये पुनर्दोषाः संशोधनैर्वमनादिभिः शुद्धास्तेषां दोषाणां प्रधानशुद्ध्या शुद्धानां न पुनरुद्भवो न पुनर्जन्म तेषां भवेत् । छिन्नमूलत्वात् पुनस्ते न प्ररोहन्ति । तस्माल्लंघनपाचनयोः कृतयोरपि संशोधनमुपक्रमः किमुताकृतयोः । एवं तावल्लंघनपाचनविषये संशोधनमप्युपक्रमः । संशोधनविषयेऽपि देशकाले बलं शरीरादीनामपेक्ष्य लंघनपाचने निष्प्रत्ययोपात्तयोपक्रमः कार्यः ॥ २९ ॥

हे०-शमनाच्छोधनस्य प्राधान्यमाह--लङ्घनमत्रोपवासः, पाचनस्य पृथगुपादानात् । सप्तसु शमनेषु द्वयोर्ग्रहणं प्राधान्यात्, प्रधानाद्धि प्राधान्यमुक्तमप्रधानात्सुतरां लभ्यते इति शोधनम् ॥ २९ ॥

**यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ।**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ३०**

**स०**-कालविद्वैद्यः सोऽतः संशोधनपूर्वं रसायनानि प्रयोजयेत् । कालशब्दो देशबलशरीराहारसात्म्यसत्त्वप्रकृतीनामुपलक्षणार्थः । नहि कालमात्रविद्रसायनप्रयोगं सम्यग्विधापयितुं शक्तः । किंभूतानि रसायनानि । सिद्धानि बहुशो दृष्टप्रत्ययानि ब्राह्मवासिष्ठादीनि । कथं योजयेदित्याह । यथाक्रमं यथायोगमित्यनेन रसायनं वाजीकरणोक्तं स्मारयति । तत्रैव

रसायनक्रमः । हरीतकीमामलकं सैंधवं नागरं वचामित्यारभ्य यावदित्थं संस्रुतकोष्ठस्य रसायनमुपाचरेत् । एतदुक्तं भवति । यद्यप्येवं वमनविरेचनास्थापनानुवासननावनैः पंचभिरपि कर्मभिः संस्रुतोर्ध्वाधःसकलकायस्तथाप्येष रसायनीयो भूयः शरीरसंस्कारः करणीयस्तत्पूर्वकत्वात् तस्य । अत एव संशुद्धदेहोऽयमिति कृत्वा त्रिवृद्दंत्यादीन्विरेचनात्मकानुपदिशति । तथा वाजीकरणेऽप्याह । अथ स्निग्धविशुद्धानां निरूहान्सानुवासनान् । घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान्। योगविद्योजयेत्पूर्वं क्षीरमांसरसाशिनम् । ततो वाजीकरान् योगानिति । तथा यथायोगं यो यस्य युज्यते दातुमित्यर्थः । यथेदं रसायनं वातप्रकृतेर्योग्यमिदं पित्तप्रकृतेरिदं श्लेष्मप्रकृतेरित्यादि । तथाऽमुष्मिन् देशेऽमुष्मिन् काले वाऽमुष्मिन्वयस्यमुष्मिन् देहे रसायनं योग्यमिदमिति यथायोगार्थः । एवं वृष्ययोगेऽपि योज्यम् । अत्र च रसायनानि । वातातपिकानि योजयेन्न कुटीप्रावेशकानि । स्वस्थवृत्ताधिकारत्वात्तद्विधानस्य ॥ ३० ॥

प०--अत ऊर्ध्वं संशोधनादनन्तरं यथाक्रमं--क्रमानतिक्रमेण पेयादिक्रमं कृत्वा सप्ताहं यावदाबललाभात् प्रकृतिभोजनं कृत्वाऽनन्तरं यथायोगं योगानतिक्रमेण इदं रसायनं वातप्रकृतेरिदं पित्तप्रकृतेरिदं श्लेष्मप्रकृतेरिति तानि च रसायनानि सिद्धानि--सिद्धर्षिप्रणीतानि यथाकथंचित् रसवीर्यविपाकप्रभावैर्द्रव्याण्यनुभूय स्वयं बुद्धिमता वैद्येन परिकल्पितानि ।अथवा सिद्धानि बहुशो दृष्टप्रत्ययानि ब्राह्मवासिष्ठच्यवनप्राश्यादीनि । तथा वृष्ययोगांश्च वाजीकरणयोगांश्च सिद्धान् कालविद्वैद्यो योजयेत् कालादीन् यो वेत्ति तत्कालमात्रम् । तेन कालबलशरीराहारसात्म्यसत्त्वप्रकृतीर्यो वेत्ति ॥ ३० ॥

हे०--अथ बृंहणं, तत्त्रिविधं--रसायनं, वाजकिरणमाहारादिप्रयोगश्च । तत्र शुद्धस्य रसायनवाजीकरणे विधत्ते-- यथाक्रमं स्वविध्युक्तक्रमानतिक्रमेण यथायोगं प्रकृत्यादियोग्यतानतिक्रमेण सिद्धानि बहुशो दृष्टफलानि कालविदवस्थाविज्ञाता रसायनादनंतरं वृष्ययोगांश्च वाजीकरणोक्तान् योजयेत् ॥ ३० ॥

**भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्र**
**शालिषष्टिकगोधूममुद्गमांसघृता**
**हृद्यदीपनभैषज्यसंयोगाद्रुचिपा**
**साभ्यंगोद्वर्तनस्नाननिरूहस्नेहब**

स०-भेषजेन क्षपिते नरे शोधन ज्यैर्बृंहणं हितं क्रमान्न सहसैवाकैरा दिभिः । किंभूतैः । हृद्यानि च ता ज्यान्यौषधानि च शुंठीपिप्पल्यार्द्र संयोगो मिश्रितस्तस्माद् हृद्यदीपन पक्तीर्ददत्यभिलाषपाकानुत्पादयंति रुचिपक्तिदैराहारैर्बृंहणं भेषजक्षपिते भूतैराहारैः । साभ्यंगेत्यादि । इति साभ्यंगादिभिश्चेत्यर्थः । स्नेहब

प०--नरे भेषजक्षपिते वमना बृंहणमाहारै रक्तशाल्यादिभिः क्रमात् क्रमेण सहसा पथ्यं हितं, दीपनीयानि तानि भैषज्यान्यौषध ज्यानि आर्द्रक-पिप्पलि--मरिच--ट सैन्धवादीनि तैः संयोगः संप तस्मात् संयोगाद्ये रुचिपक्ती ददत् दयन्ति ते तथाविधाः। तत्राभ्यङ्गा निरूह आस्थापनं, स्नेहबस्तिरनुव

हे०--शोधनक्षीणस्य बृंहणं विधत्ते च्छोधनेनातिचयनिबर्हणादतियोगाद्वा पथ्यं हितं यस्तु शोधतेन क्षपितस्त कर्तव्यमित्यर्थः। क्रमाद्बलाबलाद्यनुसारे संयोगाद्रुचिपक्तिदैः दीपनीयानां प वासनं निरूहान्वासावत्र बृंहणौ ग्र भेषजग्रहणं सर्वत्र लङ्घनपाचनादिन तद्बृंहणप्राप्त्यर्थम् ॥ ३१ ॥

एवं कृते पुरुषः किं प्राप्नोतीत्य

**तथा स लभते शर्म सर्वपावक**
**धीवर्णेंद्रियवैमल्यं वृषतां दैर्घ्य**

स०-तथा तेन प्रकारेण पूर्वं शोध रसायनप्रयोग इत्येवंरूपेण संस्

शर्म स्वास्थ्यं लभते । तथा सर्वेत्यादि । सर्वे च ते पावकाश्च सर्वपावकास्तेषां पाटवं शक्तिं लभते । तत्र भौमाप्याग्नेयवायव्याः पंचोष्माणः सनाभसाः पंचमहाभूताग्नयो धात्वग्नयः सप्त त्रयोदशो जाठराग्निरिति । धीवर्णेत्यादि । धीवर्णयोश्चक्षुरादींद्रियाणां च वैमल्यं लभते । तथा वृषतां स्त्रीगमनसामर्थ्यं लभते । तथा दैर्घ्यमायुषो जीवितस्याधिक्यं लभते ॥ ३२ ॥

प०–तथा तेन प्रकारेणानन्तरोक्तेनासेवितेन सता पुमान् शर्म लभेत् श्रेयः प्राप्नोति । तथा सर्वेषां पावकानां धात्वग्नीनां जठराग्नेश्च पाटवं पटुत्वं पचनसामर्थ्यं लभेत । एवं त्रयोदशानामग्नीनां पचनशक्तिरुत्पद्यते । तथा धीवर्णेन्द्रियनैर्मल्यं–बुद्धिवर्णचक्षुरादीनां निर्मलतां लभेत । तथा वृषतां–शुक्रबाहुल्यात् स्त्रीसंसर्गे सामर्थ्यं लभते । दीर्घमायुषे जीवितस्याधिक्यं लभते ॥ ३२ ॥

हे०--शोधनादिप्रयोगस्य फलमाह--शर्म-सुखं, सर्वे पावकाः--जठराग्निभूताग्निधात्वग्नयः, वृषता--संभोगक्षमत्वम् इति शोधनबृंहणप्रकरणम् ॥ ३२ ॥

अधुनाऽऽगंतुरोगान्सोपक्रमान्निर्दिशति––

**ये भूतविषवाय्वग्निक्षतभंगादिसंभवाः ।**
**कामक्रोधभयाद्याश्च ते स्युरागंतवो गदाः ३३॥**

स०–भूतानि च विषं च वायुश्चाग्निश्च क्षतं च भंगाश्चेति द्वंद्वः । त आदिर्येषामागंतुकरोगहेतूनां त एवं तेभ्यः संभवो येषामागंतुकगदानां ज्वरादीनां ते भूतादिसंभवा आगंतवो रोगाः स्युः । आगंतुहेतुप्रभवत्वादागंतवो गदा उच्यंत इत्यर्थः । न केवलमेत एव गदा रागद्वेषभयाद्याश्चागंतवो गदाः स्युः ॥ ३३ ॥

प०--ते गदाः–रोगा आगन्तवः स्युः,ये भूतसंदर्शनविषस्पर्शवाताग्निशस्त्रक्षतपाषाणाद्यङ्गभङ्गप्रहारावमर्दादिभ्यो भवेयुस्तथा रागद्वेषभयक्रोधामर्षलोभाद्या मानसास्तेऽप्यागन्तवो व्याधयः स्युः ॥ ३३ ॥

हे०--अथ भूताद्यस्पर्शनम्, तत्र भूतादीनां रोगहेतुत्वमाह--भूतो--ग्रहः, वायुर्झंझामारुतादिः, क्षतं--शस्त्रक्षतं, भङ्गः--स्खलनादिहेतुको गात्रभङ्गः, आदिशब्दात् श्रमादयः । आद्यशब्दाच्छोकादयः ॥ ३३ ॥

अधुना एषां चिकित्सां निर्दिशति––

**त्यागः प्रज्ञापराधानामिंद्रियोपशमः स्मृतिः**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥**
**( अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम्**
**भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक्पृथक् )[1]**
**अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः ।**
**निजागंतुविकाराणामुत्पन्नानां च शांतये॥ ३४**

स०–प्रज्ञाया अपराधा असमीक्ष्याचरणानि ते[षां] त्यागः। तथेंद्रियाणां चक्षुरादीनामुपशमो रूपादिष्व[ति]ऽतिप्रवृत्तानां संशमनमशुभरूपे वा विषये प्रवृत्तानां [श]मनमलोलुपतेत्यर्थः । तथा स्मृतिरनुभूतार्थानुस्मरणम् तथा देशेत्यादि । देशादीनां विज्ञानम् । देशो [जांग]लादिः । कालः शीतादिः । आत्मा च वातप्रकृ[त्या]दिः । एषां विज्ञानमवबोधः तथा च सतां [वृ]चरितं सद्वृत्तं तस्यानुवर्तनमनुष्ठानम् । निजानाम[ा]गंतूनां च विकाराणामनुत्पत्त्यै रोगाणामनुत्पादनाय समासेन संक्षेपेण विधिरेष त्यागः प्रज्ञापराधानामित्यादि सद्वृत्तस्यानुवर्तनमित्येवं प्रदर्शितः सम्यगुक्तः । उत्पन्नानामित्यादि । चः समुच्चये न केवलं निजागंतूनां रोगाणामनुत्पत्त्यै विधिं प्रोक्तः । यावदुत्पन्नानां जातानां च शांत[ये] विधिः प्रोक्तः ॥ ३४ ॥

प०--प्रज्ञाया अपराधः प्रज्ञापराधः निषिद्धाचरणमसाध्वाचरणमाचार्यैर्दिव्यचक्षुर्भिः प्रतिषिद्धेष्वर्थेष्व सेवाविहितेष्वर्थेष्वकारणं भवत्येव प्रज्ञापराधः कायवाङ्मनोभिर्दुष्टाचरणमिति यावत् । तस्य त्यागोऽकारणम् इन्द्रियाणां चक्षुरादीनामशुभरूपे विषये प्रवृत्तानामुपशमोऽथवा शब्दादिविषयेऽतिप्रवृत्तानां संयमनं स्मृतिः, प्रागनुभूतानामर्थानां स्मरणं सा च शुभाशुभरूपा स्मर्तव्या नक्तंदिनेत्यादिवाक्येन दिनचर्याध्यायोक्ता । तथा देशकालात्मविज्ञानं-को देशः किंधन्व उत आनूपः साधारणो वेति। अथवा देहदेशः किंवातप्रकृतिरथ पित्तप्रकृतिराहोस्वित् श्लेष्मप्रकृतिः । कालविज्ञानं यथा किमयं हेमन्त उत शिशिरो वान्यतमः एष क्षणादिः काल आवस्थिकोऽप्यत्र गृह्यते । आत्मविज्ञानं द्विविधं शरीरविज्ञानमेकमितरं

[1] अत्र कोष्टकान्तर्गतः पाठः केषुचित्पुस्तकेषु दृश्यते ।

मे प्रकृतेरिदं ममोपदिशेत् इदं नोपदिशेत् इत्येवमादि। द्वितीयं ब्रह्मस्वरूपविज्ञानम् । तेन विना रागादीनां रोगाणां नान्यदपहारं कर्तुं समर्थम् । सतां वृत्तं सद्वृत्तं तस्यानुवर्तनमनुष्ठानं निजा विकाराः शारीरा आगन्तवो भूताद्यनुषङ्गजास्तेषां विकाराणामेष विधिः समासेन संक्षेपेणानुत्पत्त्यर्थं प्रदर्शित आचार्येण । तथोत्पन्नानां च निजागन्तूनां व्याधीनामेष विधिः शान्तये प्रशान्त्यर्थं प्रदर्शितः । उक्तं च यतेत च तथा काले मलानां शोधनम् ॥ ३४ ॥

हे०--भूताद्यस्पर्शनोपायमाह--कायवाङ्मनोभेदेन त्रिविधस्य कर्मणः असम्यग्योगः प्रज्ञापराधः, इत्युक्तं संग्रहे । तेषां त्यागो वर्जनं,स्मृतिः नक्तंदिनानि मे यांतीत्युक्ता।ग्रहाः-सूर्यादयः। प्रज्ञापराधत्यागादिर्भूतादीनामागन्तूनां हेतूनामस्पर्शने असंबंधे उपायः। तथा पृथक्पृथग्भूतप्रतिषेधादौ यो निर्दिष्टः सोऽप्युपायः। "अथर्वविहिता शांतिः"--इत्याद्यमुं श्लोकमत्र केचिन्न पठन्ति तदसत् पूर्वश्लोकस्यानान्वितत्वापत्तेः । अध्यायार्थमुपसंहरति--एष वेगधारणानिषेधादिः समासेनेति रोगाणामनुत्पत्तिहेतुत्वेन उत्पन्नशान्तित्वेन च कार्त्स्न्येन वक्तुमशक्यत्वात् । इत्येवं परं, नत्वत्र समास उत्तरतंत्रान्तरे व्यास इत्येवं चेत् । पूर्वयोरध्याययोरनारंभः नहि निजागंतुभ्योऽन्ये रोगाः संति यदर्थं तदारंभः । मैवं विषयभेदात्, कालार्थकर्मणां हि रोगहेतुत्वम्। तत्र कर्महेतवो रोगानुत्पादनीयस्य विषयः, कालहेतव ऋतुचर्यायाः, अर्थहेतवो दिनचर्यायाः ॥ ३४ ॥

अथ मलानां शोधनकालानाह—

> **शीतोद्भवं दोषचयं वसंते**
> **विशोधयन् ग्रीष्मजमभ्रकाले ।**
> **घनात्यये वार्षिकमाशु सम्यक्**
> **प्राप्नोति रोगानृतुजान्न जातु ॥ ३५ ॥**

स०—शीतशब्देन हेमंतशिशिराख्यावृतू द्वावपि गृह्येते। तत्रोद्भवो जन्म यस्य दोषचयस्यासौ शीतोद्भवो दोषचयः। तं वसंते विशोधयन्निर्हरन् ग्रीष्मजमभ्रकाले वर्षाकाले दोषचयं विशोधयंस्तथा वार्षिकं घनात्यये शरदि चाशु यथोक्तं कालमनुलंघयन् सम्यग्यथावत्त्रिविधमपि दोषचयं विशोधयन्नृतुजान् रोगान् न जातु कदाचित्प्राप्नोत्यासादयति । वसंते विशोधयन्नित्यत्र वसंतप्रारंभ एव चैत्रे मासि विशोधयन्निति बोध्यम् । प्रत्यवायभयात् । तथाहि । ऋतुद्वयसंचितस्य दोषच[यस्य] विशोधनमक्रियमाणं रोगानीकं कुर्यात् । घन[ात्यये] वार्षिकमित्यत्रात्यंतघनविनाशे शरत्पश्चिमे भागे वि[शो]धयेदिति बोध्यम् । वार्षिको हि दोषचय एकर्तुज[ः] तस्माद्विश्रब्धं कृत्वा साधारणे कार्तिके मासि स[म्यक्] शोधयितुं युक्तः । अपि चोग्रहेमंतशिशिरका[लज] दोषचयो वसंते शोधयितव्यः । तस्मादाश्वयुजे [यदि] वार्षिको दोषचयो यदि विशोध्येत तदानीमति[] बहुतरो दोषचयः स्यात्कालस्य बहुत्वात् । ग्रीष्मज[मभ्र]काल इत्यत्र कालग्रहणेन वर्षाप्रारंभमात्र एवेति बोध्[यम्]। तथा च शास्त्रकारो वक्ष्यति । श्रावणे कार्तिके [चैत्रे] मासि साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान्वाय्व[ादी]नाशु निर्हरेत् ॥ ३५ ॥

प०—अत इदमाह-शीतशब्देन हेमन्तशिशिरौ गृ[ह्येते] दोषाणां चयो दोषचयः।स च शीतोद्भवः शीते उ[द्भवो] जन्म यस्य तं दोषचयं वसन्ते विशोधयन् नि[र्हरन्] तथा ग्रीष्मजं दोषचयमभ्रकाले वर्षाकाले विशो[धयन्] तथा वार्षिकं दोषचयं घनात्यये घनापाये वि[शो]धयन् आशु शीघ्रं सम्यक् कृत्वा शास्त्रादि[] विधिना प्रवाहयन् ऋतुजान् दोषान्न जातु कदा[चित्] पुरुषः प्राप्नोत्यासादयति । वसन्ते विशो[धयन्] इत्यत्र प्रारम्भ एव चैत्रे मासि प्रवाहयन्निति [बोद्ध]व्यम् अतिप्रत्यवायभयात् । अस्यर्तुद्वयसञ्चि[तस्य] दोषचयस्य विशोधनतां प्राप्तस्य कालान्तरा[] कर्तुमशक्यत्वात् । ग्रीष्मजमभ्रकाल इत्यत्रापि [] कालप्रारम्भमात्र एव । नासादितं शीतमारुते तुषा[र] घनिष्यन्दोद्भूतवाते, घनात्यये वार्षिकमित्यत्र घ[ना]नामत्ययोऽत्यन्तघनविनाशो यस्मिन् काले श[रत्प]श्चिमे भाग इति बोद्धव्यं न प्रारब्धमात्रायां शर[दि] तथाच ग्रन्थकारेणोक्तं--"श्रावणे कार्तिके चैत्रे म[ासि] साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान् वाय्व[ादी]नाशु निर्हरेत्" ॥ ३५ ॥

हे०—तत्र ऋतुचर्यायाः कालहेतुविषयत्वं दर्शय[ति] वसंताभ्रकालघनात्ययशब्दैस्तदव्ययवाश्चैत्रश्रावणकार्तिक[ा ल]भ्यन्ते । वक्ष्यति हि—श्रावणे कार्तिके चैत्रे मासि स[ाधा]रणे क्रमात् । ग्रीष्मवर्षाहिमचितान्वाय्वादीनाशु [निर्ह]रेत् ॥" इति ॥ ३५ ॥

**नित्यं हिताहारविहारसेवी**
**समीक्ष्यकारी विषयेष्वसक्तः।**
**दाता समः सत्यपरः क्षमावा-**
**नाप्तोपसेवी च भवत्यरोगः ॥ ३६ ॥**

स०-नित्यं सदैव हिताहारविहारौ सेवते तच्छीलो यः स एवंभूतो नरः । तथा समीक्ष्यकारी विमृश्यविधायी । इदं कृत्वेदं सम्पद्यते इदं च कृत्वैतत्संपद्यत एवं बुद्ध्वा शुभं करोत्यशुभं वर्जयति । तथा विषयेषु शब्दादिष्वसक्तोऽलोलुपः । तथा दाता त्यागी त्यागवान् । तथा समः सर्वेषु भूतेषु समचित्तः । तथा सत्यपरोऽवितथवाक् । तथा क्षमावान् । यः शक्तोऽपि कृतापराधं दंडेनानुरूपेण न योजयति । तथाऽऽप्तानुपसेवते तच्छीलो यः स आप्तोपसेवी चारोगो भवति । न केवलं प्राक्तनविध्यनुष्ठानेनारोगः संपद्यते यावदाप्तोपसेवी चेति चशब्दार्थः । येषां त्रिकालममलं ज्ञानमव्याहतं सदा । आप्ताः शिष्टाश्च विबुधास्तेषां वाक्यमसंशयमित्याप्तलक्षणमिति । उपजातिवृत्तम् ॥ ३६ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचिताया- मष्टांगहृदयटीकायां सर्वांगसुन्दराख्यायां चतुर्थोऽध्यायः ॥ ४ ॥

प०-तथा नरो नित्यमरोगो भवति तथा दर्शयन्नाह-एवंविधः पुरुषः अरोगः स्वस्थो भवति । यो नित्यं सर्वकालं हितौ पथ्यावाहारविहारौ सेवते तच्छीलो हिताहारविहारसेवी हित आहारो वक्ष्यमाण उक्तः । ऋतुचर्याविधाने विहारः । कायवाङ्मनसां चेष्टा साप्युक्ता दिनचर्याध्याये । तथा समीक्ष्यकारी यद्यद्धि करोति तत्तद्विमृश्य हेयोपादेयरूपतयेदं कृत्वेदं सम्पद्यते,इदं कृत्वेदं सम्पद्यते एवं ज्ञात्वा शुभं करोति अशुभं परिहरति । तथा विषयेष्वसक्तः-शब्दस्पर्शादिष्वसक्तचेताः । दाता-त्यागी दानशीलः । समः-सर्वप्राणिषु बन्धुभूतो रागद्वेषादिरहितः । सत्यपरः-सत्यप्रधानः । सत्यप्रतिज्ञोऽवितथवचनः । क्षमावान्-क्षमाशीलः । तथाप्तोपसेवी-आप्तानुपसेवते । तच्छीलः । आप्ता-उभयलोकाविसंवादिनः निष्प्रीत्युपतापदर्शिन उच्यन्ते । मुनिः-"येषां त्रिकालममलं ज्ञानमव्याहतं आप्ताः शिष्टाश्च विबुधास्तेषां वाक्यमसंशयम् वक्ष्यन्ति तेऽकस्मान्नीरजस्तमसो मृषा॥" न[illegible] न रोगी भवतीति भद्रम् ॥ ३६ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थच[illegible] कायामष्टाङ्गहृदयटीकायां सूत्रस्थाने रोगानुत्पादनीयोऽध्यायश्चतुर्थः॥४॥

हे०-दिनचर्यायां [illegible] [illegible]ष्वसक्तः पुमानरोगो भवति [illegible] रोगान्न प्राप्नोति, यो हि नित्यं हिता[illegible] समीक्ष्यार्थं करोति, पात्रेभ्यो ददाति, सर्वेषु [illegible] सत्यं भाषते, क्रोधहेतावपि न क्रुध्यति, आप्तां[illegible] पसेवते इति । उक्तं च दिनचर्यायां-"न पीडये[illegible] न चैतान्यतिलालयेत्" इति । संग्रहे तु-"[illegible] प्रयत्नं कृतादरं नित्यमुपायवत्सु । जितेन्द्रियं [illegible] रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥ [illegible] पया मनोज्ञा धर्म्याः क्रियाः कर्म [illegible] । विधेयं विशदा च बुद्धिर्भवन्ति [illegible] इति ॥ ३६ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने रोगानुत्पाद[illegible] नीयश्चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

स०-अथ द्रवद्रव्यविज्ञानीयस्तस्यायं संबंधः हिताहारविहारसेवीत्युक्तम् । तौ चाहारविहारौ [illegible] र्ऋतुचर्ययोर्यद्यपि नियमितौ तथापि न भवत्यलं [illegible] हितस्वरूपविज्ञानम् । एवं हि तत्रावादीत् । गुरु[illegible] दिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् । तथा । [illegible] लवणस्नेहं संशुष्कं क्षौद्रवल्लघु । तथाऽनंतराति[illegible] ध्याये जगाद । अन्नपानं च विड्भेदीति । त[illegible] वाक्येन न तज्ज्ञायते किं पुनस्तद्गुरु शीतं किं ल[illegible] स्निग्धोष्णं किं शकृद्भेदनमिति । तस्मादाहारद्र[illegible] रूपमतः परं प्रतन्यते । तत्रापि पंचवर्गस्वभाव[illegible] ल्पवक्तव्यत्वात्प्राग्द्रवद्रव्यविज्ञानीयस्वरूपं निर्देष्टुं [illegible] त्स्य द्रवस्वभावत्वेन भूयस्त्वादित्याह—

## अथातोद्रवद्रव्यविज्ञानीयमध्यायंव्याख्यास्यामः

स०--अपामेवायं स्वाभाविको गुणो यत् द्रवत्वम्। अतो यानि कानिचिद् द्रवरूपाणि द्रव्याणि तानि सर्वाण्यम्मयान्येव क्षीरदध्यादीनि तदर्थं द्रवद्रव्यशब्दः सामान्येन सर्वद्रवव्यक्तिपरिग्रहार्थः शास्त्रकृता प्रयुक्तः। द्रवाणि च तानि द्रव्याणि च द्रवद्रव्याणि तेषां विज्ञानमवबोधस्तस्मै हितो द्रवद्रव्यविज्ञानीयोऽध्यायस्तं व्याख्यास्यामः प्रथयिष्यामः ॥ १ ॥

प०--पूर्वमुक्तं नित्यं हिताहारविहारसेवी भवत्यरोग इति तौ च हिताहारविहारौ संज्ञामात्रेण निर्दिष्टौ। तत्र विहारस्य व्यायामादिस्वरूपगुणवर्णनप्रायो निर्देशः कृतो निर्दिक्षते च। आहारस्य पुनः स्वरूपवर्णनं लेशतोऽपि न कृतं तस्येदानीं स्वरूपगुणवर्णनार्थमिमौ द्वावध्यायावारभ्येते। तयोरपि पूर्वं द्रवद्रव्यविज्ञानीय आरभ्यते प्राधान्यात्। द्रवद्रव्याणि तोयक्षीरेक्षुरसतैलमद्यादीनि तेषां विज्ञानं हिताहितत्वेन रसवीर्यविपाकप्रभावादिनावबोधो द्रवद्रव्यविज्ञानं तस्मै हितोऽध्यायः तं व्याख्यास्यामः। तत्र पूर्वं जलगुणनिश्चयस्तस्य सर्वोपयोगित्वात्।तथा चाचार्यवचनम्। "पानीयं प्राणिनां प्राणा विश्वमेतच्च तन्मयम्। अतोऽत्यन्तनिषेधेन न कचिद्वारि वर्ज्यते" ॥ १ ॥

हे०--अथेति द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यातुं प्रतिजानीते--यतः पूर्वैस्त्रिभिरध्यायैर्विहार उक्तः। आहारो वक्तव्यः। स च द्विविधः--द्रवोऽद्रवश्च।तत्र द्रवेऽस्मिन्नध्याये अत एवायं द्रवद्रव्यविज्ञानीयः।तत्र च पञ्चवर्गाः। वक्ष्यति हि--"तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्" इति। तत्रादौ तोयवर्गः। तत्र तोयं--द्वेधा-दिव्यं भौमं च। दिव्यं-चतुर्धा-धारं, कारं, तौषारं हैमं च धारं द्वेधा गांगं, समुद्रं च ॥ १ ॥

प्राधान्याच्च पानीयस्य प्रागुपदेशः। तथा चाष्टांगसंग्रहेऽन्नपानप्रकरणेऽप्यगीष्ट। अन्नपाने तु सलिलमेव श्रेष्ठम्। सर्वरसयोनित्वात्सर्वभूतसात्म्याज्जीवनादिगुणयोगाच्च। तथात्रैवाप्यैष्ट। पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयमित्यादि। तथा चात्रैवाग्र्यसंग्रहेऽपि तदेव प्रागुपनीतं श्रेष्ठमुदकमासां श्वासतत्स्तंभनक्लेदनानामिति बहुगुणत्वाच्चांतरिक्षस्थजलस्य प्रागुपन्यासो युक्त इत्याह--

**जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम्।**
**तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥**
**गंगाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः।**
**हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ २**

स०-जीवनमोजोविवृद्धिकरणम्।सौम्यधातुवर्धनमि न्ये। तर्पणं क्लमहृत्। हृद्यं हृदयाय हितं नतु हृद प्रियं हृद्यमिति व्याख्येयम्। एवं हि व्याख्यायमाने हृद्यानामित्यग्र्याणां मध्ये तत्पाठं मुनिर्नैवाकरिष्य यस्मात्किंचिद् द्रव्यं कस्यचित्प्रियं भवति न सर्वं स्य। तस्माद्धृदयाय हितं हृद्यमिति बोध्यम्। ह्लादि आह्लादकरम्। तथा बुद्धेः प्रबोधनम्। न्मात्रा यस्य शेमुषी सा तस्य स्फुटप्रतिभासा तद्यो द्भवतीत्यर्थः। तनु स्वच्छम्। अव्यक्तरसमनभिव्यः ङ्रसमित्यर्थः। मृष्टमित्यास्वादसुखम्। संति हि भृ सशर्कराकाथचूर्णवटकादीन्यव्यक्तरसानि नतु कात तानींद्रियप्रसादप्रीतिकराणि। तथा। अनुरसबाहु त्पृथगपि द्रव्याण्यभयामलकादीन्यव्यक्तरसानि पुनस्तानि तथा मनः प्रीणयंति। पानीयस्य च क्तरसस्याप्याश्रयवशात्कषायत्वस्वादुत्वादि भवत्येव तथा चाष्टांगसंग्रहेऽपठत्। श्वेते कषायं तत्त कृष्णे तिक्तं च पांडुर इत्यादि। मृष्टं शुद्धं न व्याख्येयम्। तथा च मुनिः। शीतं शुचि मृष्टं विमलं लघु षड्गुणम्। प्रकृत्या दिव्यमुदकमि अत्र हि मृष्टविमलयोर्द्वयोरुपादाने पौनरुक्त्यं स्य तस्मान्मृष्टशब्दोऽत्र मनःप्रीणनार्थः। तथा शीतं वी स्पर्शेन च। तथा लघु गुणयुक्तम्। तथा। अमृ पमम्।यथा किलामृतं त्रिदोषघ्नत्वधातुसाम्यकृत्त्वविष जिच्वादिगुणैरशेषैर्युक्तं तथैतज्जलमपीत्यर्थः। चोक्तं संग्रहे। सूर्योद्धृत्तप्रयुक्तत्वाल्लघु वातकफापह शैत्यजीवनसौम्यत्वैः पित्तरक्तविषादिजिदिति। नभसो भ्रष्टमंतरिक्षात्पतितमात्रं वस्त्रातिगृहीतं गांगं मीदृग्गुणं भवति। तु पुनरर्थे। रविचन्द्रानिलैः संबद्धं सत्पुनः पथ्यापथ्यत्वे देशकालावपेक्षते। विषयः, पात्रमाश्रय इति पर्यायाः। तत्र किमनूप जांगले वा तत्पतितं तथा किमसितश्वेताद्यन्यतमे

देशानुवर्तनम् । तथा शीते किं वोष्णेऽथवा वर्षाख्ये पतितमिति कालानुवर्तनम् । रविचंद्रानिलैरिति समस्तनिर्देशो यदा समस्तैरेतैः स्पृष्टं नतु व्यस्तैस्तदा हिताहितत्वे देशाद्यपेक्षत इति द्योतयति । सद्योवस्त्रादिगृहीतस्य जलस्य तु न सर्वैरेतैर्योगः संभवतीति तत्प्रायेण हितमेव ॥ २ ॥

प०--गंगाम्बु नभसो भ्रष्टमाकाशाद्धर्षितजीवनमोजोऽभिवृद्धिकरं तर्पणं क्लमघ्नं हृदयाय हितं हृद्यं हृदयस्य वा प्रियं ल्हादि सुखजननं ग्लान्यपनुत् बुद्धेः प्रबोधनं प्रज्ञाविकासजनकं यावती यस्य प्रज्ञा वर्तते तावत्येव तस्य स्फुटप्रतिभासा तद्योगात्सम्पद्यते । नन्वसान्द्रम् । अव्यक्तरसमव्यक्ता मधुरादयो रसा जायन्ते यस्मिंस्तदव्यक्तरसं मृष्टं स्वादु शुभं कृत्वा पानार्थमभिलष्यते प्राणिभिरित्यर्थः यथा शीतं शुचि शिवं मृष्टमिति मुनिः पठति । शीतमुभयथापि स्पर्शवीर्याभ्यां लघुगुणयोगाल्लघु । तथाऽमृतोपमममृतगुणं सद्गुणकल्पयुक्तम् । एव गुणयुक्तमपि नभसोऽन्तरिक्षाद्भ्रष्टं पतत् । स्पृष्टं सम्बद्धमर्केन्दुमारुतैः आदित्यचन्द्रपवनैः । तदम्बु भूयः पुनरपि हिताहितत्वे पथ्यापथ्यभावे देशकालावपेक्षते देशकालावनुवर्तते । देशकालगुणानामात्मसात् करोति तद्गुणं सम्पद्यते इति यावत् । यस्मिन् भूमिदेशे पतितमानूपाद्यन्यतमे तत्रापि किमप्सिते श्वेताद्यन्यतमे वा काले षड्त्वाख्ये च ॥ २ ॥

हे०--तत्र गाङ्गगुणानाह--जीवनं-प्राणधारणं, तर्पणंतृप्तिजननं, हृद्यं-हृदयस्य प्रियं तत्प्रसादकरत्वात्, ह्लादिसुखजनकं, बुद्धिप्रबोधनं-प्रज्ञाविकाशजननं, तनु-सर्वेभ्यो विरलम्, अव्यक्तरसं-रसवदप्यनभिव्यक्तमधुरादिरसविशेषं, मृष्टं-जिह्वेन्द्रियप्रियं, शीतं स्पर्शवीर्याभ्यां, लघु शीघ्रपाकम्, अमृतोपमं--देवानाममृतमिवेदं मनुष्याणां गङ्गांबु-आकाशगङ्गातोयं मेघैरानीतं, नभसो भ्रष्टमाकाशात्पतितं दिव्यमित्यर्थः।गङ्गाम्ब्विति सामुद्रस्य व्यावृत्त्यर्थम्, नभसो भ्रष्टमिति भौमस्य दिव्यस्य विशेषाद्भौममाहदिव्यमेव भूसंबन्धाद्भौममुच्यते। तच्चार्कादिभिः स्पृश्यते स्पृष्टं च व्यक्तरसत्वादिदोषसंबन्धाद्धिताहितत्वे भूयो देशकालावपेक्षते, भूयोग्रहणं दिव्यस्यापि किंचिद्देशकालावपेक्षत्वं द्योतयति । देशापेक्षा यथा--सुपात्रस्थं हितं दुष्पात्रस्थमहितं, वक्ष्यति हि--"ऐन्द्रमम्बुसुपात्रस्थमविपन्नं सदा पिबेत्" इति । कालापेक्षा यथा-आतवं-हितमनार्तवमहितमिति । वक्ष्यति हि-"अनार्तवं हि यद्दिव्यमार्तवं प्रथमं च यत्" इति । भौमं तु भूयस्ततोऽप्यधिकमपेक्षते । तत्र देशापेक्षा यथा-जांगले हितमहितमनूपे, तत्रापि शुच्यादौ हितमहितमशुच्यादौ तत्रापि कूपादौ हितमहितं पल्वलादौ । तत्रापि सुपात्रे हितमहितं दुष्पात्रे, तत्रापि क्वचिद्देहे हितमहितं क्वचिदित्यादि । कालापेक्षा यथाशरद्ग्रीष्मयोर्हितमहितमन्यदा।तत्रापि दिवा हितमहितं रात्रौ। तत्रापि भुक्तस्य मध्ये हितमहितमंताद्योरित्यादि दिव्यं सर्वदा सर्वेषां सर्वत्र हितम् ॥ २ ॥

नन्वाकाशात्पततस्तल्लक्षणमंतरेण गांगमिदमिति न ज्ञायत इत्याह--

**येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम् ।**
**अक्लिन्नमविवर्णं च तत्पेयं गांगम् ॥ ३ ॥**

स०-येनांबुनाऽभिवृष्टमाभिमुख्यतः सिक्तं शाल्यन्नं राजतस्थितमक्लिन्नमक्लेदयुतमविवर्णं च भवति तद्गांगं जलं पेयमित्युपलक्षणार्थम् । स्नानावगाहयोरपि तत्पथ्यमेव । रजतस्य रूप्यस्य विकारो राजतम् । प्राणिरजतादिभ्योऽञ् ॥ ३ ॥

प०--येनाभिमृष्टमाभिमुख्यतः सिक्तं शाल्यन्नं, तच्च राजते स्थितं रजतस्येदं राजतं रूप्यभाण्डं तत्रस्थं तच्छाल्यन्नम् । अन्यथाऽक्लिन्नमविवर्णं स्यात् तद्गाङ्गं विद्यात्तच्च पेयं पातव्यम् ॥ ३ ॥

हे०--गाङ्गं लक्षयति-अभिवृष्टं-धारासंपातेन सिक्तं राजतं-रूप्यमात्रम्, अक्लिन्नं-सिक्थप्रक्लेदरहितम्, अविवर्णं-वर्णान्तररहितं, परीक्षा च मुहूर्तमात्रम् । उक्तं हि सुश्रुतेन-"स यदि मुहूर्तमात्रं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यम्" इति । पेयंपानार्हम् ॥ ३ ॥

**अन्यथा ।**
**सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना ॥४॥**

स०-अन्यथा सामुद्रमिति।एतल्लक्षणविपर्ययेण येनांऽबुना सिक्तं शाल्यन्नं विवर्णं मलिनं क्लिन्नं भवेत्तत्सामुद्रम्।

(१) अत्र "अभिमृष्टम्" इति पाठान्तरम् ।

च न पातव्यम् । अत्रापि पाननिषेध उपलक्षणार्थः । ानावगाहावपि ह्यनेन न कार्यौ । समुद्रस्य क्षारान्वत्वात्क्लेदनादियोगः । ननु सामुद्रमित्युक्तम् । यतः मुद्रशब्दस्य धूमादिपाठाद्धूमादिभ्यश्चेति वुञा भविष्यमिति केचित् । मैवम् । धूमादिभ्यश्चेत्यत्रैव गणे ठ्यते समुद्रान्नावि मनुष्ये च वुञ् । सामुद्रिकी नौः ामुद्रिको मनुष्यः । अन्यत्र त्वणेव । सामुद्रं जलति । तस्मान्न्याय्यमेवैतत् । एवं सामुद्रो मणिरिादयो वेद्याः । अथ किं सदैव तन्न पातव्यं नेत्याह सादित्यादि । आश्वयुजमंतरेणैतन्न पातव्यम् । आश्वजे तु मासि कालस्वाभाव्यात्तत्पथ्यमेवेति भावः । श्रुतस्त्वधीते--गांगमाश्वयुजे मासि प्रायो वर्षति यदः । तदुपाददीतेत्यादि ॥ ४ ॥

प०-यदि तेनेम्बुना सिक्तं शाल्यन्नम् अन्यथा न्नं विवर्णं च भवेत्तदा तत्सामुद्रं च जानीयात् न पातव्यम् । क्षारादिगुणसंपर्कात् । किं सर्वदा । पातव्यमाहोस्वित्कदाचित्पेयमत आह—मासाश्वयुजाद्विना आश्वयुजं मासं वर्जयित्वाऽन्यदा । पातव्यम् । तदा यस्माद्भगवतोऽगस्त्यस्योदयस्तेन ं जलं सरस्तडागादिगतमपथ्यमपि पथ्यतां ाते ॥ ४ ॥

०--सामुद्रं लक्षयति—अन्यथा सामुद्रमिति । अन्यथा-वैवर्ण्योत्पत्तौ सामुद्रपानं निषेधति--- ामुद्रं मासादाश्वयुजादृहीतामिति शेषः। उक्तं हि सुश्रुते-ामुद्रमप्याश्वयुजे मासि गृहीतं गांगवद्भवति ” इति ायस्य पानं विधत्ते-ऐन्द्रं—दिव्यं, सुपात्रस्थं—शुद्धसौवर्णाात्रस्थम्, उक्तं हि संग्रहे-“ खातधौतशिलापृष्ठवस्त्रायः शृतं जलम् । हैममृन्मयपात्रस्थमविपन्नं सदा ेत् ॥” इति । अविपन्नं—स्पर्शरसादिविकृतिरहितं, सदा ेषु ऋतुषु ॥ ४ ॥

**द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत् ।**
**भावे च भूयिष्ठमांतरिक्षानुकारि यत् ।**
**चिपृथ्वसितश्वेते देशेऽर्कपवनाहतम् ॥ ५ ॥**

०-ऐंद्रमांतरिक्षं जलं गांगं सुपात्रस्थं शोभने भाजने जतादौ स्थितमविपन्नमदूषितमविनष्टं पिबेत् । न मलिनाशुचि जुगुप्सितपात्रस्थम् । तदभावे तस्यैंद्रस्याभावे भूयिष्ठं बाहुल्येनांतरिक्षमैंद्रं जलं यदनुकरोति स्वच्छादिगुणैः सदृशं तत्पिबेत् । तदेवाह । शुचीत्यादि । शुचिश्चासौ पृथ्वसितश्वेतश्च तस्मिन् देशे यज्जलं स्थितम् । तथा । अर्कपवनाभ्यामाहतमासमंतात्क्रांतमीदृशमांतरिक्षानुकारि स्यादिति भावः ॥ ५ ॥

ऐन्द्रं नाभसमम्बु–तोयं, सुपात्रस्थं शोभनपात्रपतितमविपन्नमविनष्टगन्धरसवर्णं, सदा-सर्वस्मिन् काले पिबेत्। तदभावे–तस्यान्तरिक्षजलस्य तोयस्यासंप्राप्तौ भूमिस्थं-भूमौ यत्स्थितं तथान्तरिक्षानुकारि आन्तरिक्षमम्बु जीवनादिभिर्गुणैरनुकरोति तथा देशे शुचौ-शुद्धे पृथौ—विस्तीर्णे तथाऽसिते,--श्वेते कृष्णगौरप्राये स्थितं तथाऽर्कपवनैराहतम् आसमन्तादाक्रान्तं सेवितं यदम्बु तत्पिबेत् । शुचिश्चासौ पृथ्वसितश्वेतश्च शुचिपृथ्वसितश्वेतो देशः ॥ ५ ॥

हे०-भौमपानं विधत्ते–तदभावे–दिव्याभावे, भूमिष्ठं--भौमम्, आंतरिक्षानुकारि—–दिव्यसदृशगुणं, शुच्यादौ देशे स्थितम्, शुचिर्निर्मलः, पृथुर्विस्तीर्णः, असितः—कृष्णः, श्वेतो—धवलः ॥ ५ ॥

इदानीं यादृशं जलं न पेयं तद्दर्शयति—

**न पिबेत्पंकशैवालतृणपर्णाविलास्तृतम् ।**
**सूर्येंदुपवनादृष्टमभिवृष्टं घनं गुरु ॥**
**फेनिलं जंतुमत्तप्तं दंतग्राह्यतिशैत्यतः ॥ ६ ॥**

स०-पंकः कर्दमः । शैवालः शैवालम् । तृणं खटः । पर्णं पत्रम् । आविलं चास्तृतं चाविलास्तृतं पंकादिभिराविलास्तृतं पंकाद्याविलास्तृतम् । यथासंभवमत्र संबंधः । तेन पंकेनाविलं कलुषं शैवालादिभिरास्तृतं संछादितमिति बोध्यम्। तथा सूर्येंदुपवनैरदृष्टमनासेवितं न पिबेत् । तथा । अभिवृष्टं तत्कालपतितान्यवर्षमिश्रीभूतं कालांतराविश्रांतम् । खरनादे चैवमुक्तम् । वार्षिकं तदहर्वृष्टं भूमिस्थमहितं जलम् । व्युष्टं त्रिरात्रं तच्चैव प्रसन्नममृतोपममिति । तथा घनमस्वच्छम् । तथा गुरु । तथा फेनिलं फेनवत् । तथा जन्तुमत्कीटयुक्तम् । तथा तप्तमुष्णम् । तथा अतिशैत्यतोऽतिजाड्याद्दन्तग्राहि दन्तान् गृह्णाति कार्याक्षमान् करोति

( १ ) अत्र “भूमिष्ठम्” इति पाठान्तरम् ।

च्छीरं न पिबेदिति प्रतिपदं योज्यम् । इत्थं प्रायो मिश्रतोयस्य निषेधः ॥ ६ ॥

प०—पङ्कशैवालादिभिराविलमास्तृतं च तोयं च पिबेत् । तत्र पङ्कः-कर्दमः तेनाविलं-कलुषीकृतम् । वालः-शैवलो जलमध्ये जायते । तृणानि पर्णा- च प्रसिद्धानि तैरास्तृतं संछादितम् । तथा सूर्ये- पवनादृष्टमादित्यचन्द्रवातैरनासेवितम् । तथाऽ- वृष्टमाभिमुख्येन सिक्तमन्येन तोयेन पूरितं तच्च धकालस्थितत्वात्तन्वपि सान्द्रं संपन्नम् । तथा न्वपि यथा-गुरु जातं, फेनिलं-सफेनं, जन्तुमत्- मियुक्तं, तप्तमर्कादितापेन संयुक्तं तथातिशीतलत्वेन न्तग्राहि तन्न पिबेत् ॥ ६ ॥

हे०—पङ्काविलादेः पानं निषेधति—पङ्कादिभिर्यथा- वमाविलमास्तृतं च, आविलं—मलिनम्, आस्तृतम्— च्छादितं च, अभिवृष्टम् अभिनवं वृष्टं, कालमानं तत्क रणादिना—"वार्षिकं तदहर्वृष्टं भूमिष्ठमहितं जलम् । ं द्विरात्रं तच्चैव प्रसन्नममृतोपमम्॥" इति । घनं सांद्रम् मत्-कृमिजुष्टं, तप्तं-भूमिष्ठमेव सूर्यांशुभिः, अतिशैत्याद- ग्राहि—दन्तपीडकम् ॥ ६ ॥

अधुना आंतरिक्षं यन्न पेयं तदाह—

**नार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ।**
**ादितंतुविण्मूत्रविषसंश्लेषदूषितम् ॥ ७ ॥**

स०—यद्दिव्यं जलमार्तवं न भवति तच्च न पिबेत् । ननु मेव दिव्यं जलमार्तवम् । कालस्य ऋतुरूपत्वात् । ौ च भवमार्तवम् । एवं च न किंचिदनार्तवं संभ- । उच्यते । अनार्तवं न पिबेत् । अर्थादार्तवं दित्युक्तं भवति तदत्र सामान्योक्तावपि विशिष्टो यस्य ऋतुर्बोध्यो वर्षाख्यो यस्मिन् काले दिव्यं पेयत्वेनाभ्यनुज्ञायते । यथा वर्षासु दिव्यनादेये- दे । अन्यर्तुभवं त्वनार्तवत्वान्न पेयम् । अत्र च वर्षाख्य श्चातुर्मासिकोऽभिप्रेतः । अत एवाश्वयुजे मासि दिव्यं पेयत्वेनानुजज्ञे।अन्यथा ह्यनार्तवत्वात्तदपेयमेव स्यात्। वं प्रथमं च यत् । न केवलमनार्तवं न पिबेत् । दार्तवमपि प्रथमं न पिबेत् । कुतो हेतोरित्याह—

लूतादीत्यादि । लूता आदिर्येषां ते लूतादयः क्षुद्र- जंतवः प्राणिविशेषास्तेषां तन्तुविण्मूत्रविषाणि तन्तुः- सूत्राकारविशेषो लालेत्यन्ये । तेषां लूतादितन्तुविण्मूत्र- विषाणां संश्लेषः संपर्कस्तेन दूषितं यत्तत्तत्तदार्तवमपि- न पेयम् । केचित्त्वेवं व्याख्यानयंति । आर्तवं प्रथमं च यत्तन्न पेयं लूतादिजंत्वादिदूषितं च न पेयमिति । संग्रहे चाध्यगीष्ट । घनवस्त्रपरिस्रावैः क्षुद्रजंत्वभिरक्ष- णम् । व्यापन्नस्यास्य तपनमग्न्यर्कायसपिंडकैः ॥ पर्णी- मूलबिसग्रंथिमुक्ताकतकशैवलैः । वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम् ॥ पाटलाकरवीरादिकुसुमैर्गंधना- शनमिति ॥ ७ ॥

प०—तथा अनार्तवं च यद्दिव्यं तोयं तन्न पिबेत् । दिव्यत्वादस्य पेयत्वं प्राप्तं तदनार्तवत्वाच्च प्रतिषि- ध्यते । अनार्तवस्य प्रतिषेधे आर्तवस्य विधिरर्थात् पेयत्वेऽभ्यनुज्ञातो भवति । तस्माद्विशिष्टस्यान्त- रिक्षप्रभवस्य जलस्य पेयतयाऽवश्यमृतुरभिप्रेतः स च वर्षा वृष्टिकालः यस्मिंस्तत् । नभसः पतितं पेय- त्वेनाभ्यनुज्ञायते । अन्यर्तुप्रभवं तदनार्तवत्वान्न पिबेत् । किमार्तवं सर्वमेव पिबेदुत आर्तवमपि कि- ञ्चिन्न पिबेदत आह-आर्तवं प्रथमं च यत् प्रथमप- तितं यदार्तवं तन्न पिबेत् । ऋतौ भवमार्तवं न आर्त- वमनार्तवम् । तेनेदमुक्तं भवति—वर्षाकाले पतितं पिबेत् तत्तु प्रथमवृष्टमार्तवमपि न पिबेत्। लूतादयः क्षुद्रजन्तवः प्राणिविशेषास्तेषां तन्तुविण्मूत्रविषसं- श्लेषात् संपर्कात् यद्दूषितं तोयं तन्न पिबेत् । तन्तु- शब्देन लाला भण्यते ॥ ७ ॥

हे०—अनृतुः—वृष्टेरकालः, स चोक्तो ज्योतिःशास्त्रे— "अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः । यावत्प्रवर्तते तावदकालः परिकीर्तितः ॥" इति । प्रथममगस्त्योदया- त्प्राक् वृष्टं स च सिंहेऽर्क इति ज्योतिर्विदः । आर्तवमपि कुतो न पिबेत् यतो भूतादीनां खेचराणां विषप्राणिनां तंत्वादिभिर्यः संश्लेषस्तेन दूषितम् । तंतवस्तन्निर्मितानि सूत्राणि, उक्तं च काश्यपेन—"बलाहकाद्याः समदाः कीटा लूताश्च खेचराः । तद्विषोत्सर्गसंसर्गात् क्रियावत्र तदा जलम् ॥" इति । अयं च दोषः अगस्त्योदयादपैति, उक्तं च ज्योतिःशास्त्रे—"सलिलममरपाशयोज्झितं यत् घनपरिवेष्टितमूर्तिभिर्भुजंगैः । फणजनितविषाग्निसंप्रदुष्टं भवति शिवं तदगस्त्यदर्शनेन ॥" इति । दिव्यालाभे-

भौमं पेयमित्युक्तम् । तस्य चाष्टौ भेदाः । यथोक्तं संग्रहे—" कौप—सारस—ताडाग—चौंड्यं, प्रास्रवणौ, वापी—नदी—तोयम् । " इति । तत्पुनः स्मृतमष्टधेति । गम्भीरः संकीर्णः इष्टकादिबद्धः पुरुषकृतो जलाशयः—कूपः, तद्विपरीतं सरः, पुरुषकृतं सरस्तडागः, स्वयं शीर्णशिलास्थं चुंढिः, पर्वतनिर्झरः—प्रस्रवणं, भूमिमुद्भिद्योद्गमजलस्थानमुद्भिदम्, इष्टकादिबद्धो विस्तीर्णः ससोपानः कूपो—वापी, नदी—प्रसिद्धा ॥ ७ ॥

इदानीं नदीर्निरूपयन्नाह--

**पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः । पथ्याः समासात्ता नद्यो विपरीतास्त्वतोऽन्यथा ॥८॥**

स०—नद्यः समासात्संक्षेपतः पथ्या हिताः । का इत्याह । याः पश्चिममुदधिं समुद्रं गच्छंतीति पश्चिमोदधिगाः । अन्यत्रापि दृश्यत इति डः । तथा शीघ्रवहा वेगवत्यः । तथाऽमलोदका निर्मलसलिलाः । एवं त्रिविशेषणविशिष्टाः पथ्याः । अतोऽन्यथा पुनरन्यथा विपरीतलक्षणास्ता विपरीता अपथ्याः ॥ ८ ॥

प०—पश्चिमोदधिगाः—पश्चिमं समुद्रं या नद्यो गच्छन्ति यान्ति याश्च शीघ्रवहास्त्वरितगमनास्तथाऽमलोदका निर्मलतोयास्ताः समासात्संक्षेपतः पथ्या हिताः । विपरीतास्त्वतोऽन्यथा । अतः पूर्वोक्ता या नद्यो विंध्यगता याः पश्चिमोदधिगा न भवन्ति । तथा शीघ्रवहाः नापि निर्मलोदकाः ता विपरीता अपथ्या इत्यर्थः ॥ ८ ॥

हे०--तत्र नदीविशेषगुणानाह--अतोऽन्यथाऽपूर्वसमुद्रगाः मंदवहाः मलिनोदकाश्च । विपरीता अपथ्याः ॥ ८ ॥

**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः । हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः । कृमिश्लीपदहृत्कंठशिरोरोगान् प्रकुर्वते ॥ ९ ॥**

स०—हिमवांश्च मलयश्च हिवन्मलयौ ताभ्यांमुद्भूताः । जाताः पथ्याः किं सर्वा एव नेत्याह । उपलेत्यादि । उपला नामास्फालनमुपलास्फालनं तेनाक्षेपः क्षोभस्तेन विच्छेदा विश्लेषा उपलास्फालनाक्षेपविच्छेदास्तैः खेदितं जातक्षोभमुदकं यासां ताः खेदितोदका या हिमवन्मलयोद्भूतास्ता एव पथ्याः । यास्त्वेवंभूता न भवंति ता अपथ्याः । स्थिरा इति । ता एवाऽवहंत्यः कृम्यादीन् कुर्वते । हृच्च कंठश्च शिरश्च तेषां रोगाः कृमयश्च श्लीपदं च हृत्कंठशिरोरोगाश्चेति द्वंद्वः । सुश्रुतैरपि हिमवत्प्रभवानां पथ्यत्वमाह । कृष्णात्रेयस्तु त्वपथ्यत्वमाहतुः । अत एवायं ग्रंथकारो युक्त्या द्वयमपि संगिरमाणो विशेषणमुपन्यस्तवानुपलास्फालनाक्षेपविच्छेदैः खेदितोदका इति । तेन या एवं भवंति ता न पथ्या इति ॥ ९ ॥

प०--उपलास्फालनाक्षेपविच्छेदाः तैः खेदितं श्रमितमुदकं यासां तास्तथाविधाः । हिमवन्मलयौ पर्वतौ ताभ्यामुद्भूता समुत्पन्ना निर्गता नद्यः पथ्या हिताः । ता एव स्थिराः ता एव हिमवन्मलयोः नद्यः स्थिरा मन्दगमनाः कृम्यादीन् प्रकुर्वते । श्लीपदो—मेदोमांसाश्रितः शोफः पादयोर्वक्ष्यमाणलक्षणः ॥ ९ ॥

हे०--हिमवन्मलयनदीगुणानाह—उपलाः--पाषाणास्तेष्वास्फालनमभिघातादुच्छलनम्, आक्षेपः स्खलनादिना कुटिलं गमनं, विच्छेदो द्वैधीभावः, खेदितं-खेदादवाप्तलाघवम् । ता एव स्थिराश्चेत् कृम्यादीन्कुर्वते हृत्कंठशिरसां रोगान् । अयं च विषयभागः परस्परविरुद्धः सुश्रुतचरकवाक्ययोस्तात्पर्यमूलः । तत्र चरकवाक्यं--"नद्यः पाषाणविच्छिन्नविक्षुब्धाभिहतोदकाः । हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥ नद्यः पाषाणसिकता वाहिन्यो विमलोदकाः मलयप्रभवा याश्च जलं तास्वमृतोपमम् ॥" इति सुश्रुतवाक्यं तु मलयप्रभवाः कृमीन्, हिमवत्प्रभवाः हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान् कुर्वते इति ॥ ९ ।

**प्राच्याऽऽवंत्यपरांतोत्था दुर्नामानि महेंद्रजाः उदरश्लीपदातंकान् सह्यविंध्योद्भवाः पुनः ॥ कुष्ठपांडुशिरोरोगान् दोषघ्न्यः पारियात्रजाः बलपौरुषकारिण्यः सागरांभस्त्रिदोषकृत् ॥ १०॥**

स०—प्राच्यादिजा नद्यो दुर्नामान्यर्शांसि कुर्वंति । प्राच्या गौडाः । आवंतयो मालवाः । अपरांताः कौंकणाः । महेंद्रजा नद्य उदरादीन् कुर्वते । सह्यविंध्यपर्वतोत्थाश्च पुनः कुष्ठादीन् कुर्वते । पारियात्रे जाता दोषघ्न्यो भवंति ॥ १० ॥

( १ ) "समासतो नद्यो" इत्यपि पाठान्तरम् ।

प०--प्राच्या--अवन्तयः अपरान्ताश्च—जनपद-
ाषाः। तदुत्थास्तदुद्भूता नद्यो दुर्नामान्यर्शांसि
र्वते। महेन्द्रनामा पर्वतः तज्जास्तत्प्रभवा नद्यः
ातङ्कान् श्लीपदातङ्कान् प्रकुर्वते। आतङ्को—व्या-
च्यते। सह्यविन्ध्यौ—पर्वतौ तज्जन्मानो नद्यः
, पाण्डुरोगं, शिरोरोगं प्रकुर्वते। पारियात्रः--
ः तज्जास्तदुद्भवा नद्यो दोषघ्न्यस्त्रीन् दोषान्
त। बलं, पौरुषं कुर्वते। तथा सागराम्भः-समु-
जलं त्रीन् दोषान् करोति॥ १०॥

०-अवन्तिनदीगुणानाह-उज्जयिन्युपलक्षिता देशाः अव-
ः प्राच्याश्च ते अवन्तयश्च प्राच्यावन्तयः, अपरे पाश्चगाः
तयः तेषामंता मर्यादापर्वताः। अथवा प्राच्याव-
रा भागाः। तत्र प्राच्याः--गौडाः अवन्तयो--मालवाः
ान्ताः--कोंकणा इति। उक्तं हि सुश्रुते--
व्यावर्त्यपरा अर्शांस्युपनिवर्तयंति॥'' इति।
मान्यर्शांसि। महेंद्रपर्वतनदीगुणानाह--उदराणि--
दरादीनि। श्लीपदान्तकः--श्लीपदव्याधिः।
वैन्ध्यनदीगुणानाह--सह्यविंध्येति। पारियात्रनदीगु-
ाह--दोषघ्न्य इति। पौरुषं-वीर्यं ''पारियात्रोद्भवा
याश्च विन्ध्यभवास्तथा। शिरोहृद्रोगकुष्ठानां ता
श्लीपदस्य च॥'' इति। चक्रेण पारियात्रजानां
रोगादिकर्तृत्वमुक्तम्। इह तु दोषत्रयहरत्वमिति
धः। मैवं, द्विधाहि पारियात्रजाः--तडागजा दरीजाश्च-
द्याः दोषघ्न्यः, पराः शिरोरोगादिकर्त्र्यः। उक्तं हि
ामित्रेण--''तडागजं दरीजं च तडागाद्यत्सरिज्जलम्।
रोग्यकरं नद्या दरीजं दोषलं स्मृतम्॥'' इति। स-
दकगुणानाह--सागराम्बिति॥ १०॥

ात्कूपतडागादीन् जांगलानूपशैलतः ११॥

स०--आदिशब्देन संग्रहोक्ता गृह्यंते। यथा। कौप-
सताडागचौंड्यप्रास्रवणौद्भिदम्। वापीनदीतोयमिति
नः स्मृतमष्टधा। कौपं स्वादु त्रिदोषघ्नं लघु पथ्यं
सर्वदा। क्षारं तु कफवातघ्नं दीपनं पित्तकृत्परम्।
यबहुलं श्लेष्मपित्तघ्नं वातकृच्च तत्। तृष्णाघ्नं
सं बल्यं कषायमधुरं लघु। औद्भिदं स्वादु पित्तघ्नं
नं गुरु किंचन। सारं च कटु वाप्यंबु पित्तघ्नं
वातजित्। लघ्वल्पदोषं सुस्वादु नववापीष्ववा-
म्। अनभिष्यंदि नादेयं कटुकं कफपित्तजित्।
ादं वातलं रूक्षमनवस्थितलाघवम्। सुश्रुते चैषां
लक्षणमुक्तम्। तथा। भूम्युत्खातसमुद्भूतमिंद्रनील-
समप्रभम्। विमलं मधुरास्वादं कौपं जलमुदाहृतम्।
नद्याः शैलवराद्वापि स्रुतमेकांतसंस्थितम्। कुमुदांभोज-
संछन्नं वारि सारसमुच्यते। प्रशस्तभूमिभागस्थं नैक-
संवत्सरोषितम्। कषायमधुरास्वादं ताडागं सलिलं
स्मृतम्। स्वयंशीर्णशिलाश्वभ्रे नीलोत्पलनिभं
जलम्। लतावितानसंछन्नं बुधैश्चौंड्यमुच्यते।
शैलसानुसमुद्भूतं स्पृष्टं वातहिमातपैः। लघु
शीतामलं स्वादु स्मृतं प्रास्रवणं जलम्। विदार्य
भूमिमुद्भूतं महत्या धारया स्रवत्। यज्जलं वेदितव्यं
तदौद्भिदं स्वादु शीतलम्। पाषाणैरिष्टकाभिर्वा
बद्धा स्याद्या तु कूपवत्। वापी सा खलु विज्ञेया
कृतसोपानपंक्तिका। नद्यां शैलप्रसूतायां गोमेदकमणि-
प्रभम्। प्रशस्तभूमिभागस्थं जलं नादेयमुच्यत इति।
पौषादिद्वितयेष्विष्टं विशेषेण क्ष्माजलम्। सरस्त-
डागयोः कूपचिंड्योः प्रस्रवणौद्भिदोः। कूपेंद्र्योः कूप-
चुंड्योः सर्वपथ्यं ततः परम्। तदेतान् कूपादीन् जांग-
लानूपशैलान् समाश्रित्य जातान् विद्यात्। जांगलादि-
देशजान् यथायोगं लघून् गुरूंश्च जानीयादित्यर्थः।
तत्र जांगलदेशे कूपादीनां सतानां बहूदकसंबंधाभावाल्ल-
घुत्वं वेद्यम्। आनूपे तु बहूदकसंबंधाद्गुरुत्वं वेद्यम्।
शैले तूदकाल्पतया लघुतरत्वं वेद्यम्। तथा च संग्रहे
धन्वानूपमहीध्राणां सामीप्याद्गुरुलाघवमिति॥ ११॥

प० -कूपतडागादीन् गुरुलाघवाभ्यां च जाङ्ग-
लानूपशैलतो विद्यात्। जाङ्गलादीनां गुणेन तत्कूपा-
दिजलं जानीयात्। तथा च मुनिः--'' वापीकूपत-
डागादिसरःप्रस्रवणादिषु। आनूपधन्वशैलानां
गुणदोषैर्विभावयेत्॥'' संग्रहेऽप्युक्तम्--तदादिशेत्
'धन्वानूपमहीध्राणां, सामीप्याद्गुरुलाघवम्'। तेनेद-
मुक्तं भवति। जाङ्गलदेशस्थानां कूपादीनां लघु-
त्वम्, आनूपस्थानां गुरुत्वं, महेन्द्रसमीपस्थानां
दोषलत्वं, पारियात्रसमीपस्थानां दोषघ्नत्वम्। एवं
सर्वत्र योज्यम्॥ ११॥

हृ०--कूपादिगुणानाह-जाङ्गलो--निर्जला भूमिः। अ-
नूपः--सजलः, शैलः--पर्वतः, जांगलस्य समीपाः कूपादयो
लघूदकाः, अनूपस्य गुरूदकाः, शैलस्य लघुतराः, उक्तं

हि संग्रहे-"धन्वानूपमहीध्राणां सामीप्याद्गुरुलाघवम् ।" इति । खारणादिना च--"नदीकूपतडागादिवाप्यादिषु विशिष्यते । अनूपे गौरवादम्बु शैलधन्वनि लाघवात् ॥" इति ॥ ११ ॥

इदानीं केषांचिज्जलपाननिषेधमाह---

**नांबु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः ।**
**पांडूदरातिसारार्शोग्रहणीदोषशोथिभिः ।**
**ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः**

स०--अल्पाऽग्न्यादिभिरंबु न पेयम् । सर्वथैषां जलपाननिषेधप्रत्यवायमाशंकमान इदमाह । अशक्त्या वा पिपासामसहिष्णुभिरत्यल्पं स्वल्पं पेयम् । यावन्मात्रेण प्रत्यवायो न भवति तावदेव पेयमित्यर्थः । अल्पाग्नश्च गुल्मिनश्चेति द्वंद्वः । पांड्वादीनां सप्तानां द्वंद्वः । ततो मत्वर्थीय इनिः । शरन्निदाघाभ्यामंतरेण स्वस्थोऽप्यल्पशः पिबेत् किं पुनरातुरः । संग्रहे त्वेवमुवाच । ...ममल्पमशक्तौ तु पेयमौषधसंस्कृतम् । पाषाणरूप्य-...हेमजाततापार्कतापितम् ॥ पानीयमुष्णं शीतं वा दोषघ्नं तृडर्तिजिदिति ॥ १२ ॥

प०--अल्पाग्निप्रभृतिभिस्तोयं न पेयं न पातम् । अशक्त्या तैः पिपासासहिष्णुभिः सात्म्य-...कालप्रकृतिशरीरवशात् स्वल्पं पेयम् । शरन्नि-...घाभ्याम् ऋते शरद्ग्रीष्मौ वर्जयित्वा अन्यस्मि-...तौ हेमन्तशिशिरवसन्तवर्षासु स्वस्थोऽपि नरोऽ-...शोऽल्पमल्पं कृत्वोदकं पिबेत् ॥ १२ ॥

हे०--अल्पाग्न्यादीनामम्बुपानं निषेधति--अशक्त्या उ-... विना स्थातुमशक्त्या स्वल्पं च पेयम् । शोथिः ...थुः, ऋतुविशेषेण पानं नियच्छति--ऋते-विना स्व-...ऽपि । किंपुनरातुरः, अल्पशः--अल्पमल्पं, शरद्ग्रीष्म-...तु कामतः पिबेदित्यर्थाल्लभ्यम् ॥ १२ ॥

**स्थूलकृशा भुक्तमध्यांतप्रथमांबुपाः ॥१३॥**

स०--समाश्च स्थूलाश्च कृशाश्च समस्थूलकृशाः । ...च अंतश्च प्रथमश्च मध्यांतप्रथमाः । भक्तस्य मध्यां-...थमाः भक्तमध्यांतप्रथमाः।तेषु कालेषु येऽबु पिबंति ते ...मध्यांतप्रथमांबुपाः, यथाक्रमं समाः स्थूलाः कृशाश्च ...त्यर्थः । भक्तमध्येऽबु पीतं धातुसाम्यं समानतां ...ते । भक्तांते तु पीतमामाशये कफवृद्धिं विदधत्स्थौ-ल्यमावत्ते । भक्तादौ च पीतं निरिंधनमग्निं तेजःप्रति-पक्षतयाऽवश्यमवसादयति । मंदोऽग्निश्च सम्यगाह...पक्तुमशक्तो भवति । आहारस्य च सम्यगपाकान्न त...पुष्टिरिति कृशत्वे युक्तिः । तथा च संग्रहे । भक्तस्याद...जलं पीतमग्निसादं कृशांगताम् । अंते करोति स्थूल-त्वमूर्ध्वमामाशयात्कफम् । मध्ये मध्यं गतं साम्यं धातूनां जरणं सुखम् ॥ १३ ॥

प०--समश्च स्थूलश्च कृशश्चेति समस्थूलकृशाः मध्यश्चान्तश्च प्रथमश्च ते मध्यान्तप्रथमाः । भुक्तस्य मध्यान्तप्रथमाः तेष्वम्बु पिबन्ति । ये ते भुक्तम-ध्यान्तप्रथमाम्बुपा मनुष्याः । तेनेदमुक्तं भवति भुक्तमध्याम्बुपो नरः समः समधातुर्भवति । भुक्ता-न्तेऽम्बुपः--स्थूलः । भुक्तप्रथमाम्बुपः--कृशो भवति । मध्ये पीतमुदकं धातुसाम्यमुत्पादयत् समत्वं करोति अन्ते पीतमामाशये कफवृद्धिं कुर्वत् स्थूलत्वं करोति । भुक्तादौ पीतमवश्यं निरिन्धनं वह्निं मन्दी-करोति । तेजःप्रतिपक्षतया तत आहारमन्दत्वान्न सम्यक् पक्तुं समर्थः । आहारापाकाच्च तदानीं रसादयो न तथा पोषं गच्छन्ति । तदापोषात्पुमान् कृशो भवति । तथाच सङ्ग्रहे प्रोक्तमाचार्येण--"भुक्त-स्यादौ जलं पीतमग्निसादं कृशाङ्गताम् । अन्ते करोति स्थूलत्वमूर्ध्वं चामाशयात्कफम् । मध्ये मध्य-ङ्गतां साम्यं धातूनां जरणं सुखम् ॥" इति ॥ १३ ॥

हे०--अवस्थाविशेषेण फलकथनद्वारा पानं नियच्छति-भुक्तस्य मध्ये अर्द्धाहारे योऽबु पिबेत्स समशरीरो भ-वति, योऽन्ते भोजनानंतरं स स्थूलः, य प्रथमं भोजनात्स कृशः । अतोऽबुभुक्तमध्ये पेयमित्यर्थसि-द्धम् ॥ १३ ॥

**शीतं मदात्ययग्लानिमूर्च्छाच्छर्दिश्रमभ्रमान् ॥**
**तृष्णोष्णदाहपित्तास्रविषाण्यंबु नियच्छति १४**

स०--शीतमंबु मदात्ययादीन्नियच्छति पराकरोति। मदात्ययो मद्योत्थो रोगः । ग्लानिः क्लांतिः । मूर्छा मोहः । छर्दिर्वमिः । श्रमः खेदः । भ्रमोऽनवस्थितिः । तथा तृष्णादीनि नियच्छति।एवंगुणमप्यामं क्वचिन्नेष्यते। तथा चोक्तं संग्रहे । अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च । नाल्पमप्याम मुदकं हितं तद्धि त्रिदोषकृत्॥ १४॥

प०—शीतं तोयं मदात्ययादीन् नियच्छति—नि-
ारयति । मदात्ययो—मदोद्भवो व्याधिः। ग्लानिरप-
ाय: । मूर्छा—संमोहः । श्रमः—खेदः । भ्रमणं—भ्रमः
क्रारूढस्येव भ्रान्तिः । उष्णेनाहारविहारादिना
ह उष्णदाहः । पित्तास्रं—रक्तपित्तम् । विषं—स्थावर-
गमभेदेन द्विविधम् । एतानि नियच्छति—
न्ति ॥ १४ ॥

हे०—शीतोदकगुणानाह—ग्लानिः-क्लमः, श्रमः-खेदः।
र्मा-सूर्यादितापः, दाहः-पित्तादिकृतः, अस्रं रक्तं निय-
ति—हन्ति । एक एवोदकसामान्यगुणः शीतस्वभावा-
कस्य ॥ १४ ॥

अधुनोष्णांबुगुणानाह—

**शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत्।**
**तियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् ॥**
**ाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः ।)**
**पनं पाचनं कंठ्यं लघूष्णं बस्तिशोधनम् ॥**
**ाध्मानाऽनिलश्लेष्मसद्यःशुद्धे नवज्वरे ।**
**सामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥१५॥**

स०—दीपनादिगुणयुक्तमुष्णमंबु भवति।बस्तिशब्देन
ध्यान्मूत्रं गृह्यते तेन मूत्रशोधनमित्यात्राऽर्थो बोध्यः।
ाऽध्मानादिषु च शस्यते। कासश्च आमश्च पीन-
श्वासश्च पार्श्वरुक् च तासु च शस्यते । आमो-
आहार इत्यर्थः। केचित्त्वामपीनस इति पीनसवि-
ामामशब्दमाहुः । तैरजीर्ण उष्णांबु नोक्तं स्यात् ।
र्णे चालसकादिरूपे जलमुष्णमिष्यत एव ॥१५॥

०—तोयमुष्णमुष्णीकृतं पक्कं दीपनसंज्ञः पाचन-
ोषस्य । कण्ठे साधु कण्ठ्यं स्वर्यम् । लघुगुणयो-
ु । बस्तेः शोधनं बस्तिशोधनम् । बस्तिर्मूत्रा-
तद्दोषावृतं विशोधयति उत वाताख्यान् मूत्रशो-
बस्तिशोधनं तथोष्णमुदकं हिध्मादिषु विकारेषु
ते । हिध्मादयो वक्ष्यमाणाः । आमं च तत्पीनसं
पीनसं तत्र प्रशस्यते । यस्माद्दीपनं पाचनं च
निर्दिष्टम् ।पाचनेन चावश्यमेवामपक्तिः क्रियत
सामर्थ्यात्तत्र शस्यते किंपुनरामे शस्यत
नार्थः ॥ १५ ॥

अत्र कोष्ठकान्तर्गतोऽधिकः पाठउपलभ्यते ।

हे०—उष्णोदकगुणानाह—कण्ठ्यं—स्वर्यं, बस्तिर्मूत्रा-
शयः, सद्यःशुद्धिः—तदहःकृतवमनादिः, नवज्वरः—
सामज्वरः, आमः-आमाजीर्णं, पार्श्वरुक्—पार्श्वशूलम्, उष्णं
क्वथनोष्णं, सूर्यादितप्तनिषेधात् क्वथनविधिश्लोकः । संग्रहे—
"क्षीणपादत्रिभागार्द्धदेशर्तुगुरुलाघवात् । क्वथितं फेनर-
हितमवेगममलं हितम् ॥ तथा-पाषाणरौप्यमृद्धेमजतुपा-
त्रार्कतापितम् । पानीयमुष्णशीतं वा त्रिदोषघ्नं तृडर्त्तिनुत्"
इति ॥ १५ ॥

अधुना क्वथितशीतलं निर्दिदिक्षुराह—

**अनभिष्यंदि लघु च तोयं क्वथितशीतलम् १६॥**

स०—अनभिष्यंदि न श्लेष्मकारि।लघुगुणयोगोऽम्भ
सोऽस्त्येव । पुनर्लघुत्वकथनमग्निसंस्कारवशाल्लघुतरत्व-
प्रतिपत्त्यर्थम् । अथवा । आधारवशादक्वथितमंभो
लध्वपि यद्गुरु संपन्नं तदपि क्वथितशीतलं लघु भवति।
शीतलत्वादभिष्यंदित्वं यत्तोयस्य प्राप्तं तत्क्वथितशीत-
लत्वे चाऽस्य निषिद्धम् । मदात्ययादिहितत्वं तु
यच्छीतलत्वसामान्यात्तदस्यास्त्येव । न केनचिन्निषेद्धुं
संभाव्यते ॥ १६ ॥

प०—क्वथितशीतलतोयमनभिष्यंदि न श्लेष्मप्र-
कोपि क्वथितपानीयात् स्वभावलघुगुणयुक्तादपि
क्वथितशीतलमतिशयेन लघु ॥ १६ ॥

हे०—शृतशीतगुणानाह—अनभिष्यन्दि—स्रोतसमस्रावि,
दोषे-वायौ, श्लेष्मणि च उष्णमेव शीतीकृतं क्वथि-
तशीतलम् ॥ १६ ॥

**(संसर्गे पित्तकफयोः सन्निपाते च पूजितम् ।)**
**पित्तयुक्ते हितं दोषे व्युषितं तत्त्रिदोषकृत्॥१७॥**

स०—पित्तयुक्त इत्येकवचनमविवक्षितम्।तेन वात-
पित्ते पित्तश्लेष्मणि सन्निपाते च यत्र पित्तयोगः पित्ताधि-
कत्वं दृश्यते तत्रैव क्वथितशीतलं हितम् ।
संग्रहोक्तं च क्वथनलक्षणं संक्षेपाभिप्रायेणेह नोक्तम् ।
यथा । क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात् ।
क्वथितं फेनरहितमवेगममलं हितमिति । अस्यार्थः
शिष्यव्युत्पत्त्यै दर्श्यते । धन्वसाधारणानूपेषु देशेषु
क्रमशः क्षपितचतुर्भागत्रिभागार्धसलिलमधिश्रपयेत्।जांग-
लो हि देशोऽनिलानलाभ्यां भूयिष्ठमधिष्ठितस्तेनात्र तोयं
लाघवादाशु विशुद्धिं प्राप्नोति । आनूपस्तु भूमिसोम-

१ अत्र कोष्ठकान्तर्गतः पाठोऽधिको दृश्यते ।

गुणबहुलस्तत्र गुरुत्वादिगुणयोगाच्चिरेण विशुद्धिमश्नुते। एवं साधारणो देशश्चित्यः । तथा । ऋतुष्वपि यथा-योगमयमेव क्रमो बोध्यः । सुश्रुतेनोक्तम् । यत्क्वथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु । चतुर्भागावशिष्टं तु तत्तोयं कफरोगनुत् । तत्पादहीनं पित्तघ्नं हीनमर्धेन वातनु-दिति । संग्रहोक्तमेव ग्रंथमिमं केचिदत्राऽपि पठंति । तथा । पानीयं नतु पानीयं पानीयेऽन्यप्रदेशजे । अजीर्णे क्वथितं चामे पक्वे जीर्णेऽपि नेतरत् । शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् । अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् । प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषत इति । अन्यप्रदेशजे पानीयेऽजीर्णे पानीयं जलं न पानीयं न पेयम् । एतदुक्तं भवति । पानीये पीते तज्जरणांतं यावद्विजातीयं जलं न पेयमिति। अन्यप्रदेशज इति । कोऽर्थः । कौपे पीते ताडागं न पेयम् । ताडागे पीते कौपं न पेयम् । एवं सर्वत्र चिंत्यम् । तथा आमेऽपक्वे जलेऽजीर्णे क्वथितं च जलं न पेयम् । क्वथिते पीते जीर्णेऽपि नेतरन्नामं जलं यावन्न भुंक्ते तावत्सजातीयमपि न पेयमित्यर्थः । शीते विधिरयम् क्वथितशीत एतद्विधानमित्यर्थः । तुरवधारणे। तप्तेऽजीर्ण एव शिशिरं त्यजेत् । जीर्णे तु शीतं पिबे-दित्यर्थः । अतियोगेनातिबाहुल्येन तृष्यतस्तृष्णावतोऽपि प्रयोजितमुपयुक्तं सर्वस्यापि नरस्य श्लेष्मपित्ततां याति । ज्वरितस्य विशेषतो यत आमे नाग्नौ बहिष्कृते ज्वरस्यो-त्पत्तिः । आमस्य च पानीयं वर्धकमिति । संक्षेपतया-ल्पोपयोगित्वाच्चाऽवश्यायादिगुणा ग्रंथकृता नोक्ताः । तांश्चाऽत्र शिष्यहिताय ब्रूमः । रूक्षस्तनुरवश्यायः शीतो वातास्रकोपनः । पानतृड्दाहपितास्रकुष्ठोरुस्तंभ-मेहजित् । ग्रीष्मे तु सर्वजंतूनां स्पर्शनादिषु शस्यते।पश्चि-न्यंबु च पित्तघ्नं कफकृद्विरसं गुरु । हिमं तु शीतलं रूक्षं दारुणं सूक्ष्ममेव च ॥ कफं न संदूषयति न पित्तं न च मारुतम् । तथाऽश्मवर्षप्रलये हिमादल्पां-तरं गुणैः ॥ चराचराणामहितं तुषारं त्वग्निनाशनम् । वैकारं लघु सक्षारं श्लेष्मघ्नं वह्निदीपनम् ॥ केदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् । तद्वत्पाल्वलमुद्दि-ष्टं विपाके दोषलं तु तत् ॥ अनेकदोषमानूपं वार्यभिष्यंदि गर्हितम् । एभिर्दोषैरसंयुक्तं निरवद्यं तु जांगलम् ॥ पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीति-वर्धनम् । दीपनं स्वादु शीतं च तोयं साधा-रणं लघु ॥ चंद्रकांतभवं रक्षोविषपित्तज्वरापहम् । रत्नाकरसमुत्थं च सर्वदोषकरं मतमिति ॥ १७ ॥

प०—तच्च दोषे वातश्लेष्मान्यतरपित्तयुक्ते हितम् । संसृष्टे दोषे सन्निपतिते च दोषे हितम् । एवंगुणमप्येतत् क्वथितशीतलं वारि व्युषितं विशेषेणोत्थि अथवा विगताहोरात्रं यत् तत् त्रिदो-षकृत् त्रीन् दोषान् वातादीन् करोति । कालस्व-भावाद्वह्निगुणभ्रंशादम्लविपाकित्वाच्च ॥ १७ ॥

हे०--पर्युषितशृतशीतगुणानाह-तत्क्वथितशीतलम् १७

**नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।**
**तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥ १८ ॥**

स०--नालिकेरांतःस्थितमुदकं स्निग्धं स्वादु वृष्यं हिमं च भवति । एवंभूतमपि प्रभावाल्लघु भवति । तथा तृष्णादिहरं दीपनं मूत्रशोधनं च भवति ॥ १८ ॥

प०—नालिकेरफलादुदकमेवान्तःस्थं प्राधान्यतं ग्राह्यं नान्यत् । तथाऽवयवान्तरमिति ज्ञापनार्थम स्मिन् तोयवर्गस्य निर्देशः कृतः । तच्च नालिकेर फलस्य मध्यादुदकं स्निग्धस्य गुणयोगात् स्निग्धं स्वादु मधुरं, वृष्यं—शुक्रवृद्धिकरं, हिमं—शीतवीर्यं तृष्णापित्तानिलहरं—पिपासापित्तवातघ्नम् । दीपनम ग्नेर्बस्तेर्मूत्राधारस्य शोधनं शुद्धिकरम् ॥ १८ ॥

हे०--नारिकेरोदकगुणानाह--ईषत्पक्वार्द्रनारिकेलफलं-तदन्तर्वर्तिजलं नारिकेरोदकम् । केचित् सुश्रुताध्यायिनं गुर्विति पठन्ति गुरुपाकत्वात् । इह तु गुरुलघुपाकद्वैविध्या भावाल्लध्वित्येव पठनीयं लघुगुणत्वात् ॥ १८ ॥

इदानीं युक्त्याऽप्यसंग्रहं निर्दिशति--

**वर्षासु दिव्यनादेये परं तोये वरावरे ॥ १९ ।**

स०—प्रावृष्यांतरिक्षं जलं परमत्यंतं पथ्यम् । नदी संभवं त्वपथ्यमिति तोयवर्गः ॥ १९ ॥

प०-वरं चावरं च वरावरे, दिवि भवं दिव्यमातरि तोयम् । नद्यां भवं नादेयम् । दिव्यं च नादेयं दिव्यनादेये तोये ।तेन वर्षासु दिव्यं परमत्यर्थं व

**श्रेष्ठम् । नादेयं तोयं वर्षासु परमत्यर्थमवरमश्रेष्ठमिति तोयवर्गः । इदानीं सर्वक्षीराणां सामान्यगुणकर्मनिर्देशमाह-'जीवनादिगुणैर्युक्तम् ।' यथाम्बु गुणवत्तथैव यतः क्षीरमप्यत एवान्येभ्यो वर्गेभ्यः क्षीरवर्ग एव न्यायात् । किंच घृतादप्यस्य ज्यायस्त्वं यतः सर्वस्नेहोत्तमस्य घृतस्य क्षीरमेव योनिरिति तोयवर्गानन्तरं क्षीरवर्गः प्रारभ्यते ॥ १९ ॥**

हे०--उदकानां तारतम्यत्वमाह-वर्षाशब्दो नादेयेनैव संबन्ध्यते, उक्तं हि **चरकेण**-आन्तरिक्षमुदकानामिति पथ्यत्वेन प्रकृष्टतमेषु वर्षासु नादेयमुदकानामित्यपथ्यत्वेन नादेयेनैव वर्षागतस्यापि दिव्यस्यायौगिकत्वाच्च वर्षासंबन्धः । नहि दिव्यं च वर्षाभवं वरिष्ठं तस्य ग्रहणनिषेधात्, नापि वर्षास्वेव वरं सर्वदा वरिष्ठत्वात् । **खारणादिस्तु** पाल्वलमवरमाह-पाल्वलं जलमम्भसामिति । उभयं प्रमाणम् । **संग्रहे** तु-"सूर्योद्धृतप्रमुक्तत्वाल्लघु वातकफापहम् । शैत्यं जीवनसौम्यत्वैः पित्तरक्तविषार्तिजित् ॥ श्वेते कषायं तत्स्वादु कृष्णे तिक्तं तु पाण्डुरे । नीले कषायमधुरं देशे लवणमूषरे ॥ सक्षारं कपिले मिश्रं मिश्रे त्वम्बु गुणाधिके।मधुरं लवणाम्लं तु भवेद् भूमिगुणाधिके" तेजोऽधिके तिक्तकटु कषायं पवनाधिके ॥ दिव्यानुकारिं अव्यक्तरसत्वात् खगुणाधिके । कीटाहिमूत्रविट्कोत्थतृणजालोत्कराविलम् ॥ पंकपंकजशैवालहठपर्णादिसंयुतम् ॥ तत्कुर्यात्स्नानपानाभ्यां तृष्णाध्मानोदरज्वरान्॥ कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानतः ॥ तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते । घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम्॥ व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः । पर्णमूलबिसग्रन्थिमुक्ताकतकशैवलैः ॥ वज्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम् । पाटलाकरवीरादिकुंकुमैर्गन्धनाशनम् ॥ पानीयं न च पानीयं पानीयेऽन्यप्रदेशजे । अजीर्णे क्वथितं स्यामे पक्वे जीर्णेऽपि नेतरत् ॥ शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत्। पानीयं प्राणिनां प्राणा विश्वमेव हि तन्मयम् ॥ अतोऽत्यन्तनिषेधेऽपि न क्वचिद्वारि वार्यते । तस्य शोषाङ्गसादाद्या मृत्युर्वा स्यादलाभतः ॥ नहि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा । केवलं सौषधं पक्वं माममुष्णं हितं च तत् ॥ समीक्ष्य मात्रया युक्तममृतं विषमन्यथा । अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम्॥ प्रयाति पित्तश्लेष्मत्वं त्वरितस्य विशेषतः । वर्द्धयत्यामतृण्निद्रातन्द्राध्मानाङ्गगौरवम् ॥ कासाग्निसादहृल्लासप्रसेकश्वासपीनसान्।पाके स्वादु हिमं वीर्य तद्गुणमपि योजितम्॥ तस्मादयोगपानेन लाघवान्न वियोजयेत् । आमविष्टब्धयोः कोष्णा निष्पिपासोऽप्यपः पिबेत् ॥ यावन्त्यः क्लेदयन्त्यन्नमतिक्लेदोऽग्निनाशनः । विबद्धः कफवाताभ्यां मुक्तःमाशयबन्धनः ॥ पच्यते क्षिप्रमाहारः कोष्णतोयद्रवीकृतः ॥ अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ॥ नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत् । तोयं वह्निगुणभ्रष्टं पाकेऽम्लं सर्वदोषकृत् ॥ भवेत्पर्युषितं तच्च तोये तु करकोद्भवम् । अतिशैत्यगुरुस्थैर्यसंघातैः कफवातकृत् ॥ चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम् । " इति । इति तोयवर्गः ॥ १९ ॥

परिशेषेभ्यो वर्गेभ्यः प्राग्बहुजनोपयोगितयोपकारित्वेनाजन्मसात्म्येन प्राधान्यात्पयःसंज्ञासामान्यात्पयस इव जीवनादिगुणयोगाच्च तोयवर्गादनु क्षीरवर्गः प्रक्रम्यते । तत्रापि दध्यादीनां मूलकारणत्वात्क्षीरस्य प्रागुपादानम् । तथा । जीवनीयानां रसायनानां चाग्रेसरत्वात् । तथा चाष्टांगसंग्रहे । क्षीरं जीवनीयानां क्षीरघृताभ्यासो रसायनानामित्यादि ।

**(गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम् । ऐभमैकशफं चेति क्षीरमष्टविधं मतम् ।)[1]**
**स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥**
**वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ।**
**प्रायः पयः ॥ २० ॥**

स०--पयः क्षीरं प्रायः स्वादुपाकरसादियुक्तं भवति । पाकश्च रसश्च पाकरसौ । स्वादू पाकरसौ यस्य तदेवम् । ओजसे हितमोजस्यम् । धातून् वर्धयति धातुवर्धनम् । वृष्यं शुक्रकरमतिशयेनेति बोध्यम् । धातुवर्धनत्वादेव शुक्रकरत्वमात्रस्य सिद्धेः प्रायोग्रहणात्कदाचित्क्षीरं नैवं भवति । तथा चोष्ट्रीक्षीरमीषद्रूक्षोष्णलवणं पठ्यते । अजाक्षीरं च लघु । आविकमुष्णमैकशफमुष्णं साम्ललवणं चेति । तस्मात्प्रायोग्रहणं कृतम् । स्वादुपाकरसत्वादेव क्षीरस्य स्निग्धवृष्यादयो गुणा लब्धा एव किं पुनरेतैरुद्दिष्टैरिति केचित्, तान् ब्रूमहे । मधुररसादिकेभ्योऽपरे स्निग्धवृष्यादयो गुणा बहुतराः क्षीरस्य विद्यन्त इति ज्ञापनायैते स्निग्धादयो गुणाः पुनरुद्दिष्टाः ।

१ अत्र कोष्ठकान्तर्गतः पाठोऽधिकः, प्रतनपुस्तकेषु दृश्यते।

हाभूतानां हि संयोगादिविशेषात्कदाचिद्रससहचारि-
ा एव गुणा द्रव्यमभिनिविशंते ये रसे समाधाय
र्ण्यंते । यथा मधुर आयुष्यादिगुणाः । अम्ले-
ग्निदीप्तिकृदादयः । केचिच्च रसमनपेक्ष्यैव द्रव्ये
विशंते । यथा मधुररसद्रव्ये मकुष्ठतंडुलीयादौ
क्षादयो गुणाः । तथाहि स्निग्धादीनां तत्रोपलंभः
तो मधुररसाश्लिष्टत्वात् । तस्मान्मकुष्टादिद्रव्यं म-
ररससहचरोक्तेन गुणौघेन संयुक्तं वक्तुं युक्तम् ।
न्यथा तु कृतं षड्रसगुणस्वरूपवर्णनमनर्थमेव
ात् । तस्मादयमत्र विषयविभागो ज्ञेयः । केचिद्गुणा
ससहचरिता द्रव्ये निवसंति । यद्वशात्तद्द्रव्यं रस-
गाननुवर्तते । ईदृशं च विशेषमुद्दिश्य तंत्रकृद्भि-
ुरादिरसानां स्निग्धादिगुणा वर्णिता वेद्याः ।
चित्तु रसनिरपेक्षा एव द्रव्ये निवसंति । अत एव
द्रव्यं रसगुणान्नानुवर्तते । अस्मिंस्तु विषये रसगुण-
ानं नोक्तमेव वेद्यम् । तस्मात्क्षीरस्य स्निग्धादियो-
त्स्वादुपाकरसत्वे सत्यपि स्निग्धादिगुणवर्णनम् । एवं
भयथा क्षीरस्य स्निग्धादिगुणयोगादधिकाः स्नि-
ादयो ये गुणास्तेऽस्य संतीत्यवगच्छ । अयमेव च
वहारोन्यत्राऽप्येवंविधे शाल्यादौ द्रव्ये विशेषः ।
ु स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रस
ते वक्ष्यते । ततश्च स्वादुरसत्वादेव स्वादुपाकत्वं
ध्धं तत्किं पाकग्रहणेन । भणामः । शालिपिष्टमयं
र्नं गुरुभावाद्विदह्यत इत्युक्तं तदेव क्षीरं गुरुगुणयुक्त-
पि विदाहावस्थायां चिरं न तिष्ठति । प्रागेव स्वा-
ाकतां यातीतीममर्थं ज्ञापयितुं पाकग्रहणम् । स्त्रीणां
हाररस एवापत्यस्नेहात्क्षीराय संपद्यते । तथा
दारुवाहिः । स्त्रीणामपत्यजाद्धर्षाद्रसः स्नेहाय
ल्पते । स्नेहाद्रसः क्षरत्येवं हृदयात्क्षीरमेत्यत इति ।
व्यस्य च पूर्वतरमुपादानं सर्वक्षीरेभ्यो ज्यायस्त्वात्तथा
हिषमपि तक्रादि गोरसशब्देन प्रथितमिति ॥२०॥

प०– प्रायः पयोऽत्र स्वादुमधुरौ पाकरसयुक्त-
क्षणौ यस्य तत्सर्वमविशेषेण क्षीरजातं मधुररसं
धुरविपाकं च स्निग्धगुणयोगात् स्निग्धम् ।
ोजसो हितमौजस्यम् । ओजोनाम धातूनां सार-
भूतं वक्ष्यमाणलक्षणं तस्यातिवृद्धकारि। धातूनां रसा-
दीनां वर्धनं वृद्धिजननम्। वातपित्तहरं वातपित्तघ्नम्।
वृष्यं रेतोवृद्धिकरम् । श्लेष्मलं श्लेष्मकारि । गुरुगुण-
योगाद्गुरु प्रायो बाहुल्येन । सर्वमेवंविधं पयः नेत्र
क्वचिदन्यथात्वं दृष्टम्।यथोष्ट्रक्षीरं किंचिद्रूक्षोष्णलवणं
लघु च । तथाजं लघु । आविकमुष्णवीर्यमेकशफं
चोष्णवीर्यम् । अत्र च सामान्येनोक्तगुणविपरीतो
यो विशेषेण गुणयुक्तः स सामान्यगुणस्यापवादो
विज्ञेयः। अथ चेत्सदृशः स तस्यैवोपबृंहकः ॥२०॥

हे०-अथ क्षीरवर्गः।गव्यमिति। तत्र सामान्यगुणान्[illegible]
ओजस्यमोजोवर्द्धनम् । स्वादुरसत्वात्स्वादुपाका[illegible]
सिद्धेषु तेषां ग्रहणेन तेभ्यः स्वादुरसेभ्योऽतिशयार्थं धा[illegible]
वर्द्धनत्वाच्छुक्रवर्द्धनत्वे सिद्धे वृष्यग्रहणमपि प्रायोग्रहणा[illegible]
ष्ट्रीक्षीरादावीषल्लवणत्वाद्यपि ॥ २० ॥

**अत्र गव्यं तु जीवनीयं रसायनम् ।**
**क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ॥**
**श्रमभ्रममदालक्ष्मीश्वासकासार्तितृट्क्षुधः ।**
**जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत्॥२१॥**

स०--एषु क्षीरेषु मध्ये गव्यं पुनः क्षी[illegible]
जीवनीयमतिशयेनेति बोद्धव्यम् । जीवनीयमा[illegible]
स्यौजस्यमित्यनेनैव क्षीरसामान्यलक्षणेनोक्तत्वात् ।

( १ ) "कृष्णाया गोर्भवेद् दुग्धं वातहारि गुणाधिकम् ।
पीताया हरते पित्तं तथा वातहरं भवेत् ॥ श्लेष्मलं गु[illegible]
शुक्लाया रक्तचित्रा च वातहृत् । विवत्साबालवत्सायाः पयो
दोषलमीरितम्॥ वष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत्पयः।जा[illegible]
लानूपशैलेषु चरन्तीनां यथोत्तरम् ॥ पयो गुरुतरं स्नेहो यथा
हारं प्रवर्तते। स्वल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम् । [illegible]
वर्ण्यं परं वृष्यं सुस्थानां गुणदायकम् । पलालतृणकार्पासि[illegible]
जातं गुणैर्हितम्" **( भा. प्र. )** तरुणीनां गवां दुग्धं मधुरं [illegible]
रसायनम् । त्रिदोषशमनं चैव वृद्धाया दुर्बलं मतम् । गर्भ
भीयाः समुद्दिष्टं त्रिमासोर्ध्वं च पित्तलम् । क्षारं च मधुरं [illegible]
मतं वै शोषकारणम्॥प्रथमं च प्रसूताया निःसारं गुणहीनकम्।
नूलप्रसूतगोर्दुग्धं रूक्षं दाहकरं मतम् ॥ रक्तदोषस्य जनकं
पित्तलं च मतं बुधैः । चिरप्रसूतादुग्धं तु मधुरं दाहकं [illegible]"
**( निघण्टुरत्नकरे )** शस्तं वत्सैकवर्णाया धवलीकृष्णयोरपि ।
इक्ष्वादा माषपर्णाद्या ऊर्ध्वशृङ्गी च या भवेत्। तासां गवां हि[illegible]
क्षीरं शृतं वा शृतमेव वा । गव्यं प्रत्युषसि क्षीरं गुरु दुष्टाम्भ[illegible]
दुर्जरम्॥ तस्मादभ्युदिते सूर्ये यामं यामार्धमेव वा। समुत्ता[illegible]
ततो ग्राह्यं तत्पथ्यं दीपनं लघु" **( रा. व. )**

ओजस्यं हि जीवनीयमुच्यते । तथा । ह्योजःक्षये जीवनीयानामौषधानामुपयोगो निर्दिष्टः । यथा । ओजः क्षीतकोपादिभिरित्युक्त्वानन्तरमुवाच जीवनीयौषधक्षीररसाद्यास्तत्र भेषजमिति । अत्र च क्षीरं जीवनीयत्वेन गृहीतमपि पुनरुक्तं प्राधान्यख्यापनार्थम् । तथा च मुनिः । प्रवरं जीवनीयानां क्षीरमुक्तं रसायनमिति । रसवीर्यविपाकानां श्रेष्ठानां लाभोपायो रसायनम् । तथा चोक्तम् । लाभोपायो हि शस्तानां रसादीनां रसायनमिति । तथा क्षतक्षीणहितम् । क्षीणाय हितम् । क्षीणः क्षीणधातुः । तथा मेधा धारणाशक्तिस्तस्यै हितं मेध्यम् । उगवादिभ्यो यदिति यत् । एवं बल्यम् । तथा स्तन्यकरम् । कृञो हेतुताच्छील्येति हेतौ टः । स्त्रीणां स्तन्यकरणे हेतुरित्यर्थः । तथा सरम् । श्रमादींश्चैकादश नाशयेत् ॥ २१ ॥

प०-अत्र क्षीरेषु मध्ये यद्गव्यं क्षीरं तज्जीवनीयम् । सर्वाणि क्षीराणि जीवनीयानि । इदं पुनर्गोक्षीरमतिशयेन जीवनीयम्। ओजस्यं सौम्यधातुवृद्धिकरम्। रसायनमिति रसायनं प्राणसंधारणकारणत्वात् । यथाचाष्टाङ्गसङ्ग्रहे।क्षीरघृताभ्यासो-रसायनम्।"लाभोपायो हि शस्तानां रसादीनां रसायनम्।" क्षतक्षीणहितमुरःक्षतयुक्ताय क्षीणाय च हितं पथ्यम् । क्षीणः क्षीणधातुः । मेधायै--बुद्ध्यै हितं-मेध्यम् । बलस्य हितं बल्यम् । स्तन्यंकरं स्त्रीणां स्तन्यवृद्धिं करोति ।क्षीरधातुत्वात् स्त्रीस्तन्यजनकम्।सरं-सरणशीलम्।भेदि-श्रमादीन् हन्ति । श्रमः-खेदः, भ्रमणं-भ्रमः, मदो वक्ष्यमाणः। आधिस्तु-मनःपीडा।।२१।।

हे०--गव्यगुणानाह--जीवनीयं--प्राणधारणं, रसायन--वयःस्थापनं, क्षतं--क्षतकासः, क्षीणः--क्षयरोगी, तयोर्हितं, मेध्यं--मेधाजननं, बल्यं--बलकरम्, अलक्ष्मीर्लक्ष्मीविरहहेतुः, आधिर्मनः पीडा, क्षुत्--अतिबुभुक्षा, तस्या एव गतत्वात् ॥ २१ ॥

## तमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् २२

स०--महिष्या इदं माहिषं क्षीरमत्यग्निभ्योऽनिद्रेभ्यश्च हितम् । तथा गरीयो गुरुतरम् । तथा हिमं शीतवीर्यम् । मुनिरप्याह । महिषीणां गुरुतरं गव्याच्छीततरं पयः । स्नेहादूनमनिद्राय हितमत्यग्नये च तदिति । खरनादे चोक्तम् । गव्यं स्नेहोत्तमं क्षीरं गव्याच्च पयसः पयः । यथोत्तरं स्नेहहीनमौरभ्रच्छागमाहिषम् । जांगलानूपशैलेषु चरंतीनां यथोत्तरम् । पयो गुरुतरं वत्सो यथा तासां प्रवर्तनमिति । गुरु शीततरं गव्यान्माहिषं स्वल्पके पयः । चतुर्थभागस्नेहोनं पित्तघ्नं च विशेषत इति । अत्र रविगुप्तः सिद्धसारे व्यध्यगीष्ट । गव्यात् स्निग्धं गुरुतरं माहिषं स्वप्नकृत्पय इति । तद् बुधैर्विरुद्धम् । सर्वमतविरुद्धत्वात् ॥ २२ ॥

प०-माहिषं क्षीरमत्यग्निभ्यस्तथाऽनिद्रेभ्यो नरेभ्यो हितं पथ्यम् । तच्च गरीयो गुरुतरमन्येभ्यः क्षीरेभ्यः । हिमं शीतवीर्यमतिशयेन ॥ २२ ॥

हे०--माहिषगुणानाह--अत्यग्नयस्तीव्राग्नयः, अनिद्रा-नष्टनिद्रा, गरीयः--गव्यात् गुरु, सामान्यवचनात्सिद्धेऽपि हिमत्वे हिमग्रहणमतिशयार्थं, ननु एवं गुरुत्वस्यातिशयार्थमपि न कर्तव्यः, गुरुशब्दादेवातिशयसिद्धेः । सत्यं, शीतत्वादपि गुरुत्वातिशयार्थं ईयसुः कृतः । अत्र चरकसुश्रुतयोर्विरोधः । तत्र चरकः--" महिषीणां गुरुतरं गव्याच्छीततरं पयः । स्नेहादूनमनिद्राणामत्यग्नीनां हितं च तत्" इति । सुश्रुतः--"महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् । निद्राकरं शीततरं गव्यात्स्निग्धतरं गुरु ॥ " इति । तत्र चरकोक्तं--गव्यान्माहिषस्य स्नेहोनत्वं हृद्यादिगुणविषयं, माहिषक्षीरजात्स्नेहाद्गव्यक्षीरजः स्नेहो हृद्यादिभिर्गुणैरधिक इत्यर्थः । सुश्रुतोक्तं स्नेहाधिकत्वं मात्राविषयं यावतो गव्यात् क्षीराद्यावान् स्नेहस्तावतो माहिषाच्च ततोऽधिकमित्यर्थः । अतएव खरणादिनोत्तमशब्दः प्रयुक्तः-"गव्यं स्नेहोत्तमं क्षीरं गव्याच्च पयसः पयः । यथोत्तरं स्नेहहीनमौरभ्रच्छागमाहिषम् ॥ " इति । उरभ्रादीनां यथोत्तरत्वमुद्देशवाक्यक्रमापेक्षया--" क्षीराकरा गौर्महिषी अजावी करभी गजी । हयी स्त्री चाष्टमी तेषां पृथक्कर्मगुणान् शृणु ॥ " इति । गव्यं स्नेहोत्तमं, ततो जघन्यं माहिषं, तत आजं, तत आविकमिति जघन्यत्वे मानं चोक्तं तेनैव--"गुरु शीततरं गव्यात्स्वल्पकं माहिषं पयः । चतुर्थभागस्नेहोनं पित्तघ्नं च विशेषतः ॥ " इति । निदर्शनं चेदं तेन माहिषात् छागं चतुर्थभागस्नेहोनं, छागादौरभ्रमिति ॥ २२ ॥

**अल्पांबुपानव्यायामकटु तिक्ताशनैर्लघु ।**
**आजशोषज्वरश्वासरक्तपित्तातिसारजित् २३ ॥**

स०--आजं छागलं क्षीरं लघु भवत्यल्पांबुपानादिभिर्हेतुभूतैः । स्वल्पांबुपानादित्वं चाजानां स्वभावोऽन्यासां तु देशसात्म्यापेक्षया । यद्येवं स्वभावादेवाल्पांबुपानादेर्गम्यमानत्वादेतदुपन्यासो व्यर्थ एव। अत्रोच्यते। ज्ञापनार्थमिदम् । ज्ञापयति । यदा अजा अप्यव्यायामा गुर्वशनादि कुर्युस्तदा तासामप्यन्यथा क्षीरं भवेत् । एवं च गवादीनामप्याहारादिवशाद्गुरुलघुत्वं चिंत्यमिति। नेन प्रदोषेऽपराह्णे यद्गृहीतं पयस्तदपेक्षयौषसम् प्रभाते यद्गृहीतं तद्गुरु । चेष्टारहितत्वात् । रात्रौ हि प्राणिनां न कदाचिच्चेष्टा भवति । अत औषसं गुरु । दिवा च धावनप्लवनादिकया चेष्टया प्रादोषं लघु । अनया च दिशा सर्वमपि चिन्त्यम् । अत एव संग्रहे यदुक्तम् । पिण्याकाम्लाशिनीनां तु गुर्वभिष्यंदि तद्भृशमिति । तदेतेनैवोक्तप्रायत्वान्नेहोक्तम् । शोषेत्यादि । शोषादीनां द्वंद्वः । तान् जयतीति क्विप् । शोषजित् एवं ज्वरजिदित्यादि ॥ २३ ॥

प०--आजं क्षीरमल्पाम्बुपानादिभिः हेतुभूतैर्लघुहेतुकीर्तनमन्यस्याप्येवंहेतुयुक्ताया जातेः क्षीरस्य लघुत्वज्ञापनार्थम् । एतद्विपरीतायाश्च गुरुत्वं सामर्थ्यलभ्यम्। अजानान्तु स्वल्पाम्बुपानादिस्वभावः, अन्यासां तु देशाद्यपेक्षया एतदाजं शोषादीन् जयति । शोषो राजयक्ष्मा ॥ २३ ॥

हे०--आजगुणानाह--शोषो--राजयक्ष्मा, अल्पांबुपानादिहेतुपन्यासो निदर्शनार्थः । अजानां तत्स्वभावत्वात् । अल्पाम्बुपानादिषु सत्सु गवादीनां पयो लघु विज्ञेयं, यथ अजानामित्यर्थः । अर्थाद्विपर्यये गुरु, उक्तं हि संग्रहे--"पिण्याकाम्लाशनीनां तु गुर्वभिष्यन्दि तद्भृशम् । अचेष्टया च प्रादोषाद्गरीयः स्मृतमौषसम् ॥ व्याख्यातानेन लघिमा चेष्टावत्प्रकृतिष्वपि । ह्रस्वेषु वाति देहेभ्यो मांसेष्वप्येवमादिशेत् ॥" इति ॥ २३ ॥

**ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।**
**शस्तं वातकफानाहकृमिशोफोदरार्शसाम् २४॥**

स०--औष्ट्रकमुष्ट्राणां क्षीरं लघु । तथा ईषन्मनाग्रूक्षोष्णं तथा दीपनं भवति । तथा वातादीनां शस्तम् वातादिषु पथ्यमित्यर्थः । औष्ट्रकमित्युष्ट्राद्वुञिति वुञ् प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमित्युष्ट्रीशब्द दपि ॥ २४ ॥

प०--उष्ट्रमेवौष्ट्रकं क्षीरमीषद्रूक्षोष्णमीषदुष्णमं षल्लवणम् । दीपनमग्नेः । लघु च । वातकफानाह क्रिमिश्वयथूदरार्शसां शस्तं पथ्यम् ॥ २४ ॥

हे०--कारभगुणानाह--शस्तमौषधं वातकफघ्नत्वेन हे विपरीतत्वादानाहादिघ्नत्वे सिद्धेऽप्यानाहादिग्रहणं व्याधि विपरीतत्वख्यापनार्थम् ॥ २४ ॥

**मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ।**
**तर्पणाश्चोतनैर्नस्यैः ॥ २५ ॥**

स०--मानुषीणां क्षीरं वातपित्तासृगभिघाताक्षिरो जिद्भवति वातश्च पित्तं चासृक् चाभिघातश्चेति द्वंद्वः तैरक्षिरोगस्तं जयति यत्तदेवम् । नत्वभ्यवहारादिना तर्पणादीनि स्वे स्वेऽध्याये वक्ष्यमाणानि ॥ २५ ॥

प०--वातश्च पित्तं च असृक् चाभिघातश्च ते वा पित्तासृगभिघातास्तैरक्षिरोगास्तान् जयतीति विग्र कार्यः । तेन मानुषं क्षीरं वातपित्तासृगभिघा रुत्पन्नानक्षिरोगान् जयति नाशयति । कथमित् च्यते । केन तर्पणेनाश्चोतनेन नस्येन च । एता चास्मिन्नेवंस्थाने वक्ष्यमाणलक्षणानि तर्पणं नेत्र पूरणं यवमाषमयीं पालीं कृत्वा । आश्चोतनं--शीतं ष्णमृदुना परिषेकः । नावनं नस्यम् ॥ २५ ॥

हे०--स्त्रैणगुणानाह--तर्पणं--नेत्रपूरणम्, आश्चोतन नेत्रसेचनं ताभ्यामाक्षिरोगान् जयति नस्येन शिरोग न्वातादींश्च । उक्तं हि चरकेण--"जीवनं बृंहणं सा स्नेहनं मानुषं पयः । नावनं रक्तपित्तस्य तर्पणं चाक्षि गिणाम् ॥" इति ॥ २५ ॥

केन प्रयोगेणेत्याह--

**अहृद्यं तूष्णमाविकम् ।**
**वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ॥२६**

स०--आविकं क्षीरमुष्णवीर्यं भवति । तथा अ हृदयायाहितं भवति तथा वातव्याधिहरम् । त हिक्कादिप्रदम् । आविकमित्यविशब्दात्स्वार्थे कप्रत्यय तात्तस्येदमित्यण् ॥ २६ ॥

प०—अवेरिदमाविकं, क्षीरमहृद्यं--हृदयाप्रियम् । साधु वा न भवति । उष्णमुष्णवीर्यं वातव्याधिहरं—वातव्याधिविनाशनम् । हिध्माश्वासपित्तकफप्रदम् ॥ २६ ॥

हे०--आविकगुणानाह—खारणादिस्त्वाह—"स्वाद्वम्लपाकं स्निग्धोष्णं गुरुपित्तकफोल्वणम् । आविकं बृंहणं क्षीरं हिक्काश्वासानिलापहम् ॥" इति । तत्र हिक्काश्वासौ कफपित्तजौ करोति, वातजौ हरतीत्यविरोधः । उक्तं हि सुश्रुतेन—"आविकं मधुरं स्निग्धं गुरुपित्तकफापहम् । पथ्यं केवलवातेषु श्वासे चानिलसंभवः ॥" इति ॥२६॥

**हस्तिन्याः स्थैर्यकृत् ॥ २७ ॥**

स०--हस्तिन्याः क्षीरं स्थैर्यकृद्भवति ॥ २७ ॥

प०—हस्तिन्याः क्षीरं बाढमतिशयेन स्थैर्यकृत् शरीरस्थैर्यं करोति ॥ २७ ॥

हे०—ऐभगुणानाह—हस्तिन्या इति ॥ २७ ॥

**बाढमुष्णं त्वैकशफं लघु ।**
**शाखावातहरं साम्ललवणं जडताकरम् ॥२८॥**

स०—एकः शफो नखो यासां वडवादीनां ता एकशफास्तासामिदमैकशफं क्षीरं बाढमतिशयेनोष्णं भवति । तथा शाखासु बाहूरुप्रभृतिषु यो वातस्तं हरतीति शाखावातहरम् । हरतेरनुद्यमनेऽजित्यच् । तथा साम्ललवणमीषदम्लमीषल्लवणं च । तथा जडताकरमंगजौड्यकरणहेतुः । कृञो हेत्वित्यादिना हेतौ टः॥२८॥

प०—एकशफास्त्वेकनखाः । एकः अद्विभागः शफः खुरो येषां ते एकशफाः तेषां क्षीरम् । एकशफानामिदमैकशफं क्षीरमुष्णवीर्यम् । शाखा—रक्ताद्यो धातवः,त्वक तत्रस्थं वातं हरन्ति । शखावातहरं-शाखास्थितस्य वातस्य नाशनम् । साम्ललवणं—किञ्चिदम्लं किञ्चिल्लवणं च जडताकरम् । शरीरस्यापटुत्वं जनयति प्रज्ञामपहरति वा । जडतास्तैमित्यमिति केचित् ॥ २८ ॥

हे०--ऐकशफगुणानाह—उष्णमिति । ऐकशफा अविभागखुरवडवागर्दभ्यादयः, शाखा— बाह्यो रोगमार्गः, साम्ललवणमीषदम्लमीषल्लवणं,जडता-प्रज्ञाहीनत्वम् २८॥

**पयोऽभिष्यंदि गुर्वामं युक्त्या शृतमतोऽन्यथा ॥**

स०--आममकथितं पयोऽभिष्यंदि [illegible] तथा गुरु भवति । अत आमादन्यथा विपरीतं युक्त्या शृतं भवति । अनभिष्यंदि लघु च । पूर्वावस्थामपेक्ष्योच्यते । युक्तिर्योग उपायः । खरनादे च क्षीरस्य श्रपणे युक्तिः स्पष्टं कृत्वा निदर्शिता । विना तु युक्तिं नास्तन्यमाममेव हितं पयः । अर्धोदकं क्षीरशिष्टमामात् लघुतरं शृतमिति ॥ २९ ॥

प०—सर्वं पय आमकथितमभिष्यन्दि [illegible] पीत्यनेन स्रोतसां स्रावकारि तथा च गुरु पृथिवीसोमगुणभूयस्त्वात् । युक्त्या शृतं तदेव क्षीरमामाद्विपरीतं नाभिष्यान्दि नचापि गुरु । अनाभिष्यान्दि लघु च तत्स्यात् । युक्तिर्योगः । उपायो यथा—अर्धोदकं क्षीरशिष्टमामाल्लघुतरं शृतमित्यादिना तन्त्रान्तरेऽभिहितम् ॥ २९ ॥

हे०—अपक्वक्षीरगुणानाह—पय इति । [illegible] स्रोतःस्रावि, [illegible] [illegible] गुणवत्, [illegible] सुश्रुतेन—"तदेवोक्तं लघुतरमनभिष्यंदि [illegible] [illegible] स्त्रियाः स्तन्यमाममेव हि [illegible] ॥" इति । [illegible] क्षीरगुणानाह—युक्त्येति । अतोऽन्यथेत्यनभिष्यंदि लघु च युक्तिरुक्ता खारणादिना-"अर्द्धोदकं क्षीरशिष्टमामाल्लघुतरं शृतम् । स्यान्निर्जलं शृतं द्वित्रिचतुरष्टांशशोषितम् ॥ यः शृततमं सारं गुरु बल्यतमं पयः ।" इति ॥ २९ ॥

**भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम् ॥३०॥**

स०—अतिशयेन कथितं कवलभोज्यमिव संजातं गरीयो गुरुतरं भवेत् । खरनादे चोक्तम् । स्यान्निर्जलं शृतं द्वित्रिचतुरष्टांशशोषितम् । तथा शृततमं सारं गुरु बल्यतमं पयः । सुश्रुते चोक्तम् । शृतशीतं तु पित्तघ्नं शृतोष्णं कफवातजित् । त्यजेद्विवर्णं ग्रथितं विगंधं विरसं पटु । रक्तपित्तप्रशमनी वृष्या संतानिका गुरुरिति । खरनादे चोक्तम् । धारोष्णात् सर्वशः क्षीरात् शृतं गुरुतरं भवेदिति । धारोष्णममृतोपमं निर्दोषत्वात् ॥ ३० ॥

प०--अथवा नातिशृतं न स्वल्पशृतमिति युक्तिः अयुक्त्या शृतमत्यग्निसंयोगे गुर्वेव भवति । अतः अयुक्तिश्रपणान्निर्जलश्च पयोदकः द्वित्रिचतुरष्टांशशोषितमुत्तरोत्तरं सारतां याति । तथा च तन्त्रान्तरे-

( १ ) एकशफा गर्दभ्यादयः, तासां क्षीरं शाखावातहरमत्युष्णत्वादम्ललवणानुरसत्वाच्च । अतोऽत्र जाड्यकरं प्रज्ञाहीनत्वकरमेव नाङ्गजाड्यकरणहेतुः ।

"स्यान्निर्जलं शृतं द्वित्रिचतुरष्टांशशेषितम्। यथा शृततमं सारं गुरुबल्यतमं पयः॥" तस्मादतिशृतं गरीयोऽति गुरु भवति धारोष्णं-सद्योदुग्धं, पथ्यत्वेनामृतोपममममृततुल्यं भवेत्॥ ३०॥

हे०–अतिपक्वक्षीरगुणानाह–**भवेदिति** । गरीयोऽपक्वाद्गुरु। धारोष्णगुणानाह–**धारोष्णमिति**। धारायामुष्णं धारोष्णं यस्य मुखमेव पात्रम् इति क्षीरवर्गः॥ ३०॥

अधुना दधिगुणान्निरूपयति—

**अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित्।**
**मेदःशुक्रबलश्लेष्मपित्तरक्ताऽग्निशोफकृत्॥**
**रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे।**
**पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे॥**
**नैवाद्यान्निशि नैवोष्णं वसंतोष्णशरत्सु न।**
**नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम्॥**
**न चानामलकं नापि नित्यं नामंदमन्यथा।**
**ज्वरासृक्पित्तवीसर्पकुष्ठपांडुभ्रमप्रदम्॥३१॥**

स०–अम्लौ पाकरसौ यस्य तदेवंभूतं दधि भवति। तथा ग्राहि स्तंभनम्। तथा चोक्तम्। भेदियत्पिंडितान् भावान् शकृदादीन् भिनत्ति तत्। विपरीतमतो ग्राहि तच्च स्तंभनमुच्यत इति। तथा गुरूष्णं वातजिच्च। मेदआदीनां द्वंद्वः। तान् करोति यत्तदेवम्। रोचत इति रोचिष्णु। न रोचत एव केवलम्। अरोचकमपि व्यावर्तयतीति शस्तमरुचौ। रोचते हि घृतपूरादि न त्वरुचिं जयति। अरुचिघ्नं पटोलपत्रं तन्न रोचते। तथा ह्यत्रैव पठिष्यति। तिक्तः स्वयमरोचिष्णुररुचिमित्यादि। रोचिष्णुत्वादेवोच्चावचव्यंजनपरिवृतैर्मांसमंडकादिभिरपि सहितस्यापि दध्न्यभिलाष उत्पद्यत एव। अतएव चैतदाहारांतेऽभ्यवहरंति। शीतक इति विषमज्वरविशेषणम्। शीतकारित्वं तु वाते श्लेष्मणि तत्संसर्गे च यद्यपि त्रितये संभवति तथाऽपि वातजिद्वातज एव विषमज्वरे दधि प्रयोज्यम्। न संसर्गे वा वातोल्बणे। तथा हि शीतज्वर एवोक्तम्। अन्यनग्निकृतान्स्वेदान्स्वेदि भेषजभोजनमिति। पीनसे शस्तमिति कथमविशेषेणोक्तम्। यतश्चत्वारः पीनसा वातपित्तकफसन्निपातजा इति। वक्ष्यते। तत्र द वाताधिक एव युक्तत्वं न शेषेषु। अत्र संचक्ष्महे। ८ पाकात्पीनसस्योपशांतिः परिपाककरं च दध्युष्णत्वा अथवा पूर्ववत्सामान्योक्तावपि यत्र योग्यताऽस्य वा तेनैतदुपकल्प्यताम्। अनुक्तेष्वपि हि सामान्योपत्र वस्तुवशाद्विशेषेष्वेव विपरिणमति। तथा ह्यत्रैवोपरि दुग्धकर्मसु व्यतीतम्। श्रमभ्रममदालक्ष्मीश्वासकासा तृट्क्षुधः। जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशये तदेतन्न च सर्वेष्वेव कासश्वासकृच्छ्रास्रपित्तेषु कार्मुकमिति। तथा ग्रहणीरोगे तद्रूक्षं शस्तम्। अनेन च हेतुना दध्नः प्रकृतिस्थस्य स्निग्धत्वं युक्त्यै क्तम्। यतो ग्रहण्यां रूक्षमुद्धृतसारमुद्दिष्टम्। नि नैव कदाचिदद्यात्। नैवाद्यान्निशि नैवोष्णमित्येवका त्यात्यंतिकनिषेधाद्दिवा भुंजीतेत्यर्थादवगम्यते। नैवो मग्न्यादितापात्तं तथा वसंतग्रीष्मशरत्सु न भोज्य अन्यतमेऽप्यन्यर्तावपि मुद्गसूपादीनामन्यतमेन रहितं भोज्यम्। तत्र घृतसितोपलयोः समासेनैतयो योगेन पथ्यत्वमिच्छंति। मुद्गसूपादीनां तु मिश्रीभा दध्ना जन्यमानस्य दोषस्य प्रतिबंधार्थं कल्प्यते। र पित्तवत्। यथा समीरणोल्बणेऽस्रपित्ते तित्तिर्यादी मौष्ण्यमुदुंबरादिरसेन प्रतिबध्यन्ते। नित्यमिति। यद्यु शेते शरीरस्थं तथाप्युदर्करोगावहत्वान्न शीलनीयम अत एवान्नपानविधावतिदोषशीलत्वादस्य नि करोति। तथा च वक्ष्यति। किलाटदधिकूर्चिं त्यादि। नामंदमिति। दुग्धावस्थां व्यतीत्य दध्यवस्थ मसंप्राप्तमंतरावर्ति मंदकमित्युच्यते। तस्मिन् सत्य स्नेहे परिणतिविशेषेण कालात्मना स्रोतसामत्यंतोपले कृतो दोषत्रयकोपोऽपि भवतीत्यतीव वर्जनीयमेव मंदकनिषेधश्चोपलक्षणार्थः। तेन मद्यादीनप्यप्राप्तरस न्नोपयुंजीतेत्यवगंतव्यम्। अन्यथेत्यादि। प्रशब्द ए द्योतयति। विधिभ्रष्टं दधि निषेव्यमाणं प्रकर्षेण ज्व रासृक्पित्तादीन् प्रददाति। ननु शुक्रकृत्त्वबलवर्धनत्वादी पनत्वमनुपपन्नम्। शुक्रकृद्बलवर्धनानि हि द्रव्यारि प्रायेण गुरूणि भवंति। अतो दध्येवंगुणं सत्कथमग्नि कृत्स्यात्। अत्राचक्ष्महे। अम्लत्वादुष्णवीर्यत्वाच्च युक्त

त । यतो रसविपाकाभ्यामम्लं वीर्येणोष्णं च दध्यतो-
शुक्रत्वमस्मिन्नुपपन्नमिति । ननु शुक्रकरत्वं दध्नो न
कम् । यतोऽम्लपाकरसं दधीत्यधीतमाचार्येणाम्लश्च
कनाशनस्तस्माच्छुक्रकृत्त्वमयुक्तम् । अत्राचक्ष्महे ।
ग्धत्वबृंहणत्ववातघ्नत्वबल्यत्वैः शुक्रकृत्त्वमुपपन्नमेव ।
गा च वक्ष्यति । किंचिद्रसेन कुरुते कर्म पाकेन
परम् । गुणांतरेण वीर्येण प्रभावेणैव किंचनेति ।
तजिदित्यनेन नार्थः । यानि खलु द्रव्याणि बल्य-
ग्धगुरूष्णयुक्तानि तानि वातघ्नान्येव दृष्टानि । तस्मा-
ाजिदिति न वाच्यम् । नैवम् । सक्तुमद्यसूर्यतापमंदका-
् व्यभिचारात् । तथा हि । सक्तवो वातला वृष्या
ता बलकराश्च । मार्द्वीकादिमद्यं हर्षणत्वाद्वृष्यं वातलं
तथा च वक्ष्यति । मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यत
। । मद्यं च मात्रापीतं हर्षणं भवति । तथा
ः । हर्षमूर्जप्रदं पुष्टिमारोग्यं पौरुषं परम् । यु-
ा पीतं करोत्याशु मद्यमिति सूर्यतापश्चोष्णो-
सन्मारुतस्य वृद्धये । तथाच मुनिः । कटुति-
तेरूक्षशीतलघूनीत्यारभ्य यावद्वातातपौ भयं शोको
र्शतार्शसामिति । मंदकं च स्निग्धाम्लगुरुगुण-
मपि त्रिदोषकरम् । तथा च मुनिः । त्रि-
मंदकमिति । त्रिषु च दोषेष्वंतर्भूतः पवन
चैवं व्यभिचारदर्शनाद्वातजिदित्युक्तम् । क्षी-
च दध्यात्मना परिणमतोऽनभिव्यक्ताम्लाभि-
ाम्लात्यम्ललक्षणास्तिस्रोऽवस्थाः संपद्यंते । तत्र
ातमनभिव्यक्ताम्लम् । सम्यग्जातमभिव्यक्ताम्लम् ।
ाजातमत्यम्लम् । तत्र मंदजातं त्रिदोषकृत्त्वाच्चि-
म् । सम्यग्जातस्यैते पूर्वोक्ता गुणाः । किंचि-
ाश्चात्यम्लस्य । तथा सुजातेऽत्यम्ले च दध्नि
ंडौ स्तः । तत्र दध्न उपरिभागः सरः । अधो
। एतद्गुणाश्च लाघविकत्वान्नेहोक्ताः ।
ना च दर्शिताः । त्रिदोषं मंदकं जातं वातघ्न
शुक्रलम् । सरः श्लेष्मानिलघ्नस्तु मंडः
ोविशोधनः । श्लेष्मपित्तरक्तकृत्त्वं चाम्लपाक-
ष्णवीर्यत्वादेवावगम्यते । यत्तु साक्षादेतेषामुपा-
तत्प्रकर्षार्थम् । अन्येभ्योऽम्लद्रव्येभ्यो दध्येता-

न्यतिशयेन करोतीति । नैवाद्यान्निशीत्यादौ ग्रंथे
चैकस्मिन्नकारे कर्तव्ये यदनेकनकारकरणं तच्छास्त्र-
निषिद्धदधिभक्षणादतिप्रत्यवायज्ञापनार्थम् । चरकोक्त-
मंगल्यगुणो नेहोक्तश्चिकित्सायामनुपयोगित्वात् । अत
एव सर्पिरादीनां मंगल्यानामपि चरकेऽपि मंग-
लत्वं नावादीदिति । सुश्रुते तु दध्नो विशेष-
गुणा उक्ताः । यथा । दध्याजं कफपित्तघ्नं लघु
पाके विषापहम् । दुर्नामश्वासकासेषु हितमग्नेश्च
दीपनम् । विपाके मधुरं वृष्यं रक्तपित्तप्रणाशनम् ।
बलासवर्धनं स्निग्धं विशेषाद्दधि माहिषम् । विपाके
कटुकं क्षारमम्लं मेध्यौष्ट्रकं दधि । वातार्शांसि च
कुष्ठानि कृमीन् हंत्युदराणि च । वातघ्नं कफकृत्स्निग्धं
विशेषान्न च पित्तकृत् । कुर्याद्भक्ताभिलाषं च दधि-
मस्तु परिश्रुतम् । शृतक्षीराच्च यज्जातं गुणवद्दधि त-
त्स्मृतम् । वातापित्तहरं रुच्यं धात्वग्निबलवर्धनम् ।
दधि त्वसारं रूक्षं तु ग्राहि विष्टंभि वात-
लम् । दीपनीयं विशेषेण सकषायं रुचि-
प्रदमिति । केवलमपि स्वल्पं कदाचिद्दधि भुंजीते-
त्यर्थादवगम्यते । अन्यथा केवलस्य गुणकथनं निष्फल-
मेव स्यादिति केचिदाहुः ॥ ३१ ॥

प०—इदानीं क्षीराद्दधि परिणमति, तच्चानेकरूपत-
याऽनभिव्यक्ताम्लमभिव्यक्ताम्लमत्यम्लरूपतया चि-
तयाऽनभिव्यक्ताम्लात्यम्लस्वरूपाया मन्दजातसम्य-
ग्जातानि जातानि । मुख्यतया परिणमत्येव
दध्नोऽनेकाभ्योऽवस्थाभ्यो जातावस्थं हृदये कृत्वाऽ-
य ग्रन्थकार आह—अम्लौ पाकरसौ यस्य तदम्लपा-
करसम् । ग्राहि-शकृदादीन् भिन्नान् पिण्डीकरोति ।
गुरुगुणयोगाद्गुरु उष्णमुष्णवीर्यं वातं जयति वात-
जित् । तथा मेदःशुक्रबलादीन् करोति । रोचिष्णु-
रोचनशीलं साधु रोचते । तृप्तस्याप्यन्तेऽभ्यवहरणी-
यत्वादरुचौ शस्तं पथ्यम् अन्यच्चाहारं रोचयति ।
तथा शीतके—शीतपूर्वके विषमज्वरे सततकादौ
शस्तम् । तथा पीनसे प्रतिश्याये शस्तम् । मूत्रकृच्छ्रे
च शस्तम् । रूक्षन्तु ग्रहणीगदे शस्तम् । तच्चोद्धृतसा-
रतया । क्रमेण यथायथमतिजातत्वादतिशयेन ।
रूक्षमुद्धृतसारं वा । तद्दधि निशि रात्रौ नैवा-

द्यात् न भक्षयेत् । एकान्ते न स्मृत्याचारविरोधात्। नैवोष्णमुष्णीकृतमग्न्यादितापात्तप्तम् । तथा शरद्ग्रीष्मवसन्तेषु नचाद्यात् । उष्णशब्देन ग्रीष्मोऽभिधीयते। यदा तु भक्षयेत्तदा नामुद्गसूपं-मुद्गसूपेन विना नाद्यात्, क्षौद्रेण विना नाद्यात्, तथा नाघृतसितोपलं घृतशर्कराभ्यां रहितं न भक्षयेन्नाद्यात् । नचानामलकमामलकैर्विना न भक्षयेत् । नच नित्यं सातत्येनाद्यात् । नो मन्दं नच मन्दजातमद्यात् । यदा मुक्तक्षीरभावं नच जातं तदा मन्दकमिति भण्यते अन्यथा पूर्वोक्तं विधिं त्यक्त्वा यदि कश्चिद्भुङ्क्ते तदा तद्दधि ज्वरादीन् ददाति ॥ ३१ ॥

हे०--दधिगुणानाह ग्राहि--स्तम्भनम् । रोचिष्णु स्वयं रोचते, अरुचौ शस्तम्, अन्यान्यपि रोचयति, शीतके--शीतज्वरे, विषमज्वरे त्वशीतेऽपि रूक्षदधिगुणानाह--रूक्षमिति । रूक्षमुद्धृतस्नेहं ग्रहणीदोषे शस्तम् । दधिभोजनं नियमयति--उष्णमग्न्यादितप्तम् , उष्णो--ग्रीष्मः, सितोपला-शर्करा, नित्यं--प्रत्यहं, मंदमसम्यग्निष्पन्नं, वसंतादिभ्योऽन्यदा दिवा घृताद्यन्यतमोपेतं शीतं सुजातमेकाह्यन्तरं दधि भुञ्जीतेति मथितार्थः । नियमातिक्रमे दोषमाह--अन्यथेति ॥ ३१ ॥

**तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥**
**शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ।**
**प्लीहगुल्मघृतव्यापद्गरपांड्वामयान् जयेत्॥ ३२॥**

स०--तक्रं लघु कषायाम्लं दीपनं कफवातजिच्च भवति । तथा शोफादीनेकादश जयेत् । घृतस्यापि पानाद्व्यापद्रोगो घृतव्यापत् । गरः कृत्रिमो विषविशेषः । सुश्रुते चोक्तम् । नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले । न मूर्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके। शीतकालेऽग्निमांद्ये च कफोत्थेष्वामयेषु च । मार्गे विरोधे दुष्टे च वायौ तक्रं प्रशस्यते । तथोक्तम् । तक्रमामं कफं कोष्ठे हंति कंठे करोति च । पीनसश्वासकासादौ सिद्धमेवोपयोजयेदिति । मंदजातं मस्त्कोपि रूक्षाभिष्यंदि दुर्जरम् । अतिजातं भृशाम्लौष्ण्यतैक्ष्ण्यापित्तकरं परम् । दोषघ्नमुद्धृतस्नेहं सस्नेहमपि शोफजित्। वातेऽम्लं सैंधवोपेतं स्वादु पित्ते सशर्करम्। हि पथ्यं कफे साम्लं व्योषसौवर्चलान्वितम् । तक्राल्लघुत मंडो दुर्जरा तक्रकूर्चिकेति ॥ ३२ ॥

प०--तत्र दण्डाभिमन्थनाद्दध्नो जातं रूक्षमध द्धृतस्नेहमपि त्रिविधं लघु । तच्च रसतः कषायाम्लं दीपनमग्निसंधुक्षकं, कफवातौ जयतीति कफवा जित्। तथा शोफोदरप्रभृतीन् रोगान् जयेत् । मू ग्रहो--मूत्रकृच्छ्रम् । वामपार्श्वाश्रितकोष्ठाङ्गं--प्लीहा घृतस्य पानादयोगपानाच्चोत्पन्नो रोगो घृतव्याप सञ्ज्ञः गरः--कृत्रिमं विषम् । पाण्ड्वामयः--पाण् रोगः । इति तक्रवर्गः ॥ ३२ ॥

हे०--तक्रगुणानाह--मथितं दधितक्रं तद्द्विविधं--सज निर्जलं च । सजलं द्विविधं--सस्नेहमस्नेहं च । तत्र स्नेहस्यैते गुणाः । सस्नेहस्य गौरवात्किंचिदूनाः । नि लस्य ततोऽप्यूनाः । तथाचोक्तं--"मन्थनाद्यत्पृथग्भूतस्ने मर्द्धोदकं च तत् । नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तु रसः॥" इति । तथा--"दण्डाभिमन्थनाद्दध्नो गुरुणश्चा शोफदात् । अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु ।" इति । कफघ्नत्वे विशेष उक्तः, संग्रहे--"तक्रमामं क हन्ति कोष्ठे कण्ठे करोति च ॥" इति । मूत्रग्रहो--मू कृच्छ्रं, घृतस्यातिपानादुत्पन्नो रोगो घृतव्यापत्, ग कृत्रिमं विषम् ॥ ३२ ॥

**तद्वन्मस्तु सरं स्रोतःशोधि विष्टंभजिल्लघु॥ ३३**

स०--मस्तु तद्वत्तक्रवद्गुणैर्वेद्यम् । तथा सरं त स्रोतःशोधि तथा विष्टंभजित् । सुश्रुते चोक्तम् । तृष्ण क्लमहरं मस्तु लघु स्रोतोविशोधनम् । अम्लं कषा नुरसमवृष्यं कफवातजित् । आह्लादनं प्रीणनं च भि न्द्याशु मलं च तत् । बलमावहति क्षिप्रं तथा भक्त रोचनम् ॥ ३३ ॥

प०--तेन तुल्यं तद्वत्तक्रस्य गुणैस्तुल्यं मस्तु वि यम् । सरं--भेदि, स्रोतःशोधि स्रोतांसि शोधय तच्छीलम् । विष्टम्भं जयतीति विष्टम्भजित् विष्ट नाशयतीत्यर्थः । तक्रं--लघु, इदं लघुत विज्ञेयम् ॥ ३३ ॥

हे०--मस्तुगुणानाह--सुजातस्य दध्नो द्रवभागो मस् दोषपूर्णानि स्रोतांसि शोधयतीति स्रोतःशोधि, सरं मल

(१) " त पादजलं प्रोक्तमुदश्वित्त्वर्द्धवारिकम् । छच्छिका सारहीना स्यात्स्वच्छा प्रचुरवारिका ॥ " इति **निघंटौ ।** " मन्थनादिपृथग्भूतस्नेहमर्द्धोदकं तु यत् । नातिसांद्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥ " इति **सुश्रुत संहितायाम् ।**

नुलोमनं, विष्टंभजिद्वातानुलोमनं, भेदिनोऽपि कूष्मांडादे- र्विष्टंभित्वदर्शनाद्ग्राहिणोऽपि नागरस्य विबंधनुत्त्वदर्श- नादुभयोर्ग्रहणं, तद्वदिति लघुत्वे सिद्धे लघ्वित्यति- शयार्थम् ॥ ३३ ॥

**नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ॥**
**संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासजित् ।**
**चक्षुष्यबलवृद्धानां प्रशस्तं सौकुमार्यकृत् ३४**

स०—नवनीतं नवं नवोद्धृतं लघु वृष्यं च तथा शीतं शीतवीर्यं बलवर्णाग्निकरं तथा संग्राहि वातादि- जिच्च । संग्रहे चोक्तम् । शीतं स्वादु कषायाम्लं नव- नीतं नवोद्धृतमित्यादि ॥ ३४ ॥

प०—नवनीतं—नवं सद्य उद्धृतं,वृष्यं, शीतं शीत- वीर्यं बलवर्णाग्नीन् करोतीति बलवर्णाग्निकृत् । संग्रा- हि—द्रवान् शकृदादीन् पिण्डीकरोति । तथा वातपित्तासृगादीन् जयति । वातासृक्—वातशोणि- तम् । पित्तासृक्—रक्तपित्तम् । क्षयो—राजयक्ष्मा । अर्दितं—वायुना वक्रीकृतं मुखस्यार्धम् ॥ ३४ ॥

हे०—नवनीतगुणानाह—नवं—सद्यस्कम्, असृग्रक्तम्, क्षयो—राजयक्ष्मा, अर्दित एकायामः ॥ ३४ ॥

**क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित् ३५**

स०—क्षीरोद्भवं तु क्षीरादेव जातं मथित्वा तन्न- वनीतं संग्राहि रक्तपित्ताक्षिरोगजिच्च भवति ॥ ३५ ॥

हे०—क्षीरनवनीतगुणानाह—क्षीरोद्भवं क्षीरमथनोद्भवं सर्पिरप्येवंविधं ज्ञेयम् ॥३५॥

**शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ।**
**बालवृद्धप्रजाकांतिसौकुमार्यस्वरार्थिनाम् ॥**
**क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ।**
**वातपित्तविषोन्मादशोषाऽलक्ष्मीज्वरापहम् ॥**
**स्नेहानामुत्तमं शीतं वयसः स्थापनं परम् ।**
**सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥ ३६ ॥**

स०—घृतं धीप्रभृतीनामग्निग्लपितात्मांतानां श- स्तम् । धीर्वस्तुग्रहणशक्तिः । स्मृतिरतीतविचारशक्तिः । प्रजार्थिनां शस्तम् । प्रजाऽपत्यं तदर्थिनाम् । शुक्रस्य सफलताकरमित्यर्थः । तथा वातादिघ्नम् । तथा स्नेहा- नां तैलादीनामुत्तमं श्रेष्ठम् । तथा शीतम् । वयसः स्था- पनं जरया विना वयसःस्थापनमित्यर्थः।सहस्रवीर्यमिति । सहस्रशब्दोऽनेकार्थः । अनेकशक्तीत्यर्थः । कथं विधि- भिर्योगसंस्कारादिभिर्घृतमनेकशक्ति संपद्यते । येन द्रव्येण प्रयुज्यते संस्क्रियते वा तच्छक्तिमेवाऽनुरुध्यते । अथवा तत्संयोगाच्छक्त्यंतरमन्यदारोहति । अत एव हेतोः सहस्रशब्दोऽनेकार्थः । अन्यथा द्रव्याणामानंत्यात्कथं दशशतवाची सहस्रशब्द उपपद्यते । अन्ये त्वेवं व्याच- क्षते । सहस्रशब्दो दशशतसंख्यावाच्येव । सहस्रपाक्यं हि सर्पिरुक्तं न सहस्रपाक्यात्परेण । तत्र चेदं सहस्रपा- क्यत्वे प्रयोजनम् । पाकसहस्रं यावदस्य संस्कारोऽनुव- र्तते नातःपरम् । अन्यथा सहस्रपाकात्परेण किमिति पाको नोक्तः । तस्मादासहस्रं पाकानां शक्त्यंतराण्या- रोहंति पाका न ततः परेणेति । तथा कर्मसहस्रकृद- नेककार्यकृत् ॥ ३६ ॥

धीप्रभृतीनां घृतं शस्तं हितम् । धीः—बुद्धिः वस्तुग्रहणशक्तिः । स्मृतिरतीतस्य वस्तुनः स्मरण- शक्तिः । मेधा—भावानां विवेकजनकप्रज्ञाधारिका । अग्निर्जाठरः, बलं—शक्तिरित्यनर्थान्तरम् । आयु- र्जीवितं प्राणैः संयोगः । चक्षुर्लोचनमेतेषां शस्तं— हितम् । बाल आषोडशवर्षात् षष्टेरूर्ध्वं वृद्धः । प्रजा—अपत्यानि । कान्तिः—शरीरस्था शोभा । सौकुमार्यमकठिनशरीरता । तथा स्वरान् षट् । अर्थयन्त्यभिलषन्ति तेषां हितम् । क्षतादिभिर्ग्ल- पितः—क्लान्तः खेदित आत्मा येषां ते क्षतादिभिर्ग्ल- पितात्मानस्तेषां शस्तम् । क्षतमुरःक्षतक्षीणो—धा- तुक्षययुक्तः । तथा परितः सर्पो परीसर्पः । तथा वातादीनपहरति यत् । तथा स्नेहानां तैलवसा- मज्जादीनां मध्ये उत्तमं प्रधानम् । शीतं—शीतवी- र्यम् । वयसः स्थापनं जरामपहरति तारुण्यं बहु- कालं स्थापयतीत्यर्थः । परमातिशयेन सहस्रवीर्यं सहस्रशब्दोऽनेकार्थोऽनेकशक्तीत्यर्थः । विधिभिर्वि- धानैर्नानाविधैः पानतस्याभ्यञ्जनमनादिभिर्योज- नाभिः कर्म सहस्रकृदनेककार्यकृत् । बहुक्रियाका- रित्वात् ॥ ३६ ॥

१ अत्र "विधिवत्" इति पाठान्तरम् ।

हे०—घृतगुणानाह—उपदिष्टग्रहणे शक्तिर्धीः, गृहीतस्य विच्छेदेन धारयितुं शक्तिः स्मृतिः, अविच्छेदेन मेधा, प्रज्ञादिभिरर्थशब्दः संबध्यते। प्रजा—अपत्यं, क्षतक्षीणः—क्षतकाद्यार्पीडितः, परीसर्पो—विसर्पः, शस्त्रं—शस्त्रघातः, अग्निरग्निदाहः, तैस्त्रिभिर्ग्लपितः—पीडितः, आत्मा शरीरं येषां ते। तथा—शोषो—राजयक्ष्मा, ज्वरो—जीर्णज्वरः, नवस्य स्नेहानर्हत्वात्। स्नेहानां तैलादीनां वरं योजनया कर्म सहस्रकृद्बहुतरकार्यकृत्, यतः सहस्रवीर्यं बहुतरशक्तियुक्तं कैर्विधिभिर्योगसंस्कारपानाभ्यञ्जनानुवासनादिभिः ॥ ३६ ॥

**मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान्।**
**पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥ ३७ ॥**

स०—पुराणमिति च बहुकालं पंचदशादिवर्षस्थितं घृतं मदादीन् व्याधीन् जयति। व्रणानां शैथिल्यादीन् शोधयति। तथा व्रणान् रोपयति। संग्रहे चैवमभ्यधायि। व्रणशोधनरोपणम्। पूर्वोक्तांश्चाधिकान्कुर्याद्गुणांस्तदमृतोपमम्। तद्वच्च घृतमंडोऽपि रूक्षतीक्ष्णस्तनुस्तु स इति ॥ ३७ ॥

प०—घृतं पुराणमनवं बहुकालजातं मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान् व्याधीन् जयति। मदमूर्च्छायौ वक्ष्यमाणौ मदात्ययनिदाने। स्मृत्यपायोऽपस्मारः स चापि वक्ष्यमाण एव। व्रणान् शोधयतीति व्रणशोधनम्। व्रणानां पिच्छल्यादिकमपहरति। व्रणान् शुद्धान् करोति। व्रणांश्च रोपयतीति व्रणरोपणम्। त्वक्सावर्ण्यं,व्रणस्य शोधनं,रोपणं त्वक्प्रसादस्य निरासः ॥ ३७ ॥

हे०—पुराणघृतगुणानाह—मूर्छायो—मूर्छा, शोधनं—दुष्टव्रणानां, रोपणं—शुद्धानाम्, उक्तं च—"उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्। लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥" इति ॥ ३७ ॥

**बल्याः किलाटपीयूषकूर्चिकामोरणादयः।**
**शुक्रनिद्राकफकरा विष्टंभिगुरुदोषलाः ॥ ३८ ॥**

स०—किलाटादयो बल्यास्तथा शुक्रादिकरास्तथा विष्टंभिनो गुरवो दोषलाश्च स्युः। आदिग्रहणात्तक्रपिंडकक्षीरशाकयोर्ग्रहणम्। वह्निनाशकत्वं चैषां बल्यत्वेन शुक्रकृत्त्वेन विष्टंभिदोषलत्वेनाऽवगतमेवेति वह्निनाशना इति ग्रंथकृता नेह कृतम्। संग्रहे तु स्प कृतमेव। तत्र किलाटोऽल्पक्षीरो बहुना त कृतः। पीयूषः सद्यःप्रसूतायाः क्षीरकृतः। कूर्चि दधितक्रकृता किलाटिका। मोरणः क्षीरस किलाटिकापीडन उत्तरापथे प्रसिद्धः ॥ ३८ ॥

प०—किलाटाः क्षीरतक्रादिकिलाटिका अ
ख्येति प्रसिद्धा। एते क्षीरविकारा बल्या बलकर तथा शुक्रं निद्रां कफं च कुर्वन्तीति शुक्रनि कफकराः। तथा विष्टम्भिनो गुरवो दोषलाश्च। ः त्यत्वेन विकारकारिणः। आदिग्रहणाद्यथासम्भ मन्ये क्षीरविकारा गृह्यन्ते ॥ ३८ ॥

हे०—किलाटादीनां गुणमाह—दध्ना तक्रेण वा पाकात्पृथग्भूतं घनद्रवभागं क्षीरं कूर्चिका, सैव पाका क्षीरशाकः, तयोर्घनभागः पृथगुद्धृतः किलाटः, द्रवः मोरणं, प्रसूतिदिनमारभ्य यावन्मलिनघनं क्षीरं ताव यूषः, आदिशब्दात्क्षीरशाकतक्रपिण्डकौ। उक्तं हि संग्र "बल्याः किलाटकूर्चिकातक्रपिण्डकमोरणाः। सः शाकपीयूषा रोचना वह्निसादनाः ॥" इति। घन बद्धं स्वयं स्रुतद्रवभागं तक्रं तक्रपिण्डकः। विष्टम्भि अधोवातावरोधिनः, दोषला—आमसंचयकारिणः, शब्देनात्र आमो ग्राह्यः। सदोषशब्दं च शकृत् द्रवं स वेगवत् इत्यादिवत्तु वातादयः, कफस्य पृथग्ग्रहणात्त न्तरे वातघ्नत्वाच्च। यदाह सुश्रुतः—"बल्यः किला निलहृत्पुंस्त्वनिद्राप्रदः स्मृतः। मधुरौ बृंहणौ तद्वत्पीयूषमोरणौ ॥" इति। कूर्चिकामोरणावत्र ः भवौ ग्राह्यौ। तक्रकूर्चिकायास्तन्त्रान्तरे वातलत्वान णस्य च लघुत्वात्। यदाह सुश्रुतः—" ग्रा वातला रूक्षा दुर्जरा तक्रकूर्चिका। तक्राल्लघु मण्डो दधिकूर्चिकतक्रजे ॥" इति। कूर्चाकृतं तक्रं कूर्चिका ॥ ३८ ॥

**गव्ये क्षीरघृते श्रेष्ठे निंदिते चाविसंभवे ॥ ३**

स०—गोसंभवे क्षीरघृते श्रेष्ठे। आविके च निं गर्हिते। घृतस्य च क्षीरविकारोपलक्षणार्थत्वाद्दधितः स्त्वादीनामपि गव्यानां श्रेष्ठत्वमेव वेद्यम्। अत एवावि भवानां दधितक्रादीनामधमत्वमेव वेद्यं न क्षीरघृतयो अत एव संग्रहे सुस्पष्टं कृत्वोक्तम्। विद्याद्दधि दीनां गुणदोषान्यथा पयः। अस्य ह्ययमर्थः। घृताद

पयोगुणान्विद्यात् । यथाशब्दस्य पदार्थानतिवृत्त्यर्थेऽस्याव्ययीभावः । तेनैतदुक्तं भवति । यथा स्वादुपाकरसमित्यादिना सामान्येन क्षीरगुणा उक्तास्तद्दध्यादीनामपि सामान्येनैव गुणा उक्ताः । विशेषाभिलाषे तु दध्यादीनां सत्स्वपि सामान्यगुणेषु प्रकृतिभूतं यत्क्षीरं तद्गुणोच्चयोऽपि ग्राह्य इति । खरनादे तूक्तम् । दध्यादीनां तु तज्जानां सामान्ये गुणकर्मणी । तथा स्वात्स्वापि क्षीराद्दध्यादीनां विशेषणम् । गव्यमिति गोपयसोऽदिति यत् । बाहुल्येन क्षीरनिर्देशात्क्षीरवर्गोऽयम् । दधिनवनीतादीनां तु तद्विकारभूतत्वादिति क्षीरवर्गः ॥ ३९ ॥

प०—गोरिदं गव्यं गोसम्भवम् । क्षीरं च घृतं च क्षीरघृते, ते च गव्ये श्रेष्ठे प्रधाने भवत इत्यध्याहार्यम् । आविके क्षीरघृते निन्दिते अवरे गर्हिते भवतः । इति क्षीरवर्गः ॥ ३९ ॥

हे०-क्षीराणां घृतानां च तारतम्यमाह—गव्याविकयोरुत्तमाधमत्वादितरेषां मध्यमत्वं ज्ञेयम् । संग्रहे तु—"विद्याद्दधितादीनां गुणदोषोऽन्यथा पयः ॥" इति । इति क्षीरवर्गः ॥ ३९ ॥

क्षीरवर्गादनंतरमिक्षुवर्ग आरभ्यते । गुणक्रियातुल्यत्वात् । तथाहीक्षुरपि क्षीरवत्सरगुरुस्निग्धबृंहणादिगुणकर्मा—

**इक्षो रसो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ।**
**वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसः सरः ४०**

स०—इक्षो रसः सरत्वादिगुणयुक्तः । तथा कफमूत्रकृत् । सरः शकृद्भेदी कथ्यते । तथा गुर्वी सरा च पालंक्येत्युक्त्वानंतरमुक्तवान् । पालंक्यावत्स्मृतश्चंचुः स संग्रहणात्मक इति चंचुशाकस्य संग्रहणेन गुणेन सरत्वं बाधितमिति । अत्र स्निग्धबृंहणवृष्यमधुरादिगुणेन युक्तं च द्रव्यं प्रायः पवनहंतृ दृष्टम् । अतोऽस्येक्षुरसस्य मारुतजित्त्वं वेद्यम् । ग्रंथकृता तु स्पष्टं कृत्वोक्तम् । भुक्तं हि समीरणकृत्त्वमस्य दृष्टम् । तथा संग्रहे वृष्यः शीतः पवनजिद्भुक्तं वातप्रकोपन इति । खरनादेऽप्युक्तम् । मारुताऽऽध्मानजननश्चक्षुष्यो बृंहणो रस इति ॥ ४० ॥

प०—क्षीरवर्गादनन्तरमिक्षुवर्ग आरभ्यते गुणक्रियातुल्यत्वात् । क्षीरं—स्वादुपाकरसं तथैव यत् इक्षुरसोऽपि स्वादुपाकरस एव । इक्षोः सम्बन्धी रसः—सरः, शकृदादीन् भिनत्ति गुरुश्च । बृंहणो—बृंहत्वकृत्, शरीरं बृंहयति । कफमूत्रे करोतीति । वृष्यः—शुक्रकारी । शीतो वीर्येण तथास्रपित्तघ्नो रक्तपित्तं हन्ति । स्वादू मधुरौ पाकरसौ यस्य स स्वादुपाकरसः ॥ ४० ॥

हे०-अथेक्षुवर्गः । इक्षुरसगुणानाह—इक्षोरिति । गुर्वादिगुणत्वाद्वातघ्नत्वमर्थासिद्धम् । उक्तं च संग्रहे—"वृष्यः शीतः पवनजिद्भुक्ते वातप्रकोपने ॥" इति । "मारुताध्मानजननश्चेक्षूणां भक्षितो रसः ॥" इति । खरणादुक्तं वातलत्वं भुक्तमात्रपीतेक्षुरसविषयम् ॥ ४० ॥

**सोऽग्रे सलवणो दंतपीडितः शर्करासमः ॥ ४१ ॥**

स०—स च रसोऽग्र इक्षुप्रान्ते जातः सलवणः । सुश्रुते चोक्तम्—अतीव मधुरो मूले मध्ये मधुर एव च । अग्रे त्वक्षिषु विज्ञेय इक्षूणां लवणो रस इति । पाषाणादिसंक्षुण्णस्येक्षोः सद्य एव यो रस उत्पद्यते । तस्यैते यथोक्ता गुणा वेद्या नान्यथा पीडितस्येक्षुरसस्य । यंत्रदंतादिपीडितस्याऽन्यथा शास्त्रकृता गुणो निर्दिश्यते । दंतपीडितः शर्करासम इति ॥ ४१ ॥

प०—स चेक्षुरग्रे प्रान्ते सलवणः—ईषल्लवणः । दन्तैः पीडितो दन्तपीडितः स च शर्करासमोऽलुपहतत्वात् ॥ ४१ ॥

हे०—इक्ष्वग्रभागगुणमाह—सोग्र इति । सलवण—ईषल्लवणः, अग्रशब्देनेक्षोस्तत्पर्वणां चाग्रन्तौ भागौ, उक्तं हि खरणादिना—"मध्यकाण्डे सुमाधुर्यमिक्षोर्मूलाग्रपर्वसु । माधुर्यं साम्ललवणं विदाही तेन यान्त्रिकः ॥" इति । यथोक्तं सुश्रुतेन—"अतीव मधुरो मूले मध्ये मधुर एव च । अग्रेऽक्षिषु च विज्ञेय इक्षूणां लवणो रसः ॥" इति । तत्र मूलशब्देन मध्यमकाण्डानां प्रथमकाण्डानां प्रथमः काण्डम् । अक्षिषु सन्धिषु । दन्तपीडितेक्षुगुणानाह-दन्तपीडित इति । शर्करासमो दाहघ्नत्वादिभिर्गुणैः ॥ ४१ ॥

यांत्रिकस्त्वन्यगुण एवेत्याह—

**मूलाग्रजंतुजग्धादिपीडनान्मलसंकरात् ।**

किंचित्कालं विधृत्या च विकृतिं याति यांत्रिकः।
विदाही गुरुविष्टंभी तेनासौ ॥ ४२ ॥

स०–मूलं चाग्रं च जंतुजग्धादयश्च मूलाग्रजंतुजग्धादयस्तेषां तथाविधानामिक्षूणां पीडनं तस्मान्मूलाग्रजंतुजग्धादिपीडनात्तथा मलसंकरान्मलमिश्रणात्तथा किंचित्कालं विधृत्या च यांत्रिके रसे स्वल्पकालं विधृतिर्विलंबश्च दृष्टः। तदेतैः कारणैर्यांत्रिको रसो विकृतिं याति स्वभावान्यथात्वं प्राप्नोति। तथा गुरुरधिकं गुरुः संपद्यते। अविदाही विदाही। अविष्टंभी विष्टंभीत्येवंविधाऽस्य विकृतिः। यांत्रिकस्य च रसस्य बाहुल्येन लोके मूलादिसहितस्य पीडनात्कालविलंबोपलब्धेश्च ग्रंथकृदेवं समवोचत्। अत एव हेतुनिर्देशोऽत्र कृतो हेत्वभावात्कार्याभावप्रतिपत्तिज्ञापनार्थमिति। तेन यदि निपुणधीभिर्मूलादिरहितः पीड्यते तदा विकृतिं न यात्येवेत्यर्थः। विदाहीत्यादि। यतो विकृतिं याति तेन हेतुनाऽसौ यांत्रिको विदाह्यादिगुणः संपद्यते। विदाही जठराग्निसंयोगाद्यः पाकं गच्छन्मध्यमायामेवावस्थायां विदह्यमानः पित्तं कुर्वंश्चिरकालमवतिष्ठते न द्रागेव जरां याति गुरुत्वादथवा वस्तुस्वभावात्स विदाहगुणयुक्तोक्त्या वितन्यते। तस्माद्गुरुस्वाभाव्याद्विदाही कथितः। तथा चोक्तं धान्वंतरे। शालिपिष्टमयं सर्वं गुरुभावाद्विदह्यत इति ॥ ४२ ॥

प०–मूलं चाग्रं च जन्तुजग्धादीनि च मूलाग्रजन्तुजग्धादीनि तेषां पीडनं मूलाग्रजन्तुजग्धादिपीडनं तस्मान्मूलाग्रजन्तुजग्धादिपीडनात् तथा मलसंकरात्–मलमिश्रणात्, तथा किञ्चित्कालं विधृत्या कालविधारणेन यान्त्रिको–यन्त्रपीडित इक्षुरसो विकृतिं याति विकारमापद्यते। विकृतिः–स्वभावान्यथात्वम्। गुरुरधिकगुरुः संपद्यते। अविदाही विदाही अविष्टम्भी विष्टम्भीत्येषा सा विकृतिः। जन्तुजग्धः–कृमिभक्षितः। विदाहोऽस्यास्तीति विदाही। जठराग्निसंयोगाद्यः पाकं गच्छन् मध्यमायामेव पाकावस्थायां विदह्यमानः पित्तं कुर्वन् चिरकालमवतिष्ठते न शीघ्रं जरां याति। गुरुत्वाद्गुतवस्तुस्वभावात् स विदाहयुक्तो भावो भण्यत इत्यागामिकाः ॥ ४२ ॥

हे०–यन्त्रपीडितगुणानाह–जन्तुजग्धः कृमिभि[र्भ]क्षयवः आदिशब्दात्त्वगादयः। मलो–यन्त्रादिलग्नः;कि[ञ्चि]त्कालं विधृत्या–पीडनग्रहणादिकालविलंबेन, वि[कृतिं]... माधुर्यादिन्यूनत्वं, यद्यपि सर्वमत्र पानं विदाहि वि[द]ग्धावस्थाया अवश्यंभावात्, तथापि यच्चिरकालं विदग्धाव[स्थाम]नुभवति तद्विदाहीत्युच्यते। तेन विकृतिं गमने यान्त्रिकः। हेतूपन्यासाद्धेतुबलत्वेन दोषाल्पत्वम् ॥४[२॥]

तत्र पौंड्रकः
शैत्यप्रसादमाधुर्यैर्वरस्तमनुवांशिकः ॥ ४३ ॥

स०–तत्र तेषु रसेषु मध्ये पौंड्रको रसो सर्वेक्षुरसेभ्यः श्रेष्ठः। कथं शैत्यादिभिर्हेतुभूतैः शीतस्य भावः शैत्यम्। गुणवचनादिना ष्यञ्। प्रसादः प्रसन्नत्वम्। माधुर्यं स्वादु[त्वम्।] तमनुवांशिकः। हीनार्थेऽनुशब्दस्य कर्मप्रवचनी[यत्वात्] इति द्वितीया। शैत्यादिभिः पौंड्रकाद्धीनो वां[शिक] इत्यर्थः ॥ ४३ ॥

प०–तत्र तेष्वेषु मध्ये पौण्ड्रक इक्षुः शै[त्यात्] प्रसन्नत्वात् माधुर्याच्च वरः श्रेष्ठः। एतान्यस्य [श्रे]ष्ठानि सम्भवन्ति तमनुवांशिकः हीनः स्वल्पः शै[त्या]दिभिर्गुणैर्युक्त इत्यर्थः ॥ ४३ ॥

हे०–अथेक्षुविशेषगुणाः। तत्र पौण्ड्रकगुणानाह–पौं[ड्रः] श्वेतेक्षुः, प्रसादो नैर्मल्यम्। वांशिकगुणानाह–तमनु र[सं] त्पौंडरीकाद्धीनः हीनार्थस्यानोः कर्मप्रवचनीयत्वात् द्वि[तीया।] वांशिको नीलेक्षुः ॥ ४३ ॥

शातपर्वककांतारनैपालाद्यास्ततः क्रमात्।
सक्षाराः सकषायाश्च सोष्णाः किंचिद्विदाहि[नः ॥ ४४ ॥]

स०–शातपर्वकादयस्ततो वांशिकात्क्रमादु[त्त]रोत्तरं शैत्यादिभिर्हीनाः। ते च शातपर्वकादय ईष[त्क्षा]रत्वेन युक्ता ईषत्कषायरसा ईषदुष्णाः, किंचिद्वि[दाहि]नश्च ॥ ४४ ॥

प०–शातपर्वकादयः इक्षवः क्रमादुत्तरोत्तरं शै[त्या]दिभिर्हीनाः ततस्तस्माद्वांशिकादिक्षोः। तेन वांशि[को] द्गुणैः शातपर्वको हीनः। ततोऽपि कान्तारस्ततो नैपाल इत्यन्येष्वपि योज्यम्। ते सक्षाराः–ईष[त्क्षा]राः सकषाया ईषत्कषायाः सोष्णाः ईषदुष्णा[स्]तथा किञ्चिद्विदाहिनो विदहनशीलाः ॥ ४४ ॥

हे०—शातपर्वादिगुणानाह—शातपर्वकः—ह्रस्वबहुपर्वा, कान्तारनैपाली स्वनामप्रसिद्धौ, आद्यशब्दाद्दीर्घपत्रादयः। ततो वांशिकादुत्तरोत्तरं हीनाः । सक्षाराः—ईषल्लवणाः। अथेक्षुरसविकाराः। ते च पञ्च इक्षो रसस्य समलत्वेनाढ्याँ त्रिमलाः मलाः विकाराः—फाणितगुडमत्स्यण्डीखण्डशर्करा इति ॥ ४४ ॥

**फाणितं गुर्वभिष्यंदि चयकृन्मूत्रशोधनम् ४५॥**

स०-फाणितं क्षुद्रगुडीभूत इक्षुरसो गुरुः।अतिशयेनेत्यर्थाद्विद्यम्। गुरुत्वमात्रस्येक्षुरसेऽप्युक्तत्वात्। अभिष्यंदि तथा चयकृत् त्रिदोषकरं मूत्रशोधनं मूत्रमतिवाहयति। तंत्रान्तरे चोक्तम्। रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत्। कफघ्नं मधुरं पाके कषायं बस्तिदूषणम् ॥ ४५ ॥

प०—फाणितं—क्षुद्रगुडापरपर्यायं,तद्गुरु, तथाभिष्यन्दि, श्लेष्मप्रकोपकारि च यकृत्रीन् दोषानाचिनोति त्रिदोषसंचयकृदित्यर्थः। तथा मूत्रशोधनं मूत्रं शोधयति निर्मलीकरोति अथवाऽतिवाहयति ॥४५॥

हे०—तत्र फाणितगुणानाह—चयकृद्विशेषाग्रहणान्त्रयाणां दोषाणाम्। गुडश्चतुर्धा—धौताधौतपुराणनवभेदेन ॥४५॥

**नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ॥**
**प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ॥४६॥**

स०—गुडो धौतः संस्कारवशान्निर्मलो नातिश्लेष्मकरः। किंचित्कफकर इत्यर्थः। मूत्रं च शकृच्च मूत्रशकृत्। सृष्टं बहिः क्षिप्तं मूत्रशकृद्येन स एव गुडः। अपर इति धौताद्विशुद्धादन्यः। समल इति यावत्। प्रभूताः कृमिमज्जासृङ्मेदोमांसकफा यस्य स एवम्। कारणे कार्योपचाराद्गुडोऽप्येवमुक्तः। यथाऽनूपोदकं पादरोग इति। प्रभूतकृम्यादीन्करोतीत्यर्थः ॥ ४६ ॥

प०—धौतगुडो—निर्मलः पच्यमानोऽपनीतमलः, नातिश्लेष्मकरः, किञ्चिच्छ्लेष्मकर इत्यर्थः। तथा सृष्टमूत्रशकृत्—सृजति—बहिः क्षिपति मूत्रं शकृच्च। अपरोऽधौतो—मलिनो गुडो भेदोपचारात्।प्रभूतकृमिमज्जासृक्मेदोमांसकफप्रभूतान् कृम्यादीन् करोतीत्युपचारात्स एवोक्तः ॥ ४६ ॥

हे०-तत्र धौतगुडगुणानाह—सृष्टमूत्रशकृन्मलानुलोमनः। अधौतगुडगुणानाह—प्रभूतेति ॥ ४६ ॥

**हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ४**

स०—गुड इत्यनुवर्तते। पुराणो गुडो हृद्या हितः। तथा पथ्यः। अंतर्मध्यबहिर्मार्गाय हितः नवो गुडः श्लेष्माणमग्निसादं करोति ॥ ४७ ॥

प०—पुराणो—बहुवर्षोषितो गुडो हरिप्रियः सा धुर्वा। तथा पथ्यो हितो दोषाणां धातूनां च नवो गुडः श्लेष्माणमग्निसादं च करोति ॥ ४७ ॥

हे०—पुराणगुडगुणमाह— हृद्य इति। पथ्यः—स्वस्थ हितः। नवगुडगुणानाह—नव इति अग्निसादोऽग्निमान्द्यम् ॥ ४७ ॥

**वृष्याः क्षतक्षीणहिता रक्तपित्तानिलापहाः।**
**मत्स्यंडिकाखंडसिताः क्रमेण गुणवत्तमाः ४८**

स०—मत्स्यंडिकादयस्त्रयो वृष्यास्तथा क्षीणक्षतहित रक्तपित्तानिलापहाश्च तथा क्रमेण गुणवत्तमाः। धौतगु डादपि मत्स्यंडिका गुणकारी निर्मलतरत्वात्। तत ऽपि खंडो गुणवत्तरः। खंडादपि शर्करा गुण वत्तमा निर्मलतमत्वात्। गुणवत्तमेति गुणवतीः ब्दस्य तमप्प्रत्यये पुंवद्भावोऽत्र पक्षे च वक्तव्य इ पुंवद्भावः ॥ ४८ ॥

प०—मत्स्यण्डिका—गुडान्निर्मला, शर्करा—पि संज्ञया प्रसिद्धा, खण्डस्ततोऽपि निर्मलः, सितशर्करा तस्मादपि निर्मला, मत्स्यण्डिका च खण्डश्च सित केरा च ता वृष्याः शुक्रकारिण्यः। क्षीणेभ्यः क्षते हिताः। तथा रक्तपित्तानिलापहाः—रक्तपित्तापहाः निलापहाश्च ताश्च क्रमेणोत्तरोत्तरं गुणवत्तमा मत्स्यण्डिका—गुणवती,खण्डो-गुणवत्तरः, सितशर्करा गुणवत्तमा ॥ ४८ ॥

हे०—मत्स्यण्ड्यादीनां गुणमाह—क्षतक्षीणयोर्हिताः मेणेति। मत्स्यण्डिकायाः खण्डो गुणवान्, खण्डात्सि उक्तं च सुश्रुतेन—"यथा यथैषां वैमल्यं मधुरत्वं त तथा। स्नेहगौरवशैत्यानि सरत्वं च तथा तथा ॥" इति ॥ ४८ ॥

**तद्गुणा तिक्तमधुरा कषाया यासशर्करा ॥४९**

स०—तद्गुणेति। शर्करासमा यासशर्करा यवास केरेति या लोके प्रसिद्धा तिक्तमधुरकषायरसा केचित्त्वाचक्षते। दुरालभारसेन या क्रियते॥ ४९

प०–यासशर्करा लोके यवशर्करेति प्रसिद्धा। केचिद्ब्रुवन्ति। दुरालभा रसेन सा क्रियत इति। सा च तद्गुणाऽनन्तरोक्तमत्स्यण्डिकादिगुणा, तिक्ता, मधुरा, कषाया च रसतः ॥ ४९ ॥

हे०–यासशर्करागुणमाह—तद्गुणा—मत्स्यण्डिकादि-सामान्यसदृशगुणा यासशर्करा दुरालभा रसेनेक्षुरसव त्क्रियते ॥ ४९ ॥

**दाहतृट्छर्दिमूर्छासृक्पित्तघ्न्यः सर्वशर्कराः॥५०॥**

स०–इत्येताश्चान्याश्च दाहादिनाशनाः। ग्रंथांतरे चोक्तम्। यथा यथाऽऽसां वैमल्यं मधुरत्वं यथा यथा। स्नेहलाघवशैत्यादिसरत्वं च तथा तथेति ॥ ५० ॥

प०–एता अन्याश्च काश्चन शर्कराः सर्वा दाहादीन् निघ्नन्ति ॥ ५० ॥

हे०–सामान्यशर्करागुणमाह–सर्वा उक्ता मत्स्यण्डिकादयः, अनुक्ताश्च मधुशर्करादयः, मत्स्याण्डिकादौ रक्तपित्तग्रहणमतिशयार्थम् ॥ ५० ॥

अधुना वरावरत्वं निर्धारयति–

**शर्करेक्षुविकाराणां फाणितं च वरावरे ॥ ५१॥**

स०–इक्षुविकाराणां मध्ये शर्करा फाणितं च क्रमेण वरावरे भवतः। शर्करा श्रेष्ठा फाणितमवरम् ॥ ५१ ॥

प०–वरं चावरं च वरावरे श्रेष्ठाश्रेष्ठे। इक्षुविकाराणां मध्ये शर्करा वरा श्रेष्ठा, फाणितमवरं श्रेष्ठम् ॥ ५१ ॥

हे०–इक्षुविकाराणां तारतम्यमाह—इक्षुविकाराणां मध्ये शर्करा सिताख्या वरा। फाणितमवरम्। इतरे मध्यमाः ॥ ५१ ॥

शर्करायोनिप्रसंगेन मधुनोऽपि गुणानाह–

**चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत्।**
**मेहकुष्ठक्रिमिच्छर्दिश्वासकासातिसारनुत् ॥**
**व्रणशोधनसंधानरोपणं वातलं मधु।**
**रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ॥ ५२ ॥**

स०–मधु चक्षुषे हितम्। तथा छेदि। उभयथाऽऽश्चोतनव्रणलेपादावुपयुक्तम्। तथाऽभ्यवहारविषयेऽपि। तैक्ष्ण्याद्यो देहे पिंडितान् भावान् छिनत्ति विभजति स छेदीति कथ्यते। तथा तृडादिनुत् मेहादिजिदिति च। प्रायेणाऽभ्यवहारविषय एव। व्रणानां शोधनं संधानं रोपणं च। शोधनं यत्पूयपैच्छिल्यादि प्रेरकम्। संधानं यद् द्वौ व्रणौ चैकीकरोति। रोपणं सुप्रसिद्धम्। एतच्च कार्यं बाह्यविषयमेवाऽस्य वेद्यम्। तथा वातलमेतच्चास्य बाह्योपयोगेनाभ्यंतरोपयोगे च। अन्ते व्यस्तश्रुतत्वात्। चक्षुष्यं छेदीत्यादिना स्य मधुनः कर्मनिर्देशः। रूक्षं कषायमधुरमित्यनेनास्य स्वरूपनिर्देशः। लाघवाचात्र ग्रंथकारेणैतद्भेदादि नोक्तम्। तथा ह्ययमेव तंत्रकारः संग्रहे मधुनो भेदानाख्यत्। तथा। भ्रामरं पैत्तिकं क्षौद्रं माक्षिकं तद्यथोत्तरम्। तत्र स्याद्भ्रामरं शुक्लं घृतवर्णं तु पैत्तिकम्। क्षौद्रं तु कपिलं विद्यात्तैलाभं माक्षिकं मतम्। भ्रामरं तर्पणं स्वादु त्रिदोषं पैत्तिकं विदुः। वरं च गुर्वभिष्यंदि क्षौद्रं रूक्षं मनाग्गुरु। माक्षिकं लघ्वपवमधुरं शस्यते व्रणे। गरीयः स्वाद्वभिष्यंदि नवं जीर्णमतोऽन्यथा। मंडः पुराणान्मधुनस्तीक्ष्णो रूक्षो लघुस्तनुरिति। तथा संग्रहे कटुपाकित्वगुरुत्वशैत्यविप्रत्यनीकत्वविरुद्धोपक्रमत्वयोगवाहित्वादीन् गुणानवोचत्। योगवाहित्वं च विवदन्ते बहुविदः। तत्र केचिदेवं समगिरंत। यद्द्रव्यं द्रव्यांतरेण संयुज्यात्मीयं स्वभावं हित्वा संयुक्तद्रव्यस्वभावमेवानुवर्तते तद्योगवाहीति। नचैतद्युक्तम्। यतो यद्येवं योगवाहिता निश्चीयते तदानीं योगवाहिद्रव्योपयोगो निरर्थकः स्यात्। तथाहि। योगवाहिद्रव्यमंतरेणापि यत्स्वभावं द्रव्यं प्रागसीत् तत्स्वभावमेव योगवाहिद्रव्ये युक्तमपि। तस्मादसदेतद्योगवाहिलक्षणमिति। केचित्त्वेवं प्रतिजानीते। यद्द्रव्यं द्रव्यांतरेण युक्तमन्यस्य द्रव्यस्य शक्त्युत्कर्षमुत्पादयति तद्योगवाहीति। तदप्यसम्यक्। यस्मादेवमभ्युपगम्यमाने बहूनि द्रव्याणि योगवाहीनि स्युः तथा च मध्वादेरपि द्रव्यस्य किंचिद्द्रव्यं समानगुणस्य शक्त्युत्कर्षं कुर्वदेव दृष्टम्। तत्कथं मध्वादेरेव योगवाहित्वमुच्यते नापरस्येति। तदेतदपि लक्षणमसच्छ्रुतत्वादलक्षणम्। अपरे त्वेव

माहुः । यद्द्रव्यं द्रव्यांतरेण तुल्यगुणेनापि युक्तं सत्तद्गुणाननुवर्तते स्वं च कार्यं तदविरुद्धं किंचित्करोति तद्योगवाहि । द्रव्यम् । भृत्यवत् । यथा भृत्यः स्वामिकार्यमत्यजन् स्वकार्यमपि शरीरयात्रादिकं स्वाम्यविरुद्धं करोति तथैव मधु मदनफलसंयुक्तं वमनकार्यं करोति नतु वमननिवारणं मधुकार्यम् । एवं मधु हरीतकीसंयोगाद्विरेचनकार्यमेव करोति न मधुकार्यं स्तम्भनरूपमिति । ये तत्रैवं प्रतिपन्ना मदनफलादेः शक्त्युत्कर्षस्तथाविधोऽस्ति येन मधुसंबन्धिकार्यमवधूय स्वं कार्यं करोति ते चैवं चोदयन्तो भवन्तीति वंचनीयाः। यतः स्तम्भनद्रव्येणान्येन येन केनचित्संयुक्तस्य सुधाक्षीरस्यापि शक्तिः किंचिदपहीयमाना दृष्टा मधुनापि स्तम्भनस्वभावेनाप्यस्य नापहीयते मनागपि । अतो मध्वादेरेव योगवाहित्वं नान्यस्य । अपि चान्यदा योगवाहि द्रव्यं त्रिवृतादि मदनफलेन युक्तं सद्विरेचनं वमनं चोभयकार्यं कुर्वद्दृष्टं न केवलं वमनमेव न विरेचनमेव तस्मान्मध्वादेरेव योगवाहित्वमिति स्थितमेतत् । तत्तुल्येति । मधुसमा गुणैर्मधुशर्करा ॥ ५२ ॥

प०–मधु–माक्षिकं,चक्षुर्भ्यां हितं चक्षुष्यम्,छेदि-छेदनशीलम् । उभयथा आश्चोतने व्रणलेपादावुपयुक्तम् । तथाऽभ्यवहारेऽपि कफग्रन्थ्यादिनिर्घातं करोति । तैक्ष्ण्याद्देहे पिण्डितान् भावान् छिनत्ति विभजति । तथा तृडादीनि नुदति नाशयति । तथा कुष्ठमेहादिकाञ्जयति तथा व्रणान् पूयपैच्छिल्यादिभ्यः शोधयतीति शोधनम् । सन्धीयतेऽनेनेति सन्धानं करोति द्वौ व्रणावेकीकरोति । रोपयतीति रोपणं रूढस्य व्रणस्य त्वक्सावर्ण्यं जनयति । वातल–वातकोपि, रूक्षं च । रसे कषायमधुरम् । तत्तुल्या मधुशर्करेति तेन माक्षिकेण गुणैस्तुल्या ये माक्षिकस्य गुणास्ते सर्वे मधुशर्करायां बोद्धव्याः । मधुनो जाता शर्करा मधुशर्करा ॥ ५२ ॥

हे०–मधुगुणानाह–यत्संहतान् कफादीन् विश्लेषयति तच्छेदि, शोधनं दुष्टपूयादिनिर्हरणं, संधानकृत्तद्विच्छिन्नास्थ्यादि संश्लेषकं, रोपणं क्षीणमांसादिवर्द्धनम् । नन्विह वातलं सुश्रुतवाक्ये त्रिदोषशमनमिति विरोधः । नैवं विषयभेदात् । यत्र शुद्धो वायुः, शुद्धं मधु, तत्र वातलत्वं यत्र वातश्चातिभिर्मिश्रं मधुपित्तश्लेष्माभ्यांमिश्रो वायुरुभयोर्योगवाहित्वात् । सुश्रुतेन हि पित्तश्लेष्मघ्नत्वं [illegible] त्रिदोषशमनत्वं पठितम् पित्तश्लेष्माणौ शुद्धौ [illegible] वा वायुं तु मिश्रमेव मधु हन्तीति द्योतितम् । ननु चरकेण मधुनो गुरुत्वमुक्तं, सुश्रुतेन लघुत्वं, तत्र गुरुत्वं [illegible], लघुत्वं पाकेनेत्यविरोधः । चरको हि गुरुलघु[illegible]च्छति । सुश्रुतस्तु पाकादपि । तत्र [illegible] तद्गुरुगुणं, यच्छीघ्रं तल्लघुगुणं, [illegible] श्लेष्माणं करोति तद्गुरुपाकम्, [illegible] करोति तल्लघुपाकम् । मधुशर्कराया गुणमाह–[illegible] सदृशगुणाः, वह्निपाकात्[illegible] मधुशर्करा ॥ ५२ ॥

**उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहंति तत्।**

स०–तन्मधु उष्णमुपयुक्तं सन्निहंति [illegible] तथोष्णार्तं प्रतप्तं पुरुषं निहंति । उष्णे च काले देशे चोपयुक्तमुष्णैराहारादिभिश्च युक्तं सन्निहंति ॥ ५३ ॥

प०–तन्मधूष्णमुष्णीकृतमग्न्यादिना [illegible] निहन्ति–मारयति । उष्णे काले [illegible] मधु निहन्ति नरम् । तथोष्णैरुष्णीकृतैर[illegible] द्रव्यैः सहोपयुक्तं मधु नरं निहन्ति ॥ ५३ ॥

हे०–उष्णेन मधुनो विरोधमाह–उष्णं मधु [illegible]तापितम्, उष्णार्तम् उष्णैरातपादिभिः पीडितं नरम्, उष्णदेशे काले वा प्रयुक्तं मधु उष्णैरुष्णस्पर्शैर्द्रव्यैः सहोपयुक्तं मधु ॥ ५३ ॥

**प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।**
**अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ॥५४॥**

स०–तत्र मधु प्रच्छर्दने वमने तथा निरूहे च उष्णं न निवार्यते न निषिध्यते । यस्मात्कारणात्तयोर्वमिनिरूहयोरलब्धपाकमपक्वमेवाशु निवर्तते बहिरागच्छति । इतीक्षुवर्गः ॥ ५४ ॥

प०–उष्णं प्रच्छर्दने-वमने तथा निरूहे–आस्थापने न निवार्यते । कस्मात् । अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते इति सङ्ग्रहे हेतुरुक्तः । इति इक्षुवर्गः ॥ ५४ ॥

हे०–उष्णे विरोधस्यापवादमाह–अलब्धपाकमपि चिरकालस्थितं विरुद्धोपक्रमैरजीर्णादिविकारैर्हन्तीत्याशेवोक्तम् । संग्रहे तु विषान्वयत्वेन विषपुष्पेभ्योऽपि यतो

तु कुर्वते ते स्वयं यच्च सविषा भ्रमरादयः—" गुरुरूक्ष- कषायत्वाच्छैत्याच्चाल्पं हितं मधु । नाहि कष्टतमं किंचित्- मध्वामाज्जीर्णाद्यतो नरम् ॥ उपक्रमविरोधित्वात्सद्यो हन्याद्यथा विषम् । नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ योगैरितो युक्तं तृप्यतामनुवर्तते । भ्रामरं पैत्तिकं क्षौद्रं माक्षिकं च यथोत्तरम् ॥ वरं जीर्णं च तेऽप्यन्त्ये द्वे एव विनि- र्दिशेत् ॥ " इति । इतीक्षुवर्गः ॥ ५४ ॥

सर्पिषोऽनन्तरं स्नेहसामान्यात्तैलवर्गो वक्तव्ये गुडस्य अनन्तरसवीर्यविपाककर्मत्वात् प्रायेण चाहारद्रव्येषु भक्ष्यभोज्येष्वस्यैव तैलेभ्यः सारभोजनादिक्षुवर्गोऽनतरा निर्दिष्टः । भूरिभोजनोपयोगितया च मद्यात्प्राक् तैल- वर्गो वक्तव्य इत्याह—

**तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च । त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ५५**

स०—सर्वं तैलं स्वकारणसमगुणं भवति । यतो यदभिनिर्वृत्तं तत्स्वरूपमेवेत्यर्थः । तत्र तैलेषु मध्ये मुख्यं तिलोद्भवं यत्तैलं तत्तीक्ष्णं मन्दविपरीतम् । तथा व्यवायि व्याप्तिशीलम् । तथा त्वग्दोषकृतपानाभ्या- सेन त्वचं दूषयति । अचक्षुष्यं चक्षुषे हितं न भवति । सूक्ष्मं सूक्ष्मस्रोतोगामि । उष्णमुष्णवीर्यम् । स्वयो- निवदित्यतिदेशात्कफकृत्त्वं प्राप्तमित्याह । कफकृन्न च कफं न करोति । संग्रहेऽप्युक्तम् । मेध्यस्तिलः स्पर्श- शीतो मेध्यं तैलं खलो हिमः । तस्यैव श्लेष्मकर्तृत्वं न तैलस्य खलस्य चेति । पानकस्त्वायुर्वेदावतारेऽभि- हितं । विपाके कटुकं तैलं वातघ्नं कफपित्तकृदिति । ननु च तैलमिति कथमस्य मुख्यं नाम । यतो यथा तिलस्य विकारः स्नेहस्तैलमित्युच्यते । तथैरंडादीना- मपि यो विकारः स्नेहः सोऽपि तैलमित्युच्यते । मुनि- राप्याह । अतैलमपि तैलमेव कृत्वोपदेक्ष्यते तैलप्राधा- न्यात्स्नेहप्राधान्यादिति यावत् । सामानाधिकरण्य- प्रयोग एवोपपन्नः । यथा कौसुम्भं तैलमैरंडं तैल- मिति अत्रोच्यते । तिलस्येदं वस्तु तैलमित्यन्वर्थता तिलोद्भवस्यैव तैलस्य संभवति न कौसुम्भादीनाम् । अपि च । कौसुम्भं तैलमित्यादौ तैलशब्दः कांडा- दिव्यवच्छेदपरः संभाव्यते । यथा कौसुम्भं तैलं न पत्रं कांडं चेति । इदं तैलं तैलमित्यत्र तु सामाना- धिकरण्येन यदि तैलशब्दो निर्दिश्यते ततः पूर्वस्मा- त्तैलशब्दात्स्नेहाभिधायिनोऽधिकमर्थांतरं न वक्ति । नन्वत्राऽपि तैलशब्दः कस्मात्कांडादिव्यवच्छेदपरो न भवतीति चेत् । वयं ब्रूमः । रूढिरूपत्वात्तैलशब्दस्य स्नेहविषय एव तैलशब्दो रूढो न कांडपत्रादिविषये तिलस्य हि कांडं पत्रं वा न तैलमित्युच्यते किं तर्हि तिलपत्रं तिलकांडमिति । अत एव तैलशब्दोच्चार- णस्य समनन्तरं स्नेहविषयैव धीर्जायते न पत्रकांडा- दिविषया । तस्मादस्यैवैतन्मुख्यं नाम युक्तम् । संस्का- रानुवर्तित्वेन सर्वरोगजित्वाच्चास्य मुख्यत्वम् । तथ चोक्तम् । संस्कारात्सर्वरोगजिदिति । कुसुम्भादीनां तिलशब्दस्य च स्नेहनार्थवाच्ये विकारे स्नेहे तैलप्र- त्यये सति कुसुम्भतैलमेरण्डतैलं तिलतैलमिति रूपं भवति ॥ ५५ ॥

प०-भूरितरजनोपयोगात्तैलवर्ग इक्षुवर्गानन्तरमार- भ्यते।तथा वातलं मध्विति निर्दिष्टं,तस्य वातस्य शमनं तैलान्नान्यद्द्रव्यान्तरमत आह-स्वयोनिना तुल्यं गुणैः वर्तते इति स्वयोनिवत् यो यस्य योनिराकारः प्रभवो यतो यतो यदभिनिर्वृत्तं यद्यदुत्पद्यते तया योन्या तुल्यगुणं तत्तैलं जानीयात्। तत्स्वरूपमेव तदित्यर्थः स्वाकारेण समतुल्यगुणमिति यावत् । तत्र तैलेष्वे- रण्ड-सर्षपेङ्गुद-पियाल-बदरतुवरारुष्कर-कुसुम्भ- शिंशपागुरु-देवदारु--त्रपुसैर्वारुकष्माण्डवातामाक्षो- डोमादिजेष्वाकारेषु मध्ये मुख्यं तिलोद्भवं तैलं तीक्ष्णं मन्दगुणविपरीतं तक्ष्णयाद्धातून् विकर्षति, सन्धि- बन्धान् विमुंचति । व्यवायि-व्याप्तिशीलं यद्देहं व्याप्य पाकं याति । तथा च सङ्ग्रहे-"व्यवायि देहमखिलं व्याप्य पाकाय कल्पते ।" त्वग्दोषकृद् दुपयुक्तं पानाभ्यासेन त्वचं दूषयति । अथवा त्वग्दोषान् कृन्तति-छिनत्ति "कृती छेदने" इत्यस्य धातोरयं प्रयोगः । अचक्षुष्यं-चक्षुषोरपथ्यं सूक्ष्मं सूक्ष्मस्रोतःप्रवेशात् । उष्णमुष्णवीर्यं तिलोद्भव- त्वात्, श्लेष्मकरत्वमस्य प्राप्तं तन्निवार्यते । कफकृन्न कफं न करोतीत्यर्थः ॥ ५५ ॥

हे०—अथ तैलवर्गः । तत्र तैलगुणानाह—स्वयोनिवत्- स्वकारणवत् यथा—तिलतैलं—तिलगुणं, सर्षपतैलं सर्षप

गुणमिति । तत्र यानि तैलानि स्वयोनेर्विशिष्टानि तेषां गुणाः । तत्र तिलतैलगुणानाह—मुख्यं तिलतैलं, मुख्यमिति वदता तैलशब्दप्रयोगे तिलतैलं ग्राह्यमिति "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः " इति न्यायात् । यदादौ देहं व्याप्नोति पश्चाज्जीर्यति तद्व्याप्यम् । उष्णमुष्णस्पर्शम् । उष्णवीर्यत्वम् स्वयोनिवदित्यनेन लब्धम् ॥ ५५ ॥

**कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।**
**बद्धविट्कं कृमिघ्नं च संस्कारात्सर्वदोषजित् ५६**

स०—कृशानां पुंसां बृंहणाय बृहत्त्वायालं पर्याप्तं स्थूलानां च कर्शनायालम् । ननु कथमेकस्माद्वस्तुनो विरुद्धकार्यद्वयं कृशत्वबृंहणत्वरूपं स्यादिति ब्रूमः । कृशानां तावत्स्रोतांसि संकोचमायांति संकुचितस्रोतसां च नराणां तैलमन्तरेणाऽन्यानि द्रव्याणि बृंहणगुणयुक्तान्यपि न तथा प्रवेष्टुं समर्थानि भवन्ति । तैलं पुनः संकुचितानि स्रोतांसि तीक्ष्णादिभिर्गुणैर्झटित्येवं प्रविश्य शोधयति । स्रोतःशुद्ध्या च शरीरपुष्टिः । तथा च वक्ष्यति । स्रोतःसु तत्र शुद्धेषु रसो धातूनुपैति यः। तेन तुष्टिर्बलं वर्णः परं पुष्टिश्च जायत इति । तस्मात्कृशानां बृंहणायालमित्युपपन्नम् । तथा स्थूलानां सूक्ष्मस्रोतोगामित्वात्सर्वस्रोतःसु तैलं प्रविश्य तीक्ष्णोष्णादिगुणयोगान्मेदः क्षपयति तत्क्षपणाच्च कर्शनं संपद्यत इति स्थूलानां कर्शनाय चेत्युपपन्नम्।स्नेहादिगुणयोगात्तैलस्य बृंहणत्वक्षामत्वे सिद्धे सति कृशानां बृंहणायालं स्थूलानां कर्शनाय चेत्युक्तं ज्ञापनार्थम् । यदित्थंभूतं तीक्ष्णादिगुणयुक्तमन्यदपि तत्कृशानां बृंहणायालं स्थूलानां कर्शनाय चेति । बद्धेत्यादि बद्धा विट् येन तद्बद्धविट्कम् । कप्समासांतः । ग्रथितपुरीषमित्यर्थः । तथा कृमिघ्नम् । संस्कारादित्यादि । विशिष्टद्रव्यकृतसंस्कारमाश्रित्याशेषरोगजित् ॥ ५६ ॥

प०—कृशानां बृंहणायालमिति । इह द्विविधाः कृशाः । एके प्रकृतिकृशा एव बीजस्वभावाज्जायन्ते । अपरे रूक्षाहारविहारादिना जन्मोत्तरकालभाविनश्च। तेषां कृशानां सर्वाणि स्रोतांसि सहसैव संकोचं यान्ति । सङ्कुचितस्रोतसां तैलमुक्त्वा तैलगुणविपरीतगुणान्यन्यानि यानि द्रव्याणि मन्दादिगुणयुक्तानि तानि नान्तःस्रोतः प्रवेष्टुं समर्थानि भवन्ति । यथा तैलं सूक्ष्मव्यवायादिभिर्गुणैः सहसान्तः प्रविशति कृशानां बृंहणायालं भवति । अमुमेवार्थं प्रतिपादयन् ग्रन्थकारः तैलस्य स्नेहादिगुणयुक्तस्य बृंहणत्वे समर्थस्यापि तैलं बृंहणायालमिति कण्ठोक्तमस्य पाठं पठति । प्रकृतिकृशानामपि तथैव तद्बृंहणम् । यद्यपि कुलजा विकारा असाध्या इति निर्दिष्टाः । किंचानुक्तमपि यद्द्रव्यमीदृग्गुणं तैलात्तैक्ष्ण्यादिगुणयुक्तं तदपि तेषामस्मात् प्रदर्शिताद्धेतोः कृशत्वनिवारणाय प्रयोज्यमित्याधिकोऽर्थोऽपि ज्ञापितो भवतीत्यागामिका । तथा गुरुस्निग्धबल्यवातघ्नाग्निदीपनत्वगुणसमन्वितात्तिलाज्जातं तत्स्वभावानुवृत्तियुक्तंचेत्तस्य घटते, एवं देहस्य स्थूलकारित्वं स्थूलानां कर्षणाय च । स्थूला अपि द्विविधाः । एके प्रकृतिस्थूला बीजस्वभावा जायन्ते, जन्मान्तरभाविनश्चापरे स्निग्धाभ्यवहारसेवनात् सम्पद्यन्ते । तेषामुभयेषामपि तैलं तीक्ष्णोष्णं सूक्ष्मव्यवायगुणैश्च स्रोतसां विशुद्धिहेतुत्वान्मेदोलेखनमपि युज्यते । तस्मात् स्थूलानां तैलं कर्शनायाप्यलं संस्कारादिवशाद्वा बद्धविट्कं बद्धपुरीषं बद्धशकृत्कारित्वात् पुरीषं बध्नाति । तथा कृमीन् हन्तीति कृमिघ्नं संस्कारादिवशाद्द्रव्यपाकादिभिः सिद्धं तैलं सर्वान् रोगान् जयति ॥ ५६ ॥

हे०—अलं समर्थं, नन्वेकस्य बृंहणसमर्थकर्शनसमर्थत्वे अनुपपन्ने।मैवं; कृशस्य हि स्रोतांसि संकुचितत्वात्सम्यग्रसं न वहन्ति स्थूलस्य तु पूर्णत्वात् ।तैलं तु सूक्ष्मव्यवायितीक्ष्णोष्णत्वात् स्रोतांसि शोधयति । शुद्धेषु स्रोतस्सु रसः सम्यग्वहन् कृशस्य धातुपुष्टिं विधत्ते-स्थूलस्य धातुसाम्यम् । बद्धविट्कं-बद्धपुरीषं, द्रव्यान्तरसंयोगजनितं गुणान्तरं संस्कारः । नन्वत्र"त्वग्दोषकृदचक्षुष्यं कफकृन्नच" इति। सुश्रुते तु त्वक्प्रसादनं चक्षुष्यमनिलबलासक्षयकरमिति विरोधः मैवं, त्वग्दोषकरत्वमचक्षुष्यत्वं चाभ्यवहारे, त्वक्प्रसादनत्वं चक्षुष्यत्वं चाभ्यङ्गे, उक्तं हि—"दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत्"इति । अनिलबलासक्षयकरत्वं संसर्गविषयम्। उक्तं हि संग्रहे-अग्र्येषु समुदायनिर्धार्येषु तैलं वातश्लेष्मप्रशमनानामिति ॥ ५६ ॥

**सतिक्तोषणमैरंडं तैलं स्वादु सरं गुरु ।**
**वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ॥**
**रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ५७**

स०–एरण्डतैलमीषत्तिक्तं कटु भवति तथा स्वादु मधुरं तथा सरं गुरु च । वर्ध्मेत्यादि।वर्ध्मादीन् जयेन् । कटीगुह्यकोष्ठपृष्ठस्थितौ रुक्शोफौ जयेत् ॥ ५७ ॥

प०–ऐरण्डं तैलं-सतिक्तोषणमीषत्तीक्ष्णमीषत्कटुकं च तथा स्वादु-मधुरं, रसतः संभेदि गुरु च । तथा च वर्ध्मादीन् जयेत् वर्ध्मवृद्धिः । विषमज्वरः–सन्ततादिः । रुक् च शोफश्च रुक्शोफौ तौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ तत्रस्थौ जयेत् गुह्यं–लिङ्गम् । कोष्ठमुदरम् ॥ ५७ ॥

हे०–एरण्डतैलगुणानाह–सतिक्तोषणमीषत्तिक्तमीषत्कटुकं च ऐरण्डमेरण्डफलोद्भवं, सरं-विरेचनं, वर्ध्म–मुष्कवृद्धिः, रुक्शोफौ–शूलश्वयथू तौ च कट्यादिगतौ ॥ ५७ ॥

**तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरंडोद्भवं त्वति५८**

स०–तच्च तीक्ष्णोष्णपिच्छिलं विस्रं च भवति । लोहितैरंडतैलं त्वतिशयेन तीक्ष्णादियुक्तम् ॥ ५८ ॥

प०–रक्तैरण्डो लोहितैरण्डः तदुद्भवं तैलमतिभृशं तीक्ष्णं तीक्ष्णगुणयुक्तं तथोष्णमुष्णवीर्यं पिच्छिलमङ्गुलिग्राहि विस्रमामगन्धि ॥ ५८ ॥

हे०–रक्तैरण्डतैलगुणानाह–अतिग्रहणादेरण्डोद्भवमपि तीक्ष्णादिगुणयुक्तम् ॥ ५८ ॥

**कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ।**
**लघु पित्तास्रकृत् कोठकुष्ठार्शोव्रणजंतुजित् ५९**

स०–सर्षपाणामिदं सार्षपं तैलं कटूष्णं च भवति । तथा तीक्ष्णं कफशुक्रानिलापहं च । अपपूर्वाद्धन्तेरन्येष्वपि दृश्यत इति डः । तथा च लघु पित्तास्रं च करोति तथा कोठादीन् जयति ॥ ५९ ॥

प०–सार्षपं तैलं, कटु–कटुकरसं, वीर्येणोष्णं, तीक्ष्णं विकाशि तैक्ष्ण्यात् श्लेष्मादीन् नुदति । तथा कफं शुक्रमनिलं च हन्ति । लघु च पित्तास्रं रक्तपित्तं च करोतीति पित्तास्रकृत् । तथा कोठकुष्ठार्शोव्रणजन्तून् जयति । कोठः–क्षुद्ररोगे वक्ष्यमाणः । व्रणजन्तवो–व्रणक्रिमयः ॥ ५९ ॥

हे०–सर्षपतैलगुणानाह—पित्तास्रकृत्पित्तरक्तकोपनं, कोठः क्षुद्ररोगविशेषः,जन्तवो बाह्याभ्यन्तराः क्रमयः५९॥

**आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलाप**

स०–अक्षाणां बिभीतकानामिदमाक्षं तैल दिगुणयुक्तं पित्तानिलहृच्च ॥ ६० ॥

प०–अक्षस्येदमाक्षं बिभीतकं तैलं, स्वा रं, केशेभ्यो हितं केश्यं गुरु च, पित्ता पित्तवातघ्नम् ॥ ६० ॥

हे०–बिभीतकतैलगुणानाह–आक्षमिति । केशाहतम् ॥ ६० ॥

**नात्युष्णं निंबजं तिक्तं कृमिकुष्ठकफप्र**

स०–निंबोद्भवं तैलमतिशयेनोष्णं न भव तिक्तं तथा कृमिकुष्ठकफनाशनमतिशयेन ॥ ६

प०–निम्बजं तैलं-नात्युष्णं किञ्चिदुष्णं तिक्तरसं कृमिपित्तकफान् प्रणुदति नाशयति पित्तकफप्रणुत् ॥ ६१ ॥

हे०–निम्बतैलगुणानाह–नात्युष्णमिति । न ईषदुष्णम् ॥ ६१ ॥

**उमाकुसुंभजं चोष्णं त्वग्दोषकफपित्तकृ**

स०–अतसीजं कुसुंभजं च तैलमुष्णवी तथा त्वग्दोषकफपित्तानि करोति ॥ ६२ ॥

प०–उमा—अतसी, कुसुम्भं पद्मोत्तराप तज्जन्म तदुद्भवं तैलमुष्णं वीर्यतः । तथा षकफपित्तानि करोति । त्वग्दोषः—कुष्ठम् ।

हे०–अतसीतैलकुसुम्भतैलगुणानाह–यत्तूक्तं "विपाके कटु सक्षारं कौसुम्भं सर्वदोषकृत् ।"इ लितसर्वदोषविषयं पृथग्भूतं तु वायुं हन्त्येव, यदा णादिः–"कौसुम्भं कटु सक्षारं वातघ्नं पित्तलम्" इति ॥ ६२ ॥

स्नेहप्रसंगादिदमप्याह—

**वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ**
**मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ता**

स०–वसा तु रूपेण शुद्धमांसस्य स्नेहः धातुः । तौ वातनाशनौ तथा मांसानुगस्वरू प्राणिनः संबंधि मांसं तत्सदृशरूपौ । मेदोऽपि वसामज्जासदृशस्वरूपं विद्यात् । संक्षेपतया

तैलवर्ग इहोक्तः। तथा च संग्रहेऽधिकमप्युक्तम्। दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम्। सुवर्चलेंगुदीपीलुशंखिनीनीपसंभवम्। सरलागुरुदेवाह्वशिंशपासारजन्म च। तुवरारुष्करोत्थं च तीक्ष्णं कट्वम्लपित्तकृत्। अर्शःकुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम्। करंजनिंबजे तिक्ते नात्युष्णे तत्र निर्दिशेत्। कषायतिक्तकटुकं सारलं व्रणशोधनम्। भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे। विशेषात्कृमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने। अक्षातिमुक्तकाक्षोटनालिकेरमधूकजम्। त्रपुसैर्वारुकूष्मांडश्लेष्मातकपियालजम्। वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम्। पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम्। तिलतैलं वरं तेषु कौसुम्भं न वरं परम्। वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ। मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव। शाङ्की शौकरी पाकहंसजा कुक्कुटोद्भवा। वसा श्रेष्ठा स्ववर्गेषु कुंभीरमहिषोद्भवा। काकमद्गुवसा तद्वत्कारंडोत्था च निंदिता। शाखादमेदसां छागं हस्तिनं च वरावरमिति। इति तैलवर्गः॥ ६३॥

प०--स्नेहप्रसङ्गेन वसामज्जामेदसां गुणनिर्देशमाह-वसा तनुमेदोरूपा क्वथितमांसस्योपरि गतोऽच्छस्नेहभाग इति केचित्। तथा-"शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्यते" इत्यन्ये। मज्जाऽस्थ्नोऽन्तर्धातुरस्थ्नां मध्यवर्ती। तौ वातघ्नौ वातं नाशयतः। बलपित्तकफांश्च तथा। मांसानुगतस्वरूपौ च। यस्य प्राणिनः सम्बन्धिनौ तौ भवतस्तन्मांससदृशस्वरूपौ विज्ञेयौ शैत्यौष्ण्यादिभिर्गुणैः। तथाच चरकमुनिर्विनिर्दिशेत्। तेन आङ्गलादिभेदाभिन्नाया योनेर्यथास्वं गुणैस्तज्जा वसामज्जा विनिर्दिशेत्। मेदोऽपि ताविव वसामज्जयोः सदृशफलं विज्ञेयमिति तैलवर्गः॥६३॥

हे०--वसामज्ञोर्गुणानाह-वसा-मांसस्नेहः, मज्जा-षष्ठो धातुः, मांसानुगस्वरूपौ यस्य प्राणिनो यौ वसामज्जानौ, तस्य मांसेन तौ सदृशगुणौ। मेदोगुणमाह-मेदश्चतुर्थो धातुः ताविव वसामज्जावद्वातघ्नादिगुणकम्। तैलवर्गे स्नेहत्वसाम्याद्वसादीनामुक्तिः। संग्रहे तु-"तैलप्रयोगादजरा निर्विकारा जितेन्द्रियाः। आसन्नतिबला युद्धे दैत्याधिपतयः पुरा॥ दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम्। सुवर्चलेङ्गुदीपीलुशंखिनीनीपसंभवम्॥ सरलागुरुदेवाह्वशिंशिपासारजन्म तु। तुवरारुष्करोत्थं च तीक्ष्णं कट्वम्लपित्तकृत् अर्शःकुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम्। करञ्जनिम्बजे तिक्ते नात्युष्णे तत्र निर्दिशेत्॥ कषायतिक्तकटु सारलं व्रणशोधनम्। भृशोष्णे तीक्ष्णकटुनी तुवरारुष्करोद्भवे॥ विशेषात्कृमिकुष्ठघ्ने तथोर्ध्वाधोविरोचने। अक्षातिमुक्तकाक्षोडनालिकेरमधूकजम्॥ त्रपुसैर्वारुकूष्माण्डश्लेष्मातकपियालुजम्। वातपित्तहरं केश्यं श्लेष्मलं गु[रु] शीतलम्॥ पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम्। तिलतैलं वरं तेषु कौसुम्भमवरं परम्॥ चौल्लकीसौकरीपाकहंसजाः कुक्कुटोद्भवाः। वसाः श्रेष्ठाः स्ववर्गेषु कुम्भीरमहिषोद्भवाः॥ काकमद्गुवसातद्वत् कारण्डोत्था[श्च] निन्दिता। शाखादमेदसां छागं हास्तिनं च वरावरम्॥" इति तैलवर्गः॥ ६३॥

स०--तीक्ष्णोष्णसूक्ष्मादिगुणसामान्यात्तैलवर्गादनन्तरं मद्यवर्ग आरभ्यते--

**दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम्॥**
**सस्वादुतिक्तकटुकमम्लपाकरसं सरम्।**
**सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु॥**
**नष्टनिद्राऽतिनिद्रेभ्यो हितं पित्तास्रदूषणम्।**
**कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम्॥**
**वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा॥६४**

स०--सर्वं मद्यं दीपनादिगुणयुक्तम्। तुष्टिश्चि[त्त]परितोषः पुष्टिः शरीरपोषः ते ददाति जनयति यत्त[त्तु]ष्टिपुष्टिदम्। आतोऽनुपसर्गे कः। तथा ईषन्मधुरतिक्तकटुकम्। तथाऽम्लौ पाकरसौ यस्य तदेवम्। त[था] सरम्। तथा सकषायम्। तथा स्वरश्चारोग्यं च प्रति[भा] च वर्णश्च तान् करोति। ननु सर्वाण्येव द्रव्याण्या[रो]ग्यार्थमुपदिश्यंते तस्मादारोग्यकृत्त्वं सर्वेषामेव द्रव्या[णां] प्राप्तमिति सर्वस्यैवाऽरोग्यकृत्त्वम्। उच्यते [सत्यं] युक्तमाह भवान्। किंत्वतिशयख्यापनार्थम् एतन्मद्यमतिशयेनारोग्यकृदित्यर्थः। तथा लघु। त[था] नष्टनिद्रेभ्यो नरेभ्योऽतिनिद्रेभ्यश्च हितम् सर्वमेव [मद्यं] प्रभावादिति केचित्। अन्ये त्वेवं मन्यंते यथा सुरा[दि] यन्मद्यं श्लेष्मादिवर्धनं तन्नष्टनिद्रेभ्यो हितम्, यच्च माध्व[ी]दि मद्यं श्लेष्मादिहृत् तच्चाऽतिनिद्रेभ्यो हितमिति। त

पित्तास्रदूषणम् । कृशेभ्यः स्थूलेभ्यश्च हितम् । सामान्येनाऽपि निर्देशोऽत्रायं विशेषो बोध्यः । किंचिन्मद्यं कृशाय हितं किंचित्स्थूलायेति । अथवा तैलोक्तन्यायेन कृशस्थूलहितत्वं बोध्यम् । तथा रूक्षसूक्ष्मं स्रोतोगामि । तथा स्रोतो विशोधयति । तथा वातश्लेष्महरम् । युक्त्या पीतं सदेवंगुणं मद्यं भवति । युक्तिस्तु मदात्ययनिदाने चिकित्सिते च वक्ष्यमाणा । अन्यथाऽयुक्त्या पीतं सद्विषतुल्यं भवति ॥ ६४ ॥

प०—मद्यवर्गस्यारम्भे प्रयोजनं मद्यमारोग्यकरं दीपनरोचनादिगुणकलापयुक्तत्वात् । तथा तैलस्य किञ्चित्साधारणगुणसामान्यात्तैलादनन्तरं सर्वमद्यानां सामान्यगुणवर्णनार्थमाह--सर्वस्य मद्यस्य सामान्येन गुणवर्णनमेतत् । दीपयतीति दीपनमग्नेर्दीप्तिकारत्वात् । रोचयतीति रोचनं—भक्तादिष्वभिलाषं जनयति । तीक्ष्णं धातून् विकषति सन्धिबन्धान् विमुञ्चति । उष्णमुष्णवीर्यम् । तुष्टिश्च पुष्टिश्च तुष्टिपुष्टी ते ददाति तुष्टिपुष्टिदम् । तुष्टिश्चित्तपरितोषः । पुष्टिः—शरीरपोषः । सस्वादुतिक्तकटुकं-किञ्चिन्मधुरं, किञ्चित्तिक्तं, किञ्चित् कटुकम् । अम्लौ पाकरसौ यस्य तदम्लपाकरसं, सरं—भेदि, सकषायं--किञ्चित्कषायरसयुक्तं तथा स्वरादीनि करोति । स्वरोवाक्पटुत्वम् । आरोग्यं स्वास्थ्यम् । प्रतिभा--प्रागल्भ्यम् । वर्णः कान्तिमत्त्वम् । तच्च लघु । नष्ट निद्रातिनिद्रेभ्यो हितम् । यत् श्लेष्मादिघ्नं माधवादिप्रभवाद्वा सर्वं मद्यं हितं, तत्कृशस्थूलहितं पथ्यं सामान्यनिर्देशात् । किञ्चिन्मद्यं कृशाय हितं, किञ्चित् स्थूलाय हितम् । न यदेव स्थूलाय हितमिति । अथवा आहारादिवशात् संस्कारादिवशात् द्रव्यप्रभावाद्वा सर्वं मद्यं कृशस्थूलहितं, तथा रूक्षं—स्नेहरहितम् । तथा सूक्ष्मं स्रोतःप्रवेशितया तथा स्रोतो विशोधयतीति विशोधनम् । श्लेष्मवातमेदोमलैरापूरितानां निर्मलीकरणाद्विवृत्तकरणाच्च । तच्च युक्त्या पीतम् । वातश्लेष्महरं-वातश्लेष्मघ्नम् । युक्तिः-रोगबलदेशकालादीन् विभज्य तदनुरूपं यद्दीयते सा तस्य युक्तिः । तथाच ग्रन्थः—"आ ऽस्य वक्ष्यते योगो यः सुखायैव केवलम् ।" तथा-बलकालसात्म्यप्रकृतिसहायामयवयांसि प्रविभज्य तदनुरूपं यः पिबति ततः पिबत्यमृतं तदेव मद्यम् । अन्यथाऽयुक्त्या पीतं सद्विषतुल्यं भवति अयुक्तिर्हीनमिथ्यातिपानम् । तथाचाग्र्यसंग्रहे—म क्षेपो धीधृतिस्मृतिहराणाम् ॥ ६४ ॥

हे०--अथ मद्यवर्गः । द्राक्षादिसंधानं मद्यमुच्य उक्तं हि संग्रहे-"द्राक्षेक्षुमाक्षिकं शालिरुत्तमा व्री पञ्चमाः ॥ मद्याकरा यवेभ्योऽन्यत्तन्मद्यप्रतिरूपकम् । इति । तत्र सामान्यमद्यगुणानाह—तुष्टिः—संतो पुष्टिर्बलवृद्धिः, शरीरवृद्धिः, कृशहितत्वेन ल त्वात् स शब्दस्त्रिभिः संबध्यते । प्रतिभा, प्रज्ञानं त्वेव निद्रां करोति हन्ति चेति विरुद्धम् । मैवं, प्रवृद्धवाते नष्टनिद्रो भवेत् तस्यामवस्थायां वातघ्नत्वान्निद्रां कर प्रवृद्धश्लेष्मा चातिनिद्रः तस्यामवस्थायां श्लेष्मघ्न निद्रां हन्ति । कृशस्थूलहितं तैलोक्तन्यायेन युक्त्या मेवंविधं वक्ष्यति च । बलकालदेशसात्म्यप्रकृतिसह मयवयांसि प्रविभज्य तदनुरूपं यः पिबति ततः त्यमृतमिति ॥ ६४ ॥

**गुरु त्रिदोषजननं नवं जीर्णमतोऽन्यथा ॥६**

स०--नवं किंचित्कालातिक्रांतं तन्मद्यं गुरु त्रि करं च भवति । नवमनतीतसंवत्सरमित्येके । पुराणं बहुकालातिक्रांतमतो नवादन्यथा लघु दे चेत्यर्थः ॥ ६५ ॥

प०--तत्सर्वं मद्यं—नवं गुरुदोषकरं दोषप्र णमिति यावत् । किञ्चित्कालातिक्रान्तं न अनतीतसवत्सरमित्येके । जीर्णं—पुराणं वर्ण न्धोपपन्नं सर्वं मद्यम् । अतः पूर्वोक्तान्मद्यान्नवा स्कादन्यथा विपरीतं लघु दोषशमनं च भ किन्तु पित्तकरं वातश्लेष्मघ्नं चेति निर्दिष्टम् ॥ ६५ ॥

हे०--नवमद्यगुणानाह—तन्मद्यं नवं तत्कालनिष्पन्नं त्वदोषजननाभ्यां लघुत्ववातश्लेष्महरत्वे बाध्येते । मद्यगुणानाह—जीर्णं—चिरकालनिष्पन्नम् अतोऽन्यथा द्विपरीतं लघु वातकफहरं चेत्यर्थः । उक्तं च सुश्रु "स्फुटस्रोतकरं जीर्णं लघु वातकफापहम्" इति ॥

**पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ।**
**नात्यर्थतीक्ष्णमृद्वल्पसंभारं कलुषं न च ॥**

स०--तच्च मद्यमुष्णोपचारेण न पेयम् । विहाराहारादिक उपचारो यस्य स एवं तेन । न वि

त्यादि। कृतविरेचनेन न पेयं दोषासाम्यादिति भावः। क्षुधार्तेन न पेयम्। तथाऽतितीक्ष्णमतिमृदु च मद्यं न पेयम्। अल्पसंभारमिति। यद्यावता संभारेण लोकप्रसिद्धेन संधीयते सुरादि तत्र तदपेक्षया चाल्पसंभारं न पेयम्। तथा कलुषमस्वच्छं च न पेयम् ॥ ६६ ॥

प०-तच्च मद्यमुष्णोपचारेण-न पेयं न पातव्यम्। उपचारः क्रिया सा चाहारविहाररूपा। उष्णेनाहारेणोष्णे च काले ग्रीष्माख्ये उष्णेनातपादिनार्तेन पुरुषेण न पेयम्। तथा विरिक्तेन कृतविरेचनेन क्षुधार्तेन बुभुक्षितेन न पेयम्। गुल्मोदरार्शोग्रहणीदोषस्य साऽवस्था यस्यां पानं निवार्य्यते तथा नात्यर्थं मृदु मद्यं पेयं तथाऽल्पसंभारम् अल्पेन सम्भारेण द्राक्षेक्षुप्रभृतिना कृतं यावता लोकप्रसिद्धेन सम्भारेण सन्धीयते तदपेक्षया चाल्पसम्भारं तथा कलुषं पांशुशर्करादिभिर्युक्तं न पेयम् ॥ ६६ ॥

हे०-मद्यपानं नियच्छति-उष्णोपचारेण-उष्णमाहारं सूर्यसन्तापादिकं वा सेवमानेन, विरिक्तैः कृतविरेचनैः, क्षुधातुरैरतिक्षुधितैः अत्यर्थं तीक्ष्णमतितीव्रमदम्, अत्यर्थं मृदु-मदानुत्पादकम्, अल्पसंभारमसम्पूर्णकारणसामग्रीकं, कलुषं मलिनम् ॥ ६६ ॥

अधुना मद्यविशेषानाह---

**गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः।**
**सुराऽनिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा ६७॥**

स०--सुरा गुल्मादिहृद्भवति। तथा स्नेहयतीति स्नेहनी। तथा गुर्वीवातनाशिनी च। तथा मेदश्चासृक् च स्तन्यं च मूत्रं च कफश्च तानावहति ॥ ६७ ॥

प०-सुरा-शालिपिष्टेन कृता तस्या इमे गुणाः। सुरा गुल्मादीन् हरति। शोषो-राजयक्ष्मा। तथा स्नेहयतीति स्नेहनी। गुरुः, अनिलघ्नी-वातशमनी, तथा मेदःप्रभृतीन्यावहति प्रापयति जनयतीत्यर्थः। स्तन्यं-स्त्रीक्षीरम् ॥ ६७ ॥

हे०-सुरागुणमाह-शालिपिष्टकृतं मद्यं सुरा स्नेहनी-देहस्निग्धत्वकृत्। मेदःप्रभृतीनावहति करोतीति ॥६७॥

**तद्गुणा वारुणी हृद्या लघुतीक्ष्णा निहन्ति च**
**शूलकासवमिश्वासविबंधाध्मानपीनसान् ॥६८**

स०--एवं वारुणी प्रसन्ना। त एव सुरोक्ता गु[illegible] यस्याः सा तद्गुणा। सुरासमगुणेत्यर्थः। तथा हृ[illegible]याय हिता हृद्या। तथा लघुतीक्ष्णा च। शूलादी[illegible] हंति च। विबंधः स्रोतसामुपलेपेन दोषादीनामवहनम्। जगलमेदकबक्कसानां सुतरामनुपयोगित्वाद्गुणा नेहोक्ता संग्रहे तूक्ता एव। यथा-जगलः पाचनो ग्राही रूक्ष[illegible] स्तद्वच्च मेदकः। बक्कसो हृतसारत्वाद्विष्टंभी दोषकोपन[illegible] वारुण्या अधोभागो घनो जगलः। जगलस्याधोभाग[illegible] मेदकः। पानीयेन मद्यकल्कपीडनोत्पन्न[illegible] बक्कसः ॥ ६८ ॥

प०-सुराया अच्छ उपरिष्टान्मण्डो वारुण[illegible] प्रसन्नेत्युच्यते। तथा च आगमः-"प्रसन्ना वारुण[illegible] ज्ञेया परिस्रुन्मदिरा यथा ॥ कादम्बरी घनसु[illegible] तदधो जगलः स्मृतः।" तदधोभागे घनो जगल[illegible] सा वारुणी, तद्गुणा पूर्वस्या घनायाः सुराया गुणास्ते सर्वे प्रसन्नाया अपि विज्ञेयाः। तथा हृद्या हृदयाय हिता। लघ्वी तीक्ष्णा च श्लेष्मभेदःप्र[illegible] तीन् क्षिपति निहन्ति विनाशयति। तथा शूल[illegible] दीन् निहन्ति-विनाशयति। विबन्धः-स्रोतसामु[illegible] लेपेन दोषादीनामवहनम् ॥ ६८ ॥

हे०-तथा वारुणीगुणानाह-वारुणी श्वेतसुरा, सा च श्वे[illegible] पुनर्नवादिमूलयुक्तेन शालिपिष्टेन क्रियते। तद्गुणा सुर[illegible] तुल्या। विबंधो-वातरोधः। आध्मानमुदरापूरः। वारुण्यच्छ सुरेति कश्चित्। तत्र तस्याः कफघ्नत्वात्। उक्तं हि सुश्रुते "प्रसन्ना कफवातार्शोविबंधानाहनाशिनी।" इति ॥६८

**नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा।**
**व्रणे पांड्वामये कुष्ठे न चात्यर्थं विरुध्यते॥६९**
**(विष्टम्भिनी यवसुरा गुर्वीरूक्षा त्रिदोषला[1])**

स०--विभीतकानामियं बैभीतकी। नातितीव्रो म[illegible] यस्याः सैवम्। तीव्रमदं न जनयतीत्यर्थः। लघ्[illegible] तथा पथ्या। व्रणादिषु चात्यर्थमन्यमद्यव[illegible] विरुध्यते ॥ ६९ ॥

१ अत्र कोष्ठकान्तर्गतः पाठः प्राचीन पुस्तकेषु दृश्यते

प०–विभीतकानामियं वैभीतकी सुरा, सा च नातितीव्रमदा नात्यर्थं मदं करोति । तथा लघ्वी न गुरुः । पथ्या–दोषघ्नी, तथा व्रणे, पाण्डुरोगे, कुष्ठे च नात्यर्थं विरुध्यते ॥ ६९ ॥

हे०–वैभीतकीगुणानाह–बिभीतकवल्कलयुक्तशालिपिष्टकृता वैभीतकी सुरा-नातितीव्रमदा मध्यमदा पथ्या स्वस्थहिता । यवसुरागुणमाह–यवपिष्टकृतं मद्यं यवसुरा ॥ ६९ ॥

**यथा द्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ।**
**ग्रहणीपांडुकुष्ठार्शःशोफशोषोदरज्वरान् ॥**
**हंति गुल्मकृमिप्लीहान् कषायकटुवातलः७०॥**

स०–अरिष्टोऽपि यैर्द्रव्यैः सिद्धः स तद्गुणाननुगच्छति । सर्वैश्च दीपनत्वादिभिर्मद्यगुणैरधिकः।तंत्रांतरे चोक्तम्–मद्याकाराधिकद्रव्यं मदिराद्यात्मकं ततः । यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः इति । ग्रहण्यादिकांश्च रोगान् हंति । तथा कषायः कटुश्चासौ वातलश्च स एवम् । लक्षणं चास्य प्रागुक्तम् ॥ ७० ॥

प०–अरिष्टो–द्रव्यसंयोगसंस्कारकाथविधिना कृतः । स च यैर्द्रव्यैर्निष्क्वाथ्य संधीयते आसुत्यया क्रियते तेषां ये गुणास्ताननुकरोति अनुगच्छति तद्गुणो भवतीत्यर्थः । सर्वमद्यगुणाधिकः–सर्वैर्दीपनाद्यैर्मद्यगुणैरधिकः । तथा ग्रहण्यादिकांश्च रोगान् हन्ति–नाशयति । प्लीहा वामपार्श्ववर्ती । स चारिष्टो रसतः कषायः कटुश्च तथा वातलो वातकारी च ॥ ७० ॥

हे०–अरिष्टगुणानाह–औषधयुक्तैर्मद्याकारैः कृतं मद्यमासवः। स एव कथितौषधैररिष्टः। यथा-द्रव्यगुण औषधगर्भत्वात् सर्वेषु मद्येष्वधिकगुणः। शोषो राजयक्ष्मा । कषायकटुश्चासौ वातलश्च।कषायकटुः सन् वातल इत्यर्थः।अम्लादिरसस्तु वातघ्न इत्यर्थः । यथोक्तं सुश्रुतेन–"अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः । दीपनः कफवातघ्नः सरः पित्ताविरोधनः ॥" इति ॥ ७० ॥

**मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ।**
**अल्पपित्तानिलं पांडुमेहार्शःकृमिनाशनम् ७१॥**

स०–मार्द्वीकं द्राक्षारसोद्भवं लेखनत्वादियुक्तम् । तथाऽल्पौ पित्तानिलौ यस्य तदेवम् । अन्यमद्यापेक्षयाऽल्पतरौ करोतीत्यर्थः । तथा पाण्ड्वादिनाशनम् विलिखत्यतितैक्ष्ण्याद्यद्धातूंस्तल्लेखनं मतम् ॥ ७१ ॥

प०–मृद्वीकाया इदं मार्द्वीकं–मृद्वीकारसोद्भ मद्यं सर्वदा पेयम् । तच्च लेखनं–विकर्षणम् । अ तैक्ष्ण्यात् श्लेष्मादीनपनुदति । तथा हृद्यं हृदय प्रियम् । नात्युष्णं न किञ्चित्तथा रसतो मधुरम तथा सरं–भेदि । तथा अल्पपित्तानिलमल्पौ पित्त निलौ यस्य तत्तथा । अन्यमद्यापेक्षयाऽल्पौ करो तथा पाण्डुमेहार्शःकृमीन् नाशयति ॥ ७१ ॥

हे०–मार्द्वीकगुणानाह । मार्द्वीकन्द्राक्षाकृतं मद्यं लेख लीनमलोत्खननम् । अल्पपित्तानलकरम् ॥ ७१ ॥

**अस्मादल्पांतरगुणं खार्जूरं वातलं गुरु ॥७२**

स०–खार्जूरं मद्यमस्मान्मार्द्वीकादल्पांतरगुणम् अल्पांतराः किंचिद्विशेषा गुणा यस्य तदेवम् । त वातलं गुरु च । द्राक्षा मद्यं चान्यत्रोक्तम् । यथा शुष्कद्राक्षांबुसंभूतो विशदो रोचनो हिमः । द्राक्ष सवो मधुसमो बृंहणो भृशदीपन इति ॥ ७२ ॥

**शार्करः सुरभिः स्वादुहृद्यो नातिमदो लघुः ७**

स०–शार्करः शर्करासंबंधी मद्यविशेषः सुर सुगंधिर्भवति । तथा स्वादुश्च हृद्यश्च स्वादुहृद्यः । त नातिमदो लघुश्च भवति ॥ ७३ ॥

**सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥ ७४**

स०–गुडसंबंधी गौडः सृष्टमूत्रत्वादिभिर्गुणैर्युक्तः तथा तर्पणश्चासौ दीपनश्च तर्पणदीपनः ॥ ७४ ॥

प०–गुडेन कृतो मद्यविशेषो गौडः,स च सृष्टमूत्रः कृद्वातो भवति उत्सृष्टमूत्रपुरीषानलः । तथा तर्पणो धातुं तर्पयति, दीपनोऽग्निदीपनः ॥ ७४ ॥

हे०–अन्यमद्यापेक्षया गौडगुणानाह–गुडकृतं म गौडः । सृष्टाः प्रवर्तिताः मूत्रादयो येन स तथा तर्प स्तृप्तिजनकः ॥ ७४ ॥

**वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ॥७५**

स०–सीधुः वातपित्तकरस्तथा स्नेहविकारान् त श्लेष्मविकारांश्च हंति । ब्रह्मभ्रूणवृत्रेष्वित्यत्र चतुर्विध

नियमस्य प्रायिकत्वात् क्विप् । सीधुरपक्वेक्षुरसकृतः पक्वेक्षुरसकृतश्च ॥ ७५ ॥

प०--सीधुर्मद्यविशेषः । इक्षुरसेन पक्वापक्वेन सम्भवति । तथाचागमः । "सीधुस्त्विक्षुरसेन तु ।" आगमेन शीतरसपक्वाख्यः क्वथितेन तु स च वातपित्ते करोति । स्नेहविकारान् श्लेष्म-विकारांश्च हन्तीति स्नेहविकारहा ॥ ७५ ॥

हे०-सीधुगुणमाह-इक्षुरसकृतं मद्यं सीधुः । स्नेहविकारान् स्नेहव्यापदः श्लेष्मविकारांश्च हन्तीति तथा स च सीधुर्द्विविधः—शीतरसः पक्वरसश्च । अपक्वेनेक्षुरसेन कृतः शीतरसः, पक्वेन पक्वरसः ॥ ७५ ॥

**मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः॥७६ ॥**

स०--तत्र सीध्वोर्मध्ये पक्वरसो मेदःशोफोदरार्शांसि हन्ति । मेदःशोफोदरार्शोघ्न इत्यमनुष्यकर्तृके चेति टक् ॥ ७६ ॥

प०--तथा मेदःशोफोदरार्शांसि हन्ति विनाशयति । तत्र तयोर्द्वयोर्सीध्वोर्मध्ये पक्वरसः साधुः वरः श्रेष्ठः ॥ ७६ ॥

हे०--तयोर्मध्ये पक्वरसः श्रेष्ठः ॥ ७६ ॥

**छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ७७**

स०--मध्वासवो माक्षिकेण संधीयते माधवाख्यो मद्यविशेषश्छेदी तीक्ष्णो मेहादिनाशनश्च।अष्टांगसंग्रहे तु सुरासवादयो गदिताः । तथा चापठत् । सुरासवस्तीव्रमदः स्वादुतीक्ष्णोऽनिलापहः । मैरेयो मधुरो वृष्यः गुरुः संतर्पणो गुरुः । तत्र मधुनैव सुरासंधानेन या क्रियते तां सुरासवमाहुः ॥ ७७ ॥

प०--मध्वासवो--माक्षिकधातुक्यादिभिः क्रियते माधवापरपर्यायः । स च छेदी—भिनत्ति, श्लेष्ममेदःप्रभृतींस्तच्छीलस्तीक्ष्णो विकषन् धातून् सन्धिबन्धान् विमुञ्चति । तथा प्रमेहपीनसकासाञ्जयति ॥ ७७ ॥

हे०--मध्वासवगुणानाह--मधुकृतं मद्यं मध्वासवः, आसवशब्दो मद्यमात्रवचनः । छेदी—संहतकफादिविभेदी ॥ ७७ ॥

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ॥**
**भृशोष्णतीक्ष्णरूक्षाम्लहृद्यं रुचिकरं सरम् ।**
**दीपनं शिशिरस्पर्शं पांडुहृत्कृमिनाशनम्॥७८॥**

स०--शुक्तं रक्तपित्तकफान् क्लेदयति । तथा वातानुलोमनं वातमनुलोमयति मार्गांतरेभ्यस्तमानीय स्वमार्गप्रतिपन्नं करोति तद्वातानुलोमनम् । अतिशयेनोष्णतीक्ष्णरूक्षाम्लं तथा हृद्यं तथाऽतिशयेन रुचिकरं तथा दीपनं तथा शिशिरः स्पर्शो यस्य तदेवं तथा पांड्वादिघ्नम् ॥ ७८ ॥

प०--शुक्तं--शुक्ताख्यं मद्यमेवंगुणं भवति । सर्वं मद्यं प्रायेण पंचरसमपि कालान्तरेण यदा तस्य सन्धितस्य चत्वारो रसा मधुरादयो विनिवर्त्यन्ते । अम्ल एकः सुतरामभिवर्धते । तथा शुक्तसंज्ञामासादयति । अतएवाम्लपाकरसमिति सर्वं मद्यं निर्दिष्टं शुक्तमाहुः । सर्वं मद्यं कालान्तरेणात्यर्थमम्लीभूतं शुक्तमुच्यते इत्यागमः । तच्च रक्तपित्तकफोत्क्लेदि तेषामुत्क्लेदः स्वस्थानात् च्यावनं व्यस्तसमस्तानां रक्तपित्तकफानामुत्क्लेदं करोति रक्तपित्तकफोत्क्लेदि। तथा वातमनुलोमयति वातानुलोमनम् । अनुलोम्यतेऽनेनेति वा । मार्गान्तरेभ्यो वातमानीय स्वमार्गप्रतिपन्नं करोति । वातानुलोमनं वातसात्म्यकरमित्यर्थः । तच्च भृशमत्यर्थं तीक्ष्णमुष्णं रूक्षमम्लं च । तथा साधु हृद्यं तथा रुचिं करोतीति रुचिकरं तथा सरं--भेदि दीपयतीति दीपनमग्निसन्धुक्षकम् । तथा शिशिरस्पर्शं शिशिरः स्पर्शो यस्य तत्तथा।तथा पाण्डुरोगहृत्-पाण्डुरोगं हरति तथा कृमीन् नाशयतीति कृमिनाशनम् ॥ ७८ ॥

हे०--मद्यवर्गे संधानसामान्यात् शुक्तादीन्याह--तत्र शुक्तगुणानाह-शुक्तं कंदादिसंधानम् । उक्तं हि "कन्दमूलफलादीनि सस्नेहलवणानि तु । यत्र द्रवेऽभिषूयन्ते तच्छुक्तमिति कथ्यते ॥ गुडस्त्विक्षुरसो मद्यं मार्द्वीकं च द्रवं यदा ॥ गुडेक्षुमद्यमार्द्वीकसूक्तानि स्युस्तदा क्रमात् ॥" इति । यत्तूक्तं वृन्देन--"यन्मस्त्वादिशुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं सूक्तं चुक्रं तदुच्यते ॥" इति । तच्छुक्तविशेषलक्षणं रक्तादीन् क्लेदयत्यतिद्रवीकरोतीति तत्तथा । शिशिरस्पर्शं स्पर्शे शीतं, दृक् दर्शनशक्तिः ॥ ७८ ॥

इक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥७९॥

स०--गुडादिभवं शुक्तं यथोत्तरं लघु यद्यदुत्तरं लघु । गुडकृताच्छुक्तादिक्षुशुक्तं लघु । शुक्तान्मद्यशुक्तं लघु । मद्यशुक्तान्मार्द्वीकं शुक्तं लघु ते ॥ ७९ ॥

०--चतुर्णां गुडादीनां सम्बन्धि यत् शुक्तं तत् त्तरं लघु विज्ञेयम् । यत् यस्योत्तरं यथोत्तरम् । त्तरं तत्र लघु तद्यथा गौडशुक्तादिक्षुशुक्तं लघु । शुक्तान्मद्यशुक्तं लघु मद्यशुक्तान्माध्वी (द्वी) क- लघु ॥ ७९ ॥

०--गुडशुक्तादीनां लघुतारतम्यमाह--यथोत्तरं । गुडशुक्तादिक्षुशुक्तं लघु ततो मद्यशुक्तं ततो मा- शुक्तमिति । मद्यं माध्वीकादन्यत् ॥ ७९ ॥

मूलफलाद्यं च तद्वद्विद्यात्तदाऽऽसुतम्॥८०॥

स०--कंदादि तदाऽऽसुतं गुडशुक्तादिसुतं तद्व- त् । तच्छुक्तसमानगुणं जानीयात् । शुक्तेनात्यु- शक्तिना परित्यज्य निजं स्वभावं वशीकृत्याऽऽत्म- त्वं नीयत इत्यर्थः । आद्यग्रहणात्कांडत्वक्पत्रादि- ग्रहः । तेन कांडाद्यपि तथैव वेद्यम् ॥ ८० ॥

०--तत्र तेषु शुक्तेषु आसुतं कन्दमूलफलाद्यं द्विद्यात् तेन तुल्यं तद्वत् । शुक्तेनात्युष्णवर्येण प्रसक्तिना कन्दादिकमासुतं जानीयादित्यर्थः । देग्रहणात् त्वक्पत्रादीनां परिग्रहः ॥ ८० ॥

हे०--शुक्तवत्कन्दादिगुणानाह--आद्यशब्दाच्च काण्डा- । तद्वच्छुक्ततुल्यं गुणं तदाऽऽसुतं तस्मिन् शुक्ते आ- चिरकालस्थितं कन्दादीनां पृथग्योगादद्रवत्वेऽपि ङ्गिकमत्र कथनम् ॥ ८० ॥

अम्लत्वरोचनादिगुणतुल्यत्वादन्यदपि शांडाक्या- माह--

डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु।

स०--मूलकसर्षपशाकानि कथितासुतानि काल- कराजिकासु भावितान्यम्लतीक्ष्णानि शांडाकी- देनोच्यंते । सा दध्नविषये प्रसिद्धा । सा चान्यच्चा- क्रमप्यासुतं कालेनाम्लमम्लीभूतं ननु स्वयमाम्यमा- पाद्यम् । अनेनैव हेतुना सुतरां तत्संस्कारतामधिकरो- तीति । तच्च रोचनं लघु भवति ॥ ८१ ॥

प०--शाण्डाकी शाखाद्यासुत्य क्रियते सा रो- चनी, लध्वी च । तथान्यत् कन्दमूलफलादि काले- नाम्लीभूतं रोचनं रुच्यं, लघु च । तेन तदुभयं रोचनं रुचिकरम् ॥ ८१ ॥

हे०--शुक्तेतरसंधानगुणानाह--शाकमुद्रादिवटकसंधानं शाण्डाकी, उक्तं च--"शाण्डाकी कन्दमूलादिमुद्रादिव- टकैः कृता । तथा मूलकच्छेदसंधानं शांडाकी स्याद्ध- हुद्रवा ॥" इति । अन्यच्छुक्तशाण्डाकीभ्यामितरत् तच्च पिण्याकादिकृतं कालाम्लं कालेन चिरकालावस्थेनाम्लं, तदुभयं रोचनं लघु च ॥ ८१ ॥

धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम्।
श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ।
शस्तमास्थापने हृद्यं लघुवातकफापहम् ॥८२॥
(गण्डूषधारणात् हृत्कमलदौर्गन्ध्यशोषजित्)[1]

स०--धान्याम्लं कांजिकं भेदि तीक्ष्णं तथोष्णवीर्यं तथा पित्तकृत् स्वभावाच्च स्पर्शशीतलम् । व्यायामादिना श्रांतत्वं श्रमः । निर्व्यायामादेवोपश्रांतत्वं क्लमः । तौ हरति । तथा रुच्यं दीपनं च । बस्ति- शूलं च जयति । तथा आस्थापने निरूहे शस्तम् । तथा लघु वातकफापहं च । हन्तेरन्येष्वपि दृश्यत इति डः । धान्याम्लं तंडुलकंडनादिकृतं सौवीरकतुषो- दकैर्वितुषैः सतुषैश्च यवैः क्रमात्कृतं तद्वद्विद्यात्॥८२॥

प०--धान्याम्लं--काञ्जिकं तस्य किञ्चिन्मद्यारि- ष्टासंवादिसामान्यादिह वर्गे निर्देशः । यथा मद्या- नि संभृत्य सम्भारं क्रियन्ते तद्वदेव तदपि किञ्चा- म्लभूयस्त्वेन मद्यवत् स्पर्शशैत्यं तच्च भेदि सरम् । तथा चागमः"भेदि तत् पिण्डितान् भावान् शकृद्बा- द्यान् भिनत्ति यत् । विपरीतमतो ग्राहि तच्च स्तम्भ- नमुच्यते ।" तीक्ष्णं श्लेष्मादीन् हिनस्ति पित्तं करोतीति पित्तकृत् । स्पर्शेन शीतलं शरीरे बाह्यः परिषेकेण दाहमपहरति । व्यायामादिना श्रान्तत्वं श्रमः । निर्व्यायामादेव श्रान्तत्वं क्लमः । तौ हर-

१ "माध्वीक" इति पाठान्तरम् ।

[1] कोष्ठकान्तर्गतोऽधिकः पाठः क्वचित्पुस्तके दृश्यते ।

ति श्रमक्लमहरम्। रुच्यं रोचनशीलम्। उत्पन्नारोचकस्य निर्घातकरत्वात्। दीपनमग्नेः। बस्तिरुं नुदति प्रेरयति नाशयति बस्तिशूलनुत्। तथास्थापने शस्तं हितम्। आस्थापनं-वातविकारेषु पुटकेन द्रवद्रव्याणां क्वाथादीनां गुदे प्रतिनिनं तच्च वक्ष्यमाणं वस्तिविधौ। हृद्यं-हृदयप्रि। लघु च वातकफापहं वातकफघ्नम् ॥ ८२ ॥

हे०-काञ्जिकगुणानाह-धान्याम्लं काञ्जिकं, भेदि-सरम्, स्थापने-निरूहे ॥ ८२ ॥

मद्यवत्तीक्ष्णोष्णादियुक्तत्वाद्गोमूत्रादिगुणानप्याह—

**गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम्। तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥ मेशोफोदरानाहशूलपांडुकफानिलान्। माऽरुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ८३॥**

स०—मूत्रं गोऽजादिभवं पित्तलादिगुणयुक्तं तथा णोऽनुरसः स्वल्पो यस्य तदेवम्। तथा कृम्यादीन् त्। लघु च। गोमूत्रस्य च पूर्वमुपन्यासात् प्राग्यं ज्ञेयम्। संग्रहे तु विशेषांतरमप्युक्तम्। श्वासहरं छागं पूरणात्कर्णशूलजित्। दद्रात्क्षये ग्रासे च गजवाजिसमुद्भवम्। हंत्युन्मादमपस्मारन्मेहं तु रासभम्। कषायतिक्तमेतेषां हिध्मश्वासहरं त्। पित्तं तिक्तं कृमिहरं रोचना कफवातजित्। पामाहरं मूत्रं मानुषं तु विषापहमिति ॥ ८३ ॥

प०—गोमूत्रादेर्मूत्रस्याष्टविधस्येह निर्देशो मद्यवक्ष्णोष्णगुणभूयस्त्वात्।तच्चाष्टप्रकारं पित्तलं पित्तरि तथा रूक्षं तीक्ष्णमुष्णं च लवणोऽनुरसो यस्य वणानुरसम्। अनुरसो-रसस्य यः पश्चाद्भवति गाव्यक्तो व्यक्तो वा किञ्चिदन्ते च। तथाच यति। तत्र व्यक्तो रसः स्मृतः। अव्यक्तोऽनुरसः ञ्चिदन्ते व्यक्तोऽपि चेक्षते। तथा रसतस्तत्कटुयादींश्च जयेत् लघु च भवति ॥ ८३ ॥

हे०-मूत्रगुणानाह--माहिषीति स्त्रीलिङ्गनिर्देशो माहिानां स्त्रीणां, गजादीनां पुंसां मूत्रं ग्राह्यमिति ज्ञापनार्थस्य तीक्ष्णोष्णत्वादिसाम्यान्मद्यवर्गे निर्देशः। संग्रहे गलः पाचनो ग्राही रूक्षस्तद्वच्च मेचकः। बक्कसो सारत्वाद्विष्टम्भी दोषकोपनः॥ कोहली बृहणी गुर्वी श्लेष्मलस्तु मधूलकः। मार्द्वीकाल्पान्तरगुणं खार्जूरं वातलं गुरु॥ शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः। सुरासवस्तीव्रमदः स्वादुस्तीक्ष्णोऽनिलापहः॥ मैरेयो मधुरो वृष्यः सरः संतर्पणो गुरुः। धातुक्यभिषुतो जीर्णो रूक्षो रोचनदीपनः॥ द्राक्षासवो मधुसमः परमं स तु दीपनः। मार्द्वीकसदृशः प्रोक्तो मृद्वीकेक्षुरसासवः॥ समासादासवो हृद्यो वातलः स्वौषधानुगः। दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम्॥ श्वासकासहरं छागं पूरणात्कर्णशूलजित्। दद्रात्क्षारे किलासे च गजवाजिसमुद्भवम्॥ हन्त्युन्मादमपस्मारं कृमीन्मेहं च रासभम्। कषायतिक्तमेतेषां हिध्माश्वासहरं शकृत्॥ पित्तं तिक्तं कृमिहरं रोचनाकफवातजित्। तिक्तं पामाहरं मूत्रं मानुषं तु विषापहम्॥" इति॥ इति मद्यमूत्रवर्गः॥ ८३॥

**तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्। इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥८४॥**

स०—इत्यनन्तरोक्तेन प्रकारेण तोयादीनां वर्गैः क्रमानतिक्रमेण द्रवाणामेकदेशो यथास्थूलमयमुदाहृत उक्तः॥ ८४॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुन्दराख्यायां पंचमोऽध्यायः॥ ५॥

प०—तोयादीनां द्रव्याणां वर्गैः--संघैः क्रमात् परिपाट्यायथोद्देशनिर्देशेन एकदेशावयवो लेशो न साकल्येन सकलद्रव्याणां समूह उदाहृतः कथितः, इत्यनन्तरोक्तेन प्रकारेण यथास्थूलं स्थूलमनतिक्रम्य स्थूलदृष्ट्या ह्यनन्ताः सम्भवन्ति। अतो लेशोक्तिः कृतेति भद्रम्॥ ८४॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने-द्रवद्रव्यविज्ञानीयोऽध्यायः पञ्चमः।

हे०—अध्यायार्थमुपसंहरति। एकदेशग्रहणं द्रवद्रव्यव्यक्तीनामानन्त्यत्वेन कार्त्स्न्येन वक्तुमशक्यत्वात्, यथास्थूलमिति। साकल्येऽव्ययीभावः। यावन्त्यः स्थूलाः प्रसिद्धा व्यक्तयस्तावत्यः सर्वा उक्ता इत्यर्थः ८४॥

इति हेमाद्रिटीकायामायुर्वेदरसायने द्रवद्रव्यप्रकरणं सामस्त्येन निरूपितम्॥ ५॥

## षष्ठोऽध्यायः ।

अन्नविधौ प्रकृतेऽल्पवक्तव्यत्वात्पूर्वं द्रवद्रव्यमभिधायान्नं वक्ति—

**अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

स०—अन्नस्य स्वरूपं स्वभावो रसवीर्यविपाकप्रभावगुणकर्मादि तस्य विज्ञानमवगमस्तस्मै हितोऽध्यायोऽन्नस्वरूपविज्ञानीयस्तं व्याख्यास्यामः । शेषं पूर्ववद्व्याख्येयम् । द्रव्यशब्दश्चाप्रयुक्तोऽप्यर्थस्य गमक इत्यन्नद्रव्यस्वरूपविज्ञानीय इति द्रष्टव्यम् । तथाहि पूर्वस्मिन्नध्याये मंदमतिप्रबोधनाय प्रयुक्तो द्रष्टव्यः । आचार्या हि वैचित्र्येण ग्रंथरचनां विदधति । तत्र प्राक् स्वरूपशब्दो न निर्दिष्ट इह च द्रव्यशब्दः । अथ चोभयमप्रयुक्तमपि गम्यते मध्यलोपाख्यया च । अद्यते यत्तदन्नं धान्यमांसादि । धान्यं च द्विधा शूकशिंबीभेदेन । तत्र प्राधान्याच्छूकधान्यस्य पूर्वमुपन्यासः । प्राधान्यं चास्य भूयस्त्वोपयोगित्वात् । शिंबीधान्यस्य तु तद्व्यंजनत्वेन स्वल्पोपयोगित्वात्प्रायेणापथ्यत्वाच्चाऽप्राधान्यम् ॥ १ ॥

प०—अयमस्य सम्बन्धः । आदिकाले भगवान् लोकान् सिसृक्षुः पूर्वं मद्यमेवासृजत् । ततोऽनन्तरमन्नं ततः प्रजा एवमतोऽनन्तरमन्नस्वरूपविज्ञानीयोऽध्याय आरभ्यते । अन्नस्वरूपं संस्कृतमसंस्कृतं, तस्य रसवीर्यविपाकप्रभावगुणकर्मादि तस्य विज्ञानमवबोधः तस्मै हितोऽध्यायस्तमन्नं च यद्यते धान्यमांसादि, धान्यं द्विधा-शूकज-शिंबिधान्यभेदेन । तत्रापि प्राधान्यात् शूकधान्यस्याग्रे निर्देशः। प्राधान्यं च तस्य भूयस्त्वेनोपयोगात् ॥ १ ॥

हे०—अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यातुं प्रतिजानीते—यतः पूर्वाध्याये द्रव आहार उक्तः । इह त्वद्रव इति । सचान्नशब्दवाच्यः, अतएवायमन्नस्वरूपविज्ञानीयः । तत्र सप्तवर्गाः, वक्ष्यति हि—" शूकशिम्बिजपक्वान्नमांसशाकफलौषधैः । वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः ॥" इति । तत्रादौ शूकधान्यवर्गः । तत्रादौ शालयः ॥ १ ॥

**रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः**
**सारामुखो दीर्घशूको रोध्रशूकः सुगन्धकः ।**
**(पौण्डुकः पुण्डरीकश्च प्रमोदो गौरशालयः ।**
**जाङ्गलो हव्यवालाक्षः कर्दमः शीतभीरुका ॥**
**पतंगास्तपनीयाश्च ये चान्ये शालयः शुभाः ।**
**स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ।**
**कषायानुरसाः पथ्या लघवो मूत्रला हिमाः**
**शूकजेषु ॥ २ ॥**

स०—तत्र रक्तशालिमहाशाली सुप्रथितावेव कलमो मगधादिषु प्रसिद्धः । स एव महातंडुल इति काश्मीरेषु । तूर्णकश्च तत्रैव आजव इति प्रसिद्धः शकुनाहृतो यो मगधेषु बुद्धोत्पादकाल उत्तरकुरुभ्यो हंसैरानीतो मृगारिमात्रा विशाखाख्यया वापितो विस्तारगतः । अत एव शकुनाहृत इत्यन्वर्थोऽस्य संज्ञा । सारामुखः कृष्णशूकः । शुक्लाकारो दीर्घशूकः । रोध्रशूको रोध्रपुष्पाकारशूकः । सुगंधको गंधशालिसंज्ञया जालंधरमगधादिषु ख्यातो देवशालिरित्यपरनामा । एवं पतंगादयो नानादेशेषु कर्षकादिभ्योऽवधार्याः । शूके जाताः शूकजास्तेषु मध्ये रक्ताद्यास्तपनीयांता अन्ये च ये शालयः शुभा रक्तादिसदृशास्ते सर्वे स्वादुपाकरसत्वादियुक्ताः । बद्धं ग्रंथितमल्पं च वर्चः पुरीषं कुर्वंतीति बद्धाल्पवर्चसस्त एवम् । कारणे कार्योपचारादुक्ताः । कषायोऽनुरसो येषां त एवम् । पथ्याः स्वभावेनैव हिताः । तथा लघवो मूत्रकारिणः शीतवीर्याश्च ॥ २ ॥

प०—शिंबिधान्यस्य तु सूपादिना तद्व्यञ्जनत्वेन स्वल्पोपयोगित्वादप्राधान्यमित्याह-अन्येभ्यः शालिभ्यो रक्तशाल्यादीनां श्रेष्ठत्वात् प्रथममभिधानम् । रक्ताद्यास्तपनीयान्ताः । शालयः। अन्ये च तत्सदृशाः शुभाः शालयः । ते सर्वे स्वादुपाकरसाः

१ "रक्तशालिर्वरस्तेषु बल्यो वर्ण्यस्त्रिदोषजित् । चक्षुष्यो मूत्रलः स्वर्यः शुक्रलस्तृड्ज्वरापहः ॥ विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः । तस्मादल्पान्तरगुणाः शालयो महदादयः ॥" (भा. प्र. ) "रक्तशालिस्त्रिदोषघ्नी चक्षुष्या मूत्ररोगहा । महाशालिर्गुरुर्वृष्या चक्षुष्या बलवर्धिनी ॥" इति **हारीतः** ।

२ कोष्ठकान्तर्गतोऽत्राधिकः पाठो दृश्यते ।

मधुराविपाका मधुररसाश्च । स्निग्धास्तथा वृष्याः शुक्रलाः । बद्धं ग्रथितमल्पं च वर्चः पुरीषं कुर्वन्ति ये ते बद्धाल्पवर्चसः । कषायोऽनुरसो येषां ते कषायानुरसाः । पथ्या-हितास्तथा लघवो लघुगुणयुक्ताः । मूत्रला-मूत्रजनकाः । हिमाः शीतवीर्याः । तत्र तेषु शूकजेषु मध्ये ॥ २ ॥

हे०—तत्र रक्तशाल्यादिगुणानाह—रक्ताद्यो देशभेदेन स्वनामप्रसिद्धाः । शुभा निर्दोषाः, बद्धाल्पवर्चसः—बद्धं पिण्डीकृतम्, अल्पं स्तोकं, वर्चः पुरीषं, येभ्यस्ते तथा । नत्विह शालयो मधुरपाका उक्ताः । सुश्रुतेन—“ मधुरा वीर्यतः शीता लघुपाका बलावहाः ।” इति विरोधः, लघुपाकत्वमेव हि कटुपाकत्वं नैवं; रसवदविरोधः, पाको रसविशेषः । रसाः पुनरेकस्मिन् द्रव्ये बहवोऽनुभूयन्ते । रक्तशालिगुणानाह—तत्र तेषु—रक्तशालिषु मध्ये, रक्तो—रक्तशालिः, शूकजेषु ॥ २ ॥

**वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ ३ ॥**

स०—तत्र तेषु महाशालिकलमादिषु मध्ये रक्तो रक्तशालिसंज्ञो वरस्तृष्णादींश्च दोषान्निहंति । अस्य च प्रागुपादानेनैव वरत्वे लब्धे वरग्रहणं युक्त्याऽग्र्यादिसंग्रहार्थम् । तथा च । वर्षासु दिव्यनादेये परं तोये वरावरे इति । तथा गव्ये क्षीरघृते श्रेष्ठे । तथा शर्करेक्षुविकाराणां फाणितं च वरावरे । वरोऽत्र मुद्गोऽल्पचलः । माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु चेत्यादीनि वाक्यानि प्रदेशांतरेष्वयमवोचदाचार्यः॥ ३॥

प०—यो रक्तो शालिः स वरः श्रेष्ठः तथा तृष्णाघ्नस्त्रिदोषघ्नश्च ॥ ३ ॥

हे०—वरः तथा च खारणादिः—“ पथ्यत्वे शूकधान्यानां प्रवरा रक्तशालयः । ” इति । अतएव शूकजेषु शालयो वरा इति । तेषु शालिषु रक्तो वर इति व्याख्यानमसत् । तृष्णात्रिदोषहा—तृष्णाघ्नस्त्रिदोषघ्नश्च ३

**महांस्तस्यानुकलमस्तं चाप्यनु ततः परे ॥ ४॥**

स०—तस्यानु रक्तशालेः पश्चान्महान् शालिर्वरः । तं च महांतमनु कलमः महत्संज्ञात्कलमः किंचिदून इत्यर्थः । ततोऽनंतरं परेऽन्ये शालयोऽवरा ज्ञेयाः॥ ४॥

प०—तत्र रक्तशालेर्महान् शालिरनु गुणैर्हीनः । ततोऽपि महच्छालेः कलमोऽनु गुणैर्हीनः । ततः परे ततोऽपि कलमात् ये परे तूर्णकादयः ते क्रमेण पूर्वस्मात्पूर्वस्मादुत्तरोत्तरं गुणैर्हीनतमाः ॥ ४ ॥

हे०—महाशाल्यादीनां गुणानाह—तमनु—रक्तशालेर्हीन महान्, तं चाप्यनु—कलमो महतो हीनगुणः, परे तूर्णकादयस्तेनैव न्यायेन हीनाः । तेन यो यस्मादुत्तरः स तस्माद्धीनः । ननु रक्तशाल्यादीनां यथोत्तरमपकर्ष उच्यते, स च पाठक्रममपेक्षते, स तु प्रतितंत्रं भिद्यते । तद्यथा-लोहितशालिकदम्बकलमकपाण्डुसुगन्धिकशकुनाहृतपुष्पाण्डकपुण्डरीकमहाशालिशीतभीरुरोध्रपुष्पकदीर्घशूककाञ्चनमहिषशूकहायनमहादूषकप्रभृतयः शालयो—“मधुरा वीर्यतः शीता लघुपाका बलावहाः । पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्चसः ॥ तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः । चक्षुष्यो व्रणकृत्स्वर्यो हृद्यो बल्यस्तृषापहः॥ व्रण्यो ज्वरहरश्चैव सर्वदोषविषापहः । तस्मादल्पान्तरगुणाः क्रमशः शालयः परे ॥ ” इति सुश्रुतः । रक्तशालिर्महाशालिः कलमः शकुनाहृतः । तूर्णको दीर्घशूकश्च गौरः पाण्डुकलाङ्गलौ ॥ सुगन्धका लोहवालाः सारिवाख्याः प्रमोदकाः । पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ शीता रसे विपाके च मधुराः स्वल्पमारुताः । बद्धाल्पवर्चसः स्निग्धा बृंहणा मूत्रशुक्रलाः ॥ रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः । महांस्तस्यानुकलमस्तं चाप्यनु ततः परे ॥” इति चरकः । “रक्तः श्येनाहृतो गौरः सुगन्धः काञ्चनो महान् । पतङ्गः कलमः पाण्डुर्लोहवालः प्रमोदकः ॥ दीर्घनालः शीतभीरुः सारिवः शंखमौक्तिकः । तूर्णको दीर्घशूकाख्यो लाङ्गलाख्याश्च शालयः ॥ शीतला मधुराः स्निग्धा ग्राहिणो मांसशुक्रलाः । वातपित्तहरा बल्याः सृष्टमूत्राः सहायनाः ॥ स्निग्धः शीतो लघुर्ग्राही तृष्णाघ्नः शुक्रमूत्रलः । रक्तशालिस्त्रिदोषघ्नः कलमोऽनु महांस्ततः ॥” इति खारणादिः । “रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः । सारामुखो दीर्घशूको रोध्रशूकः सुगन्धिकः ॥ पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो गौरसारिवौ । लाङ्गला लोहवालाश्च कर्दमाः शीतभीरुकाः ॥ पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः । स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ॥ कषायानुरसाः पथ्या लघवो मूत्रला हिमाः । शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ महांस्तमनुकलमस्तं चाप्यनु ततः परे ।” इत्ययमेव संग्रहे । तस्मात्कोऽत्र क्रमः उच्यते-इह रक्तशालिशब्देन मृदुमधुरस्निग्धसुरभिशुभ्रविशदस्थूलायतत्वादीनां लोकप्रसिद्धानां स्वगुणानामुत्कर्ष उपलक्ष्यते, तेषु यथा यथा अपकर्षस्ते तथा तथा हीनाः, उप-

लक्षणानि पुनर्वक्तुर्विवक्षाभेदाद्भिन्नानि । यानेव गुणान्सुश्रुतवाग्भटादौ कलमशब्देनोपलक्षयतः, तानेव चरकवाग्भटौ महाशालिशब्देन । ननु सम्बन्धं विना नोपलक्षणत्वं, न च कलमस्य महाशालेर्वा कलमगुणैः कदाचित्संबन्धः सैवं; यदा कलमो महाशालिक्षेत्रे निष्पद्यते तदा तयोस्तुल्यगुणत्वात्स्वक्षेत्रजादेव महाशालेश्च क्षेत्रज एव कलमो हीनः, एवमितरेष्वपि वाच्यं, तस्मात्सर्वमेव प्रमाणमुक्तेन प्रकारेणाविरोधात् ॥ ४ ॥

**यवका हायनाः पांसुबाष्पनैषधकादयः ।**
**स्वादूष्णागुरवःस्निग्धाःपाकेऽम्लाःश्लेष्मपित्तलाः**
**सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निंदिताः ॥ ५ ॥**

स०—यवकादयः शालिविशेषाः स्वादवः । तथोष्णादिगुणयुक्ताः । तथा सृष्टे मूत्रपुरीषे यैस्ते सृष्टमूत्रपुरीषाः । पूर्वं पूर्वं च निंदिताः तेन यवकाः सर्वेभ्योऽपि गर्हिताः । तदन्वन्ये किंचित्किंचित्क्रमेण गर्हिता इति विज्ञेयम् । नैषधकादय इत्यत्राऽऽदिशब्देन च यवकपत्रिकादयः शालिविशेषा गृह्यंते ॥ ५ ॥

प०—यवकाद्याः शालयः स्वादवो मधुररसाः । ताथोष्णवीर्या गुरवश्च, स्निग्धगुणयोगात् स्निग्धास्तथा पाकेऽम्लाः—अम्लं पच्यन्ते । श्लेष्मपित्तलाः श्लेष्मपित्तजनकाः । सृजन्ति बहिः क्षिपन्ति मूत्रपुरीषं ये ते सृष्टमूत्रपुरीषाः । तथा पूर्वं पूर्वं च निन्दिताः । यो यस्मात् यस्मात्पूर्वः स तस्मात्तस्मान्निन्दितः गर्हितः तेन नैषधकात् पांशुबाष्पो निन्द्यः । पांशुबाष्पाद्धायनः । हायनाद्यवकः । एवं यवकोऽतिशयेन सर्वेभ्यो निन्द्यः ॥ ५ ॥

हे०—यवकादिशालिगुणानाह—पांशुबाष्पः—कोरकः, पूर्वं पूर्वं निंदिताः यो यस्मात्पूर्वः स तस्माद्धीनः मृद्वादिविपरीतानां गुणानामुत्कर्षात् ॥ ५ ॥

**स्निग्धो ग्राही गुरुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः ।**
**षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥ ६ ॥**

स०—व्रीहिषु मध्ये षष्टिकः श्रेष्ठो रक्तशालिरिव शालिषु । तथा स्निग्धादिगुणयुक्तः स्थिरो हिम इति । शरीरस्थैर्यं करोति । ज्वरश्रमग्लानिहरोऽत एव रसायनप्रयोगे ज्वरादौ च तत्र तत्र क्षामवपुषामुपदिष्टः । यस्त्वतु स्थैर्यकरोऽपि नाम्नातो गुरुवातलत्वादिति । षष्टिकश्च द्विविधो गौरः कृष्णगौरश्च । अत्राऽसितगौरतो गौरः षष्टिकः श्रेष्ठः ॥ ६ ॥

प०—शरीरस्थैर्यकरणात् तथा श्रमक्लमग्लान्यपहरणाच्च । अतएव रसायनोपयोगे ज्वरादौ तत्र तत्र च क्षामवपुषामुपदिष्टः । हिमः शीतवीर्यः । स च व्रीहिषु मध्ये श्रेष्ठो वरः । तस्य च द्वैविध्यं गौरकृष्णभेदात् । तत्र तयोर्मध्यादसितगौराद्व्रीहेर्गौरो व्रीहिः श्रेष्ठः ॥ ६ ॥

हे०—षष्टिकगुणानाह—ग्राही—स्तंभनः, स्थिरः—स्थिरगुणकार्यरूपेण शरीरे चिरकालं तिष्ठतीत्यर्थः । यो व्रीहिः षष्टिरात्रेण पच्यते स षष्टिकः । स चान्येभ्यो व्रीहिभ्य उत्तमः स च त्रिविधः—गौरः, कृष्णः, कृष्णगौरश्च । तत्रासितगौराद्गौरः श्रेष्ठः, पारिशेष्यादसितो हीनः ॥ ६ ॥

**ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ।**
**कुक्कुटांडकपालाख्यपारावतकशूकराः ॥**
**वरकोद्दालकोज्ज्वालचीनशारददुर्दराः ।**
**गंधनाः कुरुविंदाश्च गुणैरल्पांतराः स्मृताः ॥ ७ ॥**

स०—ततः षष्टिकान्महाव्रीह्यादयः क्रमाद्गुणैरल्पांतरा गुणैर्हीना ॥ ७ ॥

प०—ततः षष्टिकाद्व्रीहेर्महाव्रीहिप्रभृतयः कुरुविन्दपर्यन्ताः क्रमाद्गुणैरल्पान्तरा न्यूनतराः स्मृताः । एवं महाव्रीहेर्गुणैः कृष्णव्रीहिरूनः । कृष्णव्रीहेर्जतूमुखः । यावत्सर्वेभ्यो व्रीहिभ्यः कुरुविन्दो गुणैरल्पान्तरः स्मृतः ॥ ७ ॥

(१) "यो व्रीहिः षष्टिरात्रेण पच्यते स तु षष्टिकः । षष्टिका मधुराः शीता लघवो बद्धवर्चसः ॥ वातपित्तप्रशमनाः शालिभिः सदृशा गुणैः । षष्टिका प्रवरा तेषां लघ्वी स्निग्धा त्रिदोषजित् ॥ स्वाद्वी मृद्वी ग्राहिणी च बलदा ज्वरहारिणी । रक्तशालिगुणैस्तुल्यास्ततः स्वल्पगुणाः परे ॥" ( भा. प्र. )—

"स्निग्धो वातहरस्त्रिदोषशमनः पथ्यः सदा प्राणिनां श्रेष्ठो व्रीहिषु षष्टिकः श्रमहरः कृच्छ्रादिदोषापहः । गौरश्चासितगौरतो ऽपि नितरां सेव्यः करोत्युच्चकैः शुक्रश्वासहरः क्षतक्षयहरः कासादिदोषापहः ॥" ( शा. ग्रा. )

हे०--महाव्रीह्यादीनां गुणानाह—ततः कृष्णषष्टिकान्महाव्रीह्यादयः क्रमेण गुणैरल्पान्तराः, षष्टिकस्य सर्वश्रेष्ठत्वाद्धीनत्वेनाल्पान्तरत्वं, कृष्णषष्टिकाद्धीनगुणो महाव्रीहिः ततः कृष्णव्रीहिरित्यादि । अत्रापि क्रमभेदपरिहारः पूर्ववत् ॥ ७ ॥

**स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः।**
**बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ ८ ॥**

स०—एभ्यः षष्टिकादिभ्योऽन्योऽनुक्तो व्रीहिः स्वादुर्मधुररसोऽम्लविपाकः । पित्तकरो गुरुर्बहुमूत्रपुरीषोष्मा च। पाटलः पाटलाकुसुमाकारः । त्रिदोषस्त्रिदोषकोपनः। त्रिदोषस्त्वेवेत्यत्रैव शब्दोऽतिशयख्यापनाय । अतिशयेन त्रिदोषल एवेत्यर्थः। अतित्रिदोषलत्वेनास्याऽभ्यवहारनिषेधं करोति । अत एव च रसादिमत्त्वं न ब्यधादस्य शास्त्रकारः ॥ ८ ॥

प०—अन्योऽनुक्तो व्रीहिः स्वादुर्मधुरो रसः । अम्लविपाकोऽम्लं पच्यते । पित्तं करोतीति पित्तकरः । तथा गुरुः । बहुमूत्रपुरीषोष्मा-प्रभूता मत्रपुरीषोष्माणो विद्यन्ते यस्य स तथोक्तः। कारणे कार्योपचारः । उष्णशब्देनात्राग्निरुच्यते न पित्तं, यतः पित्तकर इति पूर्वमेव निर्दिष्टः। पाटलो व्रीहिस्त्रिदोष एव । अतिशयेन त्रीन् दोषान् कोपयत्येवकारकरणाद्बोद्धव्यम् । त्रिदोषलत्वादभ्यवहारनिषेधोऽप्येवंकृतोऽस्य भवति ॥ ८ ॥

हे०--अथावशिष्टव्रीहिगुणानाह—अन्य उक्तेभ्य इतरः ऊष्मा-औष्णम् । पाटलगुणानाह—त्रयो दोषा यस्मात् स त्रिदोषः । एवग्रहणात्सर्वास्ववस्थासु दोषलत्वम् अतएवान्येषां द्रव्याणामवस्थायां गुणान्यत्वं ज्ञेयं, यथा" सर्वत्र दोषजित्तक्रं ग्रहण्यां दोषकृद्घृणे । शालिपिष्टो गरीयस्त्वं गोधूमादपि गच्छति ॥" इत्यादि ॥ ८ ॥

**कंगुकोद्रवनीवारश्यामाकादि हिमं लघु ।**
**तृणधान्यं पवनकृल्लेखनं कफपित्तहृत् ॥ ९ ॥**

स०—कंग्वादि तृणधान्यं हिमं लघु च। तथा मारुतकृल्लेखनं च । लेखनं विकर्षणम् । विलिखत्यतितैक्ष्ण्याद्यत् धातूंस्तल्लेखनं मतमिति । तथा कफपित्तहृत् । कषायमधुरत्वं पित्तश्लेष्मह्रत्वेनैतेषामवगतं तद्बद्धविण्मूत्रत्वं वातकृत्वात् । तथा चोक्तम् । ततश्चाऽनेकधा प्रायः पवनो यत्प्रकुप्यति । अन्नपानौषधं त युंजीतातोऽनुलोमनमिति । संग्रहे तु स्पष्टं कृत गुणा एषामुक्ताः । यथा । कफपित्तहरा रूक्षाः कष मधुरा हिमाः । वातला बद्धविण्मूत्रा लघवो लेखनात्मका इति । श्यामाकादीत्यत्राऽऽदिशब्देन लो श्यामाकशिबिरप्रशांतिकामधूलिकागवेधुकांडलोहित्या ग्रहणम् ॥ ९ ॥

प०—कंग्वादि तृणधान्यं हिमं शीतवीर्यम्, ल लघु, पवनं वातं करोतीति पवनकृत् । तथा लेखन विकर्षणं, श्लेष्ममेदःप्रभृतीन् कृषति । कफपि हरतीति कफपित्तहृत् । "कङ्गुः प्रियङ्गुर्विज्ञेः कोरदूषस्तु कोद्रवः ।" ॥ ९ ॥

हे०-तृणधान्यगुणानाह-तृणधान्यं-तुच्छधान्यम्, अतएव सुश्रुते कुधान्यमित्युक्तं,कङ्गुः-प्रियंगुः,कोद्रवः-कोरदूषक नीवारः—प्रासादिका, श्यामाकस्त्रिविधः । तोयश्यामाकः हस्तिश्यामाक,उष्ट्रश्यामाकश्चेति । आदिशब्दाद्वरकादयः ननु कोरदूषकनीवारश्यामाकसंतनुवरकोद्दालकप्रियंगुमधूलिकानन्दीमुखीकुरुविंदकगवेधुकातोयपर्णीमुकुंदकवेणुयव प्रभृतयः कुधान्यविशेषाः । "उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः । श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपनाः ॥ " इति वचनात् । सुश्रुतेनोष्णपित्तलत्वे उक्ते इह तु शीतपित्तघ्नत्वे इति विरोधः, मैवं विषयभेदात् उष्णत्वं वीर्यण, कटुपाककफघ्नबद्धनिष्यन्दलघुलेखनत्वाद नामुष्णवीर्येषु दर्शनात् । शीतत्वं स्पर्शेन, पित्तलत्वं वात संसृष्टपित्तविषयम्, "वातपित्तप्रकोपनाः" इतिवचनात् पित्तघ्नत्वं–कफसंसृष्टपित्तघ्नत्वं, कफपित्तहृदिति वचनात्

**भग्नसंधानकृत्तत्र प्रियंगुर्बृंहणी गुरुः ॥ १०**

स०—तत्र तेषु तृणधान्येषु मध्ये प्रियंगुः कंगु भग्नस्यांगस्य संधानं करोति । तथा गुरुः । सुश्रुतेने क्तम् । रक्ताः पीताश्च कृष्णाश्च श्वेताश्चैव प्रियंगवः यथोत्तरं प्रधानाः स्यू रूक्षाः कफहराः स्मृताः ॥ १०

प०—तत्र तेषु तृणधान्येषु मध्ये प्रियङ्गुर्भग्नस्य ङ्गस्य सन्धानं करोतीति भग्नसंधानकृत् । बृंहयतीति बृंहणी गुर्वी च ॥ १० ॥

हे०--कङ्गुगुणानाह–भग्नसंधानकृद्भग्नस्याङ्गस्य संधा करोति ॥ १० ॥

**कोरदूषः परं ग्राही स्पर्शशीतो विषापहः ११ ॥**

स०-कोरदूषः कोद्रवोऽत्यर्थं संग्राही तथा स्पर्शशीतो विषापहश्च ॥ ११ ॥

प०-प्रलेपादौ प्रयुक्तः शीतस्पर्शत्वाद्दाहमपहरति। विषमपहन्तीति विषापहः ॥ ११ ॥

हे०-कोद्रवगुणानाह-परमतिशयेन ग्राही, स्पर्शशीतश्च। अतिशयवचनात्कंग्वादीनां ग्राहित्वं, हिमस्पर्शविषयत्वं ज्ञेयम् ॥ ११ ॥

**( उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्धनः ।**
**श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ।)**
**रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ।**
**वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत् ।**
**पीनसश्वासकासोरुस्तंभकंठत्वगामयान् ॥१२॥**

स०-यवो रूक्षादिगुणैर्युक्तो विड्वातकरो वृष्यः स्थैर्यकृच्च । तथा मूत्रादीन् जयेत् ॥ १२ ॥

प०-यवो-रूक्षगुणयोगाद्रूक्षः, शीतः-शीतवीर्यः, सदागुरुः, स्वादुर्मधुरो रसे, सरो-भेदेन, विशं वातं करोतीति विड्वातकृत,अतएव विट्क्षये चास्य प्रयोग उक्तो मुनिना । वृष्यः शुक्रकारी, स्थैर्यं करोतीति स्थैर्यकरः । शरीरदार्ढ्यं करोतीत्यर्थः । तथा मूत्रमेदःप्रभृतीन् जयेत् ॥ १२ ॥

हे०-यवगुणानाह-कण्ठामया गलगण्डादयः, त्वगामया कुष्ठादयः ॥ १२ ॥

**न्यूनो यवादन्ययवः ॥ १३ ॥**

स०-अन्ययवो नाम शूकधान्यविशेषो लोकप्रसिद्धः । स यवान्न्यूनः स्वल्पगुणैर्युक्तः ॥ १३ ॥

प०-यवाकारो नातिपुष्टो यवोऽन्ययव उच्यते । स च यवादिगुणैर्न्यूनः स च यवाकृतिर्लोकप्रसिद्ध एव ॥ १३ ॥

हे०-अनुयवगुणानाह-निःशूको यवोऽनुयवः ॥१३॥

(१) अयं कोष्ठकान्तर्गतः पाठः प्राचीनपुस्तकेषूपलभ्यते।

(२) यवः कषायो मधुरः सुशीतलः प्रमेहजित्तिक्तकफापहारकः । अशूकमुण्डस्तु यवो बलप्रदो वृष्यश्च नृणां बहुवीर्य्यपुष्टिदः ॥ (रा.) ३ "अनुयवः" इति पा० ।

**रूक्षोष्णो वंशजो यवः ॥ १४ ॥**

स०-वंशोद्भवो वेणुयवो रूक्षोष्णो भवति॥१४॥

प०-वंशाज्जातो वंशजो, वंशो वेणुर्यवफल इत्याम्नायात् । स वंशजो यवो रूक्षोष्णः । तथोष्णः उष्णवीर्यः ॥ १४ ॥

हे०-वेणुयवगुणानाह-संग्रहे तु-"उष्णाः सरा वेणुयवाः कषाया वातपित्तलाः । " इति ॥ १४ ॥

**वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा।**
**संधानकारी मधुरो गोधूमः स्थैर्यकृत्सरः १५ ॥**

स०-गोधूमो वृष्यादिगुणयुक्तः । जीवन ओजोऽभिवर्धनः । तथा वातपित्तहरः संधानकारी ऊरुप्रभृतेर्भग्नस्य संधानं करोति । तथा स्थैर्यकृत्सरश्च । चरके त्वन्यथैव गुणयुक्त उक्तः । यथा । स्थैर्यकृत्सकषायश्च बल्यः श्लेष्मविकारहा । संधानकृद्वातहरो गोधूम स्वादुशीतल इति ॥ १५ ॥

प०-गोधूमो-वृष्यः स्त्रीगमनशक्तिकरः, शीत शीतवीर्यः, गुरुगुणयोगाद्गुरुः । तथा स्निग्धः, जीवन ओजस्यः, वातपित्ते हन्तीति वातपित्तहा, सन्धान करोतीति सन्धानकारी, मधुरो-मधुररसः, स्थैर्य करोतीति स्थैर्यकृत्, सरो-भेदी शकृदादीन् भिनत्ति ॥ १५ ॥

हे०-गोधूमगुणानाह--सरोऽनुलोमनः ॥ १५ ॥

**पथ्या नंदीमुखी शीता कषायमधुरा लघुः१६।**

स०-नंदीमुखी पथ्या शरीराय हिता कषायमधुरा लघुश्च । इति शूकधान्यवर्गः ॥ १६ ॥

प०-नन्दीमुखी-कापानी दीर्घसूक्ष्मा जातिर्गोधूमस्य सा पथ्या-पथ्यादनपेता, दोषाणां धातूनां च साम्य

(१) "गोधूमः सुमनोऽपि स्यात्त्रिविधः स च कीर्तितः महागोधूम इत्याख्यः पश्चाद्देशात्समागतः ॥ मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा । निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः ॥ गोधूमो मधुरः शीतो वातपित्तहरो गुरुः कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत्सरः ॥ जीवनो बृंहणो वर्ण्यो व्रण्यो रुच्यः स्थिरत्वकृत् । मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः ॥ शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखी स्मृतः ।" (भा. प्र.)

हतुत्वात् हिता । शीता-शीतवीर्या, रसे कषाया, मधुरा च तथा लघुः लघ्वीति शूकधान्यवर्गः॥१६॥

हे०—नन्दीमुखीगुणानाह--दीर्घसूक्ष्मो गोधूमो नन्दीमुखी, संग्रहे तु—" उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्धनः । शीतवीर्या विशेषेण स्निग्धा वृष्या मधूलिका ॥" इति शूकधान्यवर्गः ॥ १६ ॥

**मुद्गाढकीमसूरादि शिंबीधान्यं विबंधकृत् ।**
**कषायं स्वादु संग्राहि कटुपाकं हिमं लघु॥**
**मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः॥१७॥**

स०--अस्मादनंतरं शिंबीधान्यवर्गस्य संबंधप्रयोजनं पूर्वमुक्तमेव । शिंब्याः कोश्या धान्यं मुद्गादिकं यत् शिंबीधान्यं तद्विबंधकृत् । केषां विबंधं करोति । सामर्थ्यात् स्रोतसां नतु पुरीषादीनाम् । तथा च ग्राहीत्यत्रैव पठति शास्त्रकृत् । संग्राहिलक्षणं च तंत्रांतरे । यथा । भेदि तत्पिंडितान् भावान् शकृदाद्यान्भिनत्ति यत् । विपरीतमतो ग्राहीति। तस्माद्विबंधं स्रोतसामेवेत्याह । तथा कषायं स्वादु कटुपाकं शीतवीर्यं लघु च । मसूरादीत्यत्राऽऽदिशब्देन मकुष्ठचणकादीनां ग्रहणम् । तथा मेदआदिषु हितं प्रकृतत्वादभ्यवहारे तथा लेपोपसेके चेति । चशब्दोऽत्र लुप्तनिर्दिष्टो बोध्यः । लेपः प्रदेहः । उपसेकः परिषेकः । कषायत्वरूक्षत्वेन कटुपाकित्वेन च वातकृत्त्वं शिंबीधान्यस्य शास्त्रकृतोक्तम् । अत एवेदमुपपन्नम् । मुद्गोऽल्पचल इति । यदि हि शिंबीधान्यस्य मारुतकृत्त्वं न स्यात् तदैतदुक्तं युज्यते । तस्माद्वातकृत्त्वमस्यास्तीति स्थितम् । तस्मिंश्च सत्याध्मानकारित्वमप्युपपन्नं । अत एव संग्रहेऽस्याध्मानकारित्वमुक्तम् । मुद्गादीनां च विशेषास्तत्रैवोक्ताः । यथा । हरितास्तेष्वपि वरा मकुष्ठाः कृमिकारिणः । वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशमिति ॥ १७ ॥

प०-व्यजनार्थं शूकधान्यवर्गादनन्तरं शिंबीधान्यस्यारम्भः। आढकी-तुम्बरी। आदिग्रहणात् कषायादीनां परिग्रहः । तन्मुद्गादि शिम्बिधान्यं स्रोतसां बन्धं करोतीति विबन्धकृत् । तथा कषायं, मधुरं रसे । संग्राहि-संग्रहशीलं भवति, यद्भिन्नानां पुरीषादीनां पिण्डितत्वं संहतत्वमुत्पादयति स्तम्भयति । तथा कटुपाकं-कटुकं पच्यते, जाठरेणाग्निना योगाद्रसान्तरमेति । हिमं-शीतवीर्यं लघु च । मेदः-श्लेष्मरक्तपित्तेषु लेपावसेकयोः प्रदेहसेचनयोर्हितं पथ्यम् ॥ १७ ॥

हे०—अथ शिंबिधान्यवर्गः । अथ मुद्गादिगुणानाह—मुद्गो द्विधा-क्षेत्रमुद्गो, वनमुद्गश्च । आढकी, तुवरी । मसूरो द्विविधः—कृष्णः, पाण्डुश्च । तत्र पाण्डुर्मङ्गल्याख्यः आदिशब्दात्संग्रहोक्ताः । " शिंबिजा मुद्गमांगल्यवनमुद्गमकुष्ठकाः । मसूरचवलाढक्यश्रणकाश्च पृथग्विधाः ॥ " इति । शिंबिभवं धान्यं विबंधकृद्वातावरोधकृत्, लेपोपसेकयोः प्रयुक्तं मेदःप्रभृतिषु हितम्, उपसेको व्यञ्जनं येन मिश्रीकृत्यौदनादि भुज्यते, स चात्र योग्यत्वात्सूपः । उक्तं च चरकेण-" पित्तश्लेष्मणि शस्यंते सूपेष्वालेपनेषु च । " इति ॥ १७ ॥

**वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः ।**
**राजमाषोऽनिलकरो रूक्षो बहुशकृद् गुरुः॥१८॥**

स०—अत्र एषु च शिंबीधान्येषु मध्ये मुद्ग उत्तमः। तथा अल्पं चलं पवनं करोतीत्यल्पचलः । तुर्थ्यातिरेके । कलायः पुनरतिशयेन वातलो भवति । राजमाषो रूक्षो बहु शकृत्करोतीति बहुशकृत् । तथा गुरुस्तथाऽनिलकरः । ताच्छील्ये टः । अन्यशिंबीधान्याचातिवातलोऽयमिति वेद्यमनिलकरग्रहणात् । अन्यथा शिंबीधान्यसामान्यलक्षणेन वातमात्रकरणस्य लब्धत्वादनिलकरग्रहणं न कुर्यात् ॥ १८ ॥

प०-अत्र शिम्बिधान्येषु मध्ये मुद्गो वरः उत्तमः तथा अल्पचलः-स्वल्पमारुतः । कडालः पुनर्वातलः, अतितरां वातकरः। "सूपानामुत्तमा मुद्गा लघीयांसोऽल्पमारुताः । हरितास्तेष्वपि वरा मकुष्ठाः कृमिकारिणः॥ पित्तास्रकृमिजिन्मुद्गो लघुः संग्रहणात्मकः। व्रण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशम् ॥" अनिलं करोतीत्यनिलकरो राजमाषः । तथा रूक्षः, बहुशकृत्-प्रभूतपुरीषः अभेदोपचारात् । तथा गुरुः ॥ १८ ॥

हे०—मुद्गस्य विशेषमाह—अत्र तेषु शिंबिधान्येषु मध्ये मुद्गो वरः, मुद्गेष्वपि हरितो वरः, "हरितास्तेष्वपि वराः"

१ अत्र "कडाल" इति पाठान्तरम् ।

इति संग्रहवचनात् । अल्पश्चलो वायुर्यस्मात्स तथा । मुद्गस्य किंचिद्वातलत्ववचनादाढक्यादीनां वातलत्वं ज्ञेयम् । कलायगुणानाह—कलायो द्विविधः—त्रिपुटो, वर्तुलश्च । अतिवातलाः आढक्यादिभ्यः । राजमाषगुणानाह--राजमाषश्चवलः ॥ १८ ॥

**उष्णाःकुलत्थाःपाकेऽम्लाःशुक्राश्मश्वासपीनसान्।**
**कासार्शःकफवातांश्च घ्नंति पित्तास्रदाः परम्॥१९**

स०-कुलत्था उष्णवीर्याः पाकेऽम्लाः । तथा शुक्रादीन् घ्नंति । अश्माऽश्मरी वक्ष्यमाणलक्षणा । तथा पित्तास्रदा परमतिशयेन रक्तपित्तकराः कषायस्वादुसंग्राहित्वं शिंबीधान्यसामान्यलक्षणेनैषां वेद्यम् । दृष्टिनाशनत्वं चोष्णवीर्यत्वेन रक्तपित्तकरत्वेन च । संग्रहे तु स्पष्टं कृत्वोक्तम् । कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः । पीनसश्वासकासार्शोहिक्काऽऽनाहकफानिलान् । घ्नंति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम् । ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिन इति ॥ १९ ॥

प०-कुलत्थाः उष्णाः-उष्णवीर्याः, पाकेऽम्लाः । अम्लं पच्यन्तेऽम्लविपाका इति यावत् । शुक्रेण जनितोऽश्मा शुक्राश्मरी तां शुक्राश्मरीं घ्नन्ति विनाशयन्ति तथा परमत्यर्थं पित्तास्रदा रक्तपित्तकारिणः ॥ १९ ॥

हे०-कुलत्थगुणानाह--उष्णा इति ॥ १९ ॥

**निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरुः ।**
**सरो विदाही दृक्शुक्रकफशोफविषापहः॥२० ॥**

स०-निष्पावो राजशिबीसंज्ञो वातादिकरस्तथा गुरुः सरो विदाही च । तथा दृगादींश्च हंति । संग्रहोक्तं चाम्लपाकत्वं कषायमधुरत्वं चेह नोक्तम् । यतोऽम्लविपाकित्वं विदाहित्वादेवास्योक्तम् । कषायस्वादुत्वं च शिंबीधान्यसामान्यगुणकथनेनैव । कृष्णात्रेयस्त्वाह । निष्पावा मधुरा रूक्षाः सकषाया विदाहिनः । उदावर्ते प्रशस्यंते गुरवो वातपित्तला इति ॥ २० ॥

प०-निष्पावो-वातपित्तरक्तस्त्रीस्तन्यमूत्राणि करोति, गुरुश्च । सरो-भेदनशीलः, विदाही-विदहति गुरुभावाद्विदह्यते । तथा दृष्टिशुक्रकफं शोफं विषं च हन्ति ॥ २० ॥

हे०-निष्पावगुणानाह-निष्पावो वल्लः ॥ २० ॥

**माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ।**
**गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् २१**

स०-माषः स्निग्धो बलादिकरः । तथा सरो गुरुरुष्णश्च । तथा वातहा स्वादुश्च । तथा शुक्रस्य वृद्धिं शुक्रस्यैव विरेकं बहिःप्रेरणं करोति ॥ २१

प०-माषः-स्निग्धगुणयोगात् स्निग्धः । तथा बलं, श्लेष्माणं, मलं, पित्तं च करोति । तथा सरो भेदी, गुरुश्च । उष्ण:-उष्णवीर्यः । अनिलं वातं हन्तीत्यनिलहा । स्वादुर्मधुरो रसे । तथा शुक्रस्य रेतसो बहुत्वं करोति, तस्यैव च शुक्रस्य विरेकं लिङ्ग मार्गेण बहिः प्रेरणं करोति ॥ २१ ॥

हे०-माषगुणानाह-शुक्रस्यैव वृद्धिं शुक्रस्यैव विरेकं शीघ्रप्रवृत्तिं यः करोति स तथा ॥ २१ ॥

**फलानि माषवद्विद्यात्काकांडोलात्मगुप्तयोः २२**

स०-काकांडोला चात्मगुप्ता च तयोः फलानि माषवद्विद्यान्माषसमगुणानि विजानीयात् । काकांडोला कटभी ( कांगोणी ) आत्मगुप्ता कपिकच्छुः ॥ २२

प०-काकाण्डोला ( अनेनैव नाम्ना प्रसिद्धा ) आत्मगुप्ता कपिकच्छूस्तयोः फलानि-सस्यानि, माषवद्गुणैः स्निग्धादिभिर्विद्यात् । माषस्य ये गुणाः सर्वे तयोर्भवन्तीत्यर्थः ॥ २२ ॥

हे०-काकांडोलात्मगुप्ताफलगुणानाह काकांडोला-शूका कपिकच्छूः, आत्मगुप्ता-कपिकच्छूः ।-"कोशाम्रः [illegible] मधुरा वातपित्तहरा हिमा ।" इति ॥ २२ ॥

**उष्णस्त्वच्यो हिमःस्पर्शे केश्यो बल्यस्तिलो गुरुः।**
**अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् २३**

स०-तिल उष्णवीर्यः । तथा त्वच्यः । तथा स्पर्शे शीतः । केश्यो बल्यो गुरुश्च।तथाऽल्पमूत्रोऽल्पमूत्रः पाके कटुः । तथा मेधादीन् करोति । त्वच्य

बल्या हितार्थेऽप्रत्ययांता: । स्निग्धत्वमनिलघ्नत्वं कषायकटुतिक्तरसत्वं नानाजातित्वं चेहास्य ग्रन्थकृता लाघवान्नोक्तम् । संग्रहे तूक्तमेव । यथा । स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः । त्वच्यः केश्यो गुरुर्वृष्यः स्पर्शशीतोऽनिलापहः । अल्पमूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत् । कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुण इति । अन्ये त्वनया युक्त्या संग्रहोक्तमर्थं संगृह्णते । स्निग्धत्वं तावत्तिलस्य तैलेषु मुख्यस्य स्नेहस्य योनिभूतत्वात्सिद्धम् । कफपित्तकृदिति वचनाच्च सामर्थ्यलब्धं वातघ्नत्वम् । कषायस्वादिति शिंबीधान्यसामान्यगुणकथनेन कषायस्वादुत्वं लब्धमिति । एतदेवोररीकृत्य सद्योव्रणप्रतिषेधे वक्ष्यति । कल्कं संरोहणं कुर्यात्तिलानां मधुकान्वितम् । स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजिदिति ॥ २३ ॥

प०—तिलः—उष्णवीर्यस्त्वच्यस्त्वचि साधुः । हिमः—स्पर्शे शीतः । केश्यः-केशेभ्यो हितः । बलाय हितो बल्यस्तथा गुरुः । अल्पं मूत्रं करोतीत्यभेदोपचारात् अल्पमूत्रः स एवोच्यते । तथा पाके कटुः कटुकं विपच्यते, मेधाग्निकफपित्तानि करोति । मेधा प्रज्ञा ॥ २३ ॥

हे०—तिलगुणानाह-उष्णः-उष्णवीर्यः । त्वच्यस्त्वग्दोषहरो बहिः प्रयोगात् । कुष्ठं तत्कार्यमिति तिलो हंति भल्लातकैः सहेति संग्रहे कुष्ठकर्तृत्वश्रवणात् । ननु "तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणे लेपन एव पथ्यः ।" इति सुश्रुतेन विपाके मधुरत्वमुक्तमिह तु कटुकत्वमिति विरोधः । मैवं, रसवदविरोधः । स च कृष्णः श्रेष्ठः, उक्तं च संग्रहे—" कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुणः ।" इति ॥ २३ ॥

**स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः**
**दृक्शुक्रहृत्कटुः पाके तद्वद्बीजं कुसुंभजम् २४**

स०—उमाऽतसी स्निग्धा स्वाद्वादिगुणयुक्तोष्णवीर्या च । तथा दृष्टिं शुक्रं च हरति कटुपाका च तयोमया तुल्यं वर्तते तद्वदुमासमानगुणं कुसुंभबीजमित्यर्थः २४॥

प०—उमा—अतसी स्निग्धा स्वादुतिक्ता, रसे उष्णा वीर्ये कफपित्ते करोतीति कफपित्तकरी, गुर्वी च । तथा दृष्टिं शुक्रं च हरति दृक्शुक्रहृत् । कटुकं पच्यते तद्वदनन्तरोक्तातसीवद्गुणैरगु बोद्धव्यम् ॥ २४ ॥

हे०—अतसीगुणानाह—उमा—अतसी । ननु—"स्नि[illegible]णा कफवातघ्नी सतिक्ता मधुरातसी ॥" इति । स्वार[illegible] दिना श्लेष्मघ्नत्वमुक्तम् , इह तु श्लेष्मलत्वमिति विरो[illegible] मैवं, विषयभेदात् श्लेष्मघ्नत्वं वातसंसृष्टविषयं, श्लेष्म[illegible] पित्तसंसृष्टविषयम् । अतएव सुश्रुतेन कफघ्नत्वं नोक्त[illegible] "उष्णातसी स्वादुरसाऽनिलघ्नी पित्तोल्बणा स्यात्कटु विपाके ।" इति । कुसुम्भबीजगुणानाह-तद्वदुमावत् तत्पुनः कफघ्नत्वं, कटुर्विपाके कटुकः, कफघ्नो विदा भावादहितः कुसुंभ इति सुश्रुतोपदेशात् । ' अतिदेश पदेशो हि बलवान्' ॥ २४ ॥

**माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥२५**

स०—अत्र शिंबीधान्येषु माषोऽश्रेष्ठः । शूक शूकधान्येषु यवकोऽश्रेष्ठः ॥ २५ ॥

प०—अत्र शिम्बिधान्येषु मध्ये माषोऽव ऽश्रेष्ठः ॥ २५ ॥

हे०—माषस्य सर्वधान्यावरत्वमाह--माष इ[illegible] यवकस्य शूकधान्येष्ववरत्वमाह-यवक इति । चक ऽवरत्वाकषणार्थः ॥ २५ ॥

**नवं धान्यमभिष्यंदि लघु संवत्सरोषितम् ।**
**( लघुवर्षोषितं दग्धभूमिजं स्थलसम्भवम् ।**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम्**

स०—नवं प्रत्यग्रं धान्यमभिष्यंद्याभिमुख्येन स्[illegible] यति । ताच्छील्ये णिनिः । मालिन्यात्स्रोतसां स्रुति[illegible] श्लेष्माणं करोतीत्यर्थः । अर्थात्पुराणमनभिष्यंदि संवत्सरोषितं वर्षातीतं लघु भवति । नवं चाथ[illegible] विस्यत्युक्तमप्युक्तं भवति तन्त्रांतरेऽप्युक्तम् । वर्षा[illegible] सर्वमन्नं परित्यजति गौरवम् । नतु त्यजति त[illegible] वीर्यं मुंचत्यतः क्रमादिति । शीघ्रेत्यादि । लघ्वि[illegible] नुवर्तते । सूप्यं मुद्गादि यच्छीघ्रजन्म तल्लघु भव तथा विगततुषं युक्त्या भर्जितं भृशं लघु भवति

१ अत्रार्धश्लोकस्य पाठः क्वचित्पुस्तकेषु दृश्यते ।

हे त्वेवमुक्तम्। नवं धान्यमभिष्यंदि सैक्यं केदारजं
ात्। लघु वर्षोषितं दग्धभूमिजं स्थलसंभवमिति।
शिंबीधान्यवर्गः॥ २६॥

प०—शूकधान्यं शिम्बिधान्यं-नवमनतिक्रान्तव-
ाभिष्यन्दि, स्रोतसां स्रावकम्। आभिमुख्येन
दनमभिष्यन्दः। तेन नवं धान्यं स्यन्दनशीलं
ेतश्लेष्माणं करोतीति तच्छीलम्। अर्थात्
गं संवत्सरोषितमनभिष्यन्दि, संवत्सरातिक्रा-
सर्वं धान्यं लघु, नवं गुर्वनुक्तमप्यर्थादुक्तं भवति।
। संवत्सरातिक्रान्ततया केवलं गुरुत्वमेवोपसा-
लघुत्वमुपपाद्यते, न तु वीर्यमपि हीयते।
र्हि स्नेहगुणः क्रमेणाल्पाल्पमपचीयते, न
तस्यान्यदेवावस्थान्तरम्। रौक्ष्यं नामोपचीयते।
ान्तरेऽप्युक्तम्। "वर्षस्थितं सर्वधान्यं परित्यजति
वम्। न तु त्यजति तद्वीर्यं वीर्यं मुञ्चत्यत:
ात्।" शीघ्रपाकि धान्यं लघु तथा सूप्यं सूपार्हं
ादि शिम्बिधान्यं-निस्तुषं निःशेषेणापहृतक-
कं विगतत्वक्। तथा युक्तिभर्जितं भ्रष्टं लध्विति
म्बिधान्यवर्गः॥ २६॥

हे०—नवधान्यगुणानाह-नवमिति। अभिष्यन्दि-
ःस्रावि। पुराणधान्यगुणानाह-लध्विति। संवत्सरोषितं
त्सरमेवोषितं संवत्सरद्वयाद्युषितस्य निर्वीर्यत्वात्, यदाह
रणादिः-"वर्षास्थितं सर्वधान्यं परित्यजति गौरवम्।
त्यजाति तद्वीर्यं ततो मुञ्चत्यनुक्रमात्।" इति। शीघ्र-
दिगुणानाह-सूपे हितं सूप्यं शिंबिधान्यं तथा तद्वल्लघु
र्थः। शीघ्रमल्पकालेन जन्म-निष्पत्तिर्यस्य तत्तथा
तुषमपनीतत्वक्, युक्त्या सम्यग्योगेन भर्जितं द्रवं
ना स्वेदितं, नवस्याभिष्यंदित्वात्। पुराणस्यानभिष्यं-
त्वं पुराणादीनां लघुत्वात्तद्विपरीतानां गुरुत्वमर्थात्सिद्धं,
प्रहे तु-"हरितास्तेष्वपि वरा मकुष्ठाः कृमिकारिणः।अण्याः
; मलेपाधिर्मसूरा ग्राहिणो भृशम्॥ कुशांत्रशिंबीम-
रा वातपित्तहरा हिमा। मधुराः शीतला गुर्व्यो बलघ्न्यो
क्षणात्मिकाः। स्नेहाढ्या बलिभिर्भोज्या विविधाः शिंबि-
ातयः।"इति। इति शिंबिधान्यवर्गः॥ २६॥

निर्दिष्टे शूकशिंबीधान्ये तयोश्च संस्कृतयोरुपयोग
ति कृतान्नवर्गश्चारभ्यते॥

**मंडपेयाविलेपीनामोदनस्य च लाघवम्।**
**यथापूर्वं शिवस्तत्र मंडो वातानुलोमनः॥**
**तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत्।**
**स्रोतोमार्दवकृत्स्वेदी संधुक्षयति चानलम्॥ २७॥**

स०—मंडादीनां यथापूर्वं लाघवम्। तेनौदनम-
पेक्ष्य लघ्वी विलेपी ततोऽपि पेया पेयातो मंडो
लघुतर इत्यर्थोऽवतिष्ठते। मंडपेयाविलेप्योदनानां
यथापूर्वं लाघवमित्येवं वक्तव्ये यदत्रौदनस्य पृथक्पाठः
स इदं ज्ञापयति। मंडादयो लाजोपादाना वेद्या न तु
तंडुलोपादानाः। तथा च मुनिः। शृतः पिप्पलिशुं-
ठीभ्यां युक्तो लाजांबुदाडिमैः। मंडः संदीपयत्यग्निं वातं
चाप्यनुलोमयेदिति। तदुक्तम्। द्रव्यस्यार्धपलं दत्त्वा
तोयस्य प्रस्थमावपेत्। अर्धशेषं गृहीत्वा तत्कर्षौ द्वौ
दाडिमस्य च। युक्तं सैंधवविश्वाह्वधान्यकैः शाणमात्रकैः।
द्विकर्षमात्रैर्लाजैश्च भूयः संक्वथितं च तत्। पिप्पली-
जीरकाभ्यां च शाणैकेनावचूर्णितम्। पेयास्वेष विधिः
कल्प्यो दाडिमादिकृतास्वपीति। तथा। सिक्थैर्विर-
हितो मंडः पेया सिक्थसमन्विता। घनसिक्था विलेपी
स्याद्यवागूर्विरलद्रवेति। अन्ये तु मंडलक्षणं पेयालक्षणं
चान्यथैवेच्छंति। तथा तल्लक्षणम्। लाजांबुसैंधवकणा-
धान्यनागरदाडिमैः। युक्तो विमृदितः पूतो मंडः
संस्कृत उच्यते। निर्द्रव्या प्राकृता पेया तक्रदाडिमतं-
डुलैरिति। सामान्यपेयायाश्च तक्रदाडिमलाजादिसाधि-
ताया गुणनिर्देशोऽयं न तु विशिष्टाया ज्वरचिकित्सा-
दिविहिताया इति द्रष्टव्यम्। विशेषग्रहणात्कर्मांतरनि-
र्देशाच्च। तत्र तेषु मंडादिषु मध्ये मंडः शिवः। तथा
वातानुलोमनः तथा तृड्ग्लानिदोषशेषं हंतीति तृड्-
ग्लानिदोषशेषघ्नः। अमनुष्यकर्तृके चेत्यत्र ठक्। विहि-
तवमनस्य विहितविरेचनस्य वा किंचिच्छेषो यो दोष-
स्तस्य भावो दोषशेषता वचनज्ञापकात् कृतवमनविरेचन-
नस्य दोषशेषकरणं तेन च वमनकर्मणि विरेचनकर्मणि
वा कर्तव्येऽतियोगभयात्तद्दोषशेषः कार्य इत्ययमर्थो
युक्त्या प्रतिपादितः। तथा मंडः पाचनो धातुसाम्य-
करश्च। तथा स्रोतसां मार्दवं करोति तथा स्वेदयतीति
स्वेदी। वह्निं च दीपयति॥ २७॥

प०—निर्दिष्टे शिम्बिशूके धान्यवर्गे ते चावश्य-
मग्न्यादिसंस्कारे संस्कृते एव योज्ये नान्यथा। अतः

(क)शिम्बिधान्यवर्गादनन्तरं कृतान्नवर्ग आरभ्यते। ण्डादीनां यथापूर्वं क्रमेण लघुत्वं बोद्धव्यम्। यो यः वे:यथापूर्वं तेनौदनो लघुः।तस्मादपि विलेपी लघ्वी, लेप्याश्च पेया लघुतरा ततोऽपि मण्डो लघुतमः। त्र पेयादिभ्यो मण्डस्य प्राधान्यादग्रे निर्देशः। स्य तु प्राधान्यं सर्वेभ्योऽन्नप्रकारेभ्यो वातानुलोम- ादयो गुणा अस्मिन्नेव विद्यन्ते। पिप्पलीनागरदा- ामलाजादिकृतोऽन्नप्रकारस्तनीयान्मण्डः। तथा रकेऽप्युक्तम्—"शृतः पिप्पलिशुण्ठीभ्यां युक्तो ाजाम्बुदाडिमैः। मण्डः संदीपयत्यग्निं वातं चाप्य- ोमयेत्" ततः स्वस्थान्मण्डात्किंचिद्घना पेया तो घनतरा विलेपी। तथाचागमः—"सिक्थैर्वि- हेतो मण्डः पेया सिक्थसमन्विता। घनसिक्था लेपी स्याद्यवागूर्विरलद्रवा॥" ओदनो भक्त च्यते। तत्र तेषु पेयादिषु मध्ये मण्डः शिवो ादोषः,स्वास्थ्यकारी श्रेयस्करइत्यर्थः। वातानुलो- नो—वातमनुलोमयति,विमार्गगं स्वमार्गे स्थापय- त्यर्थः। विस्पष्टं स्पष्टीकरोति। तथा तृड्ग्लानि- षशेषघ्नः—पिपासाक्लमदोषशेषहन्ता। कृतवमन- रेचननिरूहाः कर्तव्याश्चातियोगभयादित्यर्थः। चयति आमान् दोषान् वापाचनतया वातादीनां ादीनां च धातूनां साम्यं करोति धातुसाम्य- त्॥ २७॥

हे०—अथ कृतान्नवर्गः। तत्र मण्डादीनां लघुत्वतार- म्यमाह—असिक्थं द्रवं मण्डः, ससिक्थं यवागूः सा द्वि- धा—अल्पसिक्था पेया, बहुसिक्था विलेपी, अद्रवाणि क्थान्योदनः, यथापूर्वम् ओदनाद्विलेपी लघुः, ततः ा ततो मण्ड इति मण्डगुणानाह—शिव आरोग्यप्रदः, नलंघनाद्यवशिष्टदोषो दोषशेषः, धातुसाम्यकृल्लंघनादि- धातुवैषम्यशमनात्॥ २७॥

**तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा। लानुलोमनी पथ्या पेया दीपनपाचनी॥२८॥**

स०—क्षुच्च तृष्णा च ताभ्यां ग्लानिः सा च बल्यं च कुक्षिरोगश्च ज्वरश्च तानपहंति या सैवंभूता ा। दौर्बल्यं कार्श्यम्। तथा मलान्वातादीननुलोम- ते स्वमार्गस्थान् करोति। पथ्या शरीरस्य हिता। ा दीपनी पाचनी चेति। पुंवत्कर्मधारयेति द्भावः॥ २८॥

प०—पेया—क्षुदादिज्वरपर्यन्तं हन्ति। ग्लानिरप- चयः, दौर्बल्यं—शून्यप्राणिता। कुक्षिरोगातीसारग्र- हणीदोषशूलगुल्मविद्रध्यादिवातादीननुलोमयति। वातानुलोमनी वातादेः तस्य स्वमार्गस्थापिनी। पथ्या-हिता। दीपयत्यग्निमिति दीपनी, पाचयत्याम- मिति पाचनी च॥ २८॥

हे०—पेयागुणानाह—कुक्षिरोगः अतीसारः,पथ्या औप- धरूपत्वात्॥ २८॥

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता। व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम्॥ २९॥**

स०—विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता च। व्रणश्चाक्षिरोगश्च संशुद्धिश्च दुर्बलश्च स्नेहपायी च तेषां हिता। व्रणाक्षिरोगशब्दौ मत्वर्थीया- कारांतौ॥ २९॥

प०—हिता-पथ्या। स्नेहं-घृतादि, तं पिबन्ति ये ते स्नेहपायिनः तेषां पथ्या॥ २९॥

हे०—विलेपीगुणानाह—व्रणादीनां हिता, संशुद्धः— सम्यक्कृतवमनादिः, यः स्नेहनार्थं प्रत्यहं स्नेहं पिबति स स्नेहपायी॥ २९॥

**सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः यश्चाग्नेयौषधक्वाथसाधितो भृष्टतंडुलः॥ विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः॥३०**

स०—ओदनः सुष्ठु धौतस्तथा प्रस्रुतो निश्च्योतितः स्विन्नोऽत्यक्तबाष्पश्च लघुर्भवति। यश्चौदन आग्नेयौषधानां चित्रकादीनां क्वाथेन साधितः सोऽतिलघुः। तथा भृष्टास्तं- डुला यस्मिन्नोदने सोऽतिलघुतमः। यथोक्तलक्षणादोदना- द्विपरीतो योऽसुधौतादिः स गुरुः। क्षीरमांसादिभिर्म- धुरैर्यश्च साधितः सोऽतिगुरुः॥ ३०॥

प०—य ओदनः सुधौतः सुष्ठु प्रक्षालितः तथा प्रस्रुतः-प्रकर्षेण स्रावितः, स्विन्नः—सुसिद्धः। तथा- ऽत्यक्तोष्माऽपरित्यक्तबाष्पः सन्तप्तो लघुः। यश्च, प्योदन आग्नेयानां पंचकोलादीनां क्वाथैः साधितः- भृष्टैश्च तण्डुलैः भृष्टपक्वैर्लाजादिभिः सिद्धः स लघुः विपरीतो य ओदनः पूर्वोक्ताद्यथोक्तलक्षणात् स गुरुः। यो न धौतो, नापि प्रस्रुतो, न च स्विन्नश्चो-

तश्च, न भृष्टो,नाग्नेयौषधक्काथसाधितश्च स गुरुः।यश्च क्षीरमांसाद्यैः साधितः सोऽपि गुरुः । आदिग्रहणाच्छागवसातैलघृतमज्जाफलमाषतिलमुद्गादिसाधितानां ग्रहणम् ॥ ३० ॥

हे०—ओदनगुणानाह--सुधौतादिविशिष्ट ओदनो लघुः तद्विपरीतः क्षीरादिसाधितश्च गुरुः, सुधौतः-सम्यक् प्रक्षालिततण्डुलः, प्रस्रुतः--सम्यक्प्रसारितमण्डः, स्विन्नः--सम्यक्पक्वः, अत्युक्तोष्णः--शीतत्वमप्राप्तः, आग्नेयौषधक्काथसाधितः, भृष्टतण्डुलः भृष्टैस्तण्डुलैः साधितः । विपरीतः अधौततण्डुलादिः यश्च क्षीरादिनिद्रवस्थाने दत्त्वा साधितः, मांसशब्देनात्र मांसरसः, आद्यशब्दात्स्नेहादयः, क्षीरादिसाधने उदकं प्रक्षेप्यमेव । उक्तं च संग्रहे—"क्षीरादिसाधितं द्रव्यं न सम्यङ्मुक्तरसं संभवति" इति।वारिक्वाथपूर्वकं क्षीराद्यैस्तदुपदेशानुपदग्धं क्वाथयेदिति ॥ ३० ॥

**इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ३१**

स०"इत्यनया दिशा सर्वं पेयादिकं पूर्वोक्तं वक्ष्यमाणं च भक्ष्यादिकं द्रव्येण क्रियया सयोगेन मानेन चादिशेत् । तत्र द्रव्यतो यथा । ओदनस्य रक्तशाल्यादिजस्य लाघवम् । यावकादिजस्य तु गौरवम् । क्रियातो यथा । पाकादिसंस्काराच्छूल्यमांसस्य लघ्वादिगुणयोगः । अपरस्य त्वन्यथात्वं दृश्यते । तथा चोक्तं तंत्रांतरे । वृष्यं वातहरं बल्यं पथ्यं शूल्यामिषं लघु।अपथ्यं गुरु विष्टंभि मांसं यच्च रसोद्धृतमिति।तंत्रांतरे चोक्तम् । स्विन्नं मांसं गुरु स्तंभिशूलपक्वं त्रिदोषजिदिति।क्रिया संस्कार इत्यर्थः। योगः संयोगस्तेन यथा । आग्नेयचित्रकाद्यौषधक्काथैः साधितस्य लाघवम् । मानतो यथा। बहुभिर्लघुभिरल्पैश्च गुरुभिर्युक्तैर्लघुरेव । विपरीतैस्तु विपरीत एव। आदिग्रहणेन देशादिपरिग्रहः । जांगलदेशप्रभवतंडुलकृतो लघुः । आनूपदेशतंडुलकृतो गुरुरित्यादि बोध्यम् ॥ ३१ ॥

प०—इत्येवमनया दिशा सर्वमनुक्तं कृतान्नजातं द्रव्यक्रियायोगमानाद्यैरादिशेत् जानीयात् द्रव्यतो यथाशालिषष्टिकहरिणैणमुद्गादीनि द्रव्याणि प्रकृतिलघूनि क्षीरेक्षुमाषानूपमांसादीनि प्रकृतिगुरूणि तेन रक्तशाल्यादिप्रभवस्यौदनस्य, लाघवं, क्षीरेक्ष्वादिप्रभवस्य गौरवम्। करणं क्रियासंस्कारः। स च तोयाग्निसंनिकर्षभावनाभाजनादिभिरुपजन्यते । तथा चरकमुनिः। करणं पुनः स्वाभाविकानां द्रव्याणामभिसंस्कारो गुणस्तोयाग्निसंनिकर्षशौचमन्थनदेशकालवासनाभाजनादिभिश्चाभिधीयते । योगः सह संयोग उच्यते । द्रव्यस्य द्रव्यान्तरेण सम्बन्धः। तथाच चरकमुनिः । संयोगस्तु द्वयोर्बहूनां वा द्रव्याणां संहती भावात् सविशेषमारभते यन्नैकशो द्रव्याणि मानं, परिमाणं, कर्षपलकुडवप्रस्थादिकं, तच्च मात्रामात्रफलनिश्चयार्थम् । आदिग्रहणाद्देशकालशरीरावयवादीनां परिग्रहः । तथा चाचार्यवचनम् । चरकः शरीरावयवाः स्वभावो धातवः क्रियासंस्कारो, मात्रा, चास्मिन्निरीक्षते । तत्र चोदाहरणानि तेनैव दत्तानि । वरोऽनूपजलाकाशधन्वधोभक्षसंविधिः । जलजानूपजाश्चैव जलानूपचराश्च ये । गुरुभक्षाश्च ये सत्वास्ते सर्वे गुरवत् स्मृताः । लघुभक्ष्याश्च लघवो धन्वना धन्वचारिणः । इति । "शरीरावयवाः सक्थिशिरस्कन्धादयस्तथा । सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः ॥ वृषणश्चर्ममेढ्रे च श्रोणी वृक्कौ यकृद्गुरु । मांसाद्गुरुतरं विद्याद्यथास्वं मध्यमस्थि च ॥" इति शरीरावयवाः। "स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः। स्वभावाद्गुरवो माषा वराहमहिषास्तथा ॥ " इति स्वभावः। " धातूनां शोणिताद्यानां गुरु विद्याद्यथोत्तरम् । " इति धातवः । "अलसेभ्यो विशिष्यन्ते लघवो ये बहुक्रियाः । " इति क्रिया"गौरवं लिङ्गसामान्ये पुंसां स्त्रीणां तु लाघवम्।"इति लिङ्गम् । " महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ।" इति प्रमाणम्। " गुरूणां लाघवं विद्यात्संस्कारात्सविपर्ययम् । व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डिकाः।" इति संस्कारः । अल्पादाने गुरूणां च लघूनां चातिभोजने।मात्राकारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥ गुरूणामल्पमादेयं लघूनां तृप्तिरिष्यते । मात्रामपेक्षते द्रव्यं मात्रा चाग्निमपेक्षते ॥ " इति मात्रा । सर्वमेतच्चास्मिन्निरीक्ष्यमिति ॥ ३१ ॥

हे०—ओदनप्रसंगादुदाहरणं परिभाष्याह--इत्येवमोदनवत् द्रव्यादीनां कारणानां स्वरूपं शास्त्रे बुद्ध्वा कार्याणां स्वरूपमकथितमपि स्वबुद्ध्या निर्धार्य मंदबुद्धीनां कथयेदित्यर्थः । तत्र कार्यत्वेन परिणतं कारणं द्रव्यं तत्परिणामहेतुः, कर्तृव्यापारः क्रिया, प्रधानद्रव्ये द्रव्यान्तर--

संपर्को योगः, संयोगिनां न्यूनाधिकसमत्वं मानम्, आदिशब्दादेशकालौ। तत्र द्रव्यस्योत्पत्तिस्थितिपरिणामस्थानं देशः, उत्पत्त्यादिसमय आमाद्यवस्थाश्च कालः। तत्र द्रव्येणादेशो यथा--रक्तशालीनामोदनः पथ्यो, यवकानामपथ्यः। क्रियया यथा--भृष्टविदलितनिस्तुषीकृतानां सूप्यानां सूपो लघुरितरेषां गुरुः। योगेन यथा--मरीचादियुक्ता मांसभक्षा लघवः, मरीचाद्ययुक्ता गुरवः। मानेन यथा--मिश्रकौदने मुद्गाद्यल्पबहुत्वाभ्यां लघुगुरुत्वे। उत्पत्तिदेशेन यथा--दग्धावनिजातानां शालीनामन्नं लघु, इतरेषां गुरु। उक्तं हि सुश्रुतेन--"दग्धायामवनौ जाताः शालयो लघुपाकिनः।" इति। स्थितिदेशेन यथा--दुर्भाजनस्थाभिर्द्राक्षाभिः कृतं पानकं दोषलमितराभिरदोषलम्, उक्तं हि--"दुर्भाजनस्था द्राक्षाम्ला दोषला च प्रजायते।" इति। परिणामदेशेन यथा--मृन्मये पात्रे सिद्धानां तंदुलानामोदनो गुरुः, ताम्रमये लघुः। उत्पत्तिकालेन यथा--आर्तवेन द्रव्योदकेन सिद्धमन्नं पथ्यम्, अनार्तवेनापथ्यम्। स्थितिकालेन यथा--रात्रिभुषितेन शृतशीतेनालोडितमपथ्यमितरेण पथ्यम्। परिणामकालेन यथा--शीघ्रजन्मना सूप्येन कृतः सूपो लघुश्चिरजन्मना गुरुः, आमाद्यवस्थाकालेन यथा--आमेन शुष्केण वा मूलकेन कृतो यूपः पथ्यः, जीर्णेनार्द्रेण वा कृतोऽपथ्यः इत्यादि स्वबुद्ध्या सर्वमूह्यम्॥ ३१॥

**बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ३२॥**

स०--रस इति मांसरसः। आदिशब्दलोपात् स बृंहणादिगुणयुक्तः। कृताकृतस्य च रसस्यायं गुणनिर्देशो बोध्यः। रसो हि स्नेहशुंठ्यादियुतः कृत इत्युच्यते विपरीतस्त्वकृतः। तेन कृतस्य तंत्रांतरे विधानमप्युक्तम् गुणाश्च। यथा। छागलं सक्थिजं मांसं निरस्थि तैत्तिरं तथा। चतुष्पलान्वितं सूक्ष्मं कल्पितं क्षालितं जले। पिप्पलीपिप्पलीमूलशुंठीचित्रकधान्यकैः। द्विशाणैः संयुते तोये क्वाथं सार्धाढकोन्मिते। मांसेऽस्मिन् द्विपलं तत्र दाडिमान्कुट्टितान्क्षिपेत्। तं रसं मर्दितं पूतं हिंगुसैंधवजीरकैः। युक्तं प्रधूपितं पथ्यं शुद्धानां शुद्धिकांक्षिणाम्। शुष्यतां व्याधियुक्तानां व्रणिनां वातरोगिणाम्। भग्नविश्लिष्टसंधीनां क्षीणधात्विद्रियौजसामिति। तंत्रांतरे चोक्तम्। रसस्तत्र वरोऽम्लः शाकुनो बृंहणः सरः। तक्रसिद्धस्तु विष्टंभी लघुर्वातकफापहः। फलाम्लगोरसोदारं सविश्वाजाजिधान्यकम्। स्निग्धं मांसं हितं बल्यं बृंहणं रोचनं गुरु। कासमर्दकधान्याम्लदाडिमादिरजःकृताः। लेहास्तक्रादिजाश्चान्ये योनिवद्गुरुरोचनाः। मालुधानीयवासादिपुष्पैर्योऽतिगुणःखलः। फलमूलैर्वनादानं व्यंजनं पाकतो वनम्। लेहवत्खल इत्यन्ये दोषलाः स्वस्वयोनिवत्। तच्च तिलकल्काम्लप्रायः कांबलिको मतः। कट्वरः कफजिद्ग्राही पित्तलो रोचको लघुः। मांसादजातिशुंठ्यादिगलितः सोदको लघुः॥ ३२॥

प०--रसो मांसरसः। तथा चागमः--"रसद्रव्यविशेषोक्तो ज्ञेयो मांसभवो रसः।" संग्रहेऽप्युक्तम्--पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः। मूलैश्च तिलकल्काम्लप्रायः कांबलिकः स्मृतः। ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः। स च रसो बृंहणो-बृहत्त्वकृत्। प्रीणनो-धातून् प्रीणाति, वृष्यः शुक्रजननः, चक्षुष्यः--चक्षुषोः पथ्यः, व्रणहा-व्रणघ्नः॥ ३२॥

हे०--मांसरसगुणानाह--प्रीणनः तृप्तिजनकः, रसो मांसरसः, उक्तं हि संग्रहे--"विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम्। गौरवं तनुसांद्राम्लस्वादुष्वेषु पृथक्पृथक्॥"इति। संग्रहे--"शुष्यतां व्याधियुक्तानां नराणां शुद्धिकांक्षिणाम्। कृशक्षामक्षतोरस्कक्षीणधात्विंद्रियौजसाम्॥ दृष्टिश्रवणबुद्ध्यायुर्बलवर्णस्वरार्थिनाम्। भग्नविश्लिष्टसंधीनां व्रणिनां वातरोगिणाम्॥ हृद्यः पथ्यः परं वृष्यो बृंहणः प्रीणनो रसः"इति। शुष्यतां वृद्धिं त्यजतां, कृशानां स्थूलत्वं त्यजतां, क्षामाणां बलं त्यजताम्॥ ३२॥

**मौद्गस्तु पथ्यः संशुद्धव्रणकंठाक्षिरोगिणाम् ३३**

स०--मौद्गो रसो यूषो व्रणिनां कंठरोगिणां च पथ्यः। अस्य च संस्कृतस्य विधानमुक्तम्। मुद्गानां द्विपलं तोये शृतमर्धाढकोन्मिते। पादस्थं मर्दितं पूतं दाडिमस्य पलेन तु। युक्तं सैंधवविश्वाह्वधान्यकैः पादकार्षिकैः। कणाजीरकयोश्चूर्णाच्छाणैकेनावचूर्णितम्। संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः। तथा। पटोलपत्राच्छाणार्धं मुद्गानां द्विपलं जले। द्रव्याद्द्वात्रिंशद्गुणिते अतश्च दाडिमात्पलम्। कर्षमामलकानां च क्षिप्त्वा पु-

नरधिश्रयेत् । पूतं तत्सैंधवाद्यैश्च युक्तमाज्येन योजितम् । पटोलपत्रकाख्योऽयं यूषः पित्तोत्थरोगजित् । निंबपत्रैर्निंबयूषमेवमेव प्रकल्पयेत् । मूलकाच्छुंठिका स्विन्ना घृतभृष्टा सधान्यका । हिंगुजीरकसंयुक्ता ततो मथितदाडिमे । ससैंधवे विनिक्षिप्य पुनरग्नावधिश्रयेत् । तावद्यावन्मृदूभूतं तत्त्र्यूषणसंयुतम् । सुधूपितं हिंगुघृतैश्चातुर्जातावचूर्णितम् । शुण्ठीरसं दीपनीयं वातश्लेष्मामयापहम् । अकृताकृतयूषाच्च रसाच्च जलसाधितात् । स्नेहाम्लपटुयुक्ताच्च पूर्वः पूर्वो लघुर्मतः । विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम् । गौरवं तनुसांद्राम्लस्वादुष्वेषु पृथक्तया । तथोक्तम् । खलकाम्बलिकौ हृद्यौ साधितौ स्वौषधानुगौ । पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः । मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः । ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः । अल्पमांसादायः स्वच्छा दकलावणिकाः स्मृताः । स्वल्पेन मांसेन शुंठ्यादिभिः स्वल्पैः स्वच्छा ये क्रियन्ते ते दकलावणिका बोध्याः । एवं यूषे यत्र धान्यमल्पं खलादौ वा मूलादीन्यल्पानि तस्याऽपि दकलावणिकत्वं बोध्यम् । तन्त्रातरे चोक्तम् । अथ गोरसधान्याम्लफलाम्लैरम्लितं च यत् । यथोत्तरं लघु हितं संस्कृतासंस्कृतं तथा । प्रभूतास्तमलो यूषः सूपाल्लघुतरः स्मृतः । सूपस्तु रसयूषाभ्यां स्थैर्याद्गुरुतरो मतः । तं सरोगो चाश्नीयान्न चाल्पाशी कथंचनेति ॥ ३३ ॥

प०–मुद्गानामयं मौद्गो रसः । संशुद्धानां व्रणिनां कण्ठरोगिणां तत्र रोगिणां च पथ्यो हितः ॥ ३३ ॥

हे०–मुद्गयूषगुणानाह—रस इत्यनुवर्तते । मौद्गो रसो मुद्गयूषः यूषो धान्यैरित्युक्तत्वात् । संशुद्धादीनां पथ्यो हितः, कंठाक्षिभ्यां रोगिशब्दः संबध्यते ॥ ३३ ॥

**वातानुलोमी कौलत्थो गुल्मतूनीप्रतूनिजित् ३४**

स०–कौलत्थो यूषो वातमनुलोमयति गुल्मादींश्च जयति । तूनिप्रतूनीरोगौ गुल्मनिदाने वक्ष्यमाणलक्षणौ ॥ ३४ ॥

प०–कौलत्थो रसो-वातानुलोमी वातमनुलोमयति तच्छीलः । तथा गुल्मं तूनीं, प्रतूनीं च जयति । तूनीप्रतून्योर्लक्षणं गुल्मनिदाने वक्ष्यमाणम् । तन्त्रान्तरेऽप्युक्तम्-"अधो या वेदना यान्ती वर्चोमूत्राशयस्थिता। भिनत्तीव गुदोपस्थं सा तूनी नाम नामतः।" तथा–"गुदोपस्थोत्थिता चैव प्रातिलोमप्रधाविता । वेगैः पक्वाशयं याति प्रतितूनीति सा स्मृता" ॥ ३४ ॥

हे०–कुलत्थयूषगुणानाह-तूनिप्रतून्यौ गुल्मनिदाने वक्ष्यते।

**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् । शांडाकीवटकं दृग्घ्नं दोषलं ग्लपनं गुरु ॥ ३५ ॥**

स०–तिलस्य विकृतिः पिण्याकस्य च । तथा शुष्कशाकादि दृष्टिघ्नं विदोषकरं ग्लानिकरं गुरु च । अंकुरित सस्यं विरूढकम् । शांडाक्यपि तन्त्रादिका शांडाकीवटकम् ॥ ३५ ॥

प०–तिलानां पिण्याकस्तिलकल्कः । तस्य विकृतिर्विकारो व्यञ्जनत्वेनोपयोगः । शुष्कं च तच्छाकं च शुष्कशाकम् । विरूढमंकुरितधान्यम् । शाण्डाक्यां स्थापितं वटकं शाण्डाकीवटकम् । एतत्सर्वं दृष्टिघ्नमचक्षुष्यम् । दोषलं-दोषसञ्चयकारि, त्रिदोषकोपनमिति यावत् । ग्लपनं-ग्लानिकरं, गुरु च । शाण्डाकीवटकमिति वटकसंनिधानात् परिशुष्कमाषादिमयः शाण्डाक्यो गृह्यते । पूर्वे पुनरध्याये शाण्डाकी चासुतं चान्यदिति द्रव्याणां प्रक्रान्तत्वादासुतशब्दसंनिधानाच्च मूलकसर्षपादिशाकादकथितासुतातिकाले राजिकाचूर्णभाविताम्लतीक्ष्णाभि शाण्डाकीशब्देनोच्यन्ते ॥ ३५ ॥

हे०–तिलविकृत्यादीनां गुणानाह-तिलविकृतिः-मधुराण्ड-कादिः । उद्धृततैलास्तिलादिपिण्डः पिण्याकस्तद्विकृतिः पिण्डीवटिकादिदेशीयः । शुष्कं शाकं-शुष्कवार्ताककचरिकादि, विरूढकमङ्कुरितं धान्यं घृतान्नप्रस्तावादङ्कुरितधान्यकृतमत्र ग्राह्यम् । येन वटकेन शांडाकी क्रियते तच्छाण्डाकीवटकं—दृग्घ्नं दृष्टिनाशनं, दोषलं त्रिदोषकरम्, ग्लपनं—ग्लानिकरम् ॥ ३५ ॥

**रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ३६**

स०–रसाला करमथितेन मरीचशर्करादियुक्तेन दध्ना कृता उल्लेखिकासंज्ञा बृंहणी देहस्य बृहत्त्वकरी वृष्यादिगुणयुक्ता च ॥ ३६ ॥

प०–रसाला-मार्जिता, हस्तमथितेन त्रिजातकमरिचशर्करादिभिः संयुक्तेन दध्ना पदे सुमार्जितेन

ता, बृंहणी-देहस्य बृंहत्त्वकरी, वृष्या-शुक्रला, ग्धत्वगुणयोगात् स्निग्धा, बल्या-बलप्रदा, रुचि-दा-रुच्या रुचिकरी ॥ ३६ ॥

हे०--रसालागुणानाह--मरीचशर्करादियुक्तं करमथितं धि--रसाला ॥ ३६ ॥

**मक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।**
**ष्टंभि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ॥ ३७ ॥**

स०--पानकं श्रमादिहरं प्रीणनादिगुणयुक्तम् । णनं मनःप्रीतिकरं यथाद्रव्यगुणं च । स्वादुना गेन च युक्तम् । पर्पटादीनां लाघवादिह गुणा नोक्ताः। गा । पर्पटा लघवो रुच्या लवीयान् क्षारपर्पटः । घा वृष्या रुचिकरा गुरवो रागखांडवाः । प्रीणना मतृट्छर्दिमदमूर्छाश्रमच्छिदः ॥ ३७ ॥

प०--पानकं--जलक्षौद्रत्रिजातकमरिचद्राक्षाखर्जू-दिकृतमनेकविधं क्षुत्तृट्क्लमान् हरति श्रमक्षुत्तृट्-लमहरम्, प्रीणयतीति प्रीणनं, संतर्पकं, गुरु च । ष्टम्भि-स्रोतोविष्टम्भकारि, मूत्रलं-मूत्रजनकं, बहु-त्रं करोति । हृद्यं-हृदयप्रियम् । यथा यथा द्रव्यैः ज्यते त्रिजातकमाक्षिकगुडद्राक्षादिभिस्तेषां ये णास्ते सर्वे पानकस्य बोद्धव्या इत्यर्थः ॥ ३७ ॥

हे०--पानकगुणानाह--गुडाम्लिकादिसंस्कृतम् । उद-ादिद्रवं पानकं, यथा द्रव्यगुणं यैर्द्रव्यैः क्रियते तद्गुणान-वर्तते । एतेन सुश्रुतादिभिरुक्तानां द्राक्षादिपानकानां गुणा क्ताः ॥ ३७ ॥

**ाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ।**
**ासपित्तोपशमना दीपना लघवो हिमाः ॥ ३८ ॥**

स०--लाजास्तृडादींश्छिदंति । कासपित्ते चोपश-यंति । तथा दीपना लघवः शीतवीर्याश्च ॥ ३८ ॥

प०--अग्निदीप्तिं कुर्वन्ति, लघवो-लघुगुणयुक्ताः हिमाः-शीतवीर्याः ॥ ३८ ॥

हे०--लाजानां गुणानाह--भृष्टानां शालीनां तण्डुला ाजाः ॥ ३८ ॥

**ृथुका गुरवो बल्याः कफविष्टंभकारिणः ॥ ३९ ॥**

स०--हरितधान्यानि निस्तुषभृष्टमुशलहतानि पृथु-ाश्चिपिटसंज्ञा गुरुत्वादियुक्ताः ॥ ३९ ॥

प०--हरितधान्यानि--निस्तुषभृष्टमुशलाहतानि, पृथुकशब्दवाच्यानि । पृथुका भृष्टतण्डुला इति केचित् । पृथुकश्चिपिटो ज्ञेय इति । ते गुरवः,बल्याः-बलावहाः, कफविष्टम्भं च कुर्वन्ति कफविष्टम्भका-रिणस्तच्छीलाः ॥ ३९ ॥

हे०--पृथुकगुणानाह--अशुष्कधान्यानां भृष्टास्तण्डुलाः पृथुकाः ॥ ३९ ॥

**धाना विष्टंभिनी रूक्षा तर्पणी लेखनी गुरुः ४०**

स०--धाना भृष्टयवादिर्विष्टंभिनी रूक्षादिगु-णयुक्ता च ॥ ४० ॥

प०--यवाद्या भृष्टा धाना इति संज्ञिताः भरूम-परपर्याया सा धाना-विष्टम्भिनी स्रोतसां स्तम्भज-ननी, रूक्षा-रूक्षगुणयुक्ता, तर्पणी-तृट्जननी, लेखनी श्लेष्मादींल्लिखति, हिनस्ति, गुर्वी च ॥ ४० ॥

हे०--धानागुणानाह--भृष्टयवादिधान्यं धानाः । अन्ये तु यवानेव भृष्टान् धानाशब्देनाहुः । उलुम्बादींश्च पृथक् पठंति यदाह सुश्रुतः-"धानोलुम्बास्तु लघवः कफमेदोवि-शोषणाः । इति ।" लघवः पाके लाघवगुणकाः स्वमते गुरोर्लघुत्वात् ॥ ४० ॥

**सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् ।**
**घ्नंति संतर्पणाः पानात्सद्य एव बलप्रदाः ॥**
**नोदकांतरितान्न द्विर्न निशायां न केवलान् ।**
**न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून्**

स०--सक्तवो लघवः क्षुधादींश्च घ्नंति। तथोदक-मिश्रिताः संतर्पणाः सद्य एव बलं कुर्वंति । तांश्च जलेनांतरितान्व्यवहितान्नाश्नीयात् । अन्यभोजनेषु ह्यंतरा पानं विहितं न तथा सक्तुषु कार्यमिति बोध-यति । तथा न द्विर्द्वौ वारौ नाद्यात् । न निशायां रात्र्याम् । न केवलानुदकादिरहितान् । न भुक्त्वा-ऽन्यद्भोजनादि । न द्विजैश्छित्त्वा दंतैः करस्थं पिंड छित्त्वेत्यर्थः । बहूंश्च सक्तून्नाद्यात् । तंत्रांतरे चोक्तं रूक्षवातलत्वं सक्तूनामिह नोक्तम् । लघुत्वादिनैवावग-तत्वात् । ननु रूक्षवातलं चेदभ्युपगम्यते सक्तूनां ततः संतर्पणा इत्यनुपपन्नम् । सद्य एव बलप्रदा इत्येतदप्य-युक्तम् । युक्त्या ह्याहारः परिणमति । स धातुपु-

ष्ट्यै नान्यथा । अत्राचक्ष्महे । प्रभावादुभयमप्येतदुक्तम् । सक्तूनां ह्ययमचिंत्यः प्रत्यक्षवेद्यः प्रभावो यत्पीताः संतः संतर्पयंति । सद्य एव च बलं प्रयच्छंति । वाजीकरणं ह्यपरिणतमेव स्वकार्यं जनयति । तथा च मद्यं परिणतमेव मदं जनयति तस्मात्संतर्पणत्वं फलप्रदत्वं चैषामुपपन्नमेव । तंत्रांतरे चोक्तम् । तुल्याज्यः सक्तुप्राशस्तु वृष्यो मेदी रसायनम् । तृट्छर्दिश्रमनुन्मद्यपीततृष्णानिवर्तकः । प्रमेहक्षयकुष्ठानि न च स्युर्मंथपायिनाम् । निचयात्कठिना गुर्वी पिंडी प्रोक्ता मृदुर्लघुः । सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका । लाजसक्तुकृताऽपि स्याद्विलेपी तु गरीयसी ॥ ४१ ॥

प०–सक्तवो–यवाद्युद्भवाः लघवो लघुगुणयुक्तास्तथा क्षुद्रादीन् घ्नन्ति, संतर्पणं कुर्वन्ति ये ते संतर्पणाः, पानादुदकादिभिराप्लुताः, सद्य एव तत्काल एव बलप्रापकाः । रूक्षत्वात् सक्तवः समीरणकोपना इति चेन्न,प्रभावमधिकृत्य सद्यस्तक्रादिभिः पतिं संतर्पयन्तीत्युक्तं तदा चिन्त्य इति मुनिराह–पानभुक्तादीनि सद्यःपुष्टिकर्तॄणि दृष्टानीति । यथा–वाजीकरणानि सद्यः पुष्टिजननानीत्येवं व्यवस्येत् । संग्रहेऽप्युक्तम्-"सक्तवो वातला रूक्षाः पीतास्ते तर्पयन्ति तु । नोदकान्तरितान्न द्विर्न निशायां न केवलान् । न भुक्त्वा न द्विजैः स्थित्वा सक्तूनद्यान्न वा बहून् । " सक्तूनुदकान्तरितान्नाद्यान्न भक्षयेत् । उदकेन जलेनान्तरिता व्यवहिताः । आदौ सक्तूनां भक्षणं, मध्ये जलं,पुनःसक्तुभक्षणं, पुनरुदकमिति । अन्तरिताः तोयं पीत्वाऽन्तराऽन्तरा सक्तून्न भक्षयेदित्यर्थः । द्वौ वारौ द्विरुभयकालं सक्तून्नाद्यात् । निशायां रात्रिकाले सक्तून्नाद्यात् । अलक्ष्मीप्रवर्तनात् । केवलानुदकादिद्रवद्रव्यरहितान्नाद्यात् । तथान्यद्भक्तादिकं भुक्त्वा सक्तून्नाद्यात् । द्विजैर्दन्तैः करस्थां पिण्डीं स्थित्वा सक्तून्नाद्यात् । तथा बहून् प्रभूतान् सक्तून्नाद्यात् ॥ ४१ ॥

हे०--सक्तुगुणानाह-भृष्टानां निस्तुषयवानां चूर्णं सक्तवः पीता एव बलप्रदाः, न तु भक्षिताः, लीढा वा सद्य एव नतूत्तरकालमित्येवशब्दार्थः । संग्रहे तु—"निचयात्कठिना गुर्वी प्रोक्ता पिण्डी लघुर्मृदुः ।" इति । " सक्तूनां द्रवतायोगात् लघीयस्यवहेलिका । शष्कुली मोदकादीनामाख्यातैव च कल्पना । कर्कंधुवदरादीनां श्रमक्षुत्तृट्क्लमच्छिदः । सक्तवोऽम्लरसा हृद्या यथा द्रव्यगुणाश्च ते॥" इति । सक्तुभक्षणं नियमयति–येषां भोजनमध्ये उदकं पीयते ते उदकान्तरिताः, द्वौ वारौ द्विः, केवलानुदकादिरहितान्, द्विजैश्छित्त्वा करस्थां पिंडीं दन्तैर्विच्छिद्य भक्षितान्, बहूनतिमात्रान्, उदकांतरितादीनां प्रत्येकं निषेधकारणत्वात् पृथक् न कारणम् ॥ ४१ ॥

**पिण्याको ग्लपनो रूक्षो विष्टंभी दृष्टिदूषणः ४२**

स०--पिण्याकाख्यो यस्तिलादीनां निष्पीडित: कल्को ग्लपनो ग्लानिकरः । ग्लपन इति ग्लायतेर्णिजंताद् ग्लास्नावनुवमां चेति मित्त्वाद्ध्रस्वः बाहुलकात्कर्तरि ल्युट् । तथा विष्टंभी दृष्टिविकारकृच्च ॥ ४२ ॥

प०—पिण्याकस्तिलक्षौडादीनां निष्पीडितातिलानां कल्कः स ग्लपनोऽङ्गग्लानिं करोति, विष्टम्भी स्रोतसामवष्टम्भं करोति, दृष्टिदूषणः—दृष्टिघ्नः ॥ ४२ ॥

हे०—पिण्याकगुणानाह—उद्धृततैलतिलादिपिण्डः पिण्याकः, ग्लपनो ग्लानिकरः, दृष्टिदूषणो दृष्टिरोगप्रदः ॥ ४२ ॥

**वेसवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥४३॥**

स०--वेसवारो नागरधान्यकाजाजिहिंगुघृतादिसंस्कृतं कुट्टितं मांसम् । गुरुः स्निग्धो बलवर्धनः शरीरोपचयवर्धनश्च ॥ ४३ ॥

प०–वेसवारो नागरधान्यकाजाज्यादि संस्कृतं पिष्टं मांसं वेसवारशब्दवाच्यम् । तथाचागमः मांसं स्यात्पलमामिषम्, पिष्टं च वेसवारं स्यादिति तच्च हिङ्गुलवणघृततैलादिभिर्यथायोगं संस्कृतं च वेसवारो गुरुस्तथा स्निग्धो, बलोपचयौ वर्धयति च बलोपचयवर्धनः तयोर्वृद्धिकारी । बलं–सामर्थ्यम् उपचयो–धातूनां पोषः ॥ ४३ ॥

हे०–वेसवारगुणानाह—स्विन्नं पिष्टं हिंगुजीरकादिभिः मिश्रितं मांसं वेसवारः, उपचयः वपुःपुष्टिः ॥ ४३ ॥

**मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः॥४४॥**

स०--मुद्गादिजास्तु वेसवारा ये इंडरिकादिभि-
ग्यैः सूक्ष्मच्छिन्नैः क्रियंते लोके पूरणशब्देन प्रसि-
ास्ते गुरवः प्रकृतिद्रव्यगुणाश्च । आदिशब्देन माषा-
यो गृह्यंते । तंत्रांतरे चोक्तम् । सपिस्तैलगुणक्षीरैर्य-
गोधूमपैष्टिकाः । पूपा विष्टंभिनः शीताः पौष्टिका
तलाः खराः । वृष्या बल्याः सरा माषैर्वातघ्ना मृदु-
च्छिलाः । यथाऽन्नं गुरवो बल्याः स्थूलाश्च कठि-
श्च ये । तैलपक्वास्तु दृष्टिघ्ना गरीयांसो विदाहिनः ।
सारसारलघवो लाजैर्लघुतराः स्मृताः । वातपित्त-
ो वृष्यो घृतपूरः कफप्रदः । सद्यः प्राणकरो रुच्यो
ंसलो रक्तलो गुरुः । लघीयान्मंडककृतो गरीयान्फ-
पूरितः । मधुरोत्कारिका वृष्या कासारः पिच्छिलो
रुः । गुडमत्स्यंडिकाखंडक्षीरेक्षुरसमाक्षिकैः । पूपाः
क्रबलश्लेष्मरुचिदास्तर्पणाः क्षणात् । नानाद्रव्यैः
मायुक्ताः पक्वामक्लिन्नभार्जिताः । निमर्दको गुरुः
ग्धो वृष्यो बलवतां हितः । खारिकेंदुरिकापूरव-
ःकावटकादयः । विशदा रोचना बल्या गुरवः स्युः
योनिवत् । यावकः पिच्छिलः स्निग्धः प्लीहोदाव-
हा गुरुः । भृष्टस्विन्नतया वाद्यो लघुः सेव्योऽतिका-
नाम् । ज्वरोदावर्तमेहानां पथ्यो वातानुलोमनः ।
ोलकं हरितावस्थं शिंबिजत्वात्खरं गुरु । मंदजर्यो
वादित्वादभ्योषो बृंहणः सरः । सिद्धसारे चोक्तम् ।
त्युष्णा मंडकाः पथ्याः शीतला गुरवो मता
ति ॥ ४४ ॥

प०--मुद्गादिना वेसवारादयो मुद्गवटकादिभिः
ूक्ष्मच्छिन्नैः क्रियन्ते । ते सर्वे गुरवः तथा यथाद्र-
यगुणानुगाः प्रकृतिद्रव्यगुणा भवन्तीत्यर्थः । तेन
ुद्रादीनां ये गुणास्ते तत्कृतानां वेसवाराणामपि
ोद्धव्याः । एषां वेसवारशब्द उपचारेण प्रयुज्यते ।
था मौद्गो रसः, कौलत्थो रसो वा । मुख्यया तु
त्त्या मांससंस्कृतेषु वेसवारशब्दः ॥ ४४ ॥

हे०--मुद्गादिवेसवारगुणानाह--येषु मांसस्थानेषु मुद्गच-
ाकादयो गृह्यन्ते ते मुद्गादिजाः । यथा द्रव्यगुणमनुगच्छ-
न्तीति यथाद्रव्यगुणानुगाः, यावन्तः प्रकृतिद्रव्यगुणास्ताव-
न्तस्तेषां भवन्तीत्यर्थः । साकल्येऽव्ययीभावः ॥ ४४ ॥

**कुकूलकर्परभ्राष्ट्रकंद्वंगारविपाचितान् ॥**
**एकयोनींल्लघून्विद्यादपूपानुत्तरोत्तरम् ॥ ४५ ॥**

स०--अपूपान् कुकूलादिसिद्धानेकयोनीनेककारणा-
न्यथोत्तरं लघून्विद्यात् । तेन कुकूलपक्वात् सजाती-
यादपूपात्कर्परपक्वो लघुः । कर्परपक्वाच्च भ्राष्ट्रपक्वः ।
भ्राष्ट्रपक्वात्कंदुपक्वः । कंदुपक्वाच्चांगारपक्वः । कुकूलं
गोअरं गोशकृदादिचूर्णसंतापः । कर्परो ज्वालातप्तं
कपालम् । भ्राष्ट्रकंदू प्रसिद्धावेव । अंगारा बृहंतः
काष्ठसंभूता इति । इति कृतान्नवर्गः ॥ ४५ ॥

प०--कुकूलादिषु विपाचितान् सिद्धानपूपाने-
कयोनीनेकशाल्यादिसम्भवानपि सतो यथोत्तरमुत्तर-
मतिक्रम्य लघून् विद्यात् जानीयात् । योनिराकारः,
शालियवगोधूममाषप्रभृतयः । सजातीयापेक्षयैक-
योनित्वं कदाचिच्छालिपिष्टेन क्रियते, कदाचिद्गो-
धूमपिष्टेन कदाचिद्यवपिष्टेन ( चिक्कसादिना ),
कदाचिन्माषप्रभृतिभिः । तेन शालिपिष्टम-
यानपूपान् कुकूलपक्वाँल्लँघून् विद्यात्, तेभ्योऽपि
कर्पटपक्वान् लघुतरान् विद्यात् । तेभ्यो भ्राष्ट्रपक्वान्
लघुतमान् विद्यात्, यावदङ्गारपक्वान् अत्यर्थं लघुत-
मानेकेनैव रक्तशालिना कृतान् । अथवा गोधूमय-
वादीनामन्यतमेन वा । कुकूलं मृद्वाग्निः बाष्पः,
कंदूः--अङ्गारतप्ता भित्तिः । अङ्गारं--गोशकृदादीनां
दग्धानां चूर्णः, प्रसिद्धस्वरूपः । द्रवस्विन्नपिष्टान्न-
कृतः पूपः, विपरीतपूपोऽपूप इयानेव विशेषः ।
पूपापूपयोरिति कृतान्नवर्गः ॥ ४५ ॥

हे०--पचनपात्रविशेषाद्गुणविशेषानाह--कुकूलं-श्वभ्रं,
"कुकूलं शंकुभिः कीर्णे श्वभ्रे स्याच्च तुषानले" इति
वचनात् । तेन च मृन्मयमुत्तानं पूपपचनं लक्ष्यते, श्वभ्रा-
कारं तदेव न्युब्जं खर्परं, तदेव सच्छिद्रं भ्राष्ट्रं लोहमयं
न्युब्जकंदुः, अंगारशब्देन अङ्गारपूर्णं पात्रं हसन्तीत्यादि
पिष्टकृतास्तनवो विस्तृता अपूपाः । एकयोनिग्रहणं प्रकृति-
द्रव्यादिविशेषेऽपि पात्रकृतमेवोत्तरोत्तरं लाघवमिति ज्ञाप-
नार्थं, यथा यथा अग्निसंनिकर्षस्तथा तथा लाघवमित्यर्थः ।
संग्रहे तु--"प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ।
खलकांबलिकौ हृद्यौ छेदिनौ स्वौषधानुगौ ॥ पर्पटा लघवो

रूक्षा लघीयान् क्षारपर्पटः । हृद्या वृष्या रुचिकरा गुरवो रागखाडवाः ॥ प्रीणना भ्रमतृट्छर्दिमदमूर्च्छाश्रमाच्छिदः । तृट्छर्दिश्रमनुन्मन्थः शीतः सद्योबलप्रदः ॥ प्रमेहक्षयकुष्ठाद्या न च स्युर्मन्थपायिनाम् । '' इति कृतान्नवर्गः ॥ ४५ ॥

कृतान्नवर्गानंतरं मांसशाकवर्गयोस्तद्व्यञ्जनभूतयोर्निर्देशः । तत्राऽपि प्राधान्यान्मांसवर्गस्य पूर्वं निर्देशः । प्राधान्यं चाऽस्य भक्तेन सह प्रचुरोपयोगेऽप्यदोषात् । शाकस्य तु बहूपयोगे दोषं वक्ष्यति । शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेदित्यनेन–

**हरिणैणकुरंगर्क्षगोकर्णमृगमातृकाः ।**
**शशशंबरचारुष्कशरभाद्या मृगाः स्मृताः ४६॥**

स०–हरिणादयो दश मृगाः स्मृताः । आदिशब्देन कालपुच्छकपृषतादयः संग्रहोक्ता गृह्यंते । कालपुच्छकचारुष्कवरपोतशशोरणाः । श्वदंष्ट्रारामशारभकोहकारकशंबराः । करालकृतमालौ च पृषतश्च मृगाः स्मृता इति ॥ ४६ ॥

प०–कृतं तावत् पक्वमपक्वमन्नं संस्कृतमुपयुज्जीत, पक्वं तदपि मांसशाकादिभिः कृतैरेव । सह अन्नस्य च भूयसोपयोगो न तथा मांसादीनाम् । मांसादयस्तद्व्यञ्जनत्वेनोपयुज्याः । अतोऽनन्तरं मांसशाकवर्गयोर्निर्देशः । प्राधान्यं चास्य भक्तेन सह भूयसोपयोगोऽपि न दोषाय यथा शाकस्येति । हरिणाद्या शरभावसाना मृगा मृगजातयः । आदिग्रहणेन कालपृषदादिसंग्रहः । ताम्रवर्णो–हरिणः, कृष्णवर्णः–एणः, कमलद्वितीयनामा । तथा चागमः "ताम्रोऽत्र हरिणः कृष्णस्त्वेणः कमलसंज्ञितः" ४६॥

हे०–अथ मांसवर्गः। मांसमष्टधा-मृगविष्किरप्रतुदाबिलेशयप्रसहमहामृगजलचरमत्स्यभेदेन । तत्र मृगानाह-हरिणादयो मृगास्तेषु हरिणस्ताम्रमृगः, एणः कृष्णवर्णः, कुरंगो लघुचतुरगतिः, ऋक्षो–नीलाण्डः, गोकर्णो—गोकर्णसदृशकर्णो रासभाकारः, मृगमातृका लघुपृथूदराः । शशाद्याः–शशो—बिलेशयः, शंबरः—विकटबहुविषाणः, चारुष्कश्चारुतनुः; शरभोऽष्टचरणः आद्यशब्दात् पृषतकरालादयः । उक्तं हि संग्रहे–"कालपुच्छकचारुष्कवरपोतशशोरणाः । श्वदंष्ट्रारामशारभकोहकारकशंबराः ॥ करालकृतमालौ च पृषतश्च मृगाः स्मृताः ।" इति । विष्किरानाह—पक्षिमध्ये ये विकीर्य भक्षयंति ते विष्किराः ४६॥

**लाववर्तीकवार्तीररक्तवर्त्मककुक्कुभाः ।**
**कपिंजलोपचक्राख्यचकोरकुरुवाहवः ॥**
**वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी ।**
**ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः ।**
**तथा शारपदेंद्राभवारटाश्चेति विष्किराः ॥४७॥**

स०–तत्र लावादयो वारटांता एकविंशतिः विकीर्य भक्षणाद्विष्किराः । रक्ते वर्त्मनी यस्य स रक्तवर्त्मकः । वर्तको वर्तिकेति जात्यंतरं नतु वर्तकस्य स्त्री वर्तिका । यथा च बलाका सारिकेति । पुंस्त्रीलिंगत्वाविशेषात् । शिखी मयूरः । त्रीह्यादिः ॥४७॥

प०–लावादयो वारटान्ता विष्करा पक्षिजातयः। विकीर्य ये धान्यादिकं भक्षयन्ति ते विष्कराः। वर्तिका जात्यन्तरम्, नतु वर्तिकस्य योषित् । तत्र शिखी मयूरः । ताम्रचूडः–कुक्कुटः । इतिशब्दः प्रकारे । एवंप्रकारा अन्येऽपि संति ॥ ४७ ॥

हे०—तत्र लावश्चित्रयोधी, वर्तीको वनचटकः, स्वल्पसंघातचारी वर्तीरः, अल्पकपिञ्जलसदृशः । ककुभो द्विविधः—स्थलजो जलजश्च । रक्तवर्त्मकविशेषणात्स्थलजो गृह्यते, उक्तं हि "नीलच्छविः कृष्णगलः स्याद्ग्रामचटकाकृतिः । ककुभः ककुभारावः स्थलजो रक्तवर्त्मकः॥" कपिञ्जलो—गौरतित्तिरिः। इति "उपचक्रः—श्वभ्रचरः कृशचंचुर्मदाविलः ।" चकोरो—रक्ताक्षः, कुरुबाहुर्नीलग्रीवो रक्तशिखः श्वेतपक्षः, वर्तको वर्तीरादल्पः, तत्सदृशा वर्तिका, ततोऽप्यल्पा तित्तिरिश्चित्रपक्षः, क्रकरः—कुत्सितशब्दकारी, पीतः, कृष्णगलः, कृष्णचञ्चुचरणो, रक्तपृष्ठः। शिखी–मयूरः, ताम्रचूडाख्यः—कुक्कुटः, बकरः बकसदृशः, गोनर्दो—गोक्ष्वेडः, गिरिवर्तिका—गिरिकाणा वर्तिकाभेदः, सारपदः–कंकसदृशश्चारुगतिः, इंद्राभः—कंकसदृशो विविधवर्णः, वरटः–हंससदृशः, आद्यशब्दाच्चिरीटादयः । प्रतुदा इति । प्रतुद्य भक्षयन्तीति प्रतुदाः तत्र ॥ ४७ ॥

**जीवंजीवकदात्यूहभृंगाह्वशुकसारिकाः ।**
**लट्वाकोकिलहारीतकपोतचटकादयः ॥**
**प्रतुदाः ॥ ४८ ॥**

स०—जीवंजीवकादयः प्रतुदा दश स्मृताः । प्रतुद्य तुंडेनाऽहत्य शाल्यादेर्भक्षणात्प्रतुदाः । आदिशब्देन संग्रहोक्ताः खंजरीटकपारावता गृह्यंते ॥४८॥

प०—जीवंजीवकादयः चटकान्ताः प्रतुदाः । प्रतुद्य च तुण्डेनाहत्य भक्षणात् प्रतुदाः । स्मृताः । आदिग्रहणेन शतपत्रखञ्जरीटादिपक्षिपरिग्रहः ४८॥

हे०—जीवंजीवकः--एकोदरो द्विशिराः, दात्यूहोऽन्धकाकः, भृङ्गाह्वो--भृङ्गराजः कृष्णवर्णश्चटकसदृशः, शिखावान्, गोप्रेरकः । शुकः कीरः,सारिका--मेधावी, लट्वा--रक्तपुच्छाधोभागः, कोकिलः--परपुष्टः, हारीतो--हरितपीतः, कपोतः--पाण्डुकः, चटकः--कलविङ्कः आदिशब्दात्खञ्जरीटादयः । उक्तं संग्रहे--" शतपत्रो भृङ्गराजः कोयष्टिर्जीवजीवकः । खञ्जरीटकहारीतकुर्नामदुरशाग्रहाः ॥ लट्वा लड्डूषो वटहा गोक्ष्वेडो डिण्डमाणवः । जटीदुंदुभिपाकीरलोहपृष्ठकुलिङ्गकाः ॥ सारिकाशुकसाङ्गास्यविरीटीककुयष्टिकाः । मंजुलीयकदात्यूहगोपापुत्रप्रियात्मजाः । कलविङ्कः परभृतः कपोतोऽङ्गारचूडकः । पारावतः पाणवेक इत्युक्ताः प्रतुदा द्विजाः ॥ " इति ॥ ४८ ॥

**भेकगोधाहिश्वाविदाद्या बिलेशयाः ॥ ४९ ॥**

स०—भेकादयश्चत्वारो बिलेशयाः । बिले बाहुल्येन शयनाद्बिलेशयाः । आदिशब्देन श्वेतश्यामशल्यकादयो गृह्यंते ॥ ४९ ॥

प०—भेकाहिगोधाश्वाविदाद्या बिलेशयाः । बिले भूगर्ते शेरते इति बिलेशयाः । आदिशब्देन शलाकादिसंग्रहः । भेकोऽत्र मण्डूकः । श्वावित्-साहकः । अहिः सर्पः ॥ ४९ ॥

हे०—बिलेशयानाह--बिले बिवरे शेरते निवसंतीति, बिलेशयाः । तेषु भेको--मण्डूकः, गोधा—पंचनखग्राहिणी, अहिः--सर्पः, श्वाविच्छलाकासदृशरोमा; आद्यशब्दान्नकुलादयः । संग्रहे तु—" श्वेतः श्यामश्चित्रपृष्ठः कोलः काकुली मृगः । भेकचिल्लककूचीका गोधाशल्यकगण्डकाः ॥ वृषाहिकदलिश्वाविन्नकुलाद्या बिलेशयाः ।" इति ॥ ४९ ॥

**गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।**
**मार्जारमूषकव्याघ्रवृकबभ्रुतरक्षवः ॥**
**लोपाकजंबुकश्येनचाषवांतादवायसाः ।**
**शशघ्नीभासकुररगृध्रोलूककुलिंगकाः ॥**
**धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ५०॥**

स०-गवादयः प्रसह्याहत्य भक्षणात्प्रसहाः । मृगाश्च पक्षिणश्च मृगपक्षिणः । केचिन्मृगाः केचित्पक्षिण इत्यर्थः । अश्वतरो वेगसरः । अश्वस्तुरगः । बभ्रुर्जाहको नकुल इत्यन्ये । लोपाको लोमशः । जंबुकः शृगालः । श्येनो गरुडाकृतिः । चापः किकीदिविः । वांतादः श्वा । वायसः काकः । उलूकः काकारिः । कुलिंगकः कृष्णचटकः ॥ ५० ॥

प०—गवाद्यो मधुहावसाना मृगाश्चैव पक्षिणश्च ते च प्रसहाः । प्रसह्यापहृत्य मांसादिकं भक्षयन्तीति प्रसहात्वेन संज्ञिताः । "विकीर्य विष्किराश्चैव प्रतुद्य प्रतुदाः स्मृताः ।" अश्वायां जातोऽश्वतरः । वेसर इति प्रसिद्धः । अश्वः—तुरगः । द्वीपी-चित्रकः । सिंहो-मृगेंद्रः । वृषदंशो-मार्जारः । मूषकः-आखुः । "लोपाको लोमशः स्मृतः" । शृगालो-जम्बुकः । बभ्रुर्नकुलः । श्येनो-गरुडाकृतिः वांतादः । सारमेयः-श्वा। वायसः-काकः । उलूको-यामिनीचरः। कुलिङ्गः-कृष्णचटकः, कलविङ्कापरपर्यायः । इतिशब्द आद्यर्थे ॥ ५० ॥

हे०—प्रसहानाह--मृगाणां पक्षिणां मध्ये प्रसह्य हत्वा भक्षयन्ति प्रसहाः । तत्र गौः प्रसिद्धा । खरो-गर्दभः, अश्वतरोऽश्वायां गर्दभाज्जातः, उष्ट्रः करभः, अश्वो--घोटकः, द्वीपी--चित्रव्याघ्रः, सिंहः केसरी, ऋक्षो--लोमशो मर्कटसदृशः, वानरो--मर्कटः, मार्जारो--बिडालः, मूषक--उंदरुः, व्याघ्रो--महाव्याघ्रः, वृको--वत्सभक्षः, बभ्रुरच्छभल्लः, तरक्षुर्मृगादनः, लोपाको--लोमशो जंबूकसदृशः, जंबूकः--शृगालः । श्येनः--शशानकः, चापः--प्रसिद्धः; वान्तादः--श्वा, वायसः--काकः, शशारिः-शशघ्नी, भासः--श्वेतशिखावान्; गृध्रसदृशो, गोपृष्ठचारी, कुररः--अरुणः श्वेतमस्तको मत्स्यग्राही, गृध्रः—कृष्णो महान् दूरदर्शी, उलूको—घूकः, कुलिंगो—गृहचटकः, धूमिका—धूम्यारः, मधुहा—मधुघातकः इति शब्दादेवंप्रकारा अन्येऽपि मृगाश्च, पक्षिणः । तत्र जंबूकांता वांतादसहिता मृगाः । इतरे पक्षिणः ५०॥

**वराहमहिषन्यंकुरुरुरोहितवारणाः ।**
**सृमरश्चमरः खड्गो गवयश्च महामृगाः ॥ ५१॥**

स०--वराहादयो दश महामृगसंज्ञाः । वारणो हस्ती ॥ ५१ ॥

प०--वराहादिगवयान्ता महामृगाः । चशब्द आद्यर्थे । वराहः-शूकरः । महिषो-गवयापरपर्यायः । वारणो-हस्ती ॥ ५१ ॥

हे०--महामृगानाह--महान्तो मृगाः महामृगाः । तत्र वराहः--शूकरः, महिषोऽश्वशत्रुः, न्यङ्कुः--कुरङ्गसदृशो विकटबाहुविषाणः, रुरुर्बहुविषाणः, शरदि शृंगत्यागी, रोहितो--लोहितवर्णः, वारणो--हस्ती, सृमरो--वनतुरगः, चमरो--वन्यो गौः, खड्गो--गण्डकः, गवयः ककुदरहितो गोसदृशः; चकारोऽनुक्तसमुच्चयार्थः ॥ ५१ ॥

**हंससारसकादंबबककारंडवप्लवाः ।**
**बलाकोत्क्रोशचक्राह्वमद्गुक्रौंचादयोऽप्चराः॥५२॥**

स०--हंसादयः क्रौंचांता अप्सु चरणादप्चरसंज्ञाः। आदिशब्देन रक्तशीर्षिकादयो गृह्यंते ॥५२॥

प०--हंसादयः क्रौञ्चावसानाः-अप्सु चरन्तीत्यप्चराः वारिचराः । आदिशब्देन रक्तशीर्षपुण्डरीकाक्षशरारिप्रभृतीनां परिग्रहः । पानेऽप्सु प्लवतीति प्लवः ॥ ५२ ॥

हे०--जलचरानाह--येऽप्सु जले चरन्ति ते जलचराः। तत्र हंसो--मानसौकाः, सारसो-लक्ष्मणः, कादंबः--कलहंसः, बकः--पाण्डुरपक्षः, प्रसिद्धः । कारण्डवः--शुक्लो हंससदृशः, प्लवो--महान् प्रसेवकगलः, बलाका--बिसकंठिका, उत्क्रोशः--कुररसदृशः, चक्राह्वः--चक्रवाकः, मद्गु--जलकाकः, क्रौञ्चः क्रुङ् । आदिशब्दाच्चातकादयः । उक्तं च संग्रहे--" काकतुंडधनारावमद्गुक्रौञ्चाम्बुकुक्कुटाः । मृणालकंठचक्राह्वबलाकारक्तशीर्षकाः ॥ उत्क्रोशः पुण्डरीकाक्षशरारीमणितुंडिकाः । नंदश्च मल्लिकाद्याश्च पक्षिणो जलचारिणः॥" इति ॥ ५२॥

**मत्स्या रोहितपाठीनकूर्मकुंभीरकर्कटाः।**
**शुक्तिशंखोद्रशंबूकशफरीवर्मिचन्द्रिकाः ।**
**चुलूकीनक्रमकरशिशुमारतिमिंगिलाः ।**
**राजीचिलिचिमाद्याश्च ॥ ५३ ॥**

स०--रोहितकादय एकोनविंशतिर्जलोद्भवा मत्स्यसंज्ञाः।चशब्दोऽनुक्तकदलकपर्दकादिसमुच्चयार्थः॥५३॥

प०-रोहिताद्याश्चिलिचिमावसाना मत्स्या जलो वारिशयाः । आदिशब्दः प्रकारार्थः । एवंप्र अन्येऽपि सन्ति । कूर्मः कच्छपः। कर्कटः कुलै शंबूको वृत्तः । शंखिनः परिकीर्तिताः । अज्ञात याणां देशान्तरविचारेभ्योऽवबोधः कार्य किञ्चित् क्वचिद्देशे यतो नास्ति तेन ज्ञायते,किञ्चित्तु विषयान्तरेषु नामान्तरेण द्वाभिति । तस्मादेषां नामपर्याया देशान्त सिद्धाः । किरातकैवर्तादिभ्योऽपभ्रंशसंस्क ज्ञातव्याः ॥ ५३ ॥

हे०--मत्स्यानाह--जलांतरवासिनो--मत्स्याः। रो रक्ताङ्गः; कृष्णपृष्ठो मत्स्यः, शैवलभोजनः, पाठी रूप्योदरः, कृष्णवर्णकः, कण्ठकमञ्जारिः, कूर्मः--कच कुंभीरो--महानक्रसदृशः, कर्कटः--कुलीरः, शुक्ति स्फोटः, शंखः--कम्बुः, उद्रो--जलबिडालः, शंब क्षुद्रशंखः, शफरी--क्षुद्रमत्स्यः, वर्मिः--सर्पाकारः, का-पार्श्वेषु कण्टकवलयितो वर्तुलः, चुलूकी--दंत्या ऽन्तर्वक्त्रो, बहिर्निश्वाससमुक्, नक्रो--रज्वाकारः, मक सिंहदंष्ट्रः, शिशुमारः-शिशुघ्नः, तिमिः--शतयोजनवि तं गिलतीति तिमिंगिलः, राजी--राजीवो व चिलिचिमः--शकलीलोहितनयनः सर्वतो लोहितर प्रायो भूमिचारी । आद्यशब्दाद्रोमत्स्यादयः ॥ ५३

**मांसमित्याहुरष्टधा ॥ ५४ ॥**

स०--इत्यष्टभिः प्रकारैः शास्त्रकारा माहुः ॥ ५४ ॥

प०--इत्येवमनन्तरोक्तेन प्रकारेण मांसम ऽष्टभिः प्रकारैराहुः क्रव्यमाचार्याः॥ ५४ ॥

हे०--उक्तानां वर्गाणां मांसत्वमाह--इत्युक्तेन ण्णाष्टप्रकारं मांसमाहुः ॥ ५४ ॥

**योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते**

स०--योनिषु पूर्वोक्तास्वष्टासु मध्ये व्यामिश्र रत्वाद्व्यामिश्रविषयत्वादजावी व्यामिश्रेऽजावी छा ते अनिश्चिते ।ते हि जांगलेऽपि देशे वर्तेते अन अजावी इति स्त्रीलिंगानिर्देशोऽत्र विवक्षित केचित्त्वनिश्चिताविति निजगदुः । तत्र तित्ति धन्वानूपचारी प्रथितः। तत्कथमसौ हि उ

ीर्तितः । ब्रूमः । तत्स्वभावत्वात् । यद्यप्युभयचरोऽयं थाऽपि जांगलस्वभावत्वाज्जांगलोऽयं भक्षणे । अत्र ष्किरत्वं तित्तिरे निश्चितं निमित्तमस्ति । तस्मादयं ांगल एव युक्तः । हरिणादीनां च किरातकैव- ादिभ्यो नानादेशप्रसिद्धा संज्ञा वेद्याः ॥ ९९ ॥

प०--योनिष्वेतास्वष्टसु मध्ये अजावी--छगलोर- ावनिश्चितौ निश्चयेन नोक्तौ । तस्मात् व्यामिश्रः गोचरत्वात् व्यामिश्रो जाङ्गलोऽनूपः । ते हि जाङ्ग- देशं कदाचिदाश्रयन्ते,कदाचिदानूपमेव एकान्तेन । ं तित्तिरिरपि प्राप्नोति, तस्याप्युभयचारित्वात् । था चरकमुनिः-"गुरूष्णमधुरो नातितत्त्वानूपनि- ारणात् । तित्तिरिः सञ्जयेच्छीघ्रं त्रीन्दोषाननि- ारणान्॥"यद्यपि तित्तिरिरुभयचरस्तथापि निय- मेव हि तित्तिरिर्जाङ्गलानूपौ द्वावपि निषेवते । ह्यसावेकविषयनिषेवणरतिर्जातुचिद्भवत्यन्यत्र पञ्ज तेधात् । अजावी तु कदाचिदेकान्ते धन्वदेशमेव, दाचिदेकान्ते आनूपदेशमेव,चरत एवं स्वभावत्वा- छागमेषयोः ॥ ५५ ॥

हे०--अजाव्योरनुक्तौ हेतुमाह--अजावी--मृगविशेषौ, निषु--मृगप्रसहामृगाख्यासु योनिष्वनिश्चित इत्यनिर्धा- ते व्यामिश्रगोचरत्वात् योनित्रयविषयत्वात्, अजाव्यो- ासत्वेऽपि मृगादिविशेषो नास्तीत्यर्थः ॥ ५५ ॥

**ाद्यांत्या जांगलानूपा मध्यौ साधारणौ स्मृतौ**

स०--आदौ भवा आद्या मृगविष्किरप्रतुदाख्या ांगलचारित्वाज्जांगलशब्दवाच्या एव । महामृगा- ्चरमत्स्याख्या आनूपाः । मध्यौ द्वौ विलेशयप्रस- ख्यौ साधारणौ । जांगलानूपचारिणावित्यर्थः । ध्याविति द्विवचननिर्देशसामर्थ्यादाद्यंतानां वर्गाणां त्येकं त्रिधात्वमनुमीयते त्रिग्रहणमंतरेणापि ॥ ९६ ॥

प०--मध्याविति द्विवचननिर्देशादाद्यन्तास्त्रयस्त्रयो र्गा भवन्ति । आद्यास्त्रयो वर्गा--मृगविष्किर- तुदा जाङ्गलचारित्वाज्जाङ्गलशब्दवाच्याः । अन्ये यो वर्गा-महामृगजलचरमत्स्या आनूपा आनूपे एव रणादानूपशब्दवाच्याः । मध्यौ द्वौ वर्गौ--बिले- ायप्रसहाख्यौ साधारणौ, साधारणदेशचरणात् ५६

हे०--मांसस्य त्रैविध्यमाह--आद्यास्त्रयो मृगविष्किर- ुदा जाङ्गलाः । अंत्यास्त्रयो--महामृगजलचरम- त्स्या--अनूपाः । मध्यौ द्वौ--बिलेशयप्रसहौ साधा- रणौ ॥ ५६ ॥

**तत्र बद्धमलाः शीता लघवो जांगला हिताः । पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥५७॥**

स०--तत्र तेषु जांगलानूपसाधारणेषु मध्ये जांगला बद्धमला ग्रथितं पुरीषं कुर्वंति । शीतवीर्या लघवः । सन्निपाते हिताः । किंभूते । पित्तोत्तरे पित्ताधिके । तथा वातो मध्यो यस्मिंस्तस्मिन्मध्यममरुति । तथा कफानुगे कफोऽनुगोऽबलो हीनो यस्मिंस्तस्मिन् स्व- ल्पश्लेष्मणि ॥ ९७ ॥

प०--तत्रेति निर्धारणे । तत्र तेषु जाङ्गलानूपसा- धारणेषु मध्ये,जाङ्गला--बद्धमलाः बद्धपुरीषाः, शीताः--शीतवीर्याः,लघवश्च, हिताः--पथ्याः । संनि- पाते--पित्तोत्तरे-पित्ताधिके,वातमध्ये-नोत्कृष्टे न हीने न कफानुगे--कफहीने,पित्तमुत्तरमधिकं च यस्मिं- स्तथा वातो मध्यो यस्मिन्, कफोऽनुगो यस्मिन् संनिपाते तस्मिन् हिताः ॥ ५७ ॥

हे०--जाङ्गलगुणानाह--बद्धमला--बद्धपुरीषाः, संनि- पाते--दोषत्रयप्रकोपे हिताः, कफानुगे हीनकफे अत्र केषांचिद्विशेषः ॥ ५७ ॥

**दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ५८**

स०--शशोऽग्निदीपनः पाके कटुको ग्राही रूक्षः शीतश्च । ग्राहिशीतत्वं चाऽस्य जांगलत्वादेव लब्ध- मित्यतिशयार्थं पुनरिहोपात्तम् । स्वादुकषायत्वादिकमे- षामिह युक्त्योक्तम् । संग्रहे तु स्पष्टं कृत्वोक्तम् । यथा । तत्र बद्धमला रुच्या मांसानामुत्तमा हिमाः । कषाय- स्वादुविशदा लघवो जांगला हिताः । ताम्रोऽथ हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित् । लघीयान् षड्सश्चासौ ग्राही रूक्षो हिमः शशः । कटुपाकोऽग्निकृत्पथ्यः सन्नि- पातेऽनिलावर इति ॥ ९८ ॥

प०--तेषु जाङ्गलेषु मध्ये शशोऽग्निदीपनोऽग्नि- वृद्धिकृत् । तथा पाके कटुकः । ग्राही संग्रहणशीलः, रूक्षश्च । हिमः--शीतवीर्यः ॥ ५८ ॥

हे०--तत्र शशगुणानाह--दीपन इति ॥ ५८ ॥

**ईषदुष्णा गुरुस्निग्धा बृंहणा वर्तकादयः ।**
**तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।**
**ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ५९**

स०—वर्तकादारभ्य यावज्जांगलसमाप्तिस्तावत्सर्वे औष्ण्यगौरवस्निग्धत्वैरल्पैर्युक्ताः। तेष्वपि मध्ये तित्तिरिः श्रेष्ठो मेधादिकरश्च। तथा संग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च । स च तित्तिरिर्धन्वन्यानूपे च देशे विचरत्यतः स्निग्ध उष्णो गुरुर्बृंहणश्च । तथा च संग्रहे । धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहण इति ॥ ५९ ॥

प०—जाङ्गलेषु मध्ये वर्तकादयो वर्तकाप्रभृति यावज्जाङ्गलसमास्तावत् सर्वे ईषदुष्णगुरुस्निग्धाः।उष्णगुरुत्वस्निग्धत्वे किञ्चिद्युक्तास्तथा बृंहणाः बृहत्त्वकारिणः।तेष्वपि वर्तकादिषु मध्ये तित्तिरिर्वरः श्रेष्ठः। तथा मेधाग्निबलशुक्राणि । करोति ग्राही--सङ्ग्रहणशीलः । वर्ण्यः-शरीरवर्णकारी । अनिलो वायुरुद्रिक्त उल्बणो यस्मिन् संनिपाते; तं तथाविधं संनिपातं हरति परमत्यर्थं कृत्वा ॥५९ ॥

हे०—वर्तकादिगुणानाह--ईषदिति । वर्तकादयो वर्तको वर्तिकेत्यादयो जाङ्गलाः । तित्तिरिगुणानाह--तेषु वर्तकादिषु अनिलोद्रिक्तं वाताधिकं संनिपातं दोषत्रयप्रकोपं हरते, संग्रहे तु--"धन्वानूपविचारित्वात्स्निग्धोष्णगुरुबृंहण" इति ॥ ५९ ॥

**नातिपथ्यः शिखी पथ्यःश्रोत्रस्वरवयोदृशाम्६०**

स०—शिखी बर्ही नातिपथ्यः श्रोत्रादीनां पथ्यो वयसः स्तम्भनकारित्वेन पथ्यः ॥ ६० ॥

प०--शिखी--मयूरो,नातिपथ्यः-नातिहितः, किंतर्हि किञ्चिद्धितः। स एव पथ्यो हितः,श्रोत्रादीनाम्। श्रोत्रयोः पथ्यः श्रुतिजननात् । स्वरस्य पथ्यः, स्वर्यत्वात् । वयसः पथ्यः,शीघ्रवार्धक्यरक्षणात् । दृष्टेः पथ्यो, दृष्टिप्रसादभावात् ॥ ६० ॥

हे०—मयूरगुणानाह--नातिपथ्य इति । नातिपथ्यः नातिस्वस्थहितो दोषचयकारित्वात्, श्रोत्रादीनां तु पथ्यस्तद्दार्ढ्यकारित्वात् ॥ ६० ॥

**तद्वच्च कुक्कुटो वृष्यः ॥ ६१ ॥**

स०—तद्वच्च कुक्कुटो मयूरतुल्यगुणो वृष्यश्च ६१ ।

प०--कुक्कुटस्तद्वत् मयूरवत् । नातिहितो,:हितस्तु श्रोत्रादीनाम् । तथा वृष्यः-शुक्रवृद्धिकारी ॥६१।

हे०—कुक्कुटगुणानाह--तद्वदिति । तद्वन्मयूरतुल्यगुणः ॥ ६१ ॥

**ग्राम्यस्तु श्लेष्मलो गुरुः ॥६२॥**

स०--ग्राम्यः पुनः कुक्कुटः श्लेष्मलो गुरुश्च ६२॥

प०--ग्राम्यः पुनः कुक्कुटो जनपदसंनिवेशचारी श्लेष्मलस्तथा गुरुः ॥ ६२ ॥

हे०—ग्राम्यकुक्कुटगुणानाह--ग्राम्य इति । ग्रामे भवो ग्राम्यः ॥ ६२ ॥

**मेधाऽनलकरा हृद्याः क्रकराः सोपचक्रकाः ६३॥**

स०--क्रकरोपचक्रकाश्च मेधामग्निं च कुर्वंति हृद्याश्च ॥ ६३ ॥

प०--सोपचक्रकाः क्रकराः--मेधां प्रज्ञामनलमग्निं च कुर्वन्ति मेधानलकराः । हृद्या--हृदि साधवः॥६३

हे०—क्रकरोपचक्रयोर्गुणानाह—मेधानलकरा इति । अनलो वह्निः ॥ ६३ ॥

**गुरुः सलवणः काणकपोतः सर्वदोषकृत्॥६४॥**

स०--काणः कपोतो गुरुरीषल्लवणस्त्रिदोषकृच्च६४

प०--काणः कपोतः पक्षी--गुरुः,तथा किञ्चिल्लवणः, सर्वान् त्रीन् दोषान् करोति सर्वदोषकृत् ॥ ६४ ॥

हे०—काणकपोतगुणानाह—काणकपोतोऽन्योऽरुणकपोतभेदः ॥ ६४ ॥

**चटकाःश्लेष्मलाःस्निग्धा वातघ्नाःशुक्रलाःपरम्॥**

स०--चटकाः श्लेष्मलादियुक्ता अतिशयेन शुक्रकृतश्च ॥ ६५ ॥

प०--चटकाः--श्लेष्मलाः कफकराः तथा स्निग्धाः। वातं घ्नन्तीति वातघ्नाः । भृशमत्यर्थं[1] शुक्रला वृष्याः ॥ ६५॥

हे०—चटकगुणानाह—चरकस्त्वाह—" चटका मधुराः स्निग्धाः कफशुक्रविवर्द्धनाः । संनिपातहराश्चैव शमना

१ अत्र भृशमिति पाठान्तरम् ।

ारुतस्य च ॥'' इति । तत्र संनिपातस्य संपृक्तदोषत्र-वचनात्संपृक्तानेव त्रीन् दोषान् घ्नन्ति नत्वसंपृक्तान् । ातएव शमना मारुतस्य चेत्युक्तं तस्मात् श्लेष्मलत्वं संसृष्टविषयम् ॥ ६५ ॥

**;रूष्णास्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ।**
**्त्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ६६**

स०--अतोऽनन्तरं बिलेशयाद्या वर्गा यथोत्तरं रुत्वेनोष्णत्वेन स्निग्धत्वेन मधुरत्वेन चाधिकाः । यो स्मादुत्तरो वर्गः स तस्मादुरुत्वादिभिरधिक इत्यर्थः । था यथोत्तरमेव मूत्रशुक्रकृतो बल्या वातघ्नाः श्लेष्म-ात्तलाश्च ॥ ६६ ॥

प०--अतो जाङ्गलादनन्तरं ये वर्गा बिलेशयाद्याः श्च यथोत्तरमुत्तरमुत्तरमनतिक्रम्य गुरुत्वोष्णत्व-नग्धत्वमधुरत्वैश्चाधिकाः । यो यस्मादुत्तरो वर्गः तस्माद्वर्गाद्गुरुत्वादिभिर्युक्तः । तेन बिलेशयेभ्यः ाहाः गुरुत्वादिगुणयुक्ताः । प्रसहेभ्यो महामृगाः, हामृगेभ्यो विष्कराः, विष्करेभ्यो मत्स्याः । तथा ात्रं, शुक्रं कुर्वन्ति मूत्रशुक्रकृतो यथोत्तरमेव। बल्या-ळावहाः । वातघ्नाः--समीरणनाशनाः । कफपित्ते वन्तीति कफपित्तलाः ॥ ६६ ॥

हे०--बिलेशयादिवर्गाणां गुणानाह--अत एभ्यो जाङ्ग-भ्यः परे वर्गा बिलेशयादयः यथोत्तरं बिलेशयेभ्यः प्रसहा ुर्वादिगुणयुक्ताः ततो महामृगास्ततो जलचरास्ततो ास्या इति ॥ ६६ ॥

एवं वर्गपंचकस्य सामान्यगुणानुक्त्वाऽपवादमाह--

**ीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः ।**
**वणानुरसाः पाके कटुका मांसवर्धनाः ॥**
**ोर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ६७॥**

स०--तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः । व्यमाममांसं भुंजते ये ते क्रव्यादाः । क्रव्यादास्तु ये सहा मार्जारगृध्रोलूकादयस्ते लवणानुरसाः पाके टुका मांसवर्धनाश्चातितराम् । जीर्णप्रभृत्यामयानाम-ाशयेन हिताः ॥ ६७ ॥

प०--तेषु पञ्चसु वर्गेषु मध्ये महामृगाः--शीताः ातिवीर्याः।क्रव्यादा--आममांसभक्षकाः । क्रव्यं मांस-मदन्ति भक्षयन्ति ये ते क्रव्यादाः। ते च द्विधा--मृगा, विहंगाश्च । तत्र केचित् क्रव्यादो न सर्वे । ते च लवणानुरसाः। लवणोऽनुरसो येषां ते प्रधानरसस्या-न्ते किञ्चिद्व्यक्तोऽप्युपलभ्यते सोऽनुरसः प्रधानरसे-नाभिभूतत्वादव्यक्त एव तिष्ठति । प्रधानरसविजा-तीयकार्यकर्तृत्वात्तस्य सद्भावोऽनुमीयत इत्याहुः । तथा पाके कटुकाः कटुकं पच्यन्ते । मांसवर्धनाः-मांसोपचयकराः । तथा जीर्णार्शोग्रहणीदोषशो-षार्तानां नराणां परमतिशयेन हिताः पथ्याः । जीर्णार्शः--चिरोत्थोऽर्शः । शोषो--राजयक्ष्मा ॥६७॥

हे०--तत्र केषांचिद्विशेषः । तत्र महामृगगुणानाह-शीता इति । क्रव्यादप्रसहगुणानाह--वानरमूषिककुलिंग-मधुहाव्यतिरिक्ताः द्वीप्यादयो मांसाहारत्वात् क्रव्यादप्र-सहाः, जीर्णैः कालेन पक्वदोषैरर्शःप्रभृतिभिरार्तानां हिताः, शोषो-राजयक्ष्मा। संग्रहे तु-'चक्षुष्याः सृष्टविण्मूत्रा मांसलाः कटुपाकिनः।'' इति ॥ ६७ ॥

**नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम् ।**
**शरीरधातुसामान्यादनभिष्यंदि बृंहणम् ॥६८॥**

स०--नातिशब्दोऽत्रेषदर्थे । यदि तु प्रतिषेधनमा-त्रमभीष्टमभविष्यदाचार्यस्य ततो नञ एव केवलस्योपा-दानमकरिष्यत् । तस्मादीषदर्थ एव विवक्षितः । अत एवं व्याख्यानयंति । अदोषलमिति । अल्पदोषलम् । यथाऽनतिदग्धो ग्राम इति । शरीरस्य धातुः शरीर-धातुः प्रकृतत्वात्पुरुषशरीरस्य मांसाख्यो यो धातु-स्तस्य सामान्यात्तुल्यत्वादाजं मांसमनभिष्यंदि बृंहणं च। गुणकृतं चाऽत्र सामान्यं गृह्यते न द्रव्यकृतम् । द्रव्यकृते हि सामान्ये गृह्यमाणे तुरगोरगादिमांसमपि पुरुषशरी-रधातोर्मांसाख्यस्य मांसत्वेन समानं भवतीति तदप्यन-भिष्यंदि बृंहणं च स्यान्न केवलमाजं मांसम् । गुणकृते तु सामान्ये गृहीते शरीरधातुसामान्यादाजमेव मांसम-नभिष्यंदि बृंहणं चेति वक्तुं युज्यते । मांसग्रहणं चा-त्रोपलक्षणार्थम्। न केवलमाजं मांसं पुरुषशरीरधातुना मांसाख्येन तुल्यं यावदन्येऽपि ये छागशरीरगता धात-वस्तेऽपि मनुष्यशरीरधातुना तुल्यगुणास्तेऽप्यनभिष्यं-दिनो बृंहणाश्च । अनया भंग्या पुरुषमांसस्याऽप्याचा-र्येणाऽत्र गुणा उक्ताः । ननु बृंहणं यद्द्रव्यं तद्भौमाप्य-

मभिष्यंदि च । अपामेवाऽसाधारणो धर्मः स्रवणरूपः । तत्कथमनभिष्यंदीत्युक्तम् । ब्रूमः । द्रव्यप्रभावात् ईदृशोऽयं द्रव्यप्रभावो यद्बृंहणमपि द्रव्यमनभिष्यंदीति ॥ ६८ ॥

प०—नातिशब्दौ ईषदर्थे प्रवर्तेते । तस्मादल्पमात्रशैत्यादियुक्तम् । मांसमाजं तेन नातिशीतवीर्यं, नातिगुरु । अदोषलम् अकारोऽयमल्पार्थे यथा अलोमिकैडिका, अनुदरा कन्येति । तेनेषद्दोषलमीषदनभिष्यन्दीति मनीषितम् । तस्मादल्पदोषमल्पाभिष्यन्दि च । दोषोत्क्लेशादुच्छूनावस्थाभिष्यन्दः । अनभिष्यन्दि अश्लेष्मलमित्यर्थः । तथा शरीरधातुसामान्यात् सर्वाकारमप्यदोषम् । यद्रूपा हि देहधातवो मनुष्याणां तादृशा छगलीयानामप्येते देहधातुतुल्यत्वात्तन्मांसं न कांचिदाबाधां कुरुते । तेन शक्यते वक्तुं निर्दोषमेवेति, तेन सामर्थ्याल्लब्धं पुरुषशरीरसकलधातुसादृश्यम् । यादृशा मनुष्याणां शरीरधातवस्तादृशा अजानामित्येतया चोक्त्या मानुषस्यापि मांसस्य स्वभावो निरूपितो भवति । बृंहणं–पुष्ट्यावहम् ॥ ६८ ॥

हे०—अजामांसगुणमाह-अदोषलं दोषविरुद्धम्, त्रिदोषघ्नमित्यर्थः । तत्र अविरुद्धार्थः । उक्तं हि खारणादिना- "अविदाह्यनतिस्निग्धं नातिशीतलमामिषम् । छागं लघु त्रिदोषघ्नमनभिष्यंदि बृंहणम् ।" इति । हारीते नवत्रिदोषघ्नदेहधातुसामान्यात् छागलं लघ्विति गुरुत्वलघुत्वयोर्गुणत्वपाकत्वाभ्यामविरोधः । त्रिदोषघ्नत्वं वातोत्तरत्रिदोषविषयं किंचित्पित्तकफकरत्वात्, उक्तं च सुश्रुते–" नातिशीतगुरुस्निग्धो मंदपित्तकफः स्मृतः । छागलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥" इति । ननु बृंहणस्य दध्यादेरभिष्यंदित्वदर्शनात् कथं बृंहणमनभिष्यंदीति । अत आह-शरीरधातुसामान्यात् शरीरमर्थान्मनुष्यस्य धातवो रसादयः तैः सामान्यं सदृशगुणत्वं, यद्गुणा मनुष्यधातवस्तद्गुणा एवाजस्य, अतोऽत्यंतसाम्याद्बृंहणमप्यनभिष्यंदि यद्धि कैश्चिद्गुणैः समं कैश्चिद्विपरीतं तद्बृंहणं वाभिष्यंदि च । यथा-स्त्यानं घृतं, स्त्यानघृतप्रक्षेपाद्वर्द्धते न चाभिष्यंदते तदेवोष्णघृतप्रक्षेपाद्वर्द्धतेऽभिष्यंदते च ॥ ६८ ॥

**विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ॥ ६९॥**

स०–अतोऽजमांसाद्विपरीतमाविकं मांसमत्युष्णं स्निग्धं गुरु सदोषमभिष्यंदि चेति।बृंहणत्वस्याऽपि विपर्यये प्राप्ते तदपवादमाह। बंहणं तु तदिति। तुशब्दोऽवधार बृंहणमेव तदित्यर्थः ॥ ६९ ॥

प०–अवीनामिदमाविकम् । उरभ्र–मांसम् अत आजमांसाद्विपरीतं ज्ञेयं बोद्धव्यम् । तेन मांसं नातिशीतलमिदं त्वतिशीतलम् । तन्नातिगु इदन्त्वतिगुरु । तत्पुनर्नातिस्निग्धम् । तत्तु बृंह मिदं पुनर्बृंहणमेव । अत्र वैपरीत्यं नास्ति ॥ ६९

हे०–आविकमांसगुणानाह—विपरीतमिति । ३ आजमांसाद्विपरीतमतिशीतगुरु, स्निग्धं, त्रिदोषकरमं ष्यंदि च विपरीतत्वात्कर्शने प्राप्त आह—अजाव्योः प्रस प्रस्तावे गुणकथनमनिश्चितत्वेऽपि प्रायः प्रसहत्वज्ञापनार्थ अतएव सुश्रुतेन ग्राम्येषु पठितौ–" अश्वाश्वतरगो खरोष्ट्रबस्तोरभ्रमेदःपुच्छप्रभृतयो" ग्राम्या इति ग्राम्याश्च प्रसहेषूक्ताः ॥ ६९ ॥

**शुष्ककासश्रमाऽत्यग्निविषमज्वरपीनसान् ॥ कार्श्यं केवलवातांश्च गोमांसं संनियच्छति७०**

स०–गोमांसं शुष्ककासादीन्नियच्छति ॥ ७०

प०–गोः मांसं गोमांसं-तच्छुष्ककासादीन् नियच्छ निवारयति । श्रमः–खेदः । अत्यग्निर्वक्ष्यमाणः विषमज्वरः-संततादिः। पीनसः-प्रतिश्यायः । कार्श्य कृशत्वम् । केवलवातः शुद्धवातः ॥ ७० ॥

हे०–गोमांसगुणानाह–शुष्ककासः–कफादिष्ठीवनर तः । केवलवातान् शुद्धवातजान् व्याधीन् बहुवचनाद्वा शब्देन वातव्याधयो गृह्यंते ॥ ७० ॥

**उष्णो गरीयान्महिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ७**

स०–महिष उष्णो गुरुतरः स्वप्नादींश्च करोति। गु शब्दादीयसुनि प्रियस्थिरेत्यादिना गरादेशः। दार्ढ्यमि वर्णदृढेत्यादिना ष्यञ् ॥ ७१ ॥

प०–महिषः-उष्णवीर्यः, गरीयान्-गुरुतरः।तथा स्वप्न दार्ढ्यबृहत्वकृत्—निद्रास्थैर्यस्थूलत्वं करोति त्यर्थः ॥ ७१ ॥

हे०–महिषगुणानाह–गरीयानन्येभ्यो मांसेभ्यो गुरु स्वप्नो निद्रा ॥ ७१ ॥

**तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥ ७२ ॥**

स०–वराहसूकरस्तद्वन्महिषगुणो ज्ञेय इत्यर्थः । तः श्रमहा रुच्यादिप्रदश्च ॥७२॥

प०–वराहः-शूकरः, तद्वत् महिषवत्, गुणैर्विज्ञेयः। त पुनः श्रमहा-श्रमघ्नः। तथा रुचिशुक्रबलानि प्रकर्षेण ददाति रुचिशुक्रबलप्रदः ॥ ७२ ॥

हे०–वराहगुणानाह–तद्वन्महिषवत्, ननु–" स्वेदनं बृंहणं वृष्यं तर्पणं शीतलं गुरु। श्रमानिलहरं स्निग्धं वाराहं बलवर्द्धनम्॥" इति सुश्रुतेन शीतत्वमिह तु तद्वद्वचनादुष्णत्वमिति विरोधः, नन्वातिदेशिकमुष्णत्वमौपदेशिकेन शीतत्वेन बाध्यत इति वाच्यं, 'स्वाद्वम्लपाकं स्निग्धोष्णं वातघ्नं बृंहणं गुरु। स्वेदनं तर्पणं हृद्यं बल्यं शौकरमामिषम् ॥ " इति खारणादिवचनादुष्णत्वस्याप्यौपदेशिकत्वात्। मैवम् उष्णत्वस्य स्पर्शविषयत्वात्। स्पर्शोष्णं, शीतवीर्यमप्युष्णोदकादिस्वेदनं दृष्टं नतूष्णवीर्यमपि स्पर्शशीतं कांस्यकादिहिमं च स्वेदनम् अतो युक्तैवेयं विषयव्यवस्था ॥ ७२ ॥

मत्स्याः परं कफकराः ॥ ७३ ॥

स०-गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरमित्यनेन । लक्षणेनाऽतिगुरूष्णस्निग्धमधुरत्वमतिमूत्रशुक्रकृत्त्वमतिबल्यत्वमतिवातघ्नत्वमतिकफपित्तलत्वं च मत्स्यानामुक्तम्। परं कफकरा इत्यनेनाऽतः कफकृत्तमा मत्स्या इति बोधयति। संग्रहे स्पष्टार्थमेवमुक्तम्। कफपित्तकरा मत्स्याः परं पवननाशना इति ॥ ७३ ॥

प०–मत्स्याः-रोहितपाठीनप्रभृतयः, परमतिशयेन कफकराः-श्लेष्मलाः ॥ ७३ ॥

हे०–मत्स्यगुणानाह ॥ ७३ ॥

चिलिचीमस्त्रिदोषकृत् ॥ ७४ ॥

स०–चिलिचीमसंज्ञो मत्स्यस्त्रिदोषकरः ॥ ७४ ॥

प०-तेषु मत्स्येषु मध्ये चिलिचिमो मत्स्यविशेष-त्रीन् दोषान् वातादीन् करोतीति त्रिदोषकृत् ॥ ७४ ॥

हे०–चिलिचीमगुणानाह–चिलिचीम इति ॥७४॥

लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम्॥७५

स०-लावादयः। स्वस्ववर्गेषु वरतराः। तत्र लावो विष्किरेष्वतिश्रेष्ठः। रोहितो मत्स्येषु। स हि प्रतिस्रोतोविचारी। आकाशप्लवनश्च। तथा चोक्तम्। प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च। रोहितः प्रवरस्तेषामिति। गोधा च बिलेशयेषु वरा। एणो मृगेष्विति ॥ ७५ ॥

प०–लावाद्याः स्वे स्वे आत्मीये आत्मीये वर्गे गुणे परं प्रकृष्टं कृत्वा वराः श्रेष्ठाः प्रधाना इत्यर्थः। तेन लावः पक्षी विष्किरेषु वरः। गोधा बिलेशयेषु, एणो मृगेषु मध्ये वरः ॥ ७५ ॥

हे०–मांसेषु वरं निर्द्धारयति–लावेति। लावो-विष्किरेषु वरः, रोहितो–मत्स्येषु वरः, गोधा–बिलेशयेषु, एणो-मृगेषु परमिति वरेभ्योऽपि वराः। वरास्तु संग्रहे उक्ताः– " एणः कुरंगो हरिणः शशो लावः कपिञ्जलः। तित्तिरिः क्रकरो गोधा श्वाविद्गृध्रो मृगाधिपः ॥ बर्हिणः सारिका न्यंकुर्हंसो रोहितकच्छपौ। वर्मी चाग्र्याः स्ववर्गेषु प्रवरास्तेष्वपि स्मृताः ॥ लावैणगोधा सिंहश्च निन्दितो गौः सदर्दुरः। ऋक्षः काणः कपोतश्च शेषमुक्तं यथायथम्॥" इति ॥ ७५ ॥

मांसं सद्योहतं शुद्धं वयःस्थं च भजेत् ॥ ७६ ॥

स०-मांसं सद्योहतं भजेत्। सद्योहतस्य मांसं भजेदित्यर्थः। तथा शुद्धं स्नाय्वस्थ्यादिरहितम्। तथा वयसि तिष्ठतीति वयःस्थम्। यद्यपि सर्वं मांसं वयःस्थमेव तथाऽपीह वयःस्थमित्युक्त्या शोभनं तरुणं वय इति गम्यते। तस्माद्यूनः प्राणिनो मांसं भजेन्न बालवृद्धयोरिति ॥ ७६ ॥

प०-सर्वं मांसं सद्योहतं तत्कालव्यापादितं तथा शुद्धं विषाद्यनुपहितं वयः स्थं तरुणानां सम्बन्धि न पुनर्बालानां वृद्धानां तेषां सदोषत्वात्। तथा च संग्रहे– "गुरूण्यङ्गानि बालानां कषायमधुरं पलम्। वृद्धानां स्नायुभूयिष्ठमबल्यं गुरु दोषलम् ॥" इति ॥ ७६ ॥

हे०–मांसभजनं नियच्छति–मांसमिति। सद्योहतं च तत्कालव्यापादितं मृगादिजं शुद्धमस्थ्यादिरहितं वयःस्थं तरुणम् एभ्योऽन्यन्न सेव्यमित्यर्थः ॥ ७६ ॥

त्यजेत्।

मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम्॥७७॥

स०-मृतं स्वयं मृतं न भजेत्। अविज्ञातस्वरूपेण व्याधिना मृतस्य प्राणिनो यन्मांसं तत्त्यजेदित्यर्थः। कृशं दुर्बलं न भजेत्। तथा भृशं मेद्यमतिमेदुरं मांसं

त्यजेत्। तथा व्याधिना निर्ज्ञातस्वरूपेण हतस्य वारिणा विषेण च हतस्य निर्जीवीकृतस्य यन्मांसं तत्त्यजेत्। संग्रहे तु हंसादीनां विशेषा उक्ताः। यथा। हंसः स्वरकरः पित्तरक्तजिन्मधुरो हिमः। कुलीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः। गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः। गुरूण्यंडानि बालानां कषायमधुरं पलम्। वृद्धानां स्नायुभूयिष्ठमबल्यं गुरु दोषलमिति॥ ७७॥

प०-सर्वं मांसं स्वयं मृतं त्यजेत्। तथा कृशं क्षीणधातुस्नाय्वस्थिशेषं भृशमत्यर्थं मेद्यं मेदुरं पलं त्यजेत्। तथा व्याधिना वारिणा विषेण वा हतं मांसं त्यजेत्॥ ७७॥

हे०--मेध्येष्वपि मृतादीन्यपवदति-त्यजेदिति। वत्सवयोहतमपि केन हतमिति न ज्ञायते तन्मृतं कृशमपुष्टं, भृशं, मेद्यम् अत्यन्तपुष्टं, व्याधिहतं ज्वरादिना हतं, वारिहतं जलमज्जनादिना, विषहतं विषदिग्धशस्त्रेण सर्पादिना वा॥ ७७॥

**पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः॥**
**लघुर्योषिच्चतुष्पात्सु विहंगेषु पुनः पुमान्।**
**शिरःस्कंधोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम्।**
**तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत्।**
**शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम्।**
**मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम्॥७८॥**

स०--पुंस्त्रियोः पूर्वपश्चार्धे यथासंख्यं गुरुणी। पूर्वं च पश्चं च पूर्वपश्चे तयोरर्धे। पुंसः पूर्वार्धं गुरु स्त्रियः पश्चार्धं गुर्वित्यर्थः। गर्भिणी गुरुः गर्भिणीमांसं गुरु। चत्वारः पादा येषां ते चतुष्पादस्तेषु चतुष्पात्सु गवादिषु मध्ये स्त्री लघुः। चतुष्पादितिसंख्यासुपूर्वस्येत्यंतलोपः। विहंगेषु द्विजेषु तु पुमान् लघुः। शिरःप्रभृतीनां मांसानां यथापूर्वं गुरुत्वं निर्दिशेत्। एवं सक्थ्यादिमांसेभ्यः शिरोमांसं गुरुतममित्यवतिष्ठते। आमपक्वाशययोश्च यथापूर्वं गुरुत्वनिर्देशः। तेन पक्वाशयादामाशयो गुरुः। रक्तादीनां धातूनां यथोत्तरं गुरुत्वं निर्दिशेत्। तेन लोहितान्मांसं गुरु मांसान्मेद इत्यादि। मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदमित्यत्राऽप्युत्तरोत्तरमित्यनुवर्तते। तेन मांसाद्गुरुतरो वृषणस्तस्मान्मेढ्रो यावत्सर्वं गरिष्ठं गुदं निर्दिशेत्। इति मांसवर्गः॥ ७८॥

प०-सर्वेषां प्राणिनां पुंसां स्त्रीणां च यथासंख्येन पुंसां पूर्वार्धं शिरःप्रभृति नाभ्यवसानं गुरु, स्त्रीणां पुनः पश्चार्धं नाभेरधोऽगं सर्वगुरु। गर्भिणीपुनः सर्वा समस्ता गुरुः। चतुष्पात्सु चतुश्चरणेषु, हरिणच्छागमेषमहिषादिषु मध्ये योषित् स्त्री लघुः। विहंगेषु-पक्षिषु, लावहंसमयूरकुक्कुटादिषु मध्ये पुमान् लघुः। शिरःप्रभृतीनामङ्गानां-यथापूर्वं-पूर्वमनतिक्रम्य, गौरवं-गुरुत्वं विनिर्दिशेत्-जानीयात्। तेन सक्थिमांसात् कटिमांसं गुरु, कटिमांसात् पृष्ठमांसं गुरु। पक्वस्याहारस्य स्थानं पक्वाशयो, नाभेरधः। आमस्याहारस्य स्थानमामाशयो नाभेरूर्ध्वम्। तथा च मुनिः-"नाभिः स्तनान्तरं जन्तोरामाशय इति स्मृतः" रक्तादीनां षण्णां धातूनामुत्तरोत्तरं गौरवं विनिर्दिशेत्। तेन रक्तान्मांसं गुरु, मांसान्मेदः, मेदसोऽस्थि, अस्थ्नो मज्जा, मज्ज्ञः शुक्रं गुरुतमम्। मांसात्-समस्तदेहजात् वृषणादिमांसं गरीयो-गुरुतरम्। अत्र वृषणौ फलकोशापरपर्यायौ। मेढ्रं-लिङ्गम्। वृक्कं-कोष्ठाङ्गम्। यकृत्-कालीयम्। गुदं-पायुः। अत्र मांसानां स्त्रीपुंसकृतां विशेष एकयोनितः। भिन्नयोनीनां चोत्सर्गापवादस्थितार्थोपबृंहकवचनविकल्पनं यथायोगं स्वबुद्ध्या परिकल्पनीयम्। इति मांसवर्गः॥ ७८॥

हे०--अवयवादिविशेषेण गुरुलाघवमाह-पुंसः पुँल्लिंगस्य मृगादेः शरीरस्य पूर्वार्द्धं नाभ्यादिशिरोऽन्तं गुरु, स्त्रीणां तु पश्चार्द्धं नाभेरधोभागं गुरु, गर्भिणी तु सर्वैव गुरुरिति। चतुष्पात्सु मध्ये योषित् स्त्री लघुः, विहंगेषु पक्षिषु मध्ये पुमान् लघुः, शिरस्कंधोर्वीति। यथावयवेषु मध्ये पृष्ठस्य कट्याः सक्थ्नोरिति, पृष्ठादित्रयस्य यथापूर्वं गौरवं निर्दिशेत्। सक्थिभ्यां कटी गुरुः, कट्याः पृष्ठं गुर्विति। सक्थिशब्देन जंघे ग्राह्ये ऊर्वोः पृथग्ग्रहणात्, शिरोवत्पादगौरवमिति। खारणादिना पादयोः शिरस्तुल्यत्ववचनात् चकारात् पादयोश्च गौरवं विद्यात् शिरःस्कन्धोरुणश्च गौरवं विद्यात्। ऊरुभ्यां स्कंधो गुरुः, ताभ्यां शिरो गुर्विति। ऊरुस्कंधशिरः सक्थिकटीपृष्ठानां यथोत्तरं गौरवमित्यर्थः। उक्तं च सुश्रुतेन तथा-"सक्थिस्कंधक्रोडशिरःपादकरकटीपृष्ठचर्मकालेयकयकृद्दन्त्राणीति ",

कालेयं वृक्कः तथामपक्वाशययोः पक्वाशयादामाशयो गुरुरित्यर्थः । शोणितप्रभृतीनामुत्तरोत्तरं शोणितादिभिः शब्दैः शोणितसाराद्यो लक्ष्यन्ते, तेन शोणितसारस्य प्राणिनो मांसात् मांससारस्य मांसं गुरु, ततो मेदः सारस्य, ततोऽस्थिसारस्य, ततो मज्जसारस्य, ततः शुक्रसारस्येति । नन्वेवंचेत् त्वक्शब्देऽपि ग्राह्यो वक्ष्यति हि-"त्वग्रक्तादीनि सत्त्वान्तान्यग्राण्यष्टौ यथोत्तरम् । बलप्रमाणज्ञानार्थं साराण्युक्तानि देहिनाम्।"इति सत्यं, किंतु त्वक्सारस्यामांसत्वेनानुपयोगात्। सत्त्वसारतिर्यक्त्वसंभवादग्रहणं, रक्तादिधातूनामेव यथोत्तरं गुरुत्वे व्याख्यायमाने को दोष इति चेत् तन्न, मांसप्रस्तावे तेषामप्रस्तुतत्वात्, सुश्रुतेऽपि स्थानादिकृतं तु मांसस्य गुरुलाघवमुपदेक्ष्यामः तद्यथा--" रक्तादिशुक्रान्तेषु धातुषूत्तरोत्तरा गुरवः " इत्युक्तम् । तथा चरकः--" वराः शरीरावयवाः स्वभावो धातवः क्रियाः । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ॥" इति । शरीरावयवादिवद्धातूनां गुरुलाघवहेतुत्वेनोपादानात्, किंच धातवश्चेद्विवक्षितास्तदा रसादीनामेति । वृषादिति मांसाद्वृषणादि यथोत्तरं गरीयः, वृषणान्मेढ्रं, मेढ्राद्वृक्कौ, वृक्काभ्यां यकृत्कालखण्डं, ततो गुदम्। मांसादिति । शिरोमांसात्। यदाह खारणादिः-"सक्थिस्कंधावुरः शीर्षं मुष्कौ त्वङ् मेहनं कटिः । वृक्कौ यकृद्गुदे च यादामिषान्मेद्यमेव च ॥ गुरूत्तरोत्तरं विद्याच्छिरोवत्पादगौरवम् ।" इति । ननु खारणादिः त्वचोऽधिकं कट्या गौरवमाह-शिरःपादयोस्तुल्यम् । सुश्रुतस्तु शिरसोऽधिकं पादयोः, कट्या अधिकं त्वचः । तत्किमत्र प्रमाणम् उच्यते, त्वक्चर्मणोरर्थभेदादविरोधः। नहि त्वगेव[1] चर्म किंतर्हि बाह्या त्वक संहतिश्चर्म, शिरः पादमिति द्वैकत्वे कृत्वा क्रोडाच्छिरःपादं गुर्विति व्याख्येयम् । न तु क्रोडाच्छिरस्ततः पादाविति । संग्रहे तु-" ताम्रोऽत्र चारिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषकृत् । लघीयान् मधुरसश्चासौ ग्राही रूक्षो हिमः शशः ॥ कटुपाकोऽग्निकृत्पथ्यः संनिपातेऽनिलावरे । तद्वल्लावोऽपि रूक्षश्च किंचिद्रूक्षः कपिञ्जलः ॥ पारावताः कपोताश्च तद्वद्वन्याः पूजिताः । गोधा नियच्छाति विषं मूषकः शुक्रवर्द्धनः ॥ सः स्वरकरः पित्तरक्तजिन्मेदुरो हि सः । प्रतिस्रोतोऽन्चारित्वादाकाशप्लवनेन च ॥ रोहितः प्रवरस्तेषां परं त्वलिचिमो वरः । अगोचरविचारित्वात्सर्वदोषकरो हि सः ॥ कुलीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः । गुरूण्यण्डानि बालानां कषायमधुरं पलम् ॥ वृद्धानां स्नायुभूयिष्ठ[1]मवल्यं गुरुदोषलम् । " इति । इति मांसवर्गः ॥७८ ॥

मांसवर्गादनन्तरं शाकवर्गो निगद्यते---

**शाकं पाठासठीसूपासुनिषण्णसतीनजम् ॥**
**त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ७९**

स०--पाठादिजं शाकं त्रिदोषहरं लघु ग्राहि च तद्वद्राजक्षवकवास्तुकम् ॥ ७९ ॥

प०--मांसवर्गोपदेशादनन्तरं शाकवर्ग-सेवनमिति पारिशेष्यात्तस्यारम्भः। पाठादिजं शाकं-त्रीन् दोषान् हन्तीति त्रिदोषघ्नम् । तथा लघु, ग्राहि--संग्रहशीलं तथा सराजक्षवकं, वास्तुकं-त्रिदोषघ्नम्। पाठा---पापचेलिका । सुनिषण्णं सुलकं. चतुष्पत्रश्चाङ्गेरीसदृशः पानीयमध्ये कश्चिद्भवति । सतीनो राजक्षवकः, क्षुद्बोधनापरपर्यायः ॥ ७९ ॥

हे०--अथ शाकवर्गः । लेह्यादिसंस्कृतमौद्भिदानयनं शाकम् । तत्र पाठादिगुणानाह--पाठा अंबष्ठा, शटी--कर्चूरः, सूपा--कासमर्दिका; कासमर्दसदृशी, सुनिषण्णः वर्तुलच्चांगेरीसदृशपर्णः, सतीनो--विष्णुक्रान्ता, राजक्षवो--दुग्धिका, वास्तुकः--कङ्कवास्तुकः । अत्र केषांचिद्विशेषः ॥ ७९ ॥

**सुनिषण्णोऽग्निकृद्वृष्यस्तेषु ॥ ८० ॥**

स०-तेषु मध्ये सुनिषण्णः स्वस्तिकाख्यो जलमध्ये भवति । पत्रैश्चांगेरीतुल्योऽग्निकरोऽपि वृष्यः ॥ ८० ॥

प०--शाकेषु मध्ये सुनिषण्णोऽग्निं करोतीत्यग्निकृत् । तथा वृष्यः-शुक्रलः ॥ ८० ॥

हे०--तत्र सुनिषण्णगुणानाह--सुनिषण्ण इति ॥८०॥

**राजक्षवः परम् ।**

**ग्रहण्यर्शोविकारघ्नः ॥ ८१ ॥**

स०--राजक्षवः क्षुद्बोधनो राजशाकाख्योऽत्यर्थं ग्रहण्यर्शोविकारघ्नः ॥ ८१ ॥

प०--तेषु पाठादिषु मध्ये राजक्षवः- परमत्यर्थं ग्रहण्यर्शोविकारान् हन्ति ॥ ८१ ॥

हे०--राजक्षवगुणानाह--राजक्षव इति ॥ ८१ ॥

---

१ अत्र त्वगेव चर्म किंतर्हि बाह्यत्वक्संहतिरिति खपुस्तके यते ।

१ अत्र " कफभूयिष्ठम् " इति पाठान्तरम् । २ "शाखा" इति पाठान्तरम् ।

**वर्चोभेदि तु वास्तुकम् ॥ ८२ ॥**

स०--वास्तुकं तु पुनः टक्कवास्तुकाख्यं वर्चोभेदि पुरीषस्य भेदनम् ॥ ८२ ॥

प०--वर्चोभेदि-सरम् ॥ ८२ ॥

हे०--वास्तुकगुणानाह--वर्चोभेदीति । वर्चोभेदि सरम् ॥ ८२ ॥

**हंति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनम् ॥**
**काकमाची सरा स्वर्या ॥ ८३ ॥**

स०--काकमाची त्रिदोषघ्नी कुष्ठनाशनी वृष्या किंचिदुष्णा सरा भेदिनी स्वरहिता च स्वर्या । स्वास्थ्यसंवाहकत्वेन च रसायनसादृश्याद्रसायनम् ॥ ८३ ॥

प०--काकमाची--दोषत्रयं वातं, पित्तं, श्लेष्माणं हन्ति । तथा कुष्ठं हन्ति । वृष्या-शुक्रला । सोष्णा-किञ्चिदुष्णा । रसायनी-आयुर्वृद्धिं करोति । सरा-भेदिनी । स्वर्या-कंठ्या ॥ ८३ ॥

हे०--काकमाचीगुणानाह--काकमाची--कामाता । यत्तु सुश्रुतेनोक्तं तिक्ता काकमाची--पित्तं वर्द्धयत्युष्णवीर्यत्वात्सेति । तदल्पार्थं केवलपित्तकरा च ॥ ८३ ॥

**चांगेर्यम्लाऽग्निदीपनी ।**
**ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः**

स०--चांगेरी क्षुद्राम्लिकाम्ला चाग्निदीपनी ग्रहण्यादिषु हिता । उष्णवीर्या ग्राहिणी लघ्वी च ॥ ८४ ॥

प०--चाङ्गेर्यम्ला-रसे तथाऽरसे तथाऽग्निदीपनी वह्निं दीपयति । ग्रहण्यादीनां हिता । उष्णा वीर्ये । ग्राहिणी-संग्रहणशीला तथा लघुः ॥ ८४ ॥

हे०--चांगेरीगुणानाह--चांगेरी--अम्लपत्रिका ॥ ८४ ॥

**पटोलं सप्तलारिष्टशार्ङ्गेष्टावल्गुजाऽमृताः ।**
**वेत्राग्रं बृहती वासा कुंतेली[1] तिलपर्णिका ॥**
**मण्डूकपर्णी कर्कोटकारवेल्लकपर्पटाः ।**
**नाडीकलायं गोजिह्वा वार्ताकं वनतिक्तकम् ॥**
**करीरं कुलकं नंदी कुचेला शकुलादनी ।**
**कटिल्लं[1] कम्बुकं शीतं सकोशातककर्कशम् ॥**
**तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ८**

स०--पटोलादीनि कर्कशांतान्यष्टाविंशतिः शीतवीर्याणि तिक्तानि पाके कटूनि ग्राहीणि वातला कफपित्तघ्नानि च । सप्तला सातला । अरिष्टो निंबः शार्ङ्गेष्टांगारवल्लिका । अवल्गुजा बाकुची । अमृता गुडूची । वेत्रो वंशसदृशस्तस्याग्रम् । वासा वृषः कुन्तली सूक्ष्मतिलजातिः । तिलपर्णी बदरकः । मंडूकपर्णी (उंदीरकानी प्र०)वा ब्राह्मी । कर्कोटकारवेल्ले पुनः प्रथित एव । पर्पटः शीतप्रियाख्यः । नाडीकलायः सकुलाक्षकः सुवर्चलाभेदः । गोधूमिका तु गोजिह्वा गोजी क्रोष्टुकमूलिका । वनतिक्तकं वत्सकः कुलकं काकतिंदुकः । नन्दी जयवृक्षश्च शब्दितः कुचेला पाठा । शकुलादनी कटुका । कटिल्लं दीर्घपत्रो वर्षाभूः । कोशातको घंटोलिः । कर्कशः कंपिल्लकः ॥ ८५ ॥

प०--पटोलादि सकोशातककर्कशान्तं शीतं-शीतवीर्यं, तिक्तं रसे, कटुकं पाके, ग्राहि शकृदादि स्तम्भयति । वातलं-वातजनकम् । कफपित्ते जयतीति कफपित्तजित् । पटोलं कुलकं प्रोक्तम् । सप्तला-सातला । अरिष्टो-निम्बः । शार्ङ्गेष्टा-अङ्गारवल्लिका । अवल्गुजः-सोमराजी । अमृता गुडूची । वेतसाग्रं-वेतसप्रान्तम् । बृहती-सिंही वासा-वृष आटरूषकपर्यायः । कुतिला-सूक्ष्मतिलजातिः । तिलपर्णिका-त्राधकः । मण्डूकपर्णी-मण्डूकी कर्कोटकं-कंकोडकम् । कारवेल्लं-करेलकम् । पर्पटः शीतप्रियाख्यः । नाडीकलायं-शकुलाख्यः सुवर्चलाभेदः । गोजिह्वा-गोजा, क्रोष्टुकमूलापरपर्यायः वनतिक्तको-वत्सकः । कुलकं-काकतिंदुकः । नन्दी जयवृक्षश्च शब्दितः । कुचैला-पाठाभेदः । शकुलादनी कटुका । कटिल्लं-रक्तपुष्पं वर्षाभूः । कोशातकः-पटोलः । कर्कशः-कम्पिल्लकम् । सामान्यगुणा उक्ताः ॥ ८५ ॥

हे०--पटोलादिगुणानाह--पटोलः--राजीफलः, सप्तला--सातला, अरिष्टो--निंबः, शार्ङ्गेष्टा--अंगारवल्ली, अवल्गुजो--वाकूची, अमृता--गुडूची, वेत्रो--वंशसदृशः तस्याग्रमग्र-

---

१ "कुतिला" इति पाठान्तरम् ।

१ कठिल्लम् इति पाठान्तरम् ।

गः बृहती द्विधा–सिंही, व्याघ्री च । वासा–आटरूषः, ...ली–चुञ्चुसदृशी; दीर्घपत्रा, तिलपर्णिका–बदरकः, ...डूकपर्णी–ब्राह्मी, कर्कोटं–कर्कोटीफलं, कारवेल्लकं–...वीफलं, पर्पटो–ज्वरघ्नः, नाडीकलायो–मत्स्याक्षः, ...जिह्वा–दार्विपत्रिका, वार्ताकं–वृन्ताकं, वनतिक्तकं–...राततिक्तकम् , करीरं–गूढपत्रं, कुलकं–काकतिंदुकं, ...ी-मेषशृंगी, कुचेला–कृष्णपाठा, शकुलादनी–कटुरो...गी, कटिल्लं–रक्तपुनर्नवा, कैंबुकं–प्रसिद्धं, कोशातकं–...विघनं, कर्कशं–कंपिल्लम् । पटोलादिकं शीततिक्ता-...गुणम् । अत्र पटोलनिंबाऽवल्गुजामृतावेत्राग्रकर्कोटका-...ल्लेषु विवादः । तत्र पटोलफलं प्रति सुश्रुतः–कफपित्तहरं व्रण्यमुष्णं तिक्तमवातलम् । पटोलं कटुकं ... वृष्यं रोचनदीपनम् ।।'' खारणादिः–'' सस्नेहोष्णं ... स्वादु पाके दोषानुलोमनम् । उक्तं तिक्तं त्रिदोषघ्नं ... निंबपटोलयोः ।। तथा पटोलनिंबं वातघ्नं तिक्तमन्यत्तु ...लम् ।'' तत्र खारणाद्युक्तं त्रिदोषघ्नत्वं ग्राह्यम् अन्य-...वयानुपपत्तेः, वाग्भटोक्तस्य हि वातलमित्यस्य सप्तला-...भेरन्वयेन सार्थकत्वात् । पटोलस्य कफपित्तहरादिभिः । ...एव हरिश्चन्द्रजैज्जटाद्यष्टीकाकारा अपहृतव्य-...कव्यतिरेकेण गणगुणा इत्याहुः । सुश्रुतोक्तस्य त्व-...लशब्दस्य वातघ्नत्वमेवार्थः । विरुद्धार्थत्वान्नञः । ...पि वातोदासीनत्व–वातलत्वयोः सहानवस्थानलक्षणो ...धोऽस्ति तथाप्यवातलशब्देन वातोदासीनत्वं न ग्राह्यं, ...न्तरविरोधस्य तदवस्थत्वात् । अथवा अवातलशब्देन ...ग्रहणाभाव उच्यते, स च वातघ्नत्वेऽप्यस्तीत्यविरोधः । ...एव रसभेदीये वक्ष्यति ''तिक्तं कटु च भूयिष्ठमवृष्यं कोपनम् । ऋतेऽमृतापटोलीभ्यां शुंठीकृष्णारसो-... ।'' इति । माधवकरोऽप्याह–''पटोलपत्रं पित्तघ्नं ...ी चास्य कफापहा । फलं त्रिदोषशमनं मूलं तस्य ...चनम् ।। '' इति । उष्णत्वशीतत्वयोरुष्णत्वं ग्राह्यम् । ...वकाशत्वात् शीतलत्वं, वातलत्वं च सावकाशम् । ...तु खारणाद्युक्तं त्रिदोषघ्नत्वं फलविषयं सस्नेहत्वादीनां ...एव संभवात् पटोलासाहचर्याच्च । चरकसुश्रुताद्युक्तं ...लत्वं पत्रविषयम् । अवल्गुजस्य पित्तकरत्वे वातघ्नत्वे ...–खारणादिः–'' अवल्गुजः सैडगजः पित्तकृत्कफ-जित् । '' इति तत्फलविषयं धान्यवर्गे पाठात् । अत-...क्तं संग्रहे–'' आवल्गुजं सैडगजं फलं वातकफप्र-... । '' इति । पित्तघ्नत्वं, वातघ्नत्वं च पत्रविषयम् । ...तोऽप्याह–'' अवल्गुजः कटुः पाके तिक्तः पित्त-कफापहः :'' इति । गुडूच्यास्त्रिदोषघ्नत्वमुष्णत्वं चोक्तम् । संग्रहे–'' तिक्तामृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरतृड्दाहकामलावातरक्तनुत् ।। '' इति । तत्र त्रिदोषघ्नत्वोष्णत्वे ग्राह्ये अनवकाशत्वात् । वातलत्वशीत-लत्वे तु पटोलवत्सावकाशे । तथा वेत्राग्रे खारणादिना त्रिदोषघ्नत्वमुक्तं-''चुञ्चुर्मर्सरिका पाठा वेत्राग्रं सुनिषण्णकम् । शटीशाकं च संग्राहि दोषत्रयहितं लघु ।। '' इति । तत्र त्रिदोषघ्नत्वं ग्राह्यं, हारीतेन वातलस्यापोहितत्वात् । सर्वं तिक्तं वातलमवृष्यं चान्यत्र वेत्राग्रपटोलादिति सुश्रुतेन अनुक्तत्वाच्च । '' आटरूषकवेत्राग्रगुडूचीनिंबपर्पटाः । किराततिक्तसहितास्तिक्ताः पित्तकफापहाः ।। '' इति । कर्कोटकारवेल्लयोः सुश्रुतेन वातघ्नत्वमुक्तं–'' कफवातहरं तिक्तं रोचनं कटुकं लघु । वार्ताकं दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ।। तद्वत्कर्कोटकं विद्यात्कारवेल्लकमेव च ।'' इति । तत्र वातलत्वं ग्राह्यम्, आतिदेशिकादौपदेशिकस्य बलीयस्त्वात् । सादृश्यस्यापि च कतिपयैरपि गुणैश्चरितार्थ-त्वादुपमानादुपमेयस्य हीनगुणत्वात् । किं च चरकादि-विरुद्धः सुश्रुतपाठो न प्रमाणमित्युक्तं जैज्जटेन । विगीतश्चायमतिदेशपाठः । अत्र केषांचिद्विशेषः ।।८५।।

सामान्यगुणानुक्त्वा केषांचिद्गुणकर्मविशेषमाह––

**हृद्यं पटोलं कृमिनुत्स्वादुपाकं रुचिप्रदम् ।**
**पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ।।८६।।**

**स०–**मुनिनाऽप्युक्तम् । पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा । फलं त्रिदोषशमनं मूलं चास्य विरेचनमिति । बृहतीद्वयं स्थूलबृहती महोटिकाख्या । क्षुद्रबृहती कंटकारिकाख्या । तदेतदुभयं पित्तकरम-ग्निदीपनं शकृदादीनां भेदनं वातघ्नं च ।। ८६ ।।

**प०–**केषांचिद्गुणकर्मविशेषमाह-मुनिनाप्युक्तम्–– ''पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा । फलं त्रिदोषशमनं मूलं चास्य विरेचनम् ।।'' इति । बृहतीद्वयं स्थूलबृहती-महोटिकाख्या, क्षुद्रबृहती-कण्टकारिकाख्या, तदेतदुभयं पित्तकरमग्निदीपनम् । शकृदादीनां भेदनं वातघ्नम् ।। ८६ ।।

**हे०–**तत्र पटोलगुणानाह–हृद्यमिति । बृहतीद्वयगुणा-नाह–पित्तलमिति ।। ८६ ।।

**वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ।। ८७ ।।**

स०–वृषं छर्दिकासौ हंति । रक्तपित्तं चात्यर्थं जयति ॥ ८७ ॥

प०—वृषं छर्दिकासौ हन्ति, रक्तपित्तं चात्यर्थं जयति ॥ ८७ ॥

हे०–वासागुणानाह–वृषमिति ॥ ८७ ॥

**कारवेल्लं सकटुकं दीपनं कफजित्परम् ॥ ८८॥**

स०–कारवेल्लमीषद्रसे कटुकमग्निदीप्तिकरमतिश्लेष्मघ्नम् ॥ ८८ ॥

प०–कारवेल्लमीषत् रसे कटुकमग्निदीप्तिकरमतिश्लेष्मघ्नम् ॥ ८८ ॥

हे०–कारवेल्लगुणानाह–कारवेल्लमिति ॥ ८८ ॥

**वार्ताकं कटु तिक्तोष्णं मधुरं कफवातजित् ।**
**सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ॥ ८९॥**

स०–वार्ताकं रसे कटु तिक्तमुष्णवीर्यं मधुरं वातश्लेष्मघ्नम् । सह क्षारेण वर्तते सक्षारं किंचित्क्षारत्वयुक्तमग्निजननम् । हृद्यं हृदयाय हितम् । रुच्यं रुचिकृत् । अपित्तलम् । नञीषदर्थे । किंचित्पित्तकरमित्यर्थः । तत्र सह क्षारेण वर्तते सक्षारमित्येवं कथमुक्तम् । यावता क्षारं द्रव्यम् । तथा च प्रागुक्तं क्षरणादित्यादि । न द्रव्यं द्रव्येण सह वर्तते । तथा च गुणानामेवाऽयं धर्मो यद्द्रव्याश्रितत्वं नाम। तस्मात्क्षारमित्ययुक्तमिव मन्यामहे । अत्राऽऽचक्ष्महे । क्षारशब्देनाऽत्र क्षारधर्म उपलक्ष्यते । विस्रावणाद्यात्मकस्तद्वत्सक्षारमिति द्रव्यमुपदिश्यते । तस्मात्सक्षारमित्युपपन्नम् ॥ ८९ ॥

प०–वार्ताकं–रसे कटु, तिक्तमुष्णवीर्यं, मधुरं, वातश्लेष्मघ्नम् । सह क्षारेण वर्तते सक्षारम् । किञ्चित् क्षारत्वयुक्तमग्निजननम् । हृद्यं–हृदयाय हितम् । रुच्यं–रुचिकृत् । अपित्तलम् । नञ् ईषदर्थे, किञ्चित् पित्तकरमित्यर्थः । तत्र सह क्षारेण वर्तते सक्षारमित्येव कथमुक्तम् । यावता क्षारं द्रव्यं च । तथाच प्रायुक्त । क्षारणादित्यादिना । द्रव्यं द्रव्येण सह वर्तते तथाच गुणानामेवायं धर्मो यद्द्रव्याश्रितत्वं नाम। तस्मात् सक्षारमिति युक्तमिव मन्यामहे । अत्राचक्ष्महे क्षारशब्देनात्र क्षारधर्म उपलक्ष्यते विस्रावणाद्यात्मकः यद्वत् सक्षारमिति द्रव्यं परिदृश्यते। तस्मात् सक्षमित्युपपन्नम् ॥ ८९ ॥

हे०–वार्ताकगुणानाह–वार्ताकमिति । अपित्तल बालपक्वव्यतिरेकेण।यदाह माधवकारः "तद्बालं कफपि पक्वं सक्षारपित्तलम्" इति।सुश्रुतोऽप्याह–जीर्णं सक्षारं पित्तलमिति ॥ ८९ ॥

**करीरमाध्मानकरं कषायस्वादुतिक्तकम् ॥९०**

स०–करीरं गूढपत्राख्यमाध्मानकरं रसे कषायमधुरतिक्तकम् ॥ ९० ॥

प०–करीरं–गूढपत्राख्यमाध्मानकरम् । रसे कषायमधुरतिक्तकम् ॥ ९० ॥

हे०–करीरगुणानाह–करीरमिति ॥ ९० ॥

**कोशातकावल्गुजकौ भेदनावग्निदीपनौ ॥९१**

स०–अनयोश्च पित्तकारित्वं वातकफघ्नत्वं वेद्यम् । तथाहि । प्रायेण यद्रूक्षं गुडूच्यादिव्य तत्पित्तलं वातपित्तकफहरं च दृष्टम् । तथा चाह मुनि कफवातनुदवल्गुज इति । तदेवमन्यत्राऽप्यौचित्ये दोषकरत्वादि कल्प्यम् । संग्रहे चान्येऽप्युक्ताः यथा–"सतरूठं कंदकं च चक्षुर्ग्राहि हिमं गुरु कुमारी जीवलोणिका नलिनी गुचुपर्णिका ॥ स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु । श्यामा शाल्मलि काश्मर्यः फंजी कर्णिकयूथिका ॥ वृक्षादनी क्षीरवृक्ष बिंबी तनिकवृक्षिका । रोध्रः शाणः कर्बुदारः सशेलु वृषमूषिका ॥ भल्लातकः कोविदारः कमलोत्पलकिंशुकम् । पटोलादिगुणं स्वादु कषायं पित्तजित्परम् ॥ वातपित्तहरा रूढी पर्विणी दीर्घपुष्पिका । लघुरुष्णतरा तिक्ता सारुबूका च लांगली ॥ वातला कटुतिक्ताम्लभेदिनौ तिलवेतसौ । विश्वं रास्ना बलाशाकं वातघ्नमतिसारनुत्॥ वातं वत्सादनी हन्यात्कफं कंडीरचित्रका" इति । मुनिना चान्येऽप्युक्ताः । न्यग्रोधोदुंबराऽश्वत्थप्लक्षपद्मादिपल्लवाः । कषायाः स्तम्भनाः शीता[1] हिताः पित्तातिसारिणाम् । तथा

१ अत्र "हृद्याः शीताः" इति पाठान्तरम् ।

श्रुते गदितम् । करीरकुसुमं ज्ञेयं कफपित्तहरं लघु । आगस्त्यं नातिशीतोष्णं नक्तांधानां प्रशस्यते । चातुर्थकज्वरहरं नस्ययोगेन शीलितम् । राजवृक्षस्य निंब- शिग्रोः सिंहमुखस्य च । कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च । श्रेयसी बिल्वपर्णी च बिल्वपत्रं च वातनुदिति ॥ ९१ ॥

प०--अनयोश्च पित्तकारित्वं, वातकफघ्नत्वं च ज्ञेयम् । प्रायेण यद्यद्रूक्षं गुडूच्यादिद्रव्यं तत्पित्तलं, वातकफहरं च दृष्टम् । तथाचाह मुनिः—कफवातघ्नवल्गुज इति । तदेवमन्यत्राप्यौचित्येन दोषहरत्वादि कल्प्यम् । संग्रहे त्वन्येऽप्युक्ताः । यथा- सतरूठं कदंबं च रूक्षं ग्राहि हिमं गुरु । कुमारी ...वलोणिका नलिनी गुचुपर्णिका । स्वादु रूक्षं लवणं वातश्लेष्मकरं गुरु । श्यामाशाल्मलिका- ...र्यः फञ्जी कर्णिकयूथिका ॥ वृक्षादनी क्षीरवृक्षा ...म्बी तनिकवृक्षका । रोध्रः शाणः कर्बुदारः सशेलु- मूषिका॥ भल्लातकः कोविदारः कमलोत्पलकिंशु- ...। पटोलादिगणं स्वादु कषायं पित्तजित्परम् ॥ ...तपित्तहरा रुंडी[1] पर्विणी पूर्वपुष्पिका[2] । लघुरुष्णा तिक्ता सारुवूका च लाङ्गली ॥ वातका कटु- काम्लभेदिनौ तिलवेत्तसौ । विश्वं रास्ना बला- कं वातघ्नमतिसारनुत् । वातं वत्सादनी हन्यात् ...ं कंडीरचित्रकौ" इति । मुनिना चान्येऽप्युक्ताः । ...ग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः । कषायाः ...म्भना हृद्याः शीताः पित्तातिसारिणाम् । अथ ...ते गदितम् —" करीरकुसुमं ज्ञेयं कफपित्तहरं ...। आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते । ...र्थकज्वरहरं नस्ययोगेन शीलितम् । राजवृक्षस्य ...बस्य शिग्रोः सिंहमुखस्य च ॥ कफपित्तहरं पुष्पं ...घ्नं कुटजस्य च । श्रेयसी बिल्वपर्णी च बिल्वपत्रं वातनुत् ॥ इति ॥ ९१ ॥

हे०--कोशातकावल्गुजकयोर्गुणानाह—कोशातका- ॥ ९१ ॥

**...लीयो हिमो रूक्षः स्वादुपाकरसो लघुः । ...पित्तविषास्रघ्नः ॥ ९२ ॥**

[1] अत्र रूडीत्यपि पाठान्तरम् । [2] "दीर्घपुष्पिका" इति ...न्तरम् ।

स०--तंडुलीयो मंडीरकाख्यः शीतवीर्यो रूक्षः स्वादुपाकरसो लघुर्मदादिनाशनश्च ॥ ९२ ॥

प०—तन्दुलीयो मठीरकाख्यः—शीतवीर्यो, रूक्षः, स्वादुपाकरसो, लघुः, मदादिनाशनश्च ॥९२॥

हे०--तंडुलीयगुणानाह—तंडुलीय इति । तंडुलीयोऽल्पमारिषः ॥ ९२ ॥

**मुंजातं वातपित्तजित् । स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत्परम् ॥ ९३ ॥**

स०--मुंजातं वातपित्तघ्नं स्निग्धादिगुणयुतमति— शुक्रकृच्च ॥ ९३ ॥

प०—मुञ्जातं—वातपित्तहृत्, स्निग्धादिगुणयुतमति- शुक्रकृच्च ॥ ९३ ॥

हे०-मुञ्जातगुणानाह—मुञ्जातं कंदविशेषः, काश्मीरे प्रसिद्धः ॥ ९३ ॥

**गुर्वी सरा तु पालंक्या ॥ ९४ ॥**

स०—पालक्या गुर्वी तथा सरा शकृदादिभेदिनी । तुशब्दः पिच्छिलश्लेष्मलहिमादीनां संग्रहोक्तानां समुच्चयार्थः । तथा चोक्तं संग्रहे । पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमेति ॥ ९४ ॥

प०—पालक्या—गुर्वी तथा सरा शकृदादिभञ्जनी। तुशब्दः पिच्छिलश्लेष्महिमादीनां संग्रहोक्तानां समुच्चयार्थः । तथाचोक्तं संग्रहेऽपि—"पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा ।" इति ॥ ९४ ॥

हे०—पालंक्यागुणानाह—गुर्वीति । ईषल्लोहितचीरितपत्रा वास्तुकसदृशा पालंक्या—" चिल्ली वास्तुकवत् ज्ञेया पालंक्या तंडुलीयवत् । वातकृद्बद्धविण्मूत्रा रूक्षा पित्तकफे हिता ॥ " इति सुश्रुतेन बद्धविण्मूत्रोक्ता, इह तु सरेति विरोधः, मैवं आमा बद्धविण्मूत्रा, पक्वा तु सरेति विषयभेदात् । यदाह चरकः—सर्वाणि सूप्यकानीत्यादौ पालंक्यां पठित्वा शाकं गुरु च रूक्षं च प्रायो विष्टभ्य जीर्यति । मधुरं शीतवीर्यं च पुरीषस्य च भेदनम् ॥ " इति सुश्रुतोक्तं च पित्तकफहितत्वं पित्तावृतकफविषयमिति । " पालंक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा ॥ " इति संग्रहे श्लेष्मलत्ववचनात् ॥ ९४ ॥

[1] अत्र " पालक्या " इति पाठान्तरम् ।

नंदीमाषककेलूटशृंगाटककशेरुकम् ।
क्रौंचादनं कलोड्यं च रूक्षं ग्राहि हिमं गुरु १०४

स०-मृणालादि रूक्षं संग्रहणं शीतवीर्यं गुरु च । मृणालं द्विविधं सूक्ष्मं स्थूलं च । तत्र सूक्ष्मं मृणालमितरद्बिसम् । शालूकं पद्ममूलम् । कुमुदकंदम् । कुमुदं शशिप्रियम् । उत्पलकंदकं रक्तोत्पलकंदम् । नंदी तुंडेरिका । माषको वास्तुलः । केलूटं हिस्मकसंज्ञमुदुंबरभेदः । शृंगाटकं त्रिकोणाकृति जलोद्भवं कंदम् । कसेरुकं मागधम् । क्रौंचादनं तमेदम् । कलोड्यं पद्मबीजम् ॥ १०४ ॥

प०-मृणालादि-रूक्षं, संग्रहणं,शीतवीर्यं गुरु च । मृणालं द्विविधं-सूक्ष्मं, स्थूलं च । तत्र सूक्ष्मं मृणालमितरद्बिसम् । शालूकं-पद्ममूलम् । कुमुदकन्दम् । कुमुदं-शशिप्रियम् । उत्पलकन्दं-रक्तोत्पलकन्दम् । नन्दी-तुण्डेरिका । माषको-वास्तुलः । केलूटं-हिस्मकसंज्ञमुदुम्बरभेदः। शृङ्गाटकं-त्रिकोणाकृति जलोद्भवं कन्दम्। कसेरुकं-मागधम् । क्रौञ्चादनं-मेदम्। कलोड्यं-पद्मबीजम् ॥ १०४ ॥

हे०-मृणालादिगुणमाह-मृणालं-सूक्ष्मं कमलमूलं, बिसं स्थूलं, शालूकं-पद्मकन्दं, कुमुदोत्पलयोः कन्दस्य पृथग्ग्रहणात् । रक्तं-पद्मं, श्वेतं-कुमुदं, नीलमुत्पलं, नन्दी माषको वानीरकः, केलूटं-जलोदुम्बरः, शृङ्गाटकास्त्रिकोणो जलकन्दः, कसेरुकं-लोमशकृष्णवर्तुलसूक्ष्मस्तडागकन्दः । क्रौंचादनं-घेचुलिका, कलोड्यं-पद्मबीजम् ॥ १०४ ॥

कलंबनालिकामार्षकुटिंजरकुतुंबकम् ।
चिल्लीलट्वाकलोणीकाकुरूटकगवेधुकम् ।
जीवंतझुंझ्वेडगजयवशाकसुवर्चलम् ।
आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम्
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ।
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ।
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् १०५

स०-कलंबादिकं मधुरं किंचिल्लवणं वातश्लेष्मकरं गुरु च शीतवीर्यं मूत्रं पुरीषं च विसृजति बहिः क्षिपति । विष्टभ्योदरप्रदेशे पिंडीभूय जीर्यति परिणमति । प्रायोग्रहणं किंचिदेषां मध्ये नैवं स्वरूपमिति ज्ञापनार्थम् । कलंबं कदंबः । नालिका दीर्घनालरूपा कलंबुसंज्ञा । मार्षो गंधारिका । कुटिंजरं ताम्रमूलकम् । कुतुंबको द्रोणपुष्पी । चिल्ली पृथुपत्रं यवशाकं कुमामसंज्ञम्।लट्वाको गुग्गुलुकः। लोणीका।लोणारः। कुरूटकः स्थितिवारकः।गवेधुकं तृणधान्यविशेषः। जीवंतो बृहद्द्रांधारम् । झुंझुर्झुझुरुकः । एडगजः प्रपुन्नाटः । यवशाकं ह्रस्वपत्रा चिल्ली । सुवर्चला रविभक्ता । आलुकानि च सर्वाणि नानाविधानि रक्तालुकमधुकालुकादिभेदेन । सूप्यानि मुद्गराजमाषादिपत्राणि । लक्ष्मणं मधुयष्टिका । एतच्च सर्वं स्विन्नं निष्पीडितरसमतिबहुस्नेहं च नात्यपथ्यम् । सुश्रुते चोक्तम् । संस्कृतं वेसवारेण सस्नेहं शाकमिष्यते । राजिकासक्तुभक्तादिसंस्कारं चानुवर्तते ॥ १०५ ॥

प०-शीतवीर्यं-सृष्टमूत्रपुरीषं च सृजति बहिः क्षिपति । विष्टभ्योदरप्रदेशे पिण्डीभूय जीर्यति परिणमति । प्रायोग्रहणं किञ्चिदेषां मध्ये नैवं स्वरूपमिति ज्ञापनार्थम् । कलम्बं-कदम्बः । नालिका-दीर्घनालरूपा कलम्बुसंज्ञा । मार्षो-गन्धारिका । कुटिञ्जरं-ताम्रमूलकम् । कुतुम्बको-द्रोणपुष्पी । चिल्ली पृथुपत्रं यवशाकं कुमामसंज्ञम् । लट्वाको-गुग्गुलुः । लोणीका-लोणारः । कुरंटकः-सितपाटकः । गवेधुकं-तृणधान्यविशेषः । जीवन्तो-बृहद्द्रान्धारम् । झुंझुर्झुझुरुकः । एडगजः-प्रपुन्नाटः । यवशाकं-ह्रस्वपत्रा चिल्ली । सुवर्चला-रविभक्ता । आलुकानि च सर्वाणि नानाविधानि रक्तालुकमधुकादिभेदेन । सूप्यानि-मुद्गराजमाषादिपत्राणि । लक्ष्मणं-मधुयष्टिका । तत्र सर्वं स्विन्नं निष्पीडितरसमतिबहुस्नेहं च नात्यपथ्यम् । सुश्रुतेनोक्तम्-"संस्कृतं वेसवारेण सस्नेहं शाकमिष्यते । राजिकासक्तुभक्तादिसंस्कारं चानुवर्तते" ॥ १०५ ॥

हे०-कलम्बादिगुणानाह-"कलम्बुर्नाडिकाकारः शुषिरो बहुतोयजः" नालिका तस्मादल्पा, सूक्ष्मा च । मार्षः-मंटकः, कुटिञ्जरः प्रसिद्धः, कुतुम्बको-द्रोणपुष्पी, चिल्ली-प्रसिद्धा, लट्वाकः-गुग्गुलुशाकम्, लोणीका-गोलिका, कुरुटकः-शितिवारकः, गवेधुका-कसिका, जीवन्तो-[illegible]

१ अत्र "कलम्बुः" इति पाठान्तरम् । २ अत्र "कुरण्टक" इति पाठान्तरम् । ३ "लाक्ष्मणम्" इति पाठा० ।

लो माषः, छुञ्छुः-छुञ्छुरूकः, एडगजः-प्रपुन्नाटः, यव-कं-चिल्लीसदृशं लघुपत्रं, सुवर्चला-रविभक्ता । सर्वा-लुकानि पिण्डालुकमध्वालुकहस्त्यालुकादीनि। सूप्यानि ादीनां। शिंब्यः, पत्राणि च। लक्ष्मणा-रक्तबिन्दुच्छदा या इदं लाक्ष्मणम्।लक्ष्मणं-यष्टीमधु तस्येदं लाक्ष्मणामि-के। प्रायोग्रहणं प्रपुन्नाटादिषु व्यभिचारार्थम् । यदाह श्रुतः-"कफापहं शाकमुक्तं वरुणप्रपुन्नाटयोः । रूक्षं च शीतं च वातपित्तप्रकोपनम्॥" इति । विष्टभ्य यीति पच्यमानं विष्टम्भं करोतीत्यर्थः । अतएव पक्कं सृष्टविण्मूत्रम्॥ संग्रहे तु"चिल्लीनिष्पावलट्वाककु-कगवेधुकाः। यातुका शालकल्याणी त्रिपर्णी पीलुप-का ॥ कुमारजीवलोणीका यवशाकसुवर्चला । कुकुं-लिनीझुंझुमृगधूमं सलक्ष्मणम्। आलुकानि च सर्वाणि ा सूप्यानि रालकाः । जीवन्तकश्चञ्चुपर्णी प्रपुन्नाटकु-कम् ।" इति। कलंब्वादीनां संस्करणादिवशाद्विशेष-इ-पूर्वं स्विन्नं ततो निष्पीडितरसं ततो बहुना स्नेहेन धितं सन्नातिदोषलमिति । दोषलग्रहणात्कलंब्वादीनां श्चित्पित्तलत्वमपि ज्ञेयं, वातश्लेष्मकरोक्तिस्त्वतिशया-। उक्तं च सुश्रुतेन-"स्वादुपाकरसाः शीताः श्लेष्मला तिपित्तलाः। लवणानुरसा रूक्षाः सक्षारा वातलाः ाः ॥" इति ॥ १०५ ॥

**ुपत्रा तु या चिल्ली सा वास्तुकसमा मता१०६**

स०--लघुपत्रा या चिल्ली यवशाकविशेषः सा तु स्तुकसमा गुणैर्मता ॥ १०६ ॥

प०-लघुपत्त्रा या चिल्ली यवशाकविशेषः। सा वास्तुकसमा गुणैर्मता ॥ १०६ ॥

हे०-चिल्लीविशेषस्य गुणमाह-लघुपत्रेति ॥ १०६ ॥

**र्कारीवरणं स्वादु सतिक्तं कफवातजित् १०७**

स०-तर्कार्यरणीका। वरणो मालः। समाहारेण र्द्वंद्वः । एतत्स्वादु किंचित्तिक्तं कफवात-च ॥ १०७ ॥

प०-तर्कार्यरणिका । वरणो-मालः। समाहा-ा तयोर्द्वन्द्वः। तत् स्वादु, किञ्चित्तिक्तं, कफ-ातघ्नं च ॥ १०७ ॥

हे०-तर्कारीवरुणयोर्गुणमाह-तर्कारी-अग्निमन्थः, वरुण सेतुवृक्षः। यत्तु सुश्रुतेन वरुणस्य वातपित्तप्रकोपणत्वमुक्तं तत्संसृष्टविषयम्॥ १०७ ॥

**वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम्। दीपनं भेदनं हंति गरशोफकफानिलान् १०८**

स०-वर्षाभ्वौ पुनर्नवे तथा कालशाकं किंचि-त्क्षारं रसे च कटुतिक्तं वह्निदीपनं भेदनं गरादींश्च हरति। कठिल्लो वर्षाभूः स च प्रागुक्तगुणः। तथा च निघंटुः। पुनर्नवा विशाखश्च कठिल्लः सासिनाडिका। वृश्चिकः क्षुद्रवर्षाभूर्दीर्घपत्रः कठिल्लकः। पुनर्नवा परः क्षुद्रः सद्यो मंडलपत्रकः । श्वेतमूलो वर्षकेतुर्मदा वर्षाभुरुच्यत इति ॥ १०८ ॥

प०-वर्षाभ्वौ पुनर्नवे। तथा कालशाकं-किञ्चि-त् क्षारं, रसे च कटुतिक्तकं, वह्निदीपनं, भेदनं, गरादींश्च हन्ति । कठिल्लोऽपि वर्षाभूः स प्रागुक्त-गुणः। तथाच निघंटुः। "पुनर्नवा विशाखश्च कठिल्लः सासिनाडिका। वृश्चिकः क्षुद्रवर्षाभूर्दीर्घपत्त्रः कठिल्लकः। पुनर्नवा परः क्षुद्रः सद्यो मण्डलप-त्त्रकः । श्वेतमूलो वर्षकेतुर्महावर्षाभुरुच्यते" इति ॥ १०८ ॥

हे०-वर्षाभूद्वयस्य, कालशाकस्य च गुणमाह-वर्षाभ्वौ-ह्रस्वमहत्यौ रक्तश्वेतपुनर्नवे, कालशाकं-कालिकाशाकम्। अनिलघ्नत्वं तु कालशाकं विना तस्य वातलत्वात्। यदाह-खारणादिः-"कालशाकं सकरञ्जं कटुकं वातकोपनम्। दीपनीयं प्रशस्तं च विषशोफोदरार्शसाम् ॥" इति । चरकोऽपि-"लघूष्णं वातलं रूक्षं कालाख्यं शाकमुच्यते।" इति। अतएव माधवकारो वर्षाभूभ्यां पृथगाह-"कालशाकं गरश्लेष्मशोषघ्नं दीपनं कटु" इति, "वर्षाभ्वौ कफवातघ्नौ हितौ शोफोदरार्शसाम्।" इति ॥ १०८ ॥

**दीपनाः कफवातघ्नाश्चिरिबिल्वांकुराः सराः १०९**

स०--चिरिबिल्वः पूतिकरंजस्तस्यांऽकुरा वह्निदी-पनाः कफवातघ्नाः सराश्च ॥ १०९ ॥

प०-चिरिबिल्वः-पूतिकरञ्जः, तस्याङ्कुराः-वह्निदीपनाः, कफवातघ्नाः, सराश्च ॥ १०९ ॥

हे०-चिरिबिल्वाङ्कुरगुणानाह-चिरिबिल्वः करञ्जः ॥ १०९ ॥

---

१ "वरुणम्" इति पाठा०।

**शतावर्यंकुरास्तिक्ता वृष्या दोषत्रयापहाः११०॥**

स०—शतावर्या अंकुराः प्ररोहास्तिक्तरसा वृष्याः शुक्रकृतस्त्रिदोषघ्नाश्च ॥ ११० ॥

प०—शतावर्यङ्कुराः प्ररोहास्तिक्तरसाः, वृष्याः शुक्रकृतास्त्रिदोषघ्नाश्च ॥ ११० ॥

हे०—शतावर्यङ्कुरगुणानाह—शतावर्यङ्कुरा इति ॥ ११० ॥

**रूक्षो वंशकरीरस्तु विदाही वातपित्तलः १११॥**

स०—वंशकरीरो वंशांकुरो रूक्षो विदाही वातपित्तकृत् ॥ १११ ॥

प०—वंशकरीरो वंशाङ्कुरो—रूक्षो, विदाही, वातपित्तकृत् ॥ १११ ॥

हे०—वंशाङ्कुरगुणानाह—रूक्ष इति । वंशो-वेणुः, करीरोऽङ्कुरः । ननु दोषल इत्युच्यतां, सुश्रुतेन कफकरत्वस्योक्तत्वात् "वेणोः करीराः कफला मधुरा रसपाकतः । विदाहिनो वातकराः सकषाया विरूक्षणाः ॥" इति । नैवं, अनार्षोऽयं पाठः जैज्जटोत्प्रेक्षितत्वात् । आर्षस्तु "वेणोः करीराः श्लेष्मघ्नाः कटुका" इत्यादि । उक्तं हि संग्रहे—"वंशकरीरास्तु विदाहिनः"—"वातपित्तकरा रूक्षाः कटुपाकाः कफापहाः।"इति । माधवकारेणाप्युक्तं"वातपित्तकरा रूक्षाः कटुका रसपाकतः । वेणोः करीराः श्लेष्मघ्नाः सकषाया विदाहिनः ।" इति । यत्तु कंदवर्गे सौश्रुतीयाः पठन्ति—"वेणोः करीरा गुरवः कफमारुतकोपनाः ।" इति तदप्यनार्षं पुनरुक्तत्वात् वंशमूलांकुरविषयं च ॥ १११ ॥

**पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ।**

स०—पत्तूरो दीपनस्तिक्तरसः प्लीहादिजित् । पत्तूरो मत्स्याक्षकः ॥ ११२ ॥

प०—पत्तूरो—दीपनस्तिक्तरसः, प्लीहादिजित् । पत्तूरो मत्स्याक्षकः ॥ ११२ ॥

हे०—पत्तूरगुणानाह—पत्तूरो लोहमारः ॥११२॥

**कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः११३**

स०—कासमर्दः सरः कृम्यादींश्च नाशयति । उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम् ॥ ११३ ॥

प०—कासमर्दः—सरः, कृम्यादींश्च नाशयति । उत्क्लेदः—स्रोतसां मालिन्येनार्द्रत्वम् ॥ ११३ ॥

हे०—कासमर्दगुणानाह—उत्क्लेदः—क्लेदाधिक्यम् ११३

**रूक्षोष्णमम्लं कौसुंभं गुरु पित्तकरं सरम् ११४**

स०—कुसुंभशाकं रूक्षमुष्णवीर्यमम्लं गुरु पित्तकृत्सरं च ॥ ११४ ॥

प०—कौसुम्भं शाकं—रूक्षमुष्णवीर्यमम्लं, गुरु, पित्तकृत् सरं च ॥ ११४ ॥

हे०—कौसुम्भगुणानाह—कौसुम्भं-कुसुम्भशाकम् ११४

**गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ११५॥**

स०—सार्षपं शाकं गुरूष्णवीर्यम् । तथा शकृन्मूत्रं च बध्नाति । त्रिदोषकृच्च । संग्रहे तु सक्षारत्वमस्योक्तम् । तत्पाठो हि । सक्षारमधुरं स्निग्धमुष्णं च गुरु सार्षपमिति । सुश्रुतेन चोक्तम् । कफघ्नं सार्षपं शाकमासुरं शाकमेव चेति ॥ ११५ ॥

प०—सार्षपं शाकं—गुरूष्णवीर्यं तथा शकृन्मूत्रं च बध्नाति । त्रिदोषकृच्च । संग्रहे तु सक्षारत्वमस्योक्तम् । तत्पाठो हि । "सक्षारमधुरं स्निग्धमुष्णं च गुरु सार्षपम् ।" इति । सुश्रुतेनोक्तम्—"कफघ्नं सार्षपं शाकमासुरं शाकमेव च" इति ॥ ११५ ॥

हे०—सार्षपगुणानाह—सार्षपं सर्षपशाकं, संग्रहे तु—"सक्षारं मधुरं स्निग्धमुष्णं गुरु च सार्षपम् । [illegible]कानामवरं बद्धविण्मूत्रं सर्वदोषकृत्" इति ॥ ११५ ॥

**यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम् ।**
**तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ।**
**गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥**
**स्वराग्निसादोदावर्तपीनसांश्च ॥ ११६ ॥**

स०—यन्मूलकमव्यक्तरसमस्फुटस्वादं तथा किंचित्क्षारमीषत्क्षारगुणयुक्तं कार्यतोऽनुमीयमानं तथा सतिक्तमीषत्तिक्तकं रसनेंद्रियस्य किंचिदुद्वेजकं, तन्मूलकं दोषाणां हरं दोषहरं नान्यावस्थम् । बालं मूलकं दोषहरमित्यनेनास्य विशिष्टा बालावस्था दोषहरत्वेन नियम्यते । न सर्वं बालावस्थं दोषहरमि[illegible]

द्रूपमित्यर्थः । अन्ये तु दोषहरमित्यत्र समासं
ा वातश्लेष्मघ्नत्वमेवास्य प्रतिजानते । यतः किंचि-
वीर्यत्वात्पित्तकरत्वमस्यास्त्येव । किंचित्तिक्तरसोपे-
न पित्तकर्तृत्वमस्य व्याहर्तुं न युक्तम् । वक्ष्यति हि ।
विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहतीति । एवं
न्मूलकं वातश्लेष्मघ्नमेव युक्तं न तु पित्तहृद्वेति
मभिप्रायः । एतच्च मूलकं गुल्मादीन्नियच्छति ।
सांश्चेति चशब्दः समुच्चये । अन्यानप्येवं प्रायशो
ान्नियच्छतीति । सुश्रुतस्तु । सर्वदोषहरा लघ्वी कंठ्या
कपोतिकेति यद्भेदांतरं ब्रूते तदप्यत्रैव बालमूलक-
णेऽन्तर्भूतमिति तंत्रकृतेह पृथङ् नोक्तम् ॥ ११६॥

प०—यन्मूलकमव्यक्तरसमस्फुटास्वादं तथा किं-
तु क्षारगुणयुक्तं कार्यतोऽनुमीयमानम् । तथा सति-
षत्तिक्तकं, रसनेन्द्रियस्य किञ्चिदुद्वेजकं तन्मू-
—दोषाणां हरं दोषहरं नान्यावस्थम् । बालं
कं दोषहरमित्येवं नवास्य विशिष्टा बालावस्था
हरत्वेन नियम्यते । न सर्वं बालावस्थं दोषहर-
ा त्वीदृग्रूपामित्यर्थः । अन्ये तु दोषयोर्हरमित्यत्र
ासं कृत्वा वातश्लेष्मघ्नत्वमेवास्य प्रतिजानते ।
: किञ्चिदुष्णवीर्यत्वात् पित्तकर्तृत्वमस्यास्त्येव ।
ञ्चित्तिक्तरसोपेतत्वेन पित्तकर्तृत्वमस्य व्याहर्तुं
युक्तम् । वक्ष्यति हि—"रसं विपाकस्तौ वीर्यं
ावस्तान् व्यपोहति । " एवं चैतन्मूलकं वात-
ष्मघ्नमेव युक्तं, नतु पित्तहृच्चेति तेषामभिप्रायः ।
च्च मूलकं गुल्मादीन् नियच्छति, पीनसांश्चेति
ाब्दः समुच्चये । अन्यानप्येवं प्रायशो रोगा-
यच्छति । सुश्रुतस्तु—"सर्वदोषहरा लघ्वी कण्ठ्या
कपोतिका ।" इति यद्भेदान्तरमूचे तदप्यत्रैव
लमूलकलक्षणेऽन्तर्भूतम् ॥ ११६ ॥

हे०—अथ मूलकगुणानाह—तत्र बालमूलकगुणानाह—
ं—कोमलम् । तस्य तिस्रोऽवस्थाः—प्रथममव्यक्तरसं,
ईषल्लवणं, तत ईषत्तिक्तम् । तदवस्थात्रयेऽपि दोषहर-
दिगुणं स्वराग्न्योः सादः ॥ ११६ ॥

महत्पुनः ।

। पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् ॥
र्वभिष्यंदि च ॥ ११७ ॥

स०—अव्यक्तरसादिलक्षणावस्थां विहाय यावद्व्य-
क्तरसाद्यवस्थं तत्संपद्यते ततोऽनंतरं क्रमेण रसविपा-
कयोः कटुकमुष्णवीर्यं तन्मूलकं महद्वृद्धं त्रिदोषकृद् गु-
र्वभिष्यंदि च भवति । वृद्धस्य च मूलकस्यानेका अ-
वस्थाः संभवंति । तत्र चास्याद्याऽवस्थायां किंचि-
त्रिदोषकृत्त्वमंत्याऽवस्थायामतिशयेन त्रिदोषकृत्त्वं वेद्यम् ।
संग्रहे त्वस्य स्वादुविपाकित्वमुक्तम् । तत्पाठे । मह-
त्पुनः रूक्षोष्णं कटुकं स्वादु विपाके सर्वदोषकृदिति ।
तच्चामविषयम् ॥ ११७ ॥

प०—अव्यक्तरसादिलक्षणावस्थां विहाय यावद्व्य-
क्तरसाद्यवस्थं तत्संपद्यते । ततोऽनन्तरं क्रमेण रस-
विपाकयोः कटुकमुष्णवीर्यं तन्मूलकं महद्वृद्धं सर्व-
दोषकृद्गुर्वभिष्यन्दि भवति । वृद्धस्य च मूलस्याने-
कावस्थाः सम्भवन्ति । तत्र चास्याद्यावस्थायां किं-
चित्त्रिदोषकृत्त्वमन्तावस्थायां त्वतिशयेन त्रिदोषकृत्त्वं
वे म् । संग्रहे त्वस्य दुर्विपाकत्वमुक्तं तत्पाठे-"मह-
त्पुनः । रूक्षोष्णं कटुकं स्वादु विपाके सर्वदोष-
कृत् ।" इति । तच्चामविषयम् ॥ ११७ ॥

हे०—महद्गुणानाह—महज्जरठं संग्रहे तु स्वादुपाक-
मुक्तं—"महत्पुनः। रूक्षोष्णं कटुकं स्वादु विपाके सर्वदोष-
कृत् ।" इति । तच्चामविषयं, तथा च खारणादिः"रूक्षं
विदाहि तीक्ष्णोष्णं कटुकं स्वादु पच्यते । उत्क्लेदि स्तंभि
गुर्वाममूलकं त्रिमलोल्बणम् ॥" इति । अग्निपक्वं तु
कटुपाकमेव ॥ ११७ ॥

स्निग्धंस्विन्नं[1] तदपि वातजित् ॥ ११८ ॥

स०—अपिशब्द एवार्थे । तदेव महन्मूलकं स्निग्ध-
स्विन्नं वातजित् । स्निग्धं च तत्स्विन्नं च स्निग्धस्वि-
न्नम् । न त्वस्निग्धस्विन्नमात्रमित्यर्थः ॥ ११८ ॥

प०—अपिशब्द एवार्थे । तदेव महन्मूलकं स्निग्ध-
स्विन्नं वातजित् । स्निग्धं च तत् स्विन्नं स्निग्धस्वि-
न्नम् । नचास्निग्धस्विन्नमात्रमित्यर्थः ॥ ११८ ॥

हे०—स्निग्धसिद्धगुणानाह—स्निग्धं घृतमांसादिभिः
साधितं स्निग्धसिद्धं—यद्दोषलं महदपि स्निग्धसिद्धं
वातघ्नं किंपुनर्यद्दोषघ्नं बालमित्यपिशब्दार्थः ॥ ११८ ॥

वातश्लेष्महरं शुष्कं सर्वम् ॥ ११९ ॥

१ अत्र "स्निग्धसिद्धम्" इति पाठान्तरम् ।

स०-सर्वं बालं वृद्धं च मूलकं शुष्कं सद्वातश्लेष्महरम् ॥ ११९ ॥

प०-सर्वं बालं, वृद्धं च मूलकं शुष्कं सत् वातश्लेष्महरम् ॥ ११९ ॥

हे०—शुष्कगुणानाह—तदपीत्यनुवर्तते । पूर्ववदपिशब्दार्थः ॥ ११९ ॥

**आमं तु दोषलम् ॥ १२० ॥**

स०-आमं तु पुनर्मूलकं हरीतकत्वेन यद्वक्ष्यते तद्दोषलम् । सर्वमित्यत्रायत्नकृतेन संबंधेन संबध्यते । तेनादोषलस्य बालस्याऽप्यामस्य दोषलत्वं न तु वृद्धस्यैवेत्यर्थः । मूलकं नीलकंठापरसंज्ञम् ॥ १२० ॥

प०-आमं पुनः मूलकं हरितत्वेन यदुच्यते तद्दोषलं सर्वमित्यत्रापात्रकृतं न सम्बध्यते । तेनादोषलस्यामस्य दोषलत्वं नतु वृद्धस्यैवेत्यर्थः । मूलकं नीलकण्ठापरसंज्ञम् ॥ १२० ॥

हे०-आमगुणानाह--सर्वं बालं महच्छुष्कार्द्रं च आममनग्निपक्वम् ॥ १२० ॥

**कटूष्णो वातकफहा पिंडालुः पित्तवर्धनः १२१॥**

स०-पिंडालुः कटुको रसे वीर्ये चोष्णो वातकफघ्नः पित्तकरश्च ॥ १२१ ॥

प०-पिण्डालुः-कटुको रसे,वीर्ये चोष्णो, वातकफघ्नः पित्तकरश्च ॥ १२१ ॥

हे०-पिण्डालुगुणानाह-पिण्डालुर्वाराहीकंदः स हि वक्त्रालुरुच्यते, उक्तं ह्यायुर्वेदप्रकाशे पण्डितकेशवेन- "वाराहीकन्दः पिण्डालुस्तथा शबरकन्दकः। प्रोक्तो मूलकमूलाभो वक्त्रालुस्त्वक्छदस्तथा" इति । पिण्डशब्देन च आसवाचिना ग्रसनं वक्त्रं लक्ष्यते, ननु—"गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः"इति न्यायात्पिण्डालुशब्दस्य मुख्यमर्थं पिण्डालुकं विहाय गौणोऽर्थो वाराहीकंद इति चेत्तन्न : गङ्गायां घोष इत्यादौ मुख्यार्थबाधे गौणार्थग्रहणात्, अत्र च मुख्यार्थस्य बाधः कटुत्वादिगुणयोगात् । अत एवाह सुश्रुतः—"पिण्डालुकं कफकरं गुरु विष्टंभि शीतलम् । " इति । गौणस्य तु कटुत्वादिगुणयोगः उक्तं ह्यायुर्वेदप्रकाशे— "किटिकन्दः कटुः स्वादुस्तिक्तोष्णः कटुपाक्यपि। स्वर्यो रसायनं वृष्यो बल्यः पित्तविवर्धनः ॥ हन्ति श्लेष्ममरुत्कुष्ठमेहमूत्रामयक्रमीन् । " इति । सुश्रुतोऽप्याह— "वराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः । मेहकुष्ठकृमिहरो वृष्यो बल्यो रसायनम् । " इति । किंच पिंडालुकं चेद्विवक्षितं तदा "आलुकानि च सर्वाणि" इत्यत्र प्रस्तावे ब्रूयात्। पिण्डालुकमिति च प्रयुञ्जीत। नहि पिण्डालुके पिण्डालुरिति प्रयोगो मुख्यः, गौणत्वे तु तुल्यः । ननु वक्त्रालुश्चेद्विवक्षितस्तर्हि वक्त्रालुरित्येव स्पष्टमुच्यतां सत्यं, किंत्वेवंविधैरपि लाक्षणिकैर्द्रव्याण्युच्यन्त इति द्योतयितुं पिण्डालुरित्युक्तवान् । यथा रोध्रादौ कदंबे वाच्ये कुत्सितांब इति कुत्सितशब्देन हि कुशब्दसमानार्थेन कदादेशो लक्ष्यते, असनादावर्जुने वाच्ये श्वेतवाह इत्यादि "बहुभिः पठ्यमानस्य पाठस्येयं समर्थना। हेमाद्रिणा कृता किंतु तुण्डालुरिति पठ्यताम् ॥ " इति ॥ १२१ ॥

**कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ।**
**फणिज्जार्जकजंबीरप्रभृति ग्राहि शालनम् ॥**
**विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् ।**
**दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु १२२**

स०-कुठेरादि शालनं ग्राहि विदाहि कटुकं रसपाकयो रूक्षमुष्णवीर्यं हृद्यमग्निदीपनं च । तथा दृगादिहृत्तीक्ष्णम् । तथा दोषान्वातादीनुत्क्लेशयति कोपयति स्थानाच्चालयति दोषोत्क्लेशकरं लघु च । शालनमवदंशो येन सहान्नं भोक्तुं युज्यते । कुठेरो वैकुंठः । शिग्रुः फलपत्रकः । सुरसः कृष्णतुलसी । सुमुखः कटुपत्रकः । आसुरी राजिका । भूस्तृणं गुह्यबीजकम् । फणिज्जको मरिचकस्तीक्ष्णगंधः प्रकीर्तितः । आर्जकः खरपत्रकः । जंबीरः करपत्रकः । प्रभृतिशब्देन संग्रहोक्ता गृह्यंते । धान्यतुंबरुसालेययवानीशृंगबेरकाः । पर्णाशो गृंजनोऽजाजी कंडीरं जलपिप्पली। फणिज्जार्जकजंबीरं खराश्वा कालमालिका।दीप्यकः क्षवकृद्दीपिबस्तगंधादिबद्धविदिति । तंत्रांतरे चोक्तम् । कटुतिक्तरसा शीता कफपित्तविनाशिनी । विपाके मधुरा लघ्वी तस्करांगुलिका स्मृतेति ॥१२२॥

प०-कुठेरादि शालनं ग्राहि, विदाहि, कटुकं रसपाकयो रूक्षमुष्णवीर्यं हृद्यमग्निदीपनं च । तथा दृगादिहृत् तीक्ष्णं तथा वातादीन् उत्क्लेशयति ।

कोपयति। स्थानाच्चालयति दोषोत्क्लेशकरं, लघु च। तथा दृगादिहृत्। शालनमवदंशो येन सहान्नं भोक्तुं युज्यते। कुठेरो-वैकुण्ठः। शिग्रुः-चलपत्रकः। आसुरी-राजिका। भूस्तृणं-गुह्यबीजकम्। "फाणिज्जको मरिचकस्तीक्ष्णगन्धः प्रकीर्तितः।" अर्जकः-खरपत्रकः। जम्बीरः-करपत्रकः। प्रभृतिशब्देन संग्रहोक्ता गृह्यन्ते। "धान्यतुम्बरुशैलेययवानीशृङ्गवेरकाः। पर्णाशो गृञ्जनोऽजाजी गण्डीरं जलपिप्पली। फणिज्जार्जकजम्बीरं खराश्वा कालमालिका। दीप्यकः क्षवकृद्द्वीपिवस्तगन्धादिवद्ध्रविड्॥" इति। तन्त्रान्तरेऽप्युक्तम्–"कटुतिक्तरसा शीता कफपित्तविनाशिनी। विपाके मधुरा लघ्वी तस्करांगुलिका स्मृता॥" इति॥ १२२॥

हे०–हरीतकगुणानाह–कुठेरः–कालमाला, शिग्रुः–शोभाञ्जनः, सुरसस्तुलसी, सुमुखः–कुठेरसदृशो वल्यः, आसुरी–राजिका, भूस्तृणं–मालातृणं। फणिज्झः–मरिचकः, अर्जकः–पर्णासः, जम्बीरः–जम्बीरसदृशः, किंचित्तीक्ष्णप्रभृतिग्रहणात्कुस्तुम्बर्यादयः। उक्तं हि संग्रहे-"धान्यतुम्बुरुशैलेययवानीशृङ्गवेरिका। पर्णाशो गृञ्जनोऽजाजी गण्डीरं जलपिप्पली॥ फणिज्जार्जकजम्बीरखराश्वाकालमालिका। दीप्यकः क्षवको द्वीपी बस्तगन्धादिवद्ध्रविट्॥" इति। शालनं–हरीतकं, यदुपदंशेषु युज्यते येन च व्यञ्जनं वास्यते, उक्तं हि संग्रहे–"वर्गो हरीतकाख्योऽयमुपदंशेषु युज्यते। वासनो व्यञ्जनानां च हृद्यो रोचनदीपनः॥" इति। दोषोत्क्लेशकरत्वं चैषामार्द्रावस्थायामेव फलव्यतिरेकेण च। यदाह चरकः–"शुष्काणि कफवातघ्नान्येतान्येषां फलानि च।" इति। अत्र केषांचिद्विशेषः॥ १२२॥

**हिध्मकासश्रमश्वासपार्श्वरुक्पूतिगंधहा॥**
**सुरसः॥ १२३॥**

स०–सुरसो हिध्मादिघ्नः। पूतिगंधं दौर्गंध्यं सौरभ्योत्पादनाद्धंति॥ १२३॥

प०–सुरसो-हिध्मादिघ्नः। पूतिगन्धो दौर्गन्ध्यं सौरभ्योत्पादनाद्धन्ति॥ १२३॥

हे०–तत्र सुरसगुणानाह–हिध्मेति। पूतिगन्धो–दौर्गन्ध्यम्॥ १२३॥

**सुमुखो नातिविदाही गरशोफहा॥ १२४॥**

स०–सुमुखः कटुपत्राख्यः किंचिद्विदाही गरशोफौ च हंति॥ १२४॥

प०–सुमुखः कटुपत्राख्यः किंचिद्विदाही गरशोफौ च हन्ति॥ १२४॥

हे०–सुमुखगुणानाह–गरं–कृत्रिमविषम्॥ १२४॥

**आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत्॥ १२५॥**

स०–आर्द्रिकाऽऽर्द्रधानिका तिक्तमधुरा मूत्रकर्त्री पित्तं च न करोति॥ १२५॥

प०–आर्द्रिकाऽऽर्द्रधानिका तिक्तमधुरा, मूत्रकर्त्री, पित्तं च न करोति॥ १२५॥

हे०–आर्द्रिकागुणमाह–आर्द्रिका–[illegible] [illegible] पित्तकृदिति [illegible]॥ १२५॥

**लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः।**
**हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः॥**
**([1]भग्नसन्धानकृद्बल्यो रक्तपित्तप्रदूषणः।**
**किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान्।**
**सहिध्मपीनसश्वासकासान् [illegible]॥ १२६॥**

स०–लशुनोऽतितीक्ष्णोऽत्युष्णवीर्यः। कटुपाकरसः सरः भेदी हृद्यादिगुणयुक्तश्च किलासादीन्हंति रक्तपित्तं च करोति। किलासं श्वित्रम्। कंदस्यैवायं गुणवीर्यनिर्देशो बोध्यः। पत्रमध्ययोर्मधुरत्वाद्भृशोष्णत्वानुपपत्तिः। तथा चोक्तं संग्रहे। पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः। तीक्ष्णोष्णो लशुनः कंद इति॥ १२६॥

प०–लशुनोऽतितीक्ष्णोऽत्युष्णवीर्यः कटुपाकरसः सरः भेदी हृद्यादिगुणयुक्तश्च। किलासादीन् हन्ति, रक्तपित्तं च करोति। किलासं श्वित्रम्। कन्दस्यैवायं गुणवीर्यनिर्देशो बोध्यः। पत्रमध्ययोर्मधुरत्वात् हृद्योष्णत्वानुपपत्तिः। तथाचोक्तं संग्रहे" पत्रे सक्षारमधुरो मध्ये मधुरपिच्छलः। तीक्ष्णोष्णो लशुनः कन्दः" इति॥ १२६॥

हे०–लशुनगुणानाह–लशुन इति। किलासं–श्वित्रं, कन्दस्यैवैते गुणाः। उक्तं हि संग्रहे–" पत्रे

---

१ अयमत्रार्धश्लोकपाठोऽधिको दृश्यते।

२ अत्र"हन्ति रसायनम्" इति पाठान्तरम्।

सक्षारमधुरो मध्ये मधुरपिच्छिलः । तीक्ष्णोष्णो लशुनः कंदः'' इत्यादि ॥ १२६ ॥

**पलांडुस्तद्गुणन्यूनः श्लेष्मलो नाऽतिपित्तलः। कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा १२७**

स०-पलांडुर्धवलाक्षकाख्यस्तद्गुणन्यूनस्तस्य रसोनस्य गुणास्तद्गुणास्तैर्हीनः। लशुनात्किंचिद्धीनगुण इत्यर्थः। तथा श्लेष्मलो नातिपित्तं च करोति। नतु लशुनवत्कफघ्नोऽतिपित्तकृच्च। कफवातार्शसां स्वेदे भक्षणे च प्रभावात्पथ्यः। तंत्रांतरेऽन्योऽप्युक्तो यथा। स्निग्धो रुचिष्यः स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च। स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छिलः क्षीरपलांडुरुक्त इति ॥ १२७ ॥

प०-पलाण्डुर्धवलाक्षकाख्यस्तद्गुणान्न्यूनः। तस्य रसोनस्य गुणास्तद्गुणास्तैर्हीनो लशुनात् किंचिद्धीनगुण इत्यर्थः। तथा श्लेष्मलो, नातिपित्तं च करोति नतु लशुनवत् कफघ्नोऽतिपित्तकृच्च। कफवातार्शसां सदैव भक्षणे च प्रभावात् पथ्यः। तन्त्रान्तरेऽन्योऽप्युक्तो यथा-''स्निग्धो रुचिष्यः स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च। स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छलः क्षीरपलाण्डुरुक्तः ॥'' इति ॥ १२७ ॥

हे०-पलांडुगुणानाह-तद्गुणैर्लशुनगुणैर्हीनशक्तिभिर्युक्तः संग्रहे तु-''विपाके मधुरस्तु सः। कफं करोति नो पित्तं केवलानिलनाशनः ॥'' इति ॥ १२७ ॥

**तीक्ष्णो गृंजनको ग्राही पित्तिनां हितकृन्न सः ॥**

स०-गृञ्जनकस्तीक्ष्णो ग्राही पित्तिनामहितश्च ॥ १२८ ॥

प०-गृंजनकस्तीक्ष्णो ग्राही पित्तिनामहितश्च १२८

हे०-गृञ्जनकगुणानाह-गृञ्जनकः पलाण्डुभेदः। उक्तं च बाप्पचन्द्रेण-''गैन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना। सूक्ष्मनालाग्रपत्रत्वाद्भिद्यतेऽसौ पलाण्डुतः ॥'' इति। स च स्वेदे भोजने च प्रयुक्तः कफवातजान्यर्शांसि हन्ति पित्तवतां नराणामपथ्यः ॥ १२८ ॥

**दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः विशेषादर्शसां पथ्यः ॥ १२९ ॥**

स०-सूरणो नाम कंदविशेषो दीपनो रुच्यः श्लेष्मघ्नो विशदो लघुरर्शसामतिपथ्यश्च ॥ १२९ ॥

प०-सूरणो नाम कन्दविशेषो, दीपनो रुच्यः श्लेष्मघ्नो, विशदो लघुरर्शसामतिपथ्यश्च ॥१२९॥

हे०-सूरणगुणानाह-दीपन इति। विशदो विशदगुणः ॥ १२९ ॥

**भूकंदस्त्वतिदोषलः ॥ १३० ॥**

स०-भूकंदः स्फोटाख्यः प्रावृडुद्भवः प्रसिद्ध एव स चात्यर्थं दोषलः ॥ १३० ॥

प०-भूकन्दः स्फोटाख्यः प्रावृडुद्भवः प्रसिद्ध एव स चात्यर्थं दोषलः ॥ १३० ॥

हे०-भूकन्दगुणानाह-भूकन्दो भूस्फोटः ॥१३०

**पत्रे पुष्पे फले नाले कंदे च गुरुता क्रमात् १३**

स०-पत्रादीनां यथोत्तरं क्रमाद्गुरुत्वम्। तेन पत्रशाकमपेक्ष्य पुष्पशाकं गुरु ततः फलशाकं ततः नालशाकं ततोऽपि कंदशाकमिति। एवं हारीतकेष्वपि गुरुत्वं वेद्यम्। बाहुल्येन चैतदुक्तम् मूलके हि वैपरीत्यं दृश्यते। तथा हि मूलकस्य हि कंदे लघुत्वम्। अत एव मुनिरप्याह। मूलके तु विपर्यय इति। शाकानां हारीतकानां च येषामिह पर्याया नोक्तास्तेषां सद्वैद्येभ्योऽवगंतव्याः ॥ १३१ ॥

प०-पत्रादीनां यथोत्तरं क्रमाद्गुरुत्वम्। तेन पत्रशाकमपेक्ष्य पुष्पशाकं गुरु ततः फलशा[illegible] ततो नालशाकं ततोऽपि कन्दशाकमित्यादि। [illegible] हारीतशाकेऽपि गुरुत्वं बोद्धव्यम्। बाहुल्येन चैत[illegible]क्तम्। मूत्रके हि वैपरीत्यं दृश्यते। तथाहि मूलकस्य हि कन्दे लघुत्वम्। अत एव मुनिरप्याह-''मूलके तु विपर्ययः'' इति। शाकानां हारीतकानां च येषामिह पर्याया नोक्तास्तेषां सद्वैद्येभ्योऽवगन्तव्याः ॥ १३१ ॥

हे०-पुष्पादिशाकानां गौरवतारतम्यमाह-उत्सर्गोऽयम् अपवादस्तु यथार्थं, यथा-मूलके सुश्रुतेनोक्तं पु

१ अत्र ''गन्धाकार'' इति खपुस्तके।

फलं च पत्रं तथैव यथोत्तरं ते लघवः प्रदिष्टा ॥ १३१ ॥

अथ वरावरत्वं निर्धारयति—

**शाकेषु जीवंती सर्षपास्त्ववराः परम् १३२**

स०—शाकेषु मध्ये जीवंती वरा। सर्षपाः पुनरवराः। शाकवर्गः ॥ १३२ ॥

प०—अथ वरावरत्वं निर्धारयति-शाकेषु मध्ये जीवन्ती वरा सर्षपः पुनरवरः। इति शाकवर्गः १३२

हे०—शाकानां तारतम्यमाह—परमित्यन्यान्यपि प्रशस्तानि, जीवन्ती तु प्रशस्ततरा। यदाह सुश्रुतः—"सतीनवास्तुकश्चञ्चुश्चिल्ली मूलकपोतिका। मण्डूकपर्णी जीवन्ती शाकवर्गेषु शस्यते ॥" इति। संग्रहे तु—"श्यामाशाल्मलिकाश्मर्यैर्फञ्जीबाप्पिकयूथिका[1]। वृक्षादनीवृक्षबिंबीतूनिकवृक्षकाः॥ रोध्रः शोणः कर्बुदारुः ऊर्ध्वत्रमूषिका। भल्लातकः कोविदारः कमलोत्पलकुकम्॥ पटोलादिगुणं स्वादु कषायं पित्तजित्परम्। मूत्रा सरा फञ्जी करीरं स्यादमीरुजम्॥ पित्तहरा भण्डीपर्वणीचिर्चिपुष्पिका:।" इति। इति शाकवर्गः ॥ १३२ ॥

फलानामाहारकाले शाकेभ्योऽल्पोपयोगित्वाच्छाकवर्गादनन्तरं फलवर्ग उच्यते। खरनादेऽप्युक्तम् भुक्तावसाने फलं भुज्यत इति फलवर्गोऽभिधीयत इत्याह—

**द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट्।**
**मधुपाकरसा स्निग्धा सकषाया हिमा गुरुः॥**
**हन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान्।**
**तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् १३३॥**

स०—फलेषूत्तमा फलोत्तमा गोस्तनीपर्याया द्राक्षा वृष्यादिगुणयुक्ता। सकषाया ईषत्कषाया। अनिलादीन्क्षयांतान् हंति। उदावर्तहरत्वं चरकमुनिना उक्तं तच स्निग्धत्ववृष्यत्वसृष्टविण्मूत्रत्वेनेहोक्तम्। अभ्यासाच्च द्राक्षाणां गुणहीनत्वं देशाद्यनुरोकल्प्यम्॥ १३३ ॥

प०—फलानामाहारकाले शाकेभ्य उपयोगित्वाच्छाकवर्गादनन्तरं फलवर्ग उच्यते। खरनादेऽप्युक्तम्। भुक्तावसाने फलं भुज्यत इति फलवर्गोऽभिधीयत इत्याह-फलेषु उत्तमा फलोत्तमा गोस्तनीपर्याया द्राक्षा सा वृष्यादिगुणयुक्ता। सकषाया—ईषत्कषाया। अनिलादीन् क्षयान्तान् हन्ति। उदावर्तहरत्वं चरकमुनिना अस्या उक्तं, तच्च स्निग्धत्ववृष्यत्वसृष्टविण्मूत्रत्वेनेहोक्तप्रायम्। अभ्यासाच्च द्राक्षाणां गुणहीनत्वं देशाद्यनुरोधात् कल्प्यम् १३३

हे०—अथ फलवर्गः। तत्र द्राक्षागुणमाह—[illegible]तिसिद्धे फलग्रहणमुत्तमेभ्योऽप्युत्तमार्थम्। उत्तमान्युक्तानि सुश्रुतेन—"दाडिमामलकं द्राक्षा खर्जूरं सपरूषकम्। राजादनं मातुलिङ्गं फलवर्गे प्रशस्यते।" इति। तिक्तास्यत्वं मुखस्य तिक्तरसत्वं वातहृत्वं च कोष्ठवातहरत्वेनैव "वातहृत्वेऽपि मृद्वीकाखर्जूरं कोष्ठवातकृत्।" इति संग्रहवचनात्॥ १३३ ॥

**उद्रिक्तपित्ताञ्जयति त्रीन्दोषान्स्वादु दाडिमम्।**
**पित्ताविरोधि नात्युष्णमम्लं वातकफापहम्।**
**सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् १३४**

स०—उद्रिक्तमतिरिक्तं पित्तं येषां तांस्तथाविधान् त्रीन् दोषान् मधुरं दाडिमं जयति। मधुरस्य पूर्वकथनं प्राधान्यख्यापनार्थम्। पित्तेत्यादि। अम्लं दाडिमं पित्ताविरोधि न पित्तं कुरुते न च पित्तं शमयति। अत एवैतद्वातकफापहमुक्तम्। सर्वं मधुरमम्लं च यद्दाडिमं तत् हृद्यादिगुणसंयुक्तम्। मुनिना तूक्तम्। रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनमिति॥ १३४ ॥

प०—उद्रिक्तमतिरिक्तं पित्तं येषां तांस्तथाविधान् त्रीन् दोषान् मधुरं दाडिमं जयेत्। मधुरस्य पूर्वकथनं प्राधान्यख्यापनार्थम्। पित्तेत्यादि। अम्लं दाडिमं—पित्ताविरोधि न पित्तं कुरुते, नच पित्तं शमयति। अतएवैतद्वातकफापहत्वमुक्तम्। सर्वं मधुरमम्लं च यद्दाडिमं तत् हृद्यादिगुणसंयुक्तम्। मुनिनोक्तम्—"रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम्।" इति॥ १३४ ॥

[1] अत्र "यूथिका:।" इति खपुस्तके।

हे०—अथ दाडिमगुणाः । तत्र स्वादुदाडिमगुणानाह—उद्रिक्तपित्तानिति । अम्लदाडिमगुणानाह—पित्ताविरोधीनि पित्तोदासीनं, स्निग्धाम्लस्यैते गुणाः-"रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम् ।" इति खारणादिवचनात् । स्वाद्वम्लसाधारणगुणानाह—सर्वमिति ॥ १३४ ॥

**मोचखर्जूरपनसनालिकेरपरूषकम् ।**
**आम्राततालकाश्मर्यराजादनमधूकजम् ॥**
**सौवीरबदराङ्कोल्लफल्गुश्लेष्मातकोद्भवम् ।**
**वातामाभिषुकाक्षोडमुकूलकनिकोचकम् ॥**
**उरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ।**
**दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ॥**
**स्वादुपाकरसं स्निग्धं विष्टंभि कफशुक्रकृत् १३५**

स०—मोचादिप्रियालांतं बृंहणत्वादियुक्तम् । मोचं कदलीफलम् । नालिकेरं राजफलाख्यम् । परूषको मृदुफलः । आम्रातः कपिचूडः । तालं तालफलम् । काश्मर्यं काश्मरीफलम् । राजादनं क्षीरशुक्तम् । सौवीरबदरं कर्णिकाबदरम् । अंकोल्ल इति बिल्वः । फल्गुः काकोदुंबरिका । श्लेष्मातकं शेलुः । अभिषुकं स्याराटम् । आक्षोडं स्नेहफलाख्यम् । मुकूलकं दंतीफलम् । निकोचनं सरलफलम् । उरुमाणं स्निग्धफलम् । प्रियालं प्रियालकफलम् ॥ १३५ ॥

प०—मोचादिप्रियालान्तं बृंहणत्वादियुक्तम् । मोचं—कदलीफलम् । नालिकेरं—रोमफलाख्यम् । परूषकः—मृदुफलः । आम्रातः—कपिचूडः । तालस्तलः । काश्मर्यं—काश्मरीफलम् । राजादनं—क्षीरशुक्तम् । सौवीरबदरं—कर्णिकाबदरम् । अङ्कोल्ल इति बिल्वः । फल्गुः—काकोदुम्बरिका । श्लेष्मातकं—शेलुः । अभिषुकं—स्याराटकम् । आक्षोडं—स्नेहफलाख्यम् । मुकूलकं—दन्तीफलम् । निकोचनं—सरलफलम् । उरुमाणं—स्निग्धफलम् । प्रियालं—सन्नकद्रुः ॥ १३५ ॥

हे०—मोचादिगुणानाह—मोचं—कदलीफलं, पनसं—कंटकिफलं, नालिकेरं—त्र्यक्षं, परूषकं—धन्वनसदृशं, मृद्वल्पास्थिफलम्, आम्रातः—कपीतनः, तालं—तलं, काश्मर्यं—श्रीपर्णी, राजादनं—कपिप्रियं, मधूकं—मधुद्रुमः, मधूकञ्च द्विविधम् । यदाह सुश्रुतः—"बृंहणीयमहृद्यं तु मधूककुसुमं गुरु । वातपित्तोपशमनं फलं तस्योपदिश्यते ॥" इति । द्विविधमप्यत्र ग्राह्यं गुणभेदात्, तेभ्यो जातं फलं सौवीरबदरे बदरभेदौ । उक्तं—"द्वि कर्कन्धुबदरं कोलं सौवीरं सिञ्चतीफलम् ॥ यथोत्तरं महत्स्वादु पञ्चधात्र्यदरीफलम् ।" इति । तत्र कोलकर्कंधुनी स्वादुत्वाभावान्न पठिते । वक्ष्यति हि तथाम्लं कोलकर्कंध्विति सिंचतीफलं तिक्तकषायत्वात् । अतएव संग्रहे तिंदुकादौ पठित्वा विशेषगुणा उक्ताः-"बृंहणं वातपित्तघ्नं स्निग्धं सिंचितिकाफलम् ।" इति । ननु "कर्कन्धुकोलबदरमम्लं पित्तकफापहम् । पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥ पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ।" इति सुश्रुतेन कोलतुल्यं बदरमुक्तमिह सौवीरतुल्यमिति विरोधः । मैवं, सुश्रुतेनापि सौवीरतुल्यमुक्तं-"सौवीरबदरं स्निग्धं मधुरं वातपित्तजित् ।" इति । सौवीरबदरं चेति द्वन्द्वैकत्वं पूर्वत्र तु कोलं च तद्बदरं चेति कर्मधारयात्, विपरीतं तु कुतो न स्यादिति चेन्न, संग्रहे विशेषगुणोक्तौ बदरसरणात्मकमिति बदरग्रहणात् । न च बदरशब्देन सौवीरं सौवीरमित्यकरणात् सरत्वाभावाच्चेति । अंकोल्लोऽकोठः, फल्गुः काकोदुम्बरिका, श्लेष्मान्तकाशेलुः । वातामाद्युरुमाणान्तमुत्तरापथे प्रसिद्धम् । वातामः-स्निग्धमधुरमज्जं फलम्, अक्षोडं-मदनफलसदृशं मध्ये किञ्चिदुन्नतरेखं, मुकूलकं-दन्तीफलसदृशं, निकोचकमंकोलफलसदृशं, पियालं-चारफलं, रक्तपित्तप्रसादनं-रक्तपित्तयोर्निर्मलीकरणम् । अत्र केषांचिद्विशेषः ॥ १३५ ॥

**फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम् ।**
**शकृन्मूत्रविबंधघ्नं केश्यं मेध्यं रसायनम् ॥**
**वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ।**
**परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ॥**
**प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।**
**कोलमज्जा गुणैस्तद्वत्तृट्छर्दिकासजिच्च सः १३६**

स०—तालस्येदं तालं फलम् पित्तकारि । काश्मर्यजं फलं सरं शीतवीर्यादिगुणयुक्तम् । मधूकबदरयोरपि विशेषांतरमुक्तं संग्रहे । मधूकजमहृद्यं तु बदरं सरणात्मकमिति । वातामादीनां ग्रहणं गुणविशेषप्र-

१ अत्र "अंकोल-" इति पा० ।

१ अत्र खपुस्तके "सौवीरम्" इत्येकवारमेव ।

दर्शनार्थम्। निर्धारिते तु विशेषे वाताम्रादिकमुष्णवीर्यं कफपित्तकरं सरमतिशयेन वातघ्नं स्निग्धं च। आदिशब्देनाऽभिषुकादीनां ग्रहणम्। प्रियालजातं प्रियालजं फलमनुष्णवीर्यम्। तुर्विशेषे। विशेषस्तु शीतवीर्यत्वमेव। शेषं बृंहणादि सर्वं समानम्। प्रियालमज्जाऽस्थ्यभ्यंतरं मधुरादिगुणयुक्तम् बदरमज्जा गुणैस्तद्वत् प्रियालमज्जावत्तृडादिजिच्च। तंत्रांतरे चोक्तम्। बैभीतको मदकरः कोलानां पित्तनाशनः। तथा तालखर्जूरादीनां मस्तकमज्जानः स्वादुपाका वृष्याः शीतवीर्याश्चेति सुश्रुतोऽपठत्॥ १३६॥

प०–तालस्येदं तालफलं पित्तकारि। काश्मर्यजं फलं–सरं, शीतवीर्यादिगुणयुक्तम्। मधूकबदरयोरपि विशेषान्तरमुक्तं संग्रहे–"मधूकजमहृद्यं तु बदरं सरणात्मकम्।" इति। वाताम्रादीनां गुणविशेषप्रदर्शनार्थम्। निर्धारणे तु विशेषे वाताम्रादिकमुष्णवीर्यं, कफपित्तकरं, सरमतिशयेन। वातघ्नं, स्निग्धं च। आदिशब्देनाभिषुकादीनां ग्रहणम्। प्रियालजातं प्रियालजं फलमनुष्णवीर्यम्। तुर्विशेषे। विशेषस्तु शीतवीर्यत्वमेव। शेषं बृंहणादिसर्वं समानम्। प्रियालमज्जाऽस्थ्यभ्यन्तरं मधुरादिगुणयुक्तम्। बदरमज्जागुणैस्तद्वत्। प्रियालमज्जावत् तृडादिजिच्च। तन्त्रान्तरे चोक्तम्–"बैभीतको मदकरः कोलानां पित्तनाशनः।" तथा तालखर्जूरादीनां मस्तकमज्जानः स्वादुपाका वृष्याः शीतवीर्याश्चेति सुश्रुतोऽपठत्॥ १३६॥

हे०–तत्र तालफलगुणानाह-यत्तु-"फलं स्वादुरसं तेषां तालजं गुरुपित्तहृत्॥"इति सुश्रुतेन पित्तहरत्वमुक्तं तत्पक्वविषयम्। अतएव चरकेण सिद्धानीति विशेषितम्। "तालसस्यानि सिद्धानि नारिकेरफलानि च। बृंहणस्निग्धशीतानि बल्यानि मधुराणि च॥" इति व्याख्यातं च बाष्पचन्द्रेण। तालसस्यानि–तालफलानि, सिद्धानि–पक्वानि, मधुरस्निग्धशीतत्वेन वातपित्तहरत्वं, कफकरत्वं च वेद्यमिति। काश्मर्यगुणानाह--काश्मर्यजमिति। वाताम्रादिगुणानाह-वाताम्रादिप्रियालान्तं प्रियालगुणानाह-नञत्र विरुद्धार्थः। उष्णशब्देन वीर्यं, पित्तं च। तेन शीतलं, पित्तघ्नं च प्रियालजम्। उक्तं च सुश्रुतेन-"वातपित्तहरं वृष्यं प्रियालं गुरुशीतलम्॥" प्रियालमज्जागुणानाह-मज्जा-अस्थ्यन्तर्वर्ति बीजम्। कोलमज्जागुण कोलेति॥ १३६॥

**पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम्।**
**दीपनं कफवातघ्नं बालं ग्राह्युभयं हि तत्॥**

सु०–बिल्वं पक्वं सुदुर्जरं पूतिमारुतं च दुर्गन्धवातकृद्भवति बालमसम्पूर्णमनुपचितं बिल्वं दीपनं वातघ्नम्। उभयमामं पक्वं च ग्राहि मलवर्गी संग्रहणम्॥ १३७॥

प०–बिल्वं पक्वं–सुदुर्जरं पूतिमारुतं च [illegible]ध्यपानवातकृत् भवति। बालमसंपूर्णमनुप[illegible] बिल्वं–दीपनं कफवातघ्नम्। उभयमामं, पक्वं ग्राहि मूत्रपुरीषादेः संग्रहणम्॥ १३७॥

हे०–पक्वबिल्वगुणानाह--पक्वमिति। बालबिल्वगु[णा]नाह-दीपनमिति। पक्वबालसाधारणगुणानाह ग्राहीति॥

**कपित्थमामं कंठघ्नं दोषलं दोषघाति तु।**
**पक्वं हिध्मावमथुजित्सर्वं ग्राहि विषापहम्॥ १[३८]**

सु०--आमं कपित्थं कंठे हंति। दोषलं त्रिदोषकृ[त्।] पक्वं कपित्थं दोषघ्नं हिक्काच्छर्दिहरम्। सर्वमामं च कपित्थं ग्राहि विषापहं च। आमकपित्थस्य च [कषा]यत्वं कंठघ्नत्वेनैवोदितम्। अम्लत्वं चाम्लवर्गे पाठादवगंतव्यम्। पक्वस्य च मधुरत्वं [प्र]सिद्धमितीहैतन्नोक्तम्। तथा आमकपित्थगुणकथ[नेन] तथाविधानि कषायाम्लस्वभावानि बिबि[ध]कपित्थानि सदैवामकपित्थगुणानि वेद्यानि पक्वकपि[त्थ]गुणकथनेन च तथाविधानि माधुर्यानुविद्धानि [सदा] पक्वगुणानि वेद्यानि॥ १३८॥

प०–आमकपित्थं कण्ठं हन्ति, दोषलं–त्रिदोषकृत्। पक्वं कपित्थं–दोषघ्नं हिक्काछर्दिहरम्। स[र्व]मामपक्वं च कपित्थं ग्राहि विषापहम्। आमकपित्थस्य कषायत्वं कण्ठघ्नत्वेनैवोदितम्। अम्लत्वं चाम्लवर्गमध्ये पाठादवगतम्। पक्वस्य च मधुरत्वं प्रसिद्धमिति तन्नोक्तम्। तथा आमकपित्थगुण[कथनेन] तथाविधानि कषायाम्लस्वभावानि त्रिविधानि कपित्थानि सदैवामकपित्थगुणानि वेद्यानि पक्वकपित्थगुणकथनेन च तथाविधानि माधुर्यानुविद्धानि सदा पक्वगुणानि वेद्यानि॥ १३८॥

हे०–अथ आमकपित्थगुणानाह–आमं–बालं, कण्ठघ्नं-स्वरसादकृत्, दोषलं-दोषत्रयकरम्। तत्र पित्तानिलौ कफेन संसृष्टौ, असंसृष्टौ च करोति। कफं तु ताभ्यां संसृष्टमेव–"आमं कपित्थमस्वर्यं कफघ्नं ग्राहि वातलम् ॥" इति सुश्रुतेन कफघ्नत्वस्योक्तत्वात् । नन्वेवं चेत् दोषशब्देन पित्तानिलावेव गृह्येतां मैवं "कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत् ॥" इति संग्रहे त्रिग्रहणात् । पक्वगुणानाह–दोषघातीति । वमथुः-छर्दिः, संग्रहे तु–"पक्वं रुच्यं कषायाम्लं स्वादु हिध्मावमिप्रणुत् । दोषघ्नं खाडवारिष्टरागयुक्तिषु पूजितम् ॥" इति । आमपक्वसाधारणगुणानाह-सर्वमिति ॥ १३८ ॥

**जांबवं गुरु विष्टंभि शीतलं भृशवातलम् ।**
**संग्राहि मूत्रशकृतोरकंठ्यं कफपित्तनुत् १३९॥**

स०–जांबवं गुर्वादिगुणयुक्तं मूत्रशकृतोश्च संग्रहणं कंठाय च हितं न । कफपित्तजिच्च । जांबवमिति फलार्थे जंव्वा वेत्यण् ॥ १३९ ॥

प०–जाम्बवं–गुर्वादिगुणयुक्तं मूत्रशकृतोश्च संग्रहणं कण्ठाय हितं कफपित्तजिच्च । जाम्बवमिति फलार्थे "जम्ब्वा वा" इत्यण् ॥ १३९ ॥

हे०–जाम्बवगुणानाह–जाम्बवं-जम्बूफलम्॥ १३९ ॥

आम्रस्य त्र्यवस्थस्याऽप्युपयोगदर्शनात्तथैव गुणानाह–

**वातपित्तास्रकृद्बालं बद्धास्थि कफपित्तकृत् ।**
**गुर्वाम्रं वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत्१४०**

स०–वातेत्यादि । आम्रमिति वक्ष्यमाणेन संबंधः आम्रं चूताख्यं बालं सद्वातपित्तास्रकृत् । बद्धास्थि संजातास्थि कफपित्तकृत् । पक्वमाम्रं गुरु वातजित् । मधुराम्लं कफशुक्रकृत् । संग्रहे सहकारस्य गुणा उक्ताः। यथा । सहकाररसो हृद्यः सुरभिः स्निग्धरोचन इति ॥ १४० ॥

प०–आम्रस्य त्र्यवस्थस्याप्युपयोगदर्शनात् तथैव गुणानाह–वातेत्यादि । आम्रमिति वक्ष्यमाणेन सम्बन्धः । आम्रं चूताख्यं बालं सत् वातपित्तास्रकृत् । बद्धास्थि संजातास्थि, कफपित्तकृत् । पक्वमाम्रं-गुरु,वातजित् । मधुराम्लं–कफशुक्रकृत् । सङ्ग्रहे सहकारस्य गुणा उक्ताः । यथा–"सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः ।" इति॥ १४० ॥

हे०–अथ बालाम्रगुणानाह संग्रहे तु–"बालं कषाम्लं कट्वम्लं रूक्षं वातास्रपित्तकृत् ।" इति । बद्धास्थिगुणानाह–बद्धास्थि–संहतावयवास्थिमध्यावस्थमित्यर्थः । संग्रहे तु–"संपूर्णमाम्रमम्लं च रक्तपित्तकफप्रदम् ।" इति । पक्वगुणानाह–संग्रहे तु "स्वादु साम्लं गुरु स्निग्धं मारुतघ्नमपित्तलम् । हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम् ॥ सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः।" इति ॥ १४० ॥

**वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु१४१**

स०–वृक्षाम्लं ग्राह्यादिगुणैर्युक्तम् । वातश्लेष्महृत् लघु च । कोशाम्रं च किंचिदेतस्मान्न्यूनगुणं ज्ञेयम् । तथा च संग्रहे । वृक्षाम्लं ग्राहि रूक्षोष्णं लघु रोचनदीपनम् । वातश्लेष्महरं किंचिदूनं कोशाम्रजं तत इति ॥ १४१ ॥

प०–वृक्षाम्लं–ग्राह्यादिगुणैर्युक्तं, वातश्लेष्महृत्, लघु च । कोशाम्रं च किञ्चिदेतस्मान्न्यूनगुणं ज्ञेयम् । तथाच सङ्ग्रहे–"वृक्षाम्लं ग्राहि रूक्षोष्णं लघु रोचनदीपनम् । वातश्लेष्महरं किञ्चिदूनकोशाम्रजं ततः ।" इति ॥ १४१ ॥

हे०–वृक्षाम्लगुणानाह–वृक्षाम्लं–तिंतिडीकं, पक्वस्यैवैते गुणाः । "वातापहं तिंतिडीकमामं पित्तबलासकृत् ।" इति । सुश्रुते तु बालस्य बलासकरत्वमुक्तं, संग्रहे तु–"रोचनं दीपनं किंचिदूनं कोशाम्रजं ततः ।" इति ॥ १४१ ॥

**शम्या गुरूष्णं केशघ्नं रूक्षं पीलु तु पित्तलम् ।**
**कफवातहरं भेदि प्लीहार्शःकृमिगुल्मनुत् ।**
**सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित्**

स०-फलापेक्षया षष्ठी । शम्याः फलं गुरु उष्णवीर्यं केशघ्नं रूक्षं च । पीलुफलं च पित्तलं यावद्गुल्मनुत् । सतिक्तमीषत्तिक्तं मधुरं च यत्पीलु तन्नात्युष्णं त्रिदोषजिच्च ॥ १४२ ॥

हे०–शमीफलगुणानाह–शम्याः फलम् । फलं तु पित्तलमित्यतः फलमनुवर्तते । अथ पीलुफलम् । तत्र

कटुकगुणानाह—अत्र कटुकं पीलु ग्राह्यं तिक्तमधुरस्य वक्ष्यमाणत्वात्, "कटुपाकरसं भेदि तीक्ष्णोष्णं पीलु पित्तलम्।" इति संग्रहवचनाच्च। तिक्तमधुरगुणानाह—सतिक्तमिति ॥ १४२ ॥

मातुलुंगस्य त्वङ्मांसकेसराणां पृथगुपयोगदर्शनात्पृथगेव गुणानाह—

**त्वक्तिक्तकटुका स्निग्धा मातुलुंगस्य वातजित्।**
**बृंहणं मधुरं मांसं वातपित्तहरं गुरु ॥**
**लघु तत्केसरं कासश्वासहिध्ममदात्ययान्।**
**आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान्।**
**गुल्मोदरार्शःशूलानि मंदाग्नित्वं च नाशयेत् १४३**

स०—बीजपूरकस्य त्वक्तिक्ता कटुका रसे स्निग्धा वातघ्नी च। चरकेऽप्युक्तम्। गुर्वी त्वगस्य कटुका मारुतस्य च नाशनीति। खरनादस्त्वाह। त्वङ्मातुलुंगात्कटुका गुर्वी वातप्रकोपनीति। एतन्मतानुसारिणस्त्वत्रैवं पाठं पठंति। त्वक्तिक्तकटुकाऽस्निग्धा मातुलुंगस्य वातकृदित्यकारप्रश्लेषात्। मांसं केसरादर्वाग्बृंहणं मधुरं वातपित्तहृद् गुरु च। तस्य मातुलुंगस्य केसरं तत्केसरं लघु। तथा कासादीन्मंदाग्नित्वांतान्नाशयेत् ॥ १४३ ॥

प०—मातुलुङ्गस्य त्वङ्मांसकेसराणां पृथगुपयोगदर्शनार्थं पृथगेव गुणानाह—बीजपूरस्य त्वक् तिक्ता कटुका, रसे स्निग्धा, वातघ्नी च। खरनादस्त्वाह—"त्वङ्मातुलुङ्गात् कटुका गुर्वी वातप्रकोपिनी।" चरकेऽप्युक्तम्—"गुर्वी त्वगस्य कटुका मारुतस्य प्रकोपनी।" इति। एतन्मतानुसारिणस्त्वत्रैव पाठं पठन्ति। "त्वक् तिक्ता कटुकाऽस्निग्धा मातुलुङ्गस्य वातकृत्।" इत्यकारप्रश्लेषात्। मांसं केसरादर्वाक् बृंहणं, मधुरं, रुच्यं, वातपित्तहृद्गुरु च। तस्य मातुलुङ्गस्य केसरं तत्केसरं—लघु तथा कासादीन् मन्दाग्नित्वं च नाशयेत् ॥ १४३ ॥

हे०—अथ मातुलुङ्गं तत्र त्वग्गुणानाह—ननु "त्वङ्मातुलुङ्गात्कटुका गुर्वी वातप्रकोपणी।" इति खारणादिवचनेन विरोधः। मैवं, सामं वायुं हन्ति, निरामं करोतीति विषयभेदात् विपरीतं कुतो न स्यादिति चेत् तन्न। "त्वक्तिक्ता दुर्जरा तस्य वातकृमिकफापहा ॥" इति सुश्रुतेन श्लेष्मघ्नत्वस्योक्तत्वात् श्लेष्मघ्नामघ्नं च। मांसगुणानाह—बृंहणमिति। त्वक्केसरव्यतिरिक्तोऽवयवो—मांसम्। केसरगुणानाह—लघ्विति ॥ १४३ ॥

**भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम्।**
**तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् १४४ ॥**

स०—त्वक् च मांसं च त्वङ्मांसं भल्लातकसंबंधि बृंहणं मधुरं शीतलं च। तस्य भल्लातकस्यास्थि तदस्थि अग्निसमं तीक्ष्णत्वादग्निवत्स्फोटककर्तृत्वात्। अथवाऽग्निश्चित्रकस्तस्य गुणदोषकर्तृतया तुल्यं भल्लातकास्थीति। तथा मेधायै हितमिति। कफवातघ्नम् ॥ १४४ ॥

प०—त्वक् च मांसं च त्वङ्मांसं भल्लातकस्यास्थि बृंहणं, मधुरं, शीतलं च। तस्य भल्लातकस्यास्थि तदस्थि अग्निसमं तीक्ष्णत्वादग्निवत् स्फोटककर्तृत्वात्। अथवाऽग्निश्चित्रकस्तस्य गुणदोषकर्तृतया तुल्यं भल्लातकास्थीति। तथा मेधायै हितमिति कफवातघ्नम् ॥ १४४ ॥

हे०—अथ भल्लातकम्। तत्र त्वङ्मांसगुणानाह—भल्लातकस्येति। अस्थिव्यतिरिक्तोऽवयवः पुष्पाख्यस्त्वङ्मांसम्। अस्थिगुणमाह—अग्निसममग्निवद्दाहपाकादिकरम् ॥ १४४ ॥

**स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु।**
**रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ॥ १४५ ॥**

स०—पालेवतं रैवतकाख्यं द्विधा। कथं द्विःप्रकारमित्याह। स्वाद्वम्लं च तत्तु यथासंख्येन शीतमुष्णं च। तथा द्वयमपि गुरु रुच्यमत्यग्निशमनं च। अथवा यथासंभवं संबंधो मधुरं गुर्वत्यग्निनाशनं च। अम्लं रुच्यमिति। मधुरमारुकं रुच्यं हृद्यं भवति ॥ १४५ ॥

प०—पालेवतं रैवतकाख्यं द्विधा। कथं द्विधाकारमित्याहुः—स्वादु, अम्लं च। तत्तु यथासंख्येन शीतमुष्णं च। तथा द्वयमपि गुरु, रुच्यमत्यग्निशमनं च। अथवा यथासम्भवं सम्बन्धः। मधुरं गुर्वत्यग्निनाशनं च। अम्लं रुच्यमिति। मधुरमारुकं पक्वं हृद्यं भवति ॥ १४५ ॥

हे०—पालेवतगुणानाह-पालेवतं-तिन्दुकाकारि। तद् द्विविधं—मधुरमम्लं च । यन्मधुरं तच्छीतं, यदम्लं तदुष्णम्। उभयमपि गुर्वादिगुणम् ॥ १४५ ॥

अपक्वस्यैवैते गुणा वेद्याः । यस्मादाह—

**पक्वमाशुजरां याति नात्युष्णं गुरु दोषलम्॥१४६॥**

स०—पक्वं च प्रागेव परिणामं याति । किंचिदुष्णवीर्यं किंचिद् गुरु किंचिद्दोषलमपथ्यम्। निघंटावुक्तम्। आरुकं वीरसेनं च वीरावीरारुकं तथा । विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम् ॥ १४६ ॥

प०—अपक्वस्यैवैते गुणा वेद्याः । यस्मादाह--पक्वं द्रागेव परिणामं याति । किंचिदुष्णवीर्यं किञ्चिद्गुरु, किञ्चिद्दोषलमपथ्यम् । निघण्टावुक्तम्—"आरुकं वीरसेनं च वीरावीरारुकं तथा।विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम् ॥ " ॥ १४६ ॥

हे०—पक्वारुकगुणानाह—आरुकं—वीरसेनम् , आशु जरां याति शीघ्रं पच्यते,नात्युष्णगुरुदोषलत्वमपक्वापेक्षया। अतएव दोषशब्देन पित्तश्लेष्माणौ ग्राह्यौ, अपक्वस्य हि पित्तश्लेष्मलत्वं वक्ष्यति । तथा च खारणादिः—"नात्युष्णं गुरु वातघ्नं बृंहणं नातिपित्तलम् । आरुकं मधुरप्रायमम्लं तु कफपित्तलम् ॥ " इति । आरुकं भव्यमित्येके । तन्न, "भव्यं स्वादुकषायाम्लं रूक्षं गुर्वास्यशोधनम् । शीतं ग्राह्यरुचिच्छर्दिरक्तपित्तकफापहम् ॥" इति खारणादिना पृथक्ग्रहणकथनात् ॥ १४६ ॥

**द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ।**
**गुरूष्णवीर्यं वातघ्नं सरं च करमर्दकम्॥१४७॥**

स०—द्राक्षा परूषकं करमर्दकं चार्द्रमशुष्कमपक्वमम्लं सत्पित्तश्लेष्मकरं गुरूष्णवीर्यं वातघ्नं सरं चेति । करमर्दकं सुषेणमम्लम् ॥ १४७ ॥

प०—द्राक्षा परूषकं करमर्दकमार्द्रमशुष्कमपक्वमम्लं सत् पित्तश्लेष्मकरम् , गुरूष्णवीर्यं, वातघ्नं, सरं चेति । करमर्दकं सुषेणमम्लम् ॥ १४७ ॥

हे०—अथ द्राक्षादीनामम्लानां गुणाः । तत्र द्राक्षादित्रयस्यार्द्रस्य गुणमाह—अम्लानि यानि द्राक्षापरूषककरमर्दकानि तान्यार्द्राणि चेत्तदा पित्तप्रदत्वादिगुणानि ॥ १४७ ॥

**तथाऽम्लं कोलकर्कन्धूलकुचाम्रातमारुकम् ।**
**ऐरावतं दंतशठं सतूदं मृगलिंडिकम् ।**
**नातिपित्तकरं पक्वं शुष्कं च करमर्दकम्॥१४८॥**

स०—कोलादिकं मृगलिंडिकांतं तथा तद्वच्चेत्यम्ल द्राक्षादिवद् गुणैर्ज्ञेयमित्यर्थः। कर्कंधूर्हृस्वबदरी । लकुचं लिकुचम्। आरुकस्याम्लकस्यैवैते गुणा ज्ञेयाः। मधुरस्य हि विशेषेण पूर्वमुक्ता एव गुणाः । तथैरावतादि नात्युष्णं पित्तं करोति। ऐरावतं नागरंगम् । दंतशठं जंबीरम् । तथा सतूदं मृगलिंडिकं च । तथा करमर्दकं पक्वं शुष्कं च नात्यर्थपित्तकरम् ॥ १४८ ॥

प०—कोलादिकं मृगलिण्डिकान्तं तद्वच्चाम्लद्राक्षादिवत् गुणैर्ज्ञेयमित्यर्थः । कर्कन्धूर्ह्रस्वबदरी लकुचं—लिकुचम् । आरुकस्याम्लस्यैवैते गुणा ज्ञेयाः मधुरस्य हि विशेषेण पूर्वमुक्ता एव गुणाः । तथैरावतादि नात्यर्थं पित्तं करोति । ऐरावतं—नारङ्गम् दन्तशठं—जम्बीरम् । तथा सतूदं मृगलिंडिकं च तथा करमर्दकं च पक्वं, शुष्कं च नात्यर्थं पित्तकरम् ॥ १४८ ॥

हे०—कोलादीनां गुणानाह—अम्लानुवृत्तावम्लग्रहणमार्द्रनिवृत्त्यर्थम् , अम्लं यत्कोलादिकं तदार्द्रं, शुष्कं वा तथा तद्वत्पित्तप्रदत्वादिगुणमित्यर्थः । कोलकर्कंधुनी-बदरभेदौ, लकुचं-ग्रन्थिफलम् , ऐरावतं-नारंगं मलानं च। दन्तशठं-जम्बीरं चिञ्चाफलं च। तूदं-तोदनं फलाम्लिकाख्यम्। उक्तं च खारणादिना—"फलाम्लिकैरावतककोशाम्रं करमर्दकम् । आम्रातकं दन्तशठमम्लोष्णं रक्तपित्तलम् ॥" इति । मृगलिण्डकं-मृगविट्सदृशं कर्पटाख्यम् । द्राक्षादेर्मृगालिण्डकांतस्य पक्वस्य विशेषमाह—पक्वं द्राक्षादिकमम्लमपि नातिपित्तकरं स्वादुपाकत्वात् । तथाह माधवकारः—"द्राक्षाकरीरकर्कंधुबदराण्यारुकाणि च । परूषकानि चाम्लानि कफपित्तकराणि च ॥ स्वादुपाकानि यान्येषां तानि पित्तकराणि च ॥" इति । यत्तूक्तं सुश्रुतेन "अत्यम्लं पित्तजननमामं विद्यात्परूषकम् । तदेव पक्वं मधुरं वातपित्तनिबर्हणम् ॥ " तत्पक्वावस्थामधुरपरूषकाविषयम्। यत्तु पक्वमप्यम्लत्वं न जहाति तत्किञ्चित्पित्तकरमेव एवं द्राक्षादिष्वपि बोध्यम्। शुष्कस्य करमर्दस्य विशेषगुणमाह-नातिपित्तकरमिति।चकारेणानुकृष्यते शुष्कस्य करमर्दस्य विपर्ययतन्त्रयुक्त्या पित्तघ्नत्वे प्राप्ते किञ्चित्पित्तकरत्वं विधीयते ॥ १४८ ॥

**दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम् ।**
**तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः १४९**

स०—अम्लीकाफलं कोलफलं च शुष्कं सद्दीपनं भेदनं तृष्णादिनाशनं लघु कफवातयोश्च पथ्यम् ॥ १४९ ॥

प०—अम्लीकाफलं, कोलफलं च शुष्कं सद्दीपनं, भेदनं, तृष्णादिनाशनं, लघु कफवातयोश्च पथ्यम् ॥ १४९ ॥

हे०— शुष्काणामम्लिकादीनां गुणमाह—अम्लिका-चिञ्चाफलं, कोलयोरितिद्विर्वचनात्कोलककंधुनोर्ग्रहणम् । सुश्रुतेन हि द्वयोरपि तुल्यग्रहणत्वमुक्तं, दर्शितं बदर-व्याख्याने । कफवातयोरिष्टं कफवातघ्नमित्यर्थः । सरामिति सामान्योक्त्या भेदनत्वे सिद्धे भेदनमिति नियमार्थं शुष्काण्येवाम्लिकादीनि भेदनानि । अतएव " ग्राह्यम्लं बदरं रुच्यं लघूष्णं मारुतापहम् ॥ मधुरं तद्गुरु स्निग्धं शीतं पित्तानिलापहम् ॥" इति । खारणादिनोक्तम् ग्राहित्वमशुष्कस्य विषयम् ॥ १४९ ॥

**फलानामवरं तत्र लकुचं सर्वदोषकृतम् १५०॥**

स०—फलानां सर्वेषां मध्ये लकुचमप्रधानं त्रिदोष-करम् । चरकमुनिस्त्वस्य पित्तश्लेष्मकृत्त्वमेवानुजज्ञे । तत्पाठे । लकुचं श्लेष्मपित्तकृत् । वातलं कफपित्तघ्नं विद्यात्कर्पटकीफलम् । मधुराण्यतिपाकानि वातपित्त-हराणि च । अश्वत्थोदुंबरप्लक्षन्यग्रोधानां फलानि तु । प्राचीनामलके चैव दोषघ्नं सरुहानि च । इंगुदं तिक्त-मधुरं स्निग्धोष्णं कफवातजित् । सुश्रुतेनोक्तम् । सुगंधि मधुरं स्निग्धं लवलीफलमुच्यते । वृक्षाम्लालर्या-तरगुणं कोशाम्रफलमुच्यत इति ॥ १५० ॥

प०—फलानां सर्वेषां मध्ये लकुचमप्रधानं, त्रिदोषकरं च । चरकमुनिस्त्वस्य पित्तश्लेष्मकृत्त्वमेवानुजज्ञे । तत्पाठे हिक्काऽर्शसां हितः । "वातलं कफपित्तघ्नं विद्यात् कर्पटकीफलम् । मधुराण्यतिपाकानि वातपित्तहराणि च । अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि तु । प्राचीनामलकं चैव दोषघ्नं सरुहाणि च । इंगुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् । " सुश्रुतेनोक्तम्—"सुगन्धि मधुरं स्निग्धं लवलीफलमुच्यते । वृक्षाम्लालरान्तरगुणं कोशाम्रफलमुच्यते " इति ॥ १५० ॥

हे०—लकुचगुणानाह—एतच्च सर्वदोषकरत्वमनम्लस्य अम्लस्य वातघ्नेषु कोलादिषु पठितत्वात् । संग्रहे तु"मधू-कजमहृद्यं तु बदरं सरणात्मकम्।तिंदुकाश्मन्तकाशीतफलिनी बिम्बितोदनम्॥ टंकाश्वकर्णबकुलगांगेरुधवधन्वनम् । श्वेतपाकं कपित्थानि सिञ्चती भव्यजाम्बवम् ॥ क्षीरवृक्ष-फलं बीजं पौष्करं कफपित्तजित् । कषायमधुरं रूक्षं शीतलं गुरु लेखनम् ॥ विबन्धाध्मानजननं स्तम्भनं वातकोपनम् । बृंहणं वातपित्तघ्नं स्निग्धं सिञ्चितिकाफलम्॥ भव्यं विषदमम्लं च साम्लं तु क्षीरवृक्षजम् । पित्तश्लेष्मघ्नमम्लं च वातघ्नं चाक्षुकीफलम् ॥ कषायं रोचनं हृद्यं वातलं लवलीफलम् । फलं करञ्जं विष्टंभि पित्तश्लेष्मा-विरोधि च ॥ नीपं शताक्षकं प्राचीनामलं तृणशून्यजम् । पीलुनोऽल्पान्तरगुणं सैंगुदं सविकंकतम् ॥" इति १५०

संप्रति यादृशं फलं शाकं च संपाद्यं तदुपदिशन्नाह—

**हिमानिलोष्णदुर्वातव्याललालादिदूषितम् ।**
**जंतुजुष्टं जले मग्नमभूमिजमनार्तवम् ॥**
**अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽपि च ।**
**धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ॥**
**असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ।**
**प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् १५१**

स०—दूषितशब्दः प्रत्येकं संबध्यते । धान्यं केदारस्थं हिमेन दूषितं त्यजेत् । तथाऽनिलेन प्रवृद्धेन दूषितं तथा उष्णेनातपादिना दुर्वातेन पुरोवातादिना तथा व्यालानां सर्पादीनां लालया दूषितं त्यजेत् । आदिग्रहणेन शवकोथमूत्रपुरीषादीनां ग्रहणम् । तथा जंतुभिः कृम्यादिभिर्जुष्टं सेवितम् । जले मग्नमाशिखं बुडितम् । अभूमौ विपरीतभुवि जातमभूमिजम् । या यस्योचिता भूमिस्ततोऽन्या विपरीता । अनार्तवमप्राप्तसमयम् । यस्मिन्नृतौ यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन् जातमित्यर्थः । तल्लक्षणं रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुतम् । यथा रक्तशालिर्यवकेन सह विरुध्यते । तथा मुद्गो माषेण । एवं शूकधान्यं विजातीयेन शूकधान्येन । तथा शिंबीधान्यं

शिवीधान्येन विजातीयेन सह विरुद्धं त्यजेत्। केचिच्छूकधान्येन सह विरुद्धमिति वर्णयंति। अन्ये तु जीर्णं नवेन मिश्रितमन्यधान्ययुतमिति ब्रुवते । केदारगतं जीर्णतयाऽतिपुराणत्वेन हीनवीर्यं नष्टशक्ति। एवंविधं धान्यं त्यजेत् । तथा शाकमपि त्यजेत् । कीदृशम् । रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः। अथवा रूक्षेण कांजिकादिना सिद्धं रूक्षसिद्धम् अकोमलं जठरेऽसंजातरसमपरिपूर्णरसस्वरूपमित्यर्थः । तद्वच्छुष्कं तथैव शुष्कशाकमप्यसंजातरसं त्यजेत् । अन्यत्र मूलकात् शुष्कमूलकं भजेदेव । प्रायेण फलमप्येवंविधं त्यजेत् । प्रायोग्रहणं द्राक्षापरूषकादीनां शुष्काणामपि पथ्यत्वादत्याज्यत्वज्ञापनार्थम् । तथा आममसंप्राप्तपाकं फलं त्यजेदिति वर्तते । किं सर्वं नेत्याह । बिल्ववर्जितम् । बिल्वं त्वाममपि पथ्यत्वान्न त्यजेदेवेत्यर्थः । इति फलवर्गः ॥ १५१ ॥

प०—संप्रति यादृशं फलं शाकं संपाद्यं तदुपदिशन्नाह-दूषितशब्दः प्रत्येकं सम्बध्यते। धान्यं केदारस्थं हिमेन दूषितं त्यजेत् । तथा अनलेन प्रवृद्धेन दूषितम् । उष्णेनातपादिना दुर्वातेन पुरोवातादिना । तथा व्यालादीनांसर्पादीनां लालया दूषितं त्यजेत्।आदिग्रहणेन शवकोथमूत्रपुरीषादीनां ग्रहणम् ।तथा जन्तुभिः कृम्यादिभिर्जुष्टं सेवितं जले मग्नमाशिखं बुडितम् । अभूमौ विपरीतभुवि जातमभूमिजम् । या यस्योचिता भूमिः ततोऽन्या विपरीता । अनार्तवमप्राप्तसमयम् । यस्मिन्नृतौ यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन् जातमित्यर्थः । तल्लक्षणं रसादीनामपूर्णत्वे तद्विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुतं केदारगतं जीर्णतयाऽतिपुराणत्वेन हीनवीर्यं नष्टशक्ति । एवंविधं धान्यं त्यजेत् । तथा शाकानि त्यजेत् । कीदृशं रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः । अथवा रूक्षेण काञ्जिकादिना सिद्धं रूक्षसिद्धम् । अकोमलं जरठम् । असंजातरसमपरिपूर्णरसस्वरूपमित्यर्थः । तद्वच्छुष्कं तथैव शुष्कशाकमप्यसंजातरसं त्यजेत् । अन्यत्र मूलकात् शुष्कमूलकं भजेदेव । प्रायेण फलमप्येवंविधं त्यजेत् । प्रायोग्रहणं द्राक्षापरूषकादीनां शुष्काणामपि पथ्यत्वादत्याज्यत्वज्ञापनार्थम् । तथा आममसंप्राप्तपाकं फलं त्यजेदिति वर्तते । किं सर्वं नेत्याह-बिल्ववर्जितम् । बिल्वं त्वाममपि पथ्यत्वान्न त्यजेदित्यर्थः । इति फलवर्गः ॥ १५१ ॥

हे०—एवं धान्यादीनां गुणानुक्त्वा यादृक् त्याज्यं तादृगाह-तत्र धान्यमाह-हिमं-तुहिनम्, अनलो—दावानलादिः-उष्णमातपः, दुर्वातः-पुरोवातादिः, व्यालानां सर्पादिविषप्राणिनां लालादयः । आदिशब्देन कोथमूत्रपुरीषादयः । तैर्दूषितमुपहतं जन्तुजुष्टं—कृमिसेवितं, जले मग्नं पानीयमग्नमञ्जरीकम्, अभूमिजमनुचितक्षेत्रजम् । अनार्तवमनुचितकालजम् । अन्यधान्ययुतं—विजातीयेन धान्येन सहैकक्षेत्रजम्, अतिजीर्णतया बहुवर्षोषितत्वेन हीनवीर्यं नष्टशक्ति, यत्स्वभावतो हीनवीर्यमतिजीर्णमप्यहीनवीर्यम् । तत्र त्याज्यं शाकमाह—तथा हिमदूषितादिकम्, अन्यधान्ययुतमित्यत्र धान्यस्थाने शाकशब्द ऊहनीयः । रूक्षसिद्धं—स्नेहं विना पक्वम् अकोमलं—जरठम् । असंजातरसमत्यन्तकोमलं मूलकादन्यच्छुष्कं च त्यजेन्मूलकस्य शुष्कस्यैवं गुणत्वात्। फलमाह--एवमपि धान्यवत्। अन्यफलयुतत्वं त्वेकालवालजत्वेन बिल्ववर्जितमामफलं त्यजेत् बिल्वस्यैवं गुणत्वात् । अपिशब्दः प्रायेणेत्यस्य धान्यशाकाभ्यामपि संबन्धार्थः । जन्तुजुष्टस्याप्युदुम्बरादेः फलस्य, जलमग्नस्यापि पद्मनालादेः शाकस्य, अन्यधान्ययुतस्यापि कुसुंभगोधूमादेर्धान्यस्य सेवितत्वदर्शनात् प्रायेणेत्युक्तम् इति फलवर्गः ॥ १५१ ॥

फलवर्गादनंतरं विविधौषधवर्गारंभः । प्रायेणास्याऽऽहारोपयोगित्वात्तत्राऽपि लवणानां पूर्वमुपन्यासो युक्तः सुतरामुपयोगित्वादित्याह—

**विष्यंदि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ।**
**वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ॥**

स०—सर्वं लवणं विष्यंद्यादिगुणयुक्तं विदुर्जानंति सद्वैद्या इति शेषः । विष्यंदयति तच्छीलं विष्यंदि । स्त्यानस्य कफादिसंघातस्य विलीनविग्रहतामुत्पादयतीत्यर्थः । सूक्ष्मं सूक्ष्मस्रोतोगामि । सृष्टं मलं मूत्रपुरीषादि येन तत्सृष्टमलम् । तथा वातापहम् । पाकि अन्नव्रणादीनां पाककारि । तीक्ष्णममृदु मरीचादिवत् । उष्णमुष्णवीर्यम् । रोचनं रुचिकृत् । तथा कफपित्तकृत् ॥ १५२ ॥

प०—फलवर्गादनन्तरं विविधौषधवर्गारम्भः । येणास्याहारोपयोगित्वात्तत्रापि लवणानां पूर्वमुन्यासो युक्तः । सुतरामुपयोगित्वादित्याह--सर्वं वर्णं विष्यन्द्यादिगुणयुक्तं विदुर्जानन्ति । सद्वैद्या ति शेषः । विष्यन्दयति तच्छीलं विष्यन्दि, स्त्यास्य कफादिकस्य धातोर्विलीनविग्रहतामुत्पादयत्यर्थः । सूक्ष्मं--स्रोतोगामि । सृष्टं मलं मूत्रपुरीादि येन तत्सृष्टमलम् । तथा वातं हन्ति । पाकि न्नव्रणादीनां पाककारि । तीक्ष्णमभृदु मरिचादित् । उष्णमुष्णवीर्यम् । रोचनं--रुचिकृत् । तथा फपित्तकृत् । इति सामान्यलक्षणमुक्तम् ॥ १५२॥

हे०--अथ औषधवर्गः । औषधस्यापि संस्कारकत्वेनारोपयोगात् तत्रादौ लवणम् । तच्चाष्टधा-सैन्धवं, सौवर्चलं, डं, सामुद्रमौद्भिदं, कृष्णं, रोमकं, पांशुजं चेति। तत्र लवणमान्यगुणानाह--विष्यन्दि--अभिष्यन्दि, मृदु--मृदुगुणं, कि--पाचनम् । अथ विशेषगुणाः ॥ १५२ ॥

इति सामान्यलक्षणमुक्त्वा विशेषमाह--

न्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत् ।
घ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् १५३

स०--तत्र तेषु लवणेषु मध्ये सैंधवं सस्वादु ईषधुरं वृष्यं हृद्यं त्रिदोषघ्नं तथा किंचिदुष्णं दृष्टेः पथ्यं चिद्विदाह्यग्निदीपनं च। सामान्यगुणाश्च विष्यंदिसूक्ष्मष्टमलत्वरोचनान्यस्य संत्येव ॥ १५३ ॥

प०--विशेषमाह--तत्र तेषु लवणेषु मध्ये सैन्धवंस्वादु ईषन्मधुरम्, वृष्यं, हृद्यं, त्रिदोषघ्नम् । था किंचिदुष्णं, दृष्टेः पथ्यं, किञ्चिद्विदाह्यग्निपनं च । सामान्यगुणाश्च विष्यन्दिसूक्ष्मसृष्टलत्वरोचनान्यस्य सन्त्येव ॥ १५३ ॥

हे०--तत्र सैन्धवगुणानाह--सस्वादु सैन्धवमिति ारणादिना शीतमुक्तम् । तत्कथमनुष्णं ब्रूमः, शीतमिव तं चक्षुष्यत्वपित्तघ्नत्वादिकार्यकरत्वात् । अवश्यं चैवमीकर्तव्यं, "सैन्धवं क्षारसं पाक्यं सौवर्चलमथौद्भिदम् । र्वपूर्वगुणोत्कृष्टमुष्णं तेषां यथोत्तरम् ॥" इति खारादिनैवोष्णस्योक्तत्वात् । सुश्रुतोऽप्याह--सैन्धवसामुबिडसौवर्चलरोमकौद्भिदप्रभृतीनि यथोत्तरमुष्णानि, ातहराणि, कफपित्तकराणि च । यथापूर्वं स्निग्धानि, ादूनि, सृष्टमूत्रपुरीषाणि चेति । दृशः पथ्यं--चक्षुम् ॥ १५३ ॥

लघु सौवर्चलं हृद्यं सुगंध्युद्गारशोधनम् ।
कटुपाकं विबंधघ्नं दीपनीयं रुचिप्रदम् ॥१५४॥

स०--सौवर्चलं लघु हृदयाय हितं सुगंध्युद्गारं शोधयति दुष्टं सच्छुद्धं करोति । कटुपाकं च । तथा विबद्धस्रोतसां हितं विबंधघ्नम् । अग्निदीप्तिरुचिकृत् ॥१५४॥

प०--सौवर्चलं--लघु, हृदयाय हितं, सुगन्धि, उद्गारं संशोधयति, दुष्टं सच्छुद्धं करोति । कटुपाकं च । तथा विबन्धघ्नं स्रोतसां हितम् । अग्निदीप्तिरुचिकृत् ॥ १५४ ॥

हे०--सौवर्चलगुणानाह--उद्गारशोधनं, [illegible]मनं चेति ॥ १५४ ॥

ऊर्ध्वाधःकफवातानुलोमनं दीपनं बिडम् ।
विबंधानाहविष्टंभशूलगौरवनाशनम् ॥ १५५ ॥

स०--बिडं तद्रूर्ध्वमधश्च कफवातावनुलोमयति । तथा दीपनं विबंधादिघ्नं च ॥ १५५ ॥

प०--बिडं--तदूर्ध्वमधश्च कफवातावनुलोमयति । तथा दीपनं विबन्धादिघ्नम् ॥ १५५ ॥

हे०--बिडगुणानाह--ऊर्ध्वाधःकफवात[illegible] प्रत्येकं संबध्यते, न तु यथासंख्येन "ऊर्ध्वानुलोम[illegible] शूलघ्नं दीपनं बिडम् ।" इति खारणादिवचनात्, "ऊर्ध्वं चाधश्च वातानामानुलोम्यकरं परम् ।" इति चरकवचनाच्च । विबन्धो मलरोधः, आनाह--आनद्धोदरता, विष्टंभो--वातविरोधः ॥ १५५ ॥

विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् १५६॥

स०--सामुद्रं विपाके मधुरं गुरु कफवर्धनं च १५६

प०--सामुद्रं--विपाके मधुरं, गुरु, कफविवर्धनं च ॥ १५६ ॥

हे०--सामुद्रगुणानाह--विपाक इति ॥ १५६ ॥

सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् १५७

स०--भूमिमुद्भिद्य यद्भवति तदौद्भिदमीषत्तिक्तं कटुक्षारं तीक्ष्णमुत्क्लेदि च दोषोत्क्लिष्टकरम् ॥१५७॥

प०--भूमिमुद्भिद्य यद्भवति तदौद्भिदं--तिक्तकटुकक्षारं, तीक्ष्णमुत्क्लेदि च दोषोत्क्लिष्टकरं च ॥ १५७ ॥

हे०-औद्भिदगुणानाह--सतिक्तेति । भूमिमुद्भिद्योत्पन्नस्य क्षारोदकस्य सूर्यरश्मिभिर्वह्निना वा कथनाचल्लवणं तदौद्भिदम् । उत्क्लेदि—क्लेदादिवृद्धिकरम् ॥ १५७ ॥

**कृष्णे सौवर्चलगुणा लवणे गंधवर्जिताः १५८॥**

स०--कृष्णे लवणे सौवर्चलगुणा लघुत्वादयो गन्धेन वर्जिताः सौगंध्यरहितास्ते संति इति शेषः१५८

प०--कृष्णे कृष्णलवणे सौवर्चलगुणा लघुत्वादयः । गन्धेन वर्जिताः सौगन्ध्यरहितास्त इति शेषः ॥ १५८ ॥

हे०--कृष्णलवणगुणानाह--कृष्ण इति । अतएव निर्गन्धं सौवर्चलमाचक्षते ॥ १५८ ॥

**रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ॥१५९॥**

स०-रोमकं लवणं लघु पांसूत्थं शिरालवणमीषत् क्षारं श्लेष्मलं गुरु च ॥ १५९ ॥

प०-रोमकं लवणं-लघु, पांसूत्थं शिरालवणमीषत्क्षारं, श्लेष्मलं, गुरु च ॥ १५९ ॥

हे०-रोमकगुणानाह—रोमकं शाकंभरादेशोत्थम् । पांशुजगुणमाह--पांशुजं--क्षारमृत्तिकोद्भवम् ॥ १५९ ॥

**लवणानां प्रयोगे तु सैंधवादीन् प्रयोजयेत् १६०**

स०-लवणानां प्रयोगे सैंधवमादि कृत्वा प्रयोजयेत् । अन्यत्र प्रदेशे लवणानि द्वित्राणि त्रिचतुराण्येव यत्र युज्यंते तत्र सैंधवमादि कृत्वा प्रयोज्यानि । यथा हिंग्वादिचूर्णे द्विपटु इत्युक्तम् । तत्र सैंधवसौवर्चले प्रयोज्ये । यत्र त्रयाणां प्रयोगस्तत्र सैंधवसौवर्चलविडानि । एवमौद्भिदादीनां लवणवर्गे पठितानामन्यत्राऽपि वेद्यम् । खरनादे चोक्तम् । सैंधवं सारकं पाक्यं सौवर्चलमथौद्भिदम् । पूर्वं पूर्वं गुणोत्कृष्टमौष्ण्यं चैषां यथोत्तरमिति ॥ १६० ॥

प०--लवणानां प्रयोगे सैन्धवमादि कृत्वा प्रयोजयेत् । अन्यत्र प्रदेशे लवणानि द्वित्रिचतुराण्येव प्रयुज्यन्ते । तत्र सैन्धवमादि कृत्वा प्रयोज्यानि । यथा हिंग्वादिचूर्णे द्विवह्निरित्युक्तं तत्र सैन्धवसौवर्चले प्रयोगे योजयेत् । अन्यत्र प्रदेशे लवणानां यत्र त्रयाणां प्रयोगस्तत्र सैन्धवसौवर्चलबिडानि । एवमौद्भिदादीनां लवणवर्गपठितानामन्यत्रापि वेद्यम् । खरनादेनोक्तम्-" सैन्धवं सारकं पाक्यं सौवर्चलमथोद्भिदम् । पूर्वं पूर्वं गुणोत्कृष्टमौष्ण्यं तेषां यथोत्तरम् ।" इति ॥ १६० ॥

हे०--प्रसङ्गाच्चिकित्सोपयोगिनीं परिभाषामाह--यत्र लवणानामेकद्व्यादीनां सैंधवादिशब्दैर्विना प्रयोग उक्तः, तत्र सैन्धवादि प्रयोजयेत् । सैन्धवादिर्यत्र तथा भवतीति क्रियाविशेषणम् । यथा यत्रैकं लवणं तत्र सैन्धवम् । यत्र द्वे तत्र सैंधव--सौवर्चले । यत्र त्रीणि तत्र सैन्धवसौवर्चलबिडानीत्यादि । यत्र संख्यां विना बहुवचनं तत्र पञ्चैव ग्राह्याणि । " सौवर्चलं सैन्धवं च बिडमौद्भिदमेव च । सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ॥ " इति चरकवचनात् । यथा " चतुर्णां प्रस्थमम्लानामुषणाच्च पलत्रयम् । लवणानां च चत्वारि शर्करायाः पलाष्टकम् ॥ तच्चूर्णमुपपानान्नरागादिष्ववचारयेत् । कासाजीर्णारुचिश्वासहृत्पाण्ड्वामयशूलनुत्"इत्यत्र । एतदेव स्पष्टीकृतं संग्रहे दाडिमकपित्थवृक्षाम्लाम्लीकानां पृथक्पृथक्कुडवं लवणपञ्चककुडवकम्, उषणत्रिपलम् ; शर्करापलाष्टकं चैकत्र चूर्णितमन्नपानेप्रणीतमजीर्णारुचिश्वासकासगुल्मप्लीहग्रहणीहृत्पाण्डुरोगघ्नमिति ॥ १६० ॥

**गुल्महृद्ग्रहणीपांडुप्लीहानाहगलामयान् ।**
**श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ॥१६१**

स०-यवशूकजो यवक्षारो गुल्मादीन् शमयति १६१

प०--यवशूकजो यवक्षारो गुल्मादीन् शमयति ॥ १६१ ॥

हे०--अथ क्षारः । तत्र यवक्षारगुणानाहगुल्मेति १६१

स०—संप्रति स्वर्जिकाक्षारादीनामपि गुणानाह—

**क्षारः सर्वश्च परमं तीक्ष्णोष्णः कृमिजिल्लघुः ।**
**पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः ॥**
**अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ॥**

स०-क्षारः सर्वश्च परममतिशयेन तीक्ष्णोष्णः कृमिजिल्लघुश्च । पित्तासृजी दूषयति। पाकी पाककारी। छेदी मेदःश्लेष्मादिग्रंथिघ्नः अहृद्यो हृदयाय न हितः ।

विदारणः पक्वगंडादीनाम् । कटुलावण्याच्छुक्रादीनाम-
पथ्यः ॥ १६२ ॥

प०—संप्रति स्वर्जिकाक्षारादीनामपि गुणानाह-
क्षारः सर्वश्च परमतिशयेन तीक्ष्णोष्णः, कृमिजि-
ल्लघुः । पित्तासृग्जी दूषयति । पाकी—पाककरः ।
छेदी—भेदः श्लेष्मादिग्रन्थिघ्नः । अहृद्यो—हृदयाय न
हितः । विदारणः पक्वगण्डादीनाम् । कटुलावण्या-
च्छुक्रादीनामपथ्यः ॥ १६२ ॥

हे०—क्षारसामान्यगुणानाह—परमतिशयेन तीक्ष्णो-
ष्णः, पाकी, पाचनः । छेदी—छेदनः, विदारणः—
शोफादिपाटनः, कटुलवणरसत्वाच्छुक्रादीनामपथ्यः १६२

**हिंगु वातकफानाहशूलघ्नं पित्तकोपनम् ।**
**कटुपाकरसं रुच्यं दीपनं पाचनं लघु ॥ १६३**

स०—हिंगु वातादिघ्नं पित्तकोपनं कट्वादिगुणयुक्तं
च ॥ १६३ ॥

प०—हिंगु—वातापहं, पित्तप्रकोपनं, कट्वादिगुण-
युक्तम् ॥ १६३ ॥

हे०—तत्र हिङ्गुगुणानाह—हिंग्विति ॥ १६३ ॥

**कषाया मधुरा पाके रूक्षा विलवणा लघुः ।**
**दीपनी पाचनी मेध्या वयसः स्थापनी परा ।**
**उष्णवीर्या सराऽऽयुष्या बुद्धींद्रियबलप्रदा ।**
**कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ।**
**शिरोऽक्षिपांडुहृद्रोगकामलाग्रहणीगदान् ।**
**सशोषशोफातीसारमेदमोहवमिक्रिमीन् ॥**
**श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ॥**
**विबंधं स्रोतसां गुल्ममूरुस्तंभमरोचकम् ।**
**हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान् ॥**

स०—हरीतकी कषाया कषायरसा । कषायरस-
त्वात्कटुविपाकित्वं प्राप्तमित्याह । मधुरा पाक इति ।
तथा रूक्षा । विलवणेति वचनं लवणं वर्जयित्वा शेषाः
पंचरसा अस्याः संतीति वेदयति । नन्वेवं कषायेत्य-
नर्थकं यतः पंचपु रसेषु लवणहीनेषु मध्ये कषा-
योऽनुप्रविष्ट एव । अस्त्येवैतत् । कषायेत्येतदतिश-
यख्यापनाय । कषायो रसोऽस्यां बाहुल्येनाऽस्तीत्यर्थः।
तथा च मुनिः । हरीतकीं पंचरसामुष्णां विलवणां
शिवामिति । तथा लघुः । दीपन्यग्नेः । पाचन्यामादेः ।
मेध्या मेधायै हिता । वयस इत्यादि । कालकृतां
शरीरावस्था यौवनादिर्वयस्तस्य परमतिशयेन स्थापनी
स्थिरीकरणी । उष्णवीर्या [illegible]
लब्धत्वाद्वीर्यग्रहणमतिशयोष्णवीर्यत्वख्यापनार्थम् । सरा
भेदनी । तथाऽऽयुषे हिता । बुद्धिः [illegible]
प्रज्ञा । इन्द्रियाणि चक्षुरादीनि तेषां बलं प्रददाति
या सैवम् । कुष्ठादीन् रोगान् जयति । [illegible]
मप्यथापि । स्वाद्वम्लभावात्पवनं कटुतिक्ततया कफम् ।
कषायमधुरत्वाच्च हंति पित्तं हरीतकी ॥ १६४ ॥

प०—हरीतकी—कषाया कषायरसा । कषायरस-
त्वात् कटुविपाकत्वं प्राप्तमित्याह—मधुरा पाके इति ।
तथा रूक्षा विलवणेति वचनं लवणं वर्जयित्वा
शेषाः पञ्च रसा अस्याः सन्तीति वेदयति ।
नन्वेवं कषायेत्यनर्थकम् । यतः पञ्चसु रसेषु लवण-
हीनेषु मध्ये कषायोऽनुप्रविष्ट एव । अस्त्येवैतत् ।
कषायेत्येतदतिशयख्यापनाय कषायो रसोऽस्यां
बाहुल्येनास्तीत्यर्थः । तथा च मुनिः—"हरीतकी
पञ्चरसा" इत्यादि । कालकृता शरीरावस्था यौ-
वनादिर्वयः तस्य परमतिशयेन स्थापिनी स्थिरी-
करणी । उष्णेत्येतावत्येवोष्णवीर्यत्वस्यार्थस्य
लब्धत्वाद्वीर्यग्रहणमतिशयेनोष्णवीर्यत्वख्यापनार्थम् ।
सरा भेदिनी तथा आयुषे हिता । बुद्धिर्वर्त-
मानार्थग्राहिणी प्रज्ञा । इन्द्रियाणि—चक्षुरादीनि,
तेषां बलं प्रददाति या सैवम् । कुष्ठादीन् रोगान्
जयति । स्वरजादे त्वेवमप्यथापि "स्वाद्वम्लभावा
त्पवनं कटुतिक्ततया कफम् । कषायमधुरत्वाच्च हन्ति
पित्तं हरीतकी ॥ १६४ ॥

हे०—हरीतकीगुणानाह—कषायेति । पञ्चरसत्वेऽप्यति-
शयार्थं विलवणा स्वाद्वम्लकटुकषायेत्यर्थः । बुद्धीन्द्रि-
याणां च बलप्रदा, पुराणज्वरो—जीर्णज्वरः, शोषो—राज-
यक्ष्मा, मोहो—मूर्छा, स्रोतसां विबन्धः—स्रोतोरोधः ।
कफवातजानिति । कुष्ठादीनां विशेषणम् । तास्तानित्यनेना-
मेवं प्रकाराणामनुलोमादिसाध्यानां ग्रहणार्थं—"स्वाद्वम्ल-
भावात्पवनं कटुतिक्ततया कफम् । कषायमधुरत्वाच्च पित्तं
हन्ति हरीतकी ॥" इति । ज्वारणादिना पित्तघ्नत्वम्.

प्युक्तं तत्किमिति कफवातयोर्ग्रहणं सत्यं; पित्तजानपि व्याधीन् जयेत्कफवातजांस्त्वतिशयेनोष्णवीर्यत्वात् । खारणादिना हरीतकीलक्षणमप्युक्तं, "क्षिप्ताम्भसि निमज्जेद्या गुणकृत्सा प्रकीर्तिता ।" इति ॥ १६४ ॥

**तद्वदामलकं शीतमम्लं पित्तकफापहम् ॥१६५**

स०--तया हरीतक्या तुल्यं वर्तत इति तृतीयान्ताद्वतिः । हरीतकीसमानगुणमामलकमित्यर्थः । विशेषं त्वस्याह । अभयोष्णेदं शीतं शीतवीर्यं तथाऽम्लमम्लरसं पित्तकफघ्नं चेति । कृष्णात्रेयस्त्वामलकं त्रिदोषघ्नं चाख्यत् । यथा । अम्लभावाजयेद्वातं पित्तं माधुर्यशैत्यतः। कफं रूक्षकषायत्वादेवमेष त्रिदोषनुत् । सुश्रुतेऽपि त्रिदोषघ्नमुक्तम् । तद्ग्रन्थो हि । चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् । हंति वातं तदम्लत्वात्पित्तं माधुर्यशैत्यतः। कफं रूक्षकषायत्वात्फलेभ्योऽभ्यधिकं तु तदिति । ॥ १६९ ॥

प०--तया हरीतक्या तुल्यं वर्तत इति तृतीयान्ताद्वतिः । हरीतकीसमानगुणमामलकमित्यर्थः । विशेषं त्वस्याह । अभयोष्णेदं शीतं शीतवीर्यं तथाम्लमम्लरसं पित्तघ्नं चेति । कृष्णात्रेयस्त्वामलकं त्रिदोषघ्नं चाख्यत् । तथा--"अम्लभावाज्जयेद्वातं पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वादेवमेष त्रिदोषनुत् ।" सुश्रुतेऽपि त्रिदोषघ्नमुक्तम् । तद्ग्रन्थो हि--"चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् । हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकं तु तत्"इति ॥१६५॥

हे०--आमलकगुणानाह--तद्वद्धरीतकीवत् सा तूणा कषायोत्कटा, अतिशयेन वातकफघ्नी । इदं तु शीतमम्लोत्कटमतिशयेन पित्तकफघ्नमिति व्यतिरेकः १६५

**कटु पाके हिमं केश्यमक्षमपिच्च तद्गुणम्१६६**

स०--अक्षं बिभीतकं पाके कटुकं शीतवीर्यं केशेभ्यो हितम् । तथेषत्तद्गुणं ताभ्यां हरीतकीधात्रीभ्यां, समाना गुणा यस्य तत्तद्गुणं किंचिदक्षम् । ननु हरीतक्यादीनां स्थूलसूक्ष्मादिभेदेनानियतस्वरूपत्वात्कथमिवोपयोगः क्रियतामिति केचित् । तान् ब्रूमहे । अक्षं तावदत्र कर्षप्रमाणं ग्राह्यम् । तथा च धन्वंतरिराख्यत् बिभीतकः कर्षफल इत्यादि । अन्वर्था हीयं संज्ञा कर्षः कर्षप्रमाणं फलं यस्य स कर्षफल इति । तदेव बिभीतकस्य फलं यत्कर्षप्रमाणं तद्ग्राह्यमित्यवतिष्ठते हरीतक्या अपि प्रमाणं नियतमेव । तंत्रांतरेऽप्युक्तम् नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथांऽभसि । निमज्जेद्या प्रशस्तत्वाद् गुणकृत्सा प्रकीर्तिता । नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता । हरीतक्याः फले यत्र तेनैतच्छ्रेष्ठमुच्यत इति । तदेवं द्विकर्षप्रमाणत्वं हरीतक्या स्थितम् । धात्रीफलस्याऽपि युक्त्या नियतप्रमाणत्वमेव । तथा चोक्तं तंत्रांतरे । अभयैका प्रदातव्या द्वावेव तु बिभीतकौ । धात्रीफलानि चत्वारि त्रिफलेयं प्रकीर्तितेति । तदेवमामलकानामर्धकर्षप्रमाणत्वमवतिष्ठते तस्मान्नियतप्रमाणत्वं त्रिफलायाः स्थितम् ॥ १६६ ॥

प०--अक्षं बिभीतकं-पाके कटुकं, शीतवीर्यं, केशेभ्यो हितम् । तथेषत्तद्गुणं ताभ्यां हरीतकीधात्रीभ्यां समाना गुणा यस्य तत्तद्गुणं किंचिदक्षम् । ननु हरीतक्यादीनां स्थूलसूक्ष्मादिभेदेनानियतस्वरूपत्वात् कथमिवोपयोगः क्रियतामिति केचित् । तान् ब्रूमहे । अक्षं तावदत्र कर्षप्रमाणं ग्राह्यम् । तथाच धन्वन्तरिराख्यत् । बिभीतकः कर्षफल इत्यादि । अन्वर्था हीयं संज्ञा । कर्षः कर्षप्रमाणं फलं यस्य स कर्षफल इति । तदेव बिभीतकस्य फलं यत्कर्षप्रमाणं तद् ग्राह्यमित्यवतिष्ठते । हरीतक्या अपि प्रमाणं नियतमेव । तन्त्रान्तरेऽप्युक्तम् "नवा स्निग्धा घनावृत्ता गुर्वी क्षिप्ता तथाम्भसि । निमज्जेद्या प्रशस्तत्वाद्गुणकृत्सा प्रकीर्तिता ॥ नवादिगुणयुक्तत्वं तथैकत्वं द्विकर्षता । हरीतक्याः फले येन तेनैतच्छ्रेष्ठमुच्यते ॥ " इति । तदेवं द्विकर्षप्रमाणत्वं हरीतक्याः स्थितम् । धात्रीफलस्यापि युक्त्या नियतप्रमाणत्वमत्र । तथाचोक्तं तन्त्रान्तरे-"अभयैका प्रदातव्या द्वावेव तु बिभीतकौ । धात्रीफलानि चत्वारि त्रिफलेयं प्रकीर्तिता ॥ " इति । तदेवमामलकानामर्धकर्षप्रमाणत्वमवतिष्ठते । तस्मान्नियतप्रमाणत्वं त्रिफलायाः स्थितम् ॥ १६६ ॥

हे०--बिभीतकगुणानाह--अक्षं--बिभीतकं, तद्गुणमामलकगुणम् । कटु पाक इति । स्वादुपाकत्वापवादः। अहि-

---

१ अत्र "पाकेऽहिमम्" इति पाठान्तरम् ।

मिति शीतवीर्यत्वनिषेधादुष्णवीर्यत्वस्य प्रतिप्रसवः । ादित्यतिशयो निषिध्यते, स चाम्लत्वस्यैव न पित्तकफा- त्वस्य तस्य तंत्रान्तरे विधानात्, यथा चाह सुश्रुतः- भेदनं लघु रूक्षोष्णं वैस्वर्य क्रिमिनाशनम् । चक्षुष्यं ादुपाक्यक्षं कषायं कफपित्तजित्॥'' इति। खारणादिरपि- कषायमधुरं शीतं लघुपित्तकफापहम्। विभीतकफलं तस्मा- त्रफला सार्वयौगिकी ॥'' इति । स्वादुपाकीति । स्वादु धुररसं पाकि पाचनम् अतएव खारणादिना कषाय- धुरमुक्तम्। शीतमिति। शीतस्पर्शं सुश्रुतेनोष्णत्वस्योक्तत्वात्, ष्णवीर्येति वीर्यग्रहणाच्च ॥ १६६ ॥

**यं रसायनवरा त्रिफलाऽक्ष्यामयापहा । पणी त्वग्गदक्लेदमेदोमेहककास्रजित् १६७॥**

स० इयमीदृशी त्रिफला रसायनवरा। चक्षूरोगघ्नी पणी व्रणानाम् । त्वग्गदाः कुष्ठादयः । क्लेदो व्रणा- नां स्रावः । मेदश्चतुर्थो धातुः । मेहः प्रमेहः । फः श्लेष्मा । अस्रं रक्तम् । तानि जयति या वम् ॥ १६७ ॥

प०—इयमीदृशी--रसायनवरा, चक्षूरोगघ्नी, रो- णी व्रणानाम् । त्वग्गदाः--कुष्ठादयः । क्लेदो-- णादीनां स्रावः । मेदश्चतुर्थो धातुः । मेहः-- मेहः । कफः--श्लेष्मा । अस्रं--रक्तम् । तानि जयति ा सैवम् ॥ १६७ ॥

हे०—हरीतक्यादित्रयस्य मिलितस्य संज्ञां कुर्वन् गुण- ाह--इयं-हरीतक्यामलकविभीतकाख्या फलत्रयी त्रिफलेति ाख्याता, रसायनवरत्वादिगुणा च । अक्ष्यामया त्ररोगाः, त्वग्गदाः---कुष्ठादयः ॥ १६७ ॥

**केसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम्॥१६८**

स०—दीपनरोचनमित्येतत्पर्यंतम् । त्वक् च पत्रं ेला चेति द्वंद्वैकवद्भावः । एतस्य नाम त्रिजातकं त्रिसुगंधमिति । एतत्त्रिजातकं केसरयुक्तं चतुर्जातक- मित्युच्यते । तच्च पित्तप्रकोपित्वादिगुणम् ॥ १६८ ॥

प०--दीपनरोचनमित्येतत्पर्यन्तम् । त्वक्च पत्रं च ेला चेति द्वन्द्वैकवद्भावः । एतस्य नाम त्रिजा- कं त्रिसुगन्धमिति । एतत् त्रिजातकं केसरयुक्तं च- तुर्जातकमुच्यते । तच्च पित्तप्रकोपित्वादिगुण- युक्तम् ॥ १६८ ॥

हे०—त्वगादित्रयस्य चतुष्टयस्य च संज्ञां कुर्वन् गुण- माह--त्वक्पत्रैलं त्रिजातकम् । तदेव सकेसरं चतुर्जात- संज्ञम् । द्वयमपि--पित्तप्रकोपादिगुणम् । केचित्पूर्वार्द्धमप- ठित्वोत्तरार्द्धं मरिचेन योजयन्ति तदसत्, त्रिकटावत् त्रिजातकचतुर्जातकाभ्यामपि व्यवहारात् ॥ १६८ ॥

**पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् । रसे पाके च कटुकं कफघ्नं मरिचं लघु ॥१६९**

स०—पित्तकोपि तीक्ष्णादिगुणयुक्तं रसे पाके च कटुकं मरिचं कफघ्नं लघु च । कटुकरसत्वेन लब्धे पाकग्रहणमतिशयार्थम् ॥ १६९ ॥

प०—पित्तं प्रकोपयतीति तीक्ष्णादिगुणयुक्तम् रसे पाके च कटुकं मरिचं कफघ्नं, लघु च । कटुकरस- त्वेन लब्धे पाकग्रहणमतिशयार्थम् ॥ १६९ ॥

हे०—पित्तप्रकोपित्वादिगुणयोगाद्बहुला [illegible] त्वाच्च । नहि तन्त्रान्तरे [illegible] [illegible] किंतु अनुकूला उक्ताः । यथा [illegible]-- '' त्वक्पत्रकैलं त्रिसुगन्धमेतत्प्रकीर्तितं [illegible] वर्ण्यं विषघ्नं च सनागपुष्पं ज्ञेयं चतुर्जातकमेतदेव [illegible] इति । मरिचगुणानाह--यत्तु '' रोचनं दीपनं छेदि सुगन्धि कफवातजित् । नात्युष्णं कटुकं तीक्ष्णं मरिचं नाति पित्त- लम् ॥ '' इति खारणादिना नात्युष्णं, नातिपित्तलं चोक्तम् । तदार्द्रावस्थाविषयं तस्य स्वादुपाकित्वात् । उक्तं च सुश्रुतेन--'' स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च । '' इति ॥ १६९ ॥

**श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली। सा शुष्का विपरीताऽतः स्निग्धा वृष्या रसे कटुः। स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा । न तामत्युपयुंजीत रसायनविधिं विना १७०॥**

स०-आर्द्राऽशुष्का पिप्पली श्लेष्मला स्वादुरसा। शीत- वीर्या गुरुः स्निग्धा च। सा शुष्का पिप्पली अत आर्द्रायाः पि- प्पल्याः सकाशाद्विपरीता शीतविपर्ययेणोष्णा। गुरुविपर्य- येण लघुः। स्निग्धविपर्ययस्त्वत्र नास्ति स्निग्धेत्युक्तत्वात्। तथा वृष्या रसे कटुश्च। कटुरसत्वाच्च कटुपाकत्वं प्राप्तमि- त्याह। स्वादुपाका। तथा अनिलादीन् हंति सरा च एवं- विधामपि तां पिप्पलीमत्यर्थं न युंजीत रसायनविधिं

विनापिप्पलीं वर्धमानादिरसायनविधान एवातिशयेनो-पयुञ्जीत ॥ १७० ॥

प०—आर्द्रा पिप्पली-श्लेष्मला, स्वादुरसा, शीत-वीर्या, गुरुः, स्निग्धा च । सा पिप्पली आर्द्रायाः सकाशाद्विपरीता विपर्ययेनोष्णा गुरुविपर्ययेण लघुः स्निग्धविपर्ययेणेषद्रूक्षा सुस्निग्धेत्युक्तत्वात् । तथा वृष्या, रस कटुश्च । कटुरसत्वात् कटुपात्वं प्राप्तमित्याह-स्वादुपाका तथाऽनिलादीन् हन्ति । सरा वा । एवंविधा तां पिप्प[illegible] नात्यर्थं युञ्जीत रसायनविधिं विना । पिप्पलीं वर्धमा-नादिरसायनविधान एवातिशयेनोपयुञ्जीत॥१७०॥

हे०—आर्द्रपिप्पलीगुणमाह—श्लेष्मलेति । शुष्क-पिप्पलीगुणमाह-सेति । अत आर्द्राया विपरीता—श्लेष्मघ्नी, उष्णा, लघुश्च । विपरीताद्रूक्षत्वे प्राप्ते स्निग्धेती नन्वं तिक्तादिकेषु प्राप्तेषु । रसे कटुरिति । वैपरीत्यादेव श्लेष्मघ्नत्वे सिद्धे पुनः श्लेष्मग्रहणं नियमार्थम्, अनिल-श्लेष्मघ्न्येव, न पित्तघ्नी । ननु पित्तघ्नत्वशंकैव कुत इति चेत् , कटुका पिप्पली पित्तं शमयाति शीतवीर्यत्वादिति सुश्रुतवचनात् । सुश्रुतवचनस्य का गतिरिति चेत् , आर्द्रा पिप्पली तस्याः कटुकत्वं कुत इति चेत् प्रत्यक्षसिद्धत्वात् । स्वादुत्वोक्तिस्त्वतिशयार्था, सुश्रुतस्याप्यार्द्राविषयत्वमभि-प्रेतम् , यत आह—"तेषु गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा । शुष्का कफानिलघ्नी सा वृष्या पित्तप्रकोपिणी॥" इति । उक्तं च माधवकारेण—" सा पित्तशमनी पूर्वं दर्शिता वीर्यवादिना । शास्त्रकारेण निर्दिष्टा सत्यं पित्तप्रकोपिणी ॥ " इति । पिप्पल्यां अतिसेवां निषेध-ति—नेति । चरकाचार्येण तत्रोपपत्तिरुक्ता । अथ खलु त्रीणि द्रव्याणि नात्युपयुञ्जीताधिकमन्येभ्यो द्रव्येभ्यस्तद्य-था—पिप्पलीक्षारो लवणमिति । पिप्पल्यो—हि कटुकाः सत्यो मधुरविपाका गुर्व्यो नात्यर्थं, स्निग्धोष्णाः प्रक्लेदिन्यो भेषजाभिमताश्च सत्यः शुभाशुभकारिण्यो भवन्त्यायातभद्राः प्रयोगसममसाद्गुण्यादोषसंचयानुबद्धाः सततमुपयुज्यमाना हि गुरुप्रक्लेदित्वात् श्लेष्माणमुत्क्लेदयन्ति । उष्णात्पित्तं न वातप्रशमायोपकल्पन्ते अल्पस्नेहोष्णभावात् , योग-वाहिन्यः खलु ता भवन्ति । तस्मात्पिप्पलीर्नात्युपयुञ्जी-तेति ॥ १७० ॥

**नागरं दीपनं वृष्यं ग्राहि हृद्यं विबंधनुत् ॥**
**रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित्**

स०—नागरं शृंगवेरं दीपनादिगुणयुक्तम् । ग्राहि विड्विबधकृत् तथा हृद्यम् । विबंधनुत् स्रोतःशुद्धि-कृत् ॥ १७१ ॥

प०—नागरं शृङ्गवेरं–दीपनादिगुणयुक्तम् । ग्राहि–विबन्धकृत् । तथा हृद्यं, विबन्धनुत्–स्रोतः-शुद्धिकृत् ॥ १७१ ॥

हे०—शुण्ठीगुणानाह-नागरं-शुंठी, ग्राहि मलानां विब-न्धनुद्वायोः ॥ १७१ ॥

**तद्वदार्द्रकमेतच्च त्र्यं त्रिकटुकं जयेत् ॥**
**स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् १७२**

स०—आर्द्रकं शुंठीसमानगुणमेव । एतच्च त्र्यं मरिचपिप्पलीशुंठ्याख्यं त्रिकटुकसंज्ञं स्थौल्यादीन् जयेत् ॥ १७२ ॥

प०—आर्द्रकं शुंठीसमानगुणमेव । एतच्च त्र्यं मरिचपिप्पलीशुण्ठ्याख्यं त्रिकटुसंज्ञम् । स्थौल्यादीन् जयति ॥ १७२ ॥

हे०—आर्द्रकगुणानाह--तद्वन्नागरवत् । संग्रहे त्वनयो-र्विशेष उक्तः—"आर्द्रकाज्जायते शुण्ठी संस्कारेण लघी-यसी ॥ " इति । " आमं ग्राहितरं तक्रं नागरीकृतमा-र्द्रकम् । " इति मरिचादित्रयस्य संज्ञां कुर्वन् गुणाना[illegible] - एतन्मरिचपिप्पलीनागराख्यं त्रिकटुकसंज्ञं स्थौल्यादी-जयेत् , आर्द्रकस्य नागरादिभिन्नत्वान्मरिचादि[illegible] गृह्यते ॥ १७२ ॥

**चविका पिप्पलीमूलं मरिचाल्पांतरं गुणैः १७३**

स०—चविका पिप्पलीमूलं मरिचात् स्तोकविशेष-गुणं गुणैर्भवति । कटुरसविपाक कफघ्नं लघूष्णवीर्यं चेत्यर्थः । गुणशब्देन रसविपाकादयोऽपि तंत्रांत-राद्गृह्यन्ते न तु पारिभाषिका एव गुरुलघ्वादयो व्याप्ति न्यायात् ॥ १७३ ॥

प०—चविका पिप्पलीमूलं–मरिचात् स्तोकविशे-षगुणं गुणैर्भवति । कटुरसविपाकं, कफघ्नं, लघूष्ण-वीर्यं चेत्यर्थः । गुणशब्देन रसविपाकादयोऽपि तन्त्रान्तराद्गृह्यन्ते, नतु पारिभाषिका एव गुरु-लघ्वादयो व्याप्तिन्यायात् ॥ १७३ ॥

हे०—चव्यपिप्पलीमूलयोर्गुणमाह-चविकेति १७३

त्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा १७४

स०—चित्रको दहनसंज्ञकोऽग्निसमः पाकेऽत्यंतोष्ण र्थः । तथा शोफादीन् हंति ॥ १७४ ॥

प०-चित्रको दहनसंज्ञोऽग्निसमः पाकेऽत्यन्तो' इत्यर्थः । तथा शोफादीन् हन्ति ॥ १७४ ॥

हे०--चित्रकगुणानाह--पाके पाचनक्रियायामग्निसमो-वदामादीन्पचतीत्यर्थः ॥ १७४ ॥

कोलकमेतच्च मरिचेन विना स्मृतम् ।
मप्लीहोदरानाहशूलघ्न दीपनं परम् ॥ १७५ ॥

स०--एतच्च पूर्वोक्तं मरिचरहितं पिप्पलीपिप्पली-चव्याचित्रकशुंठ्याख्यं पंचकोलसंज्ञं स्मृतं वैद्यके । तथा गुल्मादिघ्नमतिदीपनं च ॥ १७५ ॥

प०—एतच्च पूर्वोक्तं मरिचरहितं पिप्पली-पलीमूलचव्यचित्रकशुण्ठ्याख्यं पंचकोलसंज्ञं स्मृतं के तन्त्रे । तथा गुल्मादिघ्नमतिदीपनं च ॥ १७५ ॥

हे०—पिप्पल्यादिपञ्चकस्य संज्ञां कुर्वन् गुणमाह--एतच्च कटुकं, चाविकात्रयं च मरिचरहितं पञ्चकोलकसंज्ञं, मादिघ्नं चात्यन्तदीपनं च ॥ १७५ ॥

ल्वकाश्मर्यतर्कारीपाटलाटुंटुकैर्महत् ।
त्कषायतिक्तोष्णं पंचमूलं कफानिलौ १७६

स०--बिल्वादीनामुपलक्षणे तृतीया । बिल्वादि-रुपलक्षितं महत्पंचमूलं कफानिलौ जयेत् । तच्च षायतिक्तरसमुष्णवीर्यं च । बिल्वं श्रीफलम् । श्मर्यो गंभारी । तर्कार्यरणिका । पाटला ताम्रपु-। टुंटुकः स्योनाकः । महद्गुरु बृहदनल्पमिति र्यायाः ॥ १७६ ॥

प०—बिल्वादीनामुपलक्षणे तृतीया । बिल्वा-भिरुपलक्षितं महत्पञ्चमूलं कफानिलौ जयेत् । च्च कषायतिक्तरसमुष्णवीर्यं च । बिल्वं श्रीफलम् । श्मर्य—कुम्भेरी । तर्कारी–अरणिकः । पाटला—म्रपुष्पा । टिंटुकं—स्योनाकः । महद्गुरु बृहदनल्प-ति पर्यायाः ॥ १७६ ॥

हे०—बिल्वादिपञ्चकस्य संज्ञां कुर्वन् गुणमाह—बिल्वा-पञ्चकं—महापञ्चमूलाख्यं, कषायादिगुणं च । बिल्वं—श्रीफलः, काश्मर्यः—श्रीपर्णी, तर्कारी—अग्निमन्थः, पाटला—वसन्तदूती, टिण्टुकः—श्योनाकः ॥ १७६ ॥

ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् १७७

स०—पंचमूलमिति वर्तते । ह्रस्वं कनीयो लध्वल्प-मिति पर्यायाः । बृहतीद्वयं क्षुद्रबृहती महाबृहती च । अंशुमतीद्वयं शालिपर्णी पृश्निपर्णी च । गोक्षुरको भक्षकंटकः । इदं ह्रस्वं पंचमूलं स्वादुपाकरसं नातिशीतं नात्युष्णं सर्वदोषजिच्च ॥ १७७ ॥

प०-पञ्चमूलमिति वर्तते । ह्रस्वं-कनीयो लघ्वल्प-मिति पर्यायाः । बृहतीद्वयं–क्षुद्रबृहती, महाबृहती । अंशुपर्णीद्वयं–शालिपर्णी, पृश्निपर्णी । गोक्षुरको—भक्षकंटकः । इदं–ह्रस्वं पञ्चमूलं–स्वादुपाकरसं, नातिशीतं नात्युष्णं, सर्वदोषजित् ॥ १७७ ॥

हे०—बृहत्यादिपञ्चकस्य संज्ञां कुर्वन् गुणमाह—बृह-त्यादिपञ्चकं ह्रस्वपञ्चमूलसंज्ञं, स्वादुपाकादिगुणं च । बृह-तीद्वयं-व्याघ्री, सिंही च । अंशुमतीद्वयं-शालिपर्णी-पृश्नि-पर्णी च । गोक्षुरकस्त्रिकण्टकः, नातिशब्दोऽत्र निषेधे, नत्वी-पदर्थे । शीतोष्णयोरेकत्वानवस्थानादनुष्णाशीतमि-त्यर्थः । सुश्रुतस्तु गोक्षुरस्थाने एरण्डं पठति ॥ १७७ ॥

बलापुनर्नवैरंडशूर्पपर्णीद्वयेन तु ।
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् १७८ ॥

स०—एतैः पंचभिर्मध्यमं पंचमूलम् । एतच्च कफ-वातघ्नं नातिपित्तकरं सरं च ॥ १७८ ॥

प०—पञ्चभिर्मध्यमं पञ्चमूलम् । एतच्च कफवा-तघ्नं, नातिपित्तकरं, सरं च ॥ १७८ ॥

हे०—बलादिपञ्चकस्य संज्ञां कुर्वन् गुणानाह—बला-दिपञ्चकं-मध्यमपञ्चमूलाख्यं, कफघ्नादिगुणं च बला-वा-ट्यालकः, पुनर्नवा-वर्षाभूः, एरण्डः पञ्चाङ्गुलः, शूर्पप-र्णीद्वयं–मुद्गपर्णी, माषपर्णी च ॥ १७८ ॥

अधुना चतुर्थं पंचमूलमाह–

अभीरुवीराजीवंतीजीवकर्षभकैः स्मृतम् ।
जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिलापहम्

स०—अभीरुवीरादिभिः पंचभिर्जीवनाख्यं पंचमूलं चक्षुष्यादिगुणयुक्तम् ॥ १७९ ॥

१ अत्र "टिंटुक" इति पाठान्तरम् ।

प०--अधुना चतुर्थं पञ्चमूलमाह--अभीरुवीरादिभिः पञ्चभिर्जीवनाख्यं पञ्चमूलं चक्षुष्यादिगुणयुक्तम् ॥ १७९ ॥

हे०--अभीर्वादिपञ्चकस्य संज्ञां कुर्वन् गुणमाह-अभीर्वादिपञ्चकं जीवनपञ्चमूलसंज्ञं, चक्षुष्यादिगुणं च । अभीरुः शतावरी, वीरा-काकोली, जीवन्ती, जीवकर्षभकाः स्वनामप्रसिद्धाः ॥ १७९ ॥

पंचमं पंचमूलमाह--

**तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभिः १८०**

स०--तृणसंज्ञं पंचमूलं दर्भकासेक्षुशरशालिभिः । तच्च पित्तजित् । संग्रहे त्वधिकमुक्तम् । यथा । सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः । विषदोषहरं शीतं सकषायं रसायनम् । रूप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम् । वयसः स्थापनं शीतं लेखनं वातपित्तजित् । ताम्रं सतिक्तमधुरं कषायं लेखनं लघु । कटुपाकरसं शीतं रोपणं कफपित्तजित्। कांस्यं कषायानुरसं विशदं लेखनं सरम्। दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम्। सतिक्तलवणं भेदि पांडुत्वकृक्रिमिवातनुत्। लेखनं पित्तलं किंचित् त्रपु सीसं च तद्गुणम् । चक्षुष्यं कृष्णलोहं तु कषायं स्वादु तिक्तकम् । लेखनं वातलं शीतं कृमिकुष्ठकफप्रणुत् । गात्रशैथिल्यपालित्यपांडुघ्नं शोषशोफजित् । तद्वत्तीक्ष्णं विशेषेण तद्विकाशि सुदुर्जरम् । पद्मरागमहानीलपुष्परागविदूरकाः । मुक्ताविद्रुमवज्रेंद्रवैदूर्यस्फटिकादिकम् । मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् । चक्षुष्यं धारयेत्पाणौ पाप्माऽलक्ष्मीविषापहम् । सक्षार उष्णवीर्यश्च काचो दृष्टिकृदंजनात् । शंखोदधिमलौ शीतौ कषायावतिलेखनौ । तुत्थकं कटुकं क्षारंकषायंविषदं लघु।लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम् । विशदो गैरिकः स्निग्धः कषायमधुरो हिमः । कफघ्नी तिक्तकटुका मनोह्वा लेखनी सरा । स्निग्धं कषायं कटुकं हरितालं विषप्रणुत् । कषायमधुरं शीतं लेखनं स्निग्धमंजनम्। रक्तपित्तविषच्छर्दिहिध्माघ्नं दृक्प्रसादनम् । स्रोतोंऽजनं वरं तत्र ततः सौवीरकांजनम् । कफघ्नं तिक्तकटुकं छेदि सोष्णं रसांजनम् । सर्वदोषप्रशमनं कासमोहक्षयापहम् । कफघ्नमुष्णकटुकं शिलाजतु रसायनम् । तिक्तं च छेदनं योगवाहित्वात्सर्वरोगजित् । कषाया मधुरा रूक्षा कफघ्नी वंशरोचना । तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा । कार[illegible] कुंचिकाऽजाजी कबरी धान्यतुंबरु । अन्नगंधहरं [illegible] दीपनं कफवातजित् । बाष्पिका कटुतीक्ष्णोष्णा कृमि-श्लेष्महरा परम् । तद्वच्च राजिका विघ्नसाधनी दीपनी परम् । शूलाटोपहरो रुच्यो दीप्यकः कोष्ठशूलजित् । अह्व्याः सर्षपाः स्निग्धा बाष्पिकावत्प्रकीर्तिताः। [illegible] ह्वाकुष्ठतगरसुरदारुहरेणवः । एलैलवालुसरलत्व[illegible] घ्रनखचोरकाः । लघूष्णाः कटुकाः पाके कफवा[illegible] निबर्हणाः । सैर्यकस्तिक्तमधुरः स्निग्धोष्णः कफवा[illegible] जित् । बस्तिमूत्रविबंधघ्नो वृष्यो गोक्षुरको हिमः । पाचनं कफपित्तघ्नं तिक्तं शीतं विषाह्वयम् । कफ[illegible] तिक्तकटुकं मुस्तं संग्राहि पाचनम् । तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरहृद्दाहकामलावातरक्तनुत् । तिक्तशीतौ ज्वरहरौ लघू भूनिंबपर्पटौ । निंबस्तिक्तो हिमः कुष्ठकृमिपित्तकफापहः । महानिंबः परं ग्राही कषायो रूक्षशीतलः । गुग्गुलुः पिच्छिलः स्पर्शे विशदोऽभ्यवहारतः । सस्वादुः सकटुस्तिक्तः सकषायो रसायनः । व्रण्यः स्वर्यः कटुः पा[illegible] रूक्षः सूक्ष्मोऽग्निदीपनः । क्लेदमेदोऽनिलश्लेष्मगंडमालापचीकृमीन् । पिटिकाग्रंथिशोफांश्च हंत्युष्णः सरा[illegible] लघुः । शंखपुष्पी सरा तिक्ता मेध्या कृमिविषापहा । कटुतिक्तोष्णमधुरा स्निग्धा स्वादुकफापहा । पित्ता[illegible] विषतृड्दाहकृमिघ्नं गुरु रूक्षणम् । सर्वं सतिक्तं म[illegible] चंदनं शिशिरं परम् । लघु रक्तं तथोशीरं वात[illegible] पाचनं च तत् । ज्वरातिसारवमथुरक्तपित्तकफापहम् । मधुकं रक्तपित्तघ्नं व्रणशोधनरोपणम् । गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत् । कटुतिक्ते निशे कुष्ठमेह-पित्तकफापहे । प्रलेपाज्जयतः कंडूं शोफं दुष्टव्रणं विषम् । प्रपौंडरीकं चक्षुष्यं शिशिरं व्रणरोपणम् । कषायतिक्तमधुरं रक्तपित्तप्रसादनम् । बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदम् । तत्र नागबला बल्या क्षतक्षीणहिता गुरुः । तांबूलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत् । भेदि संमोहकृत्पूगं कषायं स्वादु रोच-

नम्। जातिपत्री कटुफलं कंकोलकलवंगकम् । लघु तृष्णापहं हृद्यं वक्त्रदौर्गंध्यनाशनम्। सस्वादु तिक्तस्तृष्णाघ्नः र्पूरश्छेदनो हिमः । लताकस्तूरिका तद्वन्मुखशोष- ग परम् । कषायमधुरं शीतं पद्मं पित्तकफास्रजित् । द्वद्धकुलपुन्नागकुमुदोत्पलपाटलम् । सचंपकं ततो यूनं गुणैः कोरंटकिंशुकम् । मालतीमल्लिकापुष्पं तिक्तं यति मारुतम्। विषपित्तकफाघ्नागं सिंदुवारं च तद्गु- णम् । कफघ्नं कैतकं तिक्तं शैरीयं विषहारि च । तलं पुष्पमागस्त्यं कषायं कफपित्तजित् । वंधूकं ष्मलं ग्राहि तद्वदेव च यूथिका । कफघ्नमुष्णवीर्यं कुंकुमं व्रणशोधनम् । अवल्गुजैडगजजं बीजं तकफप्रणुत् । आस्या वर्णश्लेष्ममेदःसौकुमार्यकृ- न्यथा । अतोऽध्वाऽग्निबलायूंषि कुर्याचंक्रमणं सुखम्। रुतस्यानुलोम्यं च खुडस्तंभश्रमापहम् । अन्वर्थ- ं पादत्रं बलकृच्छुक्लं तथा । वर्ण्यं नेत्रहितं छत्रं तवर्षातपापहम् । प्रवातो रौक्ष्यवैवर्ण्यस्तंभकृद्दाहतृड्- मान् । श्रमाग्निमूर्छाश्च जयेदप्रवातमतोऽन्यथा । वायुरुष्णोऽभिष्यंदी त्वग्दोषाऽर्शोविषक्रिमीन् । न्निपातज्वरश्वासमामवायुं च कोपयेत्। याम्योऽसृग्वात- कृच्छीतः स्वादुः कषायकः । कषायः पश्चिमो रूक्षो र्नातिविदह्यते । वातकृत्कफपित्तघ्नो मूर्च्छादाहश्रमा- : । स्निग्धः शीतो लघुः सात्म्य उत्तरः षड्- ऽनिलः । ऐशानः कटुरूक्षोष्ण आग्नेयश्चैव मारुतः । लो विदाही नैर्ऋत्यो वायव्यस्तिक्त उच्यते । आतपो तृट्स्वेददाहमूर्छाविवर्णताः । कुर्यात्पित्तास्रवह्नींश्च ग त्वेतान्व्यपोहतीति ॥ १८० ॥

प०--पञ्चमं पञ्चमूलमाह--तृणसंज्ञं पञ्चमूलं दर्भे- सेक्षुशालिभिः । तच्च पित्तजित् । संग्रहेऽप्युक्तम् ।--" सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः । दोषहरं शीतं सकषायं रसायनम् ॥ रूप्यं ग्धं कषायाम्लं विपाके मधुरं सरम् । वयसः पनं शीतं लेखनं वातपित्तजित् ॥ ताम्रं सति- धुरं कषायं लेखनं लघु । कटुपाकरसं शीतं रोपणं फपित्तजित् ॥ कांस्यं कषायानुरसं विशदं लेखनं म् । दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम् ॥ तेक्तलवणं भेदि पाण्डुत्वकृक्रिमिवातनुत् । लेखनं पित्तलं किञ्चित् त्रपु सीसं च तद्गुणम् ॥ चक्षुष्यं कृष्णलोहं तु कषायं स्वादुतिक्तकम् । लेखनं वातलं शीतं क्रिमिपित्तकफप्रणुत् ॥ गात्रशैथिल्यपा- लित्यपाण्डुत्वं शोफशोफजित् । तद्वत्तीक्ष्णं विशेषेण तद्विकाशि मृदुजरम् ॥ पद्मरागमहानीलपुष्परागा- विदूरकाः । मुक्ताविद्रुमवज्राणि वैडूर्यस्फटिकादिकम्॥ मणिरत्नं सरं शीतं कषायं स्वादुलेखनम् । चक्षुष्यं धारयेत्पाणौ पाप्माऽलक्ष्मीविषापहम् ॥ सहाग्नि उष्णवीर्यश्च काचो दृष्टिकृत्... । ...- मलौ शीतौ कषायावतिलेखनौ ॥ तुत्थकं कटुकं क्षारं कषायं विशदं लघु । लेखनं भेदि चक्षुष्यं कण्डूक्रिमिविषापहम् ॥ विशदो गैरिकः स्निग्धः कषायमधुरो हिमः । कफघ्नी तिक्तकटुका मनोह्वा लेखनी सरा ॥ स्निग्धं कषायं कटुकं हरितालं विषप्रणुत् । कषायमधुरं शीतं लेखनं स्निग्धम... नम्॥रक्तपित्तविषच्छर्दिहिध्माघ्नं ... । स्रो- तोऽञ्जनं वरं तत्र ततः सौवीरका... ॥ कफघ्नं तिक्तकटुकं छेदि सोष्णं रसाञ्जनम् । ...- मनं कासमोहक्षयापहम् ॥ कफघ्नमुष्णकटुकं शिला- जतु रसायनम् । तिक्तं च छेदनं ... वि रोगजित् ॥ कषाया मधुरा रूक्षा कफघ्नी वंश- रोचना । तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा ॥ कारवी कुञ्चिकाजाजी कवरी धान्यतुम्बरु । अन्न- गंधहरं रुच्यं दीपनं कफवातजित् ॥ बाष्पिका कटु- तीक्ष्णोष्णा क्रिमिश्लेष्महरा परम् । तद्वच्च राजिका विघ्नसाधनी दीपनी परम् ॥ शूलादोपहरा रूक्षा दीप्यकः कोष्ठशूलजित् । अह्न्याः सर्षपाः स्निग्धा बाष्पिकावत्प्रकीर्तिताः । शताह्वकुष्ठनगरसुरदारु- हरेणवः । एलैलवालुसरलत्वग्व्याघ्रनखचोरकाः ॥ लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः । ... कस्तिक्तमधुरः स्निग्धोष्णकफवातजित् ॥ वस्तिमूत्र- विबन्धघ्नो वृष्यो गोक्षुरको हिमः । पाचनं कफपि- त्तघ्नं तिक्तं शीतं विषाह्वयम्॥कफघ्नं तिक्तकटुकं मुस्तं संग्राहि पाचनम् । तिक्ताऽमृता त्रिदोषघ्नी ग्राहि- ण्युष्णा रसायनी॥ दीपनी ज्वरकृद्दाहकामलावातर- क्तनुत् । तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ ॥ निम्बस्तिक्तो हिमः कुष्ठक्रिमिपित्तकफापहः । महा- निम्बः परं ग्राही कषायो रूक्षशीतलः॥ गुग्गुलुः पि- च्छलः स्पर्शे विशदोऽभ्यवहारतः। सस्वादुः सकटु- स्तिक्तः सकषायो रसायनम्॥वर्ण्यः स्वर्यः कटुः पाके

रूक्षः सूक्ष्मोऽग्निदीपनः। क्लेदमेदोऽनिलश्लेष्मगण्डू- मेहापचीकृमीन् ॥ पिडिकाग्रन्थिशोफांश्च हन्त्युष्णः स्रंसनो लघुः। शङ्खपुष्पी सरा तिक्ता मेध्या कृमिविषापहा॥ कुष्ठं तिक्तोष्णमगुरु स्निग्धं स्वादु कफापहम्। पित्तास्रविषतृड्दाहकृमिघ्नं गुरु रूक्षणम्॥ सर्वं सतिक्तमधुरं चन्दनं शिशिरं परम्। लघु रक्तं तथोशीरं वातलं पाचनं च तत् ॥ ज्वरातिसारवमथुरक्तपित्तकफापहम्। मधुरं रक्तपित्तघ्नं व्रणशोधनरोपणम्॥ गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत्। कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे ॥ प्रलेपाञ्जनतः कण्डूं शोफं दुष्टव्रणं विषम्। प्रपौण्डरीकं चक्षुष्यं शिशिरं व्रणरोपणम् ॥ कषायमधुरं तिक्तं रक्तपित्तप्रसाधनम् । बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदम्॥ तत्र नागादिका बल्या क्षतक्षीणहिता गुरुः। ताम्बूलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत् ॥ भेदि संमोहकृत् पूगं कषायं स्वादु रोचनम्। जातिपत्री कटुफलं कंकोलकलवङ्गकम् ॥ लघु तृष्णापहं हृद्यं वक्त्रदौर्गन्ध्यनाशनम्। सुस्वादुस्तिक्तस्तृष्णाघ्नः कर्पूरश्छेदनो हिमः॥ लताकस्तूरिका तद्वन्मुखशोषहरा परम्। कषायमधुरं शीतं पद्मं पित्तकफास्रजित् ॥ तद्वद्बकुलपुन्नागकुमुदोत्पलपाटलम्। सचम्पकं ततो न्यूनं गुणैः कोरण्टकिंशुकम्॥ मालतीमल्लिकापुष्पं तिक्तं जयति मारुतम्। विषपित्तकफास्रघ्नं सिन्दुवारं च तद्गुणम् ॥ कफघ्नं कैतकं तिक्तं शैरीषं विषहारि च।वातलं पुष्पमागस्त्यं कषायं कफपित्तजित्॥ बन्धूकं श्लेष्मलं ग्राहि तद्वदेव च यूथिका। कफघ्नमुष्णवीर्यं च कुङ्कुमं व्रणशोधनम्॥ अवल्गुजैडगलजं बीजं वातकफप्रणुत्। आस्था वर्णश्लेष्ममेदःसौकुमार्यकृदन्यथा॥ अन्योऽध्वाग्निबलायूंषि कुर्याच्चंक्रमणं सुखम्। मारुतस्यानुलोम्यं च वपुस्तम्भश्रमापहम् ॥ अन्वर्थसंज्ञं पादत्रं बलकृच्छुक्रलं तथा। वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहम्॥ प्रवातं रूक्षवैवर्ण्यं स्तम्भकृद् दाहतृट्श्रमान्। श्रमाग्निमूर्च्छाश्च जयेदप्रवातमतोऽन्यथा॥ प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषकृमीन्। स्निग्धवातज्वरश्वाससामवायुं च कोपयेत्॥ याम्योऽसृग्वातकफकृच्छीतः स्वादुः कषायकः। कषायः पश्चिमो रूक्षो लघुर्नातिविदह्यते॥ वातकृत् कफपित्तघ्नो मूर्छादाहश्रमापहः। स्निग्धः शीतो लघुः सात्म्य उत्तरः षड्रसोऽनिलः॥ ऐशानः कटुरूक्षोष्ण आग्नेयश्चैव मारुतः। अम्लो विदाही नैर्ऋत्यो वायव्यस्तिक्त उच्यते॥ आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णताः। कुर्यात् पित्तास्रवह्नींश्च छायात्वेतान्व्यपोहतीति॥ १८०॥

हे०—दर्भादिपञ्चकस्य संज्ञां कुर्वन् गुणमाह-दर्भादिपञ्चकं तृणपञ्चमूलसंज्ञं, पित्ताजिच्च। दर्भः-कुशः, काशेक्षुशालयः स्वनामप्रसिद्धाः। शरो-मुञ्जः,संग्रहे तु—"आजशृङ्गी हरिद्रा च विदारीशारिवामृताः। बलाख्यं कण्ट[illegible] ख्यं तु श्वदंष्ट्रा भीरुवीर्यकैः॥ सहिंस्राकरसर्दीकैः सर्वदोषहरे च ते। सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः॥ विषदोषहरं शीतं सकषायं रसायनम्। रूक्षं स्निग्धं कषाम्लं विपाके मधुरं सरम् ॥ वयसः स्थापनं शीतं लेखनं वातपित्तजित्। ताम्रं सतिक्तं मधुरं कषायं लेखनं लघु॥ कटुपाकरसं शीतं रोपणं कफपित्तजित्। कांस्यं कषायानुरसं विशदं लेखनं सरम्॥ दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम्। सतिक्तं लवणं भेदि पाण्डुत्वकृमिवातनुत्॥ लेखनं पित्तलं किंचित्त्रपु सिसं च तद्गुणम्। चक्षुष्यं कृष्णलोहं च कषायं स्वादुतिक्तकम्॥ लेखनं वातलं शीतं कृमिपित्तकफप्रणुत्। कृष्णलोहं-लोहम्। मुक्ताविद्रुमवज्रेन्द्रवडूर्यस्फटिकादिकम्। मणिरत्नं सरं शीतं कषायं स्वादु लेखनम्॥ चक्षुष्यं धारणात्तत्तु पाप्मालक्ष्मीविषापहम्। स क्षार उष्णवीर्यश्च काचो दृष्टिकृदंजनात्॥ शंखोदधिमलौ शीतौ कषायावतिलेखनौ। तुत्थकं कटु सक्षारं कषायं विशदं लघु॥ लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम्। विशदो गैरिकः स्निग्धः कषायो मधुरो हिमः॥ कफघ्नी कटुका तिक्ता मनोह्वा। लेखनी सरा। स्निग्धं कषायं कटुकं हरितालं विषप्रणुत्॥ कषायं मधुरं शीतं लेखनं स्निग्धमञ्जनम्। रक्तपित्तविषच्छर्दिहिध्माघ्नं दृक्प्रसादनम्॥ स्रोतोऽञ्जनं वरं तत्र ततः सौवीरकाञ्जनम्। कफघ्नं तिक्तकटुकं छेदि सोष्णरसाञ्जनम्॥सर्वदोषप्रशमनं कासमेहक्षयापहम्। कफघ्नमुष्णं कटुकं शिलाजतु रसायनम्॥ तिक्तं च छेदनं योगवाहित्वात्सर्वरोगजित्। कषायमधुरा रूक्षा कासघ्नी वंशरोचना॥ तुङ्गाक्षीरा क्षयश्वासकासघ्नी मधुरा हिमा। कारव्यौ कुञ्चिकाजाजी कवरीधान्यतुंबरू॥ अन्नगन्धहरं रुच्यं दीपनं कफवातनुत्। कारव्यौ शतपुष्पे द्वे कुञ्चिका कृष्णजीरकम्। वाष्पिका कटुतिक्तोष्णा कृमिश्लेष्महरा परम्। तद्वद्राजिका रुच्या दीप्यकः कोष्ठशूलजित्। अहृद्याः सर्षपाः

स्निग्धाः वाष्पिकावच्च कीर्तिताः । शताह्वकुष्ठतगर-सुरदारुहरेणवः ॥ एलैलवालसरलत्वग्व्याघ्रनखचोरकाः । लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः ॥ सैर्यकस्तिक्त-मधुरः स्निग्धोष्णकफवातजित् । वस्तिमूत्रविबन्धघ्नो वृष्यो गोक्षुरको हिमः ॥ पाचनं कफपित्तघ्नं तिक्तं शीतं विषाप-हम् । कफघ्नं तिक्तकटुकं मुस्तं संग्राहि पाचनम् ॥ तिक्ता-मृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपना ज्वरतृड्-दाहकामलावातरक्तनुत् ॥ तिक्तशीतौ ज्वरहरौ लघुभूनि-म्बपर्पटौ । निम्बस्तिक्तो हिमः कुष्ठकृमिपित्तकफापहः ॥ महानिम्बः परं ग्राही कषायो रूक्षशीतलः । गुग्गुलुः पिच्छिलः स्पर्शे विशदोऽभ्यवहारतः ॥ सस्वादुः सकटु-स्तिक्तः सकषायो रसायनम् । व्रण्यः स्वर्यः कटुः पाके रूक्षः सूक्ष्माग्निदीपनः ॥ क्लेदमेदोऽनिलश्लेष्मगण्डमेहा-पच्चिकृमीन्। पिटिकाग्रान्थिशोफांश्च हन्त्युष्णः स्रंसनो लघुः॥ शंखपुष्पीम् सरा तिक्ता मेध्या कृमिविषापहा । कटुतिक्तो-ष्णमगुरु स्निग्धं वातकफापहम् ॥ पित्तास्रविषतृड्दाहक्लम-घ्नं गुरु रूक्षणम् । सर्वं सतिक्तं मधुरं चन्दनं शिशिरं परम् । लघु रक्तं तथोशीरं वातलं पाचनं च तत् । ज्वरा-तीसारवमथुरक्तपित्तकफापहम् ॥ मधुकं रक्तपित्तघ्नं व्रण-शोधनरोपणम् । गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्ण-कृत्॥ कटुतिक्ते विषे कुष्ठमेहपित्तकफापहे । प्रलेपाज्जयतः कंडूंशोफं दुष्टव्रणं विषम् ॥ प्रपौंडरीकचक्षुष्यं शिशिरं व्रणरोपणम् । कषायमधुरं तिक्तं रक्तपित्तप्रसादनम् ॥ बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदम् । तत्र नागा-धिकं बल्या क्षतक्षीणहिता गुरुः ॥ ताम्बूलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत् ॥ भेदि संमोहकृत्पूगं कषायं स्वादु रोचनम् ॥ जातिपत्री कटुफलं कंकोलकलवंगकम् ॥ लघु तृष्णापहं हृद्यं वक्त्रदौर्गन्ध्यनाशनम् ॥ सस्वादुतिक्त-तृष्णाघ्नः कर्पूरश्छेदनो हिमः ॥ लताकस्तूरिका तद्वन्मुख-शोषहरा परम् । कषायमधुरं शीतं पद्मं पित्तकफास्र-जित् ॥ तद्वद्बकुलपुन्नागकुमुदोत्पलपाटलम् । सचम्पकं ततो न्यूनं गुणैः कोरण्टकिंशुकम् ॥ मालतीमल्लिका-पुष्पं तिक्तं जयति मारुतम् । विषपित्तकफानागं सिन्दुवारं च तद्गुणम् ॥ कफघ्नं कैतकं तिक्तं शैरीषं विषहारि च । वातलं पुष्पमागस्त्यं कषायं कफपित्तजित् ॥ बन्धूकं श्ले-ष्मलं ग्राहि तद्वदेव च यूथिका । कफघ्नमुष्णवीर्यं च कुं-कुमं व्रणशोधनम्॥अवल्गुजैडगजंजं बीजं वातकफप्रणुत्। आस्यवर्णः श्लेष्ममेदःसौकुमार्यकृदन्यथा ॥ अतोऽभ्यग्नि-बलायूंषि कुर्याच्चङ्क्रमणं सुखम् । मारुतस्यानुलोम्यं च क्षुडस्तम्भश्रमापहम् ॥ अन्वर्थसंज्ञं पादत्रं बलदृक् शुक्रकृ-त्तथा । वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहम् ॥ प्रवातं रौक्ष्यवैवर्ण्यस्तंभकृद्दाहतृड्भ्रमान् । श्रमाग्निमूर्छाश्च जयेद-प्रवातमतोऽन्यथा ॥ प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शो-विषकृमीन् । संनिपातज्वरश्वासमामवायुं च कोपयेत् ॥ याम्योऽस्रग्वातकफकृच्छीतस्वादुकषायकः । कषायः पश्चिमो रूक्षो लघुर्नाति विदह्यते ॥ वातकृत्कफपित्तघ्नो मूर्छादाहश्रमापहः । स्निग्धः शीतो लघुः सात्म्य उत्तरः षड्रसो मरुत् ॥ ऐशानः कटुरूक्षोष्ण आग्नेयश्चैव मारुतः । अम्लो विदाही नैर्ऋत्यो वायव्यास्तिक्त उच्यते ॥ आत-पो भ्रमतृट्स्वेददाहमूर्छाविवर्णताः । कुर्यात्पित्तास्रवह्नींश्च छाया त्वेतानपोहति ॥ तमः कषायकटुकं ज्योत्स्नामधुर-शीतला । रसादिभेदैरिति भेषजानां दिङ्मात्रमुक्तं न यतो-ऽस्ति किञ्चित्॥अनौषधं द्रव्यमिहावबोधो रूपस्य तेषां वन-गोचरेभ्यः । अथ मात्रादिलक्षणम्। शूकशिंबिजपक्वान्नमांस-शाकफलौषधैः।वर्गैरनेकदेशोऽयं भूयिष्ठमुपयोगिवान्॥निर्दि-ष्टा रसवीर्याद्यैर्यथास्वं कर्मसाधने । न शक्यं विस्तरेणापि वक्तुं सर्वं तु सर्वथा ॥ हिताहितत्वेऽप्येकान्तनियमो-ऽस्मादनिश्चितः । मात्रायोगक्रियादेशकालावस्थादिभेदतः॥ ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा।मात्रया सेवितं हन्ति मद्यं रोगांस्तदुद्भवान् ॥ निषेव्यमाणं तिलशो विषमप्यमृतायते । हीनातिमात्रमशनं मरुन्निचयकोप-नम् ॥ भजतो विषरूपत्वं तुल्यांशे मधुसर्पिषी । क्षारो-ऽम्लरससंयोगे मधुरो भवति क्षणात् ॥ उत्तुण्डुकया-स्तिण्डुकेन तिक्तता मधुरायते । हिंगुगैरिकसिन्धूत्थं गन्धवर्णरसाधिकम् ॥ पूगताम्बूलशंखेभ्यो वर्णगन्धरसो-द्भवः । कोद्रवो हन्त्यसृक्पित्तं करोत्येव विदाहिभिः ॥ कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह । गुडः कर्ताग्निसादस्य स हिनस्त्यभयादिभिः ॥ तृष्यत्यग्नौ समदनं सर्पिरप्युपदिश्यते । जीवनीयमपि क्षीरं विषले-शेन मृत्यवे ॥ तुल्ये अपि हतोऽन्योन्यं विषे स्थावर-जङ्गमे । सक्तवो वातला रूक्षाः पीतास्ते तर्पयन्ति तु ॥ विनापि चापयोगेन मणिमन्त्रादिकार्यकृत् । आर्द्रकाज्जा-यते शुण्ठी संस्कारेण लघीयसी ॥ लघुभ्योऽपि हि सक्तु-भ्यो गुरवः सिद्धपिण्डकाः । भृष्टः क्षुण्णोऽपि पृथुको रक्त-शालेर्लघोर्गुरुः ॥ शालिः पिष्टो गरीयस्त्वं गोधूमादपि गच्छति । लघुपित्तहरा लाजा व्रीहितो गुरुपित्तलात् ॥ संग्राहिणो लघोर्मुद्गात्कुल्माषो भेदनो गुरुः । आमं ग्राहि-तरं तक्रं नागरीकृतमार्द्रकम् ॥ गुडात्तोयाच्च सुतरां मूत्रलं गुरु पानकम्। गरीयो गुडदध्युक्तं रसाला चाति-शुक्रला ॥ दण्डाभिमथनाद्दध्नो गुरुणश्चातिशोफदात् ।

अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु ॥ सर्पिः स्निग्धतरं हन्ति नार्दितं नवनीतवत् । चक्षुष्योऽपि हि गोधूमस्तैलपक्वस्तु दृष्टिहा ॥ मूलकं दोषजननं सिद्धन्तु तददोषलम् । उष्णं विषीभवत्येव विषघ्नमपि माक्षिकम्॥ दुर्भाजनस्था द्राक्षाम्ला दोषला च प्रजायते । श्लक्ष्णशुष्कघनो लेपश्चन्दनस्यापि दाहकृत् ॥ त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथा गुरोः । मेध्यास्तिलः स्पर्शशीतो मेध्यं तैलं खलोऽहिमः॥तस्यैव श्लेष्मकारित्वं न तैलस्य खलस्य च । दध्नः श्वयथुकारित्वं न तक्रनवनीतयोः ॥ भूमिसात्म्यं दधिक्षीरकरीरं मरुवासिषु । क्षीरप्राच्येषु मत्स्यास्तु सैन्धवेष्वश्मकेषु तु ॥ तैलाम्लं कन्दमूलादि मलये कौंकणे पुनः । पेया मन्थ उदीच्येषु गोधूमोऽवन्तिभूमिषु । बाह्लीकबाह्लवाश्चीनाः शूलीका यवनाः शकाः । मांसगोधूममार्द्वीकशस्त्रवैश्वानरोचिताः ॥ देहसात्म्यं घृतं क्षीरं मद्यं मांसं तु कस्यचित् । पेया यूपो रसोऽन्यस्य गोधूमोऽन्यस्य शालयः ॥अहितैरपि तेषां च तैरेवोपहितं हितम्। अन्नपानौषधं दोषमात्राकालाद्यपेक्षया ॥ सात्म्यं ह्याशुबलं धत्ते नातिदोषं च बह्वपि । स्रंसनं सत्पयो गव्यं भवति ग्राहि कस्यचित् ॥ मन्दाग्निर्भवति प्रायः कफवातोत्तरे हिमे । विषघ्नेनापि पयसा देहेऽहेर्वर्द्धते विषम्॥ स्थूलस्थविरबालादौ वमनादिर्निषिध्यते । तक्रमामं कफं कोष्ठे हन्ति कंठे करोति तु ॥ वातहृत्त्वेऽपि मृद्वीका खर्जूरं कोष्ठवातकृत् । नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ॥ दृष्टे स्पर्शे हिमं द्रव्यं श्रोत्रस्योष्णं तु पूजितम् । पयः स्वादु सरं शीतं विपरीतं ततो दधि ॥ कालेन जायते तस्मात् क्षीरवच्च पुनर्घृतम् । पयो दधि च वातघ्नमजातं वातलं तु तत् ॥ तक्रं ग्राहि कषायाम्लमम्लमेव तु भेदनम् । धातकीगुडतोयानि कारणं मद्यशुक्रयोः ॥ शीते न तु तदाद्यन्ते स्निग्धाम्ललवणा हिताः । उदमन्थदिवास्वप्नौ ग्रीष्मादन्यत्र गर्हितौ ॥ समयोगोपघर्माद्या वातादिचय हेतवः।ऋतुष्वन्यो रसेष्वन्यो रूक्षस्नेहबलक्रमः॥ रसायना काकमाची सद्यः पर्युषिता विषम् । मूलकं दोषजिद्बालं विपरीतं तु कन्दवत्॥ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम्।षडहं षडहं युञ्ज्याद्वीक्ष्य दोषबलाबलम् ॥ छर्दिहृद्रोगगुल्मार्ते वमनं च चिकित्सिते । निषिद्धमपि निर्दिष्टं वस्तिरर्शसकुष्ठिनोः ॥ ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वे सुखसाध्यत्वहेतवः ॥आश्चोतनमभिष्यन्दे युञ्जीतोर्द्ध्वं दिनत्रयात्। अञ्जनं पक्वदोषस्य प्रतिश्याये च नावनम् ॥ नातिप्रवृद्धे तिमिरे शिरामोक्षो विधीयते । दुष्टास्र भवेऽपीष्टो नास्रपित्ते शिराव्यधः ॥ अपथ्यं पथ्यमप्य निशायां नेत्ररोगिणाम् । अहिताः सक्तवः शुष्का हिता तु प्रमेहिणः ॥ गुल्मिनः क्षीरदध्यादिहपुषादियुतं हितम् वातलं वातकोपेऽपि वर्षासु मधु शस्यते ॥ तदेव म मद्यस्य विषस्य तु विषान्तरम् । घृतमानूपदेशोत्थं हेम च बलाधिकम्॥ आलस्यगौरवं रूपं वातजेऽपि ज्वरे पुन स्वेदैर्याति शमं दाहः प्रायो लशुनपानजः ॥ दिवास्वप्न ज्जरां याति भुक्तमन्येद्युरद्य न । कोष्ठे रुद्धोऽग्निकृद्वायुर दशार्शोभिरग्निजित् ॥ दुष्पानं दुर्जरं सर्पिर्दीपनं च पये ऽन्यथा । सर्पादिशवकोपेभ्यो वृश्चिकानां समुद्भवः ॥ तैरेव पुनर्दष्टाः सद्यो जहति जीवितम् । स्वयमेव विषं त तान्पुनर्नातिबाधते ॥ सर्वाङ्गव्यापि तेषां च शुक्रवर्त्संश्रि विषम् । तन्मांसमुपयोगाय मांसवर्गे च पठ्यते ॥ छर्दि मक्षिकाविट् च मक्षिकैव तु वामयेत्।कफे लङ्घनसाध्येऽ कर्तरि ज्वरगुल्मयोः ॥ तुल्योऽपि देशकालादौ लङ्घनं समं मतम् । सर्वथा दोषजित्तक्रं ग्रहण्यां दोषकृद्व्रणे पीनसश्वासकासादौ सिद्धमेव प्रशस्यते । इत्येतेऽन्ये बहवः सूक्ष्मा दुर्लभहेतुकाः ॥ धर्मा विचित्रा भा किंचित्त्वेषां निदर्शनम् । दिशानया शेषमपि स्वय हेत बुद्धिमान् । न शास्त्रमात्रशरणो न वानालोचितागमः॥ इति ॥ १८० ॥

संप्रति सुखग्रहणधारणार्थं संग्रहश्लोकमाह—

**शूकशिंबीजपक्वान्नमांसशाकफलौषधैः ।**
**वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः[१] १८१**

स०--शूकधान्यादिभिर्वर्गितैर्वर्गीकृतैरयमन्नस्य ले एकदेशः स्तोकमात्रो निर्दिष्टः । किंभूतः । नित्यो योगो विद्यते यस्य स नित्योपयोगिकः । सदोपयो वानित्यर्थः । मात्रायोगक्रियादेशकालादिविशेषाच्चोत्त नामपि द्रव्याणामन्यथात्वं दृष्टम् । यथा । तिल निषेव्यमाणं विषमपि संजायतेऽमृतसमानम् । भल्ल तकः सह तिलैस्तत्कार्यपि कुष्ठमुपहंति । संस्कारे लघुभ्यः सक्तुभ्यः सिद्धपिंडिका गुरवः । मरुवासिष तिसात्म्यं दधिपीलुशमीकरीराणाम् । घृतदुग्धं हे मंदाग्निकफोत्तरं भवेत्प्रायः । दधिदुग्धं वातघ्नं तदजा वातकृद्भवति । रेचनमपि च क्षीरं गव्यं संग्राहि कस्

१ अत्र "नित्यौपयोगिकः"इति पाठान्तरम् ।

धद्भवति । तस्मादेवमादि स्वबुद्ध्यैवाऽभ्यूह्यम्। ाास्त्रकृता तु ग्रंथगौरवभयात्स्पष्टं कृत्वा तन्नोक्तम्। देशांतरेषु युक्त्यैव प्रतिपादितमिति ॥ १८१ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टां-हृदयटीकायां सर्वांगसुंदराख्यायामन्नस्वरूपादिविज्ञा-येोऽध्यायः षष्ठः ॥

प०--संप्रति सुखग्रहधारणार्थं संग्रहश्लोकमाह-शू-धान्यादिभिर्वर्गैर्वर्गीकृतैरयमन्नस्य लेशः एकदेशः ोकमात्रो निर्दिष्टः। किंभूतः नित्योपयोगो विद्यते स्य स नित्योपयोगिकः सदोपयोगवानित्यर्थः। ात्रायोगक्रियादेशकालादिविशेषाच्चोक्तानामपि ्याणामन्यथात्वं दृष्टम्। यथा--" तिलशो निषे-माणं विषमपि संजायतेऽमृतसमानम्। भल्ला-कः सह तिलैस्तत्कार्यपि कुष्ठमुपहन्ति ॥ संस्का-ा लघुभ्यः सक्तुभ्यः सिद्धपिण्डिका गुरवः। मरु-सिष्वतिसात्म्यं दधिपीलुशमीकरीराणाम्। घृत-ध्धं हेमन्ते मन्दाग्निकफोत्तरं भवेत्प्रायः। दधि-ध्धं वातघ्नं तद्जातं वातकृद्भवति। रेचनमपि च ारं गव्यं संग्राहि कस्यचिद्भवति। तस्मादेवमा-स्वबुद्ध्यैवाभ्यूह्यम्। शास्त्रकृता तु ग्रन्थगौरवभ-ात्तत् स्पष्टं कृत्वा नोक्तम्। प्रदेशान्तरेषु युक्त्यैव तेपादितमिति ॥ १८१ ॥

ति श्रीचन्द्रनन्दनविरचितायां पदार्थचंद्रिकाया-मष्टाङ्गहृदयटीकायां सूत्रस्थानेऽन्नस्वरूपादि-विज्ञानीयोऽध्यायः षष्ठः ॥ ६ ॥

हे०--अध्यायार्थमुपसंहरति। अन्नशब्देनाहारोपयोगीनि व्याणि तेषां लेश एकदेशः। उपयोगमर्हत्यौपयोगिक ं। नित्यं सर्वकालमौपयोगिको नित्यौपयोगिकः। य तु कादाचित्क उपयोगः स नोक्तो ग्रंथविस्तर-ात्। वर्गितैर्वर्गीकृतैः शूकजादिभिः प्रकरणभेदै-यर्थः ॥ १८१ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने अन्नज्ञानप्रकरणं सामस्त्येन निरूपितम् ॥ ६ ॥

# सप्तमोऽध्यायः ७.

स०--अन्नपानस्वरूपं शरीरसंधारणार्थं प्रागुक्तम्। पथ्यमपि चान्नपानं विषाद्युपहतं रोगाय मृत्यवे वा संपद्यते। अतस्तद्रक्षणाध्यायोऽयमारभ्यते।

**अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः ॥ १ ॥**

स०--अन्नस्य रक्षाऽन्नरक्षा सोपदेश्या यत्राध्याये सोऽप्युपचारादन्नरक्षेत्युच्यते। यथा। शिशुपालवधः काव्यमिति। शेषं व्याख्यानमत्र पूर्ववत्कार्यम् ॥ १ ॥

प०--अन्नपानस्वरूपं शरीरसंधारणार्थं प्रागुक्तम्। पथ्यमपि चान्नपानं विषाद्युपहतं रोगाय मृत्यवे वा संपद्यते। अतस्तद्रक्षणाध्यायोऽयमारभ्यते। अन्नस्य रक्षाअन्नरक्षा सोपदेश्या यत्राध्याये सोऽप्युप-चारादन्नरक्षः प्रोच्यते। यथा शिशुपालवधः काव्य-मिति। शेषं व्याख्यानमत्र पूर्ववत् कार्यम् ॥ १ ॥

हे०--अथेत्यन्नरक्षाध्यायं व्याख्यातुं प्रतिजानीते--यतः पूर्वयोरध्याययोराहार उक्तः। स चारक्षितो रोगहेतुरिति रक्षा वक्तव्या। सा चास्मिन्नध्याये अत एवायमन्नरक्षाख्यः। रक्षा च विषविरोध्यविधिसेवनशयनसंभोगेभ्यः। ते च राज्ञां प्रायेण संभवन्ति तेभ्यश्च रक्षा वैद्याधीना ॥ १ ॥

**राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत्।**
**सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ॥ २ ॥**

स०--राजा नृपः प्राणाचार्यं वैद्यं राजगृहासन्ने निवेशयेदावासयेत्। एवं सति यो गुणः स्यात्तमाह। सर्वदेत्यादि। सर्वदा सर्वकालं रात्रौ दिवा वा नृपभ-वनसमीपस्थितः स वैद्यः सर्वत्रान्नपानशयनमाल्यादौ प्रतिजागृविर्दत्तावधानो भवति।

प०--राजा नृपः प्राणाचार्यं वैद्यं राजगृहा-सन्ने निवेशयेदावेशयेत्। एवं सति ये गुणाः

---

१ " स्कंधावारे च महति राजगेहादनन्तरम्। भवेत्स-न्निहितो वैद्यः सर्वोपकरणान्वितः ॥ तत्रस्थमेनं ध्वजवद्यशः-ख्यातिसमुच्छ्रितम्। उपसर्पन्त्यमोहेन विषशल्यामयार्दिताः ॥ स्वतन्त्रकुशलोऽन्येषु शास्त्रार्थेष्वबहिष्कृतः ॥ वैद्यो ध्वज इवा-भाति नृपतद्विधपूजितः "। इति सुश्रुतः।

म्युक्तानाह—सर्वदेत्यादि । सर्वदा सर्वकालं रात्रौ दिवा नृपभवनसमीपे स्थितः स वैद्यः सर्वत्रान्नपानशयनमाल्यादौ प्रतिजागृविर्दत्तावधानो भवति २॥

हे०—तस्माद्राज्ञो वैद्यसंनिधिं विधत्ते—प्राणाचार्यं वैद्यम् एवं सन्निधौ सत्वा स वैद्यः सर्वदा सर्वकालं सर्वेषु कार्येषु, प्रतिजागृविः—प्रतिपदार्थं जागरूकः सम्यगवहितो भवति ॥ २ ॥

ननु किमेवं क्रियत इत्याह—

**अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः ।**
**योगक्षेमौ तदायत्तौ धर्माद्या यन्निबंधनाः॥३॥**

स०—महीपतेः संबंध्यन्नपानं विषाद्विषसंस्पर्शाद्विशेषणातिशयेन रक्षेत् । अन्नपानमित्युपलक्षणम् । शयनवस्त्रगंधरत्नमाल्यादीनामपि परिरक्ष्यत्वात् । किमिति नृपान्नपानादि विशेषेण रक्षेदित्याह । योगेत्यादि । योगोऽन्नवस्त्रादिभिः संबंधः । क्षेमस्तेषामन्नादीनां चौराद्युपद्रवरक्षणम् । द्वावप्येतौ तदायत्तौ नृपायत्तौ स्याताम् । क्षेमशब्दोऽर्धर्चादिः । धर्माद्या इति । धर्मार्थकाममोक्षा यन्निबंधना योगक्षेमनिबंधनाः ॥ ३ ॥

प०—ननुकिमेवं क्रियत इत्याह—महीपतेः सम्बन्ध्यन्नपानं विषात् विषसंस्पर्शात् विशेषेणातिशयेन रक्षेत् । अन्नपानमित्युपलक्षणं, शयनवस्त्रगन्धरत्नमाल्यादीनामपि परिरक्ष्यत्वात् । किमिति नृपान्नपानादिविशेषेण रक्षेदित्याह—योगेत्यादि । योगोऽन्नवस्त्रादिभिः सम्बन्धः । क्षेमस्तेषामन्नादीनां चौराद्युपद्रवरक्षणाद्द्वावप्येतौ तदायत्तौ नृपायत्तौ स्याताम् । क्षेमशब्दोऽर्धर्चादिः । धर्माद्या इति । धर्मार्थकाममोक्षा यन्निबन्धनाः ॥ ३ ॥

हे०—अथ विषरक्षा, वैद्यश्च विषादन्नपानरक्षां विधत्ते—स इत्यनुवर्तते । विशेषेण अन्यपदार्थेभ्यः अन्यनररक्षातो विशेषतो राज्ञः, कुतः यतः योगक्षेमौ तदायत्तौ, तस्य राज्ञोऽधीनौ । अलब्धलाभो योगः, लब्धस्य प्रतिपालनं क्षेमः । कीदृशौ तौ यन्निबन्धना धर्माद्याः धर्मार्थकाममोक्षाणां यस्माद्योगक्षेमौ साधनं, तयोश्च राजा ततःसोऽतिशयेन विषादिभ्यो रक्षणीयः ॥ ३ ॥

१ "एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते । तत्रैकः कालसंज्ञस्तु शेषास्त्वागन्तवः स्मृताः ॥ दोषागन्तुजमृत्युभ्यो रसतन्त्रविशारदौ । रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ" इति सुश्रुतः ।

संप्रति विषदुष्टस्य भक्तस्य लक्षणमाह—

**ओदनो विषवान् सांद्रो यात्यविस्राव्यतां**
**चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः ॥**
**मयूरकंठतुल्योष्मा मोहमूर्छाप्रसेककृत् ।**
**हीयते वर्णगंधाद्यैः क्लिद्यते चंद्रकाचितः ॥**

स०—विषवानोदनः सांद्रो विलेप्याकारः विस्रावयितुं शक्यते यतः पृथक्सिक्थो न भवे तथा चिरेण पच्यते बहुना कालेन पाकं याति च पक्वो निष्पन्नपाकः सद्य एव पर्युषितोपमो दि तरितोऽतिक्रांताहोरात्रः । मयूरकंठेन तुल्य बाष्पराजिर्नानावर्णः यस्य स तथोक्तः । पर्युषित इति । यथा पर्युषितं भक्तं निरूष्म स्तब्धं च भव तथा विषदूषितं सद्योऽवतारितमपि तादृशमेव भव स चोपयुक्तो मोहमूर्छाप्रसेकान्करोति । मोहो वै त्यम् । मूर्छा संज्ञाभ्रंशः । प्रसेकः श्लेष्मनिष्ठीवन हीयते वर्णगंधाद्यैरित्यादिशब्देन रसस्पर्शादिपरिग्र प्रक्लिन्नो भवति । सलिलमध्यक्षिप्ततैलबिंदुस श्चंद्रकैश्च पूर्णो भवति । इति चक्षुरादि परीक्षा ॥ ४ ॥

प०—संप्रति विषदुष्टस्य भक्तस्य लक्षणम विषवानोदनः सान्द्रो विलेप्याकारः नच विस्र यितुं शक्यते । यतःपृथक् सिक्थो न भवेत् । चिरेण पच्यते, बहुना कालेन पाकं याति । पक्वो निष्पन्नपाकः सद्य एव पर्युषितोपमो सान्तरितोऽतिक्रान्ताहोरात्रः । मयूरकण्ठेन ऊष्माबाष्पराजिर्नानावर्णा यस्य तथोक्तः । षितोपम इति । यथा पर्युषितं भक्तं—निरू स्तब्धं च भवति तथा—विषदूषितं सद्योऽवता तमपि तादृशमेव भवति । स चोपयुक्तो मो मूर्छाप्रसेकान् करोति । मोहो—वैचित्त्यम् मूर्छा—संजातभ्रंशः । प्रसेकः—श्लेष्मनिष्ठीवन हीयते गन्धवर्णाद्यैरिति । आदिशब्देन रसस्प दिपरिग्रहः । प्रक्लिन्नो भवति । सलिलमध्यक्षि

तैलबिन्दुसदृशैश्चन्द्रकैश्च पूर्णो भवति। इति चक्षुरादिभिः परीक्षा ॥ ४ ॥

हे०--अथ सविषान्नपानलक्षणं तत्र ओदनं लक्षयति--सान्द्र इवाविशाव्यतां याति सद्रवोऽप्यद्रव इव स्रावयितुं न शक्यते, पक्वः पर्युषितोपमो भवेत् । सद्यस्कोऽप्यहोरात्रोषितवद्विरूप्मा स्तब्धश्च स्यात् । मयूरकण्ठतुल्योष्मा--नीलबाष्पः, मोहादिकर्तृत्वमूष्मसंबन्धात्, साक्षात्संबन्धदोषाणां वक्ष्यमाणत्वात्, मोहो--विचाराशक्तिः, मूर्छान्तर्भूतस्यापि तस्य मूर्च्छावसानेऽप्यनुवृत्त्यर्थं पृथग्ग्रहणम् । आद्यशब्दाद्रसादीनां ग्रहणं क्रियते क्लिन्नो निष्पद्यते, सम्यक् श्रपितोऽपि क्लेदं धत्ते, चन्द्रिकान्वितः जलक्षिप्ततैलबिन्दुसदृशः ॥ ४ ॥

व्यंजनानां परीक्षामाह ।

**व्यंजनान्याशु शुष्यंति ध्यामक्राथानि तत्र च ।**
**हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥**
**फेनोर्ध्वराजीसीमंततंतुबुद्बुदसंभवः ।**
**विच्छिन्नविरसा रागाः खांडवाः शाकमामिषम् ॥**

स०--व्यंजनानि सूपादीनि दधितक्रदाडिमादिसंस्कृतान्याशु शीघ्रं शुष्काणि भवंति । क्राथश्च तेषां ध्यामो मलिनो भवति । तत्र चेति । व्यंजनवस्तुक्राथेषु हीनाधिका शिरोविरहादिलक्षणविकारोपेता चात्मीया छाया प्रतिबिंबं दृश्यते । नैव वा कीदृश्यपि छाया न दृश्यते । न चेदमरिष्टं सनिमित्तत्वात् । फेनादीनां संभवः । तत्रेति प्रकृतम् । व्यंजनोपलक्षितेषु सर्वद्रवेष्वेव । विशेषेण पुनर्लवणोल्बणद्रवे फेनमाला । ऊर्ध्वराजीसंभवं तु रसकादिषु स्वयं दर्शयिष्यति । विच्छिन्नविरसा रागा इति । विच्छिन्नो रक्तवर्णः क्वचित्क्वचित्प्रदेशे द्राक्षापानादौ रागो भवति । विरसं विगतरसं तद्भवति । यथा राग एवं खांडवोऽपि । शाकमामिषं च छिन्नं स्थाने स्थाने त्रुटयद्विरसं च ५॥

प०--व्यञ्जनानां परीक्षामाह--व्यञ्जनानि सूपादीनि दधितक्रदाडिमादिसंस्कृतान्याशु शीघ्रं शुष्काणि भवन्ति । क्राथश्च तेषां ध्यामो मलिनो भवति । तत्र चेति । व्यञ्जनवस्तुक्राथेषु हीनाधिका, शिरोविरहादिलक्षणविकारोपेता चात्मीया छाया प्रतिबिंबं दृश्यते । नैव वा कीदृश्यपि छाया न दृश्यते । नचेदमरिष्टं सनिमित्तत्वात्फेनादीनां संभवः । तत्रेति प्रकृतम् । व्यञ्जनोपलक्षितेषु सर्वद्रव्येष्वेव । विशेषेण पुनर्लवणोल्वणद्रव्य एव फेनमाला । ऊर्ध्वराजीसंभवं तु रसकादिषु स्वयं दर्शयिष्यति, विच्छिन्नविरसा रागा इति । विच्छिन्नो रक्तवर्णः क्वचित्क्वचित्प्रदेशे द्राक्षापानादौ रागो भवति । विरसं विगतरसं तद्भवति । यथा राग एवं खाण्डवोऽपि शाकमामिषं च विच्छिन्नं स्थाने स्थाने त्रुटयद्विरसं च ॥ ५ ॥

हे०--व्यञ्जनानि लक्षयति--व्यञ्जनानि सूपादीन्याशु शुष्यन्ति, ध्यामक्राथानि मलिनद्रव्याणि भवन्ति । तत्र तेषु क्राथवत्सु व्यञ्जनेषु हीनादिका छाया प्रतिबिम्बं दृश्यते, नैव वा दृश्यते, हीना बिम्बप्रमाणान्यूना, अतिरिक्ता अधिका, विकृता तुल्यप्रमाणाप्यन्यथाभासा । फेनादीनां सम्भवः । ऊर्ध्वराज्य उपरिभागे रेखाः, सीमन्तो विच्छेदः, तन्तुः पिच्छिलता । अत्र व्यञ्जनविशेषाः तत्र रागादीन् लक्षयति ॥ ५ ॥

यत्र द्रवे यादृशी राजी संभवति तां विशेषतो दर्शयन्नाह--

**नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते ।**
**श्यावा पीताऽसिता तक्रे घृते पानीयसंनिभा ॥**
**काली मद्यांभसोः क्षौद्रे हरितैलेऽरुणोपमा ।**
**पाकः फलानामामानां पक्वानां परिकोथनम् ॥**
**द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ।**
**मृदूनां कठिनानां च भवेत्स्पर्शविपर्ययः ॥**
**माल्यस्य स्फुटिताग्रत्वं म्लानिर्गंधांतरोद्भवः ।**
**ध्याममंडलता वस्त्रे शदनं तंतुपक्ष्मणाम् ॥**
**धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ।**
**स्नेहस्पर्शप्रभाहानिः सप्रभत्वं तु मृन्मये ॥ ६ ॥**

स०-मांसरसे विषयुक्ते नीलानीलवर्तिकाकारा राजी दृश्यत इति प्रकृतेन संबंधः । एवं चाग्रेऽपि राजी दृश्यत इति योज्यम् । क्षीरमध्ये ताम्रा ताम्रवर्णा । दधनि दधि श्यावा दृश्यते लक्ष्यते चक्षुषा । राजीति सर्वत्र प्रकृतम् । पीताऽसिता तक्र इत्यादि । तक्रस्य मध्ये पीताऽसिता आनीलपीता राजी दृश्यत इति प्रकृतम्। घृते सलिल-

भा । काली कृष्णा मद्यस्य तोयस्य च विषदूषि-
य । क्षौद्रे हरिदिति । माक्षिकमध्ये हरिता राजी
यते । तैलेऽरुणोपमेषल्लोहिताकारा । उदाहरणमात्रं
तत् । मस्तुनः कपोताभा । धान्याम्लस्य कृष्णा । द्रवौ-
स्य कपिला । तथा । आमानां फलानां पाकः। पक्वानां
कोथनं शाटितत्वं भवति । द्रव्याणामार्द्रशुष्काणां
तां म्लानिविवर्णते । यथासंख्यं योज्यम् । आर्द्राणां
ानिः । शुष्काणां वैवर्ण्यं श्यावत्वादिलक्षणम् ।
नां कठिनत्वं कठिनानां मृदुत्वम् । अयं स्पर्शवि-
यः । माल्यस्य पुष्पादेः स्फुटितं विशीर्णमग्रं प्रान्तो
ा तत्स्फुटिताग्रं तद्भावस्तत्त्वम् । म्लान्युद्भवो म्ला-
ा । गंधान्तरोद्भवः स्वगंधनाशः अन्यस्य संभवश्च ।
ागंधस्य च तैले संभवः । ध्याममंडलता वस्त्रे । वस्त्र
स्तरणप्रावरणादिरूपे ध्यामानि मलिनानि मंडलानि
ा वस्त्रस्य तद्भावस्तत्त्वम् । शदनं श्यातः पातः ।
ाम् । तंतूनां रोम्णां पक्ष्मणां च पार्श्ववर्तिनां वस्त्र-
धिनामेव । धातुर्लोहादिः । मौक्तिकं मुक्ता । काष्ठं
ः । अश्मा पाषाणः । रत्नानि वज्रमरकतादीनि ।
देशब्देन शंखशुक्त्यादिपरिग्रहः । तेषु धात्वादिषु
ाक्तता पकोपदिग्धता। स्नेहहानिस्तेषामेव धात्वादीनां
ाधत्वव्यपगम इत्यर्थः । एवं स्पर्शप्रभाहानी । मृ-
े तु भांडे विषदूषिते निष्प्रभे सप्रभत्वम् ॥ ६ ॥

प०—यत्र द्रवे यादृशी राजी संभवति तां विशे-
ा दर्शयन्नाह—मांसरसे विषदूषिते नीलवर्णाकारा
ी दृश्यत इति प्रकृतेन सम्बन्धः । एवं चाग्रेऽपि
ी दृश्यत इति योज्यं भवति । क्षीरमध्ये ताम्रा ।
नि श्यावा दृश्यते, लक्ष्यते चक्षुषा श्यावा ।
ीति सर्वत्र प्रकृतम् । पीतासिता तक्र इत्यादि ।
ास्य मध्ये आपिताऽसिता आनीलपीता । राजी-
यत इति प्रकृतम् । घृते सलिलनिभा । काली
णा मद्यस्य तोयस्य च दूषितस्य च । क्षौद्रे हरि-
ते । माक्षिकमध्ये हरिता राजी दृश्यते । तैले-
णोपमा ईषल्लोहिताकारा । तथा आमानां फलानां
कः पक्वानां परिकोथनं शाटितत्वं भवति ।
ागन्धस्य च तैले संभवः । उदाहरणमात्रमेतत् ।
ुनः कपोताभा । धान्याम्लस्य कृष्णा द्रवौष-
धस्य कपिला । द्रव्याणामार्द्रशुष्काणां स्यातां म्ला-
निविवर्णते । यथासंख्यं योज्यम् । आर्द्राणां म्लानिः।
शुष्काणां वैवर्ण्यं श्यावत्वादिलक्षणम् । मृदूनां
कठिनत्वं, कठिनानां मृदुत्वम् । अयं स्पर्शविपर्ययः।
माल्यानां पुष्पाणां स्फुटितं विशीर्णमग्रं प्रान्तो यस्य
तत् स्फुटिताग्रं तस्य भावस्तत्त्वम् । म्लान्युद्भवो
म्लानता । शदनं श्यातः पातः। केशांतन्तुपक्ष्मणां च
रोम्णां वस्त्रसम्बन्धिनामेव । गन्धान्तरोद्भवः
स्वगन्धनाशः अन्यसम्भवश्च । ध्याममण्ड-
लता वस्त्रे आस्तरणप्रावरणादिरूपे ध्यामा-
नि शामलानि मण्डलानि यस्य वस्त्रस्य तद्भावस्त-
थोक्तम् । धातुः सुवर्णादिः । मौक्तिकं मुक्ता । काष्ठं
दारु । अश्मा पाषाणः । रत्नानि वज्रमरकतादीनि ।
आदिशब्देन लोहादि । तेषु धात्वादिषु कमलोपदि-
ग्धता, स्नेहहानिः । तेषामेव धात्वादीनां स्निग्धत्व-
व्यपगम इत्यर्थः । एवं स्पर्शप्रभाहान्यौ । मृन्मये
भाण्डे विषदूषिते निष्प्रभे सप्रभत्वम् ॥ ६ ॥

हे०—मांसादीन् राजीविशेषेण लक्षयति—रसे मांसरसे
नीलवर्णा राजी, क्षीरे ताम्रा, दध्नि श्यावा कपिशा, तक्रे
पीताऽसिता, गौरे श्यामा, घृते पानीयसंनिभा उदकवर्णा,
मद्ये, अम्भसि च काली कृष्णा, क्षौद्रे हरित् मरकतवर्णा,
तैले अरुणोपमा, फलानि लक्षयति—अपक्वानां फलानां
पाकः, पक्वानां परिकोथनं पूतीभावः । आर्द्रशुष्काणि च
लक्षयति—आर्द्राणां द्रव्याणां किंचिच्छुष्कत्वं, शुष्कानां
विवर्णता विकृतवर्णत्वं, मृदुकाठिनानि लक्षयति—स्पर्शावि-
पर्ययः-मृदूनां काठिन्यं कठिनानां मृदुत्वम्। माल्यं लक्षयति-
माल्यस्य पुष्पस्य अग्रभागेषु शीर्णत्वं, वस्त्रं लक्षयति-
ध्याममण्डलता मलिनबिम्बोत्पत्तिः, तन्तूनां पक्ष्माणः
सूक्ष्मावयवाः तेषां शदनं शातः । धात्वादीन् लक्षयति॰
धातवः—सुवर्णादयः, रत्नं—माणिक्यादि आदिशब्देन
शंखशुक्त्यादयः । मलक्तता—मलिनत्वं, स्नेहादीनां च
हानिः शीतादीनां स्पर्शस्य, तेजस्विनां प्रभायाः । मृन्मयं
लक्षयति सप्रभत्वं निष्प्रभस्यापि प्रभोत्पत्तिः ॥ ६ ॥

इदानीं यो विषं ददाति तस्य लक्षणमाह—

**विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः ।**
**स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृंभते ॥ ७ ॥**

१ " इङ्गितज्ञो मनुष्याणां वाक्चेष्टमुखवैकृतैः । विद्या-
द्विषस्य दातारमेभिर्लिंगैश्च बुद्धिमान् ॥ न ददात्युत्तरं पृष्टो
विवक्षन्मोहमेति च । अपार्थं बहु संकीर्णं भाषते चापि

स०—विषं ददातीति विषदो नरः श्यावं शुष्कमास्यं मुखं यस्याऽसौ श्यावशुष्कास्यः श्यामशुष्कवदनः । किं करोति । विलक्षो वीक्षते दिशः । दिश इति समंतादित्यर्थः । विलक्ष इति लज्जावान् । वीक्षतेऽवलोकयति । किंच सदोषशंकया स्वेदवान्वेपथुमान् । त्रस्तः शरीरेण जातकंपत्वात् । भीतश्चित्तेन सोद्वेगतयोपलक्ष्यमाणत्वात् । स्तंभकुड्यादिभिरात्मानमंतर्धापयितुमिच्छन्नितस्ततो गच्छंश्च स्खलितगतिर्भवति तत आह । स्खलति । पुनःपुनश्च जृंभां करोति तेनाह । जृंभते । उपलक्षणं चेदं तत्तत्कालभाविनीनां क्रियाणाम् । तद्यथा अस्थानहासी । पृष्टोऽसंबद्धमुत्तरं ददाति नैव वा वदति । विवक्षुर्मुखत्यंगुलीः स्फोटयति । शिरः कंडूयते । ओष्ठौ लेढि । भुवं विलिखति । क्रियासु त्वरते । विपरीतमाचरति । स्वभूमौ च नावतिष्ठते ॥ ७ ॥

प०—इदानीं यो विषं ददाति तस्य लक्षणमाह—विषं ददातीति विषदः । श्यावं शुष्कमास्यं मुखं यस्यासौ श्यावशुष्कास्यः श्यावशुष्कवदनः। किं करोति विलक्षो वीक्षते दिशः । दिश इति समन्तादित्यर्थः । विलक्ष इति लज्जावान् वीक्षते अवलोकयति । किंच स्वदोषशङ्कया स्वेदवान् वेपथुमान् । त्रस्तः शरीरेण जातकम्पत्वात् । भीतश्चित्तेन सोद्वेगतयोपलक्ष्यमाणत्वात् । स्तम्भकुड्यादिभिरात्मानमन्तर्धापितुमिच्छन् । इतस्ततो गच्छन् स्खलितगतिर्भवति तत आह—स्खलति । पुनः पुनश्च जृम्भां करोति तेनाह—जृम्भते । उपलक्षणं चेदं तत्तत्कालभाविनीनां क्रियाणाम् । तद्यथा——अस्थानहासी—पृष्टोऽसम्बद्धमुत्तरं ददाति, नैव वा ददाति । विवक्षुर्मुखत्यङ्गुलीः स्फोटयति । शिरः कण्डूयते । ओष्ठौ लेढि । भुवं विलिखति । क्रियासु त्वरते । विपरीतमाचरति। स्वभूमौ च नावतिष्ठते ॥ ७ ॥

हे०—विषप्रयोक्तारं लक्षयति—विलक्षश्चलदृष्टिः दिशो वीक्षते इतस्ततोऽवलोकयति, त्रस्त उद्विग्नः, भीतश्चकितः, विषदलक्षणं तत्प्रयुक्तविषविशेषप्रश्नार्थम् ॥ ७ ॥

इदानीं सविषस्याग्निप्रक्षेपणादिकमुपदिशन्नाह—

**प्राप्याग्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति ।**
**शिखिकंठाभधूमार्चिरनर्चिर्वोग्रगंधवान् ॥ ८ ॥**

स०—सविषमन्नं प्राप्याऽग्निः स्फुटत्यति चटचटायतेऽतिशयेनेत्यर्थः । एकावर्त इति । एक एवावर्तो यस्य । संहृतसर्वज्वालत्वादसावेकावर्तः । शिखिकंठाभधूमार्चिः शिखी मयूरस्तस्य कंठ इंद्रायुधवदनेकवर्णस्तस्येवाभा ययोर्धूमार्चिषोस्ते शिखिकंठाभे तादृशे धूमार्चिषी यस्याग्नेरसौ शिखिकंठाभधूमार्चिरिंद्रायुधवदनेकवर्णधूमज्वाल इति यावत् । अनर्चिर्वाऽज्वाल इति वा । उग्रगंधवानिति । कुणपगंधवान् । निदर्शनं चेदम् । धूमोऽप्यस्य प्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलता अभ्युत्पादयति ॥ ८ ॥

प०—इदानीं सविषस्याग्निप्रक्षेपणादिकमुपदिशन्नाह—सविषमन्नं प्राप्याग्निः स्फुटति—चटचटायते अतिशयेनेत्यर्थः । एकावर्त इति । एक एवावर्तो यस्य संहृतसर्वज्वालत्वादसौ एकावर्तः । शिखिकण्ठाभधूमार्चिः । शिखी मयूरः तस्य कण्ठ इन्द्रायुधवदनेकवर्णधूमज्वाल इति यावत् । अनर्चिर्वा अज्वाल इति वा । उग्रगन्धवानिति कुणपगन्धवान्। निदर्शनं चेदम् । धूमोऽप्यस्य प्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलता अभ्युत्पादयति ॥ ८ ॥

हे०—अथाग्निक्षेपादिना सविषान्नलक्षणं, तत्राग्निप्रक्षेपेण एकावर्तः वामत एव दक्षिणत एव वा चलितज्वालः स्फुटत्यतिभृशं चटचटायते, शिखिकंठाभधूमार्चिः नीलधूमो, नीलज्वालश्च । अनर्चिर्वा अनुत्पन्नज्वालो वा ॥८॥

स्नेहलवणयोगादप्यग्निरेवं स्यादतः पक्षिमृगैरपि परीक्षाप्रकारांतरं दर्शयन्नाह—

**म्रियंते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत् ।**
**उत्क्रोशंति च दृष्ट्वैतच्छुककदात्यूहसारिकाः ॥**

—मूढवत्॥ स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद्धसेत् । वेपथुर्जायते तस्य त्रस्तश्चान्योन्यमीक्षते ॥ क्षामो विवर्णवक्त्रश्च नखैः किंचिच्छिनत्त्यपि । आलभेतासकृद्दीनः करेण च शिरोरुहान् । निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः । वर्तते विपरीतस्तु विषदाता विचेतनः ॥

केचिद्भयात्पार्थिवस्य त्वरिता वा तदाज्ञया । असतामपि संतोऽपि चेष्टां कुर्वन्ति मानवाः ॥ तस्मात्परीक्षणं कार्यं भृत्यानामादितो नृपः ॥" इति कल्पस्थाने प्रथमः ।

हंसः प्रस्खलति ग्लानिर्जीवंजीवस्य जायते ।
चकोरस्याऽक्षिवैराग्यं क्रौंचस्य स्यान्मदोदयः ।
कपोतपरभृद्दक्षचक्रवाका जहत्यसून् ।
उद्वेगं याति मार्जारः शकृन्मुंचाति वानरः ।
हृष्येन्मयूरस्तद्दृष्ट्वा मंदतेजो भवेद्विषम् ।
इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ।
यथा तेन विपद्येरन्नपि न क्षुद्रजंतवः ॥ ९ ॥

स०—मक्षिकाः सविषेऽन्ने न निलीयंते । निलीनास्तु सद्यो विपद्यंते । विषदुष्टाहारात्तु काकः क्षामस्वरो भवेत् । उत्क्रोशंत्युच्चैर्विक्रोशंति दर्शनादेव शुकदात्यूहसारिकाः । विषदर्शनमात्रादेव च हंसगतिः स्खलति । ग्लानिर्जीवंजीवस्य जायते । उपलक्षणं चेदम् । मरणमपि कस्यचिन्न ग्लानिरेव । जीवंजीवकस्य । चकोरस्याऽक्षिविरक्तता । दृष्ट्वैतदिति सर्वत्र योजनीयम् । क्रौंचस्य स्यान्मदोदयो मदोत्पत्तिः । कपोतपरभृद्दक्षचक्रवाकास्त्यजंत्यसून् प्राणान्विजहति अत्यर्थं मरणदुःखाभ्याहताः । उद्विजतेऽत्यर्थं मार्जारः । वानरस्तु शकृत् पुरीषं मुंचति उपलक्षणं चेदम् । पृष्ठतोमुखो रोदिति च । तथा हृष्येन्मयूरस्तद्दृष्ट्वा । तदिति सविषान्नपरामर्शः । दृष्ट्वेत्यनुवर्तमानेऽपि पुनर्दृष्ट्वेति वचनं सर्वत्र मध्ये संप्रत्ययार्थमाद्यंताभ्यां गृहीतत्वात् । विषं चास्य दर्शनादेव मंदतेजस्कं भवति । एवं पूर्वोक्ताभिः परीक्षाभिरन्नं भक्तादि विषवद्विषसंसृष्टं ज्ञात्वा त्यजेदेतत् । कथम् । प्रयत्नतः प्रयत्नेन । तमेव प्रयत्नं दर्शयन्नाह । यथा येन प्रकारेण त्यज्यमानेन क्षुद्रजंतवो मक्षिकादयोऽपि तेन विषेण न विपद्येरन् न नश्येयुस्तथा त्यजेत् । क्षुद्रजंतवोऽपि किं पुनर्महांत इत्यपिशब्दार्थः ॥ ९ ॥

प०— स्नेहलवणयोगादप्यग्निरेवं स्यात् अतः पक्षिमृगैरपि परीक्षाप्रकारान्तरं दर्शयन्नाह— मक्षिकाः सविषेणान्नेन म्रियन्ते । निलीनास्तु सद्यो विपद्यन्ते । शेषं सुगमम् । एवं पूर्वोक्ताभिः परीक्षाभिरन्नं सविषं स्पष्टं ज्ञात्वा प्रयत्नतस्त्यजेत् । तमेव त्यागप्रयत्नमाह—यथा तेन सविषेणान्नेन न विपद्येरन् न नश्येयुः क्षुद्रजन्तवोऽपि, किंपुनर्महान्त इति सूचनार्थोऽपिशब्दः । विषजुष्टाहारात् काकः क्षामस्वरो भवेत् । उत्क्रोश उच्चैः क्रोशन्ति दर्शनादेव शुकदात्यूहसारिक विषदर्शनमात्रादेव च हंसः स्खलति । ग्ल जीवंजीवस्य जायते । उपलक्षणं चेदम् । मरण कस्यचिन्न ग्लानिः एवं जीवंजीवकस्य । चकोर क्षिविरक्तत्वम् । दृष्ट्वैतदिति सर्वत्र योजनीय क्रौञ्चस्य स्यान्मदोदयो मदोत्पत्तिः । कपोतपर क्षचक्रवाकास्त्यजन्त्यसून् प्राणान् विजहति चा मरणदुःखाभ्याहताः । उद्विजतेऽत्यर्थं मार्जा वानरस्तु शकृत्–पुरीषं मुञ्चति । उपलक्षणं चे पृष्ठतो मुखो रोदिति च । तथा हृष्येन्मयूरस्त तदिति सविषान्नपरामर्शः । दृष्ट्वेत्यनुवर्तमा पुनर्दृष्ट्वेति वचनं सर्वत्र मध्ये संप्रत्ययार्थमाद्यन्त गृहीतत्वात् । विषं चास्य दर्शनादेव मन्दते भवति । अन्नं भक्तादिविषवत् ज्ञात्वा त्यजेदे कथं प्रयत्नतः प्रयत्नेन । तमेव प्रयत्नं दर्शयन् यथा येन प्रकारेण त्यज्यमानेन क्षुद्रजन्तवो म कादयोऽपि तेन विषेण न विपद्येरन् न युस्तथा त्यजेत् । किंपुनर्महान्त इत्या ब्दार्थः ॥ ९ ॥

हे०—मक्षिकादिप्राशनेन सविषान्नलक्षणं प्राश्यैत प्रमन्नं भुक्त्वा शुकादीन् दर्शनेन लक्षयति—उत्क्रो उच्चैः शब्दं कुर्वन्ति, दात्यूहोऽन्धकाकः, एतत्सा न्नम् अक्षिवैराग्यं न च रागापगमः । कपोतादयः त्यजन्ति, परभृत्कोकिलः, दक्षः कुक्कुटः, हृष्येद्धर्षं प्राप्नोति, मयूरस्य विषघ्नत्वं दर्शयति—तद् मयूरावलोकनेन मन्दतेजः अल्पप्रभावम् । सविषान्न प्रकारं दर्शयति यथा तेन सविषान्नेन क्षुद्रजन्तवोऽ विपद्येरन्न म्रियेरन् एवं त्यजेत् ॥ ९ ॥

स्पृष्टे तु कंडूदाहोषाज्वरार्तिस्फोटसुप्तयः ।
नखरोमच्युतिः शोफः सेकाद्या विषनाश
शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ।
ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ॥ १

स०—सविषेऽन्ने मुखहस्तादिभिस्तु स्पृष्टे सति दयः शोफांताः स्युः । ऊषा प्रादेशिको दाहः । दाहस्तु दाहः । अर्तिः शूलम् । सुप्तिरंगस्याऽचैत नखरोमच्युतिर्नखशातो रोमशातः । ननु नखः

केवलं वातरोगेषु पठितः। विषे च सन्निपातकोप उक्तः। तत्कथमेतदुच्यते। जात्यंतर्भूत एवायं विषनिमित्त इत्यदोषः। तत्र तेषु विषसंस्पर्शजेषु कंड्वादिरोगेषु सेकाद्याः शस्ता यतो विषनाशनाः। प्रलेपाश्च हिताः। कैरित्याह। सेव्यादिभिः ॥ १० ॥

प०—सविषेऽन्ने मुखहस्तादिभिस्तु स्पृष्टे सति कण्ड्वादयः शोफान्ताः स्युः ऊषा, दाहः सर्वदाहः। अर्तिः शूलम्। सुप्तिरङ्गस्याचैतन्यम्। नखरोमच्युतिर्नखशातो रोमशातः। ननु नखशातः केवलं वातरोगेषु पठितः। विषे च संनिपातकोप उक्तः। तत्कथमेतदुच्यते। जात्यन्तरभूत एवायं विषनिमित्त इत्यदोषः। तत्र तेषु विषस्पर्शजेषु कण्ड्वादिरोगेषु सेकाद्याः शस्ता यतो विषनाशनाः। प्रलेपाश्च हिताः। कैरित्याह—सेव्यादिभिः॥ १० ॥

हे०—सविषान्नस्पर्शजान्रोगानाह—अग्निना दह्यमानस्येव दुःखं दाहः, क्षारेणोषा, अर्तिः—शूलं, स्फोटाः पिटिकाः, सुप्तिः स्पर्शाज्ञानम्। कण्ड्वादीनामौषधमाह—सेकः परिसेकः, आद्यशब्दादभ्यङ्गावगाहादयः। विषनाशना विषघ्ना विषतंत्रे वक्ष्यमाणाः सेव्यादिभिः प्रलेपाः। सेव्यमुशीरं, पद्मकः पद्मकाष्ठम्। सोमवल्कः कट्फलः, तालीसपत्रं प्रसिद्धम्, अमृता-गुडूची नतं—तगरम् ॥ १० ॥

**लालाजिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम्।**
**दंतहर्षो रसाज्ञत्वं हनुस्तंभश्च वक्त्रगे।**
**सेव्याद्यैस्तत्र गंडूषाः सर्वं च विषजिद्धितम् ११**

स०—वक्त्रगे मुखप्राप्ते लाला भवति। जिह्वौष्ठयोर्जाड्यं भवति। ऊषादयश्च स्युः। रसाज्ञत्वं जिह्वा रसं न चेतयत इत्यर्थः। हनोः स्तंभश्च स्यात्। तत्र सेव्याद्यैः पूर्वोक्तैर्गंडूषा हिताः। सर्वं चान्यदपि यद्विषं जयति तद्धितम् ॥ ११ ॥

प०—वक्त्रगे मुखप्राप्ते लाला भवति। जिह्वौष्ठयोर्जाड्यं भवति। ऊषादयश्च स्युः। रसाज्ञत्वं—जिव्हा रसं न चेतयत इत्यर्थः। हनोः स्तम्भश्च स्यात्। तत्र सेव्याद्यैः पूर्वोक्तैर्गण्डूषा हिताः। सर्वं चान्यदपि यद्विषं जयति तद्धितम् ॥ ११ ॥

हे०—सविषान्नभक्षणजान् रोगानाह—लालाश्लेष्मतन्तुस्रावः, जिह्वौष्ठयोर्जाड्यं स्तंभः, ऊषा चिमिचिमायते सर्वत्र मुखे सर्षपलिप्तस्येव दुःखं चिमिचिमायनम्, दन्त दंतरोगविशेषः, लालादीनामौषधमाह-सेव्याद्यैः पूर्वोक्तैः विषजिद्विषतन्त्रोक्तप्रतिसारेण प्रलेपादिकम् ॥ ११ ॥

**आमाशयगते स्वेदमूर्छाध्मानमदभ्रमाः।**
**रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥**
**बिंदुभिश्चाचयोऽङ्गानां पक्वाशयगते पुनः।**
**अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥**
**तंद्रा कृशत्वं पांडुत्वमुदरं बलसंक्षयः।**
**तयोर्वांतविरिक्तस्य हरिद्रे कटभीं गुडम् ॥**
**सिंदुवारितनिष्पाववाष्पिकाशतपर्विकाः।**
**तंडुलीयकमूलानि कुक्कुटांडमवल्गुजम् ॥**
**नावनांजनपानेषु योजयेद्विषशांतये ॥ १२ ॥**

स०—विषान्न आमाशयं प्राप्ते स्वेदादयः स्यु हृदयस्य रोधनं स्तंभः। बिंदुभिर्नानावर्णैरंगानामाच समंताच्चयनम्। पक्वाशयगते तु विषेऽनेकवर्णं वमति मूत्रयत्यतिसार्यते। तंद्रादयश्च भवंति। तयोरामपक्व शयगतयोर्विषयोर्वर्तमानस्य पुंसो यथायोगं वांतवि क्तस्य हरिद्रे कटभीत्यादिकमौषधं नावनादिषु यो येत्। तत्र मदनफलालाबुकुंभीकोशातकीफलैर्मधु क्तैर्निष्पावांबुयुक्तैर्वमनम्। तस्य स्नेहयित्वा विरेचनम पक्वाशयगते वमितस्यैव नीलिनीफलयुक्तेन घृ विरेचनमेव ॥ १२ ॥

प०—विषान्न आमाशयं प्राप्ते तन्द्रादयश्च भव तयोरामपक्वाशययोर्गतयोर्विषयोर्वर्तमानस्य पुं यथायोगं वान्तविरिक्तस्य हरिद्रे कटभीत्यादि मौषधं नावनादिषु योजयेत्। तत्र मदनफलाला कुंभीकोशातकीफलैर्मधुयुक्तैर्वमनम्। तस्य स्ने यित्वा विरेचनम्। पक्वाशयगते वमितस्यैव नीलि नीफलयुक्तेन घृतेन विरेचनमेव ॥ १२ ॥

हे०—सविषान्नामाशयप्राप्तिजान् रोगानाह—चक्षुर्हृद रोधनं—नेत्रयोर्मनसश्च क्रियाप्रतिबंधः। बिन्दुभिरङ्गानाम चयः जलबिन्द्वाकारस्फोटनव्याप्ताङ्गत्वं, सविषान्नपक्वाश प्राप्तिजान् रोगानाह—पांडुत्वं शुक्लत्वम्, उदरमुदराख रोगः। आमपक्वाशयविकारयोरौषधमाह—वातविरि स्येति क्रमाद्योज्यम्, आमाशयविकारेषु वान्तस्य, पक्वा यविकारेषु विरिक्तस्य, हरिद्रादीनि नावनादिषु योजयेत्

हरिद्रे हरिद्राद्वयं, कटभी गिरिकर्णिका, सिंदुवारितो निर्गु-
ण्डी, निष्पावो वल्लः, घाण्पिका हिंगुपत्री, शतपर्विका
वचा, कुक्कुटस्य पक्षिणोऽण्डम् , अवल्गुजं वाकूची।
आहारं विनापि प्रयुक्तस्य विषस्य शान्त्यर्थमयं योगः
स्यादिति विषशान्तय इत्युक्तम् । संग्रहे तु–ईश्वराणां
वसुमतां विशेषेण तु भूभुजाम् । प्रायेण मित्रेभ्योऽमित्रा
भूयांसो भवन्ति, ततस्तत्प्रयोगात्समासन्नवर्तिनोऽन्नपाना-
दिषु विषं प्रयच्छन्ति, स्त्रियश्च तत्प्रणिधिप्रयुक्ताः सौभाग्य-
लोभेन । तस्माद्राजा कुलीनं स्निग्धमाप्तमास्तिकमार्यं परि-
ग्रहं दक्षं दक्षिणं, निभृतं, शुचिमनुद्धतमनलसमव्यसनम-
नहंकृतमकोपनमसाहसिकं, वाक्यावबोधकुशलं निष्णात-
मष्टाङ्गे यथाम्नायमायुर्वेदे सुविहितयोगक्षेमं सन्निहितागदा-
दियोगं,सात्म्यज्ञं च प्राणाचार्यं परिगृण्हीत। तमर्थमानाभ्यां
यथाम्नायं संप्रदायानतिक्रमेण कालेनुकालं गुरुमिव शिष्यः
पितरमिव पुत्रः पूजयेत्। प्रतिकूलमपि च तद्वचः सांप्र-
तमिति मन्येत। नहि भद्रोऽपि गजपतिर्निरंकुशः श्लाघ-
नीयो जनस्य । तस्मात्तदायत्तमाहारविहारं प्रति चात्मनः
कुर्यात्, उपात्तमपि खलु जीवितमुपायबलेन स्वसमवायम-
धितिष्ठति, अपि च बहुपरिग्रहा नरपतयः सन्ति चाशु-
कारिणः शूलसंन्यासादयः प्रतिक्षणं प्रत्यवेक्षणीयावस्थाश्च
रोगिणो विशेषेण राजानस्ते हि प्रमादपरिगता दुःखा-
सहिष्णवश्च, स्वयमप्यपथ्यरुचयः, सन्निहिताहितप्रतिवचन-
प्रायपरिवाराश्च । तस्माद्भिषजो राजा राजगृहासन्न एव
सन्निवेशनं कारयेत्, तथाहि–स सर्वोपकरणेषु नृपतिश-
रीरोपयोगिष्वपरोक्षवृत्तिर्भवति । स सम्यक्सम्पन्नमन्नं
सुपरीक्षितं, विशुद्धमग्न्यादिषु प्रागुपनीतं, शिखिना दृष्ट-
मभिप्रोक्षितं प्रोक्षणैः पुरःस्थितो राजानं हस्तबद्धौषधि-
रत्नं भोजयेत्। भुञ्जानस्य वास्य दुन्दुभीनगदप्रतिलि-
प्तान् वादयेत्। दन्तकाष्ठप्रयुक्ते विषे कूर्चकाविशरणम्।
औषधं गन्धो रूक्षता जिह्वा दन्तौष्ठमांसशोफश्च। तत्र
प्रच्छायधातकीपुष्पजाम्बवास्थिहरीतकीचूर्णैः सक्षौद्रैः सप्त-
च्छदकल्केन वा प्रतिसारणं कुर्यात् । दाडिमकरमर्दक-
भव्याम्रातककोलबदररसक्षौद्रयुक्तं गण्डूषम् । अनेन
जिह्वानिर्लेखनकवलगण्डूषा व्याख्याताः । अञ्जनप्रयुक्ते-
ऽश्रूपदेहदाहरागवेदना दृष्टिविभ्रमा भवन्त्यान्ध्यं च। तत्र
सर्पिष्पानं योज्यम् । शृतेन पयसा सप्तकृत्वः पिप्पलीर्भा-
वयेत्। ततस्तत्कल्केन सर्पिर्विपक्वं नेत्रतर्पणं कपित्थमेष-
शृङ्गीभल्लातकानां पुष्पैर्वरणनिर्यासेन चाञ्जनं बृहतीशिरी-
षबीजप्रपौण्डरीकनागबलाचूर्णं सप्तकृत्वो मधुना भावयेत्।

तच्च स्रोतोऽञ्जनसुवर्णचूर्णयुक्तमञ्जनं नस्यधूमप्रयुक्ते शि
रुक्कफास्रावः खेभ्यो रुधिरागमनमिन्द्रियवैकृतं च। त
तिविषाश्वेताकाकमाचीमदयन्तिकाकल्कक्षीरसिद्धं स
र्नस्ये पाने च विदध्यात् । मदयान्तिका मल्लिक
अभ्यङ्गप्रयुक्ते त्वग्दाहस्वेदपाकस्फोटावदरणानि ।
शीताम्बुपरिषिक्तस्य चन्दनतगरोशीरकुष्ठवेणुपत्रिकामृ
सोमवल्लीश्वेतापद्मकालीयकैरनुलेपनम् । वेणुपात्रिका
ष्पिका । एतान्येव च सकपित्थरसगोमूत्राणि पानम्।
रिकर्णिकाश्वेतामूलप्रियङ्गुसारिवामधुकसर्पसुगन्धामृगैव
मूलानि शेलुकाक्वाथपिष्टानि प्रलेपः । अनेनोद्वत
द्वर्णपरिषेकानुलेपनभूषणयानशय्यास्तरणास्त्रकवचरथ
दुकोपानत्पादपीठा व्याख्याताः । विशेषतस्त्वाभरण
विकारेऽश्वगन्धापामार्गकिणिहिरखदिरशिरीषकल्कैर्गोपित्त
संयुक्तैः प्रदेहः । पादपीठकृते श्लेष्मातकसर्पसुग
कल्को मधुयुक्तः । छत्रप्रयुक्ते स्फोटानां क्षिप्रपाव
पक्वजाम्बवप्रकाशानां प्रादुर्भावः। तत्र मधुकपाटलाक
करोध्राञ्जनकुष्ठसर्पसुगन्धाखदिरशिरीषकल्कैर्गोपित्तप्रयुत
सर्वगात्रप्रदेहः ।अनेन चामरव्यजने व्याख्याते। ि
ऽभ्यङ्गप्रयुक्ते वेदनाग्रन्थिजन्मकेशच्यवनं च। तत्र श्य
पालिंदी तन्दुलीयकचूर्णघृतक्षीरपित्तैः सुभावितकृष्ण
लेपः ।गोमयमालतीमूषिकपर्णीकल्कोऽन्यतमरसो वाऽ
धूमो वा श्लेष्मातकत्वक्पाटलाशिरीषमधूकहरिद्राद्वयै
क्षीरालोडितैः परिषेकः । अनेन शिरःस्नानस्नपनो
कङ्कतकनगुण्णीषा व्याख्याताः। कर्णपूरणप्रयुक्ते श
शूलपाकाः श्रोत्रवैगुण्यं च तत्र बहुपत्रास्वरसो घृत
युक्तः कर्णपूरणम्। सोमवल्कलरसो वा सुशीतः।
लेपप्रयुक्ते मुखस्य श्यावता पद्मकण्टकाश्च भवन्त्य
जाश्च विकाराः। तत्र मधुकपयस्याबन्धुजीवफञ्जीपु
चन्दनैः सघृतैर्लेपो मधुसर्पिषः पानं च । सविष
घ्राणाच्छिरोनासाव्यथा साश्रुनेत्रता गन्धाज्ञानं च।
नन्तरोक्तो विधिर्बाष्पोदितश्चेति भवति चात्र सापि
घटीमूलफलकस्थापितौषधम् । प्रागुदीच्योर्दिशोर्गुप्तं
ज्यागारमिष्यते ॥ घटादीनि मृत्तृणकाष्ठमयानि।
प्रशस्तदिग्देशं बहुवातायनं महत् ॥ महानसं सु
विश्वासजनसेवितम् ॥ सद्वाःस्थाधिष्ठितद्वारं कक्षा
वितानकम् ॥ सुधौतदृढकुम्भादिपरिशुद्धजलेऽन्धः
स्वकर्मकुशला दक्षाः सूदास्तत्राप्रमादिनः ॥ कल्ह
नखाः पित्र्या राज्ञः कृत्यैरसङ्गताः । तेषामाधिपति

---

१ अत्र "वस्त्र–"इति खपुस्तके।

कुलजः कुपरीक्षितः ॥ संविभक्तश्च भक्तश्च शुचिर्वैद्यवशानुगः ।(संविभक्त उदासीनः)सर्वेऽपि भूभृद्दासन्नाः शस्ताः सततमीदृशाः ॥ मिथोविग्रहसंघात-रहिता भूभृते हिताः। तान्विद्यो गुणवानेको मनसा प्रतिजागृयात् ॥ भूभृद्देहोपकरणसंरक्षणसमुद्यतः । अथाभ्यमित्रं व्रजतो जिगीषोर्वैद्यः सुसज्जौषधशस्त्रयन्त्रः । तुंगध्वजाख्यातनिवासभूमिर्युद्धागतं योधजनं चिकित्सेत्॥ पन्थानमुदकच्छायां भक्तं यवसमिन्धनम् । दूषयन्त्यरयो यस्मात्तद्विद्याच्छोधयेत च ॥ प्रस्थानं वा निवेशं वा नाविज्ञाय प्रयोजयेत्। भूवारितृणकाष्ठाश्ममयान्मार्गवनस्पतीन् ॥ विषेणोपहता भूमिः क्वचिद्दग्धेव लक्ष्यते ॥ प्रम्लानतृणगुल्मादिमृतकीटसरीसृपाः । विशीर्यन्ते खुरनखा दाहकण्डूरुजान्विताः ॥ छर्दिमूर्च्छाज्वरो मोहः शिरोदुःखं च जायते । तत्र सौभाञ्जनान्मूलं वल्लीसोमसुचीरकम् ॥ मातुलुङ्गरसं हिंगु पाययेद्दधिमात्रया । वल्ली प्रियङ्गुः । मूत्राण्यजाविहस्तिभ्यो मांसानि रुधिराणि च ॥ सर्वगन्धैः समायोज्य पन्थेल्पके च निक्षिपेत् । सोमराजीं सुनंदाख्यां सरलां गन्धनाकुलीम् ॥ वारुणीं त्रायमाणां च मोक्षयेत्तेन तां भुवम् । सुनन्दाख्यां गोरोचनां वारण्टीं पद्मचारिणीम् ॥ सविषं विसरं तोयं कवोष्णं राजिभिश्चितम् । फेनिलं गुरुविच्छिन्नं खगैरनतिनान्दितम् ॥ मृताकुलितमत्स्यं च स्पर्शात्स्च्छोफकण्डुमत् । ओदनः साधितस्तेन भुक्तमात्रो विदह्यते ॥ विदग्धः पच्यते कृच्छ्रात्पक्वो मूर्छाज्वरप्रदः ॥ दर्शयेत्सर्वतो नीलपीतकर्बुरलोहितम् ॥ तत्र शिग्र्वादिमगदं भूमिदोषोदितं पिबेत् । अजशृंगीं विशालाख्यां विषघ्नीमुत्तमारणीम् ॥ फणिज्जकं प्रतिविषां दग्ध्वा तद्भस्म गालयेत् । बहुशो गालितं तच्च पाचयेत्तत्र च क्षिपेत् ॥ कल्कयित्वा प्रतीवापं सरलं रजनीद्वयम् । एतामुदीच्यं मञ्जिष्ठां सुनन्दां वाकुचीमपि । पात्यन्ते विन्दवस्तस्मात्तत्र तन्निर्विषीभवेत् । पाटलापारिभद्राश्वकर्णश्यामाकशिग्रुकान्॥ कलशान्तर्गतान् दग्ध्वा प्रक्षिपेत्सविषेऽम्भसि । शीते घर्मो हिमश्चोष्णो मारुतो विषसंयुतः ॥ भ्रममूर्च्छादिकारी च शिग्र्वादिस्तत्र चेष्यते । देवदारुनतानंता मधुकाञ्जनगैरिकम् ॥ वज्रकन्दं लतां रोध्रं विकिरेत् श्लक्ष्णचूर्णितम् । वृक्षाग्रेषु पताकासु दूष्येषु सुमहत्सु च ॥ सर्वतश्चूर्णसंपर्कान्निर्विषो जायतेऽनिलः । विकृता भवति च्छाया पादपे विषदूषिते ॥ निर्गन्धामतिगंधं वा तत्पुष्पं हृच्छिरोरुजम् । कुर्यात्फलपलाशादिकण्ठपाकातिसारकृत् ॥ भूमि-

मुद्दिश्य यत्प्रोक्तं तत्सर्वं तत्र शस्यते। न च कन्यामविदि संस्पृशेदपरीक्षिताम् ॥ विविधान् कुर्वते योगान् कुशल खलु मानवाः । आजन्मविषसंभोगात्कन्या विषम् कृता ॥ स्पर्शोच्छ्वासादिभिर्हन्ति तस्यास्त्वेतत्परीक्षणम् तद्धस्तकेशसंस्पर्शान्म्लायते पुष्पपल्लवैः ॥ शय्यायां मर णैर्वस्त्रैर्यूकाभिः स्नानवारिणि । जन्तुभिर्म्रियते ज्ञा तामेवं दूरतस्त्यजेत् ॥ नाप्रोक्षितं नाविदितं भिषजा ना वेक्षितम् । नाप्राशितं च सूदाद्यैः किंचिदाहारयेन्नृपः धन्यं सर्वार्थसिद्धाख्यं पाप्मरक्षोविषापहम् । परं चक्षु मायुष्यं शत्रुघ्नं वक्ष्यतेऽञ्जनम् ॥ अथ शुक्लपक्षे पुण्येऽ पुष्यपुनर्वसुहस्तचित्रामृगशिरःश्रवणरेवतीशतभिषक्— प्राजापत्योत्तराणामन्यतमेन नक्षत्रेण योगमुपागते भगव षधिपतौ प्रशस्ते मुहूर्ते सिंधुस्रोतःसमुत्थं स्निग्धं स गन्धवर्णच्छेदैर्नीलोत्पलाभमञ्जनमाहरेत् । तस्याष्टौ भाग कनकरजतोदुम्बराणामेकैकोभागस्तत्सर्वं मूषायां प्र बलिमङ्गलपूर्वकमग्निमुपसमाधाय खदिरकारधवस्यन्दना तमदारुभिर्गोमयैर्वा प्रज्वालयेत् । ततश्चार्यावलोकितेश मार्यतारां, ब्रह्मदक्षाश्विरुद्रेंद्रादित्यसोमवरुणवैश्वानरव विष्णुजनकभारद्वाजधन्वंतरिसुश्रुतभव्यसुकन्यास्कंधच्यव वैनतेयानन्यांश्च, यथाविध्युक्तदेवताः सुमनोऽक्षतलाजा स्तिकसंयावानिस्तुषयवसंस्कृतगुडघृतमिश्रपायसैरर्चयित्व वृद्धवैद्यब्राह्मणांश्च शुक्लवाससो, महतीभिर्दक्षिणाभिः यित्वा तस्मिन्नग्नौ तदाञ्जनं ध्मातं ध्मातमावर्त्य पृथव गभिषेचयेद्गोशकृद्रसमूत्रघृतदधिक्षीद्रवसामज्जातैलमद्यर गन्धाम्बुशर्करोदकेक्षुरसेषु तथा हरीतक्यामलकबिभी काश्मर्यमृद्वीकाशृङ्गाटकसेरुकोत्पलनलिनसौगन्धिकमृण लिकाक्वाथेषु तथा लवकपिञ्जलैणशशहरिणकुलीर तथा मधुकचन्दनकालानुसार्यनलदपद्मकोशीरमञ्जिष्ठ नतागैरिककुङ्कुमोदकेषु । कालानुसार्यं शैलेयम ततः शुक्ले वाससि बद्ध्वा द्वादशरात्रमान्तरिक्षेऽम वासयेत् । ततश्छायायां विशोष्य स्फटि काप्रवालकालानुसार्यप्रतीवापं पुनरपि बलिमंगलपू महद्वाससी कन्यया दृषदि पेषयित्वा सुवर्णराजतता स्रशैलद्विरदरदनगवलवैडूर्यस्फटिकमेषशृंगस्यसनसारान्य घटिलायामञ्जनिकायां निधापयेत् । गवलं माहिषं शृङ्ग अथ पुनरपि पूर्ववत्कृतस्वस्त्ययनं सावित्र्येण कर्म ऽथर्ववित्द्विजन्मा विधिवत् तदभिसंस्कुर्यात् । ततो गज न्धमारोप्य पाण्डुरच्छत्रचामरवालव्यजनैरनुगतं तथा दुन्दुभिस्वनैर्द्विजातिवरप्रयुक्तैश्च वेदवादभिमैः पुण्याहध

कृतपुष्पोपहारं वैद्यगृहान्नायकगृहमनुप्रवेशयेत् । अनतरं च तेन विदेहाधिपोपदिष्टेन सर्वार्थेषु सिद्धेनाञ्जनेन यथोक्तानामेवाञ्जनभाजनद्रव्याणामन्यतमया शलाकया गोब्राह्मणपूर्वकं शुचिः सनियमो भूत्वा धारिणीमिमां विद्यामधीयानः पूर्वमक्षि दक्षिणमञ्जयेत् । नमश्चक्षुःपरिशोधनराजाय तथागतायार्हते, असम्यक्संबुद्धाय तद्यथा—चक्षुःप्रज्ञाचक्षुर्ज्ञानचक्षुर्विज्ञानचक्षुर्विशोधय स्वाहा ततःपरं तामेव धारणामनुसंस्मरन् सायंप्रातः प्रत्यहमेतत्परमं पवित्रमारोग्यकरमूर्जस्करं सर्वविघ्नहरमञ्जनमश्विभ्यामिन्द्रस्य वृत्रवधाभ्युद्यतस्य प्राक्प्रकल्पितम्।तस्मादेतद्राज्ञां राजमात्राणां च महीं विजिगीषमाणानां ब्राह्मणानां च वेदाध्ययनमन्यद्वा महच्छास्त्रमवगाहमानानां प्रसन्नमानो भिषक् प्रकल्पयेदिति, भवन्ति चात्र । " अथ योगाः प्रवक्ष्यन्ते बृहस्पतिकृताः शिवाः । यान् सेवमानो नृपतिः शत्रुभ्यो नैति वञ्चनम् ॥ बिल्वाढकीयवक्षारपाटलाबाप्पिकोषणाः। श्रीपर्णीशल्लकायुक्तो निः क्काथः प्रोक्षणं परम् ॥ आढकी सौराष्ट्री । सविषं प्रोक्षितं तेन सद्यो भवति निर्विषम् ॥ यवसेन्धनपानीयवस्त्रशय्यासनौदनम् । कवचाभरणच्छत्रबालव्यजनवेश्म च । शेलुपाटल्यतिविषाशिग्रुगोपापुनर्नवम्॥ समंगावृक्षमूलत्वक्कपित्थं वृषशोणितम् । सहदंतशठं तद्वत्प्रोक्षणं विषनाशनम् ॥ शोणितं कुङ्कुमम् । लाक्षाप्रियङ्गुमञ्जिष्ठासमंगालहरेणुकाः । सयष्ट्याह्वा मधुयुता बभ्रुपित्तेन कल्पिताः ॥ निखनेद्गोविषाणस्थाः सप्तरात्रं महीतले । ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् ॥ संस्पृष्टं सविषं तेन सद्यो भवति निर्विषम् । बभ्रुर्नकुलः । मनोह्वालशमीपुष्पत्वङ्निशाश्वेतसर्षपाः ॥ कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्किताः। शुनो गोः कपिलायाश्च सौम्याख्योऽयं च रोगदः ॥ विषजित्परमं कार्यो मणिरत्र च पूर्ववत् । मूषिकाजरुहा वापि हस्ते बद्धा विषापहा ॥ हरेणुमांसा मञ्जिष्ठा रजनी मधुकं मधु । अक्षत्वक्सुरसं लाक्षाश्वपित्तं पूर्ववन्मणिः॥ वादित्राणि पताकाश्च पिष्टैरेभिश्च लेपितैः । श्रुत्वा दृष्ट्वा तमाघ्राय सद्यो भवति निर्विषः ॥ त्र्यूषणं पञ्चलवणं मंजिष्ठारजनीद्वयम् । सूक्ष्मैलां त्रिवृतां पत्रं विडंगानीन्द्रवारुणीम्॥ मधुकं चेति सक्षौद्रं गोविषाणे निधापयेत् । तस्मादुष्णाम्बुना मात्रां प्राग्भक्तां योजयेत्तथा ॥ विषं भुक्तं जरां याति निर्विषेऽपि न दोषकृत् । जतुसर्जरसोशीरसर्षपापत्रवालकैः ॥ सवेल्लारुष्करपुरैः कुसुमैरर्जुनस्य च । धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् ॥ न तत्र कीटाः सविषा नोन्दुरा न सरीसृपाः । न कृत्याः कर्मणाद्याश्च धूपोऽयं यत्र दह्यते । शिखिपित्तबलाकास्थिसर्षपाश्चंदनं घृतम् । धूपो विषघ्नः शयनवसनागेहगः ॥ विशालाव्योषमंजिष्ठायष्टीलवणपञ्चकम् द्विनिशापत्रवेल्लैला त्रिवृच्चूर्णं समाक्षिकम् ॥ पूर्वोक्तव्यूषणादिं च स्नानीयेऽम्भसि योजयेत् । क्काथोऽथवार्ककुसुमश्वेतापामार्गसर्षपैः ॥ सदध्याज्यः कृतो युक्तैः कामातानाकुलीयवैः। कल्को वा चन्दनक्षीरिपलाशद्रुमवल्कलैः । मूर्वैलवालुसुरसानाकुलीतंदुलीयकैः । क्काथः सर्वोदकार्येषु काकमाचीयुतैर्हितः ॥ रोचनापत्रनेपालीं कुंकुमैस्तिलकं वहन् । विषैर्न बाध्यते स्याच्च नारीनरनृपप्रियः ॥ चूर्णैर्हरिद्रामञ्जिष्ठाकिणहीकणनिम्बजैः । दिग्धं निर्विषताभेति गात्रमित्याह गौतमः ॥ नस्यपानाञ्जनालेपैर्युञ्ज्यात्संजीवनादिकान् । अगदान् विषजग्धस्य तीक्ष्णानि वमनानि च ॥ अगदान् विषतन्त्रोक्तान् । पिप्पलीमधुकक्षौद्रशर्केरक्षुरसैः सह । विरेचनं शिरामोक्षं प्राप्तं विस्रावणं यदि ॥ हृदयावरणं कार्यं प्रागेवामित्रमध्यगः । पिबेद्घृतमजेयाख्यममृतं चाथ भुक्तवान् ॥ अजेयामृते विषतन्त्रे । सर्पिः क्षौद्रं दधि क्षीरमन्ततः शीतलं जलम् ॥ अन्ततः पूर्वाभावे अतएव पूर्वेषु पूर्वाभावे परामिति लभ्यते।सितामधुकपालिन्द्रीकल्कवन्मांसमिष्यते ॥ गोधाहरिणबभ्रूणां सकणाशुंठिसर्पिषम् । सनागरं सातिविषं शिखिनः ससितोपलम् ॥ सुशीताः सघृताश्चैषां यथास्वं कल्पिता रसाः । इत्थं विषगरादिभ्यो रक्षेद्वैद्यो नरेश्वरम् । स्यात्तदुच्छेद उच्छेदः प्रजानां सर्वकर्मणाम् ॥ आज्ञाधैर्यक्षमात्यागान्मानुपत्वेऽप्यमानुषाः । यद्राज्ञः कर्मभिस्तस्मादाराध्योऽसावतीन्द्रियैः ॥ यत्र साक्षान्नृपस्तत्र विज्ञातः प्रविशेद्भिषक् । न संमतोऽप्यनुचितं यानस्थानासनं भजेत् ॥ उचितं पुरतो राज्ञस्तिष्ठेद्वाक्यं च नाक्षिपेत् । अहीनकालं राजार्थं स्वार्थप्रियहितैः सह ॥ देशे काले परार्थं च वदेद्धर्मार्थसंहितम् । नानुशिष्यादपृच्छन्तं महदेतद्धि साहसम् ॥ नाचरेदाहतेनैनं मूलोच्छेदकरं हि तत् । अनुकूलं हितं वाच्यमहिताद्वारयेन्मिथः ॥ उदारैः सान्त्वयन्वाक्यैर्दोषश्चेत्तदुपेक्षया । तूष्णीं वा प्रतिवाक्ये स्याद्वर्जयेद्द्वेष्यसंकथाम् ॥ विपश्चिदप्यचित्तज्ञो बालिशोऽपि तु भाववित् । अतिप्रियोऽपि द्वेष्योऽपि यात्याशु विपरीतताम् ॥ निवेद्य राज्ञः कुर्वीत कार्याणि सुलघून्यपि । न पायात्र चिरं तिष्ठेत्कोशस्थानावरोधयोः॥ स्वल्पेऽपि दर्शयेत्तुष्टिं लाभेऽनुद्धतमानसः । मिथः कथनमन्येन कौलीनं द्वन्द्ववादिनम् ॥ वस्त्रादि राज्ञः सदृशं राजलीलां च वर्जयेत्। दत्तं

यत्तु नृपेणैव तद्वार्यं तुष्टिवृद्धये ॥ हसितव्ये स्मितं कुर्यात्प्रभोरेवानुवृत्तितः । उच्यमानेऽवलम्बेत परमर्मणि मूकताम्॥ स्वमर्मणि तु बाधिर्यं धैर्यमाधुर्यसौष्ठवम् ॥ अत्यायासेन नात्मानं कुर्यादति समुच्छ्रितम् ॥ पातो यथा हि दुःखाय नोच्छ्रायः सुखकृत्तथा । आसन्नसेवा नृपतेः क्रीडाशस्त्राहिपावकैः ॥ कौशलेनातिमहता विनीतैः सा निरुच्यते । प्राप्य दुष्प्रापमैश्वर्यं बहुमानं च भूपते ॥ यथोपयुञ्जीत चिरं तथा स्यादप्रमादवान् । विदध्यात्परितः शय्यां रक्षामन्त्राभिरक्षिताम् ॥ रात्रौ सिद्धार्थकां भूमिमक्षतैरन्वितां शुचिम् । रक्षाशक्तिं तथोच्छीर्षे सयवाङ्कुरयावकाम् ॥ सदूर्वं पूर्णकलशं सपुष्पफलपल्लवम् । उपहारं च संध्यायां भुक्त्वा चान्ते निशासु च ॥ एतत्स्वस्त्ययनं कर्म कर्तव्यं शुचिनाशुचेः । आयुष्यं पौष्टिकं भूतविषकार्मणपाप्माजित्॥ संक्षेप एष विषपालनसाधनाय प्रोक्तस्तु विस्तरविधिः पुनरुत्तरेषु । आलोच्य सम्यगखिलं मतिपूर्वकारी युञ्जीत तत्परिकलय्य विकारचिह्नम् ॥ इति विषगररक्षो रक्षणायोपदेशं भजति नरपतिर्यो नित्यमेवाप्रमत्तः । निजपररिपुवृन्दैरप्रधृष्यो महात्मा स जनयति जनानां क्षेमयोगौ चिराय ॥ " इति ॥ १२ ॥

**विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ।**
**सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ।**
**शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत्१३॥**

स०—विषभुक्ताय पुंस ऊर्ध्वमधश्च शुद्धाय काले सूक्ष्ममतिश्लक्ष्णं ताम्रचूर्णं समाक्षिकं दद्यात् । किंभूतम् । हृद्विशोधनं हृदयं शोधयेदित्यर्थः । विषभुक्तायेत्याहिताग्न्यादित्वात्परनिपातः । काल इत्युपलक्षणम् । देशसात्म्याग्न्यादीन्व्यपेक्षेतेत्यर्थः । शुद्धे हृदि स्वलिंगे ज्ञाते ततोऽनंतरं हेमचूर्णस्य शाणं कर्षचतुर्थांशं दापयेत् ॥ १३ ॥

प०—विषभुक्ताय पुंसे ऊर्ध्वाधश्च शुद्धाय काले सूक्ष्ममतिश्लक्ष्णं ताम्रचूर्णं समाक्षिकं दद्यात् । किंभूतं तत् हृद्विशोधनं हृदयं शोधयेदित्यर्थः । विषभुक्तायेत्याहिताग्न्यादित्वात् परो निपातः। काल इत्युपलक्षणम् । देशसात्म्याग्न्यादीन् व्यपेक्षेतेत्यर्थः । शुद्धे हृदि स्वलिङ्गे ज्ञाते ततोऽनन्तरं हेमचूर्णस्य शाणं कर्षचतुर्थांशं दापयेत् ॥ १३ ॥

हे०-कृतपूर्वोक्तोपचारस्य [illegible] माह—शुद्धायेति । पुनरपि कृतवमनविरेचनाय [illegible] औषधकाले संसर्जनक्रमानंतरमित्यर्थः । [illegible] हृदयस्थितविषनिर्हरणं ताम्रचूर्णं प्रयोजयेत् । [illegible] शुद्धे हृदि हृदयशुद्धौ सत्यां शाणं कर्षचतुर्थांशम् ॥ १[illegible]

हेम्नि दत्ते सति यो गुणः स्यात्तमाह

**न सज्जते हेमपांगं पद्मपत्रेऽम्बुवद्विषम् ।**
**जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥**

स०—हेम पिबतीति हेमपस्तस्यांगे विषं न सज्जते कथम् । पद्मपत्रे जलमिव । तस्य च हेमपस्य वि[illegible]र्णमायुर्जायते । एष विधिर्गरेऽपि स्मृतो यो विष उक्तः सज्जत इत्यत्रात्मनेपदं चिंत्यम् ॥ १४ ॥

प०—हेम्नि दत्ते सति यो गुणः स्यात्तं वाह—हेम पिबतीति हेमपस्तस्याङ्गे विषं न सज्जते । कथम् पद्मपत्रे जलमिव । तस्य च हेमपस्य विस्तीर्णमायुर्जायते एष विधिर्गरेऽपि स्मृतो यो विष उक्तः। सज्जत इत्यत्रात्मनेपदं चिन्त्यम् ॥ १४ ॥

हे०--सुवर्णप्रयोगफलमाह—हेमं पिबतीति हेमपस्तस्य विषं न सजते संगं न गच्छति विपुलं चायुर्जायते । स[illegible] इति पाठे संगार्थकषञ्जेरात्मनेपदत्वं चिन्त्यम् । विषो[illegible] विधिं गरे इति दिशति—गरं—कृत्रिमं विषं " गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः " इति गरे विषविधेरप्राप्तत्वाद[illegible]देशः ॥ १४ ॥

**विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ॥१५**

स०—विरुद्धं चाहारं विषगरोपमं विद्यात् । वि[illegible]गरवद्विरुद्धाहारा अपि व्याधिमृत्युहेतव इत्यर्थः । तथा चोक्तं संग्रहे । विस्फोटगुल्ममदविद्रधिमेहयक्ष्मतेजोबलस्मृतिमतींद्रियचित्तनाशम् । कुर्याद्विरुद्धमशनं ज्वरमस्रपित्तमष्टौ गदांश्च महतो विषवच्च मृत्युमिति १५

प०—विरुद्धं चाहारं गरविषोपमं विद्यात् । विषगरवद्विरुद्धाहारा अपि व्याधिमृत्युहेतव इत्यर्थः तथाचोक्तं संग्रहे-"विस्फोटगुल्ममदविद्रधिमेहयक्ष्मजोबलस्मृतिमतीन्द्रियचित्तनाशम् । कुर्याद्विरुद्धमशज्वरमस्रपित्तमष्टौ गदांश्च महतो विषवन्मृत्युम् ॥ १५ ॥

१ अत्र "पक्वाशयगते" इति पाठान्तरम् ।

हे०—अथ विरोधादन्नपानरक्षाविरुद्धान्नस्य दोषहेतुत्वमाह—विरुद्धं संयोगादि विरोधवन्तं कस्यचिद्विरुद्धाहारस्य विषवत्सद्यो नाशनत्वात्कस्यचिद्गरवत्कालांतरनाशनत्वाद्रोगजनकत्वाच्चोपमानद्वयमुक्तम् , उक्तं च संग्रहे—विस्फोटगुल्ममदविद्रधिशोफयक्ष्मतेजोबलस्मृतिमतींद्रियतेजनाशान् । कुर्याद्विरुद्धमशनं ज्वरमस्रपित्तमष्टौ गदांश्च महतो विषवच्च मृत्युः।'' इति। विरोधश्च सप्तधा—संयोगसंस्कारमात्रादेशकालावस्थास्वभावभेदात् । संयोगस्त्रिधा—बलवद्गुणानां साम्याद्वैषम्यात्साम्यवैषम्याभ्यां च । एवं नव भेदाः। ते च सोदाहरणाः संग्रहे दर्शिताः। बलिनां मिथो गुणानां विषमतया, समतयाप्युभयथापि संस्कारादिवशादपि भवति निसर्गादपि विरोधः । "क्षीरं कुलत्थैः पनसेन मत्स्यैस्तप्तं दधिक्षौद्रघृते समांशे । वार्यूषरे रात्रिषु सक्तवश्च तोयान्तरास्ते यवकास्तथा च । " इति । ते च वक्ष्यमाणेषु स्वबुद्ध्या विवेचनीयाः ॥ १५ ॥

तदेव विरुद्धभोजनमाह—

**आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ।**
**विरुध्यते सह बिसैर्मूलकेन गुडेन वा ॥**
**विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः**

स०—आमिषं मांसमानूपं महामृगवारिचरवारिशयाख्यं माषादिभिः सप्तभिः सह विरुध्यते । आनूपेष्वपि मध्ये विशेषादतिशयेन पयसा सह मत्स्या विरुध्यंते । यतो मत्स्यक्षीरे स्वादुरसविपाकित्वान्महाभिष्यंदिनी । शीतोष्णयोगाच्च परस्परविरुद्धे । मत्स्येष्वपि चिलीचिमाख्यो मत्स्यः पयसा सहात्यंतविरुद्धः। स पुनः शकलीरो लोहिताक्षः सर्वतो लोहितराजिः प्रायो भूमौ चरति। सोऽत्यभिष्यंदितमत्वात्सुतरां विरुद्धः । एष चाहारोऽनिर्दिष्टविकारकारी यथोक्तान् विस्फोटादीन् करोति।कालांतरेण च चिकित्सां विना प्राणानपि हरति । कश्चिच्च विरुद्धाहारो निर्दिष्टविकारकारी । यथोपोदकाऽतिसारायेति ॥ १६ ॥

प०—तदेव विरुद्धभोजनमाह—आमिषं मांसमानूपं महामृगवारिचरवारिशयाख्यं माषादिभिः सप्तभिः सह विरुध्यते आनूपेष्वपि मध्ये विशेषादतिशयेन पयसा सह मत्स्या विरुध्यन्ते।यतो मत्स्यक्षीरे स्वादुरसविपाकित्वान्महाभिष्यन्दिनी शीतोष्णयोगाच्च परस्परविरुद्धे मत्स्येष्वपि चिलीचिमाख्यो मत्स्यः पयसा सहात्यन्तविरुद्धः । स पुनः सकुलीरो लोहिताख्यः सर्वतो लोहितराजि प्रायो, भूमौ चरति सोऽत्यभिष्यन्दितमत्वात्सुतरां विरुद्धः । एष चाहारोऽनिर्दिष्टविकारकारि यथोक्तान् विस्फोटादीन् करोति । कालान्तरेण च चिकित्सां विना प्राणानपि हरति । कश्चिच्च विरुद्धाहारो निर्दिष्टविकारकारी । यथा उपोदिकातिसारायेति ॥ १६ ॥

हे०—तथानूपस्य माषादिभिर्विरोधमाह—विरूढकमङ्कुरितं धान्यं, माषादिष्वेकेनापि विरोधो ज्ञेयः । यदाह खारणादिः—" गुडमाषतिलक्षीरविरूढाबिसमूलकैः ग्राम्यानूपौदमांसानामेकेनापि विरुध्यते ॥" इति । विरोधश्चैकध्यमभ्यवहारे न तु क्रमेण । यथाह सुश्रुतः—ग्राम्यानूपौदकपिशितानि मधुगुडतिलपयोमाषमूलकविषविरूढकैश्च नैकध्यमद्यादिति । उक्तेष्वपि मत्स्यपयसोर्विशेषाद्विरोधः, ततोऽपि पयश्चिलीचिमयोः ॥ १६ ॥

**विरुद्धमम्लं पयसा सह सर्वं फलं तथा ॥१७॥**

स०—अम्लं द्रव्यं पयसा सह सर्वं विरुद्धम् । सर्वग्रहणं द्रवाद्रवग्रहणार्थम् । द्रवं कांजिकादि । अद्रवं चुक्रिकादिकमित्यर्थः । अन्यथा पयसो द्रवसमानजातीयत्वात्कांजिकाद्येव द्रवद्रव्यं विरुध्येत न चुक्रिकादिकमपि । ननु तृतीययैव सहार्थो लब्ध एव । यथा वाराहं श्वाविधा नाद्यादित्यत्र । ततः किं सहशब्देन सत्यमेतत् । सहग्रहणं तु नियमार्थम् । सहैकध्यमम्लेनोपयुज्यमानं विरुद्धम् । यदा त्वम्लेन गोरसादिना क्षीरशाकसंज्ञव्यंजनकरणार्थं पयः संस्क्रियते तदा तस्य द्रव्यांतरत्वापत्तेर्विरोधो नास्ति । तथा दधिक्षीरादिना घृतं पच्यते तत्राऽप्यविरोध एव । द्रव्यांतरत्वात् । पूर्वस्याऽपि सहशब्दस्यैवंप्रायमेव प्रयोजनमभ्यूह्यमिति । अपि च । क्षीरे भुक्त उत्तरे कालेऽप्यम्लं न भोज्यमिति प्रतिपादनार्थं च सहग्रहणम् । तथा चोक्तं संग्रहे । सर्वं चाम्लं पयसा सहैकध्यं तदुत्तरं वा विरुद्धमिति । फलं तथेति । फलमक्षोडादि च पयसा सह विरुद्धम् । सर्वशब्दः सर्वत्र न संबंधनीयो यतो न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धम् । अपि तु

त्रदेव । तथा च मुनिः परिसंख्ययैवाऽपठत् । तथा
म्रातकलकुचकरमर्दमोचदंतशठबदरकोशाम्रभव्य-
वकपित्थतित्तिडीकपालेवताक्षोडपनसनालिकेरदा--
मलकान्येवंप्रकाराणि चान्यानीति । तस्मान्न
फलं पयसा सहाभ्यवहर्तुं विरुद्धं किंतु मुन्यु-
। ॥ १७ ॥

ा०--अम्लं द्रव्यं पयसा सह सर्वं विरुद्धम् ।
हणं द्रवाद्रवग्रहणार्थम् । द्रवं कांजिकादि ।
चुक्रिकादिकमित्यर्थः । अन्यथा पयसो द्रव-
नजातीयत्वात् कांजिकाद्येव द्रवद्रव्यं विरुध्येत
चुक्रिकादिकमपि । ननु तृतीययैव सहार्थो
एव । यथा शाराहं श्वाविधा नाद्यादित्यत्र ।
किं सहशब्देन सत्यमेतत् । सहग्रहणं तु निय-
म् । सहैकध्यमम्लेनोपयुज्यमानं विरुद्धम् ।
त्वम्लेन गोरसादिना क्षीरशाकसंज्ञव्यञ्जनक-
र्थं पयः संस्क्रियते तदा तस्य द्रव्यान्तरत्वापत्ते-
धो नास्ति । तथा दधिक्षीरादिना घृतं पच्यते
व्यविरोध एव, द्रव्यान्तरत्वात् । पूर्वकस्यापि
ाब्दस्यैवंप्रायमेष प्रयोजनमभ्यूह्यमिति । अपि
क्षीरे भुक्ते उत्तरे कालेऽप्यम्लं न भोज्यमिति
ादनार्थं च सहग्रहणम् । तथा चोक्तं संग्रहे-
चाम्लं पयसा सहैकध्यं तदुत्तरं वा विरुद्ध-
। फलं तथेति । फलमक्षोडादि च पयसा सह
द्धम् । सर्वशब्दः सर्वत्र न सबन्धनीयो यतो
र्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धमपि तु
त्रदेव । तथा च मुनिः परिसंख्ययैवापठत् ।
-आम्राम्रातकलकुचकरमर्दमोचदन्तशठबदरको-
भव्यजाम्बवकपित्थतित्तिडीकपालेवताक्षोडप-
ालिकेरदाडिमामलकान्येवंप्रकाराणि चान्या-
। तस्मान्न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धं
मुन्युक्तमेव ॥ १७ ॥

ा०--अम्लादिभिः पयसो विरोधमाह--सर्वमम्लं द्रव-
च पयसा सह विरुद्धं, सहभावोऽत्र पयसा
मपि सेवितेनाम्लेन ज्ञेयः । उक्तं हि संग्रहे सर्वं चा-
यसैकध्यं तत उत्तरं वा विरुद्धम् । तथा सर्वं फलम-
नम्लं च ॥ १७ ॥

**कुलत्थवरककङ्गुवल्लमकुष्टकाः ॥ १८ ॥**

स०--तद्वदिति । फलवत् कुलित्थादयः पयसा सह
विरुद्धाः । वरको व्रीहिभेदः । वरकोद्दालकेति प्रागुक्तेः ।
वल्लमकुष्टकौ शिंबीधान्यविशेषौ । उपलक्षणं चेदम् ।
माषनिष्पावावपि हि विरुद्धौ पयसा सहेति संग्रहे
कथितम् ॥ १८ ॥

प०--तद्वदिति । फलवत्कुलत्थादयः पयसा
सह विरुद्धाः । वरको--व्रीहिभेदः । वरकोद्दाल-
केति प्रागुक्तेः । वल्लमकुष्टकौ--शिम्बिधान्यविशेषौ ।
उपलक्षणं चेदम् । " माषनिष्पावावपि हि विरु-
द्धौ पयसा सह । " इति संग्रहे कथितम् ॥ १८ ॥

हे०--तद्वत्कुलत्थादयः वरको व्रीहिभेदः, कङ्गुः
प्रियंगुः, वल्लः निष्पावः; मकुष्टः कलायभेदः । सुश्रुत-
श्चाह-वल्लीफलच्छत्राकवककरीराम्लफललवणकुलत्थपिण्या
कदधितैलानूपौदकविरोधिशुष्कशाकाजाविकमांसमद्यजा--
म्बवचिलीचिमगोधामत्स्यवराहमाषाश्च नैकध्यमश्नीयात्
पयसोऽन्ते वेति ॥ १८ ॥

**भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् । १९ ।**

स०--भक्षयित्वेति । हरितकं मूलकं कुठेरादि
भुक्त्वा पयस्त्यजेन्न पुनः शाकम् भुक्त्वा । मूलकादि-
स्निग्धस्विन्नं शाकसाधनेन साधितं भुक्त्वा क्षीरं न त्यजेत्।
एतस्मादेव च ज्ञापकान्मूलकादीनामुभयरूपत्वं वेद्यम् ।
मूलकादीनां यदि शाकत्वप्रसिद्धिरेवाऽभविष्यत् ततो
हरितकं मूलकादि भक्षयित्वेति तंत्रकृन्नावक्ष्यत् ।
तस्मान्मूलकस्य हरितकत्वं च ज्ञेयम् । लशुनेन सह क्षीरस्य
प्रयोगो य उक्तः साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःप-
लमिति स न विरुद्धः । अग्न्यादिसंपर्काद् द्रव्यांत-
रत्वोत्पत्तेः ॥ १९ ॥

प०--भक्षयित्वेति । हरितकं मूलकं कुठेरादि
भुक्त्वा पयस्त्यजेन्न पुनः शाकम् । मूलकादिपय-
स्त्यजेत् । स्निग्धस्विन्नं शाकसाधनेन साधितं भुक्त्वा
क्षीरं न त्यजेत् । एतस्मादेव च ज्ञापकान्मूलकादी-
नामुभयरूपत्वं वेद्यम् । हरितकत्वं, शाकत्वं च ।
तथा मूलकादीनां यदि शाकत्वप्रसिद्धिरेवाभविष्यत्
ततो हरितकं मूलकादि भक्षयित्वेति तन्त्रकृन्नाव-
क्ष्यत् । तस्मान्मूलकस्य हरितकत्वं च ज्ञेयम् ।
लशुनेन सह क्षीरस्य प्रयोग उक्तः--"साधयेच्छुद्ध-

प०-मध्वादीनि समांशानि तुल्यप्रमाणानि मिथो विरुध्यन्ते । कथम् । द्वे वा त्रीणि चैकत्र वा सर्वाणि । यथा-मधुसर्पिषी, मधुवसे, माक्षिकतैले, माक्षिकोदके । त्रीणि त्रीणि यथा-मधुसर्पिर्वसेत्येवमादि । ननु यद्येवंविधो विरोध उच्यते तत्कथमगस्त्यलेहे कुडवं च पृथग्घृतात् । तैलात् सपिप्पलीचूर्णवत् सिद्धशीते च माक्षिकादिति तैलघृतमधूनां तुल्यांशानां प्रयोगक्रमः । केवलानां मध्वादीनां समांशानामुपयोगो दिवसादविरोध एव न तु द्रव्यान्तरसंयोगेन । तेषां संयोगसंस्कारादिवशाद्विशिष्टगुणान्तरोत्पत्तिर्दृष्टा । तस्मादगस्त्यलेहादौ द्रव्यान्तरे संयोगादिवशादविरोध एव ॥ २४ ॥

हे०—मध्वादीनां मिथः संयुक्तानां विरोधमाह—द्विशस्त्रिश इत्युपलक्षणम्, तेन चतुष्पञ्चशोऽपि ज्ञेयः । उक्तं ह्यन्यत्र मधुसर्पिर्वसातैलपानीयानां मानविरुद्धानां द्वित्रिचतुष्पञ्चमिलितानां षड्विंशतिर्विरुद्धप्रकारा भवन्तीति ॥ २४ ॥

**भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ।**
**मधुपुष्करबीजं च मधुमैरेयशार्करम् ।**
**मन्थानुपानः क्षैरेयो हारिद्रः कटुतैलवान् ॥२५॥**

स०-भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतोऽनुपानेन विरुध्येते । तृतीयार्थे तसिप्रत्ययः । अपिशब्दान्न केवलं समांश इत्यर्थः । मधु माक्षिकं पुष्करबीजं चैकध्यं विरुध्यते । तथा मधु मार्द्वीकं मैरेयं खर्जूरासवं शार्करं शर्करया कृतं मद्यमेकत्रोपयुक्तं विरुध्यते । क्षैरेयः पायसो मंथानुपानो विरुद्धः । मंथोऽनुपानं यस्य स एवम् । क्षैरेय इति क्षीराड्ढञ् । हारिद्रः कुप्रसवः शाकविशेषः सार्पच्छत्रानुकारी पीताभासः कटुतैलवान् सर्षपतैलभृष्टो विरुद्धः ॥ २५ ॥

प०—भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानेन विरुध्येते । तृतीयार्थे तसिः । अपिशब्दान्न केवलं समांश इत्यर्थः। मधु माक्षिकम्, पुष्करबीजं चैकध्यं विरुध्यते । तथा मधु माक्षिकं मैरेयम्, खर्जूरासवम्, शार्करं शर्करया कृतं मद्यमेकत्रोपयुक्तं विरुध्यते । क्षैरेयः पायसो मन्थानुपानो विरुद्धः । मन्थोऽनुपानं च यस्य स एवम् । क्षैरेय इति "क्षीराड्ढञ्"। हारिद्रः कुप्रसवः शाकविशेषः सार्पच्छत्रानुकारी पीताभासः कटुतैलवान् सर्षपतैलभृष्टो विरुद्धः २५ ॥

हे०—मध्वाज्ययोर्दिव्यानुपानाद्विरोधमाह—**भिन्नांशे** इति । अपिशब्दात्समांशे च । मधुपुष्करबीजयोर्विरोधमाह—मधु—माक्षिकम्, पुष्करबीजं—पद्मबीजम् मध्वादीनां विरोधमाह—मधु माक्षिकं मार्द्वीकमित्य**रुणदत्तः** । मैरेयो धान्यासव इति **चंद्रनंदनः** । खर्जूरासव इत्यरुणदत्तः इंदुश्च । मैरेयो धातकीपुष्पगुडधान्यक्षसहितमिति **माधवकारः**। " आसवस्य सुरायाश्च द्वयोरप्येकभाजने । सन्धानं तद्विजानीयान्मैरेयमुभयात्मकम् ॥ " इति । **जेज्जटो, ब्रह्मदेवश्च** । पैष्टी-गुडासवमधुभिः, पैष्टी मध्वासवगुडैर्वा त्रियोनिर्मैरेय इति डल्लणः । सर्वमेतत्प्रमाणं सर्वेषामामत्वाच्छंक्यमानस्यापि विरोधस्य परिहरणीयत्वाच्च । शार्करं शर्कराकृतं मद्यम् । अत्र चकारमनुवर्त्य पद्मोत्तरिकाशाकमनुक्तमपि समुच्चेयम्, चतुर्णां योगस्य विरुद्धत्वात् । **चरकोऽ**प्याह—पद्मोत्तरिकाशाकम्, शार्करो मैरेयो मधु च सहोपयुक्तं वातं चातिप्रकोपयतीति । **संग्रहेऽ**प्येवमेवोक्तम् । पद्मोत्तरिकाशाकम्-कुसुम्भशाकम् । क्षैरेयस्य मन्थानुपानाद्विरोधमाह-द्रवालोडिताः सक्तवो-मंथः, क्षैरेयः पायसः । हरिद्राकटुतैलयोर्विरोधमाह—हारिद्रः पीतवर्णच्छत्रविशेषः कंदः, कटुतैलवान्सर्षपतैलभृष्टः ॥ २५ ॥

**उपोदकाऽतिसाराय तिलकल्केन साधिता २६**

स०--उपोदका तिलकल्केन साधिताऽतिसाराय । तादर्थ्ये चतुर्थ्यत्र । अर्थो निमित्तम् । तस्मै इदं तदर्थं तदर्थमेव तादर्थ्यम् । तेनातीसारकरणमित्ययमर्थो जायते ॥ २६ ॥

प०—उपोदका—तिलकल्केन साधिताऽतिसाराय । तादर्थ्ये चतुर्थ्यत्र । अर्थो निमित्तम् । तस्मै इदं तदर्थम्, तदर्थमेव तादर्थ्यम् । तेनातिसारकरणमित्यर्थो जायते ॥ २६ ॥

हे०—उपोदकायास्तिलकल्कसंस्कारेण विरोधमाह—उपोदकेति ॥ २६ ॥

**बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ॥**
**भृष्टा वराहवसया सैव सद्यो निहन्त्यसून् २७॥**

स०—बलाका पक्षिजातिर्वारुण्या प्रसन्नया युक्ता विरुद्धा । कुल्माषैर्नातिस्विन्नमुद्गादिभिश्च सह विरुध्यते।

सैव बलाका वराहवसया भृष्टा सद्यस्तत्क्षणादेव प्राणान् मारयति ॥ २७ ॥

प०-बलाका पक्षिजातिर्वारुण्या प्रसन्नया युक्ता विरुध्यते । कुल्माषैर्नातिस्विन्नमुद्गादिभिश्च सह विरुध्यते । सैव बलाका वराहवसया भृष्टा सद्यस्तत्क्षणादेव । प्राणान् मारयति ॥ २७ ॥

हे०—बलाकाया वारुणीयोगात्कुल्माषयोगाच्च विरोधमाह—बलाकेति । अर्द्धस्विन्ना मुद्गादयः कुल्माषाः । बलाकाया वराहवसया भर्जनाद्विरोधमाह—भृष्टेति ॥२७॥

**तद्वत्तित्तिरिपत्राढ्यगोधालावकपिंजलाः ।**
**एरंडेनाग्निना सिद्धास्तत्तैलेन विमूर्छिताः २८॥**

स०-तित्तिर्यादय एरंडेनाग्निना सिद्धास्तत्तैलेनैरंडतैलेन विमूर्छिता बहुशो भृष्टास्तद्वद्बलाकावत्सद्यो जीवितहराः । पत्राढ्यो मयूरः ॥ २८ ॥

प०—तित्तिर्यादय एरण्डेनाग्निना सिद्धास्तत्तैलेनैरण्डतैलेन मूर्छिता बहुशो भृष्टास्तद्वद्बलाकावत् जीवितहराः । पत्राढ्यो मयूरः ॥ २८ ॥

हे०—तित्तिर्यादीनां संस्कारविशेषाद्विरोधमाह—तद्वदिति । पत्राढ्यो-मयूरः, कपिञ्जलो—गौरतित्तिरिः । एरण्डेन—एरण्डकाष्ठोत्थेन, तत्तैलेन—एरण्डतैलेन, विमूर्छिताः—भृष्टाः, तद्वद्बलाकावत्सद्यो घ्नन्ति ॥ २८ ॥

**हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ॥**
**हारिद्रवह्निना सद्यो व्यापादयति जीवितम् २९**

स०-हारीतस्य पक्षिविशेषस्य मांसं हारिद्रशूलके प्रोतमासक्तं च तत्पाचितं च हारिद्राग्निना सद्यो जीवितं हंति ॥ २९ ॥

प०—हारीतस्य पक्षिविशेषस्य मांसं हारिद्रशूलकप्रोतपाचितं हारिद्राग्निना सद्यो जीवितं हन्ति ॥ २९ ॥

हे०—हारीतस्य संस्कारविशेषाद्विरोधमाह—हारीतः-प्रतुदपक्षिविशेषः, हारिद्रशूलकं-दारुहरिद्राकाष्ठकृतं शूलम् , हारिद्रवह्निना- दारुहरिद्राकाष्ठाग्निना ॥ २९ ॥

**भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ३०॥**

स०—तदेव हारीतमांसं भस्मपांशुपरिध्वस्तं समाक्षिकं विरुद्धम् । भस्म च पांशुश्च भस्मपांशू, भस्मरेणू ताभ्यां परिध्वस्तं धूसरितम् । सिद्धसारे चोक्तम् । न जातु कटुतैलेन भृष्टामद्यादुपोदकाम् । प्रियंगुकल्कसिध्धांगः पायसं न समाचरेदिति ॥ ३० ॥

प०—तदेव हारीतमांसं भस्मपांशुपरिध्वस्तं समाक्षिकं विरुद्धम् । भस्म च पांशुश्च भस्मपांशू ताभ्यां परिध्वस्तं ताभ्यां धूसरितम् । सिद्धसारे चोक्तम्—"न जातु कटुतैलेन भृष्टामद्यादुपोदकाम् । प्रियंगुः कल्कसिद्धाङ्गः पायसं न समाचरेत्" इति ॥३०॥

हे०—हारीतमांसस्य भस्मादिसंयोगाद्विरोधमाह—भस्मना, पांशुना वा परिध्वस्तं सद्यो विलुलितम्, मध्वक्तं हारीतमांसं सद्यो जीवितं व्यापादयति ॥ ३० ॥

द्रव्याणामानंत्यात्प्रतिपदोक्त्याऽशेषविरुद्धसंग्रहः कर्तुमशक्य इति तत्संग्रहार्थं व्यापि लक्षणमाह—

**यत्किंचिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ।**
**विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ३१ ।**

स०—यत्किंचिदन्नपानौषधं वा दोषमुत्क्लेश्य स्वस्थानात्संचलय्य न हरेद्बहिर्न निष्कासयेत् तत्समासतः संक्षेपतो विरुद्धम् । शुद्धिरत्रेष्टा । अत्र विरुद्धाहारकृते विकारे शुद्धिर्वमनविरेकादिरूपेष्टा श्रेष्ठा । कुपितदोषसमूहस्य वमनादिभिर्निर्हरणात्तन्निर्हारे चारोग्योत्पत्तिः शमो वेति । न केवलं शुद्धिरिष्टा शमश्चेष्टः । कैः । तेषां वैरोधिककोपितदोषाणां तत्कृतानां वा विस्फोटादीनां विकाराणां विरोधिभिः प्रतिपक्षभूतैरौषधैः ॥ ३१ ॥

प०—द्रव्यापरीतं तत्प्रतिपदोक्त्याऽशेषविरुद्धः सङ्ग्रहः कर्तुमशक्यः इति तत्सङ्ग्रहार्थं व्यापि लक्षणमाह—यत्किञ्चिदन्नपानौषधं, वा दोषमुत्क्लेश्य स्वस्थानात् संचाल्य न हरेत् न निष्कासयेत् तत्समासतः संक्षेपतो विरुद्धम् । शुद्धिरत्रेष्टा । अत्र विरुद्धाहारे कृते विकारे शुद्धिर्वमनविरेकादिरूपा इष्टा श्रेष्ठा । कुपितदोषसमूहस्य वमनादिभिर्निर्हरणात्तन्निर्हारे चारोग्योत्पत्तिः । शमो वेति । न केवलं शुद्धिरिष्टा शमश्चेष्टः । कैः । तेषां वैरोधिककोपितदोषाणां तत्कृतानां वा विस्फोटादीनां विकाराणां विरोधिभिः प्रतिपक्षभूतैरौषधैः ॥ ३१ ॥

हे०—अनुक्तविरोधसंग्रहार्थं विरोधसामान्यलक्षणमाह-यत्किंचिद्द्रव्यं दोषमुत्क्लेशयति न तु निर्हरति, तत्सर्वं विरुद्धं

समासतः संक्षेपात् । विस्तरतस्तु संयोगादिभेदैरनन्तः शोधनमप्युत्क्लेशयति परं निर्हरति, शमनमपि न निर्हरति परं नोत्क्लेशयतीति न तयोर्विरुद्धत्वम्। अथ विरुद्धान्नपानजानां व्याधीनां प्रतीकारः । तत्र उत्पन्नानां प्रतीकारमाह-शुद्धिर्वमनविरेचनादिका। अत्र विरुद्धान्नजेषु व्याधिषु ये तु शुद्धिं नार्हन्ति तेषां शमनं प्रतीकार इष्टः । कैस्तद्विरोधिभिस्तस्य विरुद्धान्नस्य विरोधिभिः प्रतिपक्षभूतैराहारविहारौषधैः ॥ ३१ ॥

न च शोधनशमनरूप एवोपक्रमोऽत्रेत्याह—

**द्रव्यैस्तैरेव वा पूर्वं शरीरस्याऽभिसंस्कृतिः ३२**

स०—तैरेव वैरोधिककुपितदोषप्रतिपक्षभूतैर्द्रव्यैः पूर्वं प्रथमं या शरीरस्याऽभिसंस्कृतिः सा च विरुद्धाहारकृते विकारे प्रशस्तेति। यथा माक्षिकहरीतक्यादिना पित्तश्लेष्महरणौषधेन संततशीलनादभिसंस्कृते देहे पित्तश्लेष्मकरं विरुद्धमुपयुक्तं सद्विकर्तुमशक्तम् । एतदुक्तं भवति। विरुद्धप्रतिपक्षगुणवता द्रव्येण देहस्तथा दार्ढ्यं ग्राहितो यथा विरुद्धमपि द्रव्यं विकारं कर्तुं नालम्॥ ३२ ॥

प०—न च शोधनशमनरूप एव क्रम इत्यत्राह-तैरेव वैरोधिककुपितदोषप्रतिपक्षभूतैर्द्रव्यैः पूर्वं प्रथमं या शरीरस्याभिसंस्कृतिः सा च विरुद्धाहारे कृते विकारे प्रशस्तेति । यथा----माक्षिकहरीतक्यादिना पित्तश्लेष्महरणौषधेन सन्ततशीलनादभिसंस्कृते देहे पित्तश्लेष्मकरं विरुद्धमुपयुक्तम्। तद्धि कर्तुमशक्यम्। एतदुक्तं भवति । विरुद्धप्रतिपक्षगुणवता द्रव्येण देहस्तथा दार्ढ्यं ग्राहितो यथा विरुद्धमपि द्रव्यविकारं कर्तुं नालम्॥ ३२ ॥

हे०—अनुत्पन्नानामुत्पत्तिप्रतिबन्धहेतुप्रतिप्रकारमाह-तैरेव विरुद्धान्नविरोधिभिरेव पूर्वं विरुद्धान्नसेवनात्प्रागभिसंस्कृतिस्तद्गुणभावितत्वं तैर्विरुद्धान्नैरेव शरीरस्याभिसंस्कृतिरिति व्याख्याने सात्म्यमल्पं च भोजनमिति वक्ष्यमाणेन सात्म्येन पौनरुक्त्यम् ॥ ३२ ॥

**व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम्।**
**विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम्**

स०--व्यायामो विद्यते येषामित्यर्शआदित्वादच्। वयःस्थास्तरुणाः। बलेन शालितुं श्लाघितुं शीलं येषां ते बलशालिनः । स्निग्धाः स्निग्धवृष्याहारसात्म्याः व्यायामिनां विरोध्यपि भोजनं न पीडायै न रोगोत्पत्तये । एवं स्निग्धादीनां प्रत्येकं संबंधः कार्यः केचिद्व्यायामीति पठंति । तथा विरुद्धमप्यन्नं यदभ्यासात्सात्म्यं सात्मीभूतं तथाऽल्पमल्पमात्रया च यद्भोजनं तच्च विरुद्धमपि न पीडायै इति योज्यम् ॥ ३३ ॥

प०—व्यायामो विद्यते येषाम्, स्निग्धः दीप्तोऽग्निर्येषाम्। वयस्थास्तरुणाः। बलेन शालितुं शीलं येषां ते बलशालिनः। स्निग्धाः वृष्याहारसात्म्याः व्यायामिनां विरोध्यपि भोजनं न पीडायै न रोगोत्पत्तये। एवं स्निग्धादीनां प्रत्येकं सम्बन्धः कार्यः केचिद्व्यायामीति पठन्ति। तथा विरुद्धमप्यन्नं यदभ्यासात् सात्म्यं सात्मीभूतं तथा अल्पमात्रया च यद्भोजनं तच्च विरुद्धमपि न पीडायै इति योज्यम्॥ ३३ ॥

हे०—व्यायामादीनामनुत्पत्तिहेतुत्वमाह——व्यायामिनो व्यायामनित्याः, स्निग्धाः—स्नेहभावितशरीराः, वयस्थास्तरुणाः, बलशालिनः—सहजबलयुक्ताः। सहात्मना भवं सात्म्यम्—आत्मनः सहायभूतमनुकूलं सुखावहमित्यर्थः तच्च द्विविधं—कृत्रिममकृत्रिमं च। तत्र यदभ्यासेन क्रियते तत्कृत्रिम् । उक्तं च संग्रहे—"अहितान्यपि चान्येषामभ्यासादुपशेरते । " इति । अकृत्रिमं द्विविधं निरुपाधिकं, सोपाधिकं च । तत्र दोषादिनिरपेक्षं निरुपाधिकम् । तदेव सात्म्याख्यम्। यदाह चरकः—"उपशेते यदौचित्यादोषसात्म्यं तदुच्यते " इति । दोषादिसापेक्षं सोपाधिकम् । तत्र दोषादिविपरीतगुणत्वमुपाधिः । यदाह खारणादिः—"दोषप्रकृतिदेशर्तुव्याधीनां स्वगुणैः पृथक् विपरीतगुणं सात्म्यं तुल्यं वासात्म्यमुच्यते ॥" इति असात्म्यं तु यथाकथं सात्म्यविपरीतम् । तत्र कृत्रिमं चिरपरित्यागेन क्रियते, सोपाधिके दोषादितुल्यगुणत्वमुपाधिः । सात्म्यासात्म्ये एव निरुपाधिके पथ्यापथ्ये उच्येते । सोपाधिके त्वौषधानौषधे । तत्र विरुद्धभोजनस्य निरुपाधिकासात्म्यस्य कृत्रिमत्वेन सोपाधिकत्वेन वा सात्म्यत्वे सति न पीडाकरत्वम् । निरुपाधिकसोपाधिककृत्रिमाणामुत्तरोत्तरं बलवत्त्वात् । किमत्र प्रमाण-

१ अत्र " भूतम् " इति खपुस्तके वर्तते ।
२ अत्र " चासात्म्यम्" इति खपुस्तके ।

मितिचेत् । "निरुपाधिकात्सोपाधिकं बलीयः" इत्यत्र तावत्संग्रहवचनं प्रमाणं—" दोषादिवैपरीत्येन हरंते रोगिणां रुजम् । ऐकध्यं दधिदुग्धादियोजना न विरुध्यते ॥" इति । ताभ्यामपि कृत्रिमं बलीय इत्यत्र ऋतुचर्योक्तऋतुसन्धिक्रमः । तत्र हि पूर्वर्तुचर्याया उत्तरत्र सम्बन्धात्सोपाधिकमसात्म्यत्वम् । पूर्वर्तुशीलनाच्च कृत्रिमं सात्म्यत्वम् । उत्तरर्तुचर्यायास्तु तत्सम्बन्धात्सोपाधिकं सात्म्यत्वम् । पूर्वतावशीलनाच्च कृत्रिममसात्म्यत्वम् । तत्र कृत्रिमाभ्यां सोपाधिकयोर्बाधं मत्वा तन्निवृत्त्यर्थमृतुसन्धिक्रम उक्तः । देशकालप्रकृतिदोषव्याधिसात्म्यानामुत्तरोत्तरं बलवदुत्तरोत्तरमेवान्तरंगत्वात् । अल्पं हीनमात्रं, नन्वल्पमप्यल्पां पीडां करोत्येव तत्कथं न पीडयेत्, सत्यं करोत्येव । किंत्वसावल्पत्वेनानभिव्यक्तत्वादसद्वदुपचर्यते, अनुदरा कन्येतिवत् । असकृदुपयुज्यमाने तु तस्मिन्नभिव्यज्यत एव । विरुद्धमपि सात्म्यं न बाध्यते किंपुनरविरुद्धम् अतः सात्म्यीकरणमाह ॥ ३३ ॥

अथ यद्यपथ्यमपि सात्म्यतां प्राप्तं तत्किं त्याज्यं न वा । कथं च त्याज्यं कथं च पथ्यं भोज्यमित्याह—

**पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत्३४॥**

स०—अपथ्यमहितमन्नं पानं वा यल्लंघनप्लवनजागरणस्वप्नादिकं वा चेष्टितमहितमभ्यस्तं तत्पादेन चतुर्थांशेन त्यजेदहितफलत्वात् । तद्धि शरीरोचितमप्यपथ्यत्वादुदर्के दोषाय संपद्यते न गुणाय । यदि तु तदपथ्यमभ्यस्तं तथा सात्मीभूतं यस्मिंश्चतुर्थांशेनाऽपि त्यज्यमाने शरीरबाधा शक्यते वह्निमांद्याद्वा तदा पादपादेन वा षोडशांशेन त्यजेदिति वाशब्दार्थः ॥ ३४ ॥

प०—यद्यपथ्यमपि सात्म्यत्वं प्राप्तं तत्किं त्याज्यं न वा । कथं च त्याज्यं कथं च पथ्यं भोज्यमित्याह—अपथ्यमहितमन्नं पानं वा । यल्लङ्घनप्लवनजागरणस्वप्नादिकं वा चेष्टितमहितमभ्यस्तं तत्पादेन चतुर्थांशेन त्यजेदहितफलत्वात् । तद्धि शरीरोचितमपथ्यत्वादुदर्के दोषाय संपद्यते न गुणाय । यदि तु तदपथ्यमभ्यस्तं तथा सात्मीभूतं यस्मिंश्चतुर्थांशेनापि त्यज्यमाने शरीरोचितमप्यपथ्यत्वादुद्बाधा शक्यते वह्निमान्द्याद्वा तदा पादपादेन वा षोडशांशेन त्यजेदिति वाशब्दार्थः ॥ ३४ ॥

हे०—तत्र सात्म्यीकरणे क्रममाह—अभ्यासात्सात्म्यतां गतं यदपथ्यं तत्पादेन चतुर्थांशेन, पादपादेन वा षोडशांशेन वा त्यजेत् ॥ ३४ ॥

**निषेवेत हितं तद्वदेकद्वित्र्यंतरीकृतम् ॥ ३५ ॥**

स०—तेन तुल्यं वर्तते तद्वत् । तेनैव क्रमेण पादेन पादपादेन वा हितं निषेवेत शीलयेत् । कथमेतद्वयमप्यपथ्यरूपं त्याज्यं पथ्यं निषेव्यं चेत्याह । एकेत्यादि । एकश्च द्वौ च त्रयश्च तैरंतरीकृतम् । एकद्वित्रिभिरन्नकालैर्व्यवधानं कृत्वाऽपथ्यं पादेन पादपादेन वा त्यजेत् । एकद्वित्र्यंतरीकृतमिति क्रियाविशेषणत्वादत्र नपुंसकलिंगत्वम् । अधुनैतदेव स्पष्टीकृत्योच्यते । अपथ्यात्पाटलव्रीह्यादेरभ्यस्तात्पादमेकं त्यक्त्वाऽनुचितात्पथ्याद्रक्तशाल्यादेस्तमेव पादं दत्त्वा चतुष्पात्त्वं संपाद्य योज्यम् । एवमन्नकालमेकमतिवाहयेत् । एवं पादेनापथ्यमभ्यस्तं त्यक्तं भवति । पथ्यं चानुचितं निषेवितं भवति । तथा द्वितीयेऽन्नकाले सर्वमपथ्यं योजनीयम् । एवमेकेनान्नकालेनापथ्यपादोंऽतरीकृतः । ततस्तृतीयेऽप्युचितादपथ्यात्पादद्वयमपास्यानुचितात्पथ्यात्पादद्वयमुपयुज्य ततश्चतुर्थे सर्वमपथ्यं भोज्यं पंचमे च । एवमन्नकालद्वयेन पथ्यपादद्वयसहितमपथ्यपादद्वयमंतरीकृतम् । ततः षष्ठेऽन्नकाले पादमुचितादपथ्यात्पादत्रयमनुचितात्पथ्याद्भुक्त्वा सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम् । एवमन्नकालत्रयेणापथ्यमंतरीकृतम् । ततो दशमेऽन्नकाले सर्वं पथ्यं सेवनीयम् । एवं पादपादेनाप्ययमेव क्रमः । स्पष्टार्थं च दिक्प्रदर्श्यते । तथा यवकादेः षोडशांशं त्यक्त्वाऽनुचिताच्छाल्यादेः पथ्यात्षोडशांशमेव दत्त्वा चतुष्पात्त्वं संपाद्य भोज्यम् । एवमपथ्यमभ्यस्तं पादपादेन त्यक्तं भवति पथ्यं चानुचितं निषेवितं भवति । द्वितीयेऽन्नकाले सर्वमपथ्यं सेव्यम् । एवमेकेनापथ्यषोडशांशोंऽतरीकृतः ।ततस्तृतीयेऽप्युचितादपथ्यात्पादपादद्वयमपास्याऽनुचितात्पथ्यात्पादपादद्वयं दत्त्वा चतुष्पात्त्वं संपाद्य

सेव्यम् । ततश्चतुर्थे पंचमे वाऽन्नकाले सर्वमपथ्यं भोज्यम्। एवं कालद्वयेन पादपादद्वयमपथ्यस्यांतरीकृतम् । ततः षष्ठेऽन्नकालेऽनुचितात्पथ्यात्पादपादत्रयमुचितादपथ्या-त्पादपादास्त्रयोदशेति भोज्यम् । ततः सप्ता-ष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम् । एवं कालत्रयेणांतरीकृताः । ततो दशमेऽन्नकाले पथ्याद-नुचितात्पादपादाश्चत्वारः । अपथ्यपादपादा द्वादशेति भोज्यम् । तत एकादशे सर्वमपथ्यं भोज्यम् । तत एकेनान्नकालेनांतरीकृतम् । एवमन्नका-लद्वयत्रयांतरितं च तावद्योज्यं यावत्पथ्यस्य षोडश-पादाः सेव्यतया संपद्यंते ॥ ३९ ॥

प०—तेन तुल्यं वर्तते तद्वत् । तेनैव क्रमेण पादेन पादपादेन वा हितं निषेवेत शीलयेत् । कथमेतद्द्वयमप्यपथ्यरूपं त्याज्यं निषेव्यं वेत्यत आह—एकेत्यादि । एकश्च द्वौ च त्रयश्च तैरन्तरीकृ-तम् । एकद्वित्रिभिरन्नकालैर्व्यवधानं कृत्वा अपथ्यं पादेन पादपादेन वा त्यजेत् । एकद्वित्र्यन्तरीकृत-मिति क्रियाविशेषणत्वादत्र नपुंसकलिङ्गत्वम् । अधुनैतदेव स्पष्टीकृत्योच्यते । अपथ्यात्पाटलव्री-ह्यादेरभ्यस्तात् पादमेकं त्यक्त्वाऽनुचितात्पथ्याद्र-क्तशाल्यादेस्तमेव पादं दत्त्वा चतुष्पात्त्वं सम्पाद्य योज्यम् । एवमन्नकालमेकमतिवाहयेत् । एवं पादे-नापथ्यमभ्यस्तं त्यक्तं भवति पथ्यं चानुचितं निषे-वितं भवति । तथा द्वितीयेऽन्नकाले सर्वमपथ्यं योजनीयम् । एवमेकेनान्नकालेनापथ्यपादोऽन्तरी-कृतः ततस्तृतीयेऽप्युचितादपथ्यात्पादद्वयमपास्या-नुचितात्पथ्यात्पादद्वयमुपयुज्य ततश्चतुर्थे सर्वमपथ्यं भोज्यम्, पञ्चमे च । एवमन्नकालद्वयेन पथ्यपादद्वय-सहितमपथ्यपादद्वयमन्तरीकृतम् । ततः षष्ठेऽन्नकाले पादमुचितादपथ्यात्पादत्रयमनुचितात्पथ्याद्भुक्त्वा सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम् । एवमन्नकालत्रयेणापथ्यमन्तरीकृतम् । ततो दशमेऽन्न-काले सर्वं पथ्यं सेवनीयम् । एवं पादपादेनाप्य-यमेव क्रमः स्पष्टार्थं च दिक् प्रदर्श्यते । तथा यव-कादेः षोडशांशं त्यक्त्वा अनुचिताच्छाल्यादेः पथ्यात् षोडशांशमेव दत्त्वा चतुष्पात्त्वं संपाद्य भोज्यम् । एवमपथ्यमभ्यस्तं पादेन त्यक्तं भवति पथ्यं वानुचितं निषेवितं भवति । द्वितीयेऽन्नकाले सर्वमपथ्यम् । एवमेकेनापथ्यषोडशांशोऽन्तरी-कृतः । ततस्तृतीयेऽप्युचितादपथ्यात्पादपादद्वयम-पास्यानुचितात् पथ्यात्पादपादद्वयं दत्त्वा चतुष्पात्त्वं संपाद्य सेव्यम् । ततश्चतुर्थे पञ्चमे वान्नकाले सर्व-मपथ्यं भोज्यम् । एवं कालद्वयेन पादपादद्वयम-पथ्यस्यान्तरीकृतम् । ततः षष्ठेऽन्नकाले-ऽनुचितात्पथ्यात्पादत्रयमुचितादपथ्यात्पादपादा-स्त्रयोदशेति भोज्यम् । ततः सप्तमाष्टमनवमान्नकाले सर्वमपथ्यं भोज्यम् । एवं कालत्रयेणान्तरीकृता ततो दशमेऽन्नकाले पथ्यादनुचितात्पादपादाश्चत्वार अपथ्यपादपादा द्वादशेति भोज्यम् । तत एकादश सर्वमपथ्यं भोज्यम् । तत एकेनान्नकालेनान्तर-कृतम् । एवमन्नकालद्वयत्रयान्तारितं च तावद्यो-ज्यम् । यावत्पथ्यस्य षोडशपादाः सेव्यतर सम्पद्यन्ते ॥ ३५ ॥

हे०—पथ्यं च तद्वन्निषेवेत । यावतांशेनापथ्यं त्य तावतांशेन भजेत् । नित्यसेव्यस्याहारराशेर्यदपथ्ये न्यूनत्वं तत्पथ्येन पूरयेदित्यर्थः । कथं त्यजेत् एका-द्व्यन्तरीकृतं यथा भवति एकद्वित्रिभिर्दिवसैरंतरीकृ विजातीयभोजनेन व्यवहितम् । एतदुक्तं भवति यदा पादेन त्यागः क्रियेत तदा प्रथमेऽह्न्यपथ्यस्य त्र पादाः, पथ्यस्यैकः । द्वितीयेऽहनि चत्वारोऽप्यपथ्यस्य तृतीये प्रथमवत् अपथ्यस्य पादास्त्रयः, पथ्यस्य ए इत्येकांतरीकरणम् । चतुर्थेऽहनि द्वौ पादावपथ्यस्य पञ्चमषष्ठयोस्तृतीयवत् । सप्तमे चतुर्थवत् । इति द्व्यन्त-रीकररणम् । अष्टमे त्वपथ्यस्यैकः, पथ्यस्य त्रयः नवमदशमैकादशेषु सप्तमवत् । द्वादशेऽष्टमवत् । इ-त्र्यन्तरीकरणम् । त्रयोदशे चत्वारोऽपि पथ्यस्य । च-र्दशे द्वादशवत् । पञ्चदशे त्रयोदशवत् । इति पुनरेव-न्तरीकरणं द्व्यन्तरत्र्यन्तरकिरणं पुनर्नास्ति चतु-मपि पादानां पूर्णत्वात् । षोडशांशपक्षे त्वेकाद्वित्र्यं-रीकरणस्य पञ्चकृत्व आवृत्तिः । तत एकमेकांतरीकरण एवं त्रिषष्ट्या दिवसैः षोडशांशाः पूर्यन्ते । अत्र यद्य व्यवधायकविशेषो नोक्तः तथापि पूर्वस्मिन्नंतरे यद्व्यवधे तदेवोत्तरस्मिन् व्यवधायकं क्रियते तदा न क्रम आह भवेत् । क्रमश्चात्र प्रधानम् । अन्तरं च दिनैरेव न भोज

ः। उक्तं च तंत्रांतरे—"अपथ्यं सात्म्यमत्यक्तं चेष्टां ादहास्त्यजेत्। भजेच्च पादशः पथ्यमेकद्वित्रिदिनान्त- ॥" इति। चतुर्भागषोडशभागयोरधरोत्तरकल्पनानिषे- त्वात्पञ्चषट्सप्तभागादिकल्पनानां न निषेधः। अतस्ता वस्थानुसारतः स्वयमूह्याः। यद्यप्यत्र वाक्ये भट्टार- रैश्चंद्रादिभिर्बहवः पक्षा दर्शिताः। तथाप्ययमेव पक्षो ानिल्यस्माभिर्दर्शितः। ज्यायस्त्वं त्वस्य वाक्य- नैवैनैव प्रतीयमानत्वात्। चतुर्दशाहर्तुसंधिकरणे- र्थस्याभिप्रेतत्वात् ॥ ३५ ॥

एवमनेन क्रमेणापथ्यदोषास्त्यक्ताः पीडायै न भवंति गुणाश्च संवर्धिताः स्थिरतां प्रप्नुवंतीत्यत आह—

**थ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा।**
**भ्यासात्म्यविकाराय जायते सहसाऽन्यथा ॥**

स०—हि यस्मात्सहसा क्रममिममनालोच्याऽन्यथै- तविध्यतिक्रमेणाऽपथ्यमपि त्यक्तं सात्म्यविकाराय ते पथ्यमेव वा सहसा शीलितमसात्म्यविकाराय ते। सात्म्यासात्म्याभ्यां विकारः सात्म्यासात्म्यः- कारस्तस्मै। क्लृपि संपद्यमाने चतुर्थीति र्थी ॥ ३६ ॥

प०—एवमनेन क्रमेणापथ्यदोषास्त्यक्ताः पीडायै न न्ति। पथ्यगुणाः स्वसंवर्धिताः स्थिरत्वं नुवन्तीत्यत आह—हि यस्मात्सहसा क्रममिममना- च्यान्यथैवोक्तविध्यतिक्रमेणापथ्यमपि त्यक्तं सा- यं विकाराय जायते। पथ्यमेव वा सहसा शीलि- मसात्म्यविकाराय जायते। सात्म्यासात्म्याभ्यां कारः सात्म्यासात्म्यविकारस्तस्मै। क्लृपि म्पद्यमाने चतुर्थीति चतुर्थी ॥ ३६ ॥

हे०—अक्रमेण सात्म्यीकरणे दोषमाह—हि यस्मादन्यथा क्रमादन्यथाप्रकारेण त्यक्तमपथ्यमपि शीलितं पथ्य- पि, सहसा विकाराय जायते। कुतः सात्म्यासात्म्यं यतः पथ्यं हि सात्म्यं, पथ्यं ह्यसात्म्यम्, अतस्तयो- क्रमेण त्यजनभजने रोगाय भवत इत्यर्थः ॥ ३६ ॥

क्रमेण त्वपथ्यत्यागपथ्यशीलने विधीयमाने गुणाय ातामिति दर्शयति—

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः।**
**प्नुवंति पुनर्भावमप्रकंप्या भवंति च ॥३७॥**

स०—दोषा अपथ्याभ्यासजाः क्रमेण पूर्वोक्तेना- पचिताः क्षयं नीताः गुणाश्च पथ्योपयोगजाः क्रमेण पूर्वोक्तेनैवोपचिताः वृद्धिं नीताः संतः पुरुषाणां यथा- संख्यमपुनर्भावं यांति दोषाः गुणाश्चाप्रकंप्याः स्थिरा भवंति ॥ ३७ ॥

प०—क्रमेणापथ्यत्यागपथ्यशीलने विधीयमाने गुणाय स्यातामिति दर्शयति-दोषा अपथ्याभ्यासजाः क्रमेण पूर्वोक्तेनापचिताः क्षयं नीता गुणा एव पथ्योपयोगजाः क्रमेण पूर्वोक्तेनैवोपचिता वृद्धिं नीताः सन्तः पुरुषाणां दर्शयति। यथासंख्यमपुन- र्भावं यान्ति दोषा गुणाश्चाप्रकम्प्याः स्थिरा भवन्ति ॥ ३७ ॥

हे०—क्रमेण सात्म्यीकरणे गुणमाह—गुणो द्विविधः— दोषापचयो गुणोपचयश्च। तत्र क्रमेणेति सात्म्यीकरणक्र- मेणैव दोषा अपचीयंते, गुणाश्चोपचीयंते। दोषाः क्रमापचिताः संतोऽपुनर्भावं यांति। यथा पुनर्नोत्पद्यंते तथा नश्यंतीत्यर्थः। गुणास्तु क्रमेणोपचिताः संतो- ऽप्रकंप्या भवंति। यथा पुनर्न क्षियंते तथा वर्द्धन्त इत्यर्थः ॥ ३७ ॥

सांप्रतमहिताहारसेवनं सदा त्याज्यमिति सद्युक्ति दर्शयति—

**अत्यंतसन्निधानानां दोषाणां दूषणात्मनाम्।**
**अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति॥३८॥**

स०—दोषाणामहितैराहारादिभिर्दूषणं कर्तुं विद्वान् पंडितो नार्हति न युज्यते। किं भूतानाम्। अत्यंतम- तिशयेन संनिधानं निकटत्वं येषां दोषाणां त एवं तेष दूषणात्मनां दूषणस्वभावानाम् ॥ ३८ ॥

प०—सांप्रतमहिताहारसेवनं सदा त्याज्यमिति सद्युक्तिं दर्शयति-दोषाणामहितैराहारादिभिर्दूषणं कर्तुं विद्वान् पण्डितो नार्हति न युज्यते। किंभूता नाम्, अत्यन्तमतिशयेन सन्निधानं निकटत्वं येष दोषाणां त एवं तेषां दूषणात्मनां दूषणस्व भावानाम् ॥ ३८ ॥

हे०—अपथ्यस्य सात्म्यीकरणं निषेधति—यद्यपि सात्मी भूतमपथ्यं दोषान्न दूषयति, तथापि यावता कालेन तत्सा त्म्यभिवति तावन्तं कालं दूषयत्येव। दूषणं च दोषाणाम

१ अत्र "सन्तो यान्त्यपुनर्भावम्" इति पा०।

त्म्यमपि विद्वानात्महितज्ञः पुमानहितैर्विरुद्धैः कारणभूतैर्न कर्तुमर्हति । कथं भूयः पुनस्ते हि दोषाः प्रागेव दूषणात्मानो दूषकत्वस्वभावा अत्यंतसंनिधानाश्च दूष्यस्य शरीरस्यात्यंतसंनिहिताः, तस्माच्छरीरं रक्षता विरुद्धं न सात्म्यीकर्तव्यम् ॥ ३८ ॥

एतत्प्रसंगेन चेदमाह—

**आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः ।**
**शरीरं धार्यते नित्यमागारमिव धारणैः॥ ३९॥**

स०—शयनं स्वप्नः अब्रह्मचर्यं स्त्रीणां सेवा आहारादीनां द्वंद्वः । एतैर्युक्त्या प्रयोजितैः शरीरं सततं धार्यते । किमिव कैः । आगारं गृहमिव धारणैः स्तंभैर्यथा ॥ ३९ ॥

प०—एतत्प्रसङ्गेन चेदमाह—शयनं—स्वप्नः। अब्रह्मचर्यं—स्त्रीणां सेवा । आहारादीनां द्वन्द्वः । एतैर्युक्त्या प्रयोजितैः शरीरं सततं धार्यते । किमिव कैः । अगारमिव धारणैः स्तम्भैर्यथा ॥ ३९ ॥

हे०—अविधिसेवनादिभ्योऽन्नपाने रक्षेदित्याह-आहारोऽन्नपानसेवा, शयनं निद्रा, अब्रह्मचर्यं संभोगः; तैर्नित्यं युक्त्या प्रयोजितैः शरीरं धार्यते । धारणैः स्तंभैरागारमिव । युक्तिः शास्त्रोक्तप्रकारः, धारणं चान्नपानसुखपरिणामद्वारेण ॥ ३९ ॥

**आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ४०॥**

स०—तत्र तेषु त्रिषु मध्यादाहारो वर्णित ऋतुचर्यायां द्रवान्नस्वरूपविज्ञानीययोः । तत्र तत्र च शास्त्रकारो ज्वरचिकित्सादौ च वक्ष्यति ॥ ४० ॥

प०—तत्र तेषु तेषु मध्यादाहारश्चाथ वर्णितः ऋतुचर्यायां द्रवान्नस्वरूपविज्ञानीययोः । तत्र च शास्त्रकारो ज्वरचिकित्सादौ च वक्ष्यति ॥ ४० ॥

हे०—तत्राहारस्तत्र तत्र ऋतुचर्यादौ वर्णितः । वक्ष्यते च मात्राशितीयादौ ॥ ४० ॥

शयनाब्रह्मचर्ययोस्त्विहैव विधिं वक्तुकाम आह—

**निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।**
**वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ४१॥**

स०—निद्रायत्तं निद्राधीनं सुखमारोग्यं दुःखं रोगस्तथा पुष्ट्यादि च । न च जीवितमिति संबंधः । अजीवितेन योगो भवतीत्यर्थः ॥ ४१ ॥

प०—शयनब्रह्मचर्ययोस्त्विहैव विधिं वक्तुकाम आह-निद्रायत्तं—निद्राधीनं,सुखमारोग्यं,दुःखं रोगः। तथा पुष्ट्यादि च। नच जीवितमिति सम्बन्धः । अजीवितेन योगो भवतीत्यर्थः ॥ ४१ ॥

हे०—अथाविधिशयनादन्नपानरक्षा । तत्र निद्रां स्तौति-निद्रायत्तं निद्राधीनं, वृषता शुक्रवृद्धिः, क्लीबता शुक्रक्षयः, नचेति नञो जीवितेन संबंधः अजीवितं मरणमित्यर्थः । एकस्या निद्रायाः परस्परविरुद्धसुखदुःखादिहेतुत्वात् ॥ ४१ ॥

सांप्रतं दुष्टनिद्रां निर्दिशति—

**अकालेऽतिप्रसंगाच्च न च निद्रा निषेविता ।**
**सुखायुषी पराकुर्यात्कालरात्रिरिवाऽपरा ४२ ॥**

स०—अकाले निषेविताऽति च निषेविता न च निषेविता निद्रा सुखमारोग्यलक्षणमायुश्च जीवितं ते सुखायुषी पराकुर्यान्नाशयेत् । केव । अपरा कालरात्रिरिव ॥ ४२ ॥

प०—साम्प्रतं दुष्टनिद्रां निर्दिशति—अकाले निषेविताऽति च निषेविता च, किञ्चिदेव निषेविता निद्रा सुखमारोग्यलक्षणमायुश्च जीवितं सुखायुषी पराकुर्यान्नाशयेत् । केव । अपरा कालरात्रिरिव ॥ ४२ ॥

हे०—योगाद्यौपाधिकभेदमाश्रित्य विभागमाह—अकाले सेविता मिथ्यायोगरूपा, अतिप्रसंगात्सेविता अतियोगरूपा न च सेविता हीनयोगरूपा, निषेविता नियतत्वेन सेविता सम्यग्योगरूपा चेति चतुर्धा निद्रा । तत्र पः चतुर्थी सुखायुषी कुर्यात् । अपरा त्रिविधा असम्यग्योगरूपा—कालरात्रिरिव संहारप्रवृत्तमहाकाली व सुखायुषी हन्यादित्यर्थः । सुखायुषोराद्यंतयोर्ग्रहणात्प्राणिनिप्रत्याहारवत्सुखपुष्टिबलवृषताज्ञानजीवितानि गृह्यंते " कालस्वभावामयचित्तदेहखेदैः कफागंतुतमोभवा च निद्रा बिभर्ति प्रथमा शरीरं पाप्मात्मका व्याधिनिमित्तमन्या ।" इति संग्रहोक्तानां सप्तानां भ्वतरष्वंतर्भावः ॥ ४२ ॥

अथ निद्रागुणप्रसंगेन तत्प्रतिपक्षभूतस्य जागरण्याऽपि गुणमाह—

**मो जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।**
**रूक्षमनभिष्यंदि त्वासीनप्रचलायितम्॥४३॥**

सु०-अपिशब्दावत्र सामर्थ्यलब्धौ बोद्धव्यौ । तेन त्रावपि जागरणं रूक्षम् । दिवा त्वाग्नेयमत्यर्थं रूक्षं लेनाहितबलत्वात् । तथा प्रस्वपनं दिवाऽपि ग्धम् । रात्रौ तु सौम्यकालेऽतिशयेन स्निग्धमित्यष्ठते । अपिशब्दाभ्यामंतरेण तु रात्रावेव जागरणं क्षं दिवा तु स्निग्धमित्यर्थो जायते । व्यवच्छेद्यफवाद्वाक्यानाम् एवं दिवस एव स्निग्धं प्रस्वपनं रात्रौ रूक्षमिति। नचैतद्युज्यते। ततो दिवा जागरणं सदा क्षं नाभविष्यत् तत्कथमिदमुपपत्स्यते । बहुमेदःकफाः प्युः स्नेहनित्याश्च नाह्नि । विषार्तः कंठरोगी च जातु निशास्वपीति । येषां ह्यपतर्पणमेव हितं ापतर्पणं तदवश्यं रूक्षम् । तस्मादपतर्पणस्वभावं गरणमेव सेव्यम्। तथा । ग्रीष्मे वायुचयादानरौक्ष्यअल्पभावतः। दिवा स्वप्नो हितोऽन्यस्मिन् कफतकरो हि सः । मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारभिः । क्रोधशोकभयैः क्लांतान् श्वासहिध्मातिसाणः। वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् । अजीभिहितोन्मत्तान् दिवा स्वप्नोचितानपि । तदेतेषां र्पणार्हत्वात्संतर्पणमेव हितम् । यच्च संतर्पणं तदवश्यं ग्धम्।तस्मादेतैः संतर्पणस्वभावमेव सदा प्रस्वपनं सेव्य एवं च पूर्वमेव च व्याख्यानं युक्तम्।प्रस्वप्नजागरणक्रियोरद्रव्ययोरपि रूक्षस्निग्धत्वमुपचारादुपपन्नम् । यथा क्षं द्रव्यं गुग्गुल्वादि कफमेदःप्रभृतीन् सौम्यान् वान् क्षपयति । तथैव यदा जागरणमपि तत्क्षपष्टं तदा तद्रूक्षकार्यकरणादरूक्षमपि रूक्षमित्युपते । तथा प्रस्वपनादर्वाक्कफमेदःप्रभृतीनां सौम्यानां वानां स्वहेतोरुत्पादस्तथा नोपलभ्यते । यथा प्रस्वादनंतरं तस्मात्प्रस्वपनमस्निग्धमपि स्निग्धमित्युपच। । प्रचल इवाचरतीति क्यङन्तान्निष्ठा । आसीनस्योपविष्टस्य प्रचलायितमासीनप्रचलायितं नतु स्वपनं सर्वसर्विकया । येन स्नेहन हेतुः स्यात् । रूक्षकार्याकरणादरूक्षम् । अनभिष्यंदि तु विशेषेण। आसीनप्रचलायितं पुनरीदृग्रूपमित्यर्थः ॥ ४३ ॥

प०-अथ निद्रागुणप्रसङ्गेन तत्प्रतिपक्षभूतस्य जागरणस्यापि गुणमाह-अपिशब्दावत्र सामर्थ्यलब्धौ बोद्धव्यौ । तेन रात्रावपि जागरणं रूक्षं दिवा त्वाग्नेयमत्यर्थं रूक्षं कालेनाहितबलत्वात्। तथा प्रस्वपनं दिवापि स्निग्धमित्यवतिष्ठते । अपिशब्दाभ्यामन्तरेण तु रात्रावेव जागरणं रूक्षं, दिवा तु स्निग्धमित्यर्थो जायते व्यवच्छेद्यफलत्वाद्वाक्यानाम्। एवं दिवस एव स्निग्धं स्वपनं रात्रौ रूक्षमिति। नचैतद्युज्यते। ततो दिवा जागरणं सदा रूक्षं नाभविष्यत्। तत्कथमिदमुपपत्स्यते । "बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाह्नि । विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ॥" इति । एषां ह्यपतर्पणमेव हितं यच्चापतर्पणं तदवश्यं रूक्षम्। तस्मादपतर्पणस्वभावं जागरणमेव सेव्यम् । तथा । "ग्रीष्मे वातचयादानरौक्ष्यरात्र्यल्पभावतः। दिवा स्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः॥मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः । क्रोधशोकभयैः क्लान्तान्श्वासहिध्मातिसारिणः । वृद्धबालबलक्षीणाः क्षततृट्शूलपीडितान् । अजीर्ण्यभिहतोन्मत्तान् दिवास्वप्नोचितानपि ॥ " तदेतेषां सन्तर्पणार्हत्वात् सन्तर्पणमेव हितम् । यच्च सन्तर्पणं तदवश्यं स्निग्धम् । तस्मादेतैः सन्तर्पणस्वभावमेव सदा प्रस्वपनं सेव्यम् । एवं च पूर्वमेव व्याख्यानं युक्तम् । प्रस्वप्नजागरणक्रिययोरद्रव्ययोरपि रूक्षस्निग्धत्वमुपचारादुपपन्नम् । यथा—रूक्षं द्रव्यं गुग्गुल्वादि—कफमेदःप्रभृतीन् सौम्यान् भावान् क्षपयति तथैव यदा जागरणमपि तत्क्षपयद्दृष्टं तदा तद्रूक्षकार्यकरणादरूक्षमपि रूक्षमित्युपचर्यते। तथा प्रस्वप्नादर्वाक् कफमेदःप्रभृतीनां सौम्यानां भावानां स्वहेतोरुत्पादस्तथा नोपलभ्यते।यथा प्रस्वप्नादनन्तरम् तस्मात्प्रस्वपनमस्निग्धमित्युपचर्यते । प्रचल इवाचरतीति क्यङन्तान्निष्ठा । आसीनस्योपविष्टस्य प्रचलायितमासीनप्रचलायितं, नतु प्रस्वपनं सर्वसर्विकया । येन स्नेहेन हेतुः स्यात् । रूक्षकार्याकरणादरूक्षम् । अनभिष्यन्दि तु विशेषेण। आसीनप्रचलायितं पुनरीदृग्रूपमित्यर्थः ॥ ४३ ॥

हे०-चतुर्विधायाः स्वरूपमाह-रात्रौ जागरणं काले-ऽप्यशयनं हीनयोगाख्यं तद्रूक्षं वातव्याधिहेतुः । दिवा प्रस्वपनमकाले शयनम् । तच्चाकालेऽतिसुप्तस्यातियोगाख्यमकाले सुप्तस्यामिथ्यायोगाख्यं तदुभयमपि स्निग्धं कफपित्तव्याधिहेतुः । आसीनप्रचलायितं काले शयनं सम्यग्योगाख्यम् । तद्ध्यासीनप्रचलायितस्य भवति । स हि सुखोपविष्टः सन् यदैव चल इवाचरितुमारभते तदैव स्वपिति, न त्वनुदीर्णां निद्रामुदीरयति नाप्युदीर्णां धारयति,तच्च न रूक्षं,नापि स्निग्धम्।उक्तं च खारणादिना-"इंद्रियातिश्रमाद्रूक्षो वातलो जागरो निशि । तदालस्याद्दिवास्वप्नः स्निग्धः पित्तकफोल्बणः ॥ आसीनप्रचलस्वप्नो निरभिष्यंदिबृंहणः । " इति । " प्रचलायित " इति। प्रचलप्रातिपदिकात्कण्ड्वादियगन्तादादिकर्मणि निष्ठायां रूपम् । अन्ये त्वासीनलप्रचलायितशब्देनोपविष्टस्यैव शयनमाहुः । ते च दिवेत्यनुवर्त्य दिवैव तत्कार्यमित्याहुः । यदाह भेडः—"स्वप्नकामो दिवा काममुपविष्टः शयीत वा । प्रस्तीर्णामस्य जन्तोर्हि श्लेष्मा कोष्ठे प्रवर्तते " इति ॥ ४३ ॥

यदि स्निग्धत्वादभिष्यंदी दिवास्वप्नस्तत्किं कदाचिदपि नकार्य इत्याह—

**ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ।**
**दिवास्वप्नो हितोऽन्यस्मिन्कफपित्तकरो हि सः ॥**
**मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ।**
**क्रोधशोकभयैः क्लांतान् श्वासहिध्मातिसारिणः॥**
**वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् ।**
**अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि ॥**
**धातुसाम्यं तथा ह्येषां श्लेष्मा चांऽगानि पुष्यति**

स०-ग्रीष्मकाले दिवास्वप्नो हितः । यतस्तस्मिन्काले पवनचयो भवति । आदानस्य च परिपुष्टत्वादतिरौक्ष्यं भवति । रात्रयश्च निद्रासमाप्त्ययोग्या अल्पा भवंति । दिवास्वप्नश्च संतर्पकः । ग्रीष्मादपरस्मिन् काले कफपित्तकरः सोऽचिंत्यत्वाद्धेतुप्रभावस्य। भाष्यादिक्लांतादीन् मुक्त्वा वर्जयित्वा तेनैतदुक्तं भवति । ग्रीष्मादपरस्मिन्नपि काले स्वप्न एषां हित एव । यानमश्वादि । क्षतः खङ्गादिच्छिन्नः । अभिहतो लगुडादिना । स्वप्नोचिताः शीलितदिवास्वप्नाः । तत्र भाष्यादिक्लांतानां पवनकोपात्स्वप्नोऽनुज्ञातः । श्वासहिध्मादीनां वेगविस्मरणार्थम् । वृद्धादीनां यथायथं संतर्पणार्थं वेगविस्मरणार्थं च । अजीर्णिनां दिवास्वप्नोचितानां च धातुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतस्तंत्रकृता । तथा चोक्तम् । उचितो हि दिवास्वप्नो येषां नित्यं शरीरिणाम् । वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवेति । नन्वजीर्णिनां दिवास्वप्नो न युक्तो दिवास्वप्नस्य कफवृद्धिकरत्वात् । कफवृद्ध्या चाग्निमांद्यम् । अग्निमांद्यादजीर्णान्नस्याऽपाक इत्ययुक्तस्तेषां दिवास्वप्नः । अत्रोच्यते । दिवास्वप्नेनाजीर्णिनां धातुसाम्यं भवति धातुसाम्ये च सति स्वस्थानस्थितैर्दोषैरनुपहतो वह्निः पचनक्षमो भवति । कफस्तु वृद्धोऽपि नैतेषामग्निमांद्यं विधत्ते । अपितु अंगानां पुष्टिमादधाति । अत एवानंतरमेवोवाच शास्त्रकारः । धातुसाम्यं तथा ह्येषां श्लेष्मा चांऽगानि पुष्यतीति ॥४४॥

प०-यदि स्निग्धत्वादभिष्यन्दी दिवास्वप्नः तर्त्किं कदाचिदपि न कार्यं इत्याह—ग्रीष्मकाले दिवास्वप्नो हितः । यतस्तास्मिन् काले पवनस्य चयो भवति । आदानस्यैव परिपुष्टत्वादतिरौक्ष्यं भवति । रात्रयश्च निद्रासमाप्त्ययोग्याः-अल्पा भवन्ति । दिवास्वप्नश्च संतर्पकः । ग्रीष्मादपरस्मिन् काले कफपित्तकरः । सोऽचिन्त्यत्वाद्धेतुप्रभावस्य भाष्यादिक्लान्तादीन् मुक्त्वा वर्जयित्वा । तेनैतदुक्तं भवति। ग्रीष्मादपरस्मिन्नपि काले स्वप्न एषां हित एव यानमश्वादि।क्षतः खड्गादिभिश्छिन्नः। अभिहतो लगुडादिना।स्वप्नोचिताः शीलितदिवास्वप्नाः तत्र भाष्यादिक्लान्तानां पवनकोपात् स्वप्नोऽनुज्ञातः।श्वासहिध्मादीनां वेगविस्मरणार्थम् । वृद्धादीनां यथायथं सन्तर्पणार्थं वेगविस्मरणार्थं च । अजीर्णिनां दिवास्वप्नोचितानां च धातुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतस्तन्त्रकृता । तथाचोक्तम्-"उचितो हि दिवास्वप्नं येषां नित्यं शरीरिणाम्।वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा"इति।।नन्वजीर्णिनां दिवास्वप्नो न युक्तः दिवा स्वप्नस्य कफवृद्धिकरत्वात्। कफवृद्धया चाग्निमान्द्यम् । अग्निमान्द्यादजीर्णान्नस्यापाकः । इत्ययुक्तस्तेषां दिवास्वप्नः । अत्रोच्यते । दिवास्वप्नेनाजीर्णिनां धातुसाम्यं भवति।धातुसाम्ये च स्थिते स्वस्थान

स्थितैर्दोषैरनुपहतो वह्निः पचनक्षमो भवति । कफस्तु वृद्धोऽपि नैतेषामग्निमान्द्यं विधत्ते अपित्व-गानां पुष्टिमादधाति । अतएवानन्तरमेवोवाच शास्त्रकारः—"धातुसाम्यं तथाक्ष्णां श्लेष्मा ङ्गानि पुष्यति" इति ॥ ४४ ॥

हे०—दिवास्वप्नस्यासम्यग्योगत्वमपवदति—ग्रीष्मे वायु-यादीनां सद्भावाद्दिवास्वप्नो हितः। आदानग्रहणं शिशिर-र्तादारभ्य प्रतिदिनवृद्ध्यातिशयितस्य रौक्ष्यस्य रात्र्य-भावस्य च प्राप्त्यर्थम्।अन्यथा वायुचयवत्तयोरपि ग्रीष्म-त्रहेतुकयोः प्राप्तिः । तत्र दिवास्वप्नः स्निग्धत्वाद्वायु-यं रौक्ष्यं च हंति, मात्रापूरणाद्रात्र्यल्पत्वकृतं हीनयोगम् । नु घातघ्नोऽपि दिवास्वप्नः कफपित्तकरत्वादहितः । क्ष्यति हि—" प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीर-त् । नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ॥" त आह—अन्यस्मिन्नित्यादि हि यस्मात्स दिवास्वप्नो ग्रीष्मादन्यस्मिन्नृतौ भाष्यक्लांतादीन् मुक्त्वा कफपित्त-करत्वादहितः । न तु ग्रीष्मे, न च भाष्यक्लांतादीनां तत्र ग्रीष्मे कालस्वभावात् । उक्तं च चरकेण—"ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात्प्रकुप्यतः । श्लेष्मापित्ते दिवास्वप्नस्तस्मा-त्तु न शस्यते" इति । भाष्यक्लांतादीनां तु कुत इत्याह-गात्वित्यादि । हि यस्मादेषां भाष्यक्लांतादीनां तथा तेन प्रका-ण धातुसाम्यं भवति । समीभूतः श्लेष्मा शिरःकरचरणा-दीन्यंगानि पुष्णाति । धातवो, वातादयो, रसादयश्च । धातुसाम्यहेतुत्वान्न कफपित्तकरत्वं कफपित्तवृद्धेः साम्या-त्वान्न विकारारंभकदोषहेतुत्वम् । भाष्यं वाग्व्यापारः, यानमश्वादिगमनम् , अध्वा पद्भ्यां,मद्यं मद्यपानं, स्त्री-स्त्री-संभोगः, भारः शिरःस्कन्धादिभिर्गुरुवस्तुवहनं, कर्म काय-व्यापारः, क्षतः क्षतकासी, अभिहतः शस्त्रप्रहारादिपी-डितः, दिवास्वप्नोचितः सात्मीभूतदिवास्वप्नः, अयं च दिवास्वप्नो मुहूर्तमेव कर्तव्यः । यदाह सुश्रुतः— ' प्रतिषिद्धेष्वपि बालवृद्धेत्यादि यावन्मुहूर्तमात्रं स्व-प्नम् " इति ॥ ४४ ॥

**बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि ।**
**विषार्तः कंठरोगी च नैव जातु निशास्वपि४५॥**

स०—तथा बहुमेदःश्लेष्माणः स्निग्धाहारादिशीलि-नश्च ग्रीष्मेऽप्यहनि न स्वप्युः। विषार्तः कंठरोगी च रात्रि-ष्वपि कदाचिदपि न स्वप्यात् ॥ ४५ ॥

प०—बहुमेदःकफौ येषां ते बहुमेदःकफास्ते च पुनः स्नेहनित्याः नित्यं स्नेहभक्षकाः । अहनि दिने न स्वप्युः शयनं न कुर्युः । विषार्तः पुनः कण्ठरोगी दिवा पुनः रात्रावपि शयनं न कुर्यात् । असा-त्म्यत्वात् । रात्रिष्वपि कदाचिदपि न स्वप्यात् ४५

हे०—दिवास्वप्नस्यासम्यग्योगत्वं प्रतिप्रसवति । बहु-मेदःप्रभृतयो ग्रीष्मेऽपि साम्यत्वेऽपि न दिवा स्वप्युः।रात्रि-स्वप्नस्य सम्यग्योगत्वमपवदति जातु कदाचित् ॥ ४५ ॥

**अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ।**
**शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमंदताः ४६॥**

स०—अकाले शयनं स्वप्नोऽकालशयनं तस्माद-कालशयनान्मोहादयः स्युः । स्तैमित्यं गात्राणां निरुत्साहत्वम् ॥ ४६ ॥

प०—अकाले शयनं स्वप्नः अकालशयनम् । तस्मादकालशयनान्मोहादयः स्युः । स्तैमित्यं गात्रा-णां निरुत्साहत्वम् ॥ ४६ ॥

हे०—सम्यग्योगजा रोगाः । तत्र मिथ्यायोगातियोगजान् रोगानाह-अकालशयनं द्विविधमुक्तं प्राक् । स्तैमित्यमार्द्र-चर्मावनद्धांगत्वम् । संग्रहे—"कंडूसकोठपिटिकाः कासतंद्रागलामयाः। हलीमकार्द्वावमेदशोफारोचकगौरवम्॥ विषवेगप्रवृत्तिश्च भवेदहनि निद्रया ॥" इति ॥ ४६ ॥

अत्र च का चिकित्सेत्याह—

**तत्रोपवासवमनस्वेदनावनमौषधम् ।**
**योजयेदति निद्रायां तीक्ष्णं प्रच्छर्दनांजनम्॥**
**नावनं लंघनं चिंतां व्यवायं शोकभीक्रुधः ।**
**एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात् ॥**

स०--तेष्वकालस्वप्नजेषु रोगेषूपवासाद्यौषधं योज-येत् । निद्रायाश्च बाहुल्येन रात्रिः कालः। तथा चोक्तम्। लोकादिसर्गप्रभवा तमोमूला तमोमयी । बाहुल्यात्त-मसो रात्रौ निद्रा प्रायेण जायत इति । अतिनिद्रायां सत्यां तीक्ष्णानि वमनांजननस्यानि योजयेत् । लंघनानि च । एभिरेव च तीक्ष्णवमनादिभिर्निद्राया नाशो भवति । श्लेष्माख्यस्य धातोरतिशयेनापचयात् ॥४७॥

प०—अत्र च का सा चिकित्सेत्याह—तेष्वकाल-स्वप्नजेषु रोगेषूपवासाद्यौषधं योजयेत् । निद्रायाश्च बाहुल्येन रात्रिकालः । तथा चोक्तम्—" लोकादि-

र्गप्रभवा तमोमूला तमोमयी । बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥" इति । अतिनिद्रायां सत्यां तीक्ष्णानि वमनाञ्जननस्यानि योजयेत् । लङ्घनादि च । एभिरेव तीक्ष्णवमनादिभिर्निद्राया नाशो भवति । श्लेष्माख्यस्य धातोरतिशयेनापचयात् ॥ ४७ ॥

हे०—अकालशयनजानामौषधमाह--तत्रेति । अतियोगस्यौषधमाह—स द्विविधो—वेगोदीरणजो निद्राधिक्यजश्च । तत्राद्य उक्तो रोगानुत्पादनीये। इह द्वितीयः। तस्य हेतुरुक्तः संग्रहे--" अपच्यमानो बाहुल्यात्स्रोतांस्यावृणुते कफः। ततः स्रोतःसु रुद्धेषु जायते गात्रगौरवम् ॥ गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता ॥ " इति । लंघनं शुद्धिविषयम् । वमननावनयोस्तु ग्रहणमतिशयार्थम् । स्यनार्थं संभोगम् । हीनयोगस्य हेतुमाह—स द्विविधः—निद्राविधारणजो निद्राविनाशजश्च । तत्राद्य उक्तो रोगानुत्पादनीये। इह द्वितीयः। एभिरतिनिद्रौषधैः श्लेष्मातिसंक्षयादिति हेतुकथनमन्येषामपि श्लेष्मक्षपणानां निद्रानाशहेतुत्वख्यापनार्थम् ॥ ४७ ॥

संप्रति निद्रानाशजान्विकारानाचष्टे—

**निद्रानाशादंगमर्दशिरोगौरवजृंभिकाः ।**
**जाड्यं ग्लानिभ्रमापक्तितंद्रा रोगाश्च वातजाः।**

स०—निद्रानाशादंगमर्दादयो वातोत्थाश्च रोगाः स्युः ॥ ४८ ॥

प०—सम्प्रति निद्रानाशजान् विकारानाचष्टे—निद्रानाशादङ्गमर्दादयो वातोत्थाश्च रोगाः स्युः॥४८॥

हे०—निद्रानाशजान् रोगानाह—जाड्यं ज्ञानभ्रंशः, अपक्तिराहारस्याविपाकः, वातजा रोगाश्चाक्षेपकादयः ॥ ४८ ॥

**यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ।**
**असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान्॥**

स०—यतश्च सम्यक् सेवितायां निद्राया असम्यक् सेवितायाश्चाऽनंतरोक्ता गुणा दोषाः । अतोऽस्माद्धेतोः कालानतिक्रमेण सात्म्यतो यामद्वयं त्रयं वा निशि निद्रां भजेत् । असात्म्याज्जागरादर्धेन स्वप्न इष्यते । किं तर्हि यो यावंतं कालमुचितं स्वपिति तस्मात्कालादर्द्धेन प्रातः स्वप्यात् । अभुक्तवानभुक्ते सति । असात्म्यग्रहणेनैतद् द्योतयति । न सर्वस्य रात्रावसुप्तस्य जागरणकालादर्धेन दिवास्वप्न इष्यते किं तर्हि यो यावंतं कालमुचितं स्वपिति तस्मात्कालाद्यावंतं कालं निशि जागृयात्तावतोऽर्धेनासौ प्रातः स्वप्यात् । केचिद्धि स्वल्पनिद्राः स्वभावतो भवंति ॥ ४९ ॥

प०—यतश्च सम्यक्सेवितायां निद्राया असम्यक्सेवितायाश्च अनन्तरोक्ता गुणा दोषाः, अतोऽस्माद्धेतोः कालानतिक्रमेण सात्म्यतो यामद्वयं त्रयं वा निशि निद्रां भजेत् । असात्म्याज्जागरादर्धेन स्वप्न इष्यते । किंतर्हि यो यावन्तं कालमुचितं स्वपिति तस्मात् कालादर्धेन प्रातः स्वप्यात् । अभुक्तवान् अभुक्ते सति । असात्म्यग्रहणेनैतद् द्योतयति । न सर्वस्य रात्रावसुप्तस्य जागरणकालादर्धेन दिवास्वप्न इष्यते । किं तर्हि यो यावन्तं कालमुचितं स्वपिति तस्मात् कालाद्यावन्तं कालं जागृयात्तावतोऽर्धेनासौ स्वप्यात् । केचिद्धि स्वल्पनिद्राः स्वभावतो भवन्ति ॥ ४९ ॥

हे०—असम्यग्योगं निषिध्य सम्यग्योगं विधत्ते—निद्रां रात्रौ सेवेत न दिवा। रात्रावपि यथाकालं प्रवृत्तिकालानतिक्रमेण यस्य यस्मिन् रात्रिविभागे निद्रा प्रवर्तते स तस्मिन्नेव सेवेत इत्यर्थः। सात्म्यतः यामद्वययामत्रयादिसात्म्यानुरोधेन । रात्रावनिद्रितस्य दिवा स्वप्नं विधत्ते—प्रातः पूर्वाह्णे स्वप्यात् । अभुक्तवानकृतभोजनः, असात्म्याद्रात्रिजागरणकालादर्द्धकालं सात्म्यश्चेद्रात्रिजागरस्तदा प्रातर्नैव स्वप्यात् । अर्द्धमित्यसात्म्यजागरजनितदोषनिवर्तकनिद्रापर्याप्तकालोपलक्षणम् । अत एवाह खारणादिः—"असुप्तानां तथा रात्रौ तन्मात्रस्वपनं दिवा।" इति। भेडोऽपि—" रात्रौ स्वप्यान्न यामांस्त्रींस्तान्स्वप्याद्धि दिवा नरः। एतदप्याहुरारोग्यं नात्र दोषोऽस्ति कश्चन॥" इति ॥ ४९ ॥

**शीलयेन्मंदनिद्रस्तु क्षीरमद्यरसान्दधि ।**
**अभ्यंगोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ॥**
**कांताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ।**
**मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः॥**
**ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ।**
**निद्रा संतोषतृप्तस्य स्वं कालं नातिवर्तते ५०॥**

**स०**—यो यो मंदनिद्रः स क्षीरादीन् शीलयेत् । कांताबाहुलताश्लेषादयो निद्रासुखहेतवः । कांताबाहुलताश्लेषग्रहणमाश्लेषमात्रमेव निद्रासुखहेतुर्नतु ग्राम्यधर्मसेवेति दर्शनार्थम् । अत एवानंतरमाह । ब्रह्मचर्यरतेनिद्रा स्वं कालं नातिवर्तत इति । ब्रह्मचर्यरतस्याऽप्युनुगतो मैथुनाभिलाषो निद्रां नाशयेदित्याह । ग्राम्यसुखे निःस्पृहं चेतो यस्य स तस्य । तथा संतोषतृप्तस्य ॥ ५० ॥

**प०**—यो मन्दनिद्रः स क्षीरादीन् शीलयेत् । कान्ताबाहुलताश्लेषादयो निद्रासुखहेतवः । कान्ताबाहुलताश्लेषग्रहणं श्लेषमात्रमेव सुखहेतुः, न तु ग्राम्यधर्मसेवेति दर्शनार्थम् । अत एवानन्तरमाह—"ब्रह्मचर्यरतेर्निद्रा स्वं कालं नातिवर्तते ।" इति । ब्रह्मचर्यरतस्यानुगतो मैथुनाभिलाषो निद्रां नाशयेदित्याह—ग्राम्यसुखे निःस्पृहं चेतो यस्य स तस्य तथा सन्तोषतृप्तस्य ॥ ५० ॥

**हे०**—अथ सम्यग्योगहेतुः । स त्रिविधः—जघन्यमध्यमोत्तमभेदात् । तत्र जघन्यमाह—मंदा मूढा स्वकालानभिज्ञा निद्रा यस्य स मंदनिद्रः, रसान्मांसरसान्मूर्द्धतर्पणं मूर्द्धतैलम्, कर्णतर्पणं कर्णपूरणम्, अक्षितर्पणं प्रसिद्धम्। मध्यममाह-निर्वृतिः सुखम्, कृतकृत्यता पूर्णमनोरथत्वम्, विषयाः शब्दादयः, कामं मनोरथत्वम् । उत्तममाह—ब्रह्मचर्यरतेब्रह्मचर्यासक्तस्य, ग्राम्यसुखं संभोगस्तत्र निःस्पृहं ततो निवृत्तं चेतो यस्य, संतोषतृप्तस्य यथालाभतुष्टस्य, स्वं कालं नातिवर्तते उचितकाले आयातीत्यर्थः ॥ ५० ॥

यदा तु ग्राम्यधर्मेण विना न रतिरपत्यार्थिता वा तदा तदधिकारार्थमुच्यते—

**ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ।**
**अप्रियामप्रियाचारां दुष्टसंकीर्णमेहनाम् ॥**
**अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ।**
**वर्णिनीमन्ययोनिं च गुरुदेवनृपालयम् ॥**
**चैत्यश्मशानाऽऽयतनचत्वरांबुचतुष्पथम् ।**
**पर्वाण्यनंगं दिवसं शिरोहृदयताडनम् ॥**
**अत्याशितोऽधृतिःक्षुद्वान्दुःस्थितांगःपिपासितः**
**बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ५१**

**स०**—ग्राम्यधर्मे स्त्रीपुंसयोगविषयेऽनुत्तानां स्त्रियं त्यजेदुत्तानां भजेदित्यर्थः । तथा रजस्वलत्वादियुतां त्यजेत् । दुष्टं व्याधिमलादिभिः संकीर्णं संकुचन्मेहनं योनिर्यस्यास्ताम् । तथा वर्णिनीं ब्रह्मचारिणीम् । अन्ययोनिमजामहिष्यादिं च त्यजेत् । गुर्वित्यादि।ग्राम्यधर्मनिर्वर्तने गुरुदेवनृपालयांस्त्यजेत् । तथा चैत्यादींस्त्यजेत् । तेषु स्त्रियं न संगच्छेदित्यर्थः । चैत्यादीनां पर्याया दिनचर्यायामुक्ताः । आयतनं दुष्टानां निग्रहस्थानम्। पर्वाणि रविसंक्रांत्यादींस्त्यजेत्। तेषु कामं न सेवेतेत्यर्थः । तथाऽनंगम् अंगं जघनम् नांगमनंगमंगसदृशं जघनकार्यनिर्वर्तनयोग्यं मुखादिकमुच्यते। दाक्षिणात्या हि मुखेन कुर्वंति तन्निषिध्यते । दिवसं च त्यजेत् । दिने रतं न कुर्यादित्यर्थः । मूर्धवक्षोऽभिघातं च त्यजेत् । अत्याशितादयः सुरतं त्यजेयुः । अत्याशितोऽतिभुक्तः । अधृतिर्दुर्मनाः । अन्यवेगार्तः पुरीषादिवेगातुरः । ननु क्षुद्वान् क्षुद्वेगार्त उच्यते । ततोऽन्यवेगार्त इत्यनेनैवाऽस्यार्थस्य लब्धत्वात् किं क्षुद्वानित्यनेन । सत्यमेतत् । अतिशयार्थं त्वेतत् । यथा क्षुद्वेगार्तः स्त्रियं गच्छन्नतिशयेन पीडया बाध्यते न तथाऽन्यवेगार्त इति ॥ ५१ ॥

**प०**—यदा तु ग्राम्यधर्मेण विना न रतिरपत्यार्थिता वा तदा तदधिकारार्थमुच्यते। ग्राम्यधर्मे स्त्रीपुंसयोगविषयेऽनुत्तानां स्त्रियं त्यजेदुत्तानां भजेदित्यर्थः । तथा रजस्वलत्वादियुतां त्यजेत् । दुष्टं व्याधिमलादिभिः संकीर्णम् , संकुचितं मेहनं योनिर्यस्यास्ताम् । तथा वर्णिनीं—ब्रह्मचारिणीम् । अन्ययोनिमजामहिष्यादिं च त्यजेत् । गुर्वित्यादि । ग्राम्यधर्मनिवर्तने सति गुरुदेवनृपालयांस्त्यजेत् । तथा चैत्यादींस्त्यजेत् । तेषु स्त्रियं न सङ्गच्छेदित्यर्थः । चैत्यादीनां पर्याया दिनचर्यायामुक्ताः । आयतनं—दुष्टानां निग्रहस्थानं च पर्वाणि रविसङ्क्रान्त्यादींस्त्यजेत् । तेषु कामं न सेवेतेत्यर्थः । तथा—अङ्गं जघनं नाङ्गमनङ्गम् । अङ्गसदृशं जघनकार्यनिवर्तनयोग्यं मुखादिकमुच्यते । दाक्षिणात्या हि मुखेन कुर्वन्ति तन्निषिध्यते । दिवसं च त्यजेत्—दिने रतं न कुर्यादित्यर्थः । मूर्धवक्षो-

ऽभिघातं च त्यजेत् । तथा-अत्याशितादयः सुरतं त्यजेयुः । अत्याशितोऽतिभुक्तः । अधृतिर्दुर्मनाः । अन्यवेगार्तः-पुरीषादिवेगातुरः। ननु क्षुद्वान् क्षुद्वेगार्त उच्यते । ततोऽन्यवेगार्त इत्यनेनैवास्यार्थस्य लब्धत्वात् किं क्षुद्वानित्यनेन । सत्यमेतत् । अतिशयार्थं त्वेतत् । तथा क्षुद्वेगार्तः स्त्रियं गच्छन्नतिशयेन पीडया बाध्यते न तथाऽन्यवेगार्त इति । दुःस्थितमङ्गं शरीरं यस्य शस्त्रादिना व्याधिना वा स दुःस्थिताङ्गः । पिपासितस्तृषितः । बाल आषोडशाद्वर्षात्, सप्ततेरूर्ध्वं वृद्धः । अन्यवेगार्तः-मूत्रपुरीषादिवेगैः पीडितः । रोगी-ज्वरादिव्याध्युपद्रुतोऽसमर्थः मैथुनं त्यजेत्। तथा च सङ्ग्रहः-"न चर्ते षोडशाद्वर्षात्सप्ततेः परतो न च । आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति ॥ अतिबालो ह्यसम्पूर्णसर्वधातुः स्त्रियं व्रजेत् ॥ उपतप्येत सहसा तडागस्थमिवोदकम् । शुष्कं वृक्षं तथा काष्ठं जन्तुदग्धं विजर्जरम् ॥ स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियो व्रजेत्। प्राप्नोति वेगरोधी च वृद्धमेहाश्मशर्कराः।" तिमिरादिगदोत्पत्तिः इति ॥ ५१ ॥

हे०-यथाविधिसम्भोगादात्मरक्षा। तत्र सम्भोगनिषिद्धानाह-ग्राम्यधर्मे सम्भोगे अनुत्तानत्वादिविशिष्टां नारीं त्यजेत् । अप्रियामनभीष्टाम्, अप्रियाचारामनिष्टाचरणां, दुष्टमेहनां-दोषदूषितयोनिं, संकीर्णमेहनां संकुचितयोनिम्, अतिस्थूलामतिकृशां च। सूताम्-असम्पूर्णाध्यर्द्धमासप्रसूतिम्, अन्ययोषितां-परयोषितां, वर्णिनीं-ब्रह्मचारिणीम्, अन्ययोनिं-विजातीयामजामहिष्यादिं,गुर्वालयादींश्च त्यजेत् । चैत्यादयो दिनचर्यायां व्याख्याताः । अम्बुजलाशयः, आयतनं वधस्थानं, पर्वाणि-पुण्यकालाः । अनंगं हस्तमुखादि, दिवसमपर्वण्यपि, शिरस्ताडनं हृदयताडनं च मुष्ट्यादिना, दिनचर्यायां सामान्यतो निषिद्धस्यापि देवालयादेः पुनर्निषेधः संभोगे भूयस्त्वख्यापनार्थः । अत्याशितादेः संभोगं निषेधति-अत्याशितः अतितृप्तः, अधृतिः अहृष्टः, क्षुद्वान् क्षुधितः, दुःस्थितांगो विषमस्थितगात्रः, पिपासितस्तृषितः, अन्यवेगार्तः शुक्रेतरवेगपीडितः; क्षुत्तृषोर्वेगत्वेऽपि पृथग्ग्रहणमल्पयोरपि तयोर्निषेधार्थम्॥ ५१ ॥

संप्रति ऋतुविशेषे निधुवनं नियमयति-

**सेवेत कामतः कामं तृप्तो वाजीकृतां हिमे ।**
**त्र्यहाद्वसंतशरदोः पक्षाद्वर्षानिदाघयोः ॥५२॥**

स०-तृप्तो वाजीकरणैः संजातसंतर्पणः स कामतो यथेच्छया हिमे हेमंततौं शिशिरे च का[मं] यथेच्छं सेवेत । वाजीकृतामिति संपदादित्वात्क्विप् तृप्त इति क्तोऽधिकरणे च ध्रौव्येत्यादिनाऽधिकर[णे] क्तः । अधिकरणवाचिनश्चेति षष्ठी । वसंते शरदि [च] त्र्यहात् त्र्यहमतिक्रम्य मैथुनं निषेवेत । वर्षाग्रीष्मयो[ः] पक्षात् कामं भजेत् ॥ ५२ ॥

प०-सम्प्रति ऋतुविशेषेषु निधुवनं नियम्यते-तृप्तो-वाजीकरणैः सञ्जातसन्तर्पणः सन् काम[तो] यथेच्छया हिमे हेमन्ततौं, शिशिरे च कामं यथेच्छ[ं] सेवेत । वाजीकृतामिति सम्पदादित्वात् क्विप् तृप्त इति-" क्तोऽधिकरणे च ध्रौव्य-" इत्य[ा]दिनाऽधिकरणे क्तः । "अधिकरणवाचिनश्च" इति षष्ठी । वसन्ते, शरदि च त्र्यहात् त्र्यहमति[]क्रम्य मैथुनम् । वर्षाग्रीष्मयोः पक्षात् का[मं] भजेत् ॥ ५२ ॥

हे०-ऋतुवशात्संभोगं विधत्ते-हिमे-हेमन्तशिशिरय[ोः] कामं सम्भोगं कामतः स्वेच्छया । वसन्ते शरदि च त्र्यहात् त्र्यहमन्तरं कृत्वा, वृष्टिनिदाघयोः-पक्षात्पक्षमन्[तरं] कृत्वा, "सप्तमीपञ्चम्यौ कारकमध्ये" इति पञ्चमी "वाज[ी]कृतां तृप्त" इति सर्वत्र सम्बध्यते।वाजीकृतां वाजीकरणा[दि]करणे सुहितार्थानामिति षष्ठी । अयं च विधिरुत्तमबल[ा]पेक्षः, हीनबलानां तु उक्तो भेदेन-"ऋतावृतौ यथाक[ालं] मैथुनं तु समाचरेत् । वर्षासु नवरात्रात्तु दशरात्राच्छ[र]द्यपि ॥ पञ्चाहाच्छीतसमये सप्ताहाच्छिशिरे तथा पक्षाद्वसंते ग्रीष्मे तु मासि मासि समाचरेत् ॥ निद[ाघ]पश्चिमे मासि मैथुनं न समाचरेत् " इति ॥ ५२ ॥

**भ्रमक्लमोरुदौर्बल्यबलधात्विंद्रियक्षयः ।**
**अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ॥**

स०-अन्यथोक्तविधेरन्येन प्रकारेण स्त्रियं गच्छ[तो] भ्रमादयः स्युः । अपर्वण्यकाले मरणम[प]मरणम् ॥ ५३ ॥

प०-अन्यथोक्तविधेरन्येन प्रकारेण स्त्रियं गच्छतो भ्रमादयः स्युः । अपर्वण्यकाले मरणमपर्वमरणम् ॥ ५३ ॥

हे०—उक्तविध्यतिक्रमे दोषमाह—ऊरुदौर्बल्यं—सक्थिशैथिल्यं, बलादीनां क्षयः, अपर्वमरणमकालमृत्युः, अन्यथा स्त्रियं गच्छतः-उक्तप्रकारादन्येन प्रकारेण संभोगं भजतः, रसायुर्वेदे—"विपरीतरतप्राप्त्या लिंगे दाहः प्रजायते । कार्श्यं च सर्वगात्रेषु तत्प्रतीकार उच्यते ॥ प्रत्यग्वस्तिं निबध्यैव लिंगचूषणमावहेत् । क्षरणे तस्य संजाते स्नापयेच्छीतलांबुना ॥ कोलनिर्यासमादाय पाययेत्तं सशर्करम् । शाल्मलीदूर्वयोर्मूलरसं पायसमाशयेत् " इति ॥ ५३ ॥

**स्मृतिमेधायुरारोग्यपुष्टींद्रिययशोबलैः ।**
**अधिका मंदजरसो भवंति स्त्रीषु संयताः ५४ ॥**

**स०**—स्त्रीषु संयताः स्त्रीः सम्यक् सेवमानाः स्मृत्यादिभिरधिका अल्पजराश्च भवंति ॥ ५४ ॥

प०—स्त्रीषु संयताः स्त्रीः सम्यक्सेवमानाः स्मृत्यादिभिरधिका अल्पजराश्च भवन्ति । स्मृतिरतिक्रान्तस्यार्थस्य स्मरणम् । मेधा प्रज्ञा । आयुर्जीवितम् । आरोग्यं—स्वास्थ्यम् । पुष्टिः—शरीरपोषः । इन्द्रियाणि—चक्षुरादीनि । यशः—कीर्तिः । बलं—शरीरसामर्थ्यम् । तैरधिका भवन्ति । तथा मन्दजरसः—स्वल्पपलिता भवन्ति ॥ ५४ ॥

हे०—विध्याचरणे फलमाह--स्त्रीषु संयुता विधिना स्त्रीः सेवमानाः स्मृत्यादिभिराधिका मंदजरसश्च भवंति । इंद्रियं शुक्रं, मंदजरसश्चिरस्थायियौवनाः ॥ ५४ ॥

**स्नानानुलेपनहिमानिलखंडखाद्य—**
**शीतांबुदुग्धरसयूषसुराप्रसन्नाः ।**
**सेवेत चानुशयनं विरते रतस्य**
**तस्यैवमाशु वपुषः पुनरेति धाम ॥ ५५ ॥**

**स०**--रसांते यथौचित्येन स्नानादीन् सेवेत । खण्डखाद्यंखंडकृतं कणिकेत्यादि । रसो मांसरसः । चानुशयनमिति । अनु पश्चाच्च स्वप्नं सेवेत । तस्य स्नानादिसेविनः शरीरस्य एवमस्मिन्कृते धाम तेजो भूय आगच्छति । स्भौ जौ वसंततिलकं गुरुकद्वयं च । स्नानांगरागव्यजनेंदुपादयूषासवक्षीररसान् रसालाम् । भक्षान् सिताढ्यान् सलिलं सुशीतं सेवेत निद्रां च रतांततांत इति ॥ ५५ ॥

प०—रतस्य सुरतक्रियाया विरतौ अवसाने पुमान् स्नानादिकं सेवेत । अनुलेपनमनुरागश्चन्दनादिभिः सुगन्धद्रव्यैः । हिमानिलः शीतवातः । खण्डखाद्याः—भक्षविशेषाः । शीताम्बु—शीतलं तोयम् । रसो मांसरसः । यूषो—धान्यैः कृतः । प्रसन्ना—सुरामण्डः । एतत्सर्वमनु पश्चात् सेवेत । तथानुशयनं सेवेत । तस्य पुंसः एवं कृते सति वपुषः शरीरधाम शुक्रं बलं तेज आगच्छति । "स्त्रीसंसर्गाद्धि सद्यः स्यात् क्षीणता बलिनामपि । एवं स्नात्वाचाने शीघ्रं तेषां शुक्रं च धाम च " इति ॥ ५५ ॥

हे०—संभोगावसानसेव्यानाह—हिमानिलः—शिशिरमारुतः, खण्डखाद्यं—शर्कराप्रचुरं द्रव्यम् , शीतांबु—शीतोदकं, रसो—मांसरसः, प्रसन्ना-अच्छसुरा, शयनं—निद्रा, रतस्य विरतौ अनु समनंतरमेव सेवेत । एवं कृते तस्य रतक्षीणतेजसः वपुषो धाम-शारीरं तेजः, पुनरप्याशु शीघ्रमेति५५

एतच्च पूर्वोक्तं हिताहितं सर्वं वैद्य एव वेत्ति तस्माद्वैद्ये सर्वथा शरीरं राज्ञा निवेद्यमिति दर्शयन्नाह—

**श्रुतचरितसमृद्धे कर्मदक्षे दयालौ**
**भिषजि निरनुबंधं देहरक्षां निवेश्य ।**
**भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः**
**स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ ५६ ॥**

**स०**—भिषजि शरीररक्षणं निरनुबंधं निर्विकल्पमाधाय बहुकालमात्मीयश्रेष्ठफलभोगवान् तथा तेजश्च स्वास्थ्यं च कीर्तिश्च प्रभावश्च एवं विपुला विस्तीर्णास्तेजःस्वास्थ्यकीर्तिप्रभावा यस्य स एवंविधः । कीदृशे भिषजि । श्रुतं शास्त्रावबोधः । चरितमाचारः । ताभ्यां समृद्धे संपूर्णे । तथा क्रियाचतुरे । तथा कृपालौ । वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः ॥ ५६ ॥

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामन्नपानरक्षाध्यायः सप्तमः ॥ ७ ॥

प०—भूमिपालो राजा भिषजि वैद्ये श्रुतचरितसमृद्धे बोधशीलसंपन्ने, कर्मदक्षे, चिकित्साकुशले, दयालौ, अनुकम्पायुक्ते, निरनुबन्धम्—अनुबन्धविग्रहरूपा प्रतिज्ञा चिकित्सा या तां निवार्य, निरनुबन्धम् देहरक्षां शरीरपालनं निवेश्य दत्त्वा सुविपुलतेजःस्वास्थ्यकीर्तिप्रभावः स्यात् । तथा

१ अत्र 'संयुताः' इति पाठा० ।

कुशलफलभोगी च स्यात् । चिराय विपुलावकाशाय । चिरायेति चतुर्थ्यन्तप्रतिपादको निपातो दीर्घकालं व्याचष्टे । तेजश्च स्वास्थ्यं च कीर्तिश्च प्रभावश्च ते विपुला यस्य स तथाविधः। तत्र तेजस्वित्वं, स्वाध्यं शरीरपटुता । कीर्तिर्यशः । प्रभावः-ऐश्वर्यम् । विभव इत्येकोऽर्थः । एते विपुलाः समृद्धा विस्तीर्णा यस्य स तथाविधः । राजा स्वं च तत् कुशलं शोभनं पुण्यतमं कर्म श्रेयोरूपं, तस्य फलमैश्वर्यादियोगात् सुखोपयोगतां सद्यो भुङ्क्ते । स्वकुशलफलभोगी चिराय भवतीति भद्रम् ॥ ५६ ॥

इति श्रीचन्द्रनन्दनविरचितायामष्टाङ्गहृदयटीकायां सूत्रस्थाने अन्नरक्षाध्यायः सप्तमः ॥७॥

हे०—अध्यायार्थमुपसंहरति श्रुतेति। उक्तप्रकारान्नरक्षाद्वारेण देहरक्षां भिषजि निवेश्य भूमिपालश्चिरायुर्भवति । कीदृशे भिषजि—श्रुतचरितसमृद्धे शास्त्रशास्त्रोक्तानुष्ठानसंपन्ने, कर्मदक्षे-उपचारकुशले, दयालौ-कारुणिके, निरनुबंधं—निःशंकं, तेजः-कांतिः, स्वास्थ्यमारोग्यं, कीर्तिर्यशः, प्रभावः प्रतापः । स्वकुशलफलभोगी—स्वोपार्जितपुण्यफलोपभोगक्षमः, चिरायुर्दीर्घायुः । संग्रहे तु—"मनःशरीरस्थितिमात्रमेव सेवेद्व्यवायं नच तत्परः स्यात् । विशुद्धहृष्टो रहसि तत्कामस्तरुणः पुमान्॥ समस्थितांगः सुरभिर्मुक्तमूत्रादिरव्यथः । नाऽनाशितो नात्यशितो वृष्याणां तर्पितस्त्र्यहम् ॥ नारीं नारीगुणैर्युक्तां सहपूर्वगुणां व्रजेत् । हन्त्यायुरोजःशुक्राणां क्षयं मेढ्राश्रयान् गदान् ॥ वायोः कोपमधर्मं च मूढः प्राप्नोत्यतोऽन्यथा । उत्तानो वेगरोधी च वृद्धिमेहाश्मशर्कराः ॥ तिमिरादिगदोत्पत्तिर्मूर्द्धाद्याहननाद्ध्रुवम् । न चार्वाक् षोडशाद्वर्षात्सप्ततेः परतो न च ॥ आयुष्कामो नरः स्त्रीभिः संयोगं गंतुमर्हति[1] । अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियो व्रजन् ॥ उपतप्येत सहसा तडागमिव काजलम् । शुष्कं रूक्षं यथा काष्ठं जंतुजग्धं विजर्जरम् ॥ स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियं व्रजन् । कायस्य तेजः परमं हि शुक्रमाहारसारादपि सारभूतम्॥जितात्मना तत्परिरक्षणीयं ततो वपुः-संततिरप्युदारा । अप्रशस्तो भजेद्भावांस्तदात्वसुखसंज्ञकान् ॥ सुखोदर्केषु सज्जेत दे[2]इत्यैतदलं हितम् । प्रज्ञापराधोऽसात्म्यार्थसंयोगः कालवैकृतम् ॥ हितेऽपि रतमाहारे योजयंत्यामयैर्नरम् । नापथ्यसेविनं सद्यः प्रबाधंते तदा मलाः ॥ प्रकोपं प्रतिनिघ्नंति भिन्नैर्दूष्यादिभिर्यथा । नच सर्वोपचारोऽपि सर्वदा सर्वदोषकृत् ॥ नहि सर्वाण्यपथ्यानि तुल्यदोषाणि नैव च । सर्वे तुल्यबला दोषा न सर्वाणि वपूंषि च ॥ व्याधिक्षमत्वे शक्तानि यतोऽपथ्यं तदेव तु । गच्छत्यपथ्यतमतां तुल्यदूष्यादिवर्द्धितम् ॥ त एव च पुनर्दोषा हेतुभिर्बहुनिश्रिताः । मिथो विरुद्धा बलिनो दीर्घकालानुवर्तिनः ॥ सर्वे समं प्रकुपिताः प्राप्याल्पमपि कारणम् । प्राणायतनमाश्रित्य गंभीराः सर्वमार्गगाः । देहे हितोचिते ते स्युश्चिरादप्याशुकारिणः ॥ अहितान्यपि चान्येषामभ्यासादुपशेरते । दोषाश्चैषां क्षयं यांति कर्मवातातपादिभिः ।" अथ बहूनामेकरोगोत्पत्तिः "भिन्नाहारवयःसात्म्यप्रकृतीनां समं भवेत् । एके विकृतवाय्वादियुगपत्सेवनाद्रदः ॥ वातादीनां तु विकृतिर्विकृताद्बहुचारतः । भौमांतरिक्षदिव्येभ्य उत्पातेभ्यश्च जायते ॥ संभवः पुनरेतेषां कर्मणः सामुदायिकात् दुष्टो वायुरभिष्यंदी स्तिमितोऽत्युष्णशीतलः ॥ कुंडलो भैरवरवः पुरुषोऽनार्तवो बली । अन्योऽन्यव्याहतगतिः पांशुबाष्पविषान्वितः ॥ रसवर्णादिविकृतमपक्रांतविहंगमम् । निंदितप्रभवं तोयमुपक्षीणजलेशयम् ॥ मक्षिकामूषिकव्यालबहूत्पादप्रदूषितः । देशोऽपथ्यान्नबहुलो नष्टधर्ममहौषधिः ॥ कालश्च विपरीतानि हीनलिंगो यथायथम् । एते दुष्परिहारत्वादहितायोत्तरोत्तरम् ॥ तेषामानियतं कर्म तस्मिन् काले सुदारुणे । कर्म पञ्चविधं तेषु योज्यं तद्वद्रसायनम् ॥ शस्यते देहवृत्तिश्च भेषजैः पूर्वमुद्धृतैः । ब्रह्मचर्यं दयादानं सदाचाररतिः शमः सद्धर्मसत्कथा पूजा देवर्षीणां जितात्मनाम् । देशानामविपन्नानां साधूनां च निषेवणम् ॥ दैवव्यपाश्रयं चेष्टं कर्म जीवितरक्षणम् ॥ हेमन्तादिषु कुर्वीत स्वं स्वं चाकालिकेष्वपि ॥ विधिं तच्छीलनं यस्माच्छीतादिद्वंन्द्वकारितम् ऋतुचर्या हि शीतोष्णवृष्टिदोषप्रतिक्रिया ॥ अतएव चर्यायां हेमंतशिशिरे समे " अथाकालमृत्युः "सर्वप्राणभृतां नित्यमायुर्युक्तिमपेक्षते । दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम् ॥ अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम् । विद्यात्ते कर्मणी त्रेधा श्रेष्ठमध्यावरत्वतः तयोरुदारयोर्युक्तिर्दीर्घस्य सुसुखस्य च । नियतस्यायुषो हेतुर्विपरीतस्य चावरा ॥ मध्यामध्यस्य मिश्रस्य सर्वं शृणु चापरम् । दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ॥ ६

१ अत्र "कर्तुमर्हति" इति खपुस्तके ।

२ अत्र "वृद्धां [illegible]" इति युक्तः पाठः ।

दैवेन बलिना पौरुषं कर्म दुर्बलम् । दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः ॥ कर्म किंचित्क्वचित्काले विपाकनियतं महत् । किंचित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते ॥ एवं च द्विविधो मृत्युः कालाकालविभेदतः । उपदिष्टस्ततश्चैव हिताहितविधिक्रमः ॥ एकोत्तरं मृत्युशतं ब्रुवते वेदवादिनः । तत्रैकः कालसंयुक्तः शेषास्त्वागंतवः स्मृताः ॥ श्वेनाजिरादियोगेन भ्रातृव्यस्य तथा च तैः । दैर्घ्यश्रवससोमाद्यैर्विहितस्त्वात्मनो वधः ॥ आयुष्कामस्य तत्प्राप्तिस्तत्रेष्ट्यामित्रविंदया । सर्वस्मादेव चात्मानं गोपायेदीदृशी स्मृतिः॥ तथा मरणमुद्दिष्टं सौगतानां चतुर्विधम्। विषमापरिहारेण जायतेऽनियतायुषाम् ॥ ध्रुवं रोगित्वमन्येषां मृत्युरेव च पर्वणि । अकाण्डे शस्त्रवाताद्यैः प्रत्यक्षो मृत्युरन्यथा ॥ उद्भ्रांतचण्डमातंगतुरंगादिसमागमम् । अरातिदुष्टवातादिः साहसाहितभोजनम् ॥ वर्जयेदिति न ब्रूयुर्मुनयो दिव्यचक्षुषः । दैवव्यपाश्रयार्दीश्च रसायनविधिं विना ॥ न वालेऽपि यथाकाममायुषः स्थितिमाप्नुयुः । अहिसिंहगजादिभ्यो विदुषां न भयं भवेत् ॥ मिथ्याप्राकारदुर्गाणि मिथ्यामारणरक्षणम् । आयुष्कामस्य मिथ्यैव परदारादिवर्जनम् ॥ मंत्रदेवतयाहूता नाचक्षीरन्महाहयः । विषसुप्तप्रबुद्धस्य भावाभावौ तदायुषः । संन्यासरोहिणीकादिग्रस्तस्य सहसा भवेत् । उपेक्षया न मरणं जीवितं वा चिकित्सया ॥ प्रत्यहं नृसहस्रस्य युद्धेऽन्योन्यमभिघ्नतः । साधुवृत्तस्य वा तुल्या न भवेदायुषः स्थितिः ॥ नायुर्वैद्भिर्द्विषभिंद्राद्या नौषधैरार्तमश्विनौ । उपक्रमैरनभवेदकालमरणं यदि ॥ घटानामामपक्वानां पालनापरिपालनैः । चिराल्पकालवर्तित्वं चित्रस्थानां विदृश्यते ॥ इत्यत्यंतप्रसिद्धेऽपि सिद्धे सर्वागमैरपि । दृष्टेऽप्यकालमरणे विचिकित्सेत् कथं पुनः ॥ गुणवद्भिषगादीनां संभवे संभवेत्तु यः । मृत्युस्तं कालजं प्राहुरितरं तद्विपर्यये ॥ यथा रथो वाह्यमानो न्यायेन क्रमशः क्षयम् । यायादात्मवतामायुस्तथान्येषां विपर्ययः ॥ शुचितैलदशो दीपः कीटवाताद्यपीडितः । दीप्तिमान्वर्तते सम्यक् यथैव स्नेहसंक्षयात् ॥ स एवातो यथा च स्याद्विपरीतो विपर्यये । हिताहितोपचारेण तथैव पुरुषो ध्रुवम् ॥ सर्वमन्यत्परित्यज्य शरीरं पालयेद्यतः । तदभावे हि भावानां सर्वाभावः शरीरिणाम् ॥ नगरी नगरस्येव रथस्येव रथी सदा । स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ आहारकल्पनाहेतून् स्वभावादीन् विशेषतः । समीक्ष्य हितमश्नीयाद्देहो ह्याहारसंभवः ॥ भीलज्जायंत्रणालोभहर्षशोकवशंगतः । न जातु धारयेद्वेगांस्तद्धि सर्वापदां पदम् ॥ हितमभ्यस्यतः पुंसो नाकाले कालदंष्ट्रया । संजायते परामर्शो बलोत्साहेंद्रियायुषम् ॥ अहितानि च संत्यज्य दोषमप्याप्नुयाद्यदि । तथाप्यानृण्यमाप्नोति साधूनामात्मवानिति ॥ यच्च रोगसमुत्थानं न शक्यमिह केनचित् । परिहर्तुं न तत्प्राप्य शोचितव्यं मनीषिणा ॥ हिताहारविहाराणां सदाचारनिषेविणाम् । लोकद्वयव्यपेक्षाणां जीवितं ह्यमृतायते ॥ गृध्नुर्ग्राम्यसुखे यस्तु क्लेशानां हस्तसत्पथः । मूढो जीवत्यनर्थाय दुर्गतिं परिवृंहयन् ॥ विद्वान्तःशरीरस्थान् नित्यं संनिहितानरीन् । जित्वा सर्वाणि वर्ज्यानि चिरं जीवितुमिच्छता ॥ तदाप्ते चानुबंधे वा तस्मात्कर्माशुभोदयम् । स्मरन्नात्रेयवचनं नो न धीमान् कर्तुमर्हति " इति ॥ ५६ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने अन्नरक्षाप्रकरणं सामन्येन निरूपितम् ॥ ७ ॥

---

# अष्टमोऽध्यायः ८.

अन्नरक्षाध्यायानंतरं मात्राशितीयो युक्तः। यतो विषादिभ्यो रक्षितमन्नपानं हीनमात्राभ्यवहृतं जीवितोपघाताय संपद्यते । मात्राभ्यवहृतं प्राणिनां प्राणाय--

## अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ॥

स०--अथेत्यानंतर्ये यथा । अथाऽतो धर्मजिज्ञासेति वेदाध्ययनादनंतरं धर्मो जिज्ञासितव्य इत्यर्थः । अतः इति प्रस्तुताभिसंबंधे । अशनमशितम् । भावे निष्ठा । मात्रयाऽशितं तस्मै हितो मात्राशितीयः । शेषं पूर्ववद्व्याख्येयम् ॥१॥

प०--अथेत्यानन्तर्ये । अत इति प्रस्तुताभिसम्बन्धादन्नरक्षाध्यायादनन्तरं मात्राशितीयस्यारम्भः । यतो गुणवदप्यन्नं पानं विषाद्यनुपद्रुतं हीनमात्रमभ्यवहृतं जीवितघाताय । तदेव सम्यङ्मात्राभ्यवहृतं प्राणिनां प्राणा एव । मात्रा परिमाणम् , अशनमशितं, मात्रयाऽशितं मात्राशितम् । तस्मै हितो यो मात्राशितीयः । तं व्याख्यास्यामः । यथावन्मात्रोपदेशान्मात्राशितीयः ॥ १ ॥

---

१ अत्र " मृत्युरेव त्वपर्वणि " इति खपुस्तके ।

हे०--मात्राशितीयमध्यायं व्याख्यातुं प्रतिजानीते-ग्थेति । यतः पूर्वेऽध्याये आहारो वर्णितस्तत्र तत्र च क्ष्यते । इत्युक्तम् । स चासाधारणो यथास्वं क्तव्यः । असाधारणार्थमयमध्यायः । मात्राशब्देन म्यग्योगो लक्ष्यते स चासम्यग्योगस्य त्यागात्सं-यति । स पुनः सप्तधा--संकीर्णाशनम्, विरुद्धाश-म्, अमात्राशनम्, अजीर्णाशनम्,समशनम्, अध्य-नम्, विषमाशनं चेति । तत्र निषिद्धानां गृहे निषि-र्वा सह निषिद्धं चान्नं यत्र भुज्यते तत्संकीर्णाशनम्, च शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् इत्याद्युक्तम् । रुद्धाशनम्--अहिताशनम्, तच्च विरुद्धमप्याहारमित्याद्यु-म् । अमात्राशनादीन्यत्रोच्यन्ते । मात्रावदपि यन्न र्यति तदजीर्णाशनम् । समशनादीन्येव लक्षयि-यति ॥ १ ॥

**मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।**
**मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥ २ ॥**

१ द्वितीयमिह शास्त्रप्रयोजनं यदातुरव्याधिहरणं, स्वस्थस्वास्थ्यरक्षणं च । यदाह--" स्वस्थातुरपरायणम् " इति । तेनोत्पन्नव्याधिप्रतीकारद्वाराऽऽतुररक्षणं भेषजचतुष्कम-भिधाय स्वस्थचतुष्कोऽभिधातव्यः । तत्राऽपि स्वास्थ्यपरि-पालनहेतुषु मात्रावदन्नं प्रधानम् । यदाह--प्राणिनां पुन-र्मूलमाहारो बलवर्णौजसां च । तच्चेह " मात्रावदन्नं विधी-यते " इत्यादौ मात्राशितीय एवाभिधीयते । मात्राशितम-धिकृत्य कृतोऽध्यायो मात्राशितीयः । यद्यपि " मात्राशी " इति पदमनुश्रूयते तथापि " मात्राशितीयः" इति संप्रणयने कष्टोच्चारणभयादर्थपरपर्य्यायशब्देनेयं संज्ञा कृता । यथा "न वेगान्धारणीया " इत्यादिका संज्ञा । मात्रां मात्रावदन्नमशितुं भोक्तुं शीलं यस्यासौ मात्राशी । यदि वा मात्रयाऽशितुं भोक्तुं शीलं यस्य स तथोक्तः । तत्रेह मात्राऽनपायि परिमाणम् । अशिरयमिहाविशेषेण खाद्यप्राश्यलेह्यपेयानामभ्यवहारे वर्तते । तेन मात्राशीत्यादियुक्तं खाद्यलेह्यपेयानां मात्राभ्यवहरणं नोक्त-मिति यच्चोच्यते, तन्निरस्तं स्यात् । दृष्टश्चायमशिः खाद्याद्यभ्य-वहारे यथा दशमूलहरीतक्यां " एकान्ततः प्राश्य ततश्च लोहाच्छक्तिर्निहन्ति क्षयथुं प्रवृद्धम् ।" तथा " क्षीराशी तं प्रयोजयेदिति " इतश्चावगन्तव्यं आशिरयं सर्वाभ्यवहारे वर्तते, येनैतद्विवरणं सामान्येनैव कृतम् । आहारमात्रा पुन-रिति न पुनरशितमात्रा पुनरिति । मात्रां व्याकरोति--आहा-रेत्यादि । अग्नेर्बलमुत्कृष्टं मध्यमल्पं वाऽपेक्ष्योत्कृष्टा मध्याल्पा वा मात्रा स्यादित्यग्निबलापेक्षिणी । पुनःशब्दो भेषजादिमात्रां व्यायाममात्रां च व्यावर्तयितुम् । तेन न सर्वमात्राऽग्निबलापे-क्षिणी । यतो भेषजमात्रा व्याध्यातुरबला पेक्षिणी वक्तव्या, व्यायामस्य तु दोषक्षयाग्निवृद्ध्याद्युत्पादश्रमाद्यनुत्पादापेक्षिणी-

स० सर्वकालं स्वस्थ आतुरो वा मात्राशी स्यात्

--व्यवस्थापयितव्या । यदि वा पुनःशब्दः पौनपुन्ये, तेनाहा-रमात्रा पुनः पुनरग्निबलमपेक्षत एतदुक्तं स्यात् । यत एकस्मि-न्पुरुषे एकदा याऽग्निबलेन व्यवस्थापिता मात्रा सा न सर्वकालं स्यात् यत्र ऋतुभेदेन वयोभेदेन च तस्यैवाग्निः कदाचिद्विवृद्धो भवति यथा--हेमन्ते यौवने च । कदाचिन्मंदो भवति यथा वर्षासु वार्धक्ये च । तेनाग्निबलभेदान्मात्राप्येकरूपा न स्यात् किन्तु तत्कालभवमग्निबलमपेक्ष्य पुनः पुनर्मात्रापि भिद्यत इति । अग्निबलापेक्षत्वमेव विवृणोति--यावद्धीत्यादि । याव-दिति यावत्परिमाणम् । हिशब्दो हेतौ । अस्येति भोक्तुः । अशनं चतुर्विधमपि भोज्यम् । अशितं भुक्तं प्रकृतिं वाता-दीनां रसादीनां च साम्यावस्थाम् । अनुपहत्य विकारमकृत्वे-त्यर्थः । यथाकालमिति निशाशेषे । तावदिति पूर्वप्रमाणाव-च्छिन्नशमनं प्रत्यवमृशति । द्वितीयम् " अस्य " इति ग्रहण-मन्यत्र प्रतिषेधार्थम् । तेन यस्यैव यावतीमात्रा निर्विकारा, तस्यैव सा मन्तव्या, नान्येषाम् । प्रतिपुरुषमग्निबलस्य भिन्न-त्वात् । यद्यपि चैकस्मिन्नपि पुरुषे कालादिभेदेनाग्निबलभेदो भवति, तथाप्येकपुरुष एकमात्रामवधार्य्य कियन्तमपि कालं तयैव मात्रया अग्निबलभेदहेत्वभावे सति व्यवहारो भवत्येव । मात्राप्रमाणं मात्रेयत्ता, मात्राप्रमाणशब्देन चेह मात्राप्रमाण-वदिति बोद्धव्यम् । अन्यथा तावच्छब्देनावच्छिन्नाशनवाचिना मात्राप्रमाणशब्दस्य गुणवाचिनः सामानाधिकरण्यं न स्यात् । ननु प्रकृतिमनुपहत्येति न कर्तव्यं विशेषणं,नह्याहारो यो यथा-कालं जरां याति स मात्रादोषाद्विकारं करोति । करोति तु द्रव्यस्वभावसंस्कारादिदोषात् । यथा--मन्दकलकुचादयो यथा कालं जरां गच्छन्तोऽपि दोषजनका भवन्त्येव । न ताव-तापि तत्र मात्रा दुष्यति, यथा वक्ष्यति त्रिविधकुक्षीये--"न च केवलं मात्रावत्त्वादेवाहारफलसौष्ठवमवाप्तुं शक्यं, प्रकृ-त्यादीनामष्टानामाहारविधिविशेषायतनानांभिन्नफलत्वात्"इति। नैवं, द्विविधा हि मात्रा रसविमाने वक्तव्या, सर्वग्रहरूपा परिग्रहरूपा च । तत्र समुदितस्याहारस्य परिमाणं सर्वग्रह-मधुराम्लादीनामाहारावयवानां प्रत्येकं मात्रया ग्रहणं परि-ग्रहः । तेन यत्राहारसमुदायपरिमाणं समुचितमेव गृह्यते, आहारावयवानां तु मधुरादीनां स्वभावहितानामप्ययथोक्तमा-नं स्यात्, तत्राहारावयव--मात्रावैषम्याद्धातुवैषम्यं भवत्येव, अयथाकालं जरागमनं च स्यात् । तदुक्तं प्रकृतिमनुपहत्येति विशेषणम् । अन्ये तु व्याख्यानयन्ति । " अस्य " इति, " असनम्" इति, " अशितम् " इति च पदत्रयं प्रकरणादेव लभ्यते । तत्पुनः क्रियते विशेषप्रतिपादनार्थम् । तेन " अस्य " इत्यनेन परीक्षको भोक्ताऽधिक्रियते " अशनम् " इत्यनेन च प्रशस्तमशनं प्रकृतिकरणसंयोगदेशकालाविरुद्धम् । उच्यते " अशितम् " इत्यनेन च यथाविधि भोजनमुच्यत । तदेवं सर्वगुणसंपन्न आहारो मात्रावानुच्यते ॥

परिमिताशी भवेत् । कुतो हेतोः हि यस्मान्मात्राऽग्नेः प्रवर्तिका स्वव्यापारे अग्निप्रवृत्तिश्च देहस्थितिहेतुः । तथा चोक्तम् । अग्निमूलं बलं पुंसां बलमूलं हि जीवितमिति । तस्मान्मात्रायाः प्राधान्यम् । यस्माच्च कारणान्मात्रायाः प्राधान्यं ततो मात्रां द्रव्याण्यपेक्षंते गुरूण्यपि लघूनि च । तत्र गुरूणि पिष्टक्षीरद्राक्षाक्षोडेक्षुमाषानूपमांसादीनि । लघूनि दिव्योदकरक्तशालिषष्टिकमुद्गलावकपिंजलैणशशशंबरादीनि ॥ २ ॥

प०—मात्राशी परिमिताशी नरः सर्वकालं स्वस्थोऽप्यातुरो वा स्यात् । यस्मान्मात्रा चोपयुक्ताऽग्नेः प्रवर्तिका स्वव्यापारे पचनक्रियायाम् । तेन मात्राशी मात्राखादी, मात्रापायी, मात्रालिहीति द्रष्टव्यम् । मात्राया लक्षणमाचार्येणोक्तमेव । मात्रा पुनरग्निबलाहारद्रव्याद्रव्यापेक्षिणी कुक्षेरतिपीडनमाहारेण । हृदयस्यासंरोधः । पार्श्वयोरपि पाटवम् । अनतिगौरवमुदरस्य । प्रीणनमिन्द्रियाणाम् । क्षुत्पिपासोपरतिः। स्थानाशनशयनगमनोच्छ्वासप्रश्वासक्रियासु सुखेन प्रवृत्तिः । सुखेन परिणमनं बलवर्णोपचयश्चेति मात्रालक्षणम् । इतश्च मात्रायाः प्राधान्यम् । यान्यपि लघूनि द्रव्याणि अथवा गुरूणि-क्षीरेक्षुव्रीहिमाषानूपामिषादीनि । लघूनि-दिव्योदकरक्तशालिषष्टिकमुद्गैणलावादीनि तान्युभयरूपाण्यपि मात्राप्रमाणमपेक्षन्ते । तदधीनानि तानि भवन्तीत्यर्थः ॥ २ ॥

हे०--तत्र मात्रां विधत्ते—मात्रामश्नातीति मात्राशी । यद्यपि मात्राविशिष्टान्नपानस्यैव कर्मत्वम्,तथापि प्राधान्यार्थं मात्रायाः कर्मत्वव्यपदेशः । किमर्थं मात्राशी स्यात्, हि यस्मान्मात्रा अग्नेः प्रवर्तिका पचन्तमग्निं प्रवर्तयति पाचयतीत्यर्थः । ननु द्रव्याण्यग्निमिंधनत्वात्प्रवर्तयंति न मात्रेत्यत आह—मात्रां द्रव्याण्यपेक्षंते । ननु गुरूणि द्रव्याणि दुर्जरत्वान्मात्रामपेक्षन्ताम्, न पुनर्लघूनीत्यत आह—गुरूण्यपि लघून्यपि ॥ २ ॥

तत्र गुरूणां का मात्रा का लघूनामित्याह—

**गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।**
**मात्राप्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ॥३॥**

स०—गुरूणां द्रव्याणामर्धसौहित्यमर्धतृप्तिः लघूनां नातितृप्तता नातितृप्तिः किं तर्हि सौहित्यमात्रम् । एतन्मात्राप्रमाणं निर्दिष्टम् । मात्रा ह्रस्वा मध्या बृहती च तस्याः प्रमाणम् । तत्र प्रमाणं मानम् । एवं चात्र मात्राशब्दस्यापौनरुक्त्यम् । हि यावत् परिमाणमभ्यवहृतं सुखमविकृतिं कृत्वा परिणमति । एतद्विपर्ययेण हीनमात्रं भोजनं वर्ज्यं दोषदर्शनात् ॥ ३ ॥

प०—ननु किं सौहित्येन यावदेतानि द्रव्याणि लघूनि गुरूणि नाभ्यवहार्याणि तुल्यरूपतया तृप्त्याहारगुणानामित्याशयेन, आहोस्वित् गुरूण्यन्यप्रमाणानि लघून्यस्य प्रमाणान्यस्य सञ्ज्ञातविदमाह—गुरूणां गुरुद्रव्याणामर्धसौहित्यमर्धतृप्तिता। लघूनां द्रव्याणां नातितृप्तिः, किं तर्हि सौहित्यं सुहितं तृप्तिरुच्यते । यस्मादनिलानलगुणबहुलानि लघूनि तुल्यगुणत्वादग्निसन्धुक्षकाणि । अविधिना चोपयुक्तानि स्वल्पदोषाणि । गुरूणि-पुनः पृथिवीसोमसलिलबहुलानि । अन्यसामान्याद्वह्नेः प्रतिपक्षत्वादग्निमान्द्यकराणि । मात्रायाः परिमाणं मात्रापरिमाणम्,मात्रापरिमाणं मात्रापरिच्छेदः । तावत्परिमाणं यावदभ्यवहृतं सुखमविकृतिं कृत्वा जीर्यति जरां गच्छति । एवं मात्राप्रमाणं निर्दिष्टम् ॥ ३ ॥

हे०--ननु गुरुभिर्लघुभिर्वा तृप्तिरेवोत्पद्यते न तयोर्विशेषः इत्यत आह—गुरूणामित्यादि । यावताऽऽहारराशिना तृप्तिरुत्पद्यते तावताऽर्द्धं भुज्यत इत्यर्द्धसौहित्यं तावन्मात्रमेव नातितृप्तता । नन्वेवं चेन्मात्राया अव्यवस्थितत्वं न प्राप्नोतीत्यत आह—मात्रेत्यादि । मात्राप्रमाणं मात्रालक्षणं यावत्सुखं जीर्यति तावन्मात्राशब्दवाच्यमित्यर्थः । उक्तं च खारणादिना—" यदभ्यवहृतं सम्यक् यथाकालं जरां व्रजेत् । प्रकृत्यविकृतिं कृत्वा तन्मात्रालक्षणं विदुः । " इति तस्माद्गुरूणामर्धसौहित्यं सुखं जीर्यति, लघूनां नातितृप्ततेति नाव्यवस्था ॥ ३ ॥

यथा चाह—

**भोजनं हीनमात्रं तु न बलोपचयौजसे ।**
**सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ४ ॥**

स०--हीनमात्रं पुनरशनं न बलाय नोपचयाय न चौजसे । सर्वेषां वातरोगाणां कारणतां याति ॥ ४ ॥

प०—भोजनमशनं हीनमात्रं स्वल्पप्रमाणं भुक्तं न बलाय, नोपचयाय नाप्योजसे भवति । यथा सर्वेषां

वातरोगाणां मारुतानामामयानां नखभेदाद्यानाम-शीतेर्वातरोगाणां हेतुतां कारणतां प्रतिपद्यते गच्छ-तीत्यर्थः ॥ ४ ॥

हे०—अथ असात्राशने दोषाः । तच्च द्विविधम्—हीनमात्रमतिमात्रं च । तत्र हीनमात्रदोषानाह—बलं शक्तिः, उपचयः पुष्टिः, ओजः कांतिः ॥ ४ ॥

**अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ५**

स०—अतिमात्रं त्वशनं त्रीनपि दोषान् शीघ्रमेव प्रकोपयति ॥ ५ ॥

प०—अतिमात्रं प्रभूतं भुक्तमशनं सर्वान् त्रीन् दोषान्, आशु शीघ्रं प्रकोपयेत् ॥ ५ ॥

हे०—अतिमात्रजान्दोषानाह—अथ प्रसंगादतिमात्रा-कुपितानां दोषजानां रोगाणां निदानचिकित्सिते कथयति। तत्र विसूचिकालसकयोः संप्राप्तिमाह—संपीड्यमानाः संतो युगपत्कोपिताः स्रोतोरोधात्परस्परसंघट्टनेन त्रयोऽप्येकदैव कोपं नीताः ॥ ५ ॥

कुपिताश्च त्रयो दोषा अलसकाख्यं विसूचिकाख्यं वा व्याधिं यथा कुर्वंति तथा दर्शयति—

**पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ।**
**आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ॥**
**विष्टंभयंतोऽलसकं च्यावयंतो विसूचिकाम् ।**
**अधरोत्तरमार्गाभ्यां सहसैवाजितात्मनः ॥ ६ ॥**

स०—तेनापक्केनाहारेण दुष्टेन वाताद्या हि यस्मा-त्पीड्यमाना विबध्यमाना रुद्धमार्गत्वादत एव युगप-देककालं सर्व एव कोपितास्तदेव दुष्टमन्नमाविश्याऽलसकं कुर्वते । किंकुर्वंतः । विष्टंभयंतस्तदेव दुष्टमन्नं स्रोतःसु रुंधानाः तथाऽधरोत्तरमार्गाभ्यां सहसैवानुचिते देशे काले च्यावयंत ऊर्ध्वमधश्च निष्कर्षयंतः । अजिता-त्मनोऽसंयतचेतसः मनुजस्य विषूचिकां कुर्वते ॥ ६ ॥

प०—तेनामेनान्नेनातिभुक्तेन दुष्टेन सता, वाताद्या वातपित्तकफास्त्रयः पीड्यमानाः कोपिता रुद्धमा-र्गत्वाद्युगपदेककालं ते कुपिता विष्टम्भयन्तः विष्ट-म्भं कुर्वन्तः, स्रोतांसि रुन्धाना अलसकमलसाख्यं व्याधिं कुर्वते । किं कृत्वा, तदेवाममन्नमावि-श्याविश्य तेन सह सम्भूय तथा तदेव दुष्टमन्नमा-विश्य च्यावयन्तः, ऊर्ध्वमधश्च निष्कर्षयन्तः 'अध रोत्तरमार्गाभ्यां प्रच्यावयन्तः अन्नमलादिकं बहि प्रेरयन्तो विसूचिकां कुर्वते । तस्याजितात्मनः अशनलुब्धस्य लोलुपस्यासंयतचेतस इति यावत्।याः द्वचनं चात्र—प्रायः प्रज्ञापराधेन रोगग्रामश्च जायते नृणामशनलुब्धानां विशेषेण विसूचिकाः ॥ "त शूलभ्रमानाहकम्पस्तम्भादयोऽनिलात् । पित्ताज्ज्व रातिसारान्तर्दाहतृट्प्रलयादयः॥"आनाह उदरापूर कम्पो वेपथुः । स्तम्भोऽङ्गस्य स्तब्धता । ज्व वक्ष्यमाणः । अतिसारो विट्प्रवृत्तिः अम्लोऽम्लोद्गारः । दाहोऽग्निदग्धवत् तृट् पिपासा पानादिष्वभिलाषः । प्रलयो मोहभ्र प्रवेशः । छर्दिर्वमनम् । अङ्गगुरुता शरीरगौरवम वाचः सङ्गो वाक्सङ्गो वाचोऽप्रवृत्तिः । ष्ठीव श्लेष्मनिरसनम् । अलसकस्य विसूचिकायाश्चान थिरूपतया लक्षणमुक्तं संग्रहे ॥ ६ ॥

हे०—केन तेनातिमात्रेणान्नेन । अतिमात्रत्वादेवा पाककालातिक्रमेऽप्यपक्वेन, अत एव दुष्टेन विकृतेन त वाविश्य तथाविधमेवान्नमधिष्ठाय एवंभूतास्तदन्नं विष्टंभ न्तोऽलसकं कुर्वते,च्यावयंतः पुनर्विसूचिकां काभ्यां च्य यंतः अधउत्तरमार्गाभ्याम्, सहसैव वेगेन, अजितात्मग्र णमन्नलोलुपस्यैवालसकाद्युत्पत्तिरिति ज्ञापनार्थम् । उक्तं सुश्रुतेन—" न तां परिमिताहारा लभंते विदि गमाः । मूढास्तामजितात्मानो लभंते कलुषाशयाः । इति ॥ ६ ॥

एतदेव सविस्तरमाह—

**प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते**
**आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः७**

स०—ऊर्ध्वं मुखेनाहारो न प्रयाति न चाध दुगुदेन प्रयाति न चाहारः पच्यते आमाशये नाभि नांतरं जंतोरामाशय इति स्मृतस्तस्मिन्नलसी इवालसीभूतः । यथाऽकर्मशीलः पुरुषोऽलस इत्युच तथाऽयमाहारोऽलसीभूतस्तिष्ठति तेन हेतुना रोगोऽलसकः स्मृतः ॥ ७ ॥

हे०—प्रयातीत्यलसकं निर्वक्ति—यस्मादस्मिन् व्या वाहारः आमाशयेऽलसीभूतस्तस्मादसावलसयतीत्यल कः । अलसत्वं निष्क्रियत्वम्, तदेव प्रयातीत्यादिना स्प कृतम् ॥ ७ ॥

विसूचिकायास्तु निर्वचनमाह—

**विविधैर्वेदनोद्वेदैर्वाय्वादिभृशकोपतः ।**
**सूचीभिरिव गात्राणि विध्यतीति विसूचिका ८**

**स०**—वाय्वादीनां त्रयाणामत्यंतप्रकोपान्नानाप्रकारैर्वेदनोद्वेदैः पीडोत्पादैर्यस्माद्गात्राणि सूचीभिरिव विध्यति तस्माद्विसूचिकेत्युच्यते । विविधानां विकाराणां सूचिका विसूचिका विसूचिकेत्युच्यते ॥ ८ ॥

**हे०**—विसूचिकां निर्वक्ति—विविधसूचिकातुल्यत्वाद्विसूचिका तदेव विविधैरित्यादिना स्पष्टीकृतम् ॥ ८ ॥

**तत्र शूलभ्रमाऽनाहकंपस्तंभादयोऽनिलात् ।**
**पित्ताज्ज्वरातिसारांतर्दाहतृट्प्रलयादयः ॥ ९ ॥**
**कफाच्छर्द्यंगगुरुतावाक्संगष्ठीवनादयः ॥ १०**

**स०**—वातादधिकाच्छूलादयो भवंति । आदिशब्देनांगोद्वेष्टनमुखशोषादिपरिग्रहः । पित्ताद्दृढाज्ज्वराद्याः स्युः । प्रलयो मूर्छाप्रायः । आदिशब्देन मदादिपरिग्रहः ॥ कफादधिकाच्छर्द्यादयो भवंति । आदिशब्देन क्षवथ्वादीनां ग्रहणम् ॥ ९ ॥ १० ॥

**हे०**--विसूचिकालक्षणमाह—तत्रेति। विसूचिकायामनिलाच्छूलादयो भवंति । पित्तात् ज्वरादयः कफाच्छर्द्यादयः।अंतर्दाहः कोष्ठदाहः,प्रलयो मूर्छा, अंगग्रहणं सर्वांगे गौरवार्थम्, वाक्संगो वाक्स्खलनम्, ष्ठीवनं श्लेष्मनिरसनम्,अनिलादिग्रहणमनिलादिकृतसमस्तविकारप्राप्त्यर्थम्, अत एवादिशब्दः प्रयुक्तः । शूलादिग्रहणं तु मन्दबुद्धिप्रबोधनार्थम्। एतेन त्रैविध्यशंका व्यपास्ता। सुश्रुतोऽपि मूर्छादीन् भेदानाह—"मूर्छातिसारौ वमथुः पिपासा शूलभ्रमोद्वेष्टनजृंभदाहाः । वैवर्ण्यकंपौ हृदये रुजा च भवंति तस्यां शिरसः प्रभेद" इति ॥ ९ ॥ १० ॥

**विशेषाद्दुर्बलस्याऽल्पवह्नेर्वेगविधारिणः ।**
**पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमंतरा ॥**
**अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।**
**शूलादीन्कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥**
**सोऽलसः ॥ ११ ॥**

**स०**--दुर्बलत्वादियुक्तस्य यन्मारुतेन विशेषादन्नं पीडितमंतराऽऽमाशयमध्य एव श्लेष्मणा रुद्धमलसीभूतं तथा दोषैः क्षोभितमाकुलितमत एवाऽतिपीडाकारित्वाच्छल्यरूपत एव स्थितं तीव्रान् दुःसहान् शूलादीन् छर्द्यादिवर्जितान् कुरुते । छर्द्यतीसाराभ्यां विसूचिकोक्ता । सोऽलससंज्ञो रोगः । दुर्बलो ह्यनुपचितधातुः स न कदाचिदाहारं सोढुं शक्तः । अल्पाग्निश्चाहारं सम्यङ्न जीर्यति । यतो वेगधारणशीलस्य प्रतिहतो वायुर्विमार्गगः पित्तकफावपि विमार्गगौ कुरुत इत्येतद्विशेषेण निर्देशः ॥ ११ ॥

**प०**—विशेषादत्यर्थं दुर्बलस्य पुंसस्तथाऽल्पवह्नेर्मन्दाग्नेरबहूष्मणो वेगधारिणो वातमूत्रपुरीषवेगरोधनशीलस्यान्नं मारुतेन वायुना पीडितं तथा श्लेष्मणान्तरा मध्ये पीडितं, विबद्धसत्त्वादबहिर्मुखी भवेत् । अप्रवृत्तिः वर्चसः सम्पाद्य दोषैरलसं कृत्वा क्षोभितमाकुलीकृतं, दुष्टशल्यत्वेनैव संस्थितं बहुविधशूलदाहाङ्गरुजादिदुःखसामान्यकरणात् तदन्नं शूलादीन् यथोक्तान् वाताद्युद्भवान्, तीव्रान् सोढुमशक्यान्, छर्द्यतिसाराभ्यां वर्जितान् अलसीभूतं कुरुते स व्याधिरलस इति भण्यते ॥११॥

**हे०**—अलसकलक्षणमाह—यत्रान्नं छर्द्यतीसारवर्जितान् शूलादीन् विसूचिकोक्तान् कुरुते स व्याधिरलसकः । कीदृशमन्नं मारुतेन पीडितम्, अल्पसंचारिणा वायुना आक्रांतम्, आक्रान्तत्वादूर्ध्वमधो वा अनिर्गच्छदेवांतरा मध्य एव वा श्लेष्मणा रुद्धं निषिद्धनिर्गमम्,अत एवालसं निष्क्रियतां गतं ततो दोषैर्वातपित्तकफैः क्षोभितं संचालितम्, अत एव शल्यत्वेनैव संस्थितं शल्यमिव बाधमानम्। किं सर्वेषामविशेषेण नेत्याह-विशेषादित्यादि॥ दुर्बलत्वादिविशिष्टविशेषणानामित्यर्थः ॥ ११ ॥

दंडकालसकं लिलक्षयिषुराह—

**अत्यर्थदुष्टास्तु दोषा दुष्टामबद्धखाः ।**
**यांतस्तिर्यक्तनुं सर्वां दंडवत्स्तंभयंति चेत् ॥**
**दंडकालसकं नाम तं त्यजेदाशुकारिणम् ॥१२॥**

स०--अतिशयेन दुष्टा दोषास्तथा दुष्टामेन बद्धानि पूर्णानि खानि स्रोतांसि यैस्ते दुष्टामबद्धखाः । तथा तिर्यग्गच्छंतः तनुं सर्वां शरीरं सकलं दंडवद्यदि

---

१ सूचधातोरषोपदेशत्वान्न षत्वप्रसङ्गः। विषूचिकेति पाठस्तु चिन्त्य एव ।

यंति प्रसारणाकुंचनरहितं कुर्वंति तदा दंडकाल-
ो नाम रोगो भवति । तं दंडकालसकं त्यजेन्नोप-
त् । यत आशुकारिणमाशु शीघ्रं स्वकर्म मारणं
तीत्याशुकारी । क्षिप्रं हंतीत्यर्थः ॥ १२ ॥

प०—दोषा अत्यर्थं दुष्टा अतिमात्रं गताः, दुष्टा-
द्धखाः प्रदुष्टामबद्धखाः वातादयस्तिर्यक् यान्तो
छन्तः, कदाचित्तनुं शरीरमस्य दण्डवत् लगुड-
स्तम्भयन्ति स्तब्धं तनुं कुर्वन्ति चेद्यदि तदा दण्ड-
ठसकं नामानं व्याधिमाशुकारिणं शीघ्रकारिण-
ाध्यं त्यजेत् परिहरेत् । शीघ्रं करोतीति शीघ्रका-
शीघ्रं व्यापादयति स एवमुच्यते ॥ १२ ॥

हे०—दंडकालसकं लक्षयति—यत्रालसके दोषाः सर्वां
दंडवत्स्तंभयंति, तमलसकं दंडकालसकसंज्ञम् आशु-
रेणं त्यजेत् । कीदृशा दोषाः । अत्यर्थं दुष्टा अतिमा-
ाशीलनेन अतिदुष्टाः,दुष्टामवद्धखाः चिरं संचयात् दुष्टे-
ान कारणभूतेन बद्धानि पूरितानि खानि स्रोतां-
यैस्ते तथा तिर्यग्गच्छंतः मार्गावरोधात्तिर्यङ्मार्गेण
रंतः ॥ १२ ॥

संप्रत्यामविषं निर्दिशति—

**रुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ।**
**मदोषं महाघोरं वर्जयेद्विषसंज्ञकम् ॥**
**षरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १३ ॥**

१०—विरुद्धं प्रागुक्तं विरुद्धमपीत्यादिना । विद्यादध्यश-
मेत्यादिनाऽध्यशनम् । अजीर्णं च त्रिविधं वक्ष्यति ।
ानि शीलितुं शीलं यस्य तस्य पुंसो य आमदोषो
लक्षणलालादिलक्षणयुक्तो महाघोरोऽतिकष्टो विषा-
ो यो भवति तं न चिकित्सेत् । कुतः । विषरूपत्वा-
शुकारित्वाद्विरुद्धोपक्रमत्वाच्च । विषसदृशस्वरूपत्वा-
षे शीतोपक्रमो युक्त आमे चोष्णोपक्रमो युक्त इति
रुद्धोपक्रमत्वम् ॥ १३ ॥

प०—आमे उष्णा क्रिया कार्या, विषे सा तु
रुद्धयते । शीतसाध्यत्वाद्विषस्य । विषे तु शीता
ग्या हिता, सा त्वामे विरुद्धा आमस्योष्णक्रिया-
मसाध्यत्वात् । तस्मान्महाघोरं प्रलय-
रित्वात् ॥ १३ ॥

हे०—आमविषं लक्षयति—विरुद्धाध्यशनादिशीलिनः
पुरुषस्योत्पन्नमामदोषमजीर्णान्नजं व्याधिं वर्जयेत् । विरुद्धं
पयोमत्स्यादि, अध्यशनं वक्ष्यमाणम् । अजीर्णमजीर्णाशनं
कीदृशमामदोषं विषलक्षणं देहव्यापिविषलक्षणम्, महाघोरं
तीव्रपीडाकरम्,विषसंज्ञं विषाख्यम्,आमोपपदाच्चेयं संज्ञा।
उक्तं च चरकेण,—"विरुद्धाध्यशनाजीर्णाशनशीलिनः
पुनरामदोषमामविषमाचक्षते" इति। कुतो वर्जयेत् विष-
रूपाशुकारित्वाद्विषरूपत्वाच्छीघ्रकारित्वाच्च । ननु विषमपि
साध्यं दृष्टम्, तत्कुतोऽस्य विषरूपत्वादसाध्यत्वमित्याह—
विरुद्धोपक्रमत्वतः हेतुविपरीतव्याधिविपरीतयोर्विरोधात् ।
हेतुर्यत्रामसंश्रयस्तत्राग्नेय उपचारः व्याधिविषरूपस्तत्र
सौम्य उपचार इति विरोधः ॥ १३ ॥

अलसकोपक्रमं निर्दिदिक्षुरिदमाह—

**अथाऽममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।**
**पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥**
**स्वेदनं फलवर्तिं च मलवातानुलोमनीम् ।**
**नाम्यमानानि चांगानि भृशं स्विन्नानि वेष्टयेत् ॥**

स०--अथेत्यानंतर्ये । पूर्वोक्तं साध्यासाध्यमवग-
म्याऽनंतरमामं साध्यमदुष्टं संतं त्वरितं द्रागातुर उल्लि-
खेदुद्वमेदित्यर्थः । किंविधमामम् । अलसीभूतम् । अल-
सलक्षणतामगतमुल्लिखेदित्याह । पीत्वेत्यादि । वचाल-
वणमदनफलयुक्तं जलमुष्णं पीत्वा वमेदित्यर्थः । ततो-
ऽनंतरं स्वेदनं योजयेत् । तथा । विपाच्य मूत्राम्लमधूनि
दंतीपिंडीतकुष्णाबिडधूमकुष्टैः । वर्तिं करांगुष्टनिभ
घृताक्तां गुदे रुजानाहहरीं विदध्यादित्यादि फलवर्तिं च
मलवातानुलोमनीं योजयेत् । तत्रामदोषे दोषवशादं-
गानि च नाम्यमानानि संकोच्यमानानि संत्यत्यर्थं स्वि-
न्नानि वस्त्रादिना वेष्टयेत् ॥ १४ ॥

प०-अथातिमङ्गले । अलसकादीनां महाव्यथिकत्वात्
यदा साध्यत्वं साध्यत्वेन निर्दिष्टम् । अलसीभूतं
त्वरितं शीघ्रमेवोल्लिखेत् । किं कृत्वा । वार्युष्णं
पीत्वा । तच्च सोग्रापटुफलम् । उग्रा वचा । पटु
बिडलवणम् । फलं मदनफलम् । एभिः समेतमुष्णो-
दकं पीत्वा वमेत् । ततो वमनानन्तरमस्यालसका-
र्तस्य स्वेदनं यथायोगं स्वेदाध्यायोक्तं योजयेत्।तथा-
फलवर्तिं मदनफलाङ्गारधूमलवणगोमूत्रादिभिः कृतां,

मलवातानुलोमनीं मूत्रपुरीषवातानां स्वमार्गस्थापनीं, बहिःप्रवर्तिकां च योजयेत् । गुदेऽङ्गुष्ठप्रमाणा प्रणिधेया । यतः सद्यः सम्यगविशुद्धस्य शाम्यन्ति तदुपद्रवाः । अङ्गानि बाह्वादीनि नाम्यमानानि कुटिलत्वं गतानि, भृशं स्विन्नानि मृदुत्वं प्राप्तानि, वस्त्रैरूर्णादिमयैर्वेष्टयेत् ॥ १४ ॥

हे०—उक्तानामामदोषाणां चिकित्सामाह—अथशब्द-श्चिकित्सारंभे मंगलार्थः । आमम् आमदोषमुल्लिखेद्वमेत् । अलसीभूतं यः स्वयं न प्रवर्तते विसूच्या तु मन्दं प्रवर्तते स द्विविधोऽप्युल्लेखनीयः । उक्तं हि खारणादिना—"विसूच्यलसकौ वाम्यौ पिप्पलीलवणांभसा" इति । साध्यग्रहणं नियमार्थं, साध्यमेव नत्वसाध्य-मित्यपि दृश्यते, निदानेष्वसाध्यत्वेनोक्तानां मांसग्रंथ्यादीनां चिकित्सिते किंचित्सोपदेशः, आमदोषस्त्वसाध्योऽसाध्य एवेत्यर्थः । किं कृत्वोल्लिखेत् सोग्रापटुफलमुष्णं वारि पीत्वा, उग्रा वचा, पटु सैन्धवं, फलं मदनफलम् । ततो वमनानंतरं स्वेदनं योजयेत्फलवर्तिं च । कस्यावर्तः फल-वर्तिसंज्ञेत्यपेक्षायामाह—विण्मूत्राधोवातानां प्रवर्तिनी वर्तिः फलवर्तिरित्यर्थः । स्वेदफलवर्तिद्रव्याण्युक्तानि खार-णादिना—" शूले तु स्तिमिते सामे स्वेदः शस्तो मुहुर्मुहुः । रूक्षोष्णैः कटुकैः पांशुकरीषसि-कतादिभिः ॥ पिप्पल्योऽगारधूमश्च मदनं सर्षपास्त्रिवृत् । हेमक्षीरी वचाकिण्वं कुष्ठं दंती यवाग्रजः ॥ समूत्रलवणा-भ्यक्ता फलवर्तिरियं हिता । संस्वेद्यालसके शूलविबंधाना-हमोक्षिणी " इति । यद्यामदोषेणांगानि ताम्यंते संकोच्यन्ते तदा तान्यतिस्विन्नानि कृत्वा वस्त्रादिभि-र्वेष्टयेत् ॥ १४ ॥

**विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।**
**तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १५ ॥**

स०—विसूच्यां पूर्वोक्तलक्षणायामतिवृद्धायां सत्यां पार्ष्ण्योः खुरिकयोरयःशलाकादिना दाहः प्रशस्यते । तद-हर्विसूचिकावंतमुपवास्य लंघयित्वा विरिक्तवत्पेयादिक्र-मेणोपाचरेत् । सुश्रुते चोक्तम् । सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे । भल्लातकमधूच्छिष्टसीसपिण्याक-नागरैः । घृततैलं पचेत् साम्लैस्तच्च खल्लीघ्नमुत्तमम् । त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः । उद्व-र्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वं च तदर्थकारि । शिरी-षनक्तालफगिञ्जबीजार्थस्य [illegible] नक-स्य मूत्रेण विसूचिकाघ्नी [illegible] ॥ १५ ॥

प०—पादस्य पश्चाद्भागो [illegible] पार्ष्ण्योर्दाहः [illegible] याम् अतिवालायां [illegible] । [illegible] कालसकाले [illegible] मुपवास्योपचारं [illegible] [illegible] [illegible] । [illegible] साध्यालसके [illegible] हिग्वादि ॥ १५ ॥

हे०—विसूच्यां [illegible] रेण अज्ञातायां [illegible] प्रकर्षार्थः । [illegible] च्यां तु प्रकर्षेण । यदाह सुश्रुतः—" [illegible] हनं प्रशस्तम् [illegible] " [illegible] । [illegible] णम् । उक्तं च [illegible] क्रियाक्रमः " इति । [illegible] यदाह भेडः—"विसूच्या [illegible] येत् । पिप्पल्या [illegible] ॥ निवृत्तामदोषस्य चिकित्सामाह—[illegible] निवृत्तः तदहरेनमुपवास्य विरिक्तवत्पेयादिक्रमेणोपाचरेत् । चकारात्पूर्वाण्यप्यहानि उपवास्य, तथा च [illegible]— "आमाशयविशुद्ध्यर्थमथैनमुपवासयेत् । जीर्णे विरिक्तवत्तस्य स्याद्या प्रोक्ता पेयपूर्विका " इति । [illegible] पठ्यमानेन प्रकृतपरामर्शिना [illegible] आमदोषनिवृ-त्तिदिनमेव परामष्टुं युक्तं न पुनरुत्पत्तिदिनम् ॥ १५ ॥

**तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।**
**आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥**
**निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम् ॥ १६ ॥**

स०—अजीर्णी तीव्रशूलोऽपि सन् शूलघ्नमौषधं न पिबेत् । वमनकरमुष्णोदकं च प्रागुक्तमेव पिबेदि-त्यर्थः । शूलघ्नमित्युपलक्षणार्थम् । [illegible] विसूचिकायां न पिबेत् । यत आमेन सन्नो मंदीभूतो-ऽग्निर्दोषौषधाशनं पक्तुं न समर्थः । एतेषां च दोषौषधा-शनानां त्रयाणां संबन्धी यो विभ्रमो व्यापत्तिः सहसा कालमनपेक्ष्य चातुरं हन्यात् । न केवलमिदं शूलाय

पद्यते प्रत्युत दोषं करोतीति सूचनार्थमपि चेति तम् ॥ १६ ॥

प०—अजीर्णी नौषधं पिबेदित्यक्षरयोजना । अजीर्णमस्यास्तीत्यजीर्णी अपरिणताहारः, स तीव्रार्तिरपि त्यर्थं शूलवानपि, शूलघ्नमौषधं हिङ्गु—त्रिकटुादिकं न पिबेत् । यत आमसन्नोऽनलः आमदोदुर्बलोऽग्निः, स आमदोषमौषधमाहारजातं पक्तुं लं न समर्थो न शक्त इति यावत् । एवं दोषौषधानानां विभ्रमो व्यापद्विशेष आतुरं विसूच्यलसगतं सहसा झटित्येवौषधं प्रयुक्तं निहन्यादतितयेन्मारयेत् ॥ १६ ॥

हे०—आमदोषिणः शमनमौषधं निषेधति—अपिशब्द भयत्र संबध्यते । तीव्रार्तिरपि किंपुनर्मंदार्तिरनर्तिर्वा । लघ्नमपि किंपुनर्दीपनपाचनादिकं, कुतः यत आमेन ग्नो मंदीभूतोऽग्निर्दोषादीनि पक्तुं नालं न समर्थः । ोष आमान्नक्षोभितः कफादिः । औषधं—तन्निवृत्त्यर्थं युक्तं पाचनादि, अशनं तद्धेतुभूतमामान्नम् । न केवलमौषधादर्थानवाप्तिरनर्थावाप्तिरपीत्याह—निहन्यादियादि । एतेषां दोषादीनां व्यापत्तिः—पाकाभावजनितसंक्षोभः, आतुरं सहसा हन्यात् । अपिचेति प्रत्युार्थे । रोगशमनार्थमौषधं-रोगं न शमयति, प्रत्युत वर्द्धयतीत्यर्थः ॥ १६ ॥

कदौषधं युंजीतेत्याह—

**जीर्णाशने तु भैषज्यं युंज्यात् स्तब्धगुरूदरे ।**
**दोषशेषस्य पाकार्थमग्नेः संधुक्षणाय च ॥१७॥**

स०—जीर्णमशनं यस्य तस्मिन्नौषधं युंज्याद्वैद्यः । कीदृशि । स्तब्धमचलं गुरूदरं कोष्ठो यस्य तस्मिन् । केमर्थमौषधं युंज्यादित्याह । दोषेत्यादि गतार्थम् १७॥

प०—जीर्णाशने स्तब्धगुरूदरे स्तिमितगुरुकोष्ठे, भैषज्यमौषधं दोषशेषपचनार्थं, वह्नेः सन्धुक्षणार्थं च युञ्ज्यात् ॥ १७ ॥

हे०—अवस्थाविशेषे औषधं विधत्ते—आमदोषिणो यदाजीर्णाहारत्वं तदा दीपनपाचनमौषधं देयम् । संग्रहे तु—"सद्यः सम्यग्विशुद्धस्य शाम्यंति तदुपद्रवाः । शूले नेरघ्नकोष्ठोऽद्भिः कोष्णाभिश्चूर्णिताः पिबेत् ॥ हिंगुप्रतिविषाव्योषसौवर्चलवचाभयाः॥ अथवा पिप्पलीमूलं त्रिवृतादारुसैन्धवम् । शुंठीस्नुक्क्षीरलवणपिप्पलीमरिचानि च । पाठाम्लवेतसक्षारयवानीपौष्कराणि च ॥ द्विरुत्तरं हिंगुवचाग्निकुष्ठसुवर्चिकाक्षारबिडाजमोदम् । शूलोदरानाहविसूचिकार्शोहृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् । मुस्ताजमोदपूतिकवचाशुण्ठ्यभिधान्यकैः । सवालकशठीबिल्वैः क्वाथं तृट्शूलवान् पिबेत् ॥ रास्नाकट्फलषड्ग्रंथाबृहतीद्वयजेंगकैः । गुग्गुलुवतिविषाकुष्ठपत्रव्याघ्रनखांबुदैः।कुर्याच्छुक्तैःसमूत्रैर्वा लेपोद्वर्तनधूपनम् । सरुगानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ॥ दारुहैमवतीकुष्ठशताह्वाहिंगुसैंधवैः । यवचूर्णश्च सक्षारतक्रैः कोष्ठार्तिजित्परम् ॥ योजयेत्सैंधवांतैश्च वर्तिविण्मूत्रसंग्रहे । द्विक्षारजीर्णपिण्याककुष्ठारुष्करचित्रकैः ॥ सशुक्तसैंधवैस्तैलं पक्वमभ्यंजने हितम् । सुच्छर्दितविरिक्तस्य गात्रायामे सुदारुणे ॥ भल्लातकमधूच्छिष्टजीर्णपिण्याकनागरैः । घृततैलं पचेत्साम्लैस्तच्च खल्लिघ्नमुत्तमम् ॥ त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः । उद्वर्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ यः श्यावदंतौष्ठनखोऽल्पसंज्ञश्छर्द्यर्दितोंऽतर्गतताम्रनेत्रः । क्षामः स्वरः स्रस्तसमस्तसंधिर्यायान्नरोऽसौ पुनरागमाय ॥ व्योषं करंजस्य फलं हरिद्रे मूलं समावाप्य च मातुलुंग्याः । छायाविशुष्का गुटिकाः कृतास्ता हन्युर्विसूचीं नयनांजनेन ॥ शिरीषनक्ताह्वफणिज्जबीजं श्वयंत्यपामार्गफलानि वर्तिः । बस्तस्य मूत्रेण विसूचिकाघ्नी प्रलेपधूमांजननस्ययोगैः ॥ यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समे । पाकोऽग्नौ युक्तयोः प्राक् तु तीक्ष्णे मंदे पुनश्चिरात् ॥ सभक्तमौषधं तस्मान्मंदाग्नेरवचारयेत् । पूर्वाह्णे भोजनं सात्म्यं लघुदीपनबृंहणम् ॥ प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति । अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति ॥ दिवा प्रबुध्यतेऽर्केण हृदयं पुंडरीकवत् । तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यांति सर्वशः ॥ व्यायामाच्च विहाराच्च विक्षिप्तत्वाच्च चेतसः । न क्लेदमुपगच्छंति दिवा तेनास्य धातवः ॥ अक्लिन्नेष्वन्नमासिक्तमन्यत्तेषु न दुष्यति । अविदग्धेष्विव पयः स्वप्नसंमिश्रितं पयः ॥ रात्रौ तु हृदये म्लाने संवृतेष्वयनेष्वथ । परिक्लेदं याति कोष्ठे संवृते देहधातवः ॥ क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति । विदग्धेषु पयःस्वन्यत्पयस्तत्रेष्विवार्पितम् ॥ निशि तस्मादजीर्णेऽन्ने नान्यद्भुंजीत भोजनम् । उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ॥ लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् । प्रायः प्रज्ञापराधेन रोगग्रामः प्रजायते ॥ नृणामशनलुब्धानां विशेषेण विसूचिका । दोषोपलीनं यदि लीनमामं पित्तोल्बणं स्याद्गुणयान्न वह्निम् । जायेत क्षुधा तु ततो बुभुक्षा सा मंदबुद्धीन्विषवन्निहंति " इति ॥ १७ ॥

कीदृशमौषधं योज्यमित्याह—

**शांतिरामविकाराणां भवति त्वपतर्पणात् ।**
**त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत् १८।**

स०—तुरवधारणे । यस्मादपतर्पणादेवामजातानां विकाराणामालस्यजाड्याग्निमांद्यादीनां शांतिरुपशमो भवति तस्मादपतर्पणं योजयेत् । वक्ष्यति हि । मेहामदोषातिस्निग्धेत्यारभ्य यावल्लंघयेन्नित्यमिति । तस्मादपतर्पणं समीक्ष्य देशकालाग्न्यादीन् पर्यालोच्य त्रिप्रकारं त्रिप्रकारे दोषे वैद्यः प्रयोजयेत् ॥ १८ ॥

प०—आमदोषजनितव्याधीनामालस्यजाड्याग्निमान्द्यादीनां शान्तिरुपशमोऽपतर्पणाल्लङ्घनपाचनवमनविरेचनरूपाद्भवति जायते । तत्पुनरपतर्पणं त्रिविधं त्रिप्रकारं, लङ्घनपाचनवमनविरेचनं च त्रिविधे दोषेऽल्पमध्यभूयसि समीक्ष्यैवमनेन प्रकारेण मूर्धादिविभागेन दोषान् परीक्ष्य योजयेत् १८॥

हे०—उक्तानुक्तामदोषसंग्रहार्थं सामान्यचिकित्सामाह—आमविकाराणां सर्वेषामजीर्णान्नजानां व्याधीनाम् अपतर्पणाल्लंघनात् अपतर्पणं विभजति—समीक्ष्य बलादिकं सम्यग्ज्ञात्वा विभागं स्पष्टीकरोति ॥ १८ ॥

संप्रत्येतदेव यथायोगमाह—

**तत्राऽल्पे लंघनं पथ्यं मध्ये लंघनपाचनम् ॥**
**प्रभूते शोधनं तद्धि मूलादुन्मूलयेन्मलान् १९॥**

स०—तत्र तेषु त्रिषु मध्येऽल्पे दोषे लंघनमुपवासाख्यं पथ्यम् । तेन ह्यनलानिलवृद्ध्याऽल्पो दोषः शीघ्रं संशोष्य जीर्यते । मध्ये दोषे लंघनं पाचनं च पथ्यम् । अग्निः पचति तस्य पचतो ये विबंधादयो भवंति तान्निषिध्य पाटवमादधानं पचेति प्रयुंक्त इव तत् पाचयतीति पाचनमुच्यते । हेतुमण्णिजंतात्पचेर्बाहुलकात्कर्तरि ल्युट् । यदुपयुक्तमन्नपानौषधमपक्वानां सामानां धातूनां पाचने समर्थं तत् पाचनमित्यर्थः । प्रभूते शोधनं पथ्यम् । शोधनं तु कायाद्बहिर्दोषान्नीरयति । वक्ष्यति हि । यदीरयेद्बहिर्दोषान्पंचधा शोधनं तु तदित्यादि । कुतः । प्रभूत आमदोषे शोधनं हितमित्याह । तद्धीत्यादि । हि यस्मात्तच्छोधनं मूलान्मलान्नाशयेत् । संग्रहेऽप्युक्तम् । बहुदोषाणां पुनर्दोषावसेचनमेव कार्यं नह्यस्राविते पल्वलोदकौघे शाल्यादिपुष्टिर्भवतीति ॥ १९ ॥

प०—तत्रेति । तस्मिंस्त्रिविधे दोषे लङ्घनमपतर्पणमल्पे दोषे पथ्यं हितम् । तेन ह्यनिलानलवृद्ध्या वातातपरीतो वाल्पसलिलाशयोऽल्पो दोषः शोषमापद्यते । मध्ये मध्यबले दोषे लङ्घनमुपवासस्तथा पाचनं वचाप्रतिविषादिपथ्यं ताभ्यां मध्यबलो दोषो वातातपाभ्यां पांशुभस्मावकिरणैरिव चानतिसमात् सलिलाशयो मध्यदोषः प्रशोषमापद्यते । प्रभूते बहुदोषे प्रबले शोधनं दोषावसेचनं वमनविरेचनादिरूपमपतर्पणं पथ्यम । तद्धि यस्माद्वमनादिशोधनं—मलान् कफपित्तशकृन्मूत्रादीनुन्मूलयति छिनत्ति । नह्यविस्राविते पल्वलोदकौघे शाल्यादिषु पुष्टिर्भवति । तस्मात्सन्तर्पणानिमित्तानां नानारोपणतर्पणास्थिशान्तिरपतर्पणनिमित्तान्तरेण सन्तर्पणमिति ॥ १९ ॥

हे०—लंघनमत्रोपवासः, लंघनपाचनम् , उपवासयुक्तं पाचनौषधपानं, प्रभूते बहुतरं वमनादि, हि यस्मात्तच्छोधनं,मलान्मूलादुन्मूलयेदिति समूलानुच्छिन्द्यात्। मलं बलमूलं च विकारे प्रभूतत्वम् ॥ १९ ॥

**एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ।**
**चिकित्सेदनुबंधे तु सति हेतुविपर्ययम् ॥**
**त्यक्त्वा यथायथं वैद्यो युंज्याद्व्याधिविपर्ययम्२०**

स०—यथा संतर्पणोत्थ आमदोषो निदानविपर्ययाच्चिकित्स्यत एवमन्यानपि ज्वरादीन् विकारान् स्वनिदानविपर्ययाच्चिकित्सेत् । संतर्पणोत्थोऽपतर्पणेन शीतोत्थ उष्णेनेत्यादि ।यदि त्वेवमुपक्रम्यमाणो व्याधिरनुबध्यते तेनोपशमं न गच्छेत् ततो हेतुविपर्ययं त्यक्त्वा व्याधिविपर्ययं युंज्यात् । किंभूतम् । यथायथं यद्यस्य ज्वरादिव्याधेर्भैषज्यं वक्ष्यमाणं तत्प्रयुंजीतेत्यर्थः । यथा मुस्तापर्पटकं ज्वरे रजनी प्रमेह इति ॥ २० ॥

प०—तथा निदानविपरीतौषधेन चिकित्सेदुपक्रमेत् । स्वं च तन्निदानं च स्वनिदानम् । यथायथमुत्पत्तिकारणम् । तस्य विपर्ययो वैपरीत्यं यथा सन्तर्पणोच्छेद्यव्याधौ विपर्ययोऽपतर्पणम्। अप-

तर्पणोत्थे व्याधौ विपर्ययः सन्तर्पणम् । तथा—गुरुस्निग्धशीतादिजे व्याधौ लघुरूक्षोष्णादिजे हेतुविपरीते गुरुस्निग्धशीतादिक्रियमाणेऽपि हेतुविपर्यये दोषस्य बलवद्व्याधेरनुबन्धे स्थिरत्वे सति हेतुविपर्ययं निदानविपरीतमौषधं त्यक्त्वाऽपास्य यथायथं यथायोग्यं व्याधिविपरीतमौषधं कुर्यात् प्रयोजयेत् । यथा मुस्तापर्पटकं ज्वरे यवाग्वः । प्रमेहे रजनीयवान्नं चेति । रक्तपित्ते चोर्ध्वगे विरेचनमधोगे वमनम् । तथा—व्याधिविपरीतौ द्वौ मूलगोपक्रमौ पञ्च कर्माणि सधूमधूपाञ्जनादीनि । तथा विप्लावनोपनाहादीनि । यथा पित्तत्वे मुस्तापर्पटयोः, पित्तज्वरोपशमे शक्तता न तथाऽन्यस्मिन् पित्तकृते व्याधौ । यथा हारिद्रायां मेहः । श्लेष्मकरत्वेऽपि प्रमेहनिवारणे शक्तता न तथान्यस्मिन् मेहश्लेष्मप्रभवे व्याधौ । एतच्चोत्तरतन्त्रावसाने विस्तरेण वक्ष्यत्याचार्यः ॥ २० ॥

हे०—तुल्यन्यायत्वप्रसंगादन्येषामपि व्याधीनां चिकित्सामाह—एवमामविकारवत् अन्यान् ज्वरादीन् यथा—आमविकाराः संतर्पणैः कृतास्तद्विपरीतेनापतर्पणेन चिकित्स्यंते तथा अन्येऽपि स्वनिदानविपर्ययाचिकित्स्याः । आमविकाराणामन्येषां च स्वनिदानविपर्ययादनुपशमे चिकित्सामाह—यदि तु हेतुविपर्यये क्रियमाणेऽप्यनुबंधो निवर्तनं व्याधेः तदा हेतुविपर्ययं त्यक्त्वा व्याधिविपर्ययं भैषज्यं यथायथं युंज्यात् । हेतुविपरीतादिस्वरूपमुक्तं संग्रहे ॥ २० ॥

न च हेतुव्याधिविपर्ययोरेव चिकित्सायामुपयोग इति दर्शयन्नाह—

**तदर्थकारि वा पक्के दोषे त्विद्धे च पावके ।**
**हितमभ्यंजनस्नेहपानबस्त्यादि युक्तितः ॥ २१ ॥**

स०—तन्निदानव्याधिविपर्ययासाध्यमर्थं रोगोपशामलक्षणं कर्तुं शीलं यस्य तत्तदर्थकारि तद्वा युंज्यात् । यथा मदात्यये मद्यपानमतिसारे विरेचनमिति । वाशब्दः समुच्चयार्थ इति विविधमौषधं निर्दिश्याऽऽमचिकित्सामेवानुसरन्नाह । पक्के दोषे निरामे दीप्ते पावके च निरामत्वे दीप्ताग्नित्वे च समचितमेव हितमभ्यंगादिकम् युक्तितो मात्रया यथाऽग्निसादादि न भवतीति ॥ २१ ॥

प०-तथा मुस्तापर्पटविधिविपर्ययार्थं कर्तुं शीलमस्य तदर्थकारि । तयोर्निदानविपरीतव्याधिविपरीतयो रविपरीतं हेतुव्याधिविपर्ययार्थं करोति । तथ छर्दिषि वमनमतिसारे विरेचनम् । मदात्य मद्यपानम् । तुच्छदग्धेऽग्निप्रतापनं शान्तिकं पै ष्टिकं वा । एतच्च सङ्ग्रहे सुविस्तरमुक्तम्—"उभ यार्थकारि पुनर्दैवव्यपाश्रयमौषधम् । यथा छव छर्दिः । अतिसारेऽनुलोमनम् । मदात्यये मद्यप नम् । तुच्छदग्धेऽग्निप्रतपनम् । पित्तेऽन्तर्गूढे विम र्गतो वा स्वेदः, कट्वम्ललवणतीक्ष्णोष्णाभ्यवहार बहिः प्रवर्तनाय स्वमार्गोपादानाय च । श्लेष्मा चान्तर्गूढे स्तब्धे बहिः शीतोपचारस्तत्पीडितस्योष्म णोऽन्तःप्रवेशेन कफविमलनाय" इति । ए विधं ह्यविपरीतमेव सद्भेषजं हेतुव्याधिविपरी मर्थं करोति । तस्य विसूचिकालसकार्तस्य वि क्तावदोषस्य पक्वे निरामे, दोषे सति लङ्घनादि भिरुपक्रमैः तथा वृद्धे पावके दीप्ते चाग्नौ स हितमभ्यञ्जनस्नेहपानबस्त्यादियुक्त्या विधिवद्दे कालादीनालोच्य, आदिग्रहणाद्रसयन्त्रवाजीक णानि गृह्यन्ते। वस्तिस्तु त्रिधा निरूहोद्वासनबस्त्युक्त बस्तिविभागेन समीक्ष्य दोषौषधादीनामवस्थान राणि । भिषजा युक्त्या प्रयोज्यमेतत् ॥ २१ ॥

हे०—पक्वदोषाणामामविकाराणां चिकित्सितमाह-उप नोपक्रमेण पक्के दोषे दीप्ते चाग्नौ सत्यामदो णामभ्यञ्जनादि हितम् । आदिशब्दाद्रसायनं वाज करणादि ॥ २१ ॥

अजीर्णं लक्षयितुमाह—

**अजीर्णं च कफादामं तत्र शोफोऽक्षिगंडयोः**
**सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ २२**

स०—अग्निप्रतिपक्षत्वेन कफस्याऽजीर्णकरणप्र धान्यादग्रे निर्देशः । कफात्सकाशादजीर्णमामसंज्ञं भवति । तत्रामाख्येऽजीर्णेऽक्षिकूपयोर्गण्डयोः शो भवति । सद्योभुक्तवदप्राप्तविदाहावस्थ उद्गारः । प्रसे प्रसक्तं निष्ठीवनम् । उत्क्लेशो दोषाणां स्थानाच्चलनम् गौरवं गात्राणाम् ॥ २२ ॥

प०—कफात् कफवृद्धादजीर्णात्तदामसंज्ञां लभते तत्र कफाजीर्णे त्विदं लक्षणम् । अक्षिगण्डयोः

शोफः–गण्डाक्षिकूटयोः श्वयथुर्भवति । तथोद्गारः सद्योभुक्त इवादग्धः प्रवर्तते । प्रसेको–निष्ठीवनं श्लेष्मणः । उत्क्लेशो–दोषाणां स्वस्थानाच्च्युतिः, कफस्योर्ध्वगतिर्वा । गौरवं–गुरुता ॥ २२ ॥

हे०–महांतमामदोषमुक्त्वा क्षुद्रमाह तत्र कफजमाह–आमम् आमसंज्ञं, तत्रामे अक्षिणी, गंडे शोफः। जात्यपेक्षमेकवचनम्। सद्यो भुक्त इवोद्गारः चिरभुक्तस्यापि सद्योभुक्तवदप्राप्तविदाहावस्थ उद्गारः, उत्क्लेशो वमनोन्मुखत्वमिव ॥ २२ ॥

**विष्टब्धमनिलाच्छूलविबंधाध्मानसादकृत् २३॥**

स०–अनिलाद्विष्टब्धं नामाजीर्णं भवति । तच्च शूलादिकृत् ॥ २३ ॥

प०–शूलं–रुक् । विबन्धो–वातमूत्रपुरीषाणामप्रवृत्तिः । आध्मानमुदरापूरः। सादोऽङ्गसादः॥२३॥

हे०–अनिलजमाह-विष्टब्धं–विष्टब्धसंज्ञं, सादः–कार्याक्षमत्वम् ॥ २३ ॥

**पित्ताद्विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहवत् २४॥**

स०–पित्ताद्विदग्धं नामाऽजीर्णमुत्पद्यते। तच्च तृडादियुक्तम् ॥ २४ ॥

प०–पित्तादजीर्णं तद्विदग्धसंज्ञां लभते । तच्च तृण्मोहभ्रमाम्लोद्गारदाहकृत् । मोहो–मूर्च्छा । अम्ल उद्गारोऽम्लकः ॥ २४ ॥

हे०–पित्तजमाह–विदग्धं–विदग्धाख्यम् ॥ २४ ॥

त्रिविधस्यैवास्य चिकित्सामाह–

**लंघनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम् ।**
**विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् २५॥**

स०–तुरवधारणे । आमाख्येऽजीर्णे लंघनमेव कार्यं न वमनविरेचनादि । विष्टब्धे स्वेदनं भृशं कार्यम् । भृशशब्देनैतद् द्योतयति । पूर्वत्रापि स्वेदनं कार्यमत्र त्वत्यर्थमिति। विदग्धे विदग्धनाम्न्यजीर्णे वमनं कार्यम् । यद्वा लंघनस्वेदनवमनानां यथावस्थं यथादोषोद्रेकं हितं भवेत्तदेव कार्यम् । आमाजीर्णेऽपि स्वेदनवमने विदग्धेऽपि लंघनस्वेदने इति ॥ २५ ॥

प०–आमेऽजीर्णे कफोत्सन्ने लङ्घनमुपवासः कार्यः । विष्टब्धे वातकृतेऽजीर्णे भृशमतिशयेन स्वेदनं कार्यम् । विदग्धे पित्तकृतेऽजीर्णे वमनं कार्यम् । यद्वा लङ्घनादित्रयंयथोद्रेकावस्थानातिक्रमेण त्रयाणां त्रितयमपि कार्यम् ॥ २५ ॥

हे०–आमादीनां चिकित्सामाह-भृशमिति । विष्टब्धे योज्यम्, लंघनादिविभागस्त्वतिशयार्थः। यदाह क्षारपाणिः– " विष्टब्धे स्वेदनं वर्त्या लवणोष्णांबु शस्यते । विदग्धे वमनं शस्तमुपवासो विरेचनम् ॥" इति । यद्वा अथवा यदवस्थं हितं यस्याजीर्णस्य यस्यामवस्थायां यद्धितं तस्य तस्यामवस्थायां तत्कार्यमित्यर्थः । विभागनियमस्तु बाहुल्याभिप्रायेण ॥ २५ ॥

**गरीयसो भवेल्लीनादामादेव विलंबिका ।**
**कफवातानुबद्धामालिंगा तत्समसाधना॥ २६ ॥**

स०–गरीयसः प्रभूतादजीर्णादेव विलंबिका स्यात् । कीदृशात् । लीनादत्यर्थं स्रोतःसु श्लिष्टत्वात् । लीनादिति लीङ् श्लेषण इत्यस्य क्तप्रत्यये स्वादय ओदित इत्योदितश्चेति निष्ठानत्वम्। सा च श्लेष्मवायुभ्यामनुबद्धा युक्ता भवति । आमं नाम यदजीर्णं तत्सदृशलक्षणा । यथा । शोफोऽक्षिगंडयोः । सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवमिति । तेनामेन समं तुल्यं साधनं चिकित्सा यस्याः सैवम् । लंघनं कार्यमाम इति ॥ २६ ॥

प०–स्रोतःसुलग्नात् विलम्बिका मन्दाजीर्णविशेषा जायते । कफवाताभ्यामनुबन्धो यस्या आमलिङ्गायाः । आमे कफाजीर्णे याति । लिङ्गानि शोफादीनि तानि तस्यास्तथा । तत्समसाधना तस्य समं तुल्यं साधनं चिकित्सितं यस्या एवं लङ्घनसाध्या ॥ २६ ॥

हे०–विलंबिकालक्षणमाह-गरीयस इति । विलंबिकानामाऽजीर्णं भवेत् कस्माल्लीनादामादेव । आमशब्द आमाद्यजीर्णसामान्यवचनः, तस्योत्पन्नस्य निःशेषमनिर्वर्तनाल्लीनत्वम्। एवं पुनः पुनर्लीनत्वाद्गरीयस्त्वं, पुनः पुनरुत्पादो दुष्टबुभुक्षायां भोजनात् । सा तूक्ता संग्रहे–"दोषोपनद्धं यदि लीनमामं पित्तोल्वणस्यावृणुयान्न वह्निम् । जायेत दुष्टा तु ततो बुभुक्षा या मंदबुद्धिं विषवन्निहन्ति॥" इतीत्येवकारेणैतद्द्योतयति–विसूच्यलसकावन्यजीर्णाद्भवतः किंतु तावन्मतेऽपि सद्योऽतिमात्रभोजनादेः, विलंबिका त्व-

जीर्णादिर्वति। यदाह सुश्रुतः-"अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम्। विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका" इति। सा च कफवातानुबद्धा तदनुबंधेन दीर्घकालविलंबनाद्विलंबिकेत्युच्यते गरीयस्त्वात् पतने योग्यमप्यामं कफवातानुबंधत्वान्नोर्ध्वं नाप्यधः पतति लीनमेव चिरमवतिष्ठते इत्यर्थः। तथाच सुश्रुतः-"दुष्टं हि भुक्तं कफमारुताभ्यां प्रवर्तते नोर्ध्वमधश्च यस्य। विलंबिकां तां च विवर्जनीयामाचक्षते शास्त्रविदः पुराणाः" इति कफवातानुबद्धत्वादेवमितरेष्वपि पित्तारब्धत्वं विदग्धत्वं च लक्ष्यते अन्येन ह्यारब्धमन्येनानुबध्यते, पित्तं च विदग्धादेव प्रवर्तते। तथा च भेडः-"यदा भुक्तं विदग्धं च नोर्ध्वं नाधः प्रवर्तते॥ तां विलम्बिं विगर्हन्ति विषकल्पां विसूचिकाम्" इति। विषकल्पामिति पित्तोल्बणत्वं द्योत्यते, विसूचिकामिति विसूचिकाविशेष्यत्वेन सान्निपातिकत्वम् आमलिंगाजीर्णतुल्यलक्षणा, विशेषानुपादानात्त्रयाणामप्यामादीनां लिंगैर्युक्ता। तथाच खारणादिः-"एतान्युक्तानि लिंगानि त्वामाजीर्णे विनिर्दिशेत्" इति। एतानि अजीर्णत्रयसंबंधीनि। आमादजीर्णज्ञातमजीर्णमामाजीर्णं विलंबिका नतु कफजमामम् यथाक्रमेण वातादिसंनिपातात्मकं वदेदिति तेनैव सान्निपातिकस्योक्तत्वात्। तत्समसाधना तेषां त्रयाणामजीर्णानां समं साधारणं साधनं चिकित्सितं यस्याः सा। तथा खारणादिः-आमे त्वामप्रशमनम्। चरकेऽपि विमाने विमानस्थाने द्विविधं विसूच्यलसकभेदेन। वंगसेनेऽपि-"विलंबिकालसकयोर्विसूच्युक्तः क्रियाक्रमः" इति। यत्तु सुश्रुतेन विवर्जनीयत्वमुक्तं तत्प्रत्याख्यायोपचरणीयत्वं नात्वनुपक्रमत्वात्। अतएव "विलंबिकां तां भृशदुःश्चिकित्स्याम्" इति माधवकरः पठति। इयं च विलंबिका चरकाचार्येणाविषसंज्ञयोक्ता। अभोजनादजीर्णातिभोजनाद्विषमाशनात्। असात्म्यगुरुशीतातिरूक्षसंदुष्टभोजनात्॥ विरेकवमनस्नेहविभ्रमाद्व्याधिकर्शनात्। देशकालर्तुवैषम्याद्वेगानां च विधारणात्॥ दुष्यत्यग्निः स दुष्टोऽन्नं न तत्पचति लघ्वपि। अपच्यमानं दुष्टत्वं यात्यन्नविषतां च तत्॥ तस्य लिंगमजीर्णस्य विष्टंभः सदनं क्लमः। शिरोरुक्शोफामूर्छाश्च भ्रमः पृष्ठकटिग्रहः॥ जृंभांगमर्दस्तृष्णा च ज्वरच्छर्दिः प्रवाहणम्। अरोचकाविपाकौ च घोरमन्नं विषं च तत्॥ पित्तेन सह संसृष्टं दाहतृष्णामुखामयान्। जनयत्यम्लपित्तं च पित्तजांश्चापरान् गदान्॥ यक्ष्मपीनसमेहादीन् कफजान्कफसंगतम्। करोति वातसंसृष्टं वातजांश्चामयान् बहून्॥मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगाञ्छकृद्गतम्। रसादिभिश्च संसृष्टं कुर्याद्रोगान् रसादिजान्॥" इति। यत्तूक्तं जैज्जटेन इयं विलंबिका तन्त्रांतरे दंडालसकसंज्ञयोक्तेति। तदसत् भेडादिवचनपर्यालोचनया विलंबिकाया विदग्धमूलत्वात् दंडालसकस्यालसकभेदत्वेन विष्टब्धमूलत्वात्। आमाद्यजीर्णलक्षणाधीनलक्षणत्वाद्विलंबिकाया इहाभिधानम्॥२६॥

जीर्णेऽप्याहारे कदाचिदाहारसारो रसोऽजीर्णः स्यात्। तल्लक्षणार्थमाह—

**अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः।**
**शयीत किंचिदेवात्र सर्वश्चानाशितो दिवा॥**
**स्वप्यादजीर्णी संजातबुभुक्षोऽद्यान्मितं लघु२९**

स०--रसशेषेऽश्रद्धाऽन्नानभिलाषः। हृद्व्यथा हृदयशूलं गौरवं च। शुद्धेऽप्युद्गारेऽन्नसंबंधिनि। तेना-

---

(१) **चरकमात्राशितीये**। अलसक-दण्डालसकयोर्व्याख्यानम्, न विलम्बिकायाः। **सुश्रुते**-अलसकविलम्बिकयोर्वर्णनं,न दण्डालसकस्य। अत्र हेमाद्रिकृतव्याख्यायां **भेड**वाक्यस्य संग्रहः॥"यदा भुक्तं विदग्धं च नोर्ध्वं नाधः प्रवर्तते। तां विलम्बिं विगर्हन्ति विषकल्पां विसूचिकाम्॥" इति। अत्र **हेमाद्रिः**-विषकल्पामिति पित्तोल्बणं द्योत्यते। **सुश्रुतस्तु**-"दुष्टं तु भुक्तं कफमारुताभ्यां" प्रवर्तते नोर्ध्वमधश्चयस्य। विलम्बिकां तां भृशं दुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः॥" इति। **खरनाद**स्त्वत्र आमाजीर्णाज्जातमजीर्णमामाजीर्णं विलम्बिका। **माधव**स्तु सुश्रुतवचनमेव स्वनिदानाख्ये ग्रन्थे तथैव लिखितवान्। **जैज्जटेनो**क्तम्,इयं विलम्बिका तन्त्रान्तरे दण्डालसकसंज्ञयोक्तम्,अत्र **हेमाद्रिः** तदसत्, **भेडा**दिवचनपर्यालोचनया विलम्बिकाया विदग्धमूलत्वात् दण्डालसकस्यालसकभेदत्वेन विष्टब्धमूलत्वात्। मधुकोशातङ्कदर्पणयोस्तु अलसके तीव्राः शूलादयो भवन्ति, विलंबिकायां शूलादयो न भवन्तीत्येव भेदः इति परस्परविरोधिवाक्यैरलसकविलम्बिकयोर्भेदे संशयः। मन्मते तु अलसकभेदैव विलम्बिका इति। दुष्टं तु भुक्तं कफमारुताभ्यामित्यादि **सुश्रुत**वाक्यात् दोषदूष्यसामान्याच्च। यदुक्तं **भेड**वाक्ये विदग्धमूलकं तत्क्रमात्मकमेव,यतः पित्तेन विदग्धाजीर्णं भवति, विदग्धाजीर्णेन तूर्ध्वाधोमार्गनिरोधासम्भवः पित्तस्य द्रवत्वसरणत्वादिधर्मत्वात् न विदग्धाजीर्णमूला विलम्बिका। यच्च शूलादिमात्रभेदः माधवव्याख्याकाराभ्यां प्रदर्शितः तदप्यसत्, यतः भुक्तान्नं दुष्टं कफमारुताभ्यामवरुद्धे सति शूलादयोऽप्यवश्यमेव भवन्ति। अत्रालसकभेदेन विलम्बिका दोषदूष्याश्चालसकाविलम्बिकयोः सामान्यमेव। परञ्च अलसके शीघ्रकारित्वम् विलम्बिकायां किञ्चिद् विलम्बेन प्राणाघातः सम्प्राप्तिसमये दोषाणां तारतम्यत्वादिति॥

जीर्णादर्थांतरभूत एवायं रसशेषः। अतश्च रसस्य रुधिरादिहेतोरसम्यक्परिपाक इत्यर्थः। तच्चिकित्सामाह। शयीतेत्यादि। अत्र रसशेषे किंचिदेव स्तोकमात्रमेव स्वप्यात् नाजीर्णे इव प्रभूतम्। सर्वश्चाऽजीर्ण्यनाशितो दिवा शयीत। आलाघवात्। यदा चोत्पन्नक्षुत्स्यात्तदा स्तोकं लघु चाद्यात्। आशः कृतो येनाऽऽशितः। न आशितोऽनाशितः अभुक्तवानित्यर्थः। नन्वजीर्ण्यभिहतोन्मत्तानित्यनेनैव वाक्येनाऽजीर्णिनां दिवास्वप्नोऽनुज्ञात एव तत्किं पुनरुक्तेन। ब्रूमः। विशेषार्थं वाक्यमिदम्। अभुक्तो दिवा स्वप्यादजीर्णीति। तत्र तु सामान्यम्। अशितानशितचिंता न कृतेति युक्ता पुनरिहोक्तिः॥ २७॥

प०—अस्मिन् रसशेषे किञ्चित् स्वकालं शयीत निद्रां कुर्यात्। सर्वश्चाजीर्णी पुमान् आमादिभेदेन चतुष्प्रकारेणारब्धोऽनाशितोऽभुक्तः सन् दिवाऽह्नि स्वप्यात् शयीत। अतः सञ्जातबुभुक्षः उत्पन्नाहाराभिलाषोऽद्यात् भक्षयेत्। मितं परिमितमात्रं वा यदन्नं लघु स्वरूपं लघुभिश्च शाल्यादिभिः कृतम्॥ २७॥

हे०—रसशेषं लक्षयति- अश्रद्धा—भोजनानभिलाषः। नन्वेतदामादिष्वप्यस्ति तत आह—शुद्धेऽप्युद्गारे तेषु पुनर्दुष्ट उद्गारः, रसस्य शेषो रसशेषः रसशब्देन रसहेतुभूताहारराशिर्लक्ष्यते। नहि रसधातोरपक्वस्याजीर्णत्वम्। स ह्यपक्व एव रसशब्देनोच्यते पक्वस्तु रुधिरशब्देन दुष्टत्वादजीर्णमिति चेत् न, तस्यामत्वात्। वक्ष्यति हि 'ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्। दुष्टमामाशयगतं रसमामं प्रचक्षते'' इति। रसशेषस्यौषधमाह—किंचिदेव मुहूर्तमेव। ननु मुहूर्तमनुमानतः सिद्धमेव। अजीर्णिनामाधिकं दिवास्वप्नं विधास्यति—स्वप्नविधिश्चायं प्राधान्यात्। उष्णांबुपानाद्यपि कार्यम्। यदाह खारणादिः—रसशेषे हितः स्वप्नो घर्मांबु लघुभोजनम्'' इति। अजीर्णिनो दिवास्वप्नं विधत्ते—अनाशितः अभुक्तवान्, सर्वग्रहणं प्रकृतविसूचिकाद्यजीर्णसंग्रहार्थं, भुक्त्वा तु शय्येत्यादिना प्राप्ते दिवा स्वप्ने पुनर्विधानं यथेष्टस्वपनार्थम्। अजीर्णिनो भोजनं विधत्ते—संजातबुभुक्षोऽभ्युदीर्णान्नाभिलाषः, मितग्रहणं लघूनामपि गुरूक्तार्द्धसौहित्यप्राप्त्यर्थम्॥ २७॥

सामान्यमजीर्णलक्षणं सामान्येन ब्रूते—

**विबंधोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता।**
**अजीर्णलिंगं सामान्यं विष्टंभो गौरवं भ्रमः २८**

स०--विबंधो मूत्रपुरीषयोरप्रवृत्तिलक्षणः। अतिप्रवृत्तिस्तयोरेव। ग्लानिः शरीरस्य म्लानता। मारुतमूढता वातस्य प्रतिलोमता। विष्टंभः कुक्षेराध्मानम्। गौरवं गुरुगात्रत्वम्। भ्रमो मोहः। एतत्सामान्यमजीर्णलक्षणम्। उक्तं च। सीदत्यंगं भ्रमो मोहः कोष्ठे मुह्यति मारुतः। सर्वेषामप्यजीर्णानामविसंवादि लक्षणम्॥ २८॥

प०—सामान्यमजीर्णस्य लिङ्गं लक्षणं वातमूत्रपुरीषादीनां विबन्धोऽप्रवृत्तिः। अथवातिप्रवृत्तिर्वा। वातादीनामुत्सर्गः। ग्लानिरपचयः। वातस्य मूढताऽगतिः। एतदजीर्णानां चतुर्णामपि सामान्यं चिह्नम्। विष्टम्भः—शकृतः स्तब्धता। गौरवं—गुरुत्वं देहस्य। भ्रमणं—भ्रमः॥ २८॥

हे०—उक्तानुक्ताजीर्णविशेषसंग्रहार्थमजीर्णसामान्यलक्षणमाह—विबंधो—मलानामप्रवृत्तिः, मारुतमूढता—वायोर्विमार्गगतिः। विष्टंभो विशेषेण स्तंभो गात्राणाम्॥२८॥

सांप्रतमजीर्णस्याऽन्यान्यपि कारणान्याह—

**न चातिमात्रमेवान्नमामदोषाय केवलम्।**
**द्विष्टविष्टंभिदग्धामगुरुरूक्षहिमाशुचि।**
**विदाहि शुष्कमत्यंबुप्लुतं वान्नं न जीर्यति२९॥**

स०--अतिमात्रमेव भुक्तमन्नं न केवलमामदोषाय किं तर्हि द्विष्टादि चान्नं न जीर्यति। द्विष्टमप्रियम्। विष्टंभि कुक्ष्याध्मानकारि। हिममति शीतम्। अशुच्युच्छिष्टं केशादिदूषितं च। एतच्चाचिंत्यप्रभावत्वादामदोषहेतुः। विदाहि प्रागुक्तम्। शुष्कमद्रवप्रायम्। अत्यंबुप्लुतमतिजलेन प्लावितम्॥ २९॥

प०—न चातिमात्रमेवान्नमुपयुक्तमामं दूषयति। यावद्द्विष्टमनभिप्रेतम्। विष्टम्भि स्रोतोविबन्धकारि। दग्धमतिक्रान्तपाकम्। आमं—हीनपक्वम्। गुरु—दुर्जरम्। रूक्षं—निःस्नेहम्। हिमं-शीतम्। अशुच्यशुद्धम्। विदाहि-दहनशीलम्। शुष्कं-कठिन-

प्रायम्। अत्यम्बुप्लुतमेवंविधं चान्नं न जीर्यति केवलमामदोषाय जायते ॥ २९ ॥

हे०—अजीर्णाशनमाह—न केवलमतिमात्रमेवान्नमामदोषाय। किं तर्हि द्विष्टादिकमप्यन्नं न जीर्यत्यामदोषाय भवति। द्विष्टमप्रियं, विष्टंभि—वातावरोधकारि, दग्धमतिपक्वम्, अशुचि-मलिनं, शुष्कं, नीरसम्, अत्यंबुप्लुतमत्यंबुपानात् ॥ २९ ॥

**उपतप्तेन भुक्तं च शोकक्रोधक्षुदादिभिः ॥३०॥**

स०—चः समुच्चये। न केवलं द्विष्टाद्यन्नं भुक्तं न जीर्यति यावता शोकादिभिश्चोपतप्तेन भुक्तं न जीर्यति। शोक इष्टविपत्त्यादिना मनोदौस्थ्यम्। क्रोधो रोषः। क्षुद् बुभुक्षा। तदुपतप्तत्वं कालातिक्रमत्वात्। आदिशब्देन लोभभयादिपरिग्रहः ॥ ३० ॥

प०—यच्चोपतप्तेन शोकादिभिः पीडितेन भुक्तमशितं तदप्यामदोषाय। शोकेन—शुचा, क्रोधेन कोपेन, क्षुधा बुभुक्षया चेति सन्तप्तेनेति ॥ ३० ॥

हे०—शोकादिभिरुपतप्तेन भुक्तं, क्षुद्बुभुक्षा तदुपतप्तत्वं कालातिक्रमात्। आदिशब्दादुद्वेगादयः ॥ ३० ॥

संप्रत्यपरमप्यन्नमामक्षोभकरमाह—

**मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम्।**
**विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ॥**
**अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम् ॥**
**त्रीण्यप्येतानि मृत्युं वा घोरान्व्याधीन्सृजंति वा**

स०—पथ्यं शाल्यादि। अपथ्यं यवकादि। तन्मिश्रमेकीकृत्य भुक्तं समशनमभिमतमस्मिन्वैद्यकतन्त्रे। विद्यादित्यादि। भुक्तस्याऽभ्यवहृतस्योपरि यद्भोजनं तदध्यशनं जानीयात्। नन्वेवं प्रातराशे कृते यः सायमाशस्तस्याऽध्यशनत्वं प्रसज्यते। अध्यशनं च विवर्ज्यमेव यतोऽनंतरमेव पठिष्यति। त्रीण्यप्येतानि मृत्युं वेत्यादि। वैद्यकतंत्रेषु च नराणां द्विराहार उपदिष्टः। भगवान् व्यासोऽप्यवोचत्। सायंप्रातर्मनुष्याणां भोजनं विधिनिर्मितमिति। तस्मादध्यशनस्यैवं तदसमीचीनं लक्षणम्। अत्र संचक्ष्महे। प्राग्भुक्तस्योपरि समनंतरमेव वह्नावविभक्ते यदशनं तदेवाध्यशनं नान्यत्। अतएव सुश्रुतो ब्रूते। प्राग्भुक्ते त्वविभक्तेऽग्नौ द्विरन्नं न समाचरेदि[ति]। तस्मात् प्रातराशे कृते सत्यग्नौ विभक्ते यः सायमा[शः] स न परिहार्योऽपि तु कार्य एव। गुणावहत्वात्। एतद[र्थं] प्रतिपादयितुं संग्रहेऽप्यगीष्ट। प्रातराशे त्वजीर्णेऽपि सा[य]माशो न दुष्यति। अजीर्णे सायमाशे तु प्रातराशो दुष्यति। दिवा प्रबोध्यतेऽर्केण हृदयं पुंडरीकवत्। त[स्]मिन्विबुद्धे स्रोतांसि स्फुटत्वं यांति सर्वशः। व्यायाम[ा]च्च विचाराच्च विक्षिप्तत्वाच्च चेतसः। न क्लेदमुपगच्[छन्]ति दिवा तेनास्य धातवः। अक्लिन्नेष्वन्नमासक्तमन्यत्[त्रे] न दुष्यति। अविदग्धेष्विव पयःस्वन्यत्संमिश्रितं पयः। रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च। परिक्लेदं यां[ति] कोष्ठे संवृते देहधातवः। क्लिन्नेष्वन्यदपक्वेषु तेष्वासि[क्तं] प्रदुष्यति। विदग्धेषु पयःस्वन्यत्पयस्तप्तेष्विवार्पितम[्।] नैशे तस्मादजीर्णेऽन्ने नान्यद्भुंजीत भोजनमिति। अ[धि]शब्दोऽत्रोपरिशब्दार्थः। यथा प्रासादमधिरोहति। [अ]काले बहु चाल्पं वा भुक्तं त्वशनं विषमाशनसंज्ञं विद्या[त्]। कः पुनः कालो भोजनस्येति चेत् ब्रूमः। प्रसृष्टे [विण्]मूत्र-इत्यादिनाऽऽहारकालं वक्ष्यति तद्वैपरीत्येनाका[लो] वेद्यः। त्रीण्यप्येतानि समशनाऽध्यशनविषमाशना[नि] मृत्युं वा सृजंति जनयंति। घोरान् व्याधीन्गुल्म[ा]दीन् वा ॥ ३१ ॥

प०—पथ्यापथ्यं हितहितमेकीकृत्य भुक्तं भक्षि[तं] समशनमाचार्याणां मतम्। भूयो भुक्तस्य तृप्तस्य [अ]क्षितस्याहारस्य यदुपरि भोजनं तदध्यशनं विद्यात्। कालेऽप्राप्ते कालातीते वा यद्भुक्तं प्रभूतमल्पं [वा] हीनमात्रं यद्भुक्तं तद्विषमाशनं विद्यात्। समशन[ा]ऽध्यशन-विषमाशनानि त्रीण्यप्येतानि—मरणं मृत्[युं] घोरान् रोगान् जनयन्ति ॥ ३१ ॥

हे०—समशनं लक्षयति-पथ्यं शाल्यादि, अपथ्यं यवका[दि] तद्द्वयं मिश्रीकृत्य भुक्तं समशनाख्यम्। यत्तु केवलमपथ्यं ता[द]्रुद्धाख्यम्। अध्यशनं लक्षयति-भुक्तस्योपरि पुनर्भोजनमध्[य]शनाख्यं, भुक्तस्य प्रागभ्यवहृतस्यान्नस्य पाकाभावादाम[ा]शय एव स्थितस्योपरि ऊर्ध्वमन्यदन्नमाधीयते यत्तद्भु[क्त]स्योपरि भोजनं पूर्वान्नशेषे भुक्तमित्यर्थः। तथा च चरकः "पूर्वान्नशेषे तु पुनर्भुक्तमध्यशनं मतम्" इति सुश्रुतोऽपि

—" अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते " इति । कथं भूयो बाहुल्येन तेन क्वचिदन्नशेषे भुक्तमपि नाध्यशनम् । यथा-"प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति" इति । तथा अत्यग्नौ " मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपकल्पयेत् " इति । नन्वेतदप्राप्तकालाशनत्वाद्विषमाशनं विषमाशनादभिन्नं मैवं, जीर्णे पूर्वाह्णे यदप्राप्तकालं तद्विषमाशनम्, अध्यशनं त्वजीर्णे इति भेदः । ननु प्रसृष्टे विण्मूत्र इत्यादिना जीर्णान्नत्वस्यैव कालत्वं वक्ष्यति । तत्कथमप्राप्तकालत्वं मैवं, यो हि यदा प्रत्यहं भुंक्ते स तस्य भोजनकालः । प्रसृष्टविण्मूत्रादिकं तु तस्यैव विशेषेण तद्विशिष्टस्यैव तस्य कालत्वार्थम् तस्मात्प्रसृष्टविण्मूत्रत्वादिविशिष्टे स्वकाले भोजनं कालभोजनम् । प्राप्तेऽपि स्वकालपूर्वान्नस्याजीर्णत्वादनुत्पन्नेषु अपि तेष्वप्राप्ते स्वकाले भोजनं विषमाशनम्, अवश्यं चैतदभ्युपगंतव्यम् । अन्यथा हि " ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धयेद्वहु । शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते " इति कालभेदो न स्यात् । विषमाशनं लक्षयति—अकाले भुक्तं विषमाशनं तद्विविधमप्राप्तकालमतीतकालं च । अमात्राशनमप्यकाले भुक्तं विषमाशनमेवेत्याह—बहु चाल्पं चेति । तस्मात्काले यदमात्रया भुज्यते तदमात्राशनं,यच्चाकाले मात्रया अमात्रया वा तद्विषमाशनम् । समशनादीनां दोषमाह—एतानि समशनविषमाशनाध्यशनानि—अनियतायुषां मृत्युं, नियतायुषां घोरान् व्याधीन् सृजंति ॥ ३१ ॥

**काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः।**
**षड्रसं मधुरप्रायं नातिद्रुतविलंबितम् ॥**
**स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः ।**
**तर्पयित्वा पितॄन्देवानतिथीन्बालकान्गुरून् ॥**
**प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ।**
**समीक्ष्य सम्यगात्मानमनिंदन्नब्रुवन् द्रवम् ॥**
**इष्टमिष्टैः सहाश्नीयाच्छुचिभक्तजनाहृतम् ३२॥**

स०—काले वक्ष्यमाणे । तन्मनाः भोजनगतचित्तः स्नातः। बुभुक्षितः। विविक्तस्थ एकांतस्थितः। तथा प्रक्षालितचरणहस्तमुखः । अनिंदन् भोजनमगर्हमाणः ।अब्रुवन्नभाषमाणः । इष्टं मनोरुचितं भोजनम् । तथा द्रवं द्रवप्रायम् । इष्टैः प्रियैः सहाश्नीयात् । क्षुद्वान् । अत्र च प्रशंसायां मतुप् । उत्पन्नप्रशस्तबुभुक्षः । तेन किंचिदपि यदा दुष्टबुभुक्षा स्यात्तदा नाद्यादित्यर्थः । दुष्टबुभुक्षाया लक्षणम् । दोषोपनद्धं यदि लीनमामं पित्तोद्धतस्यावृणुयान्न वह्निम् । जायेत दुष्टा तु तदा बुभुक्षा सा मंदबुद्धीन् विषवन्निहंतीति । किंभूतं भोजनम् । सात्म्यम् । तच्च सात्म्यं द्विधा । एकं स्वल्पकालाभ्यस्तं सुखावहम् । अन्यच्च जन्मनः प्रभृति सहात्मनाभ्यस्तं सुखावहं च । एतदेवैकं सात्म्यमुच्यते । तथा शुचि अनुच्छिष्टं केशाद्यनुपहतं च हितं पथ्यम् । स्निग्धं च तदुष्णं च स्निग्धोष्णम् । तथा लघु लघुप्रायं न तु लघ्वेव । अत एवेदमुपपन्नम् ।षड्रसं मधुरप्रायमिति।मधुररसो हि गुरुः। तथा च वक्ष्यति । कटोः कषायस्तस्माच्च मधुरः परमं गुरुः । तद्यदि लघ्वेव स्यान्मधुरप्रायमिति न घटते । तस्माल्लघुप्रायमिति व्याख्येयम् । कथमद्यात् । आह । नातिद्रुतविलंबितम् । किं कृत्वा । पित्रादींस्तर्पयित्वा । तथा तिरश्चोऽप्यश्ववृषादीन् प्रतिपन्नपरिग्रहान् कृतधासस्वीकारान् प्रत्यवेक्ष्य तदाहारचिंतां कृत्वेत्यर्थः। अथात्मानं समीक्ष्य यथा ममेदं सात्म्यमिति नित्यमप्रमत्तः सन् पर्यालोच्य । खरनादेनोक्तम् । अतिद्रवाशी त्वाहारगुणदोषान्न विंदति । उन्मुह्यत्यल्पमश्नाति च्छर्दयेद्वाऽनवस्थितः । विलंबितं तु भुंजानो न तृप्तिमधिगच्छति। स्वादु बह्वपि शीतत्वाद्याति भक्तमहृद्यताम् । जल्पतो हसतश्चापि भुञ्जानस्याऽन्यचेतसः । त एव दोषा मंतव्या ये विलंबितभोजन इत्यादि ॥ ३२ ॥

प०—काले भोजनमश्नीयात् भक्षयेत् । कालः प्रसृष्टे विण्मूत्रे इत्यादिना वक्ष्यमाणः । अतीतकाले भुक्तं तद्वातविष्टब्धं कृच्छ्राद्विपच्यते । कर्षन्नरुचिं यदाहारजातं समानय्य तनुं प्रवर्तयति विषमांश्च समीकरोति एतत्समस्ततोऽस्निग्धोष्णं लघु चान्नं वह्निमुदीर्य कोष्ठं परिशोधयति, धातूनिवकुरुते, क्षिप्रं जीर्यते । अनिलमनुलोमयति । तथा स्निग्धं दृढीकरोति । इन्द्रियाण्युपचिनोति । औजसं बलमभिवर्धयति । वर्णप्रसादमभिनिर्वर्तयति । लघु च पुनः स्वभावादिभिन्नमप्रपीडयन् । दोषान् व्यथयन् परिणाममेति । विपन्नमपि चाल्पदोषं भवति । उष्णं च पुनर्नयति रुचिम् । शोषयति श्लेष्माणम् । अन्यमनसः सतो द्रुतं भुञ्जानस्य जल्पतो हसतो वा भवेदुत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं, गुणदोषविभावनं च । षड्रसं मधुराम्ललवणाति-

क्तकटुकषायरसयुक्तं मधुरप्रायं सन्मधुरभूयिष्ठं विलम्बितं भुञ्जानो न तृप्तिमधिगच्छति । बहु च भुक्ते शीतीभवति चान्नजातं विषममपक्वं च भवति । स्नातः—कृतस्नातः । क्षुद्वान्—बुभुक्षया युक्तः । विविक्तस्थो—बहुभिर्जनैरपरिवृतः । धौतानि पादौ चरणौ, पाणी हस्तौ, आननं मुखं येन । पितॄन् तर्पयित्वा सन्तर्प्य । तथा देवानतिथीनभ्यागतान् बालान् गुरूंश्च तर्पयित्वा । तिरश्चः गोप्रभृतीन् तर्पयित्वा । प्रतिपन्नपरिग्रहान् इष्टैः प्रियैः सह शुचिभक्तैः शुद्धानुकूलैः पुरुषैराहृतमुपहितं साधितं दत्तं वा यद्भोजनं तद्भुञ्जीत ॥ ३२ ॥

हे०—अथ भोजनसम्यक्योगः । तत्र सम्यग्योगप्रकारमाह—काले " प्रसृष्टविण्मूत्र " इत्यादिना वक्ष्यमाणे, शुचि निर्मलं, हितमित्यहितस्याभ्याससात्म्यस्य सात्म्यमिति, हितस्याप्यनभ्यासासात्म्यस्य निवृत्त्यर्थम् । तन्मनाः भोजनैकदत्तचित्तः, मधुरप्रायं षड्रसत्वेऽप्यधिकमधुररसं, नातिद्रुतविलंबितमिति क्रियाविशेषणम् । विविक्तस्थो विजनस्थः, पित्रादींस्तर्पयित्वा, प्रतिपन्नपरिग्रहान् पाल्यत्वेन स्वीकृतान्, तिरश्चोऽपि किं पुनर्मनुष्यान् प्रत्यवेक्ष्य तेषामाहारचिंतां विधाय, आत्मानं समीक्ष्य प्रकृतिं विचार्य, अनिंदन् भोज्यमकुत्सयन्, अब्रुवन् कृतमौनः, द्रवं द्रवबहुलम्, इष्टं प्रियम्, इष्टैः सह प्रियजनैः सह, शुचिभक्तजनाहृतं शुचयो बाह्यांतःशौचयुक्ता भक्ता अनुरक्ता ये जनास्तैराहृतमानीतम् ॥ ३२ ॥

**भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ।**
**शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३३ ॥**

स०—तृणादिजुष्टं भोजनं त्यजेत् । आदिशब्देन मक्षिकादिपरिग्रहः । तथा भूय उष्णीकृतम् । तथा शाकबहुलम् । तथाऽवरान्नं माषादि तद्भूयिष्ठम् । तथाऽत्युष्णमतिलवणं च त्यजेत् ॥ ३३ ॥

प०—तृणकेशादिजुष्टमासेवितं शीतं सत्पुनरुष्णीकृतं शाकानि पाठाशूकानि अवरान्नानि माषमसूरचणकानि तद्भूयिष्ठं तत्प्रधानं भोजनं त्यजेत् । तथाऽत्युष्णलवणं च त्यजेत् ॥ ३३ ॥

हे०—तृणजुष्टादिभोजनमपवदति—तत्रानिंदन्निति ग्रहणात्तृणकेशमक्षिकादिजुष्टस्य निंदितस्यापि प्राप्तिः । उष्णग्रहणात्पुनरुष्णीकृतात्युष्णयोः । इष्टग्रहणाच्छाकबहुलस्य सूपबहुलस्य च । षड्रसग्रहणादतिलवणस्य च ॥ ३३ ॥

**किलाटदधिकूचीकाक्षारशुक्तामभूलकम् ।**
**कृशशुष्कवराहाविगोमत्स्यमहिषामिषम् ॥**
**माषनिष्पावशालूकबिसपिष्टविरूढकम् ।**
**शुष्कशाकानि यवकान्फाणितं च न शीलयेत् ।**

स०—तथा किलाटादीन्न शीलयेन्नाभ्यसेत् । कादाचित्कोऽभ्यवहार एषां निषिध्यते । मुनिना नाभ्यसेद्गौरवादिति यथा हेतुरुपन्यस्तस्तथेह नोक्तम युक्तत्वात् । तथा हि एषामनभ्यवहारे यदि गुरुत्वमेव हेतुः स्यात् ततो यवादीनामपि बहुतराणां द्रव्याणां शीलनमयुक्तं स्यात् । तस्मादेषामशीलनेऽन्यदपि कारणं चिंत्यं न तु गुरुत्वमात्रमेव । यथा किलाटकूचीकयो दोषलत्वं दध्नस्तु ज्वरादिकर्तृत्वं तथा स्रोतोलेप स्रोतोलेपत्वाच्चानेकरोगहेतुत्वम् । क्षारस्य पुंस्त्वहानिकृत्त्वम् । शुक्तस्य दृष्टिहननत्वादि । तस्मादेषामपथ्यत्वाच्छीलननिषेधो बोध्यः ॥ ३४ ॥

प०—किलाटादिफाणितपर्यन्तं न शीलयेत् नाभ्यसेत् । शीलयेदित्यनेन पादेन गमयति । एषु किलाटादीनामभ्यासेनाभ्यवहारो निषिध्यते, न पुनः कादाचित्कोऽभ्यवहार एषाम् । किलाटादिगोक्षीरकृताः कूर्चिकाप्रभृतयः । क्षारो यवक्षारप्रभृति शुष्कं सर्वमद्यमम्लम् । आममूलकं वृद्धबालकं च आमिषमिति कृशादिभिः सम्बध्यते । आमिषं मांसं कृशं त्वगस्थिशेषम् । बल्लूरं नीरसम् । अविर्मेषः । गवादिः प्रसिद्धः । निष्पावः शिम्बिधान्यविशेषः । फाणितं क्षुद्रगुडत्वात् ॥ ३४ ॥

हे०-साम्यत्वादिप्रसक्तं किलाटाद्यभ्यासमपवदति-आममिति मूलकस्य विशेषणं कृशादीन्यामिषस्य, न शीलयेन्न नित्यं भजेत् । यदा तत्सेवनं विना स्थातुमशक्तिः यदा वा तत्साध्यरोगोत्पत्तिस्तदा भजेदित्यर्थः ॥ ३४ ॥

**शीलयेच्छालिगोधूमयवषष्टिकजांगलम् ।**
**पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ॥**

**[घृ]तदिव्योदकक्षीरक्षौद्रद्राडिमसैंधवम् ।**
**त्रैफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ३५॥**

स०--शाल्यादीन् शीलयेत् । मधुसर्पिर्भ्यां सह त्रैफलां च रात्रौ नेत्रबलाय शीलयेत् ॥ ३५ ॥

प०--रक्तशाल्यादिकं शीलयेत् सततमभ्यसेत् । [जा]ङ्गलं मांसमित्यत्रादिपदलोपः । पथ्या--हरीतकी । [प]टोली--पटोलशाकम् । दिव्यौदकमान्तरिक्षं तोयम् । [नि]शि रात्रौ माक्षिकघृताभ्यां त्रिफलां शीलये-[दि]त्यनुवर्तते ॥ ३५ ॥

हे०--सात्म्यादीन्युदाहरति--जांगलं--हरिणादिमांसं, [प]थ्या--हरीतकी, मृद्वीका-द्राक्षा । प्रसंगान्नित्यसेव्य-[मौ]षधमाह--निशि स्वप्नकाले, नेत्रबलाय चक्षुरिंद्रियदा-[र्ढ्या]र्थाय ॥ ३५ ॥

**[स्वा]धास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत्३६**

स०--न केवलं शाल्यादीनेव शीलयेत् । यच्च द्रव्यं [स्वा]स्थ्यानुवृत्तिं करोत्यृतुचर्याविध्यादिषु युक्तमन्नपाना-[दि]कम् । तथा रोगोच्छेदकरं यत्किराततिक्तकादि-[द्र]व्यं तच्च शीलयेत् ॥ ३६ ॥

प०--यच्चानुक्तं द्रव्यजातं स्वास्थ्यानुवृत्तिः स्वास्थ्यं [मा]नानुवर्तते । स्वाथ्यायानुवर्तनं करोति । स्वास्थ्यं [दृ]ढीकरोति । यच्चापि रोगाणां छेदकरं विघातकादि [व्य]ाधीनां तदपि शीलयेत् ॥ ३६ ॥

हे०--यच्चौषधं रसायनादिकं--स्वास्थ्यमनुवर्तयाति, [रो]गोत्पत्तिबीजं चोच्छिनत्ति तदपि यथाकालं भजेत् । उक्तं [च] चरकेण--"तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुव-[र्त]ते ॥ अजातानां विकाराणामनुत्पत्तिकरं च [य]त्"इति ॥ ३६ ॥

**[वि]सेक्षुमोचचोचाम्रमोदकोत्कारिकादिकम् ।**
**[अ]द्याद्द्रव्यं गुरु स्निग्धं स्वादु मंदं स्थिरं पुरः ॥**
**[वि]परीतमतश्चांते मध्येऽम्ललवणोत्कटम्॥३७॥**

स०--बिसादिद्रव्यं गुर्वादिगुणयुक्तं पुरः पूर्वम-[द्य]ात् । मोदको लड्डुकः । उत्कारिका लप्सिका । [अ]तोऽस्माच्च विपरीतं लघुरूक्षतीक्ष्णकटुरसप्रायमंते [भो]जनस्य सेवेत । मध्ये चाम्लवणोत्कटम् । खरनादे चोक्तम् । कटुं लवणमम्लं वा पूर्वमाहारमाहरेत् आहारो मधुरो ह्यग्रे गुरु विष्टभ्य जीर्यति । तदेतद्दे-शसात्म्यादिवशात्प्रमाणयितव्यम् ॥ ३७ ॥

प०--पूर्वमग्रे बिसादिकमद्यात्--भक्षयेत् । चोचं त्र्यक्षं नालिकेरं मोचन्तु कदलीफलम् । उत्का-रिका--भक्ष्यभेदः । स्वादु--मधुरं, मन्दमतीक्ष्णं, स्थिरं--दार्ढ्यावहम् । अतः पूर्वोक्तविपरीतं लघु-रूक्षकटुतीक्ष्णचलद्रव्यं कटुतिक्तकषायं भोजन-स्यान्ते भक्षयेत् । मध्ये भोजनस्याम्ललवणोत्कटं द्रव्यमद्यात् ॥ ३७ ॥

हे०--भोज्यक्रममाह--गुर्वादिगुणं बिसादिभोज्यद्रव्यं पुरः पूर्वमद्यात् । मोचं-कदलीफलं, चोचं-नालिकेरं, पनसं वा, मोदको--लड्डुकः, उत्कारिका पूपलिका; आदिशब्दा-दिंडुरिकादयः । अतो विपरीतं लघ्वादिगुणं कपित्थादिकौ-दुंबरादिकमंते अद्यात् । अम्ललवणोत्कटं शुक्तादिकं मध्येऽद्यात् । यत्तूक्तं खारणादिना--"कटु लवणमम्लं वा पूर्वमाहारमाहरेत् । आहारो मधुरो ह्यग्रे गुरु विष्टभ्य जीर्यति" इति तन्मंदाग्निविषयम् । तद्धो-जनस्य दीपनपूर्वत्वात् । तथा चोक्तं संग्रहे यथाग्नि-सात्म्यं तु प्राग्द्रवमुपशुष्कं चाश्नीयात् प्रागेव तु गुरु स्वादु स्निग्धं, मध्येऽम्ललवणमंते रूक्षद्रवामितररसयुक्तं च । तत्र मंदाग्नेः द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदभ्युपयुक्तं सम्यक् पाकमुपैति ॥ ३७ ॥

**अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।**
**आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ ३८ ॥**

स०--कुक्षेर्जठरस्यान्नेन द्वौ भागौ प्रपूरयेत् । पानेन जलादिना एकमंशं प्रपूरयेत् । चतुर्थमंशं पवनादीना-माश्रयमवशेषयेन्न त्वन्नेन पानेन वा प्रपूरयेत् । अत्र त्वंशकल्पना परिकल्पनेनैव युज्यते नत्वंगुलमानादिना सुश्रुते चाभिहितम् । प्रक्षालयेदद्भिरास्यं भुंजानश्च मुहु-र्मुहुः । विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्ववत् । रसना विद्यते यस्य मुखस्य तद्रसनं तस्मिन् रसने विशुद्धे रोचतेऽन्नमपूर्ववत् ॥ ३८ ॥

प०--अन्नेन भोजनेनोदरस्य द्वावंशौ द्वौ भागौ प्रपूरयेत् । पानेन पानीयादिना कुक्षावेकं भागं प्रपूरयेत् । पवनादीनामाश्रयं स्थानं चतुर्थं कुक्षा-

मवशेषयेत् स्थापयेत् । न सर्वविषयोऽयं नियमः किन्तर्हि केषुचित् । तथाच ग्रन्थः-"मन्दाग्निबलयोग्येषु नृपेश्वरसुखात्मसु ॥ योज्यः क्रमोऽयं सततं न चानलबलेषु च" ॥ ३८ ॥

हे०-अन्नपानयोर्विभागमाह—कुक्षिमुदरं चतुर्धा विभज्य द्वावंशावन्नेनाद्रवेण पूरयेत् । तृतीयमंशं पानेन द्रवेण पूरयेत् । चतुर्थमंशं पवनादिसुखसंचारार्थमवशेषयेन्न केनापि पूरयेत् । एतदेव च सौहित्यमानम् अतएवार्द्धसौहित्यमतितृप्तता च ज्ञेया ॥ ३८ ॥

**अनुपानं हिमं वारि यवगोधूमयोर्हितम् ।**
**दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु तु ॥**
**शाकमुद्गादिविकृतौ मस्तुतक्राम्लकांजिकम् ।**
**सुरा कृशानां पुष्ट्यर्थं स्थूलानां तु मधूदकम् ॥**
**शोषे मांसरसो मद्यं मांसे स्वल्पे च पावके ।**
**व्याध्यौषधाध्वभाष्यस्त्रीलंघनातपकर्मभिः ॥**
**क्षीणे वृद्धे च बाले च पयः पथ्यं यथाऽमृतम् ॥**

स०--यवगोधूमयोर्भुक्तयोरनु पश्चात्पानं शीतं जलं हितम् । तथा दध्नि मद्ये विषे क्षौद्रे च हिमं जलमनुपाने हितम् । पिष्टमयेषु कोष्णं जलं हितम् । शाकमुद्गादिविकृतौ च मस्त्वादिकमनुपानं हितम् । कृशानां पुंसां सुरा पुष्ट्यर्थं हिता । स्थूलानां पुनः कर्शनाय मधूदकं हितम् । शोषे क्षये मांसरसो हितः पुष्टिकारित्वात् । मांसे भुक्ते मद्यमनुपानं हितम् । स्वल्पे च पावके मद्यमेवानुपानम् । व्याध्यादिभिः क्षीणे क्षपिते पयो दुग्धं पथ्यं हितम् । इह प्रकृतेऽपि पथ्यग्रहणं पथ्यतरत्वज्ञापनार्थम् । यथाऽमृतमित्यनेनैतत्प्रतिपादयति । यथाऽमृतं बलवर्णौजःकांत्यायुरादिजनकं तथेदमपीत्यर्थः ॥ ३९ ॥

प०-अनुपानं भोजनं कृत्वा कार्यं तदर्थमाह-अनुपानं सलिलमेव श्रेष्ठं सर्वरसानां योनित्वात् । सर्वभूतसात्म्यत्वात् । जीवनादिषु गुणयोगाच्च हितं शीतलं यवगोधूमयोः । चानुपानं हितम् । क्षीणानां नराणां पुष्ट्यर्थं धातुवृद्धये सुरापानं हितम् । कार्श्यार्थे मधूदकं माक्षिकमिश्रितं तोयं हितम् । शोषे मांसरसो, शोषे राजयक्ष्मणि मांसरसोऽनुपानं हितम् । मद्ये मांसेष्वल्पे च पावके मांसेषु भुक्तेषु मद्यमनुपानं हितम् । तथाल्पे पावके मन्दाग्नौ मद्यानुपानं हितम् । व्याध्यादिभिः क्षीणे नरे, बाले, वृद्धे, पयः क्षीरमनुपानं हितं पथ्यम् । यथाऽमृतं शोधनकलापकर्तृत्वादमृतमिव ॥ ३९ ॥

हे०-अथानुपानम् तेन ह्यसम्यग्योगोऽपि सम्यग्योगतां याति । यदाह खारणादिः-"कामं दोषवदप्यन्नममात्रं वा निषेवितम् । अल्पदोषमदोषं वाप्यनुपानेन जीर्यति" इति अनुपश्चात्पीयतइत्यनुपानम्, एतच्च बाहुल्याभिप्रायेण । तद्धि मध्येऽप्यादावपि पीयते । यदाह सुश्रुतः "तदादौ कर्शयेत्पीतं स्थापयेन्मध्यसेवितम् । पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥ निरामयानां चैतत्तु भुक्तमध्ये प्रशस्यते" इति च । कस्तर्हि पानानुपानयोर्भेदः । यदनियतकालं रुचिवशात्पीयते तत्पानम् । यन्नियतकालं विधिवशात्पीयते तदनुपानम् । तत्रादावनुपानविभागः । तत्र यवादिषु शीतोदकमाह-पिष्टमयेषु तु ईषदुष्णोदकमाह—यत्तु सुश्रुतेनोक्तम्-"शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः । दधिपायसमद्यार्ति विषदुष्टे तथैव च" इति । तद्विदाहिपिष्टान्नविषयम् । उक्तं च संग्रहे--तच्छीतं दधिमधुयवगोधूममद्येषु सर्वेषु च विदाहिषु च शरद्ग्रीष्मयोश्चेति ॥ शाकादिषु मस्त्वाद्याह—शाकं पाठादि, मुद्गादि सूप्यं तस्य विकृतिर्वटकादिका, विकृतिग्रहणं रसाद्यन्यत्व एव मस्त्वादिप्राप्त्यर्थम्, अविकृते तु सूपादौ सुश्रुतेनोक्तं-"पयो मांसरसो वापि शाकमुद्गादिभोजने" इति मस्त्वादिषु यस्य यत्सात्म्यमिष्टं वा तस्य तद्योज्यमेकस्यैव तत्कार्यकरत्वात् न मिश्रितकृतप्रयोगः । अत एव स्पष्टमुक्तं संग्रहे—"धान्याम्लं मस्तु तक्रं वा शाकावरान्नेषु" इति । कृशानां सुरामाह-कृशानां शीतोदकाद्युचितेष्वन्नेषु सुरैवानुपानमनवकाशत्वात् । पुष्ट्यर्थं नतु रोगनिवृत्यर्थं, यस्तु कृशो रोगार्तस्तस्य रोगानुरूपमनुपानं, स्थूलानां तु मधूदकमिति मधुमिश्रमुदकं मधूदकम्, शेषं पूर्ववत् । शोषे मांसरसमाह-शोषे शुष्यति देहे, यदाह खारणादिः-"कृशक्षीणामयोन्मुक्तपुष्टिवर्णबलार्थिनाम् । मद्यस्त्रीश्रमनित्यानां शुष्यतां च रसो हितम्" इति । मांसाशिनां, मंदाग्नीनां च मद्यमाह-मद्यं मांसे स्वल्पे च पावक इति तच्च मद्योचितानामेव यदाह सुश्रुतः-"मद्यं मद्योचितानां तु सर्वमांसेषु पूजितम् । अमद्यपानामुदकं फलाम्लं वा प्रशस्यते" इति । व्याध्यादिक्षीणादीनां क्षीरमाह—लंघनम् उपवासः, कर्म चेष्टा ॥ ३९ ॥

**परीतं यदन्नस्य गुणैः स्यादविरोधि च ॥**
**नुपानं समासेन सर्वदा तत्प्रशस्यते ॥ ४० ॥**

स०--अन्नस्य भक्तवटकादेर्यद्विपरीतं गुणैस्तदनु-
नं सदा प्रशस्यते । यथा स्निग्धस्य रूक्षं रूक्षस्य
ग्धं शीतस्योष्णमुष्णस्य शीतम् । मधुरस्याम्लमम्ल-
मधुरमित्यादि । नन्वेवमुररीक्रियमाणे क्षीरस्य क्षैरे-
देर्वा चुक्रादीनामम्लानामनुपानं प्राप्तमित्याह ।
परीतगुणमपि यदविरोधि तदेवानुपानं सदा
तम् ॥ ४० ॥

ा०-समासेनानुपानमाह-अन्नस्य भक्तापूपसूपादेर्या-
परीतं तदनुपानं समासेन संक्षेपेण सर्वदा सर्व-
मन् काले तत्प्रशस्यते यच्चाप्यविरोधि।तद्यथा-स्नि-
स्य रूक्षं, रूक्षस्य स्निग्धम् । शीतस्योष्णमुष्णस्य
ीतम् ।मधुरस्याम्लमम्लस्य मधुरम् । मधुरस्य
टुकं,कटुकस्य मधुरम्।एवं सति क्षैरेयादीनां क्षीर-
काराणामम्लकाञ्जिकाद्यनुपानं प्राप्तगुणमनुपरी-
वात्तदर्थमविरोधीतिपदं निर्दिष्टम् । काञ्जिका.
यदम्लं तत् क्षैरेयादीनां गुणैर्विपरीतं भवति
न्तु तद्विरुद्धमम्लं पयसा सहेत्यालोकात् ॥ ४० ॥

हे०--अनुक्तानुपानविभागोपायमाह--यत् द्रव्यं यस्यान्नस्य
ः कृत्वा विपरीतं न च तेन सह विरुध्येत् तत्तस्यानुपानं
ासेन सामान्येन, विशेषतस्तु सात्म्यादि पर्यालोचनया
यमूह्यम् । अनुपानस्य नित्यसेव्यत्वमाह--तदनुपानम् ४०

अनुपानस्य किं कर्मेत्याह--

**नुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढांगताम् ॥**
**न्नसंघातशैथिल्यविक्लित्तिजरणानि च ॥४१॥**

स०--अनुपानमूर्जादीन्करोति । ऊर्जा मनःप्रहर्षः ।
तिः प्रीणनं शरीरेंद्रियस्य क्षामताविपरीतोऽत्र गुणः।
ा व्याप्तिः द्रवस्य हि गमनं न कठिनस्य । दृढां-
ा स्थिरशरीरत्वम् । तथाऽन्नसंघातस्य शैथिल्यम् ।
क्लित्तिर्विक्लेदनम् । जरणं परिणामः । एतानि च
ोति ॥ ४१ ॥

प०--साम्प्रतमनुपानगुणानाह-अनुपानमूर्जां क-
ति । तदेवान्नं विक्लेदयति । जरणं सुखपरि-
ामतामुपार्जयति ॥ ४१ ॥

हे०--अनुपानस्य फलमाह-ऊर्जा-बलं, तृप्तिं सौहित्यं,
व्याप्तिमन्नस्य सर्वस्रोतोऽनुशरणम् । अन्नसंघातशैथिल्यादी-
नि । शैथिल्यं काठिन्यनिवृत्तिः, विक्लित्तिः शुष्कत्वनिवृत्तिः,
जरणं पाकः ॥ ४१ ॥

एवं गुणमप्यूर्ध्वजत्र्वादिषु न हितमित्याह--

**नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ॥**
**गीतभाष्यप्रसंगे च स्वरभेदे च तद्धितम् ४२॥**

स०--ऊर्ध्वं जत्रुण ऊर्ध्वजत्रुस्तस्मिन्ये गदास्तेषु
तदनुपानं न हितम् । तथा श्वासादिषु न हितम् ।
गीतभाष्ययोः प्रकर्षेण संगः सातत्येन सम्बन्धस्त-
स्मिन् । तथा स्वरभेदे स्वरसादे न तद्धितम् । ऊर्ध्व-
जत्रुगदादीनां ह्यनुपानं प्रदूष्यामाशयमुरःकण्ठस्थि-
तमाहारजं स्नेहमासाद्याऽभिष्यन्दाऽग्निसादच्छर्द्यादीनाम-
यान्विदध्यात् ॥ ४२ ॥

प०--तदनुपानमूर्ध्वजत्रुविकारादिषु न हितम् ।
जत्रोरूर्ध्वं ऊर्ध्वजत्रुः-वक्षोंऽसयोः सन्धिः। तथा चा-
गमः । शिरोधरा जत्रुः कन्धरा परिकीर्तिता ।
गीतभाष्ययोः प्रसङ्गः । प्रकृतिरभ्यसनं यत्र तत्र न
हितम् । तेषां हि प्रदूष्यामाशयोरःकण्ठस्थितमाहा-
रजं स्नेहमासाद्याभिष्यन्दाग्निसादच्छर्द्यादीनामयान्
विदध्यात् ॥ ४२ ॥

हे०-ऊर्ध्वजत्रुगदादावनुपानं निषेधति-वक्षःस्कंधयोः स्वसं-
धी जत्रुणी तयोरूर्ध्वमूर्ध्वजत्रु कंठादिकपालांतम्, तत्र गदा
ऊर्ध्वजत्रुगदाः कासोत्पत्तेः प्रागपि निषेधार्थमुरः क्षतग्रहणम्,
गीतभाष्ययोः प्रसंगो--गायनाध्ययनाद्यभ्यासः॥ ४२ ॥

संप्रति येषां पानमेव न शस्यते तानाह--

**प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ।**
**पानं त्यजेयुः ॥ ४३ ॥**

स०--प्रक्लिन्नो देहो येषां विसर्पाद्यार्तानां ते
पानं त्यजेयुः । मेहादीनां रोगातुरशब्देन प्रत्येकं
सम्बन्धः । मेहरोगाद्यातुराः पानं द्रवरूपं त्यजेयुर्न
केवलमन्नस्योपरि यदनुपानम् । स्वरनादे चोक्तम् ।
मेही प्लीही व्रणी कुष्ठी पांडुर्जठरपीनसी । शोषाति-
सारी मन्दाग्निः पानीयं मन्दमाचरेत् । नोर्ध्वांगपव-

नाविष्टे वाग्व्यायामहते न च । क्षतोरसि श्वासका-सहिक्कावम्यर्दिते न च । निरन्ने चोर्ध्वरोगे च न पेयं वारि शीतलमिति ॥ ४३ ॥

प०—प्रकर्षेण क्लिन्नो देहो वपुर्येषां कुष्ठादिभि-स्तेषां मेहः तेनातुराः । तथा नेत्रगलव्रणातुराः ये ते सर्वे पानं त्यजेयुः ॥ ४३ ॥

हे०—प्रक्लिन्नदेहादीनां पानमात्रं निषेधति—प्रक्लिन्नदेहः क्लेदबहुलशरीरः, मेहादिभिरातुराः ॥ ४३ ॥

**सर्वश्च भाष्याध्वशयनं त्यजेत् ।**
**पीत्वा भुक्त्वाऽऽतपं वह्निं यानं प्लवनवाहनम् ॥**

स०—चशब्दो लुप्तनिर्दिष्टोऽत्र । सर्वोपि पुरुषः पीत्वा भुक्त्वा च भाष्यादींस्त्यजेत् । तथाऽऽतपादीन् पञ्च त्यजेदित्यत्राऽप्यनुवृत्त्या योज्यम् । यानं रथादि । प्लवनं तरणम् । वाहनमश्वादि ॥ ४४ ॥

प०—सर्वश्च पुरुषः स्वस्थ आतुरो वा पीत्वा पानं कृत्वा भाष्याध्वशयनं पाठमार्गगमनस्वपनं तत्का-लमेव त्यजेत् । भोजनं कृत्वाऽऽतपादिकं त्यजेत् । आतपकर्म सन्तापं, वह्निमग्निमश्वादिगमनम् । प्लवनं कूपाद्युल्लंघनम् । वाहनं भारादेर्देशाद्देशान्तरे नयनं त्यजेत् । सद्गुणमप्यमात्रं मात्रोपयुक्तमकाले शरीरो-पघाताय यतः सम्पद्यते ॥ ४४ ॥

हे०—पानानंतरं भाष्यादि निषेधति-सर्वोऽनिषिद्धपानो निषिद्धपानो वा निषिद्धपानस्यापि प्रमादादवस्थादिवशात्पान-प्रसक्तिः । भोजनानंतरमातपादि निषेधति—यानं पद्भ्यां गमनं,वाहनमश्वादिभिः,प्लवनं प्रतरणं,गमनं तु पदशताद्-र्ध्वं निषिद्धम् । यदाह सुश्रुतः-"ततः पदशतं गत्वा वामपा-र्श्वेन संविशेत्" इति ॥ ४४ ॥

काले सात्म्यमित्युक्तम् । भोजनस्य तु कः काल इत्याह—

**प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे ।**
**विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ॥**
**तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ ।**
**प्रयुंजीताहारं विधिनियमितः कालः स हि मतः ॥**

स०—आहारं विधिना पूर्वोक्तेन काले सात्म्यं शुचि हितमित्यादिना नियमितं प्रयुञ्जीत अश्नीया-दित्यर्थः । कदा । मूत्रपुरीषे प्रकर्षेण सृष्टे सति । न किंचिदेव त्यक्त इति प्रशब्देन द्योतयति । तथा हृदये सुष्ठु विमले रसशेषकृतगौरवादिरहिते । तथा दोषे वातादौ स्वपथगे स्वमार्गगे । अजीर्णे ह्याहा-रेऽन्नशेषेण रुद्धगतयो वातादयः स्वस्थानं न लभे-रन् । सुजीर्णे तु स्वस्थानस्थाः स्युः । उद्गारे विशुद्धे चशब्दोऽनुक्तसमुच्चयार्थः । स्रोतोमुखेषु च विशुद्धे-ष्वित्यर्थः । क्षुदुपगमन उपगतायां क्षुधि । वाते-ऽनुसरत्यनुलोमं गच्छति । तथाऽग्नौ कायाग्नावुद्रिक्ते पाकक्षमे । तथा देहे पट्विन्द्रिये सुष्ठु लघौ च । कालः स हि मतः । हिशब्द एवार्थे । स एव कालो भोजनस्य दृष्टो न ततोऽप्यूर्ध्वम् । स ह्यतिकालः । तत्र भुक्तमन्नं वातविष्टब्धं कृच्छ्राद्विपच्यते । तथा चोक्तं तन्त्रान्तरे । अतीतकालं भुञ्जानो वायुनोपहते-ऽनले । कृच्छ्राद्विपच्यते भुक्तं द्वितीयं न च कांक्षति । कुक्षावाध्मानमाटोपसादांश्च कुरुतेऽधिकमिति । तस्मा-त्पूर्वोक्तकाले भोजनमद्यादिति । यमौ न्सौ तः सस्या-द्रसरविविरामा धीरललिता ॥ ४५ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचिता-यामष्टांगहृदयटीकायां सर्वांगसुन्दराख्यायां मात्राशितीयोऽध्यायोऽष्टमः ॥ ८ ॥

प०—अहारकालमाह-प्रसृष्टे त्यक्ते विण्मूत्रे सति हृदि सुविमले विशुद्धे, दोषे वातादिके स्वपथगे स्वस्थानस्थे, क्षुदुपगमने जातायां बुभुक्षायां, वातेऽ-नुसरति मारुतस्यानुलोम्येऽग्नावुद्रिक्ते उदीर्णे, विश-दकरणे स्वकार्यकरणपटाविन्द्रियात्मके देहे शरीरे, सुलघौ लघुतासमायुक्ते सत्याहारं प्रयुञ्जीत । विधि-विधानं तेन नियमितं नियमेन प्रोक्तं, हि यस्मादर्थे यस्मात् स काल आचार्याणां मतोऽभिप्रेत इति भद्रम् ॥ ४५ ॥

इति श्रीचन्द्रनन्दनविरचितायामष्टाङ्गहृद-यटीकायां पदार्थचन्द्रिकायां सूत्रस्थाने मात्राशितीयोऽष्टमोऽध्यायः ॥८॥

हे०—भोजनकालमाह—प्रसृष्टे प्रवृत्ते, सुविमले अतिप्रसन्ने, स्वपथगे स्वमार्गगामिनि, विशुद्धे माधुर्या-दिरहिते, क्षुदुपगमने बुभुक्षोत्पत्तौ, अनुसरति अनु-

कूलं प्रवर्तमाने दोषे स्वपथगं इत्यनेनैव वातानुलोम्ये लब्धे वातेऽनुसरतीति वातानुलोम्यस्य प्राधान्यार्थः । उद्रिक्ते अतिदीप्ते, विशदकरणे निर्मलेंद्रिये, सुलघौ लघीयसि, विधिः शास्त्रोक्तो नियमः तेन नियमितं निषिद्धकामचारम् । ननु यो यदा भुंक्ते स तस्य भोजनकालः किमनेनेत्यत आह—काल इत्यादि । हि यस्मात्स तथाविधः प्रसृष्टविण्मूत्रत्वादिविशिष्टो भोजनकालो मतः आचार्याणाम् । न केवलः तस्मात्प्रसृष्टविण्मूत्रत्वादिविशिष्टे स्वकाले भुंजीतेति । अथ भोजनप्रक्रिया । संग्रहे तु विधिविहितमन्नपानमिष्टेंद्रियार्थमायतनमायुषो ब्रुवते । तदायत्तानि ह्योजस्तेजोधात्विंद्रियबलपुष्टितुष्टिप्रतिभारोग्यादीनि । तदिंधना चांतरग्नेः स्थितिः अग्निमूलं च देहधारणमिति । अथात्मवान् स्वभावसंयोगसंस्कारमात्रादेशकालोपयोगव्यवस्थाः सप्ताहारकल्पनाविशेषाणां स्वास्थ्यास्वास्थ्यफलानां हेतुभूताः समीक्ष्य हितमेवानुरुध्येत । तत्र स्वभावतो दिव्योदकस्तु शालिषष्टिकमुद्गैणलावादयो लघवः । क्षीरेक्षुव्रीहिमाषानूपामिषादयो गुरव इति । ते खल्वपि संयोगादिविशेषैरन्यथात्वं प्रतिपद्यन्ते । तत्र संयोगो नाम द्वयोर्बहूनां वा संहतीभावः स विशेषमारभेत यत्रैकैकशो द्रव्याणि । संस्कारस्तु—तोयाग्निसंनिकर्षशौचमंथनदेशकालभावनादिभिरुपजन्यते । मात्रा—पुनः पिंडपरिमाणतः समुदायेन प्रतिद्रव्यापेक्षया चाहारराशिः । देशो—द्रव्यस्योपयोक्तुश्चेत्यवस्थानं, तत्र पुनरुपयोक्ता स्वस्थातुरत्वतः प्रकृतिभेदतश्च परीक्ष्यः । कालस्तु—ऋतुव्याध्यपेक्षो जीर्णाजीर्णलक्षणश्च । अजीर्णे हि पूर्वस्याहारस्यापरिणतौ रस उत्तरेणोपसृज्यमानः सर्वान् दोषान् प्रकोपयत्याशु जीर्णे तु स्वस्थानस्थेषु दोषेषु वातानुलोम्ये सृष्टेषु वातमूत्रपुरीषवेगेषु विशुद्धेषूद्गारहृदयस्रोतोमुखेषु विशदकरणे लघुनि शरीरेऽग्नावुदीर्णे जातायां बुभुक्षायामभ्यवहृतमन्नमप्रदूषयन् दोषानायुर्बलवर्णानाभिवर्द्धयति । केवलमयमेव कालो भोजनस्य अतीतकाले पुनस्तद्वाताविष्टत्वं कृच्छ्राद्विपच्यते । कर्षत्यन्नरुचिं च पुनरुपहंति । उपयोगव्यवस्था—नास्नातो, न दिग्वासा, नैकवस्त्रधृक्, न मलिनवसनो, नाहुत्वा, नाजपित्वा, नानिरूप्यदेवताभ्यो, न पितृभ्यो, नादत्त्वान्नमग्नये, न गुरुभ्यो, नातिथिभ्यो, नाभ्यागतेभ्यो, न श्वयः—श्वपचेभ्यः । प्रत्यवेक्ष्य चाश्रितोपाश्रितानपि तिरश्चः परिगृहीतान्, प्रशस्तदेशकालोपकरणयुक्तः, स्रग्विभूषितः, सुगंधिरार्द्रपाणिपादः, सुविशुद्धवदनोऽभिमतसहायः, केशमक्षिकाद्यजुष्टमनिंद्यमनिंदितं, पुनर्नोष्णीकृतं, नात्युष्णमनुपदग्धं, सुसिद्धमलो नासात्म्यं, नाविदितं, नाविदितागमं, नातिप्रगे, नातिसायं, नाकाशे, नातपे, नांधकारे, नाधो वृक्षस्य, न शय्यास्थो, नोन्नरम्यप्रदेशिनीं, न पात्रे भिन्ने, न संवृते, न मलिने, न भावदूषिते, न चासनस्थिते, न हस्तस्थे, न हस्ते । प्राङ्मुखः सुमनाः शुचिभक्ताक्षुधितानुकूलजनोपहितं हितमन्नमश्नीयात् । न पर्युषितमन्यत्र मांसोपदंशशुष्कशाकफलभक्ष्येभ्यः, नाशेषमन्यत्र दधिमधुघृतसलिलसक्तुशुक्तपायसेभ्यः । अपि च स्निग्धं लघूष्णमविलंबितमनतिद्रुतमजल्पन्नहसंस्तन्मनाः समीक्ष्य सम्यगात्मानं स्निग्धलघूष्णानि हि वह्निमौदर्यमुदीरयंति कोष्ठं परिशोधयंति । धातून् विकुर्वते, क्षिप्रं जीर्यत्यनिलमनुलोमयंति । तथा स्निग्धं दृढीकरोतींद्रियाण्युपचिनोति, शरीरमपचिनोति, जरसं बलमभिवर्द्धयति, वर्णप्रसादमभिनिवर्तयति । लघु च पुनः स्वभावादिभिरन्नमप्रतिपीडयद्दोषानव्यथं परिणाममेति, विपन्नमपि चाल्पदोषं भवति । उष्णं च पुनर्जनयति रुचिमुपशोषयति श्लेष्माणं, विलंबितं तु भुंजानो न तृप्तिमभिगच्छति । बहु भुंक्ते शीतीभवति चान्नजातं विषमपाचकं च भवति । अतिद्रुतं तु भुञ्जानस्य जल्पतो हसतोऽन्यमनसो वा भवेदुत्क्लेहनम वसदनं भोजनस्य प्रतिष्ठानं, गुणदोषाविभावनं च । समीक्ष्य सम्यगात्मानमिति ममेदं सात्म्यमसात्म्यमिति वा नित्यमप्रमत्तः प्रत्यवेक्षेत । तत्र सात्म्यं नाम सहात्मना भवति अतस्तदौचित्यादुपशेत इत्येके, सात्म्यं विपरीतमनुपशयादसात्म्यम् । अन्ये पुनः प्रकृतिवयोदेशर्तुदोषव्याधिवशेन सात्म्यं बहुविधमिच्छंति ते ह्युपशयमात्रमंगीकृत्य विपरीतगुणमप्युपचारेण सात्म्यमाचक्षते । तुल्यगुणं चानुशयादसात्म्यं, सात्म्यं तु प्रवराप्रवरमध्यविभागेन त्रिविधम् । तत्र सर्वरसं प्रवरम्, एकरसमवरं, मध्यमं तु मध्यममेव । तेषु प्रवरं सेमदोषस्योपदिशंतीतरेषमपि क्रमेणासात्म्यमपि वाहितं पादशो विवर्जयेदित्युक्तं प्राक् । तत्र यदाहारजातं समानधातूननुवर्तयति, विषमांश्च समीकरोति, तत्समासतो हितं विपरीतमहितम् । तत्पुनर्मात्रायोगादिवैचित्र्यादनियतमपि यथोपदेशं यथाभूयिष्ठं च शीलयेत्परिहरेच्च । भुञ्जानस्तु पेयायूषरसाल्व्यंजनानि राजतेषु पात्रेषु निदध्यात् । परिशुष्कप्रदिह्यान्युष्णं च पयः सौवर्णेषु । खलकट्वरकान्बलिकान् कांस्येषु । रागखाडबसट्टशान् वज्रवैडूर्यचित्रेषु । घृतमायसे पयः सुशीतं ताम्रमये । पानीयं पानकानि च मृद्रेमस्फटिककाचमयेषु । ओदनं च विस्तीर्णे मनोरमे स्थले । अन्यथा हि वर्णगंध-

रसान्तत्वादहितं स्यात्। दक्षिणपार्श्वे भक्ष्यं स्थापयेत्। सव्ये लेह्यं सुखोद्धरणपिंडीं च । मध्ये भोज्यमिति । यथासात्म्यं तु प्राग्द्रवमुपशुष्कं चाश्नीयात् । प्रागेव गुरु, स्वादु, स्निग्धं च मध्येऽम्ललवणम्, अंते रूक्षं द्रवमितररसयुक्तं च । तत्र मंदाग्निर्द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदप्युपयुक्तं सम्यक्पाकमेति।अनुपानं तु सलिलमेव श्रेष्ठं सर्वरसयोनित्वात्सर्वरससात्म्यत्वाजीवनादिगुणयोगाच्च । तच्छीतं दधिमधुगोधूमयवपिष्टमयेषु सर्वेषु च विदाहिषु शरद्ग्रीष्मयोश्च । उष्णं पिष्टमयेष्वन्येषु दुर्जरेषु हेमंते च द्रवद्रव्यविज्ञानीयं चेक्षेत । क्षीरं शालिषाष्टिकयोरुपवासाऽध्वभाष्यस्त्रीव्यायामक्लिन्नबालरसेवं । मांसरसः शोषादिषु, वाते ऽम्लानि च । पित्ते शर्करोदकम् । त्रिफलोदकं सक्षौद्रं श्लेष्मणि । पायश्चाक्षिगलरोगेषु,मस्त्वेव वा दध्नि कूर्चिकाकिलाटयोश्च । मद्यं मांसेषु फलाम्लमंबु वा । आसवांश्च विविधान् विभज्य प्रयोजयेत् । विशेषतस्तु मध्वासवग्राम्येषु, तीक्ष्णान् फलासवान् वन्येषु, न्यग्रोधादिफलासवान् विष्किरेषु, अर्द्धशेलुशिरीषकापित्थासवान् बिलेशयेषु, दिग्धहतेषु च अम्लफलासवान्, प्रसहेषु कासेक्षुपद्मबीजशृंगाटकसेरुकमृद्वीकामादिरासवान्, क्षौद्रयुक्तं वा शीतमुदकमुदश्विद्वा महामृगेष्वौदकेषु च, सुरां प्रतुदेषु । तेषां हि प्रदूष्यामाशयमुरस्कंठस्थितमाहारजं स्नेहमासाद्य तदभिष्यंदाग्निसादच्छर्द्यादीनामयान् विदध्यात्। तेषां निषिद्धानुपानानाम्।ततः पाणिगतमन्नमन्नेनापनीय दंतांतरस्थं च शनैः शोधनेन लेपगंधस्नेहापनोदमाचांतोऽङ्गुल्यग्रगलितांबुपरिषिक्तनेत्रस्थांबुलक्तवदनवैद्यो धूमपानादिहृतोर्ध्वकफवेगः पदशतमात्रं गत्वा वामपार्श्वेन संविशेत् । द्रवोत्तरभोजनस्तु सुखशय्यां नातिसेवेत । आहारपरिणामकराः—पुनरूष्मा, वायुः, क्लेदः, स्नेहः, कालः, समयोगश्च । तत्रोष्मा पचति, वायुरपकर्षति, क्लेदः शैथिल्यमापादयति, स्नेहो मार्दवं जनयति, कालः सर्ववपुर्व्याप्तिमभिनिवर्तयति, समयोगस्त्वेषां परिणामधातुसात्म्यकरः-संपद्यते । समयोगस्य पुनः कारणान्युचितो हितश्च देहसंस्कारोऽभ्यवहारश्चेष्टाशयनं, सौमनस्यं च । परिणामतस्त्वाहारगुणाः शरीरजगुणभावमापद्यंते यथास्वमविरुद्धाः। विरुद्धास्तु विहिताश्च विरोधिभिर्विहन्युः शरीरमिति भवंति चात्र-"कुकूलाभ्रष्टपृथुकान् सुपिष्टकृततंदुलान् । न जातु भुक्तवानद्यान्मात्रयाऽद्यात्सुकांक्षितः ॥ शाकावरान्नकट्वम्लकषायलवणोत्कटम् । त्यजेदेकरसासात्म्यं गुरु शुष्कं च भोजनम्॥वक्ष्यते यन्निदानादौ सर्वदोषप्रकोपणम् । अत्यभिष्यंदि विष्टंभि विदाहि हिम रूक्षणम् ॥ त्यागाद्विषमहेतूनां समानां चोपसेवनात् विषमा नानुबध्नंति जायंते धातवः समाः ॥ मंदानलव लारोग्यनृपेश्वरसुखात्मसु । योज्यः क्रमोऽयं सततं नाव श्यमितरेषु तु ॥ करोति रूक्षं बलवर्णनाशं त्वग्रूक्षतां वा तशक्वन्निरोधम् । स्निग्धं त्वतिश्लेष्मचयप्रसेकहृद्गौरवाल स्य क्वचित्प्रणाशान्॥अत्युष्णमन्नं मददाहतृष्णाबलप्रणाश भ्रमरक्तपित्तम्।शीतं तु सादारुचिवह्निनाशहृल्लासविष्टंभन रोमहर्षान्।अतिस्थिरं मूत्रशकृद्विबंधमत्तृप्तिमव्याप्तिमशीघ्र क्तिम् । अतिद्रवं पीनसमेहकासस्यंदान्करोत्यग्निबलं हंति।।अतिमधुरमनलशमनं भुक्तमसात्म्यं न पुष्ट्ये वपुषः अतिलवणमचक्षुष्यं तीक्ष्णाऽत्यम्लं जरा साक्षात् ॥ इ विधिमवलंब्य योऽन्नपानं बलमिव विग्रहवत्सदोपयुंक्ते तनुमपि तनुजां रुजामवाप्य व्रजति नरः स समाशतस पारम्" इति ॥ ४५ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने मात्राशीतिप्रकरणं सामस्त्येन निरूपितम् ॥ ८ ॥

# नवमोऽध्यायः ९.

पूर्वमन्नपानादिद्रव्यैकदेशः प्रायोपयोगवान्निर्दिष्ट स्तस्य चाहारविधेर्मात्रा चोपदिष्टा । संप्रति द्रव्यरस वीर्यविपाकादयो वाच्याः। अन्नपानं हि रसवीर्यविपा कादि परीक्ष्य प्रयोक्तव्यं नान्यथा । तस्मान्मात्राशिती याध्यायादनन्तरं द्रव्यादिविज्ञानीय आरभ्यते ।

## अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

स०–द्रव्यमादिर्येषां ते द्रव्यादयः । आदिशब्देन रसवीर्यादिपरिग्रहः । द्रव्यादीनां विज्ञानमवगमस्तस्मै हितः । शेषं पूर्ववत् ॥ २ ॥

प०-अथेत्यानन्तर्ये।अत इतिप्रस्तुताभिसम्बन्धे प्रस्तु तान्मात्राशितीयादनन्तरं द्रव्यादिविज्ञानीयमध्याय व्याख्यास्यामः । द्रव्यमादिर्येषां ते, आदिग्रहणेन रसवीर्यविपाकानां ग्रहणम् । तेषां विज्ञानमवबोधः तस्मै हितोऽध्यायः तं वर्णयति व्याख्यास्यामः यस्मादेतदन्नपानं द्रव्यरसवीर्यविपाकादिभिः परीक्ष्य

१ अत्र "बालवृद्धेषु" इति खपुस्तके।

१ अत्र " कासारुचि-" इति खपुस्तके ।

प्रयोजनं नान्यथेति । तत्र द्रव्यं रसादिभ्यः पूर्वम् । प्राधान्यादग्रे निर्देशः ॥ १ ॥

हे०--द्रव्यादिविज्ञानीयमध्यायं व्याख्यातुं प्रतिजानीते-अथेति । यतः पूर्वैरध्यायैश्चतुर्भिराहार उक्तः स चानंतविशेषत्वात्तावता ज्ञातुमशक्यः, अतोऽशेषसंग्रहार्थं द्रव्यरसगुणवीर्यविपाकप्रभावाः सामान्यतो वाच्याः।ते चास्मिन्नध्याये अतएवायं द्रव्यादिविज्ञानीयः ॥ १ ॥

तत्र द्रव्यस्य रसादिभ्यः प्राङ्निर्देशः प्राधान्यात् । प्राधान्यं च स्वयमेव ग्रंथकृत्प्रतिपादयन्नाह-

**द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः ॥२॥**

स०--रसादीनामिति निर्धारणे षष्ठी । रसवीर्यादीनां मध्ये द्रव्यमेव प्रधानम् । ते रसादयो हि यस्मात्तदाश्रयास्तदेव द्रव्यमाश्रयो येषां त एवम् । अत एव केवला रसादयो नोपलभ्यन्ते । तस्मात् द्रव्यं प्रधानम् ॥ २ ॥

प०--द्रव्यमेव रसवीर्यादीनां मध्ये श्रेष्ठं प्रधानम्। यस्मात्ते रसादयः तदाश्रया द्रव्याधाराः रसादीनाम् केवलानां समर्थत्वात् ॥ २ ॥

हे०--तत्र द्रव्यस्य प्राधान्यमाह--रसादिभ्यो द्रव्यमेव प्रधानं यस्मात्ते रसादयस्तदाश्रयाः द्रव्याधिष्ठानाः । एतेनैव रसाद्याश्रये द्रव्यमिति । प्राधान्यकथनं द्रव्यज्ञाने तात्पर्यार्थम् । उक्तं च संग्रहे-"यस्माद् दृष्टो यवः स्वादुर्गुरुरप्यनिलप्रदः । दीपनं शीतमप्याज्यं वसोष्णा वाऽप्यदीपनी ॥ कटुपाकोऽपि पित्तघ्नो मुद्गो माषस्तु पित्तलः । स्वादुपाकोऽपि च यकृत्स्निग्धोष्णं गुरु फाणितम् ॥ रसे स्वादौ यथा चैतत्तथान्येष्वपि दृश्यते । वातघ्नं कफपित्तघ्नमम्लमप्यक्षकीफलम् ॥ कुरुते दधि गुर्वेव वह्निं पालेवतं न तु । कपित्थं दाडिमं चाम्लं ग्राहि नामलकीफलम् ॥ कषाया ग्राहिणी शीता धातकी न हरीतकी । अप्रधानाः पृथक्तस्माद्रसाद्याः संश्रितास्तु ते ॥ प्रभावश्च यतो द्रव्ये द्रव्यं श्रेष्ठमतो मतम् " इति ॥ २ ॥

**पंचभूतात्मकं तत्तु ॥ ३ ॥**

स०--तुरवधारणे । यत्तदोश्च नित्यसम्बन्धाद्यदित्येतदनुक्तमप्यर्थाल्लभ्यते । तेनायमर्थः । यद्रसादीनामाश्रयभूतं कार्यं द्रव्यं हरीतक्यादि स्थावरं छागादि जंगमं तत्पञ्चभूतात्मकम् । तत्र यत्कारणद्रव्यमाकाशादि तस्य हि पंचभूतात्मकत्वे सत्याकाशादीनां पृथक्त्वेनात्मलाभो न स्यात् । ततश्चेदमाकाशं नाम महाभूतमिदं पृथ्वी नाम महाभूतमिति गदितुं न पार्येत । सर्वस्य पंचमहाभूतात्मकत्वात् । न च यत्कारणं तत्कदाचित्कार्यं स्यात् । तस्मात्कार्यद्रव्यस्यैव पंचमहाभूतात्मकत्वं न कारणद्रव्यस्याऽऽकाशादेः । मुनिस्तु । खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रह इति । न च वा द्रव्यमुक्त्वा तल्लक्षणं व्यधीत । यथा। यत्राऽश्रिताः कर्मगुणाः कारणं समवायि यत्।तद्रव्यमिति । अस्यार्थः यत्र कर्म परिस्पंदलक्षणं संयोगवियोगकारणं समवेतश्च गुणः यत्र शब्दादयो गुर्वादयो वा बुद्धिपुरादयो वा समवेताः । यच्च कारणं समवायि तद्द्रव्यमुच्यते । समवायीति। यत्कारणमपृथग्भवति तत्समवायिकारणं यथा तन्तवः पटस्य । एवमेतानि च कर्मगुणाश्रयित्वसमवायिकारणत्वानि यद्यपि सर्वाणि सर्वस्मिन् द्रव्ये न विद्यंते तथाऽपि यद्यत्र सम्भवति तत्र तेन तस्य द्रव्यस्य द्रव्यत्वं कल्प्यम् । तद्यथा । मनसः कर्मगुणाश्रयित्वेन वाय्वादीनां तु कर्मगुणाश्रयित्वेन समवायिकारणत्वेन च । नन्वाकाशादीनि कारणद्रव्याणीति कथमुक्तम् । यावताऽकाशस्य द्रव्यत्वमेव नास्तीति केचित्तान्ब्रूमहे । जलधेरिव प्रत्यक्षेणैवाऽस्य नीलरूपतोपलब्धेरस्तित्वं सिद्धम् । तथा कवयोऽपि नीलत्वमेवाऽस्य वर्णयंति । तथा कर्णाटस्य । विपुलपुलिना हृद्या नद्यो वहंत्यतिनिर्मलाः कमलसुभगो वायुर्घ्राणं विलंबति मांसलः । नवजलधरच्छायावासादिवाचिरनिर्गतो वहति शशभृन्नीलस्निग्धे नभस्यवदातताम्‌ इति । तथा च बाणस्य धावति शशिनि नभसीति । तदेतद्दूषयति । तथा हि दूरात् भ्रांतिमात्रेणैव नीलरूपत्वमस्योपलभ्यते । यथागिरेर्विविधवर्णस्याऽपि दूरान्नीलत्वप्रतीतिः । यत्कवीनां वर्णनं तस्मादलसेन निष्प्रमाणकमेव संभाव्यते । तथा च ते नभसः शुक्लत्वं वर्णयंति । न च शुक्लत्वमेतस्योपपद्यते निराकारत्वात् ।

नामात्र नीलरूपत्वं नभसः । ननु दर्शनवैचित्र्यादस्य रूपत्वमुपपन्नम् । यथा पुरुषः शरादि ऋजुतां दिदृक्षुरेकं चक्षुर्निमील्याऽपरं चोन्मील्य तामुपलभते ननु नयनयुगलेन । तद्वत्संनिकृष्टे गगनरूपस्यानादानं विप्रकृष्टे तु स्यादिति । नचैतद्युक्तम् । यतो रूपवत्त्वेऽभ्युपगम्यमाने स्पर्शवत्त्वमस्य प्रसज्ज्येत । रूपस्य स्पर्शेन नित्यसंबन्धात् । स्पर्शवत्त्वे सत्याकाशत्वमेव न स्यात् । अतो न रूपवद्व्योम । अन्ये त्वेवं मन्यंते । पवनवदाकाशस्यावस्थाऽस्तु यथा किल पवनः स्पर्शवान् । न च तस्मिन्रूपं संभवति । तथैवाकाशो न रूपवान्न च स्पर्शवानिति । तदिदमनवगतपदार्थस्वरूपाणां विलपनम् । ततो यत्र रूपं तत्राऽवश्यं स्पर्शो न तु यत्र स्पर्शस्तत्राऽवश्यं रूपम् । तस्मान्न नभो रूपवन्न च सत् । अत्रोच्यते । परमार्थदर्शिभिर्यदुपादायोत्पत्तिः कथ्यते तदस्ति । यथा पृथिव्यादि । उक्तं च । अक्षरात् खं ततो वायुस्तस्मात्तेजस्ततो जलम् । उदकात् पृथिवी जाता भूतानामेष संभव इति । तस्मादाकाशं द्रव्यमस्ति । अपि च । आकाशमुपादाय गतिवृद्धिप्रसवादिविशेषोपलब्धेराकाशस्याऽस्तित्वम् । यथा रूपोपलब्धिविशेषसंभवानुमितं चक्षुः । अपि च । आकाशाभावे घैकघनत्वं जगतः स्यात् । तथा शब्दाख्यस्य गुणस्यान्यथाऽनुपपत्त्यास्त्याकाशमिति । ननु वायुर्नास्त्येव । तत्स्वरूपग्राहकप्रमाणाभावात् । स्पर्शोपलब्धेर्वायोरस्तित्वमुच्यत इति चेत् तदपि न युज्यते । अधुनैवोक्तं खाद्वायुरिति । गगनस्य च स्पर्शाभावाद्वायोरस्पर्शवत्त्वं कारणगुणपूर्वकत्वात्कार्यस्य । नैतदस्ति । कार्यस्योभयात्मकत्वदर्शनात् । कारणगुणपूर्वकं कार्यं दृष्टमकारणगुणपूर्वकं च दृष्टम् । तत्र कारणगुणपूर्वकं तावद्यथा । तंतुश्वेतत्वपूर्वकं पटे श्वेतत्वम् । अकारणगुणपूर्वकं च दृष्टं यथा । हरिद्राक्षारसंयोगाद्रक्तता । तस्मादस्पर्शादाकाशादुत्पन्नो वायुः स्यादेव स्पर्शवान् । नन्वेवमप्यग्निजलपृथिवीष्वपि स्पर्शविशेषसंभवात्तस्मादग्न्यादिसमवाय एव वायुर्व्यवह्रियते न तद्व्यतिरिक्तो वायुरस्ति । अत्रोच्यते सत्यमनलादीनामपि स्पर्शोऽस्ति किंतु विलक्षण एवासौ । तथा हि । तेजसः स्पर्शो रूपैकार्थसमवायी । अपां स्पर्शो रूपरसाभ्यां समवेतः । पृथिव्या रूपरसगंधसमवेतः यस्तु वायोः स्पर्शः स पत्रचलनशाखाभंजनादिकर्मसमवायी स नैषामग्न्यादीनां दृष्टानां नाप्यदृष्टानामात्मादिकालादीनाम् । गुणाश्च सर्वे द्रव्याश्रया दृष्टा रूपादय इव पटादिषु । तस्माद्वायोर्विशिष्टस्पर्शवत्त्वादस्तित्वमनुमीयते । । तथा पवनस्य तत्कर्मोपदेशादस्तित्वम् । यस्य तत्त्वदर्शिभिः कर्मोपदिश्यते तदस्ति यथा कफादिवद्वातस्य च कर्मोपदिष्टम् । यथा स्रंसव्यासव्यधस्वापेत्यादि । तस्मादस्ति वायुर्द्रव्यमिति । अग्निर्द्रव्यं नास्ति इन्धनव्यतिरेकेणानुपलब्धेः अत्रोच्यते । तत्त्वदर्शिभिरग्नेर्द्रव्योत्पत्तिहेतुत्वेनोपदेशादस्तित्वम् । तथा चेहैव वक्ष्यति । आग्नेयं दाहभावर्णप्रकाशपवनात्मकमिति । ननु युक्तश्चतुर्णां भूतानां सावयवत्वात् द्रव्येषूत्कर्षोऽपकर्षसंनिवेशः । क्वचिद्द्रव्ये कस्यचिद्भूतस्य प्रमाणतः प्रभावतश्चावयवानामुत्कर्षापकर्षसद्भावादाकाशस्य तु निरवयवत्वात्सूक्ष्मत्वादेकत्वाच्चोत्कर्षापकर्षसंनिवेशो न युक्तः । युक्तमाह भवान् किंतु सावयवानामेव द्रव्याणां येऽवयवाः क्वचित्पाषाणादौ संहता अवतिष्ठन्ते । येन तत्र द्रव्ये काठिन्यस्य प्रकर्षो भवति तत्र चाऽऽकाशमपकृष्यते अनिबिडावयवे तु सन्निवेश आकाशः प्रकृष्यते तदेवमनया युक्त्याऽऽकाशस्याऽपि न्यूनाधिकभाव उपपन्नः ॥ २ ॥

प०—तत्पुनः द्रव्यं यदेतत्कार्यं द्रव्यं स्थावरं जङ्गमादि तत्पञ्चभूतात्मकम् । पञ्चभिर्भूतैरारब्धं धरण्याम् । कारणं द्रव्यमाकाशादि । आकाशादेः कारणं द्रव्यस्य पञ्चभूतात्मकत्वे पृथक् स्वात्मलाभाभावात् । ततश्चेदमाकाशं नाम महाभूतं यावदिदं पृथिवी नाम महाभूतमित्येतद्वक्तुं न युज्यते । भूतानां पृथिव्यादीनां पञ्चमहाभूतात्मकत्वात् । किंच नच यत् कारणं तदेव च कार्यमिति वक्तुं शोभते । स्वात्मनि कर्तृत्वविरोधात् । तस्मात्कार्यद्रव्यस्य स्थावरजङ्गमादेः पञ्चमहाभूतात्मकत्वेन पुनः

कारणद्रव्यस्याकाशादेः । अतएव तत्त्वतः स्वदेशकृतप्रत्यवमर्शे सर्वमवाचकं निर्दिष्टम् । तस्मात् पञ्चभूतात्मकं नैकधादिकमेव पञ्चानामुपलब्धेस्तत्र तस्य यद्गन्धगुणोल्बणं तत्पार्थिवम् । रसगुणोल्बणं तदाप्यम् । यद्रूपगुणोल्बणं तत्तैजसम् । स्पर्शगुणोत्कर्षो वायव्यस्य शब्दगुणोत्कर्षेणाकाश इति । यत्तदोश्च नित्याभिसम्बन्धात् । यदित्येतत्पदमनिर्दिष्टमपि निर्दिष्टम् ॥ ३ ॥

हे०-द्रव्यभेदानाह—पञ्च संख्याकानि भूतान्येव आत्मानो यस्य तत्तथा । पार्थिवादिभेदात्पंचधेत्यर्थः । कार्यकारणयोरभेदोपचाराद्भूतशब्देन भौतिकमुच्यते द्रव्यमित्यनुवर्तते । द्रव्योत्पत्तिमाह—तत् द्रव्यम् ॥ ३ ॥

अथ केन महाभूतेन कथं कृत्वाऽऽरब्धं द्रव्यमित्याह—

**क्ष्मामधिष्ठाय जायते ॥ ४ ॥**

स०—पृथ्वीमाधारीकृत्योत्पद्यते ॥ ४ ॥

प०—भूमिमाधारीकृत्य जायते ॥ ४ ॥

हे०—क्ष्मामधिष्ठाय जायते मृदमिव घटः । उपादानकारणं पृथ्वीत्यर्थः ॥ ४ ॥

एवं पृथिव्याख्येन भूतेनाऽऽधारत्वेनोपकृत्य तेन तदारब्धं द्रव्यमित्युच्यते । यथा—

**अंबुयोन्यग्निपवननभसां समवायतः ।**
**तन्निर्वृत्तिर्विशेषश्च व्यपदेशस्तु भूयसा ॥ ५ ॥**

स०—अम्बु सलिलं योनिः कारणं यस्य तदंबुयोनि द्रव्यम् । एवं जलं नाम महाभूतं रसवत्त्वानितयोपकृत्य तेन तदारब्धमित्युच्यते । मुनिनाप्युक्तम् । रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः । तेषां द्रव्यादीनामाश्रयकर्मणोर्भेदश्चित्यः । तथाग्निपवननभसां समवायादपृथग्भावात्तस्य द्रव्यस्य निर्वृत्तिर्निष्पत्तिः । तथा तस्य द्रव्यस्य यो विशेष इदमिदमिदमन्यद्द्रव्यमित्येवंरूपो नानास्वभावः सोऽप्यग्निपवननभसां समवायात् । एवमग्निपवननभोभिः समवायिकारणत्वेनोपकृत्य तैरेतद्द्रव्यमारब्धमित्युच्यते । एवं सर्वं कार्यद्रव्यं पंचमहाभूतात्मकं पंचभिर्महाभूतैरारब्धत्वात् । ननु यदि पंचमहाभूतात्मकं द्रव्यं तत्कथमुच्यते पार्थिवमिदं द्रव्यमिदमाप्यमित्याह । व्यपदेशस्तु भूयसेति । यत्र द्रव्ये यद्भूतं भूयिष्ठमधिकृतं तेन तस्य व्यपदेशः संज्ञा भवति । यथा पृथिव्याधिक्योत्पादितं द्रव्यं पार्थिवम् । एवमाप्यं तैजसं च वेद्यम् । तदेवं सर्वं द्रव्यं पंचभूतात्मकं स्थितम् ॥५॥

प०-एवं पृथिव्याख्येन महाभूतेनाधारतया यत् कृप्यते न तदारब्धमित्युच्यते । अम्बुयोनि अम्बु सलिलं योनिरुत्पत्तौ कारणं यस्य तदम्बुयोनि द्रव्यम्। एवं रसवत्त्वाद्योनितयोपकृत्य तेन तदारब्धमित्युच्यते । तन्निर्वृत्तिर्विशेषश्च । तस्य निर्वृत्तिः निष्पत्तिर्घटनारचनात्मिका सा तन्निर्वृत्तिस्तेजोवाय्वाकाशानां समवायाद्यद्धटते समवायेनोपकार्योपकारकभावेन ते । यथाग्निः पक्तृत्वेनोपकारको वा । वायुश्चलत्वेन । नभोऽवकाशदानेन । केवलाप्यस्य निर्वृत्तिरग्निपवननभसां समवायात् । यद्येवं सर्वं द्रव्यं पञ्चमहाभूतारब्धं तत्कथमिदं पार्थिवमिदमाप्यमिति व्यपदेश इत्यत आह—यत्र द्रव्ये त्वेषां कारणभूतानामपि भूयस्त्वेनोपलम्भात् तेनैव व्यपदेशः संज्ञा। पृथिव्यधिकतया जनितं पार्थिवम् । एवं सर्वं द्रव्यं पञ्चभूतात्मकम् ॥ ५ ॥

हे०--अंबु उदकं योनिर्विपरिणामकारणं यस्य तदंबुयोनि । यथा घटे निष्पाद्ये मृदः पिंडीभावादौ । अग्न्यादीनां संबंधात्तन्निर्वृत्तिः संपूर्णावयवत्वम् । काठिन्यक्रियावकाशादिदानेन विशेषः परस्परं सोऽपि तत एव । तथा पिंडीभूतान्मृदो मणिकरकशरावादिभेदाः । सर्वेषां पंचभूतात्मकत्वादभेदे प्राप्ते भेदे हेतुमाह—व्यपदेशः—इदं पार्थिवमिदमाप्यम् इत्यादि भेदेन व्यवहारः । स भूयसाप्यधिकेन भूतेन यत्र यस्याधिक्यं तस्य तेन व्यपदेशः ॥ ५ ॥

**तस्मान्नैकरसं द्रव्यं भूतसंघातसंभवात् ॥ ६ ॥**

स०—तस्माद् भूतसंघातसंभवात् कारणाद्द्रव्यं नैकरसमपि त्वनेकरसम् ।एवं द्रव्यवद्रसस्याऽपि भूतसंघातसंभवत्वम्।अत एव प्रतिद्रव्यं मधुरादिरसस्य नानास्वादोपलंभः। तथा च। द्राक्षाऽक्षोडक्षीरेक्षुक्षौद्रगोजाक्षीरशुक्रादौ द्रव्ये सत्यपि माधुर्ये परोऽपर आस्वाद उपलभ्यते ।

रसमम्लानामपि मातुलुंगधान्याम्लादीनां द्रव्याणां नानास्वादोपलंभः । एवं लवणादीनाम् । अपि चैषां द्राक्षादीनामनेकरसत्वमास्वादविशेषादनुमीयमानं भूयसा रसेनान्यरसाभिभवं कृत्वा व्यपदिश्यते । इदं मधुरमिदमम्लाद्यन्यतमं महाभूतवत् । यथा सर्वं द्रव्यं पंचमहाभूतात्मकं भूयसा महाभूतेनान्यमहाभूताभिभवं कृत्वा तेन व्यपदिश्यते पार्थिवमिदमाप्यमिदमिति । ननु द्रव्यनिर्णये कृते पांचभौतिकं द्रव्यं यदेव प्रतिज्ञातं तदेव तस्मादित्यादिना निगमग्रंथेनाऽतिवाहयितुं युक्तं न पुनरप्रस्तुतमनेकरसत्वम् । तस्मादत्रैवं ग्रंथः कर्तुं न्याय्यः तस्मान्नैकभूतजं द्रव्यं भूतसंघातसंभवादिति । अत्रोच्यते । षण्णामपि रसानां योनिरुदकं ततश्चैकस्यैव महाभूतस्योदकसंज्ञस्य रसकारणत्वं प्राप्तं नान्येषां नीरसत्वादिति कृत्वा न भूतसंभवत्वं रसस्येत्येवंविधामाशंकामपनिनीषुर्भूतसंघातसंभवत्वं रसस्य चैकेनैव प्रयत्नेन । तस्मान्नैकरसं द्रव्यं भूतसंघातसंभवादिति जगाद । मुनिश्चात एव रसस्य भूतसंघातसंभवत्वं स्पष्टं कृत्वोवाच । यथा । रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः । इत्येवं भूतसंघातो रसानां द्रव्याश्रितानामपि संभवकारणम् । एतच्च रसभेदीये सविस्तरं व्याख्यास्यामः ॥ ६ ॥

प०-यस्मात् भूतसङ्घातसम्भवात् द्रव्यस्योत्पत्तिर्जन्म तस्मात्कारणात् द्रव्यमेकरसं न भवति बहुरसमित्यर्थः । इदं तु पुनरत्र निवेदनीयम् । यदेकस्यैव रसकारणत्वं नान्येषां महाभूतानां नीरसत्वात् । कारणानुविधानाच्च कार्येण भाव्यम् । यतस्तस्माद्भूतसङ्घातसम्भवादित्यनेनैतद्व्यक्तीकरोति । यदा नानागुणद्रव्यं यत्तत्तेन रसस्य सम्भवः । यथान्येन गुणद्रव्याश्रितानां कारणभूतद्वयोत्कर्षेण पुनर्मधुरादिभिरभिव्यक्तिर्द्रव्येण निष्पाद्यते । तथाच वक्ष्यति रसभेदीयस्थाने-"द्वयोल्वणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः । रसाद्यभिव्यक्तिः" इति यावत् । एवं सर्वो रसो भूतसङ्घातजो भूयसाऽभिव्यक्तेन रसेनेदं मधुरं द्रव्यं न सिद्धेन अम्लाद्यन्यतमद्रव्यमिति स्थितम् । न पुनस्तत्र मधुरद्रव्येऽम्लादयोऽन्यतरस्तच्छक्त्याऽतिविद्यन्ते । तथाम्लाद्यन्यतमे मधुरादयः यथा शक्तोऽन्योन्यत्वाद्द्रव्ययोस्तथान्ये त्यक्तरसाः अनभिव्यक्तषड्रसा इति यावत् । अत एव नैकरसत्वात प्रतिव्यक्तं द्राक्षेक्ष्वादौ मधुरे द्रव्येऽन्योन्यमधुरास्वाद उपलभ्यते । इत्येवं मध्वादीनां व्याख्येयम् । यथा भूतसङ्घातो द्रव्यस्य निष्पत्तौ कारणं तथैव रसस्य मधुरादेः । सर्वो रसो भूतसङ्घातजो भूयसाऽभिव्यक्तेन रसेन व्यपदिश्यते ॥ ६ ॥

हे०-सर्वेषां द्रव्याणां सर्वधर्मत्वमाह—तस्मात्सर्वभूतारंभकत्वात्सर्वमपि द्रव्यं नैकरसं सर्वधर्ममित्यर्थः । रसशब्दोऽत्र धर्ममात्रोपलक्षणम् । सर्वभूतारब्धत्वेऽप्येकरसत्वे को दोष इत्याशंक्याह—रसानामपि भूतसमुदायादुत्पत्तेः वक्ष्यति हि-"द्वयोल्वणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ।" सति च कारणे कार्येणावश्यं भाव्यं तुल्यन्यायत्व प्रसंगात् ॥ ६ ॥

**नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः**
**अव्यक्तोऽनुरसः किंचिदंते व्यक्तोऽपि चेष्यते**

स०-द्रव्यमनेकरसं ततस्तस्मात्कारणादेकदो रोगा ज्वरादयो न भवंत्यपि त्वनेकदोषा इत्यर्थः अत्रापि व्यपदेशस्तु भूयसेत्यध्याहार्यम् । ते त्रिदोषात्मकेऽपि ज्वरे वाताधिके वातज्वर एवं पित्तज्वरः श्लेष्मज्वर इत्येवंरूपो व्यपदेश उपपन्नः । ननु यदि स ज्वरः संनिपातजस्तत्किमिति वक्ष्यत्ययं संनिपातज इति । ब्रूमहे । समविषमरूपं शक्त्युत्कर्षमाश्रित्य दोषा वर्तंते स सन्निपातज्वर इति तंत्रकृता पुरस्ताद्विस्तरेण प्रतिपादयिष्यते। अथ को रसोऽनुरसो वेत्याह तत्रेत्यादि । तत्र तस्मिन् द्रव्ये यो व्यक्तः स्फुट उपलभ्यते स रसः स्मृतस्तंत्रकृद्भिः । यश्चाव्यक्तोऽस्फुटप्रतिभासो रसनेंद्रियेणोपलभ्यते सोऽनुरसः । ह्रीबेरादिष्वनुशब्दोऽल्परस इत्यर्थः । नैतावदेवानुरसलक्षणमित्याह । किंचिदित्यादि । मुखक्षिप्तस्य हरीतक्यादेर्द्रव्यस्य रसनेंद्रियेण किंचिदंते व्यक्तोऽप्युपलभ्यः सोऽप्यनुरस इष्यते मुनिभिरिति वाक्यशेषः अंत इत्यनेनैषं तद्बोधयति अंतेऽवसाने न तु पानमात्रे वा न च मध्ये । तयोर्हि रसस्यैव

लंभः । अनुशब्दस्यात्र पश्चादर्थत्वम् । पश्चात् स्फुटोऽपि किंचिद्य उपलभ्यते सोऽप्यनुरस इत्यर्थः॥ ७॥

प०—दोषा वातादयः । ते च रसाश्रयाः । रसाश्च द्रव्याश्रयाः पञ्चभूतात्मकत्वात् । अनेकरसद्रव्येण तदुपयोगाच्च प्रकुप्यन्ति तैः प्रकुपितै रोगा भवन्ति । तस्मान्नैकदोषा रोगा इति त्रिदोषा इत्यर्थः । अत्रापि भूयसा व्यपदेश इत्यध्याहार्यम् । अयं वातज्वरो पित्तज्वर इत्येवंरूपम् । अथ कोऽयं रसोऽनुरसो वेत्याह—तत्र स्मृत्यां भौतिके सर्वरसाधारद्रव्ये यो रसो मधुरादिर्व्यक्तो निर्धारितरूप उपलभ्यते स रसः स्मृतः। मधुर एवायमम्ल एवायमिति । अनुरसोऽव्यक्तः । यो भुज्यमानश्चामलकादिर्जिह्वायां स्फुटत्वेन न लभ्यते सोऽनुरसः । अन्ते चाशने किञ्चिन्मनाक् रस इति व्यक्तोऽपष्यिते ॥ ७॥

हे०—सर्वेषां रोगाणां सर्वदोषजत्वमाह—रोगा नैकदोषाः, सर्वेऽपि रोगाः सर्वदोषोद्भवाः । कुतः तत एव हेतोः, रोगाणामपि भूतसंघातस्य च त्रिषु दोषेषु विभक्तत्वात् । यथोक्तं संग्रहे वाय्वाकाशाभ्यां वायुराग्नेयं पित्तम्, अंभःपृथिवीभ्यां श्लेष्मेति । भूतसंघातं विना न दोषसंघातस्तद्विना न रोगोत्पत्तिरिति । अतः सर्वे रोगास्त्रिदोषजाः । केचित्तु सर्वद्रव्याणां सर्वरसत्वेन सर्वदोषसामान्यात्सर्वदोषकोपनत्वं ततो रोगा नैकदोषा इति व्याचक्षते, तदसत् सामान्यवद्वैपरीत्यस्यापि सत्त्वात् । सामान्यं प्रयोजकमिति चेत् न, दोषघ्नद्रव्यभेदाभावप्रसंगात् । वैपरीत्यमपि क्वचित् प्रयोजकमिति चेन्न, सर्वदोषकोपनत्वनियमव्याघातात् । सर्वदोषकोपनानां नियम इतिचेत् न, ह्येकदोषकोपनद्रव्याभावप्रसंगात् । बाहुल्येनैव व्यपदेश इति चेत् न, द्विदोषकोपनैकशमनद्विशमनैककोपनद्रव्याभावप्रसंगात् । सिद्धांतेऽपि सर्वेषां सर्वधर्मत्वस्वीकारान्न दोषघ्नादिविभाग इतिचेत् न, तस्य तस्य धर्मस्य तत्र तत्र प्रयोजकत्वात् । तथाच वक्ष्यति "किंचिद्रसेन कुरुते कर्म पाकेन चापरम्" इति इत्यादि । तस्मात्पूर्वमेव व्याख्यातम्, सर्वेषां सर्वधर्मत्वादविशेषप्राप्तौ तन्निरासार्थं धर्मतारतम्यमाह—तत्र द्रव्ये कश्चिद्धर्मः सद्यो व्यक्तः, काश्चिदव्यक्तः, कश्चिदीषद्व्यक्तः, कश्चिदंते व्यक्तः । तत्राद्यो रसाख्य इतरे त्रयोऽनुरसाख्याः ॥ ७॥

स०—ननु मधुरादयो रसा गुर्वादिगुणयुक्ता कथं वक्तुं पार्यते । यतो मधुरादयो रसा गुणा गुर्वादयश्च । न च गुणानां मधुरादीनां गुर्वादिगुणाधारत्वमुपपन्नम् । तथा च वैशेषिकाः। निर्गुणा गुणा इति तस्मिन्पर्यनुयोग इदमाह—

**गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये ।**
**रसेषु व्यपदिश्यंते साहचर्योपचारतः ॥ ८ ॥**

स०—पृथिव्यादौ पृथिव्यादिमहाभूताख्ये द्रव्ये रसाश्रये गुर्वादयो गुणाः परमार्थत आश्रिता नतु रसेषु मधुरादिषु । यत्तु रसेषु व्यपदिश्यंते तत् साहचर्योपचारतः । सह चरतीति सहचरस्तस्य भावः साहचर्यम् । यस्मिन्नेव गुडादौ द्रव्ये मधुरो रस आश्रितस्तस्मिन्नपि गुरुगुण आश्रित इति मधुररसगुरुगुणयोः सहचरभावः । साहचर्येण तुल्याश्रयत्वेनोपचारः साहचर्योपचारस्तस्मात्साहचर्योपचारतो गुर्वादयो गुणा रसेषु मधुरादिषु व्यपदिश्यंते । यथा गुरुर्मधुरो रसो लघुरम्ल इत्यादि । न पुनः परमार्थतो रसेषु गुर्वादयः संति । अस्ति च साहचर्येण व्यपदेशः । यथा घृतसहचरेण घृतस्थेनाग्निना दग्धो घृतदग्ध इत्युच्यते ॥ ८ ॥

प०—ननु कथं मधुरादयो रसा गुरुलाघवादिगुणयुक्ता वक्तुं युज्यते । तस्मान्मधुरादयो रसा गुणा एव गुर्वादयस्तथैव गुणाः । नच गुणादीनां गुर्वादीनां मधुरादयो गुणा आरब्धत्वेन वक्तुं युक्ताः । यस्मान्निर्गुणा गुणा इति वैशेषिका अत उच्यते—रसाश्रये द्रव्ये पृथिव्यादौ परमार्थतो गुर्वादयो गुणा आश्रिताः पुनर्मधुरादिरसेषु यद्व्यपदिश्यन्ते मधुरादयो गुर्वादिगुणयुक्ता इति। कस्मात् साहचर्योपचारतः । कोऽर्थः । यस्मिन्नेव द्रव्ये मधुरो रस आश्रितस्तस्मिन्नपि द्रव्ये गुरुरपि गुण आश्रित इति कार्यादनुमीयते । अन्यथाप्रायो मधुररसगुरुगुणयोः सहचरितत्वम् । सहचरतीति सहचरस्तस्य भावः साहचर्यम् । उपचरणमुपचारोऽन्यधर्मप्रापणम् । साहचर्येणोपचारात् । गुर्वादयो गुणा रसेषु मधुरादिषु व्यपदिश्यन्ते न पुनः परमार्थतः तेषु रसेषु गुर्वादयो गुणा विद्यन्ते ॥ ८॥

हे०—गुर्वादीनां रसाश्रयत्वाद्द्रव्यस्यासर्वधर्मत्वे प्राप्ते रिहारमाह—गुर्वादयो गुणा द्रव्य एव न रसेषु । यस्तु धुरी गुरुरम्लो लघुरित्यादि व्यपदेशः स साहचर्योप-ारतः । एकस्मिन्नाश्रये द्वयोरवस्थानं साहचर्यम् । साह-र्यमेव कुत इत्याह—रसाश्रय इति । द्रव्यं हि गुर्वा-नामिव रसानामप्याश्रयः । अत एकाश्रयत्वात्साहचर्यं न उपचारः—अविद्यमानस्याप्याश्रयाश्रयिभावस्यारोपः॥८॥

त्र द्रव्यं गुरु स्थूलं स्थिरगंधगुणोल्बणम् ।
ार्थिवं गौरवस्थैर्यसंघातोपचयावहम् ॥ ९ ॥

स०—तत्र तेषु पार्थिवादिषु पंचसु द्रव्येषु मध्ये ार्थिवं द्रव्यं गुर्वादिगुणोत्कटम् । उल्बणशब्देनैतद् ोतयति पार्थिवे द्रव्येऽन्येऽपि गुणाः संति । सर्व-व्याणां पांचभौतिकत्वात् गुर्वादयस्तत्रोत्कटाः । वमाप्यादिषु सर्वं योज्यम् । तथा गौरवाद्यावहं गुरु-ादित्यर्थः ॥ ९ ॥

प०—स्थैर्यं—शरीरदाढर्यं, सङ्घातो—निबिडाव-वत्वम्, उपचयो धातूनां वृद्धिः ॥ ९ ॥

हे०—ननु किमेतत् रसाद्यतिरिक्तं द्रव्यं नामेत्यत ाह—पृथिव्यादौ पृथिव्यादिशब्दाभिलप्यं द्रव्यमित्यर्थः । ाथ द्रव्यभेदाँल्लक्षयाति । तत्र पार्थिवं लक्षयाति—गुर्वादि-ुणोत्कटं, गौरवादिकरं च पार्थिवं द्रव्यं, संघातः ाठिन्यं, उपचयः स्थौल्यं, गुणशब्दो धर्मवाची, उल्ब-ग्रहणं सर्वेषां सर्वधर्मत्वात् ॥ ९ ॥

वशीतगुरुस्निग्धमंदसांद्ररसोल्बणम् ।
ाप्यं स्नेहनविष्यंदक्लेदप्रह्लादबंधकृत् ॥ १० ॥

स०—आप्यं द्रव्यं द्रवादिगुणोल्बणं स्नेहना-देकृत् ॥ १० ॥

प०—आप्यं द्रव्यं—गुरु गुरुगुणयुक्तं, शीतं शीत-र्यं, द्रवरूपं, स्निग्धं रूक्षविपरीतं, मन्दमतीक्ष्णं, सगुणोल्बणम् इत्यादिगुणयुक्तम् ॥ १० ॥

हे०—आप्यं लक्षयति—द्रवादिगुणोत्कटं, स्नेहनादि-रं च द्रव्यमाप्यम् । द्रवसांद्रयोः परस्परविपरीतयोरप्या-वसामान्यादाप्यत्वम् । विष्यंदः स्रोतःस्रावः, ह्लादस्तृप्तिः ॥ १० ॥

रूक्षतीक्ष्णोष्णविशदसूक्ष्मरूपगुणोल्बणम् ।
आग्नेयं दाहभावर्णप्रकाशपचनात्मकम् ॥११॥

स०—आग्नेयं द्रव्यं रूक्षादिगुणोत्कटं दाहा-दिकरम् ॥ ११ ॥

प०—रूक्षादिगुणयुक्तमाग्नेयं द्रव्यम् । तच्च रूप-गुणोल्वणम् अभ्यवहृतं दाहादिकरम् । भा दीप्तिम-त्त्वम्, वर्णश्च । प्रकाश आलोकः । पचनं पाकोऽन्नस्य ॥ ११ ॥

हे०—आग्नेयं लक्षयति—रूक्षादिगुणोत्कटं, दाहादिक-रं च द्रव्यमाग्नेयम् । भाः कांतिः, वर्णो गौरादिः, प्रकाश आलोकः, पचनं पाकः, तदात्मकत्वं कार्यकारणयोरभे-दोपचारात् ॥ ११ ॥

वायव्यं रूक्षविशदं लघुस्पर्शगुणोल्बणम् ।
रौक्ष्यलाघववैशद्यविचारग्लानिकारकम् १२ ॥

स०—वायव्यं रौक्ष्यादिगुणं रौक्ष्यलाघवा-दिकरं च ॥ १२ ॥

प०—वायव्यं द्रव्यं रूक्षादिगुणैर्युक्तं स्पर्शगुणो-ल्वणम् स्पर्शबहुलं तच्च रूक्षतालघुतानैर्मल्योपचय-भ्रमणानि करोतीत्युपयुक्तम् ।

हे०—वायव्यं लक्षयति-रौक्ष्यादिगुणोत्कटं, रौक्ष्यादि-करं च द्रव्यं वायव्यं, विचारो विविधा चेष्टा ॥ १२ ॥

नाभसं सूक्ष्मविशदलघुशब्दगुणोल्बणम् ।
सौषिर्यलाघवकरम् ॥ १३ ॥

स०—नाभसं द्रव्यं सूक्ष्मादिगुणोल्बणं सौषिर्या-दिकरं च ॥ १३ ॥

प०—आकाशात्मकं द्रव्यं रौक्ष्यादिभिर्गुणैर्युक्तम् । शब्दगुणोल्बणं शब्दबहुलान् तच्चोपयुक्तम् । देहे सौषिर्यं सुषिरत्वं रक्तत्वं रक्ततां करोति तथा लाघ-वं लघुत्वम् । ननु वाय्वाकाशयोरमूर्तत्वात् कथं तदात्मकं द्रव्यमनुमानेनोपलभ्यते । नैष दोषः । यत्र रौक्ष्यसौषिर्ये कर्मणि भूयस्त्वेन दृश्यते वाय्वा-काशात्मकमित्युपचारः क्रियते । तथा श्रद्धाशीलस-त्यत्यागादिकर्म दृष्ट्वा सत्पुरुषे देवत्वोपचारः क्रियत इति ।

हे०—नाभसं लक्षयति—सूक्ष्मादिगुणोत्कटं, सौषिर्यादि- च द्रव्यं नाभसम् । सौषिर्यं सरंध्रत्वम् ॥ १३ ॥

**जगत्येवमनौषधम् ।**
**किंचिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः १४**

स०—एवमनेन पंचमहाभूतारब्धेन गुर्वादिगुणयो- द्रव्याणां जगति भुवनेऽस्मिन्ननौषधभूतं न चिद् द्रव्यमस्त्यपि तु सर्वमेव द्रव्यं यत्सिकतापां- दिकं तदौषधं चिकित्सितम् । वशान्नानार्थयोगयोः । श्च योगश्चार्थयोगौ । अर्थः प्रयोजनम् । योगो कः । यथाऽनया युक्त्यौषधमिदं योजितमस्य रोग- विजयाय स्यादनया चास्य रोगस्येति । नानाविधौ र्थयोगौ तयोर्वशात्सामर्थ्यात् सर्वमपि द्रव्यमौषधम् । प्रतीकारहेतुत्वात् ॥ १४ ॥

प०—एवमनेन महाभूतारब्धेन गुर्वादिगुणयोगेन व्याणां जगति संसारेऽस्मिन् नानौषधसम्भूतं ञ्चिद्द्रव्यमुपलभ्यते । किं तर्हि सर्वमेवौषधं, वशा- नार्थयोगयोः अर्थः प्रयोजनं निमित्तं, योगो युक्ति- तना नानाविधं कृत्वैवमेवं यावर्थयोगौ तौ नाना- योगौ तयोरेतयोरर्थयोगयोर्वशात् सामर्थ्यात्, किञ्चिद्द्रव्यमौषधं व्याधिप्रतीकारत्वात् । यथो- धयोर्दोषहरणं भावं कर्त्तुमर्थः प्रयोजनं संपाद- मूर्ध्वदोषहरणे त्वग्निपवनोत्कटं, यद् द्रव्यं तत्तत्र ण समर्थम् । वायोःप्रवहनत्वात् । ऊर्ध्वं ज्वलन- च । अग्नेरेवमूर्ध्वदोषहरणवशात् यदग्निपवनो- टं द्रव्यं तत्रौषधम् । अथो दोषहरणसमर्थमौषधं र्थं सम्पादयितुं पृथिव्युदकभूयिष्ठम् । एवं निमि- शात् कुत्रचित् किञ्चिद्द्रव्यमौषधं न सर्वं सर्वत्र । योगवशात् किञ्चिद्द्रव्यं कुत्रचिदौषधं नैकया या योजितं द्रव्यं सर्वत्र तथैवौषधम् । किं तर्हि युक्त्या योजितं कस्मिन् विकारे द्रव्यमौषधं ापि च कस्मिन्नेव । यथा मदनद्रव्यमनेन नादिविशेषेणान्यविकारमपनुदत्यन्येनान्यमिति न सर्वे । तस्माद्योगवशात्सर्वं द्रव्यमौषधम् १४॥

हे०—द्रव्यमात्रस्यौषधत्वमाह—एवमुक्तप्रकारेण तस्य द्रव्यस्य तत्तद्गुणयोगाज्जगति न किंचिद्द्रव्यम् ,अनौ- विद्यते, सर्वमेव द्रव्यमौषधं कुतः नानार्थयोगवशात् । : प्रयोजनं, योगो योजना, नानाविधावर्थयोगौ तयोः एतदुक्तं भवति । यदेकस्मिन्नर्थे नोपयुज्यते, तदेवान्यस्मि- न्नुपयुज्यते । यदेकेन योगेन नोपयुज्यते, तदेवान्ये- नोपयुज्यते । यथा अत्यंताऽनुपयुक्ता आपश्च विदुग्धाः श्वासकासादौ । यथा अत्यंतापथ्यो माष इंदुरीकृतः स नव- नीतोऽर्दितादौ । औषधद्वैविध्यम् ॥ १४ ॥

अथ किं द्रव्यं किंभूतोत्कटं भवतीत्याह—

**द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्करम् ॥१५॥**
**अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम् ॥**

स०—ऊर्ध्वं गच्छतीत्यूर्ध्वगमम् । खप्रकरणे गमे- रप्युपसंख्यानमिति खः । प्रायो बाहुल्येनोर्ध्वगं द्रव्यम- ग्निपवनाधिकं भवति । यथा मदनफलादि भूयिष्ठं प्रायेण । तथा चाऽग्निसमीरणोत्कटस्याऽप्यधोगा- मित्वं दृष्टम् । यथा हरीतक्यादेः । अचिंत्यप्रभाव- त्वाद्यथा सर्पे विषमयत्वेऽपि तत्फणामणेर्विषघ्नत्वम् । भूमितोयोल्बणं द्रव्यमधोगामि भवति यथा त्रिवृतादि । यत्तु व्यामिश्रात्मकं तुल्यकालमूर्ध्वाधोदोषहरणं तदिह ग्रन्थगौरवभयान्नोक्तमपि मिश्रीभूतोत्कटं द्रव्यं व्यामि- श्रात्मकमिति सामर्थ्यलब्ध एवायमर्थः ॥ १५ ॥

प०—तत्र तेषु द्रव्येषु मध्ये ऊर्ध्वगममूर्ध्वगं द्रव्यं वमनकारि । प्रायेण बाहुल्येनाग्निपवनोत्कटम- ग्निमारुतोत्कटम् । तयोर्हि लाघवमूर्ध्वगतित्वाच्चा- ग्नेर्लघुमारुतस्य । द्रव्यमधोगाम्यधोभागं विरेचनरूपं यत्तद्भूमिगुणाधिकम् । भूम्युदकगुणोत्कटम् । तयोर्हि पृथिव्या गुरुत्वान्निम्नगत्वाच्च तोयस्येति ॥ १५ ॥

हे०—पंचविधे द्रव्ये विभजति । द्विविधमौषधं—शोधनं, शमनं च । शोधनं द्विविधम्—ऊर्ध्वभागमधोभागं च । तत्राग्निपवनोत्कटमूर्ध्वभागं, भूमितोयगुणमधोभागं पारि- शेष्यादाकाशोत्कटं शमनम् । तथा च सुश्रुतः—आकाश- गुणभूयिष्ठं संशमनमिति । गमनं गमः ऊर्ध्वगमोऽस्या- स्तीति ऊर्ध्वं गमम् । प्राय इति भूयिष्ठमिति च व्य- भिचारार्थम् । यथा—चित्रकवदग्निपवनोत्कटायामपि दंत्यां विरेचनत्वं, मृद्वीकावद्भूमितोयगुणाधिकस्यापि मधु- कस्य वमनत्वम् । संग्रहे तु व्यामिश्रात्मकमुभयतोभागं, शमनं तु दोषविपरीतगुणमुक्तं प्राक् । तत्संकरे च यतो बाहुल्येन । तत्संकरे गुणसंकरे, येषां गुणानां बाहुल्यं तैर्निर्णयः । तथा अनिलात्मकं ग्राहि, अनलात्मकं दीप-

नपात्मकम्, उभयात्मकं लेखनं, भूम्युदकात्मकं बृंहणमिति ॥ १५ ॥

**इति द्रव्यं रसान्भेदैरुत्तरत्रोपदेक्ष्यते ॥ १६ ॥**

स०—इति परिसमाप्तौ । द्रव्यं प्रति यद्वक्तव्यं तन्निष्पन्नमित्यर्थः । एवं द्रव्ये निर्दिष्टे रसा निर्देष्टुं युक्ता इत्याह । रसानित्यादि । बहुवक्तव्यत्वादुत्तरत्रानंतरेऽध्याये रसान् भेदैस्त्रिषष्टिसंख्यावच्छिन्नैरुपदेक्ष्यते तन्त्रकृत् ॥ १६ ॥

प०—इतिशब्दः परिसमाप्त्यर्थः । द्रव्यं सद्व्यक्तिवेशात्परिसमाप्तत्वम् । द्रव्यं प्रति यत्किञ्चिद्वक्तव्यं तत्सर्वं निष्पन्नमित्यर्थः । व्यामिश्रात्मकं तु द्रव्यं तुल्यकालमूर्ध्वाधोदेशहरणं यत्तदिहान्यतन्त्रनिर्दिष्टम् । व्यामिश्रभूतोत्कटं व्यामिश्रतात्मकम् । सामर्थ्याल्लभ्यत्वात् ग्रन्थगौरवपरिजिहीर्षया नेह निर्दिष्टम् । यदूर्ध्वगाम्यधोगाम्युभयगामि च यद्द्रव्यं तद्भूतवैपम्यकारणमिति बोद्धव्यम् । उत्कटशब्दनिर्देशाच्छोधनद्रव्यस्यैवमात्मकत्वात् । शमनं यद्द्रव्यं तत्सामान्यकारणान्न दोषशोधनम् । दोषोदीरणं प्रत्युत विषमदोषशमीकरणम् । तथा च सङ्ग्रहः । व्यामिश्रकमुभयतो भागं शमन्तु विपरीतगुणमुक्तं प्राक् । तत्सङ्करे तु यतो बाहुल्येन तथानिलात्मकं ग्राहि अनलात्मकं दीपनपाचनम् । उभयात्मकं लेखनम् । भूम्युदकात्मकं बृंहणम् । एवं द्रव्यं निर्दिश्य तदाश्रिता ये रसा मधुरादयस्तानाह—त्रिषष्टिसंख्यावच्छिन्नरसभेदैः रसानुत्तरत्र रसभेदीयेऽध्याये उपदेक्ष्यते । शास्त्रकारो बहुवक्तव्यत्वात् कथयिष्यति १६

हे०—प्रकरणार्थमुपसंहरति—इति परिसमाप्तौ । क्रमप्राप्तरसस्यानभिधाने हेतुमाह—उत्तरत्र उत्तरस्मिन्नध्याये उपदेक्ष्यते वक्ष्यते । यतोऽसौ बहुभिर्भेदैर्विशिष्टः, बहुभेदत्वेन बहुवक्तव्यत्वात् पृथगध्यायकरणमित्यर्थः ॥ १६ ॥

अथ वीर्यस्य विपाकादिभ्यः प्राधान्यात्तच्चर्चां प्रस्तौति—

**वीर्यं पुनर्वदन्त्येके गुरुस्निग्धहिमं मृदु ।**
**लघुरूक्षोष्णतीक्ष्णं च तदेवं मतमष्टधा ॥ १७ ॥**

स०—द्रव्यमुक्तम् । वीर्यं पुनर्गुर्वादीनष्टौ गुणान् द्रव्याश्रितानिति समाचक्षते । तस्मादेवमनेन प्रकारेण वीर्यमष्टधाऽष्टप्रकारं गुर्वादीनां मतम् ॥ १७ ॥

प०—सम्प्रति वीर्यं वर्त्तनीयमारभ्यते—वीर्यस्य सर्वत्राप्रतिहतगतित्वात् यस्मात्किञ्चिद्द्रव्ये गुणजातं वर्तते तत्सर्वं वीर्यसंज्ञमुच्यते । अन्ये केचिदाचार्या वीर्यमष्टधा वदन्ति कथयन्ति । गुर्वादिगुणेभ्यो यदन्यत्तस्मादेवमनेन प्रकारेण वीर्यमष्टधाऽष्टभिःप्रकारैर्वोचार्यमाणम् । अन्येन प्रकारेणान्यसंख्यावच्छिन्नम् ॥ १७ ॥

हे०—अथ वीर्यं परमतं दर्शयति—एके खारणादिप्रभृतयः । गुर्वादीन् गुणान् वीर्यं च वदंति । एवं च तदष्टधा संमतम् । सुश्रुतस्तु गुरुलघू विहाय विशदपिच्छिलौ पठति । केचिदष्टविधमाहुः—उष्णं, शीतं, स्निग्धं रूक्षं, विशदं, पिच्छिलं, मृदु, तीक्ष्णं चेति ॥ १७ ॥

**चरकस्त्वाह वीर्यं तद्येन या क्रियते क्रिया ।**
**नावीर्यं कुरुते किंचित्सर्वा वीर्यकृता हि सा ॥ १८ ॥**

स०—चरकाचार्यः पुनरेवं वक्ति । येन स्वभावेन या क्रिया क्रियते यत्कर्म निष्पाद्यते तद्वीर्यम् तदेव यावत् किंचिद्गुणजातं द्रव्ये स्थितं तत्सर्वं वीर्यमेव सर्वं वीर्यं करोति । अत एवाह । नावीर्यमित्यादि । यन्न वीर्यं तन्न किंचित्करोति न कांचित्प्यर्थक्रियां निष्पादयति । प्रतिनियतशक्तिपरिष्वक्तत्वात्सर्वभावानाम् । अत एवाह । सर्वेत्यादि । हिशब्दो यस्मादर्थे । यस्मात्सर्वा क्रिया वीर्यकृता वीर्येण जनिता ततो यन्न वीर्यं तन्न किंचित्कुरुते ॥ १८ ॥

प०—चरकमुनिः पुनः वीर्यमाह—पठितिस्म येन कारणतापन्नेन क्रियते निष्पाद्यते । वस्तुजाते तस्य वीर्यवस्तुजाते कर्त्ता तत्तस्य वीर्यवस्तुजातस्य वीर्यमेवं मतं चरकमुनिराह । वीर्यं तु क्रियते येन क्रिया ततो वाक्यादेव । प्रभावो वीर्यं द्रव्यस्य विपाको वीर्यम् । रसो वीर्यं तथा येन केचिद्गुणा द्रव्याश्रिता गुर्वादयस्तत्सर्वं तस्य वीर्यसंज्ञा । अतः प्रभावमुल्लङ्घ्य वीर्यमालब्धवान् वीर्यम् ॥ १८ ॥

हे०—चरकमतं दर्शयति—येन क्रियते तद्वीर्यं, द्रव्यकर्तृके कर्मणि करणभूतमित्यर्थः । कतिविधं तादित्यपेक्षा

यामाह—या क्रियेति। या क्रिया येन क्रियते तस्यां तद्वीर्यं, यावत्यः क्रियास्तावंति वीर्याणीत्यर्थः। कुत इत्याह—नावीर्यमिति । अवीर्यं द्रव्यं न किंचित्कुरुते वीर्यं विना कर्तृत्वं नास्तीत्यर्थः । कुत इत्याह—हि यस्मात्सा क्रिया सर्वापि वीर्यकृता ॥ १८ ॥

**गुर्वादिष्वेव वीर्याख्या तेनान्वर्थेति वर्ण्यते ।**
**समग्रगुणसारेषु शक्त्युत्कर्षविवर्तिषु ।**
**व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १९ ॥**

यतो वीर्यस्यैव करणसामर्थ्यं तेन कारणेन गुर्वादिष्वेवाष्टासु वीर्याख्याऽन्वर्थाऽनुगतार्थेति भण्यते । एवकारोऽवधारणार्थः । गुर्वादिष्वेव वीर्यसंज्ञा न तु रसविपाकप्रभावेषु । किंभूतेषु गुर्वादिषु । समग्रेत्यादि । समग्राश्च ते गुणाश्च तेषु साराश्चिरकालावस्थितयो गुर्वादय एव । तथा च जाठराग्निसंयोगेनाऽपि न मधुरादिरसस्वभावमेते जहति । सर्तेः सुस्थिर इति वञि सारशब्दः । तथाऽन्येभ्यो मंदसांद्रादिभ्यो रसादिभ्यो वा गुणेभ्यो वा गुर्वादयः शक्त्युत्कर्षविवर्तिनः । शक्तेः सामर्थ्यस्योत्कर्ष आधिक्यम् । विशेषेण वर्तो विशेषेण भवनम् । शक्त्युत्कर्षस्य विवर्तः स विद्यते येषां त एवम् । किंच । गुर्वादीनां गुणानां व्यवहाराय व्यवहारार्थम् मुख्यत्वादन्येभ्यो गुणेभ्यो गुर्वादयः प्रधानभूता इत्यर्थः। तथा च गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रय इत्युक्तं न मधुरादयो गुणा इति। तस्माद् गुर्वादीनां गुणानां व्यवहारमुख्यत्वं रसादिभ्यः । तथा बह्वग्रग्रहणाद्बहुग्रहणादग्रग्रहणाच्च बहवो द्रव्यरसादयो गुर्वादिभिर्गृहीता भवंति । तथा चायुर्वेदशास्त्रेषु रसादिभ्यो गुर्वादीनामग्रे ग्रहणं दृष्टम् । यथा वातादिदोषगुणनिरूपणायां गुर्वादीनामेव पूर्वं ग्रहणं न रसादीनाम् । तथा च तत्र रूक्षो लघुरित्याचार्योऽपठद्वाग्वादिलक्षणे । एवं गुर्वादीनामेवाग्रे ग्रहणाद्गुर्वादिष्वेव वीर्याख्याऽन्वर्थाऽनुगतार्थेति भण्यते ॥ १९ ॥

प०—प्रत्याचार्याणां सत्यमेके आचार्याः अष्टौ गुणान् गुर्वादीन् वीर्यं वदन्ति । तेषां विशिष्टशक्तिता वीर्यमित्यभिप्रेतेन वीर्यमात्राश्रयेण, न केवलं गुर्वादय एवाष्टौ गुणा, वीर्यं यावत् यत्किञ्चिद्गुणजातं द्रव्याश्रितं तत्सर्वं वीर्यमिति प्राप्तम् । तस्माद्ये च विशिष्टशक्तियुक्ता अष्टौ गुर्वादयो गुणास्ते वीर्यसंज्ञामासादयन्ति । तस्मादेवमष्टधा वीर्यं द्रव्यस्य तत् ज्ञेयम् । यद्योगात् क्रियते क्रिया । एवं चरकमुनिमतेन यद्द्रव्ये गुणजातादि वर्तते तत्सर्वं तस्य वीर्यम् । वीर्यरहितं यद्वस्तुजातं तन्न किञ्चित्कुरुते कामपि क्रियां न सम्पादयति । हि-शब्दो यस्मादर्थे । यस्मात् सर्वा क्रिया वीर्यकृता वीर्येण क्रियते । यद्येवं सर्वा क्रिया कृता तत् किमर्थमष्टावेव गुणा गुर्वादयो वीर्यमिति, नान्ये गुणा रसादयो वीर्यम् । तैरपि हिताः क्रियाः क्रियन्ते अत आह तेनाचार्येण चरकमुनिना गुर्वादिष्वेवाष्टसु अतिप्रकृष्टशक्तियुक्तेषु अशेषोग्रगुणभूतेषु वीर्याख्या संज्ञा वीर्यसंज्ञा अन्वर्था अनुगतार्था सम्बद्धा लोकप्रसिद्धा इत्येवं वर्ण्यते कथ्यते । समग्राणां गुणानां सारा उत्कृष्टाः समग्रगुणसाराः तेषु, शक्तेरुत्कर्षः शक्त्याधिक्यं प्रकृष्टशक्तिता, विशेषेण वर्तनं विवर्तः, शक्त्युत्कर्षस्य विवर्तः शक्त्युत्कर्षविवर्तः, स विद्यते येषां ते शक्त्युत्कर्षविवर्तिनस्तेषु, व्यवहारो लौकिकः समाचारः शास्त्रीयश्च तत्र मुख्यत्वमेषाम् । तथा लोक एवं वदन् दृश्यते । इदं गुरु, इदं लघु, इदमेवंगुणम् । तथा शास्त्रे पटोः कषायस्तस्माच्च मधुरः परमं गुरुरित्येवं गुर्वादीनां व्यवहाराय मुख्यत्वम् । अन्यच्च । रसादिभ्यो गुणेभ्यस्ते बहवो बहुत्वं तेषां विद्यते, न रसादीनां तथा ग्रहणत्वम् । रसादिभ्यो गुणेभ्यस्ते अग्रे गृहीतास्तथा दोषाणां कफादीनां गुणनिरूपणं यथायथं गुर्वादयो गुणास्तेषां निर्दिष्टाः । "स्निग्धः शीतो गुरुः कफः" इति मधुरो न निर्दिष्टः। "पित्तं सस्नेहतीक्ष्णोष्णं लघु" इति निर्दिष्टं नाम्लमिति ॥१९॥

हे०—नन्वेवं रसादीनामपि वीर्यत्वप्रसंग इत्याह—गुर्वादिष्विति । तेन चरकेण गुर्वादिष्वेव वीर्याख्या वर्ण्यते । कुतः अन्वर्थेति कृत्वा इतिशब्दो हेतौ । यतस्तेषु क्रियमाणा वीर्यसंज्ञा अन्वर्थमेव दर्शयति—समग्रेत्यादि । करणं हि वीर्यं, करणं च साधकतमं, साधकतमत्वं च गुर्वादीनामेव । शक्त्युत्कर्षविवर्तनादुत्कृष्टशक्तित्वात्, व्यवहाराय मुख्यत्वाल्लोके शास्त्रे च मुख्यत्वेन

स्यवह्रियमाणत्वात्, बहुग्रग्रहणाद्बहुगुणगणनायां प्रथम-ग्रहणात् । विपाकेऽपि स्थिरत्वस्य, प्रभावे शक्त्युत्कर्षस्य, मृदुकठिनादावपि व्यवहारमुख्यत्वस्य रसेष्वपि बहुग्रग्रहणस्य दर्शनाच्चतुर्णामुपादानम् ॥ १९ ॥

**अतश्च विपरीतत्वात्संभवत्यपि नैव सा ।**
**विवक्ष्यते रसाद्येषु वीर्यं गुर्वादयो ह्यतः ॥२०॥**

स०—अतोऽस्माच्च कारणकदंबकाद्विपरीतत्वाद्वैपरीत्येन स्थितत्वान्न रसादयो वीर्यम् । तथाहि । रसस्य सारत्वं नास्ति । जाठरानलसंयोगवशेन रसांतरोत्पत्तेः । गुर्वादीनां तु जाठराग्निसंयोगवशेनाऽपि नान्यथाभावः । तथा न रसस्य शक्त्युत्कर्षविवर्तित्वम् । यतो रसस्य गुर्वाद्याहितशक्तेरेव स्वकर्मणि सामर्थ्यम् । व्यवहाराय यथा गुर्वादेर्मुख्यत्वं यथा बहुग्रग्रहणं तथा प्राग्दर्शितम् । प्रभावः सर्वातिशायी द्रव्यस्वभावस्तस्य च क्रियानिर्वर्तनसामान्ये सत्यपि वीर्यसंज्ञा पूर्वोक्ताद्धेतोर्न वर्तते । एवं विपाककर्मणोरपि चिंत्यम् । तस्माद्रसाद्येषु संभवत्यपि विद्यमानाऽप्यसद्रूपेव सा वीर्यसंज्ञा न विवक्ष्यते नोररीक्रियते । आदौ भव आद्यः । दिगादित्वाद्यत् । रस आद्यो येषां प्रभावादीनां त एवं तेषु । वीर्यमित्यादि । हिशब्दो यस्मादर्थे । यत एवं सा वीर्यसंज्ञा संभवत्यपि रसादिषु वैपरीत्यान्न विवक्ष्यतेऽतो गुर्वादय एव वीर्यं न रसादयः ॥ २० ॥

प०—अतो अस्मादिह निर्दिष्टाद्धेतोः समग्रगुणसारादेर्यो विपरीतभावो रसादित्वं तस्माद्विपरीतत्वाद्रसाद्येषु रसविपाकगुणान्तरेषु संहाराय गुर्वादीनां यत एवमतो गुर्वादय एव वीर्यं न रसादयः । सत्यपि क्रियानिवर्तनसामान्ये रसविपाकगुणान्तराणां न वीर्यतया परामर्शः ॥ २० ॥

हे०—एतच्च रसादिषु नास्तीति दर्शयति—**अतश्चेति** । सा वीर्याख्या रसादिषु संभवत्यपि विद्यमानापि न विवक्ष्यते, अनुदरा कन्येतिवत् । क्रियानिर्वर्तनसामान्यात्सत्यपि वीर्यत्वे रसादयो वीर्यत्वेन न व्यवह्रियंत इत्यर्थः । कुतः अतो हेतुचतुष्टयात् विपरीतत्वात् । सिद्धमर्थमपवदति—हि स्फुटमतः कारणाद्गुर्वादय एव वीर्यं, गुर्वादीनामष्टानां योगरूढा वीर्यसंज्ञेति भावः ॥ २० ॥

**उष्णं शीतं द्विधैवाऽन्ये वीर्यमाचक्षतेऽपि च**

स०—अन्य आचार्या उष्णं शीतमिति द्विप्र वीर्यमाचक्षते । एवकारोऽवधारणार्थः । द्विधैव नाष्टधेति । अपिचेति निपातसमुदायो युक्तिसमु तेऽपि सयुक्तिकमेवाहुरित्यर्थः ॥ २१ ॥

प०—उष्णं च शीतं चोष्णशीतमिति द्विविध आचार्या वीर्यमाचक्षते । एवकारोऽत्रावधारणा द्विप्रकारं वीर्यमुष्णं च शीतं च । क्रियते येन क्रि द्रव्येण तदेव तस्य सर्वस्य वीर्यस्यान्तर्भूतत्वात् ।

हे०—पूर्वमताऽपरितोषान्मतांतरं दर्शयति—अन्ये तादयः उष्णं शीतं चेति द्विविधमेव वीर्यमाचक्षते च उक्तमतस्योपपत्तिमाह--अपि च न केवलं मतमात्र युक्तं चेदं पूर्वस्मान्मतादित्यपि चेत्यस्यार्थः ॥ २१ ।

तामेव युक्तिं दर्शयन्नाह—

**नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ।**
**व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचि**

स०—नानास्वभावमपि द्रव्यं स्थावरजंगमाद्यचे चेतनमग्नीषोमौ महाबलावुत्कृष्टशक्ती न जातु कद दतिक्रामति नोल्लंघ्य वर्तते । अवश्यं हि द्रव्यं वि दाग्नेयं किंचित्सौम्यम् । अतः किंचिद्द्रव्यमुष्ण किंचिच्छीतवीर्यम् । तथा च मुनिः । न मत्स्याः सा सहाभ्यवहार्याः । उभयं ह्येतन्मधुरं मधुरं शीतोष्णत्वाद्विरुद्धवीर्यं विरुद्धवीर्यत्वाच्छोणितप्रद येति । अत्र दृष्टांतमाह । व्यक्ताव्यक्तमित्यादि । चाव्यक्तं च व्यक्ताव्यक्तं नानात्मकमपि जगत्त्रै कर्तृ यथा व्यक्तं चाव्यक्तं च नातिक्रामति तथा मग्नीषोमावित्यर्थः । व्यक्तं स्थूलं दृश्यमित्य सांख्यानां तु महदादि व्यक्तमव्यक्तं प्रधानं पुरुषश्च॥

प०—अत्रोपपत्तिमाह—नानात्मकमनेकस्व मपि यदेतज्जगति द्रव्यं तदेवाग्नीषोमौ महाब त्कृष्टशक्ती, नातिक्रामति न तावुल्लङ्घ्य वर्तते त्मकत्वात् । कथं तावग्नीषोमौ नानात्मकं द्रव्य न्नातिक्रामत्युपसंहारणार्थमिदमाह-यथा नाना मपि जगद्व्यक्ताव्यक्तं प्रसविधार्मि नातिक्राम

तेनैतन्नानात्मकं स्थावरं जङ्गमादिरूपतया व्यवस्थितं तावग्नीषोमौ नातिक्रामति । एवं किञ्चिद्द्रव्यमाग्नेयं किञ्चिच्च शीतवीर्यमिति ॥ २२ ॥

हे०—नानात्मकमपि पृथिव्याद्यनेककारणमपि द्रव्यमग्नीषोमौ जातुचित्कदाचिदपि नातिक्रामति, तयोर्वशे वर्तते किंचिदाग्नेयत्वादुष्णं, किंचित्सौम्यत्वाच्छीतमिति द्विधैव गतिरित्यर्थः । कुतः यतस्तौ महाबलौ, अतएव सर्वान् गुणान् गुर्वादयोऽभिभवंति । गुर्वादीनप्युष्णशीतौ अत्र दृष्टांतमाह—यथा विश्वं कर्तृ व्यक्ताव्यक्ताख्य भेदद्वयं नातिक्रामति ॥ २२ ॥

**तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकिताः ।**
**शमं च वातकफयोः करोति शिशिरं पुनः ।**
**ह्लादनं जीवनं स्तंभं प्रसादं रक्तपित्तयोः॥२३॥**

स०—तत्र तयोरुष्णशीतयोर्मध्य उष्णमुष्णवीर्यं भ्रमादीन् करोति । आशुपाकितां शीघ्रपाकित्वम् । शिशिरं शीतवीर्यं तु ह्लादनादीन्करोति ॥ २३ ॥

प०—तयोर्लक्षणमाह—तत्र तयोरुष्णशीतवीर्ययोर्मध्ये यदुष्णवीर्यं तद्भ्रमादीन् करोति । आशुपाकिता-शीघ्रं पचनमन्नस्य । वातकफयोः शमं शान्तिं करोति। करोतीत्यनुवर्तते । द्रव्यं शिशिरं शीतवीर्यम्। ह्लादनं ह्लादयति सुखयतीति ह्लादनम् । जीवयत्योजो वर्धयतीति जीवनम् । स्तम्भयतीति स्तम्भनम् ॥ २३ ॥

हे०—उष्णं लक्षयति--आशुपाकिता शीघ्रपाकः । शीतं लक्षयति--यत् ह्लादनादीन् करोति तच्छीतवीर्यं, ह्लादनं निर्वृत्तिः, जीवनं--मूर्च्छापनयनादिभिः प्राणधारणं, स्तंभनं-स्वेदापनयनं, रक्तपित्तयोः—प्रसादं निर्मलत्वम् ॥ २३ ॥

वीर्यादनंतरं विपाकं लक्षयति—

**जाठरेणाऽग्निना योगाद्यदुदेति रसांतरम् ।**
**रसानां परिणामांते स विपाक इति स्मृतः ॥**

स०—जाठरेणौदर्येणाऽग्निना योगात् संश्लेषाद्यद्रसानां परिणामांते जरणनिष्ठाकाले रसांतरं रसविशेष उत्पद्यते स विपाक इति स्मृतो मुनिभिः कथितः ॥ २४ ॥

प०—विपाकलक्षणमाह—जाठरेणोदर्येणाग्निना वह्निना योगात् संश्लेषात् यदुदेति यदुद्गच्छति रसान्तरमन्यरसता । रसानां मधुरादीनां परिणामान्ते पाककर्मनिष्ठायां भोजनस्य मधुराम्लकटुकावस्थास्ववसाने यो जायते स विपाक इति स्मृतो मुनिभिः। यथा मधुरस्य मधुरो विशिष्टः स विपाकः कथितः शास्त्रविद्भिः ॥ २४ ॥

हे०—अथ विपाकः । तत्र विपाकं लक्षयति—यो रस उत्पद्यते स विपाकः । ये तु परिणामात्प्रागेव उत्पद्यंते इति तेषां रसत्वमेव ॥ २४ ॥

**स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।**
**तिक्तोषणकषायाणां विपाकः प्रायशः कटुः॥२५॥**

---

( १ ) अत्र रसानां परिणामा मधुराम्लकटुरूपास्त्रयोऽवस्थापाकाः षड्रसस्यैवान्नस्यामाशयादिस्थानसंबन्धमहिम्ना जायन्ते, ते च **चरके** ग्रहणीचिकित्सिते " अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" इत्यादिनोक्ता अनुसन्धेयाः तेषामन्तेऽवसाने पुनर्जाठराग्निसंयोगे सति यद्रसान्तरं रसविशेष उदेति स विपाक इत्यर्थः । इह केचिदाचक्षते—प्रतिरसं पाकः-अम्लोऽम्लस्य, मधुरो मधुरस्य, लवणो लवणस्य, कटुक कटुकस्य, तिक्तस्तिक्तस्य, कषायः कषायस्येति षडेव विपाकाः, किमत्र प्रमाणमिति चेत्, उच्यते, यथा—क्षीरमतिपच्यमानमपि मधुरमेव स्यात्, यथा वा शालियवादय उप्ताः प्ररूढाः फलिताश्च शाल्यादिस्वरूपा एव भवन्ति तथा मधुरादयोऽपि निष्ठापाकेऽपि मधुरादिस्वरूपा एव भवितुमर्हन्तीति । उक्तं च—"उप्ताः षष्टिकमाषाद्या बाह्यपक्काश्च षड्रसाः । यान्ति नान्यत्वमित्येवं पाकः प्रतिरसं भवेत्"इति । अन्ये तु ब्रुवते—रसा द्विविधा बलवन्तोऽबलवन्तश्च, बलवत्त्वं च व्यक्तत्वेन मात्राबाहुल्येन वा, अबलवत्वं पुनरेतद्विपर्ययेण, तत्राल्पतयाऽबलवन्तो रसा बलवतां वशमायान्तीति, तेन निष्ठापाके बलवता रसेन दुर्बलरसाभिभवान्न रसप्रतिनियमेन मधुरस्य मधुर एव पाकोऽम्लस्य चाम्ल एवेत्यादि, प्रतिनियमाभावाच्चानवस्थितः पाक इति । अनियतत्वपक्षेऽपि षट्कत्वमेव, कदाचित् कस्यचित् संभवादिति । उक्तं च-"बहवोऽभिभवन्त्यल्पान् बहिर्मिश्रीकृता रसाः । तेनानिश्चितमेवैके पाकमाहुर्मनीषिणः"—इति । अन्ये तु वातादिभ्यो दोषेभ्य एव त्रीन्पाकानिच्छन्ति—कफात् वातकफाच्च मधुरः,कफपित्तादम्लः,वातात् पित्तात् वातपित्ताच्च कटुक इति । तदुक्तम्—"कफात् वातकफात् स्वादुरम्लः पित्तकफोद्भवः । दोषैस्त्रयोऽनिलात् पित्तात् वातपित्तात् कटुर्मतः"—इति । तदेतन्मतत्रयं प्रमाणशून्यत्वादुपेक्षणीयमेव । किंच प्रतिरसं रससदृशः पाकस्तथा बलव-

**स०**—स्वादुर्मधुरो गुडादिः पटुर्लवणः सैंधवादिर्मधुरं कृत्वा पच्यते रस इति संबन्धः । मधुरमिति

क्रियाविशेषणत्वान्नपुंसकलिंगम् । स्वादुः स्वादुवि-पाको लवणोऽपि स्वादुविपाक इत्यर्थः । अम्लो रसो

---

त्पराधीनता च पाकस्य रसद्वारा प्रतिपाद्यमानकार्येणैव लभ्यते, तेनैतत् पक्षद्वयमपि न निष्ठापाके चिन्तनीयं,रसस्वरूपनिरूपणेनैवोक्तार्थत्वात् । दोषावस्थाजन्यश्च पाक उपपादकहेत्वभावादागमशून्यत्वाच्च प्रेक्षावद्भिरुपेक्षणीय इति। **चरकेण** तु त्रय एव विपाका अङ्गीकृताः कट्वम्लमधुरभेदेन । अतस्तद्वचनमुपन्यस्यते--"कटुतिक्तकषायाणां विपाकः प्रायशः कटुः । अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा" इति।प्रायश इति वचनात् पिप्पली कुलत्थादीनां रसाननुगुणपाकतां दर्शयति । पाकस्तु तेजःसंयोगरूपो रसेषु न संभवतीति कट्वादिशब्दैस्तदाधारद्रव्याण्युच्यन्ते । एतेन यत्कैश्चिदुच्यते—अवस्थापाकावसाने षड्रसस्यैवान्नस्य कटुरसत्वेन तदानीं तिक्तादिरसानामभावात्तेषां विपाको नोपपद्यत इति तदप्यपास्तं, तिक्तादिरसानामभावेऽपि तदाश्रयद्रव्यस्य विद्यमानत्वादिति । वस्तुतस्तु अवस्थापाकत्रयेण तत्तदामाशयादिस्थानमहिम्ना मधुराम्लकटुरसा उद्भूताः परं क्रियन्ते, नतु सर्वथा प्राकृतरसाभिभवः। अन्यथाऽवस्थापाकेन प्राकृतानां मधुरादिरसानां सर्वथा अप्राकृतत्वे तेषां कफादिजनकत्वाभिधानं निरवकाशं स्यादिति । ननु **चरके** 'अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः' इत्यादिना षण्णामेव रसानामविशेषेणावस्थापाकवशात् कफादिजनकत्वमुक्तं, ततश्चात्र रसविशेषाणामेव दोषविशेषजनकत्वमुक्तं तथा "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः"—इत्यादिना च यो विपाक उक्तस्तत् सर्वं विरुध्यते, अवस्थापाकेनैव बाधितत्वादिति । नैवं नह्यवस्थापाकोऽयं रसस्वभावं निष्ठापाकं बाधते, किन्त्ववस्थायां स्वकार्य्यं करोति, तेन रसादयोऽपि स्वकार्य्यं कुर्वन्ति, अवस्थापाकोऽपि स्वीयं कार्यं करोति, यथा--मधुरतिक्ताद्यनेकरसे उपयुक्ते मधुरोऽपि स्वकार्यं करोति; तिक्तादयश्च स्वकार्य्यं कुर्वन्ति, अयं तु विशेषो यदि मधुराख्यस्यावस्थापाकस्य मधुरादयः श्लेष्मजनका रसा अनुगुणा भवन्ति, तदा स बहुश्लेष्माणं जनयति । यदा तु विपरीतकटुकादिपरिगृहीतो भवति, तदा स्तोकमात्रं कफं जनयति । एवं पित्तजनकावस्थापाकेऽपि वाच्यम् । "कटुतिक्तकषायाणाम्" इत्यादिनोक्तश्च निष्ठापाको रसमलविवेकसमकालो भिन्नकाल एवावस्थापाकैः समामिति न विरोधः । स च भिन्नकालोऽप्यवस्थापाकजन्यदोषानुगुणतया अननुगुणतया वाऽवस्थापाकाहितदोषाणां वर्धनं क्षपणं वा करोतीति निष्ठापाकाभिधानं शास्त्रे प्रयोजनवदेव । अन्ये तु ब्रुवते न तावत्षड्रसादप्यन्नात् सामान्येनावस्थापाकेऽपि कफोत्पत्तिः किन्तु षड्रस एवान्ने मधुरो य आहारांशः स उद्भूतः सन् कफं जनयति, तथा पित्तदोषकोपको य आहारभागस्तस्माद्विदाहावस्थायामुद्भूतादम्लरसात् पित्तमुत्पद्यते, एवं वायुरपि वायुजन-

काहारांशात् कटुतावस्थायां भवतीति। एतच्च न संगतम् "अन्नस्य भुक्तमात्रस्य इत्यादि ग्रन्थविरोधात्, यतोऽत्र षड्रसस्यैवान्नस्य सामान्येनावस्थापाकात् कफादिजनकत्वं दर्शितं,नतु कस्य-चिदाहारांशस्येति । यदि पुनः षड्रसाहारगतो यः श्लेष्म-जनको भागः स एव स्थानमहिम्नोद्भूतः सन्, सर्वमेवाहार-मवस्थापाकसमये मधुरीकृत्य कफं जनयतीत्युच्यते, तद-ऽनुमतमेव । अन्ये त्वाहुः—यत् नाग्नस्याग्निसंयोगान्मधुरा[...]-स्थितं भवति, किन्तु कफादिस्थानेषु मनुष्याणां स्वभावादेव मधुरादयो रसास्तिष्ठन्ति, ते नाम स्वस्वभावं नीत्वा कफा-दीन् जनयन्ति । उक्तं हि **तन्त्रान्तरे** "मधुरो हृदयादूर्ध्वं रसः कोष्ठे व्यवस्थितः ॥ ततः संवर्धते श्लेष्मा शरीरबल-वर्धनः । नाभिहृदयमध्ये हि रसस्त्वम्लो व्यवस्थितः॥ स्वभा-वेन मनुष्याणां तत्र पित्तं विवर्धते । अधो नाभ्यास्तु सर्वेषां कटुकोऽवस्थितो रसः ॥ प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्धते-ऽनिलः । तस्माद्विपाकस्त्रिविधो रसानां नात्र संशयः"—इति एतच्च तन्त्रान्तरं श्लेष्मपित्तगतमधुराम्लरसानुस्वाभाविक[...] रसाभिप्रायेण वर्णनीयम् । ते च कफादिगता रसा अस्मा[...] मप्यग्न्याशयपाकसहकारितयाऽनुमता एवेति । तस्मा[...] थोक्तमेव एतार्थो न्याय्य इति । अयं च विपाकाख्यो (रसो) न रसनेन्द्रियग्राह्यः, किन्तु तत्तत्कार्येणैवानुमीयते, यथा क[...] रसाया उष्णवीर्य्याया अपि शुण्ठ्या वृष्यत्वे न मधु[...] पाकोऽनुमीयते । तथा लवणस्य सृष्टविण्मूत्रत्वेन मधुरः पा[...] उन्नीयते, तथा तिक्तकषाययोर्बद्धविण्मूत्रतया कटुपाक उ[...] यत इति । ननु लवणस्य मधुरपाकित्वे पित्तरक्तादिकर्तृत्वा-नुपपन्नं, तथा तिक्तकषाययोः कटुपाकित्वे च पित्तहन्तृत्व-मनुपपन्नम् । नैवं सत्यपि लवणस्य मधुरपाकित्वे तत्र लव[...] उष्णवीर्यं यदस्ति तेन तस्य पित्तरक्तादिकारकत्वं, वि[...] कस्तु तत्र पित्तरक्तकरणलक्षणे कार्ये बाधितोऽपि सृ[...] विण्मूत्रादिलक्षणेन लक्ष्यत एव, तथा तिक्तकषाययोर[...] कटुविपाको बलवता शीतवीर्येण बाधितत्वान्न पित्तजनक[...] बद्धविण्मूत्रतया तु लक्ष्यत एव । एतेन यदुच्यते—लवणादि[...] विपाको यदि रसवीर्य्याभ्यां बाधितः स्वकार्यकरो न स्यात् तत् किं तेनोपदेशेनेति तन्निरस्तं भवति, यतोऽस्त्येव सृ[...] विण्मूत्रतादि तत्कार्यमिति । अन्ये त्वेतद्दोषभयात् लवणस्त[...] इत्यत्र तथाशब्देन विप्रकृष्टमम्लमाकृष्य लवणोऽ[...] पच्यत इति व्याख्यानयन्ति । तन्न "कट्वादीनां कटुविपा[...] अम्लोऽम्लस्य, शेषयोर्मधुरः"—इति जतुकर्णविरोधात् । [...] त्रय एव विपाकाः कथं भवन्ति, तिक्तादयोऽपि कुतो न [...] रिति वाच्यम् , भूतस्वभावस्यापर्यनुयोज्यत्वात् । ननु [...] रसविपरीतः पाको यथा—लवणस्य मधुरः, तिक्तक[...]

दधिकांजिकादिरम्लं पच्यतेऽम्लविपाको भवति तिक्तो-
षणकषायाणां प्रायशः कटुर्विपाको भवति । प्रायशो-
ग्रहणं सर्वत्राऽपि योजनीयम्। तेन व्रीहिस्थो मधुरो
रसोऽम्लं पच्यत इत्युपपन्नम्। तथा चोक्तम् । स्वादु-
रम्लविपाकोऽन्यो व्रीहिरिति। तथा हरीतक्या भूय-
स्त्वेन यः कषायो रसः स मधुरमेव पच्यते । तथा
कटुको रसः शुंठयार्द्रकपिप्पल्यादिस्थो मधुरं पच्यते ।
तथा चोक्तम्। कषाया मधुरा पाक इति । तथा।
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबंधनुत्। रुच्यं लघु
स्वादुपाकमिति । तद्वदार्द्रकमपीति। तथा। श्लेष्मला
स्वादुशीतार्द्रेत्यारभ्य यावत्स्वादुपाकेति। अत्र केचि-
दाहुः। तिक्तकषाययोरेव कटुविपाकतया पित्तकर्तृत्व-
मापद्यत इति। तदेतदसत्। शीतवीर्यत्वेनैतयोः पित्त-
हंतृत्वात्। वीर्यं हि रसविपाकौ विजयते। वक्ष्यति
हि। रसं विपाकस्तौ वीर्यमिति॥ २९ ॥

प०—अत आह—तिक्तोषणकषायाणां प्रायशः
कटुर्विपाकः। प्रायोग्रहणेन क्वचिद्व्यभिचारं दर्श-
यति। व्रीहिस्थो मधुरो रसोऽम्लं पच्यते। तथा
स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुरित्येवं
शुण्ठ्यार्द्रकपिप्पल्यादिष्वध्याहार्यम्।तथा च सङ्ग्रहः-
यत्स्वादुर्व्रीहिरम्लत्वं नचाम्लत्वमम्लमपि दाडिमम्।
याति तैलं च कटुतां कटुकापि न पिप्पली।
एवं व्रीहिर्मधुरोऽप्यम्लं पच्यते नचाम्लमऽपि। तैलं
मधुरमपि कटुकं पच्यते, कटुकापि पिप्पली मधुरं
पच्यते। इत्येवं दर्शनार्थं प्रायोग्रहणं कृतम्॥ २५॥

हे०-विपाकत्रैविध्यमाह-स्वादुर्लवणश्च मधुरं पच्यते। पक्वो
मधुरत्वं याति। मधुरम् इति क्रियाविशेषणम्। पच्यत इति
कर्मकर्तर्यात्मनेपदम्। एवमम्लो रसोऽम्लं पच्यते। तिक्ता-
दीनां त्रयाणां कटुको विपाकः।मधुररसस्यापि व्रीहेर्विपाके-
ऽम्लत्वाल्लवणस्यापि सौवर्चलस्य कटुविपाकत्वात् अम्लाति-
क्तोषणानामपि दाडिमपटोलपिप्पलीनां मधुरत्वात्कषाय-
स्यापि कुलत्थस्याम्लत्वात्प्रायश इत्युक्तं मतान्तरसंग्रहार्थं
च तत्र द्वौ विपाकाविति। सुश्रुतः-"द्रव्येषु पच्यमानेषु
येष्वंबुपृथिवीगुणाः । निवर्ततेऽधिकास्तत्र पाको मधुर
इष्यते ॥ तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु।

---

योश्च कटुः, स उच्यतां, यस्तु समानगुणो मधुरस्य मधुरः,
अम्लस्याम्लः, कटुकस्य कटुकः, तत्कथनेन किं प्रयोजनं,
यतो रसगुणैरेव तत्र विपाकगुणोऽपि ज्ञास्यते । नैवं,
लवणादिवद्विसदृशरसान्तरोत्पादशङ्कानिरासार्थं तत्रानुगु-
णोऽपि विपाको वक्तव्य एव । तथा यत्र समानगुणो
विपाकस्तत्र बलवत्कार्यं भवति, विपर्यये तु दुर्बलमिति
ज्ञेयम्। **सुश्रुतेन** द्विविध एव विपाकोऽङ्गीकृतः मधुरः कटुक-
श्चेति, द्वैविध्ये च भूतानां गुरुलाघवेन द्वैविध्यमेव हेतुः,
यदुक्तं तेनैव-"तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति
गुणसधर्म्यात् गुरुता लघुता च, तत्र पृथिव्यापश्च गुर्व्यः,
शेषाणि लघूनि, तस्माद्द्विविध एव विपाको भवति-इति।
तत्रापि **सुश्रुत**मते यद्यप्यम्ललवणौ मधुरविपाकौ तथाऽपि
तयोर्वातहरत्वे सृष्टविण्मूत्रतायां च मधुरकार्यकरत्वं, न पुनः
पित्तहरत्वे, तथा तिक्तकषाययोः कटुविपाकयोरपि वात-
कर्तृत्वे बद्धविण्मूत्रतायां च कटुकार्यकरत्वं, न पुनः पित्त-
कर्तृत्वे, अचिन्त्यत्वात् प्रभावस्य । एतदेवोक्तं **माधवे**नापि-
स्वाद्वादीनां स्वादुपाकः सुश्रुताचार्यसंमतः। तत्कथं पित्त-
जननौ स्यातामम्लपटू रसौ। कटुपाकौ कथं पित्तनाशनौ
तिक्ततुवरौ" इति। सिद्धान्तेऽपि-"अम्लपट्वोः फलं विद्यात्
स्वादुपाकः कटुः पुनः। कषायतिक्तयोरित्थं सुश्रुताचार्य-
संमतः" इति। ननु "पञ्चभूतात्मके देहे आहारः पाञ्चभौ-
तिकः। विपक्वः पञ्चधा सम्यक् स्वान्गुणानभिवर्धयेत् "
इत्यनेन पञ्चधाऽपि विपाकात्तेनैवोक्तः,तत्कथं न विरोध इति-
चेत्, नैवं उपाधिभेदेन विरोधाभावात्, तत्र हि भूतभेद-
मवलम्ब्य पञ्चधात्वम्, अत्र तु लाघवगौरवरूपं भूतगुणद्वै-
विध्यमाश्रित्य द्वैविध्यमुक्तमिति न विरोधः, यथा पञ्चभूता-
त्मकत्वेऽपि द्रव्याणां सौम्याग्नेयत्वाद्द्वैविध्यमिति । यत्पुनः
**सुश्रुते**नाम्लपाको न मन्यते **तच्चरक**मतानुयायिनो न सहन्ते,
यतोऽम्लपाकतयैव व्रीहिकुलत्थादीनां पित्तकर्तृत्वमुप-
पद्यते। अथ मन्यसे--व्रीह्यादेरुष्णवीर्यत्वेन तत्र पित्तकर्तृत्वं
तदसत्, मधुररसस्य व्रीहेस्तन्मते मधुरविपाकस्योष्णवीर्यता-
यामपि सत्यां न पित्तकर्तृत्वमुपपद्यते रसविपाकाभ्यामेकस्य
वीर्यस्य बाधनीयत्वात्, किंचाम्लपाकत्वात् व्रीह्यादेः पित्त-
मम्लगुणमुत्पद्यते, यदि तूष्णवीर्यताकृतं स्यात्, तदा कटु-
गुणभूयिष्ठं पित्तं स्यात्, दृश्यते च-व्रीहिभक्षणादम्लोद्गारादिना-
ऽम्लगुणभूयिष्ठतैवेति, किंच पृथिवीसोमगुणातिरेकान्म-
धुरः पाको भवति, वाय्वग्न्याकाशातिरेकाच्च कटुर्भवति,
इति पक्षे यदा व्यामिश्रगुणातिरेको भवति, तदा सोमा-
ग्न्यात्मकस्याम्लस्योत्पादः कथं प्रतिक्षेपणीयः। अथवा तन्त्र-
**कारयोः** किमनयोरनेन वचनमात्राविरोधेन कर्तव्यं, यतो
यदम्लपाकं **चरको** ब्रूते तत् **सुश्रुतेन** वीर्योष्णमिति कृत्वा
समाधीयते, अनेन न कश्चिद्द्रव्यगुणे विरोधः, यत्तु **सुश्रुते**-
ऽम्लपाकनिरासार्थं दूषणमुच्यते—"पित्तं हि विदग्धमम्ल-
तामुपैति"—इत्यादिना तदनभ्युपगमादेव निरस्तमिति।

नेवर्ततेऽधिकारस्तत्र पाकः कटुक इष्यते ॥'' पराशरस्तु तिक्तकषाययोर्मधुरपाकात्पाकास्त्रयो रसानाम्, अम्लोऽम्लं च्यते, कटुकः कटुकं, चत्वारोऽन्ये मधुरं, संसृष्टरसास्तु संसृष्टम्, कटुतिक्तकषायाणां कटुको येषां विपाक इति क्षः। तेषां पित्तविघाते तिक्तकषायौ कथं भवत इति। ोष्ठा पाकस्तु संग्रहे निरस्तः—''यथा रसं जगुः पाकान् ट् केचित्तदसांप्रतम्। यत्स्वादुर्व्रीहिरम्लत्वं न चाम्लमपि ाडिमम् ॥ याति तैलं च कटुतां कटुकापि न पिप्पली। था रसत्वे पाकानां न स्यादेवं विपर्ययः॥'' इति ॥२५॥

**रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाशुभम्।**
**किंचिद्रसेन कुरुते कर्म पाकेन वाऽपरम् ॥**
**गुणांतरेण वीर्येण प्रभावेणैव किंचन ॥ २६ ॥**

स०—रसैर्जिह्वावैषयिकैर्मधुराम्लकटुकैर्विपाककालो-लभ्यो मधुराम्लकटुकलक्षणो यो रसो भवत्यसौ तुल्यफलः। तुल्यं सदृशं फलं यस्य स तुल्यफलः। तदुक्तं भवति। अभ्यवहृतस्य मधुररसस्य जाठराग्नि-योगवशाद्रसांतरं फलतया निष्पन्नं तद्रसैः सदृशम्। फलग्रहणेनैतत्प्रतिपादयति। फलोपममेव वृष्यादिलक्ष-णकार्यसदृशं न तु कुसुमोपमं देहाह्लादनादिलक्षण-कार्यमिति। एवमम्लादीनामपि व्याख्येयम्। तत्रेत्या-दि। तेषु रसवीर्यविपाकादिषु मध्ये द्रव्यं किंचिच्छु-भाशुभं सदसत्कर्म रसेन कुरुते। यथा। मधु कषाय-त्वेन पित्तं शमयति। किंचिद्विपाकेन। यथा। तदेव मधु कटुविपाकतया कफं हंति। किंचन द्रव्यं गुणांतरेणाऽन्योन्यगुणविकृतत्वाद्रसविपाकतो यः गुणां-तरो गुर्वादिस्तेन। यथा। अम्लं कांजिकं कफं शम-यति। रौक्ष्यात्। किंचन वीर्येण। यथा कषायतिक्तं महत्पंचमूलं वातं जयति नतु पित्तमुष्णवीर्यत्वात्। किंचन द्रव्यं प्रभावेणैव शुभाशुभं कर्म कुरुते। यथा। अम्लोष्णा सुरा क्षीरं वर्धयति ॥ २६ ॥

प०—असौ विपाकाख्यो रसो रसै रसनाग्रैर्जिह्वा-विशेषिकैर्मधुराम्लकटुकलक्षणैस्तुल्यफलस्तस्योति। एवमास्वाद्यमानस्य मधुरस्य रसस्य देहाह्लादनादि यत्कार्यं फलोपमं तत्तस्य मधुरेण रसेन तुल्यमेव। मधुराम्लकटुकानां गुणास्ते विज्ञेयाः। ये मधुरा-म्लकटुकानां रसानां रसभेदीयेऽध्याये प्रोच्यन्ते कर्माणि मधुरो रसः। आजन्मसात्म्यात् कुरुते धातूनां प्रवरं बलमित्यादिकम्। तत्रेति निर्धारणे। तत्र रसवीर्यविपाके गुणप्रभावेषु मध्ये यद् द्रव्यं किञ्चिच्छुभाशुभं सदसत् कर्म रसेन कुरुते। अपरं शुभाशुभं कर्म वीर्येण। अपरं शुभाशुभं कर्म प्रभा-वेण कुरुते। तथा शुभाशुभं कर्म विपाकेन कुरुते। किञ्चिद्गुणान्तर्येण कुरुते। तच्च सङ्ग्रहे सुविस्तरं कृत्वा व्याख्यातम्। यथा मदिरा—मधुरं श्लेष्माणं शमयति तथा तैलं कटुपाकतयैव बद्धविण्मूत्रम्। अम्लकाञ्जिकं कफं जनयति रूक्षोष्णत्वात्। कपित्थं तु रौक्ष्यात् कफं जयति, पित्तं च शीतवीर्यत्वात्। आमलकं-शीतवीर्यत्वात् स्वादुपाकतया पित्तं जयति कफं रौक्ष्याल्लाघवाच्च। शैत्यरौक्ष्यलाघवैस्तु न वातम्। लवणं सैन्धवं स्वादुपाकतया पित्तं जयति लाघवात्, कफं कटुकात्। शुण्ठी स्नेहोष्णा स्वादुपाकैव वातं क्षपयति। पिप्पली च लशुनो स्नेहौष्ण्यगौरवैः, पलाण्डुश्च स्नेहगौरवाभ्यां जयति श्लेष्माणम्। कषायतिक्तं महत्पञ्चमूलं वातं जयति,न तु पित्तमुष्ण-वीर्यत्वात्। कषायस्य कुलत्थोष्णपाकतयोचित्येन तन्निर्देशदर्शनमात्रमुक्तम् ॥ २६ ॥

हे०-त्रयाणां पाकानां लक्षणान्याह-असौ त्रिविधो विपाकः यथास्वं रसैर्मधुराम्लकटुकैस्तुल्यफलस्तुल्यकार्यो ज्ञेयः। मधुरस्य रसस्य कार्यं दृष्ट्वा मधुरपाको लक्षणीयः। एवमम्लस्याम्लः, कटुकस्य कटुकः। द्रव्यादीनां पृथक् प्रयोजकत्वमाह—गुणांतरेण रसाद्व्यतिरिक्तेन गुर्वादिना गुणेन, एतदेव रसादीनामपि गुणत्वं ज्ञापयति। तेन 'पलांडुस्तद्गुणैर्न्यून' इत्यादिप्रयोगा उपपन्नाः। प्रभावेणा-त्मनैव द्रव्यस्यात्मा प्रभावः। तथाच सुश्रुतः—''तद्द्रव्य-मात्मना किंचित्किंचिद्वीर्येण सेवितम्। किंचिद्रसविपाका-भ्यां दोषं हंति करोति च॥''इति। शुभं दोषशमनं कर्म, अशुभं दोषकोपनं, किंचिदपरं किंचनेति त्रयं कर्तृकर्म-विशेषणम्। यदा बहूनि द्रव्याणि एकमेव कर्म कुर्वंति तदा कर्तृविशेषणं, यदैकमेव द्रव्यं बहूनि कर्माणि तदा कर्म विशेषणम्। एतच्चोदाहृतं संग्रहे—तत्र यन्मधुरं रसविपा-कयोः शीतवीर्यं च द्रव्यं, यच्चाम्लं तयोरुष्णवीर्यं च। यद्वा-- कटुकं तेषां यथास्वं रसादिभ्यः प्रायोगुणान् दोषकोपनत्वं शमनत्वं च विद्यात्। तद्यथा--क्षीरमदिरामरिचादीनां रसादिसंकरे त्वन्यथात्वम्। यथा मधु मधुरं श्लेष्माणं शमयति कटुविपाकितया सकषायत्वाद्रौक्ष्याच्च, वातं

जनयति शीतवीर्यत्वाच्च । तथा यवोऽपि आनूपौदकपि-
शितं पित्तं करोत्युष्णवीर्यत्वात् । तथा तैलं कटुविपाकि-
तया च विपाकत एव बद्धविण्मूत्रम् । अम्लं कांजिकं कफं
जयति तीक्ष्णोष्णत्वात् । शैत्यरौक्ष्यलाघवैस्तु न वातम् ।
लवणं सैंधवं स्वादुपाकतया पित्तं जयति, लाघवात्कफम् ।
कटुका शुंठी स्नेहौष्ण्यस्वादुपाकतया वातं जयति, पिप्पली
। । लशुनोऽपि स्नेहौष्ण्यगौरवैः पलांडुश्च स तु स्नेहगौर-
भ्यां जनयति श्लेष्माणम् । वृद्धं च मूलकं स्वादुपाकतया-
त्कानि व्याघ्रीविशालार्कागुरूण्युष्णवीर्यत्वात्पित्तं जनयंति ।
पित्थं तु रौक्ष्यात्कफं, पित्तं च शीतवीर्यत्वात् । आमलकं
सं शीतवीर्यत्वात् स्वादुपाकितया च, कफं रौक्ष्याल्लाघ-
च्च । कषायतिक्तं पंचमहामूलं वातं जयति रूक्षोष्णत्वात् ।
तु पित्तमुष्णवीर्यत्वात् । कषायाः कुलत्थाश्चाम्लपाकतया
ति एतन्निदर्शनमात्रमुक्तमिति ॥ २६ ॥

ननु गुरूष्णाम्लमधुरादिगुणानां रसादीनां विरोधः।
तेषां कार्यनिष्पत्तौ समशक्तित्वं न वेत्याशंकानि-
त्यर्थमाह—

**यद्द्रव्ये रसादीनां बलवत्त्वेन वर्तते ।**
**भिभूयेतरांस्तत्तत्कारणत्वं प्रपद्यते ॥ २७ ॥**

स०—रसादीनां रसवीर्यविपाकप्रभावानां मध्ये
रसादिवस्तु रसो वीर्यं वा विपाको वा प्रभावो वा
त्वत्त्वेन बलिष्ठतया द्रव्यं वर्ततेऽवतिष्ठते तत्तद्वस्तु-
तमितरानबलिष्ठानभिभूय विफलीकृत्य कारणत्वं
द्यते । कर्मकरणे कारणतामासादयतीत्यर्थः ॥२७॥

प०-यद्यद्रसादि वस्तुजातं रसादीनां रसवीर्यावि-
कप्रभावाणामन्यतमत्वं बलवत्त्वेन द्रव्ये वर्तते ।
ाधिष्ठितं यावत्तिष्ठति तदेव वस्तुजातमभिभूयेत-
परमन्यदबलतमं पराजित्य कारणत्वं प्रपद्यते ।
ादे साधुकतमतामासादयति रसेनेदं कृतम्,पाके-
कृतम्,गुणान्तरेणेदं कृतं, वीर्येणेदं कृतं यावत्प्र-
णेदं कृतम् । अस्यैवार्थस्येदमाहरणार्थं संग्रहोक्तं
श्चमिह प्रदर्शितम् । कुत एवं ज्ञातं तदेव वस्तु-
ं रसाद्यन्यतमं द्रव्येऽवतिष्ठमाने रसादिवस्तु-
ं बलवदबलवदप्युभयमेतत्तदात्मीयमात्मीयं यथा-
कर्म कुर्वत् कारणतामागच्छतीत्यर्थः ॥ २७ ॥

हे०—सत्स्वपि सर्वेष्वेकस्यैव प्रयोजकत्वे हेतुमाह—
त्त्वेन बलाधिक्येन । बलं च द्विविधं—कृत्रिममकृत्रिमं
च । मात्राधिक्येन सहायसंपत्त्या च कृतं कृत्रिमं, स्वाभावि-
कमकृत्रिमम् ॥ २७ ॥

अत इदमाह—

**विरुद्धगुणसंयोगे भूयसाऽल्पं हि जीयते २८॥**

स०—हि यस्माद्विरुद्धगुणसंयोगे संहतीभावे सति
यदल्पं वस्तु तद् भूयसा बलवता जीयतेऽभिभूयते ।
गुणशब्देन चात्र रसादयो गृह्यंते न पारिभाषिका गुर्वा-
दयोऽप्रकृतत्वात् । विरुद्धगुणसंयोग इत्यत्र विरुद्धगुणस-
मवेतद्रव्यसंयोग इति कल्प्यं न विरुद्धगुणसंयोग इति।
नहि गुणानां संयोगो वक्तुं युज्यते किं तर्हि द्रव्या-
णाम् । तथा च मुनिः । संयोगस्तु द्वयोर्बहूनां वा
संहतीभावः । विरोधश्च द्विविधः । स्वरूपतः कार्य-
तश्च । स्वरूपतो विरोधो गुरुलघ्वोः शीतोष्णयोश्च ।
कार्यतो यथा । वायौ जेतव्येऽरूक्षोष्णद्रव्यसंयोगोप-
योगः । अत्र हि यो गुणानां विरोधः स कार्येण ।
तत्र यदल्पं वस्तुजातं तद् भूयसा वस्तुजातेनाऽभिभू-
यते । तत्र यथा क्षीरं शीतवीर्यमपि मधुररसहेतुकस्ने-
हगौरवादिभिः साहाय्यबाहुल्याद्वातशमनाख्यं कार्यं
करोति न पुनः स्वकार्यं वातप्रकोपाख्यम् ॥ २८ ॥

यत्र तु द्रव्ये रसादीनामुत्कर्षसंभवः परस्परं साम्यं
तत्र कस्य कार्यकारणत्वमित्याह—

**रसं विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहति ।**
**बलसाम्ये रसादीनामिति नैसर्गिकं बलम् २९**

स०—रसं मधुरादिषड्विधं विपाकः कर्ता व्यपो-
हति कार्यकरणे कुंठयति । यथा मधुरो मधुनि रसः
कटुना विपाकेनाभिभूयते। अत एव पवनशमनाख्यं
कार्यं मधुररसहेतुकं न करोत्यपि तु वातप्रकोपनाख्यं
कटुविपाकहेतुकमेव करोति । तौ रसविपाकौ वीर्यं
कर्तृभूतमपोहति । यथा महिषामिषोत्थितौ मधुररस-
विपाकावुष्णवीर्याख्यं कर्तृ अभिभवति । अत एव
तन्मांसं पित्तादिदूषणम् । अन्यथा स्वादुरसविपाकित्वा-
त्पित्तशामकमेव स्यात् । प्रभावस्तु त्रीनपि रसादीन्
विजयते । यथा । अम्लरसविपाकोष्णवीर्या च सुरा

क्षीरं जयति । इतीदृशं रसादीनां नैसर्गिकं बलं स्वाभाविकी शक्तिः । एतदुक्तं भवति । रसं समबलमपि विपाको व्यपोहति । रसविपाकौ च समबलावपि वीर्यं स्वभावादपोहति । एतानि च समबलान्यपि प्रभावो व्यपोहतीति ॥ २९ ॥

हे०–तत्र स्वाभाविकं बलमाह—**रसमिति** । तौ रसविपाकौ, तानि रसविपाकवीर्याणि अपोहति जयति । बलसाम्ये कृत्रिमबलतुल्यत्वे यत्र रसविपाकयोस्तुल्यमात्रत्वे तुल्यसहायत्वे च तत्र रसाद्विपाको बली मात्रासहायवैषम्ये तु यो मात्राधिकः सहायाधिको वा स बलीत्यर्थः । एवं वीर्यादिष्वपि वाच्यम् । संग्रहे तु–" विरुद्धा अपि चान्योन्यं रसाद्याः कार्यसाधने । नावश्यं स्युर्विघाताय गुणदोषा मिथो यथा ॥ रसवीर्यप्रभृतयो भूतोत्कर्षापकर्षतः। एकरूपा विरूपा वा द्रव्यं समधिशेरते ॥ माधुर्यशैत्यपैच्छिल्यस्नेहगौरवसंहताः । सह वृत्त्या स्थिताः क्षीरे नत्वानूपौदकामिषे ॥ गुणा द्रव्येषु ये चोक्तास्त एव तनुदोषयोः । स्थितिवृद्धिक्षयास्तस्मात्तेषां हि द्रव्यहेतुकाः ॥ रसं विद्यान्निपानेन तेनाधिवसनेन च । वीर्यं विपाकं द्रव्याणां कर्मणः परिनिष्ठया ॥ मधुरस्कंधनिर्दिष्टघृततैलगुडादिषु । गुणाः स्वाद्वादिभेदेन रसषट्कं न युज्यते ॥ अस्तु भेदादसंख्यात्वमैक्यं वा स्वादुलक्षणात् । भूतोत्कर्षापकर्षेण भेदो योऽल्पेन कथ्यते ॥ संकीर्णत्वात्फले चासौ तुल्यत्वान्न विवक्ष्यते । गुर्वादीनां विशेषेऽपि स्वजातेरनतिक्रमात् ॥ संख्याभेदो यथा नास्ति रसानामपि सत्क्रमः । दृष्टं मुखोपलेपादि यत्सर्वेषु घृतादिषु ॥ न च तद्दाडिमाद्येषु षडेवातो रसाः स्मृताः । आनंत्यैकत्वयोश्च स्यान्न विचित्रार्थतंत्रणम् ॥ गुर्वाद्या वीर्यमुच्यंते शक्तिमंतोऽन्यथा गुणाः । पटुसामर्थ्यहीनत्वाद्गुणा एवेतरे गुणाः '' इति ॥ २९ ॥

ननु द्रव्यरसविपाकवीर्याणि कर्मानुमानेन यथा स्वरूपाण्येवावगच्छामः । प्रभावस्य तु न ज्ञायते कीदृशं कर्मेत्यत आह —

**रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ।**

स०–द्वयोर्द्रव्ययो रसादीनां रसवीर्यविपाकानां साम्ये सति यदेकं द्रव्यमन्यत्कर्म कुरुतेऽन्यत्पुनरन्यद्विशिष्टं कर्म तत् प्रभावजं प्रभावाज्जातमिति ज्ञेयम् । अयमस्य द्रव्यस्य प्रभाव इति विशिष्टकर्मकरणान्निश्चीयत इत्यर्थः । ननु प्रभावः क उच्यत इति । ब्रूमः रसवीर्यविपाकादिगुणातिशायी द्रव्यस्य स्वभावो यः प्रभावः । उक्तं च रसवीर्यविपाकादिगुणातिशयवा[illegible]लम् । द्रव्यस्वभावो निर्दिष्टो यः प्रभावः स कीर्त्[illegible] इति ॥ ३० ॥

प०–इदं निदर्शनार्थमाह–यस्य द्रव्यस्य प्रभा[illegible] द्वयोर्द्रव्ययो रसवीर्यविपाकानां साम्ये तत्रैकं द्र[illegible]मन्यत् कर्म करोति । तत्पुनरन्यदेव । तेन प्र[illegible]वस्य प्रभावतः । तेन प्रभावत्वं जायते । एवं प्र[illegible] वस्तु यः प्रवृत्तिनिवृत्तिलक्षणो धर्म आत्मरूप[illegible] भावं प्रत्ययसाध्यासम्भवरूप एवाव्यभिचारी प्रभावः न पदार्थान्तरो भावः षट्पदार्था[illegible]तिरिक्तः ॥ ३० ॥

हे०–अथ प्रभावः । प्रभावं लक्षयति–द्वयोर्द्रव्ययो र[illegible]दिसाम्ये सत्यप्येकस्य यद्विशिष्टं कर्म दृश्यते तत्प्रभावज[illegible] तत्र यो द्रव्यधर्मो हेतुः स प्रभाव इत्यर्थः ॥ ३० ॥

अत्र निदर्शनार्थमाह—

**दंती रसाद्यैस्तुल्याऽपि चित्रकस्य विरेचनी मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ॥ ३[illegible]**

स०–चित्रकस्य रसवीर्यविपाकैस्तुल्यापि दंती र[illegible]दिभ्योऽतिशायिद्रव्यस्वभावयोगाद्विरेचनी न चित्र[illegible]श्चित्रकत्वात् । मधुकस्य च मृद्वीका तुल्याऽपि र[illegible]दिभ्योऽतिशायिद्रव्यस्वभावयोगान्मृद्वीका विरेचनी मधुकम् । घृतं क्षीरस्य रसादिभिस्तुल्याऽपि घृतं दीपनं पुनः क्षीरम् । अन्ये त्वेवं प्रभावलक्षणं प्रतिपन्नाः प्र[illegible] वस्तु स्वसंज्ञाप्रवृत्तिनिमित्तलक्षणो यो धर्मस्त्वतल[illegible] प्रत्ययप्रतीतिसमधिगम्यः स प्रभावः । तंत्रांतरे चोक्त[illegible] वस्तूनां यः स्वसंज्ञायाः । प्रवृत्तौ करणे स्मृतः । [illegible]लादिप्रबोध्यश्च प्रभाव इति कीर्तितः । एवं च दं[illegible]त्वाद्दंत्या विरेचनकारित्वं प्रभावः । चित्रकस्य [illegible]कत्वादविरेचनकारित्वं प्रभावः । एवं मृद्वीकात्वा[illegible] द्वीकाया विरेचनकारित्वं प्रभावः । इत्यादि सकलप[illegible]र्थेषु बोध्यम् ॥ ३१ ॥

प०–एवं दन्ती रसाद्यै रसवीर्यविपाकैस्तुल्या समानाऽपि चित्रकस्य ये रसवीर्यविपाकास्त एव[illegible] वीर्यविपाका दन्त्या अपि । दन्ती पुनर्दन्तीत्वा[illegible] रेचयति न चित्रकश्चित्रकत्वात् । मधुकस्य मृद्व[illegible]

ावीर्यविपाकैः समानाऽपि मृद्वीका विरेचयति
ीकात्वात् । न मधुको मधुकत्वात् । घृतं क्षीरं
ावीर्यविपाकैः समानमपि घृतं दीपनं घृतत्वात् ।
रत्वान्न क्षीरम् । इत्येवं सर्वतः प्रभावत्वा-
ति यावत् ।। ३१ ।।

हे० -प्रभावमुदाहरति--रसादय उक्ताश्चरकेण "कटुकः
कः पाके वीर्योष्णाश्चित्रको मतः । तद्वद्दंती प्रभावात्तु
चयति सा नरम्"इति। मधुकमृद्वीकयोः क्षीरघृतयोश्च
ररसपाकत्वेन शीतवीर्यत्वेन च साम्येऽपि मृद्वीकैव
चनी न मधुकम् , घृतमेव दीपनं न क्षीरम् । संग्रहे
यदप्युदाहृतम्—" कटुपाकरसस्निग्धगुरुत्वैः कफवात-
ाल्लशुनो वातकफकृन्न तु तैरेव यद्गुणैः।।मिथो विरुद्धान्
ादीन् लोहिताद्या जयंति यत् । कुर्वंति यवकाद्याश्च
ाभावविजृंभितम् ।। शिरीषादिविषादिघ्नं स्वप्राप्यं
त्वद्वये । मणिमंत्रौषधीनां च यत्कर्म विविधात्मकम् ।।
ाकर्षणपुंजन्मरक्षायुधवशादिकम् । दर्शनाद्यैरपि
ं यन्नियच्छंति चागदः ।। विरेचयति यद्रूप्यमाशु शुक्रं
ाति वा । ऊर्ध्वाधोभागिकं यच्च द्रव्यं यच्छमनादिकम्।।
ादिप्राप्यं तत्तच्च यत्प्रपंचेन वर्णितम् । तच्च प्रभा-
सर्वमतो चिन्त्यः स उच्यते ।। रसेन वीर्येण गुणैश्च
ं द्रव्यं विपाकेन च यद्विदध्यात् । सद्योऽन्यथा
कुरुते प्रभावाद्धेतोरतस्तत्र न गोचरोऽस्ति" इति।।३१।।

सामान्यविशेषाभ्यां यतः सकलं व्याप्तमतो ग्रंथकार
माह—

**ते सामान्यतः कर्म द्रव्यादीनां पुनश्च तत् ।**
**चित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ।। ३२ ।।**

स० --इति प्रकारे । अनेन प्रकारेण द्रव्यर-
ीर्यादीनां सामान्येन कर्म व्याख्यातं न विशेषेण।
ा महाभूतै रसवीर्यादयो द्रव्याश्रिता आरब्धा-
रेव तथाभूतैस्तदाश्रयमपि द्रव्यम् । अतः सामा-
तः कर्म द्रव्यादीनां युक्तं संप्राप्तं विशिष्टं कर्म
तेद्रव्यं वक्तुमिदमाह । पुनश्च तदिति । तत्सामा-
ोक्तं कर्म द्रव्यरसादीनां संबंधि पुनर्भिद्यते विशि-
ते । केनेत्याह । विचित्रेत्यादि । विचित्राश्च ते
ययाश्च विचित्रप्रत्ययाः । नानाकारसंनिवेशविशेषयु-
ानि महाभूतानि प्रतिसत्त्वं प्राक्तनशुभाशुभकर्मप्रे-
तो विचित्रो महाभूतपरिणाम इत्यर्थः । विचित्रप्रत्य-
यारब्धं च तद्द्रव्यं च तस्य भेदो विशेषस्तेन विचि-
त्रप्रत्ययारब्धद्रव्यभेदेन तत्सामान्योक्तं कर्म द्रव्या-
दीनां भिद्यते । द्रव्याश्रितत्वाद्रसादीनामपि यत्कर्म
तदपि द्रव्यभेदेन भिद्यते न तु सर्वमपि देशकालादि-
वशाद्विचित्रप्रत्ययारब्धम् । परस्परवैलक्षण्याद्द्रव्याणाम् ।
परस्परवैलक्षण्ये चैषां विचित्रप्रत्ययारब्धत्वमेव कार-
णम् । यद्वशादन्यदिदं द्रव्यमिति रूपरसविपाकादि-
भिन्नमुत्पद्यते तथा प्रतिभासते च तत्किंतु विचित्र-
प्रत्ययारब्धद्रव्यभेदेन भिद्यत इति । अत्राचक्ष्महे ।
सत्यमेतत् किंतु विशिष्टद्रव्यस्य संग्रहार्थं विचित्रप्र-
त्ययारब्धमिति विशेषणं शास्त्रकृता कृतम् । यस्य
भेदेन द्रव्ये रसवीर्यादीनां यत्सामान्योक्तं कर्म तद्भि-
द्यते । यस्मिन् द्रव्ये रसादीनामन्यानि महाभूता-
न्यारम्भकाणि द्रव्यस्य चारंभकाण्यपराणि च तद्द्रव्यं
विचित्रप्रत्ययारब्धम् तदेवं द्रव्याणां द्वैविध्यम् । यतः
कानिचिद्द्रव्याणि यैरेव महाभूतैर्यथाविधै रसादय
आरब्धास्तैरेव तथाविधैर्महाभूतैस्तदाश्रयाण्यपि द्रव्या-
ण्यारब्धानि । तानि रसादिसमानप्रत्ययारब्धान्युच्यन्ते ।
तानि च यथायथं तत्कर्म रसाद्यनुगुणं सामान्यात्कु-
र्वते । यथा क्षीरेक्षुशर्करादीनि । कानिचित्पुनस्त-
दाश्रितरसादिसमारम्भकमहाभूतान्यन्यानि तदाश्रयद्र-
व्यारम्भकाण्यन्यानि च महाभूतानि । तैरारब्धानि
तानि विचित्रप्रत्ययारब्धानि द्रव्याणि । एतदुक्तं
भवति । रसादीनामारम्भकाण्यन्यथाभूतानि महाभू-
तानि नोभयत्रैकरूपाणीति । तानि च यथायथं रसा-
द्यनुगुणं कर्म न कुर्वंति भिन्नत्वाद्धेतुभावस्य । तथाहि ।
रसादीनामारंभेऽन्यो हेतुरन्यश्च तदाश्रयद्रव्यारम्भ
इति यथा मकुष्ठयवमत्स्यसिंहादीनि । एतानि यथारसं
वीर्यविपाककर्म न कुर्वंति । विचित्रप्रत्ययारब्धत्वात् ।
इत्थं यानि रसादिसमानप्रत्ययारब्धानि द्रव्याणि च
बहून्यपि तेषां रसोपदेशेन रसकर्म निर्देष्टुं शक्यते ।
अत एव हेतोः षण्णां रसानां योऽनुगुणनिर्देशस्तस्य
सार्थकत्वम् । रसोपदेशमन्तरेण हि बहुतराणां समान-
रूपाणां द्रव्याणां क्षीरेक्ष्वादीनां कर्म वक्तुं सुखेन

शक्यते। यानि तु विचित्रप्रत्ययारब्धानि द्रव्याणि तेषां प्रतिद्रव्यं कर्मोपदेशं विना यथायथं कर्म वक्तुं न शक्यते ॥ ३२ ॥

प०–सामान्यविशेषाभ्यां तावत्सकलं व्याप्तं यतोऽतः शास्त्रकृदिदमाह–इतिशब्दः परिसमाप्तिवचनः प्रकारार्थो वा । परिसमाप्तस्तावद्रसवीर्यविपाकप्रभावाणां सामान्यतः कर्म न विशेषतः तदारम्भकमहाभूतसामान्यात्। समानप्रत्ययत्वात्। समानकरणत्वादिति यावत् । अनेन प्रकारेण चेतिशब्दस्यार्थः। अनेन प्रकारेण वा द्रव्यादीनां सामान्यतः व्याख्यानं न विशेषेण । यैरेव यथाभूतैरेतैर्महाभूतै रसवीर्यादयो द्रव्याश्रिता आरब्धास्तैरेव तथाभूतैस्तदाश्रयमपि द्रव्यमारब्धमिति सामान्यतः कर्म द्रव्यादीनां व्याख्याय विशेषभेदेनैव तेषां प्रतिद्रव्यमन्यत्कर्म विशिष्टं दर्शयितुमाह–तत्सामान्योक्तं कर्म द्रव्यरसादीनां भिद्यते विशिष्यते, नानात्वेन सम्पद्यते, द्रव्याश्रितत्वात् । रसादीनामपि यत्कर्म तदपि द्रव्यभेदेन भिद्यते नानाप्रकारमेव भवति। एवं द्विविधानि द्रव्याणि कानिचिद्रसस्यारम्भकसमानप्रत्ययारब्धानि कानिचिद्रसस्यारम्भकप्रत्ययेभ्योऽन्यप्रत्ययारब्धानि विचित्रप्रत्ययानि ॥ ३२ ॥

हे०–अध्यायार्थमुपसंहरति—द्रव्यादीनां प्रभावांतानां सामान्योक्तं कर्मापवदति पुनश्च तदिति । तत्सामान्योक्तं कर्म भिद्यते विशिष्यते, अन्यथा क्रियत इत्यर्थः। केन विचित्रप्रत्ययारब्धद्रव्यभेदेन। विचित्राः परस्परविलक्षणाः प्रत्ययाः कारणभूता महाभूतसंघातास्तैरारब्धं यद् द्रव्यं तस्य भेदो द्रव्यांतराविशिष्टत्वं तेन । पार्थिवाद्यवांतरसामान्यभेदस्य पूर्वमुक्तत्वात्पुनस्तदित्युक्तम् । एतदुक्तं भवति क्वचिद्द्रव्ये यादृगेव भूतसंघातो द्रव्यस्यारंभकः तादृगेव रसादीनां तत्समानप्रत्ययारब्धं तत्सामान्यगुणान्नातिक्रामति। क्वचिदन्यादृग्भूतसंघातो द्रव्यस्यारंभकोऽन्यादृग्रसादिष्वप्यन्यादृक् गुणस्येत्यादि तद्विचित्रप्रत्ययारब्धं तत्सामान्यगुणानतिक्रामति । तदर्थं द्रवद्रव्यान्नस्वरूपे विज्ञानीयारंभः ॥ ३२ ॥

एतदुदाहरणार्थं ग्रन्थकृदाह–

**स्वादुर्गुरुश्च गोधूमो वातजिद्वातकृद्यवः ।**
**उष्णा मत्स्याः पयः शीतं कटुः सिंहो न शूकरः ॥**

स०–स्वादुरसोपेतो गुरुगुणयुक्तश्च गोधूमो रसोपदिष्टं यद्वातजित्त्वं कर्म तत्करोति । समानप्र[त्यया]रब्धत्वात् । यवस्तु स्वादुरसोपेतो गुरुगुणयुक्तश्च रसोपदिष्टं यद्वातजित्त्वं कर्म तन्न करोत्यपि तु [वात]कृत्त्वमेव करोति । विचित्रप्रत्ययारब्धत्वात् । स्वादुरसोपेतो गुरुगुणोपेतश्च न मधुररसोपदिष्ट वीर्यः किं तर्ह्युष्णवीर्यो विचित्रप्रत्ययारब्धत्वात् । च स्वादुरसोपेतं गुरुगुणयुक्तं च मधुररसोपदिष्ट वीर्यं समानप्रत्ययारब्धत्वात् । स्वादुरसयुक्तो गुर[ुगुण]युक्तश्च सिंहो न यथारसं मधुरविपाकः किं तर्हि व[िपाके] विपाके विचित्रप्रत्ययारब्धत्वात् । शूकरो मधु[र]युक्तो गुरुगुणोपेतश्च यथारसं मधुरविपाक एव स[मान]प्रत्ययारब्धत्वात् । एवं यानि समानप्रत्ययारब्[धानि] द्रव्याणि तेषां रसोपदेशेनैव गुणा निर्दिष्टा भव[न्ति।] तथा च मुनिः। शीतं वीर्येण यद्द्रव्यं मधुरं रसपाक[योः।] तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः । रसे[नैव] शेन तथा निर्देश्यो गुणसंग्रहः । वीर्यतो विपर[ीत]पाकतश्चोपदेक्ष्यते । यथा पयो यथा सर्पिर्यथा चव्यचित्रकौ । एवमादीनि चान्यानि निर्दिशे[द्] भिषगिति । बाहुल्येन च रसादिसमानप्रत्यया[रब्धा]न्येव द्रव्याणीति चेतसि कृत्वा चान्योऽवोचत्। गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये । रसेषु दिश्यंते साहचर्योपचारत इति । अत ए[व] बहुतराणि द्रव्याणि रसादिसमानप्रत्ययारब्धान्यतो पदेशव्याप्त्या तानि निर्देष्टुं शक्यंते नान्यथा । [विचि]त्रप्रत्ययारब्धानि पुनः कतिपयान्येव द्रव्याणि प्रतिद्रव्यमेवोपदिश्यंते । मुनिनाऽप्ययमर्थो युक्त्यै[व] यथा । मधुरं किंचिदुष्णं स्यात्कषायं तिक्तमेव यथा महत्पंचमूलं तथा चानूपमामिषम् । लवणं [सै]न्धवं नोष्णमम्लमामलकं तथा । अर्कागुरुगुडूचीनां ति[क्तानामु]ष्णमुच्यते । किंचिदम्लरसं ग्राहि किंचि[दम्लं] भिनत्ति च । यथा कपित्थं संग्राहि भेदि चा[ङ्गेरी] यथा । पिप्पली नागरं वृष्यं कटु चावृष्यमुच्यते । क[षायः] स्तंभनः शीतः सोऽभयास्त्वन्यथा मतः । तस्माद्

ेन न सर्वं द्रव्यमादिशेदिति । ये च रससंयोगा
्यमाणास्ते रसादिसमानप्रत्ययारब्धैर्मधुराम्ललवण-
क्तकटुकषायरूपैर्मिथः कल्पनीयाः। न तु विचित्रप्र-
यारब्धैर्मधुराम्ललवणतिक्तकटुकषायरूपैः । यस्मात्ते-
यथाशास्त्रनिरूपिता रसवीर्यविपाकादयो विद्यंते ।
चित्रप्रत्ययारब्धत्वात् । अयं रससंयोगभेद एवं-
ोऽयमेवं गुणत्वाच्चामुष्मिन्विषये योज्य एतस्मिन्वि-
चाऽयमिति निर्देष्टुं न शक्यते । अनिर्ज्ञातस्वरूप-
त् नहि विचित्रप्रत्ययारब्धैर्ये रससंयोगाः क्रियंते
ं स्वरूपं कथमवधारयितुं शक्यते । अपिच । समा-
त्ययारब्धैर्ये संयोगाः कल्प्यंते तेषां संयोगिनां वीर्यतो
विरोधः शीतोष्णलक्षणः स न दोषाय । ये तु
चित्रप्रत्ययारब्धैः संयोगाः कल्प्यंते तेषां संयोगिनां
शीतोष्णलक्षणैर्विरोधः स दोषायेति वेद्यम् । अन्यथा
लापानकादीनामनेकद्रव्यकृतानामनभ्यवहार एव
नुयात् । तथा त्रयस्त्रिंशद्वर्गा ये वक्ष्यमाणास्तेषु
ौगिकं तज्ज्ञयात् । यौगिकं त्वनुक्तमपि युंज्यादिति
क्ष्यते तत्र रसादिसमानप्रत्ययारब्धमेव योज्यं न
चित्रप्रत्ययारब्धम् । तस्य रसवीर्यविपाकानां निश्च-
कर्तुमशक्यत्वात् । तस्मादित्यादि । यत एवं
चित्रप्रत्ययारब्धं विचित्ररूपं तस्माद्रसोपदेशेन न
द्रव्यमादिशेदपि तु रसादिसमानप्रत्ययारब्धं द्रव्य-
रसोपदेशेन निर्दिशेदिति ॥ ३३ ॥

ति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांग-
टीकायां सर्वांगसुंदराख्यायां नवमोऽध्यायः ॥ ९ ॥

१०-एतदुदाहरणार्थमाह-समानप्रत्ययारब्धत्वात्।
स्वादुरसोपेतो गुरुगुणोपेतश्च । यवो न
रसोपदिष्टं वातजित्त्वं करोति विचित्रप्र-
ारब्धत्वात्। प्रत्युत वातं करोति । मत्स्या मधुरा
विचित्रप्रत्ययारब्धत्वात् उष्णा उष्णवीर्या,न तु
ाः । क्षीरं पुनर्विचित्रप्रत्ययारब्धत्वाच्छीतम् ।
ीर्यविपाकानां क्रमादुदाहरणानि सव्यभिचा-
प्रदर्शितानीति भद्रम् ॥ ३३ ॥

ति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रि-
कायामष्टाङ्गहृदयटीकायां सूत्रस्थाने द्रव्या-
दिविज्ञानीयो नाम नवमोऽध्यायः॥९॥

हे०--द्रव्यभेदमुदाहरति--स्वादुरिति । यवगोधूमयोर्म-
त्स्यपयसोः सिंहशूकरयोः स्वादुत्वगुरुत्वाभ्यां तुल्यत्वेऽपि
यवमत्स्यसिंहानां विचित्रप्रत्ययारब्धत्वाद्वातलप्रभावत्वोष्ण-
वीर्यत्वकटुविपाकित्वानि स्वादुत्वगुरुत्वविपरीतानि।गोधूम-
पयःशूकराणां तु समानप्रत्ययारब्धत्वाद्वातघ्नत्वप्रभावत्वशी-
तवीर्यत्वमधुरपाकत्वानि स्वादुत्वगुरुत्वयोरविपरीतानि ।
वातजित्त्ववातकृत्त्वाभ्यां तत्कारणभूतौ प्रभावौ लक्ष्येते ३३॥

इति हेमाद्रिटीकायामायुर्वेदरसायने द्रव्यादीनां
प्रकरणं सामस्त्येन निरूपितम् ॥ ९ ॥

# दशमोऽध्यायः ।

पूर्वस्मिन्नध्याये रसान् भेदैरुत्तरत्रोपदेक्ष्यत इत्यु-
क्तमतस्तान् रसभेदान्वक्तुं रसभेदीयाध्यायं ब्रूते--

**अथाऽतो रसभेदीयमध्यायं व्याख्यास्यामः॥१॥**

स०--रसानां भेदो रसभेदस्तस्मै हितो रसभेदीयस्त-
मध्यायं व्याख्यास्यामः कथयिष्यामः । रसनार्थो रस
इति मुनिः । तथाऽब्योनिरपामेव रसवत्त्वात् ।
तथा च मुनिः । आपो हि रसवत्य इति । अपां
चाव्यक्तरसत्वात्प्रतिव्यक्त्यन्यादृशो रसानां महाभूत-
वैलक्षण्यज आस्वाद आस्वाद्यते । तथा च मधुररसा-
धिष्ठितानां क्षीरद्राक्षेक्षुशर्करादीनां प्रतिव्यक्त्यन्या-
दृशो मधुररसास्वाद उपलभ्यते । न त्वेकरूपः । एव-
मम्लानामारनालकोलाम्लिकादीनामपि प्रतिद्रव्यमने-
करूप आस्वादविशेष उपलभ्यते न त्वेक एव ॥ १ ॥

प०--द्रव्यादिविज्ञानीयादनन्तरं रसभेदीयाध्याय
आरब्धः द्रव्याश्रितत्वाद्रसादीनाम् । तथा चागमः-
"द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः"
इति द्रव्यं विना रसानामुपलम्भाभावः । अतः पूर्वं
द्रव्यमुक्तम्, तदनु रसादीनां नामधेयादुपदेशः कर्तु-
मारभ्यते । रसानां भेदो रसभेदः तस्मै हितो रस-
भेदीयः रसभेदीयश्चासावध्यायस्तं व्याख्यास्यामः ।
रसः खल्वाद्यः प्राक् व्यक्तश्च, षड्रसत्वात्कालस्य
तु महाभूतगुणानां तु नातिरेकविशेषात्।संसृष्टो विष-
विदग्धः षोढा पृथग् विपरिणतिमधुरादिभेदेन । तदे-
तदाप्यग्रहणं कुर्वन् ज्ञापयत्युदकविकार एव रसः
पृथिव्यादयस्तु तत्सहकारिणः ॥ १ ॥

हे०—रसभेदीयमध्यायं व्याख्यातुं प्रतिजानीते अथेति । यतः पूर्वेऽध्याये रसो भेदैरुत्तरत्रोपदेक्ष्यत इत्युक्तम् । अत एवायं रसभेदीयः ॥ १ ॥

पूर्वं च प्रत्यपादि षडेव रसा इति तानेव लक्षयति—

**क्ष्मांभोऽग्निक्ष्मांऽबुतेजःखवाय्वग्न्य-**
**निलगोऽनिलैः ।**
**द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ २ ॥**

स०—पृथिव्यादिभिर्महाभूतैर्द्वयोल्बणैर्व्यधिकैः क्रमात्परिपाट्या यथासंख्यमित्यर्थः । मधुरादीनां षण्णां रसानामुद्भवोऽभिनिर्वृत्तिर्भवति । द्वयमुल्बणं येषु भूतेषु तानि द्वयोल्बणानि तैः । द्वयोल्बणशब्दोपादानाच्च द्रव्यवद्रसस्याऽपि पांचभौतिकत्वमिति प्रतिपादयति । कतमत्पुनर्भूतद्वयं कतमस्मिन् रसेऽधिकमारंभकं स्यादिति यथासंख्येन दर्शयन्नाह। क्ष्मांभोऽग्निक्ष्मांबुतेजः-खवाय्वग्न्यनिलगोऽनिलैः । भूमिजलाभ्यामधिकाभ्यां मधुरः । क्ष्माग्निभ्यामम्लः । अंब्वग्निभ्यां लवणः । खवायुभ्यां तिक्तकः । अग्निवायुभ्यां कटुः । क्ष्मानिलाभ्यां कषायः । ननु भूमितोयाधिक्यान्मधुर एवमंबुवाय्वाधिक्यादन्यो भूम्याकाशाधिक्यादन्य इत्येवमादिरसविकल्पैरसंख्येयरसप्रसंगः प्राप्नोति । अत्रोच्यते । स्वभावाददोषः । एषां भूम्याकाशादीनामीदृशः स्वभावो यत्केनचिदेव भूताधिक्येन व्यवस्थितानि भूम्यादीनि रसांतरोत्पादनसमर्थानि भवंति न सर्वेणेति ॥ २ ॥

प०—रसस्योपादानं निदर्शयन्नाह—मधुरादीनां षण्णां रसानामुद्भवो जन्मनिर्वृत्तिर्भवति । भूतद्वयमुल्बणं येषु भूतेषु तानि भूतद्वयोल्बणानि तैः क्रमेण यथासंख्यमित्यर्थः । कतमत्पुनर्भूतद्वयं कतमस्मिन् रसे आरम्भकं भवतीति यथासंख्यं दर्शयन्नाह—क्ष्माम्भ इति । भूतद्वयोल्बणैर्भूतैर्मधुरस्य रसस्योद्भव इति । अग्निक्ष्मा इति। अग्निभूम्युत्कटैरम्लस्य । अम्बुतेज इति । जलतेजोऽधिकैर्लवणस्य । खवाय्विति । वाय्वाकाशोल्बणैस्तिक्तस्य । अग्न्यनिलेति । वायुतेजोऽधिकैः कटुकस्य। गोऽनिलेति । भूमिवातोत्कटैः कषायस्य । उल्बणग्रहणात्सर्वेषां सर्वत्र रसहेतुत्वं सूचयति । समुदायस्य जनकत्वात् खण्डशः निवृत्तेरिति । किन्तु यत्र तत्र विशिष्टरसान्तरभ्यते । एतेन च्योल्बणत्वेन विधानान्मधुरो सर्वजनितोऽपि भूमितोयोत्कट इत्युच्यते । शेषेष्वपि योज्यम् ॥ २ ॥

हे०—तत्र रसानामुत्पत्तिमाह—पृथिव्युदकाभ्यामुल्ब मधुररसस्योत्पत्तिः, तेजःपृथिवीभ्यामम्लस्य, उदकते लवणस्य,वाय्वाकाशाभ्यां तिक्तस्य, तेजोवायुभ्यां कटु वायुपृथिवीभ्यां कषायस्य ॥ २ ॥

ननु स्वलक्षणं विनाऽनुक्तो रसविशेषः कथं तामिति लक्षणार्थमाह—

**तेषां विद्याद्रसं स्वादुं यो वक्त्रमनुलिंपति**
**आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादनः**
**प्रियः पिपीलिकादीनाम् ॥ ३ ॥**

स०—तेषां रसानां मध्य आस्वाद्यमानो वक्त्रा पति मुखोपदेहं जनयति । तथा देहस्याह्लादन सकः । तथाऽक्षाणामिंद्रियाणां प्रसादनः प्र कृत् । तथा पिपीलिकादीनां प्रियः । तं मधुरं यात् । पिपीलिकादीनां प्रिय एतेनैतद्दर्शयति । हादिषु मूत्रगन्धोदये पिपीलिकोपसर्पणान्माधुर्य कृत्वा मधुमेहत्वादि ज्ञायते । आस्वाद्यमान इत्युर योज्यम् ॥ ३ ॥

प०—इदानीं स्वाद्वादीनामुत्पत्तिं प्रतिपाद्य कर्म च निर्दिशन्नाह-तेषां षण्णां रसानां मध्ये मधुरं रसं विद्यात् । य आस्वाद्यमानो जिह्वार नीयमानो वक्त्रमुपलिम्पति । आस्योपदेहं यति । शरीरस्याह्लादनः सुखावहः । अक्षा न्द्रियाणां प्रसादनः । पिपीलिकादीनां प्रियः लिकाषट्पदादीनामिष्टतमः ॥ ३ ॥

हे०—अथ रसलक्षणम् । तत्र मधुरं उपलिंपति पिच्छिलगुणादिसाहचर्यात् । देहस्य प्रियतमत्वात्सर्वशरीरस्य, अक्षप्रसादन इंद्रियवैमल्य आदिशब्दात्षट्पदादयः ॥ ३ ॥

**अम्लः क्षालयते मु**
**हर्षणो रोमदंतानामक्षिभ्रुवनिकोचनः ॥**

स०–अम्लो रस आस्वाद्यमानो मुखं क्षालयते स्रावयति। तथा रोमदन्तानां हर्षणः। हृषु अलीके। अलीककारी। उद्वेजक इत्यर्थः। तथाऽक्षिभ्रुवनिकोचनः। अक्षिणी च भ्रुवौ चाक्षिभ्रुवम् अचतुरादिसूत्रे निपातितम्॥ ४॥

प०–अम्लो रस आस्वाद्यमानो मुखं क्षालयति स्रावयति। रोमदन्तानां हर्षणः। "हृष अलीके" अलीककारी उद्वेजक इत्यर्थः। अक्षिभ्रुवनिकोचनः अक्षिभ्रुवं सङ्कोचयति॥ ४॥

हे०-अम्लं लक्षयति–क्षालयते प्रक्षालयते, रोमहर्षणः रोमांचकृत्, दंतहर्षणो दंतकार्याक्षमत्वकृत्, अक्षिभ्रुवनिकोचनः अक्ष्णोर्भ्रुवोश्च निकोचकः॥ ४॥

**लवणः स्यंदयत्यास्यं कपोलगलदाहकृत्॥५॥**

स०–लवणो रसो मुखं स्यंदयति। तथा कपोलयोर्गले च दाहं करोति। अन्नस्य रोचन इतीहातिप्रसिद्धत्वान्नोक्तम्। संग्रहे तु। स्पष्टार्थमुक्तम्। यथा। कण्ठकपोलं विदहत्यन्नं प्ररोचयतीति॥ ५॥

प०–लवणो रस आस्वाद्यमानः मुखं स्यन्दयति। कपोलगलं विदहति कपोलगलदाहकृत्॥ ५॥

हे०–लवणं लक्षयति–लवण इति॥ ५॥

**तिक्तो विशदयत्यास्यं रसनं प्रतिहंति च॥६॥**

स०–तिक्तो मुखं विशदयतीति। तच्च अपैच्छिल्ययुतं करोति। रसनेन्द्रियं च प्रतिहंति। अन्यरसग्रहणशक्तिं नाशयतीत्यर्थः॥ ६॥

प०–तिक्तो रस आस्वाद्यमानः आस्यं वदनं विशदयति निर्मलं करोति। वैशद्यं पिच्छिलाशनः। रसनां जिह्वां वागिन्द्रियं प्रतिहन्ति अन्यरसग्रहणशक्तिं नाशयति। स्वकर्माणि शक्त्युपघातं तस्योपजनयतीत्यर्थः॥ ६॥

हे०–तिक्तं लक्षयति–विशदयति–अपैच्छिल्यं करोति, रसनां प्रतिहंति, जिह्वां कुण्ठाति॥ ६॥

**उद्वेजयति जिह्वाग्रं कुर्वंश्चिमिचिमां कटुः।**
**स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च॥७॥**

स०–कटुरास्वाद्यमानो जिह्वाग्रमुद्वेजयति. सोद्वेगं करोति। चिमिचिमां कुर्वन् दहनज्वालासंस्पर्शादिवाऽक्ष्यादि स्रावयति। गण्डौ च दहतीव॥ ७॥

प०–कटुको रस आस्वाद्यमानो जिह्वाग्रं दुः यति। चिमचिमां सर्षपकल्कलिप्तमिव कुर्वन्नक्षि सास्यं नेत्रघ्राणमुखं स्रावयति। कपोलौ गण्डौ द तीव च॥ ७॥

हे०–कटुकं लक्षयति–अग्रग्रहणं संबंधमात्र एवं जकत्वं चिमिचिमां सर्षपलिप्त इव दुःखानुभवम्॥ ७

**कषायो जडयेज्जिह्वां कंठस्रोतोविबंधकृत्॥८॥**

स०–कषायो जिह्वां जडयति रसादिक्रियायां मं करोति। तथा कण्ठस्य स्रोतांसि शिराविशेषास विबन्धं करोति। श्वासादीनामयथाप्रवृत्तिमिव कु इत्यर्थः॥ ८॥

प०–कषायो रस आस्वाद्यमानो जिह्वां जड जडां कुर्यात्। जाड्यमयथावद्रसज्ञानसंवेदनं भ्रंश कण्ठस्रोतो विबध्नातीति विबन्धकृत्॥ ८॥

हे०–कषायं लक्षयति–जडयेत्स्तंभयेत्, कंठसंबं स्रोतसां विबंधमवरोधं करोति॥ ८॥

**रसानामिति रूपाणि कर्माणि॥ ९॥**

स०–इति परिसमाप्तौ। रसानां मधुरा लक्षणानि समाप्तानि सम्प्रति तेषां कर्म य प्रदर्शयन्नाह। कर्माणीति। वक्ष्यमाणानीति वा शेषः॥ ९॥

प०–रसानां लक्षणमुक्त्वोपसंहरति-रसाना नेनैवंप्रकाराणि रूपाणि लक्षणानि ज्ञेयानि वक्ष्यमाणानि कर्माणीति॥ ९॥

हे०–प्रकरणार्थमुपसंहरति–रसानामिति। रसल प्रकरणानंतरं रसकर्मप्रकरणमुच्यते–कर्माणीति॥

अथ को रसः किं कर्म करोतीत्यत आह–

**मधुरो रस**
**आजन्मसात्म्यात्कुरुते धातूनां प्रबलं बल**
**बालवृद्धक्षतक्षीणवर्णकेशेंद्रियौजसाम्॥**
**प्रशस्तो बृंहणः कंठ्यः स्तन्यसंधानकृद्गुरुः**
**आयुष्यो जीवनः स्निग्धः पित्तानिलविषाऽ**
**कुरुतेऽत्युपयोगेन स मेदःकफजान् गदान्**
**स्थौल्याग्निसादसंन्यासमेहगंडार्बुदादिकान्**

स०—मधुरो रसो धातूनां बलं प्रबलं कुरुते। बलं निजं तत्प्रकृष्टं जनयतीत्यर्थः। कुतः आजन्मसात्म्यादाजन्मप्रभृति देहस्य सात्म्यादित्यर्थः। बालभाव एव हि क्षीरादिना पुरुषस्य वृत्तिः। तथा बालादीनां प्रशस्तो हित ओजसोऽधिकवर्धनत्वात्प्रशस्तः। ओजस्तु तेजो धातूनां शुक्रांतानां परमित्योजोलक्षणं वक्ष्यति। तथा बृंहणः कंठ्यश्च। स्तन्यं क्षीरं संधानं श्लेषस्ते करोतीति स्तन्यसंधानकृत्। तथाऽऽयुष्यादिगुणः। नन्वायुष्यजीवनयोरेकार्थत्वादेकतरोपादानमेव युक्तम्। मैवम्। एतयोर्भिन्नार्थत्वात्। तथाहि। आयुष्यः स उच्यते। योऽपरिमितायुषो हितोऽधिकायुषो हितःस्यात्। तथा च मुनिः। तेनाऽऽयुरमितं स्म इति। यस्त्वायुषो नियतरूपस्य तामेव मर्यादामवध्नाति स जीवयतीति जीवन उच्यते। तदनयोः इष्ट एव भेदः। तथा जीवनमोजस्यमित्यभिन्नार्थौ स्वेतयोर्द्वयोरपीह यदुपादानं तदोजसो द्विविधायापि वृद्धेः कारकोऽयमिति प्रतिपादयितुम्। तथा च मधुरो रसो रुधिरादिक्रमेणौजसो वृद्धिकरः सामान्याविशेषाच्च। यथा क्षीरं धातुवर्धनमुक्तं वृष्यं च। तत्र धातुवर्धनत्वेनैव वृष्यत्वस्योक्तत्वाद्वृष्यशब्दोपादानं यत्तदानि वृष्यरूपाण्यात्मगुणादीनि तेभ्यः सकाशाद्विशेषाश्चैव वृद्धिकरमिति द्योतयितुं कृतमिति। कुरुत इत्यादि। मधुरो रसोऽत्युपयोगेनाऽतिसेवया मेदःश्लेष्मोत्थान्रोगान्करोति। कांस्तानित्याह। स्थौल्यादीन्॥ १०॥

प०—मधुरो रस उपयुक्तः कुरुते आजन्मसात्म्यात् जन्मप्रभृतिसात्म्यात् धातूनां रसादीनां ...ं बलं कुरुते प्रकृष्टतया शक्त्या बलं जनयेत्। स च बालानां वृद्धानां क्षतक्षीणानां वर्णस्य केशानामिन्द्रियाणामोजसश्च प्रशस्तो हितः। बृंहयतीति बृंहणः। कण्ठे स्वरे हितः कण्ठ्यः स्वर्यः। स्तन्यकृत् स्तन्यं क्षीरं सन्धीयते व्रणास्थिभग्नानामेकीकरणम्। आयुषि—हितमायुष्यम्। जीवनमोजस्यं स्निग्धगुणयोगात्। ...धः पित्तानिलं हन्ति विषं च हन्ति। स चात्युपयोगेनोपयुज्यमानो मेदःश्लेष्मजान् मेदःश्लेष्मोद्भवान् व्याधीन् स्थौल्यादिकान् कुरुते। संन्यासो मदात्यये वक्ष्यमाणः॥ १०॥

हे०—मधुररसस्य कर्माह—आजन्मसात्म्यात्कुरुते निरुपाधिकसात्म्यादित्यर्थः। प्रबलमितररसकृतेभ्यो बलेभ्यः। बलं देहधारणसामर्थ्यं, बालादीनां प्रशस्तो हितः। स्तन्यं स्त्रीक्षीरं, संधानं भग्नानां श्लेषः, आयुष्यः आयुर्वृद्धिकरः, जीवनः मूर्च्छाहरः। अतिमात्रशीलितस्य मधुरस्य कर्माह—स्थौल्यादयो मेदःश्लेष्मजानामुपकरणं, संन्यासो मदात्ययनिदाने वक्ष्यमाणः॥ १०॥

**अम्लोऽग्निदीप्तिकृत्स्निग्धो हृद्यः पाचनरोचनः।**
**उष्णवीर्यो हिमस्पर्शः प्रीणनो भेदनो लघुः॥**
**करोति कफपित्तास्रं मूढवातानुलोमनः।**
**सोऽत्यभ्यस्तस्तनोःकुर्याच्छैथिल्यं तिमिरं भ्रमम्।**
**कंडुपांडुत्वबीसर्पशोफविस्फोटतृड्ज्वरान्॥ ११॥**

स०—अम्लो रसोऽग्निदीप्तिकृत्त्वादियुतः। तथा कफपित्तास्रं करोति। मूढमननुलोमगं वातमनुलोमयतीति मूढवातानुलोमनः। सोऽम्लो रसोऽतिसेवितो देहशैथिल्यं तिमिरादींश्च कुर्यात्॥ ११॥

प०—अम्लो रस उपयुक्तोऽग्निदीप्तिकृत् स्निग्धश्च। हृद्यो—हृदयप्रियः। पाचयतीति पाचनः उष्णवीर्यः। हिमस्पर्शः स्पर्शे शीतः। प्रीणयतीति प्रीणनः। क्लेदयतीति क्लेदनः। लघुः पित्तकफास्रं करोति। मूढं बद्धमार्गं वातमनुलोमयति मूढवातानुलोमनः। अभ्यस्तः सेवितः। तनोर्देहस्य शैथिल्यं जनयति। कण्ड्वादींश्च गदान् कुर्यात्॥ ११॥

हे०—अम्लस्य कर्माण्याह—हृद्यो हृदयप्रियः, रोचनो जिह्वायाः अतिप्रयुक्तस्याम्लस्य कर्माण्याह-स इति। पांडुत्वं पांडुरोगः॥ ११॥

**लवणः स्तंभसंघातबंधविध्मापनोऽग्निकृत्।**
**स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत्॥**
**सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम्॥**
**तृट्कुष्ठविषबीसर्पान् जनयेत्क्षपयेद्बलम्॥ १२॥**

स०—लवणो रसः स्तंभादिविध्मापनो वह्निकृत्त्वादियुतश्च। सोऽत्यभ्यस्तो वातरक्तादीन् जनयेत्। बलं प्राणं क्षपयेत्॥ १२॥

प०—लवणो रस उपयुक्तः स्तम्भविध्मापनः। सङ्घातविध्मापनः बन्धविध्मापनश्च। स्तम्भः शकृदादीनां सङ्घातोऽन्नादीनां बन्धः। स्रोतसां तद्विध्मापनः। अग्निं करोतीत्यग्निकृत्। स्नेहयतीति स्नेहनः। स्वेदयतीति स्वेदनः। तीक्ष्णो मन्दः। रोचयतीति रोचनः। छेदं द्विधाकरणं च करोति। स चात्युपयोगेन वातरक्तादीन् करोति। खलतिः स्खलनम्, पलितं श्वेतरोमत्वम्, वलित्वं त्वक्सङ्कोचं, तृषाकुष्ठादीन् जनयेत्। बलं क्षपयेत्॥१२॥

हे०—लवणस्य कर्माण्याह—स्तंभादीनां विध्मापनो नाशनः। स्तंभो निष्क्रियत्वं, संघातः काठिन्यं, बंधः स्रोतोरोधः, छेदो वलयमांसादेः, भेदः पक्वशोफादेः, अत्युपयुक्तस्य लवणस्य कर्माण्याह—अस्रपवनं वातशोणितं, खलतिपलिते कपालरोगौ, वलिः शैथिल्यकृत् त्वक्संकोचः, विषजननं विषातिवृद्धिः॥ १२॥

**तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम्।**
**कुष्ठमूर्च्छाज्वरोत्क्लेशदाहपित्तकफान् जयेत्।**
**क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः।**
**लघुर्मेध्यो हिमो रूक्षः स्तन्यकंठविशोधनः।**
**धातुक्षयाऽनिलव्याधीनतियोगात्करोति सः १३**

स०—तिक्तो रसः स्वयं मुखस्याऽरोचनशीलोऽरुच्यादीन् जयेत्। अरुचिराहारद्रव्यविषयेऽनभिलाषः। क्लेदादीनामुपशोषणः। तथा लघ्वादिगुणयुक्तः। सोऽतिसेवितो धातुक्षयादीन् कुरुते॥ १३॥

प०—तिक्तः—मेध्यः प्रज्ञाजनकः।हिमः शीतवीर्यः। स्तन्यं कण्ठं च शोधयति। सोऽतियोगादतीव सेवनाद्धातूनां रसादीनां क्षयं वातव्याधीन् वातरोगांश्च करोति॥ १३॥

हे०—तिक्तस्य कर्माह—तिक्त इति।स्वयम्—अरोचिष्णुः स्वयं न रोचते अन्यस्य त्वरुचिं जयेत्, कृम्यादींश्च। क्लेदादीनामुपशोषणः, स्तन्यशोधनः स्तन्यदुष्टिहरः, कंठविशोधनः कंठरोधहरः, अत्युपयुक्तस्य तिक्तस्य कर्माण्याह—धातुक्षयमिति। चलव्याधीन् वातव्याधीन्[1]॥ १३॥

**कटुर्गलामयोदर्दकुष्ठालसकशोफजित्।**
**व्रणावसादनः स्नेहमेदःक्लेदोपशोषणः।**
**दीपनः पाचनो रुच्यः शोधनोऽन्नस्य शोषणः**
**छिनत्ति बंधान् स्रोतांसि विवृणोति कफापहः**
**कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम्।**
**मूर्च्छामाकुंचनं कंपं कटिपृष्ठादिषु व्यथाम् १४**

स०—कटुर्गलामयादीन् जयति। व्रणस्याऽवसादनो रोहणः स्नेहादिविशोषणो दीपनत्वादिगुणयुक्तश्च। अन्नं शोषयति विदहति। अन्नशोषणत्वाच्छिनत्ति बन्धान्। स्रोतांसि विवृणोति प्रसारयति। कफघ्नश्च। सोऽतिनिषेवितस्तृष्णादीन् करोति॥ १४॥

प०—कटुको रसो गलामयादीन् हन्ति जयति। गलामयान् गलरोगान्। उरोऽभिष्यन्दः उदर्दः। केषांचिच्छीतवेपथुः। अन्ये पुनराहुः-"शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः। सरागकण्डूशोफश्च उदर्दः सकफोद्भवः॥" अलसक आमविकारः। शोधयतीति शोधनः। अन्नस्य शोषणः अन्नं शोषयति हिनस्ति। बन्धान् छिनत्ति। तैक्ष्ण्यात् सन्धिबन्धानां शैथिल्यं करोति। स्रोतांसि विवृणोति विकाशयति। कफापहः श्लेष्माणं क्षपयति। सोऽतियोगेन निषेवितः तृष्णां मूर्छां मोहमाकुञ्चनं सङ्कोचनं कटिपृष्ठादिषु व्यथां तीव्रां शूलादिकां कुरुते। आदिग्रहणाद्बस्तिपादपार्श्वप्रभृतिष्वपि ग्रहणम्॥ १४॥

हे०—कटुकस्य कर्माण्याह—कटुरिति। उदर्दस्त्रिधा। स चोक्त आयुर्वेदप्रकाशे—" उदर्द उक्तो वक्षोऽभिष्यंदोऽन्यैः शीतवेपथुः। शीतांबुस्पर्शजः शोफो रागकंडूयुतः परैः॥" इति। अलसकः आमविकारः, व्रणावसादनः व्रणोत्सेधहरः, स्नेहादीनामुपशोषणः नाशनः। अन्नस्य अदनीयत्वं नाशयति। छिनत्ति बंधान् संधीन्। स्रोतांसि विवृणोति प्रसारयति। अत्युपयुक्तस्य कटुकस्य कर्माण्याह-शुक्रबलयोः क्षयः, आकुंचनं शिरादिसंकोचः॥ १४॥

**कषायः पित्तकफहा गुरुरस्रविशोधनः।**
**पीडनो रोपणः शीतः क्लेदमेदोविशोषणः।**
**आमसंस्तंभनो ग्राही रूक्षोऽतित्वक्प्रसादनः।**
**करोति शीलितः सोऽतिविष्टंभाध्मानहृद्रुजः।**
**तृट्कार्श्यपौरुषभ्रंशस्रोतोरोधमलग्रहान् १५॥**

[1] अत्र "चलव्याधीन्" इति पाठ०।

स०—कषायः पित्तकफघ्नो गुरुत्वादियुतोऽतिशयेन त्वक्प्रसादनश्च । सोऽत्युपयुक्तो विष्टम्भादीन्करोति ॥ १९ ॥

प०—कषायो रसः पित्तकफहा गुरुश्च । अस्रं रक्तं शोधयति । पीडनः पिटिकादीन् पीडयति । रोपणः व्रणानाम् । शीतः शीतवीर्यः । क्लेदमेदसी शोषयति । आमं संस्तम्भयति । ग्राही पुरीषं बध्नाति । अतिरूक्षश्च । त्वक्प्रसादनः त्वक्सवर्णकारी त्वच्यः । सोऽतिशीलितोऽतिविष्टम्भादीन् करोति पौरुषभ्रंशः शुक्रोपघातः । मलग्रहो विण्मूत्रसङ्ग्रहः ॥ १५ ॥

हे०—कषायस्य कर्माण्याह—अस्रविशोधनो रक्तदुष्टिहरः, पीडनो व्रणानामाचूषणः, आमसंस्तंभनः आमदोषाणां पाकप्रतिबंधकरः, ग्राही—स्तंभनः, अतित्वक्प्रसादनस्त्वचमतिनिर्मलां करोति । अत्युपयुक्तस्य कषायस्य कर्माण्याह—करोतीति । पौरुषभ्रंशः शुक्रहानिः ॥ १५ ॥

अथ मधुरादिस्कन्धान्निर्दिशति—

**घृतहेमगुडाक्षोडमोचचोचपरूषकम् ।**
**अभीरुवीरापनसराजादनबलात्रयम् ॥**
**मेदे चतस्रः पर्ण्यो जीवंती जीवकर्षभौ ।**
**मधूकं मधुकं बिंबी विदारी श्रावणीयुगम् ॥**
**क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यौ काश्मरी सहे ।**
**क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ॥ १६ ॥**

स०—हेम कांचनम् । राजादनं चापप्रियम् । बलात्रयं बलाऽतिबलानागबलेति । मेदा महामेदेति मेदाद्वयम् । चतस्र इति । शालिपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च । मधूकं मधूकपुष्पम् । मधुकं मधुयष्टी । बिंबी गोल्हा । श्रावणीयुगं श्रावणी महाश्रावणी च । क्षीरिणी कांचनक्षीरी । काश्मरी गंभारी। सहे महासहा क्षुद्रसहा च । आदिशब्देन तृणपंचमूलं मेदोमज्जतैलं मधुरदाडिमपुष्करबीजशृंगाटकाश्वगन्धाश्वदंष्ट्रामृणालकशेरुकसिंचतिकाखर्जूरीतालमस्तकादीनि गृह्यन्ते ॥ १६ ॥

प०—मधुरादिगणानाह—घृतादिर्द्राक्षापर्यन्तो गणो मधुरो मधुरद्रव्यस्कन्ध इत्यर्थः । तत्र हेम सुवर्णम् । मोचं—कदलीफलम् । चोचं—नालिकेरम् । अभी[रु] शतावरी । वीरा—काकोली । राजादनं—चापप्रिय[म्] बलात्रयं—बलाऽतिबला नागबला । मेदा—महामे[दा] चतस्रः पर्ण्यः—शालिपर्णी, पृश्निपर्णी, मुद्गप[र्णी] माषपर्णी । मधूकपुष्पं मधूकं मधुयष्टी । बि[बी] विदारी—क्षीरविदारी । श्रावणीयुगं—श्रावणी, म[हा] श्रावणी । क्षीरशुक्ला—तवक्षीरी । तुगाक्षी[री] वंशरोचना । क्षीरिणी । सहे द्वे—क्षुद्रसहा, म[हा] सहा ॥ १६ ॥

हे०—अथ रसस्कंधाः । तत्र मधुरस्कंधमाह—घृ[त]मगुडेति । हेम सुवर्णम्, अभीरुः शतावरी, वीरा [का]कोली, राजादनश्चारः, बलात्रयं बलातिबला नाग[बला] च । मेदे—मेदा, महामेदा च । चतस्रः पर्ण्यः—शा[लि]पर्णी, पृश्निपर्णी, मुद्गपर्णी, माषपर्णी । श्रावणीयुगं श्राव[णी] महाश्रावणी । श्रावणी मुंडी, क्षीरशुक्ला क्षीरवि[दारी] तुगाक्षीरी वंशरोचना, क्षीरिण्यौ क्षीरकाकोली, दुग्धि[का] च । काश्मरी गंभारी, सहे—तरणीद्वयम्, आदिशब्[देन] खर्जूरतैलमेदोमज्जसिंचितिकापियालखर्जूरीतालमस्तक[आ]मलकीमधूलिकाऽऽत्मगुप्ताच्छत्रातिच्छत्रार्षप्रोक्तकर्यगंधा[मृ]णालिकापुष्करबीजशृंगाटककसेरुकप्रपौंडरीककतकानि [तृण]पंचमूलं च संग्रहोक्तानि ॥ १६ ॥

इदानीमम्लस्कन्धमाह—

**अम्लो धात्रीफलाम्लीकामातुलुंगाम्लवेतस[म्]**
**दाडिमं रजतं तक्रं चुक्रं पालेवतं दधि ।**
**आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ १[७]**

स०—धात्रीफलमामलकम् । रजतं रौप्यम् । [चुक्रं] शुक्तम् । उपलक्षणं चैतत् । संग्रहोक्तान्यन्यान[ि] कोशाम्रलकुचकुवलकोलबदरैरावतप्राचीनामलकमस्[तु] धान्याम्लादीनीहैव बोध्यानि ॥ १७ ॥

प०—अम्लादिगणानाह—धात्र्यादिकरमर्दपर्यन्त[ो]ऽम्लो गणोऽम्लद्रव्यस्कन्धः । धात्रीफ[लं] मामलकम् । अम्लीका—आंविली, चुक्रिका चूक[ा] मातुलुङ्गं बीजपूरम् । रजतं—रौप्यम् । तक्र[ं] दधित् । चुक्रं—शुक्तं । पालेवतं—चोचा, दाडि[ग]मम्लवेतसः, आम्रश्चूतः सहकारः, कपित्थम्, क[र]मर्दकम् ( करौंदा ) ॥ १७ ॥

हे०—अम्लस्कंधमाह—अम्लिका—चिंचा, रजतं रूप्यं, चुक्रं शुक्तम् । संग्रहे तु कोशाम्रवृक्षाम्लकुवललकुचपालेवतदंतशठधवधन्वनकोलबदरऐरावतप्राचीनामलकतिलकंटकमस्तुधान्याम्लमद्यानीति ॥ १७ ॥

अथ लवणस्कन्धमाह—

**वरं सौवर्चलं कृष्णं बिडं सामुद्रमौद्भिदम् ।**
**रोमकं पांसुजं शीसं क्षारश्च लवणो गणः १८॥**

स०—वरं सैंधवं लवणश्रेष्ठत्वात् । क्षारः स्वार्जिकादिः ॥ १८ ॥

प०—वरादिक्षारपर्यन्तो लवणो गणः । वरं सैन्धवं लवणम् । सौवर्चलं—रुचकम् । कृष्णं काललवणम् । बिडं कृत्रिमं ज्ञेयम् । पृथिवीभवमौद्भिदम् । सीसं नागम् । क्षाराश्च स्वर्जिकासाजक्षारयवक्षारप्रभृतयः ॥ १८ ॥

हे०—लणवस्कंधमाह—वरं सैंधवं, कृष्णं कृष्णलवणं, सीसं धातुभेदः ॥ १८ ॥

तिक्तस्कन्धं वक्ति—

**तिक्तः पटोली त्रायंती वालकोशीरचंदनम् ।**
**भूनिंबनिंबकटुकातगरागुरुवत्सकम् ॥**
**नक्तमालद्विरजनीमुस्तमूर्वाटरूषकम् ।**
**पाठापामार्गकांस्यायोगुडूचीधन्वयासकम् ॥**
**पंचमूलं महद्व्याघ्र्यौ विशालाऽतिविषा वचा१९**

स०— नक्तमालः करंजः । कांस्यं लोहभेदः । अयो लोहम् ॥ १९ ॥

प०—पटोलादिवचापर्यन्तस्तिक्तो गणः । भूनिम्बः किरातः, तिक्तः । नक्तमालः—करञ्जः । द्विरजनी—हरिद्रा, पिण्डहरिद्रा । आटरूषकः—वासकः । पाठा—मदनफलम् । कांस्यं लोहभेदः । अयः कृष्णलोहम् । धन्वयासो—यवासकः । महत् पञ्चमूलम् । बिल्वकाश्मर्येत्यादि । व्याघ्र्यौ बृहती कण्टकारिकेति ॥ १९ ॥

हे०—तिक्तस्कंधमाह—वत्सकः कटुजः, नक्तमालः करंजः, द्विरजनी हरिद्राद्वयं, कांस्यायसी धातुविशेषौ, धन्वयासको दुरालभा, महत्पञ्चमूलं बिल्वादि, व्याघ्र्यौ क्षुद्रा, बृहती च । विशाला इंद्रवारुणी । संग्रहे तु नलदक्तमालसुषवीज्योतिष्मतीवरुणाऽजशृंगीत्रायमाणाकटुकाकिराततिक्तकरवीरविकंकतार्ककाकमाचीवैजयंतीवेतसद्पत्रपर्णसुमनःसोमवल्कमदनफलानि पटोलादिशाकवर्ग इति ॥ १९ ॥

कटुस्कन्धमाह—

**कटुको हिंगुमरिचकृमिजित्पंचकोलकम् ।**
**कुठेराद्या हरितकाः पित्तं मूत्रमरुष्करम् २० ॥**

स०—पित्तं मूत्रं छागादीनाम् । उपलक्षणं चैतत् । अन्यानि संग्रहोक्तानि च मनःशिलासर्षपकुष्ठादीनि बोध्यानि ॥ २० ॥

प०—हिङ्ग्वादिररुष्करपर्यन्तोऽयं गणः कटुकस्कन्धः । कृमिजित् विडंगम् । पञ्चकोलं "पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः" कुठेराद्या हरितकाः कुठेरप्रभृतयो हरितकवर्गपठिताः कुठेरशिग्रुसुरसा इत्यादयः । पित्तं प्राणिनां मृगपक्षिप्रभृतीनां सम्बन्धि । मूत्रं गोजाविमहिषीणां सम्बन्धि अष्टविधमरुष्करं भल्लातकम् ॥ २० ॥

हे०—कटुकस्कंधमाह—कृमिजिद्विडंगम् । कुठेरशिग्रुसुरसेत्यादिवर्गोक्ताः हरितकाः । मांसाशिनां प्रसिद्धो मृगाद्यवयवभेदः पित्तम् । अरुष्कारो भल्लातकम् । संग्रहे तु तेजोवतीहस्तपिप्पलीमूलकसर्षपलशुनपलांडुकरंजमनःशिलाऽऽलदेवदारुकुष्ठैलासुरसचोरकरेणुका इति ॥ २० ॥

कषायस्कन्धमाह—

**वर्गः कषायः पथ्याऽक्षं शिरीषः खदिरो मधु ।**
**कदंबोदुंबरं मुक्ताप्रवालांजनगैरिकम् ।**
**बालं कपित्थं खर्जूरं बिसपद्मोत्पलादि च २१॥**

स०—आदिशब्देन प्रियंगुरोध्रकट्वंगादीनि गृह्यन्ते २१

प०—पथ्यादिरुत्पलपर्यन्तो वर्गोऽयं कषायः । द्रव्यस्कन्धः । पथ्या—हरीतकी । अक्षं—बिभीतकम् । मधु—माक्षिकम् । उदुम्बरं—कृमिफलम् । मुक्ता—मुक्ताफलम् । प्रवालं—विद्रुमम् । अञ्जनं—स्रोतोऽञ्जनम् । गैरिकं—सुवर्णगैरिकम् । बालं कपित्थं खर्जूरम्—आमं कपित्थम्, तरुणखर्जूरम्॥ २१ ॥

हे०—कषायस्कंधमाह-पथ्या हरीतकी, अक्षो बिभीतकः, मुक्ता मुक्ताफलं, प्रवालं विद्रुमम् । बालमिति कपित्थखर्ज-

१ "कोशाम्ल" इति खपुस्तके वर्तते ।

[illegible]णम् । संग्रहे तु प्रियंग्वनंतारोध्रकट्वंगकट्फल-[illegible]धातकीपुष्पपद्मापद्मकनागकेसरकुमुद-[illegible]कवटकविकंकतजंब्वाम्रास्थ्यश्वत्थमोचर[illegible]सप्तपर्णस्यंदनासनसल्लकीशालतालपिया-[illegible]जिंगिणीबदरीकदरारिमेदकाशकसेरुवं-[illegible]शमीशणशंखनाभिमेषशृंगीव-[illegible]भूर्जार्जुनाजकर्णवरणकमृणालप्रभृतीति । मधु-[illegible] आदिशब्दोऽम्लादिस्कंधेऽप्यनुवर्तते । तेन अनु-[illegible] स्वयमूह्यानि ॥ २१ ॥

इदानीमेषां गुणनिरूपणं करोति—

**मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।**
**मुद्गाद्गोधूमतः क्षौद्रात्सिताया जांगलामिषात् २२**

स०—प्रायेण मधुरं द्रव्यं कफकृद्भवति शाल्यादी-न्पुराणान् वर्जयित्वा । प्रायोग्रहणं तैलमकुष्टादीनां व्यभिचारदर्शनात् । एवमुत्तरत्रापि प्रायोग्रहणस्य प्रयोजनं वेद्यम् ॥ २२ ॥

प०—सिताया जाङ्गलामिषात् मधुरं यद्यद् द्रव्यादि पुनः तत्सर्वं प्रायो बाहुल्येन श्लेष्मलं कफकारि । पुराणशालियवमुद्गगोधूमक्षौद्रशर्कराजाङ्गलमांसादिकेतानि वर्जयित्वा, अन्यतमं मधुरं श्लेष्मलम् ॥ २२ ॥

हे०—अथ सामान्योक्तरसकर्मापवादः । तत्र मधुरस्याह—जीर्णशाल्यादिभ्य ऋते विना मधुरं श्लेष्मलं, जीर्णादिति शाल्यादीनां चतुर्णां विशेषणम् । जीर्णात्संवत्सरो-[illegible] । [illegible] शर्करा, प्रायोग्रहणात् जीर्णशाल्यादीनां [illegible] तैलादीनामप्यश्लेष्मलत्वात् । एवमम्लादिष्वपि वाच्यम् ॥ २२ ॥

**प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।**
**अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैंधवात् २३॥**

स०—अम्लं द्रव्यं प्रायः पित्तकृद्दाडिमामलके हित्वा । लवणं द्रव्यं प्रायश्चक्षुषोऽपथ्यं सैन्धवं वर्जयित्वा ॥ २३ ॥

प०—तद्वर्जयित्वाऽन्यदम्लं पित्तकारि प्रायो बाहुल्येन सर्वं लवणद्रव्यमचक्षुष्यं चक्षुषोऽपथ्यम् । सैन्धवादन्यत्र सैन्धवं लवणं वर्जयित्वा । तस्माल्लवणं सैन्धवं चक्षुष्यमित्यर्थादुक्तम् ॥ २३ ॥

हे०—अम्लरसापवादमाह—प्रायोऽम्लमिति । लवणस्यापवादमाह—अपथ्यमिति ॥ २३ ॥

**तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।**
**ऋतेऽमृतापटोलीभ्यां शुंठीकृष्णारसोनतः २४**

स०—तिक्तं द्रव्यं कटु च प्रायेणावृष्यं वातकृ[illegible] गुडूच्यादीन् हित्वा ॥ २४ ॥

प०—तिक्तं द्रव्यं तथा कटुकं च सर्वं भूयि[illegible] बाहुल्येन अवृष्यं न शुक्रकारि । वातकोपनं वा[illegible] कोपि ऋतेऽन्यत्रामृतापटोलीभ्याम् । तद्वत्तिक्ता[illegible] द्रव्याणां मध्ये द्रव्यद्वयं वर्जयित्वा, कटुकं पु[illegible] शुण्ठीकृष्णारसोनतः ऋते तानि त्रीणि द्रव्या[illegible] वर्जयित्वा, अन्यद् द्रव्यमपथ्यं वातकोपनम् । ते[illegible] पञ्चसु न वृष्यत्वं वातघ्नत्वं नास्ति । अमृता-गुडूची कृष्णा-पिप्पली । रसोनो-लशुनः ॥ २४ ॥

हे०—तिक्तकटुकयोरपवादः । अमृतापटोलीभ्[illegible] विना तिक्तमवृष्यं वातलं च । तद्वत् शुंठ्यादीन् वि[illegible] कटुकम् ॥ २४ ॥

**कषायं प्रायशः शीतं स्तम्भनं चाऽभयामृते२[illegible]**

स०—कषायं द्रव्यं प्रायेण शीतवीर्यं स्तम्भ[illegible] च भवति हरीतकीं वर्जयित्वा ॥ २५ ॥

प०—कषायं द्रव्यं शिरीषादि सर्वं प्रायशो भूयि[illegible] शीतं शतिवीर्यं स्तम्भनं च शकृदादि स्तम्भयति अभयां विना—हरीतकीं वर्जयित्वा । सा पुनरु[illegible]ष्णवीर्या सरा च ॥ २५ ॥

हे०—कषायस्यापवादमाह—कषायमिति । अभ[illegible] हरीतकी ॥ २५ ॥

**रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ।**
**तिक्तः कषायो मधुरस्तद्वदेव च शीतलाः २६।**

स०—कट्वम्ललवणा रसा यथोत्तरमुष्णवीर्याः । कटु[illegible]रुष्णः । अम्ल उष्णतरः । लवण उष्णतमः । एवमु[illegible]त्तरत्राऽपि यथोत्तरत्वं योज्यम् । तिक्तादयश्च तद्वदे[illegible] यथोत्तरं शीतवीर्याः । तेन तिक्तः शीतवीर्यः कषायः शीतवीर्यतरः । मधुरः शीतवर्यतम इति स्थितम् ॥ २६ ॥

प०—कट्वम्ललवणा रसा उत्तरमतिक्रम्य यथोत्तरमुष्णा उष्णवीर्याः । कटुक उष्णः । अम्ल उष्णतरः । लवण उष्णतमः । तिक्तकषायमधुरा रसास्तद्वदेव यथो-

तरमेव शीतलाः शीतवीर्याः। तिक्तः शीतः। कषायः शीततरः। मधुरः शीततमः ॥ २६ ॥

हे०—अथ रसानां गुणतारतम्यं, तत्र वीर्यतारतम्यमाह-कटुको रस उष्णवीर्यभूतोऽम्लस्ततोऽपि लवणः। तिक्तो रसः शीतवीर्यस्ततः कषायस्ततोऽपि मधुरः। तद्वदेवेति। वीर्येण यथोत्तरं च ॥ २६ ॥

**तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा २७**

स०—तिक्तकटुकषाया रूक्षा विष्टंभकृतश्च ।तथेति। यथोत्तरमित्यर्थः ॥ २७ ॥

प०—तिक्तकटुकषायरसा रूक्षाः, बद्धमला बद्धपुरीषास्तथेति यथोत्तरमेव। तिक्तो, रूक्षो, बद्धमलश्च। कटुको रूक्षतरः, बद्धमलतरः। कषायो रूक्षतमो, बद्धमलतमश्च ॥ २७ ॥

हे०—तिक्तो रूक्षो बद्धमलश्च। ततः कटुस्ततोऽपि कषायः ॥ २७ ॥

**पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः २८**

स०—पट्वादयः स्निग्धा निःसारितविण्मूत्रवाताश्च। यथेत्यत्राऽपि वर्तते ॥ २८ ॥

प०—पटुर्लवणो रसः। लवणाम्लमधुरा रसा सृष्टविण्मूत्राः। सृजन्ति बहिःक्षिपन्ति विण्मूत्रमारुतान् शकृन्मूत्रवातान्। यथोत्तरमेवात्र वर्तते। लवणः स्निग्धः सृष्टविण्मूत्रमारुतश्च। अम्लःस्निग्धतरः,सृष्टविण्मूत्रमारुततरः। मधुरो। स्निग्धतमः, सृष्टविण्मूत्रमारुततमश्च ॥ २८ ॥

हे०—लवणः स्निग्धः, सृष्टमलश्च ततोऽम्लस्ततोऽपि मधुरः ॥ २८ ॥

**पटोः कषायस्तस्माच्च मधुरः परमं गुरुः २९॥**

स०—लवणात्कषायो गुरुतरः। कषायान्मधुरः परमं गुरुः। अतिशयेन गुरुरित्यर्थः ॥ २९ ॥

प०—पटोर्लवणात् कषायो रसो गुरुः। तस्मात्कषायान्मधुरो रसः परमतिशयेन गुरुः ॥ २९ ॥

हे०—लवणो गुरुस्ततः कषायस्ततोऽपि मधुरः ॥२९॥

**लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ३०**

स०—अम्लो लघुस्तस्मादम्लात् कटुर्लघुतरस्तस्मात् कटोस्तिक्तो लघुतमः ॥ ३० ॥

प०—लवणादम्लमधुरौ कार्यौ स्यातां यथाक्रमम्। कषायोर्निरनुबन्धस्य पाकशान्तिप्रसिद्धये। प्राक् तिक्तो मधुरः पश्चात् कषायोऽन्ते विधीयते। तैः पित्तं शममभ्येति। पक्वाच्छ्रीकृतः पिण्डितः कटुकः प्राकृतस्तिक्तकषायोऽन्ते विधीयते। तैः श्लेष्मा शममभ्येति। पक्वाच्छ्रीकृतः पिण्डितः। अम्लो रसो लघुस्तस्मादम्लात् कटुको रसो लघुः। कटुकादपि तिक्तरसो लघुः ॥ ३० ॥

हे०—अम्लो लघुस्ततोऽपि कटुकस्ततोऽपि तिक्तकः। अत्रापि प्राय इत्यनुवर्तते। तेनाम्लस्याप्यामलकस्य शीतवीर्यत्वमित्यादि स्वयमूह्यम्, अतएव मधुराम्ललवणाः स्निग्धा गुरवश्च। कटुतिक्तकषायरूक्षा लघवश्चेति सुश्रुतोक्तमम्लस्य गुरुत्वं, कषायस्य लघुत्वमप्युपपन्नम् ॥ ३० ॥

इदानीं रसानामाधारद्वारेण संयोगान् कल्पनां च विभजन्नाह—

**संयोगाः सप्तपंचाशत्कल्पना तु त्रिषष्टिधा ॥**
**रसानां यौगिकत्वेन यथास्थूलं विभज्यते ३१ ॥**

स०—वक्ष्यमाणया रीत्या रसानां योगाः सप्तपंचाशद्विभज्यंत इति वचनविपरिणामेन संबंधः। कल्पना पुनरेषां त्रिषष्टिधा विभज्यते कथं कृत्वा कल्पना विभज्यते। यथास्थूलं स्थूलानतिक्रमेण व्यक्तरसास्वादानुरूपतया न पुनर्यथासूक्ष्मम्। तथाहि। रसानुरसकल्पनया तरतमयोर्वशाच्च रसानां कल्पना क्रियमाणाऽऽनंत्यमुपैति। तस्माद्यथास्थूलं रसानां कल्पना त्रिषष्टिधा विभज्यते। तथा यौगिकत्वेन शरीरोपयोग्यत्वेन ॥ ३१ ॥

प०—रसानां भेदाः—साधारणद्रव्याणां संयोगाः सप्तपञ्चाशत् वक्ष्यमाणतया रीत्या विभज्यन्ते। पृथक् क्रियन्ते भिद्यन्ते। कल्पना तु त्रिषष्टिधा। विभज्यत इति सम्बन्धः। कथं कृत्वा रसानां कल्पनाः त्रिषष्टिधा विभज्यन्ते। यथास्थूलम्। स्थूलमपेक्ष्य स्थूलानतिक्रमेण व्यक्तरसस्वादानुभवरूपतया न पुनर्यथासूक्ष्मं कृत्वा रसानुरसतारतम्यादिभेदेन रसभेदा इति यावत् ॥ ३१ ॥

हे०—रसानां संयोगकल्पनयोर्विभागं प्रतिजानीते-रसानां संयोगाः सप्तपंचाशद्भवंति। कल्पना तु त्रिषष्टिधा भवति। तदुभयमपि विभज्यते विभागेन कथ्यते। कथं यथास्थूलं सूक्ष्माणां संयोगानां रसानुरसभेदेनानंतत्वात्। केन हेतुना विभज्यते यौगिकत्वेन। यतस्तदुभयं यौगिकं

लोहविचारणादिप्रयोगि, अतो विभज्यते संयोगान् विभजति ॥ ३१ ॥

इदानीं रससंयोगानां व्याख्यानं विभक्तिकामाह—

**एकैकहीनांस्तान्पंच पंच यांति रसा द्विके ।**
**त्रिके स्वादुर्दशाम्लः षट् त्रीन्पटुस्तिक्त एककम् ।**
**चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृत् ।**
**पंचकेष्वेकमेवाम्लो मधुरः पंच सेवते ।**
**द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ३२ ॥**

स०—द्विके परिमाणे रसाधारद्रव्यसंबंधिनि संयोगे पंच रसा मधुराम्ललवणतिक्तकटुकास्तान् पंचाम्ललवणतिक्तकटुकषायान् यांति संयुज्यंते । किंभूतानेकैकेन हीना विनाकृता एकैकहीनास्तान् । येनैकेन युक्तांस्तद्वियुक्तानित्यर्थः।अत्र पंचानां रसानां पर्यायेण प्रत्येकमेकैकहीनानां च शक्तिमत्त्वेनैककर्तृत्वेन च संबंधो वेद्यः । अत एव चतुर्द्विके पंचदशप्रकाराविति यद्वक्ष्यति तदुपपन्नम् । एवं मधुरोऽम्लादीनम्लो लवणादीन् लवणस्तिक्तादींस्तिक्तः कटुकषायौ कटुकषायं यातीति स्थितम् । द्विक इति द्वौ परिमाणमस्य संयोगस्य । संख्यायाः संज्ञेत्यादिपरिमाणानुवृत्तेः परिमाणार्थे संख्यायाः अतिशदंतायाः कनिति कन् । एवं त्रिकादिषु वक्ष्यमाणेषु लक्षणं योज्यम् । द्विरसद्रव्यसंयोगे पंचदश भेदा भवंति । यथा मधुरोऽम्लं याति १ मधुरो लवणं २ मधुरस्तिक्तं ३ मधुरः कटुकं ४ मधुरः कषायम् ५ । अम्लो लवणं याति १अम्लस्तिक्तम् २ अम्लः कटुकम् ३ अम्लः कषायम् ४ । लवणस्तिक्तं १ लवणः कटुकं २ लवणः कषायम् ३ । तिक्तः कटुकं १ तिक्तः कषायम् २। कटुः कषायमिति १ । अत्र च मधुरस्य गन्तृत्वमेव न गम्यत्वं हीनत्वयोगाऽभावात् । कषायस्य गम्यत्वमेव न गन्तृत्वमन्त्यत्वात् । एवं द्विरससंयोगे पंचदश । त्रिके त्रिरसाधारद्रव्यसम्बन्धिनि संयोगे स्वादुर्मधुरो दश संयोगान् याति । यथा । मधुरोऽम्ललवणं १ मधुरोऽम्लतिक्तकं २ मधुरोऽम्लकटुकं ३ मधुरोऽम्लकषायम् ४ । स एव मधुरोऽम्लत्यागेन तत्स्थाने लवणयुक्तस्तिक्तादिभिस्त्रिभिः क्रमेणाऽन्वितस्त्रीन् संयोगान् याति । मधुरलवणतिक्तकः १ मधुरलवणकटुकः २ मधुरलवणकषायः ३ । स एव लवणत्यागेन तत्स्थाने तिक्तयुक्तः कटुकषायाभ्यां क्रमेणान्वितो द्वौ संयोगौ याति । मधुरतिक्तकटुकः १ मधुरतिक्तकषायः २ । स एव तिक्तत्यागेन तत्स्थाने कटुकान्वित एकं संयोगं याति । मधुरकटुकषायः १। एवं मधुरो दशसंयोगान् याति । अम्ल इत्यादि । त्रिक इति वर्तते । अम्लः षट् संयोगान् याति । यथा । अम्ललवणतिक्तः १ अम्ललवणकटुकः २ अम्ललवणकषायः ३ । स एवाऽम्लो लवणत्यागेन तत्स्थाने तिक्तान्वितः कटुकषायाभ्यां क्रमेण युक्तो द्वौ संयोगौ याति । अम्लतिक्तकटुकः १ अम्लतिक्तकषायः २ । एवं तिक्तत्यागेनैकं संयोगं याति । अम्लकटुकषायः १ । इत्यम्लः षट् । त्रीन् पटुरिति लवणस्तिक्तयुक्तः कटुकषायाभ्यां क्रमेणाऽन्वितो द्वौ संयोगौ याति । लवणतिक्तकटुकः १ लवणतिक्तकषायः २ । स एव तिक्तत्यागेनैकं याति । लवणकटुकषायः १ । एवं लवणस्त्रीन् संयोगान् याति । तिक्त एकमेव संयोगं याति । तिक्तकटुकषायः १ । एवं त्रिकसंयोगे विंशतिः । चतुष्केष्वित्यादि । चतुष्करससंयोगेषु स्वादुर्दश संयोगान् याति । तत्र मधुरः साम्लो लवणादिभिः षट् संयोगान् याति । यथा । मधुराम्ललवणतिक्तः १ मधुराम्ललवणकटुकः २ मधुराम्ललवणकषायः ३ मधुराम्लतिक्तकटुकः ४ मधुराम्लतिक्तकषायः ५ मधुराम्लकटुकषायः ६ । स एव मधुरोऽम्लत्यागेन तत्स्थाने लवणान्वितस्त्रीन् संयोगान् याति । मधुरलवणतिक्तकटुकः १ मधुरलवणतिक्तकषायः २ मधुरलवणकटुकषायः ३ । स एव लवणत्यागेन तत्स्थाने तिक्तान्वित एकं संयोगं याति । मधुरतिक्तकटुकषायः १ । एवं चतुष्केषु मधुरो दश संयोगान् याति । चतुरोऽम्ल इत्यादि । चतुष्क इति वर्तते । अम्लः सलवणस्तिक्तादिभिस्त्रीन् संयोगान् याति । अम्ललवणतिक्तकटुकः१ अम्ललवणतिक्तकषायः २

अम्ललवणकटुककषायः ३ । स एव लवणत्यागेन तत्स्थाने तिक्तान्वित एकं संयोगं याति । अम्लतिक्तकटुककषायः १। एवं चतुष्केष्वम्लश्चतुरः । पटुः सकृत्। पटुर्लवणः सकृदेकं भेदं याति । लवणतिक्तकटुकषायः १ । एवं चतुष्केषु पंचदश संयोगभेदाः । पंचकेष्वेकमेवाम्ल इति । पंचकेष्वम्लो रस एकमेव भेदं याति । अम्ललवणतिक्तकटुकषायः १ । मधुरः पंच सेवते । मधुरो रसः पंच संयोगान् सेवते । अम्लत्यागान्मधुरलवणतिक्तकटुकषायः १ लवणत्यागान्मधुराम्लतिक्तकटुकषायः २ तिक्तत्यागान्मधुराम्ललवणकटुकषायः ३ कटुकत्यागान्मधुराम्ललवणतिक्तकषायः ४ कषायत्यागान्मधुराम्ललवणतिक्तकटुकं इति ५ । पद्येन च सुखस्मृत्यै रसभेदान् शृणुध्व मे । मधुरोऽम्लेन पटुना तिक्तेन कटुकेन च । १ । कषायेण पृथक् सार्धमम्लः सुलवणेन च । तिक्तेन कटुना सार्धं कषायेण पृथक् सह । २ । पटुस्तिक्तेन कटुना कषायेण पृथक् सह । तिक्तस्तु कटुना सार्धं कषायेण पृथक् तथा । ३ । कटुकस्तु कषायेण द्विसंयोग इति स्मृताः । दश पंच च भेदास्तु संख्याता विंशतिस्त्रिके । ४ । मधुराम्लौ तु पटुना तिक्तेन कटुना तथा । कषायेण तथा सार्धं तथा स्वादुपटू पृथक् । ५ । तिक्तेन कटुकेनाऽपि कषायेण तथा सह । स्वादुतिक्तौ तु कटुना कषायेण पृथक् सह । ६ । स्वादूषणौ कषायेण स्वादोरेवं दश त्रिके । भेदाः स्युरम्ललवणौ तिक्तेन कटुना पृथक् । ७ । कषायेण तथा सार्धमम्लतिक्तौ पृथक् सह । कटुकेन कषायेण तथाम्लकटुकौ सह । ८ । कषायेणेति षट् प्रोक्ता भेदा अम्लस्य तु त्रिके । पटुतिक्तौ तु कटुना कषायेण पृथक् सह । ९ । पटूषणौ कषायेण भेदा इति पटोस्त्रयः । तिक्तोषणौ कषायेण तिक्तस्यैवं सकृत्स्मृतः । १० । त्रिके भेदा इति प्रोक्ताश्चतुष्के दश पंच च । स्वाद्वम्ललवणं सार्धं तिक्तेन कटुकेन च । ११ । पृथक्कषायेण तथा मधुराम्लौ सतिक्तकौ । कटुकेन तु संपृक्तौ कषायेण पृथक् तथा । १२ । स्वाद्वम्लकटुकाः सार्धं कषायेणेति षट् स्मृताः । सप्तमश्चाऽत्र मधुरो लवणोषणतिक्तकैः । १३ । भेदोऽष्टमो मतः स्वादुकटुतिक्तकषायकैः । नवमस्तत्र मधुरः पटूषणकषायकैः । १४ । दशमोऽत्र भवेत्स्वादुतिक्तोषणकषायकैः । दश भेदा भवंत्येवं मधुरेण चतुष्कके । १५ । कटुतिक्ताम्ललवणैर्भेद एकश्चतुष्कके । द्वितीयस्त्वम्ललवणकषायकटुकैः स्मृतः । १६ । तृतीयोऽत्र भवेदम्लपटुतिक्तकषायकैः । चतुर्थोऽत्र भवेदम्लतिक्तोषणकषायकैः । १७ । एवमम्लेन भेदाः स्युश्चत्वारोऽत्र चतुष्कके । पटुनैकोऽत्र लवणतिक्तोषणकषायकैः । १८ । एवं पंचदश ख्याताश्चतुष्करससंख्यया । षड् भेदान् पंचके प्राहुस्तान्वक्ष्यामि विभागशः । १९ । एको भेदोऽम्ललवणतिक्तोषणकषायकैः । द्वितीयः स्वादुलवणतिक्तोषणकषायकैः । २० । तृतीयस्त्वम्लमधुरतिक्तोषणकषायकैः । चतुर्थस्त्वम्लमधुरपटूषणकषायकैः । २१ । पंचमस्त्वम्लमधु॰पटुतिक्तकषायकैः । षष्ठो भेदोऽम्लमधुरलवणोषणतिक्तकः ।२२। षड् भेदा इति निर्दिष्टाः पंचके प्रविभागशः । भेदः स्वाद्वम्ललवणतिक्तोषणकषायकैः । २३ । एक एव षड्रसेन पृथक्त्वेन तु षट् स्मृताः । स्वादुरम्लोऽथ लवणस्तिक्तश्च कटुकस्तथा । २४ । कषाय इति भेदाः स्युः सर्वतोऽत्र त्रिषष्टिधा । क्षीरं सुरा बिडं निंबश्चव्या पथ्या रसाश्रयम् । २५ । द्रव्यं स्वादु रसादीनां षण्णां विद्धि यथाक्रमम् । द्रव्यं द्रव्यांतरेणैव योजयेद्धि रसादिषु । २६ । धात्रीफलं शर्करया लवणेनाऽऽर्द्रकं तथा । एवमादीनि द्रव्याणि योजयेद्भिषगुत्तमः । २७ । कानिचिद् द्विरसादीनि द्रव्याणि स्युः स्वभावतः । यथैणः षड्रसः कृष्णो यथा पंचरसाऽभया । २८ । मद्यं पंचरसं यद्वत्तिलो यद्वच्चतूरसः । एरंडतैलं त्रिरसं माक्षिकं द्विरसं यथा । २९ । घृतमेकं स्वादुरसं मधुरादिविभागतः । दिङ्मात्रादुदितादेवं शेषमूह्यं मनीषिणा । ३० । ॥ ३२ ॥

प०–तानेव संयोगानाह द्विकादिरससंयोगभेदेन–द्वाभ्यां द्वाभ्यां रसाभ्यां संयोगः द्विकः तस्मिन् द्विके संयोगे रसा धारणद्रव्यसम्बन्धिनि ते पञ्चदश रसा एकैकेन हीना विभागकृतेन मधुरेण हीना अम्लादयः । लवणेन हीनास्तिक्तादयः । तिक्तेन

हीनौ कटुकषायौ। कटुकेन हीनः कषायः। एवमेकैकहीनाः पञ्चरसाः मधुरादयो गन्तारस्तद्यथा—(१) मधुराम्लः, (२) मधुरलवणः, (३) मधुरतिक्तः, (४) मधुरकटुकः, (५) मधुरकषायः इत्येवं मधुरः पञ्चभेदान्। मधुरसपेक्ष्याम्लस्तावत्। द्विके एकैकहीनाः सन्तः चतुरो भेदान् याति। तद्यथा—(१) अम्ललवणः,(२) अम्लतिक्तः, (३)अम्लकटुकः, (४) अम्लकषायः इत्येवमम्लः चतुरो भेदान् याति। लवणो द्विके अम्लापेक्षयैकैकहीनस्त्रीन् भेदान् याति। तद्यथा—(१) लवणतिक्तः (२) लवणकटुकः (३) लवणकषायः। तिक्तौ द्विके लवणापेक्षयैकैकहीनौ द्वौ भागौ याति। तद्यथा—(१) तिक्तकटुकः (२) तिक्तकषायः इति। कटुको द्विके तिक्तापेक्षयैक एकं भेदं याति कटुकषाय इति। एवमेते द्विके पञ्चदश भेदा भवन्ति। त्रिके रसभेदे मधुरो दशभेदान् याति। तद्यथा—(१) मधुराम्ललवणः (२) मधुराम्लतिक्तः (३) मधुराम्लकटुकः (४) मधुराम्लकषायः (५) मधुरलवणतिक्तः (६) मधुरलवणकटुकः (७) मधुरलवणकषायः (८) मधुरतिक्तकटुकः (९) मधुरतिक्तकषायः (१०) मधुरकटुककषायः एवं दश। अम्लः षडिति। अम्लो रसस्त्रिके षड्भेदान् याति। तद्यथा—(१) अम्ललवणतिक्तः (२) अम्ललवणकटुकः (३) अम्ललवणकषायः (४) अम्लकटुतिक्तः (५) अम्लतिक्तकषायः (६) अम्लकटुकषायः एवं षड्भेदाः। त्रीन् पटुरिति। लवणोरसस्त्रीन् भेदान् याति। तद्यथा—(१) लवणतिक्तकटुकः (२) लवणतिक्तकषायः (३) लवणकटुकषायः एवं त्रयो भेदाः। तिक्त एकमिति। तिक्तो रस एकं भेदं यातीति तिक्तकटुकषाय इति। एवं त्रिके विंशतिभेदा भवन्ति। चतुष्केषु चतुष्कभेदेषु दश भेदान् याति। स्वादुर्मधुरः। तद्यथा—(१) मधुराम्ललवणतिक्तः (२) मधुराम्ललवणकटुकः (३) मधुराम्ललवणकषायः (४) मधुराम्लकटुतिक्तः (५) मधुराम्लकटुकषायः (६) मधुराम्लतिक्तकषायः (७) मधुराम्ललवणकटुतिक्तः (८) मधुरलवणतिक्तकषायः (९) मधुरलवणकटुकषायः (१०) मधुरकटुतिक्तकषायः एवं दश भेदाः। चतुरोऽम्ल इति। अम्लो रसश्चतुष्केषु चतुरो भेदान् याति। तद्यथा (१) अम्ललवणाति कटुकः (२) अम्ललवणतिक्तकषायः (३) अम्ललवणकटुकषायः (४) अम्लतिक्तकटुकषायः एवं चतुष्कभेदाः पञ्चदश। पञ्चकभेदेष्वम्लो रस एकं भेदं सेवते। तद्यथा—(१) अम्ललवणकटुतिक्तः (२) मधुराम्ललवणकटुकषायः (३) मधुराम्ललवणातिक्तकः (४) मधुराम्लतिक्तकटुकषायः (५) मधुरलवणतिक्तकटुकषायः। षडास्वादं षड्रसभेदमेकं याति। मधुराम्ललवणकटुतिक्तकषायः इत्येको भेदः। एवं सप्तपञ्चाशत् संयोगाः। असंयुक्ता द्वित्र्यादिसंयोगहीनाः केवला एव षड्रसाः षड्भेदाः भवन्ति। मधुर–अम्ल–लवण–तिक्त–कटु–कषायाः ते कल्पनयाऽनुपयुज्यन्त इति तैः सह कल्पनास्नेहविधौ त्रिषष्टिधा भवन्तीति। यथोक्तं—रसभेदैकैकद्वाभ्यां चतुःषष्टिविचारणाः। स्नेहस्याद्याभिभूतत्वादल्पत्वाच्च क्रमात् स्मृताः॥३२॥

हे०-द्विके क्रियमाणे रसा एककैहीनाः कार्याः ते च तान् संयोगान् पञ्चदश याति। त्रिके क्रियमाणे स्वादुर्दशसंयोगान् याति। अम्लः षट् लवणस्त्रीन् तिक्त एकम्। चतुष्के क्रियमाणे षडास्वादं द्रव्यमेकं भेदं सेवते। तद्यथा—मधुराम्लौ, मधुरलवणौ, मधुरतिक्तौ, मधुरकटुकौ, मधुरकषायौ, अम्ललवणौ, अम्लतिक्तौ, अम्लकटुकौ, अम्लकषायौ, लवणतिक्तौ, लवणकटुकौ, लवणकषायौ, तिक्तकटुकौ, तिक्तकषायौ, मधुराम्ललवणाः, मधुराम्लतिक्ताः, मधुराम्लकटुकाः, मधुराम्लकषायाः, मधुरलवणातिक्ताः, मधुरलवणकटुकाः, मधुरलवणकषायाः, मधुरातिक्तकटुकाः, मधुरातिक्तकषायाः, मधुरकटुकषायाः, अम्ललवणतिक्ताः, अम्ललवणकटुकाः, अम्ललवणकषायाः, अम्लतिक्तकटुकाः अम्लतिक्तकषायाः, अम्लकटुकषायाः, लवणतिक्तकटुकाः, लवणतिक्तकषायाः, लवणकटुकषायाः, तिक्तकटुकषायाः, मधुराम्ललवणातिक्ताः, मधुराम्ललवणकटुकाः, मधुराम्ललवणकषायाः, मधुराम्लतिक्तकटुकाः, मधुराम्लतिक्तकषायाः, मधुराम्लकटुकषायाः, मधुरलवणतिक्तकटुकाः, मधुरलवणातिक्तकषायाः, मधुरलवणकटुकषायाः, मधुरातिक्तकटुकषायाः, अम्ललवणतिक्तकटुकाः, अम्ललवणतिक्तकषायाः, अम्ललवणकटुकषायाः, अम्लतिक्तकटुकषायाः, लवणातिक्तकटुकषायाः, अम्ललवणतिक्तोषणकषायाः, लवणतिक्तकटुकाः, मधुराम्ललवणतिक्तकषायाः, मधुराम्ललवणकटुकषायाः, मधुराम्लतिक्तकटुकषायाः, मधुरलवणतिक्तकटुकषायाः, अम्ललवणतिक्तकटुकषायाः, एकं द्रव्यं षडास्वादं मधुराम्ललवणतिक्तकटुकषायाः। ननु एता-

वेतश्चेद्रसभेदास्तत्कथमुक्तं षड्रसा इत्याह—असंयुक्ताश्चेति ॥ ३२ ॥

संप्रति एकैकहीनानित्यादिना ग्रंथेन ये रसानां भेदाः शास्त्रकृतोक्तास्तानेव संक्षेपेण प्रकटयितुमाह-

**षट् पंचकाः षट् च पृथग्रसाः स्यु-**
**श्चतुर्द्विकौ पंचदशप्रकारौ ।**
**भेदास्त्रिका विंशतिरेकमेव**
**द्रव्यं षडास्वादमिति त्रिषष्टिः ॥ ३३ ॥**

स०-पंचकरसानां योगाः षट्संख्याः। पंचकेष्वेकमेवाम्लो मधुरः पंच सेवत इति षट् च पृथग्रसा असंयुक्ताश्च षड्रसा इति । चतुरित्यादि । चतुष्कभेदः पंचदशप्रकारः । द्विकभेदश्च पंचदशप्रकारः । चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृत्। एवं पंचदश प्रकाराः । एकैकहीनांस्तान् पंच पंच यांति रसा द्विके इति वचनात् । भेदा इत्यादि त्रिकास्त्रिभेदभिन्ना भेदा विंशतिः । त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककमिति विंशतिः ।एकमेव द्रव्यं षडास्वादम् । इतीत्थं रसानां भेदास्त्रिषष्टिः ॥ ३३ ॥

प०—भेदानां सुखस्मरणार्थं श्लोकमाह—पञ्चकरसानां कियन्तः संयोगा इति षट् पञ्चकेऽप्येकमेवाम्लो मधुरः पञ्चकमेव । एवं षट्पञ्चकाः संयोगाः भेदतः षट् पृथग्रसाः स्युः । असंयुक्ताः स्वभावत एव मधुराम्ललवणतिक्तकटुककषाया इत्येव षड्भेदाः भवेयुः । चतुर्द्विकौ पञ्चदशप्रकारौ चतुष्कभेदः पञ्चदशप्रकारः । एवं द्विकः पञ्चदश भेदाः । एवं रसानां त्रिंशद्भेदा भवेयुः । चतुष्केषु दश स्वादुः चतुरोऽम्लः पटुः सकृत् । एवं पञ्चदशभेदः । एकैकहीनास्ते पञ्चदश यान्ति । रसा द्विके भेदभिन्नानामेवं त्रिके विंशतिस्त्रिकभेदभिन्नानां विंशतिभेदा भवेयुः । त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्त्रिक एककम् । एवं विंशतिः । एकमेव द्रव्यं षडास्वादमिति रसानां भेदास्त्रिषष्टिः—सप्तपञ्चाशत् संख्यावच्छिन्नैः कृत्रिमकल्पितैः संयोगैः सह व्याख्याताः। एवं त्रिषष्टिधा रसानां कल्पना व्याख्याता । संयोगिककल्पनात्रिषष्टिविधैव स्यात् । सूक्ष्मं सूक्ष्मं परिकल्पनं येषां तथा तारतम्यपरिकल्पनावशतः ॥ ३३ ॥

हे०-मिथः कल्पनां विभजति । पंचकाः पंचरससंयोगजभेदाः षट् । पृथग्रसभेदाः । चतुष्ककाः पञ्चदश, द्विकाश्च पंचदश । त्रिका विंशतिः । षडास्वादं द्रव्यमेको भेदः इत्येवं त्रिषष्टिकल्पनाभेदाः ॥ ३३ ॥

यथास्थूलं चैषा त्रिषष्टिधा कल्पना ख्याता । संप्रति यथासूक्ष्मं प्रदर्शयितुमाह—

**ते रसानुरसतो रसभेदा-**
**स्तारतम्यपरिकल्पनया च ।**
**संभवंति गणनां समतीता**
**दोषभेषजवशादुपयोज्याः ॥ ३४ ॥**

स०—ते रसभेदास्त्रिषष्टिरूपा रसतो रसवशेन तथाऽनुरसतोऽनुरसवशेन तथा तारतम्यपरिकल्पनाऽयं मधुरोऽयं मधुरतरोऽयं मधुरतम इत्येवंरूपया या तया च गणनां समतीताः संख्यामतिक्रान्ताः संभवंति । दोषेत्यादि । दोषा वातादयो भेषजानि औषधानि । दोषाश्च भेषजानि च दोषभेषजानि तेषां वशोऽनुरोधः सामर्थ्यं वा तस्माद्धेतुभूताद्रसभेदा उपयोज्या न दोषमनपेक्ष्य भेषजं वाऽनपेक्ष्य । एवमेवोपयोज्या इत्यर्थः । तथा च मुनिः । क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित् । दोषौषधादीन् संचिंत्य भिषजा सिद्धिमिच्छतेति । दोषभेषजवशादित्युपलक्षणार्थम् । देशादिवशादपि देशादीन्वीक्ष्य रसभेदा उपयोज्याः । यथा पवने जेतव्ये मधुराम्लौ लवण इति । स्वागता रनभौ गुरुकांता इति ॥ ३४ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुन्दराख्यायां रसभेदीयाख्यो नाम दशमोऽध्यायः॥१०॥

प०—तथा रसानुरसप्रवेशानां संख्येयत्वमेषां प्रदर्शितुमिदमाह—ते त्रिषष्टिरूपाः संख्याभेदा गणनां समतीता बहुत्वाद्गणयितुमशक्याः सम्भवन्ति निष्पद्यन्ते । कथमित्याह-रसानुरसतः । व्यक्तो रसः, अव्यक्तोऽनुरसः किञ्चिद्व्यक्तोऽपि चेक्ष्यते, ताभ्यां रसानुरसाभ्यां यस्मान्मधुरस्याम्लादयोऽनुरसाः अम्लस्य मधुरादयः । तथा मधुरस्याम्ललवणादय

इन्द्रियमादि न केवलं ते इति सामान्यशब्दमित्येषां परामर्शेऽपि सम्प्रयच्छाशतामेव कल्पनाः सम्भवेयुः । रसानुरसभेदादसंख्येयत्वं यावत्। तावत्केवलानामपि च तारतम्यस्य भेदादसंख्येयता केन वार्यते । अतएवानन्तरमाह–तारतम्यपरिकल्पनया च । तारतम्यभेदान् संयुक्तानां केवलानां रसभेदानां तद्यथा–मधुरं मधुरतरं मधुरतमसमीपन्मधुरतममेवमन्येषु योज्यम् । ते रसभेदा दोषभेषजवशादुपयोज्याः । दोषा वातादयः, भेषजं हरीतक्यादि, दोषभेषजानां वशस्तस्माद्दोषभेषजवशादनुरोधात् सामर्थ्याद्वा ते परीक्ष्य प्रयोज्याः । न यथाकथंचिदित्यर्थः । दोषभेषजग्रहणं बोद्धव्यमिति भद्रम् ॥ ३४ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने रसभेदीयाध्यायो दशमः ॥ १० ॥

हे०–उक्तभेदानामवांतरभेदेनानंत्यं दर्शयति–ते रसभेदाः रसानुरसकल्पनया, तारतम्यकल्पनया च गणनां समतीताः संभवंति । यथा–मधुराम्लस्य द्रव्यस्य मधुररसत्वे, अम्लस्यानुरसत्वे, क्वचिदम्लस्य रसत्वे, मधुरस्यानुरसत्वे बहुभेदत्वमित्यादि । तथा–मधुरस्य मधुरतरत्वं मधुरतमत्वं चेत्यादि तारतम्यं, सर्वेषां रसभेदानां यौगिकत्वं दर्शयति–दोषवशाद्भेषजवशाद्वा सर्वेऽपि रसा उपयोज्या औपयोगिका भवंति । दोषवशाद्यथा–केवलवायावम्लः, पित्तयुक्ते अम्लतिक्तौ, श्लेष्मयुक्ते अम्लकटुकाविन्यादि । भेषजवशाद्यथा–विरेचनमौषधमेकरसत्वादद्व्यं द्विरसत्रिरसादिकार्यम् । संग्रहे तु रसः खल्वाप्यः प्रागव्यक्तश्च स षड्ऋतुकत्वात्कालस्य महाभूतगुणानामूनातिरिक्तविशेषेण संसृष्टो विषमं विदग्धः षोढा पृथग्विपरिणमते मधुरादिभेदेन । अथ यः शिशिरपवनधरणिधरविविधवनगहननदीतडागपल्वलोदपानकमलकुमुदकुवलयाकीर्णोरम्यास्थिरस्निग्धभूमिर्भूरिहरिततृणोऽतिदूरविस्तृतप्रतानप्रवालोपसंछन्नपादपः मत्स्यसरीसृपखगबहुलः श्लेष्मपित्तप्रायो गुर्वोपधिसश्लीपदगलरोगापचीज्वराद्यामयोपद्रुतजनपदः सोऽनूपो मधुररसयोनिः । यस्तु विषमविपुलसिकतास्थलबहुलोऽतिदूरावगाढविरससलिलः कठिनक्लेशसहाऽरोगशरीरदीर्घायुःप्रायोजनपदोऽनूपविपरीतश्च स जांगलः कटुकरसयोनिः । अतएव चानूपसाधारणो, जांगलसाधारण-श्चेति विकल्पः । तयोराद्यो लवणाम्लयोनिरितरश्चेतरयो[१]रिति ॥ ३४ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने रसभेदप्रकरणं सामस्त्येन निरूपितम् ॥ १० ॥

# एकादशोऽध्यायः ।

रसभेदीयादनंतरं दोषादिविज्ञानीय आरभ्यते । यतो दोषभेषजवशादुपयोज्या इत्युक्तमत ईदृक्स्वरूपास्ते दोषा इति ज्ञापनार्थमध्यायोऽयमुच्यते–

## अथाऽतो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

स०–दोषा आदयो येषां ते दोषादयस्तेषां विज्ञानं प्राकृतेन वैकृतेन च स्वरूपेणोपगमस्तस्मै हितो यस्तमध्यायं व्याख्यास्यामः । आदिशब्देन धातवो मलाश्च संगृह्यंते । तत्स्वरूपोपगमेन च त एव दोषाः सम्यग्ज्ञाता भवंति । धातूनां मलानां च दोषाधारभूतत्वात् ॥ १ ॥

प०–अतोऽनन्तरं दोषादिविज्ञानीयाध्याय आरब्धः । यस्मादुक्तं पवनरसानां भेदास्त्रिषष्टिभेदभिन्नास्तेषु दोषभेषजवशादुपयोज्या इत्येवं दोषवशादुपयोज्या न यथाकथञ्चित् । अथ तेषां यथास्वं कर्मानुमानतो यथा ज्ञायते तज्ज्ञानार्थमस्यैवाध्यायस्यारम्भः । अत्र दोषा निराधाराः कथं ज्ञायन्ते अतस्तेषामाधारा ये धातवो, मलाश्च तेऽपि ज्ञातव्या न केवलं दोषास्तस्माद्दोषादिविज्ञानीयमध्यायमित्येवमध्यवस्येत् । दोषादीनां विज्ञानं दोषादिविज्ञानं तस्मै हितोऽध्यायस्तं व्याख्यास्यामः प्रथयिष्यामः ॥ १ ॥

हे०–हेतुस्कंधानंतरं लक्षणस्कंधमारभते । तत्र दोषादिविज्ञानीयमध्यायं व्याख्यातुं प्रतिजानीते–अथेति दोषादिविज्ञानाधीनत्वाल्लक्षणस्य । दोषदूष्यवैषम्यं न रोगलक्षणं, वैषम्यज्ञानं च साम्यज्ञानाधीनम् । अत आदौ साम्यज्ञानम् ॥ १ ॥

---

१ इतरयोः–तिक्तकषाययोः ।

**शेषधातुमला मूलं सदा देहस्य तं चलः ।**
**उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः ॥**
**सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ।**
**अनुगृह्णात्यविकृतः पित्तं पक्त्यूष्मदर्शनैः ॥**
**क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ।**
**श्लेष्मा स्थिरत्वस्निग्धत्वसंधिबंधक्षमादिभिः २॥**

स०—दोषा वातादयो धातवो रसादयो मला मूत्रादयस्ते देहस्य मूलमिव मूलम् । यथा वृक्षस्य स्कंधशाखादियुक्तस्य मूलं प्रधानं तदारब्धत्वात्तथा देहस्य दोषधातुमलाः । तं च देहं चलो वायुरुत्साहादिभिरनुगृह्णात्युपकुरुते । उत्साहः सर्वचेष्टासूद्योगः । उच्छ्वास ऊर्ध्वं श्वसनं श्वासमुक्तिः । निश्वासः श्वासस्य शरीरान्तःप्रवेशनम् । चेष्टनं चेष्टा वाक्कायमनोव्यापारः । वेगानां प्रवर्तनं वातविण्मूत्रादीनां बहिर्निरसनम् । एतैश्च मारुतो देहमनुगृह्णाति । पित्तं पक्त्यादिभिरनुगृह्णाति । पक्तिः पाकः । ऊष्मा औष्ण्यम् । दर्शनं दृष्टिः । मेधा बुद्धिविशेषः । धीः प्रज्ञा । शौर्यं पौरुषम् । तनुमार्दवं शरीरमृदुत्वम् । श्लेष्मा स्थिरत्वादिभिरनुगृह्णाति । क्षमा क्षांतिः ॥ २ ॥

प०—दोषाश्च धातवश्च मलाश्च ते दोषधातुमलाः । सदा सर्वकालं देहस्य मूलमिव मूलं प्रधानं कारणमित्यर्थः । तं देहं चलो वायुरनुगृह्णात्यविकृतः समवस्थितः सन्नुत्साहादिभिः । उत्साह उद्योगः । सर्वचेष्टासु उच्छ्वास ऊर्ध्वश्वसनं, श्वासमुक्तिः । निःश्वासः श्वासस्य निरोधोऽन्तःप्रवेशनम् । चेष्टनं चेष्टा कायवाङ्मनोव्यापारः । वेगानां प्रवर्तनं वातविण्मूत्रादीनां बहिः प्रवर्तनं, निरसनम् । सम्यग्गत्या च धातूनां धातुशब्देन रसादिधातवो गृह्यन्ते । पित्तश्लेष्माणौ च तेषां साम्येनावस्थानां सम्यग्गतिः । तत्र साम्यावस्थाने तेषां वायुरेवाविकृतः कारणं यस्मात्स विक्षेपसंहारक इति । अक्षाणामिन्द्रियाणां चक्षुरादीनां पाटवेन स्वविषयग्रहणस्फुटत्वेन तं देहं पित्तमविकृतं पक्त्यादिभिरनुगृह्णाति उपकारं करोति । पक्तिः पाकः। ऊष्मा तेजः। दर्शनं रूपग्रहणशक्तिः । क्षुद्भोक्तुमिच्छा । तृट् पिपासा । रुचिरन्नाभिलाषः प्रियोपभोगता । प्रभा प्रसादः कान्तिमत्त्वम् । मेधा धारणावती प्रज्ञा । धीर्बुद्धिः । शौर्यं चेतसोऽवष्टम्भः । धृतिर्धैर्यम् । तनोः शरीरस्य मार्दवं मृदुत्वम् । श्लेष्माऽविकृतः स्थिरत्वादिभिस्तं देहमनुगृह्णाति । स्थिरत्वं दृढता । स्निग्धत्वं सस्नेहता । अङ्गस्य सन्धानं, बन्धः पर्वसंश्लेषः । क्षमा शान्तिः ॥ २ ॥

हे०-तत्र साम्यफलमाह—दोषा वातादयः, धातवो रसादयः, मलाः पुरीषादयः, मूलं कारणं, सदा सर्वासु जन्माद्यवस्थासु समा इति प्रकरणाल्लभ्यते । वायोः साम्यं लक्षयति—तं च देहं चलो वायुः, उत्साहोऽध्यवसायः, उच्छ्वासः श्वासनिर्गमः,निश्वासः श्वासप्रवेशः, चेष्टा गमनादिक्रिया, वेगप्रवर्तनं विण्मूत्रादिप्रवृत्तिः,धातूनां सम्यग्गतिः मार्गेणाद्रुतविलंबितसंचारः, अक्षाणां पाटवम् इंद्रियाणां विषयग्रहणसामर्थ्यम्; अनुगृह्णाति उपकरोति । अविकृतः समः । पित्तसाम्यं लक्षयति—पक्तिः पाकः, ऊष्मा औष्ण्यं, दर्शनं चाक्षुषं ज्ञानं, क्षुद्बुभुक्षा, तृट् पिपासा, रुचिः प्रीतिः, प्रभा कांतिः, मेधा ज्ञानधारणं, धीर्ज्ञानं, शौर्यं बलं, तनुत्वमस्थूलत्वं, मार्दवं सौकुमार्यम् । श्लेष्मणः साम्यं लक्षयति—स्थिरत्वं दृढांगत्वं, स्निग्धत्वं स्नेहाक्तत्वमिव, संधिबंधः सुश्लिष्टसंधित्वं, क्षमा सहिष्णुत्वम् आदिशब्दादलौल्यादयः, तमनुगृह्णात्यविकृत इति वाक्यद्वयेऽनुवर्तते ॥ २ ॥

इदानीं धातूनां कर्माण्याह—

**प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।**
**गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम् ३॥**

स०—प्रीणनादीनि कर्माणि रसादीनां क्रमात्क्रमेण श्रेष्ठानि स्मृतानि । मुनिभिरिति शेषः । संग्रहोक्तानि मध्यमान्यपराणि कर्माण्येषां सत्येव । यथा रसस्य दृष्टिरक्तपुष्ट्यादिकं कर्म । रक्तस्य च वर्णप्रसादो मांसपोषणम् । मांसस्य बलं मेदःपुष्टी च । मेदसः स्वेददार्ढ्यास्थिपुष्ट्यश्च ।अस्थ्नो मज्जपोषणम् । मज्ज्ञो बलमस्थिपूरणं शुक्रपुष्टिश्च । शुक्रस्य हर्षो बलं च । एतैर्धातवो देहमनुगृह्णन्तीत्यर्थः । प्रीणनमाप्यायनम् । रसो हि सम्यगभ्यवहरणतः स्रोतांसि संप्रविश्येंद्रियप्रसादाभिनिर्वर्तयन्मनसः प्रीतिमादधाति । जीवनमोजोवृद्धिकृत् रक्तकर्म । लेप उपदेहो मांसस्य कर्म । तदुपलिप्तान्य

स्थानि चेष्टां क्षमते । स्नेहो नेत्रादिषु स्निग्धता मेदसः कर्म । धारणमूर्ध्वधारणमस्थिकर्म । पूरणं स्नेहेनास्थ्नां मज्ज्ञः कर्म । शुक्रस्य गर्भोत्पत्तिः श्रेष्ठं कर्मेति योज्यम् ॥ ३ ॥

प०—धातूनां रसादीनां सप्तानां प्रीणनादि सप्तविधं कर्म क्रमात्परिपाट्या श्रेष्ठं प्रधानं स्मृतमुक्तमाचार्यैः । प्रीणनं-तर्पणं, हृदयाश्वासनं, रसस्य श्रेष्ठं कर्म । जीवनं-प्राणधारणं रक्तस्य । लेपोऽस्थ्नां च मांसस्य । स्नेहो-नेत्रत्वग्विशां मेदसः । देहोर्ध्वधारणमस्थ्नः । अन्यथाऽस्थ्नामभावाद्देहमांसं पिण्डीभूतं स्यात् । पूरणमस्थ्नां मज्ज्ञः । गर्भोत्पादो गर्भजन्म शुक्रस्य प्रधानं कर्म ॥ ३ ॥

हे०—धातूनां साम्यं लक्षयति—प्रीणनं तृप्तिरविकृतस्य रसस्य श्रेष्ठं कर्म, जीवनं प्राणधारणं रक्तस्य, लेपो भित्तेर्मृत्तिकयेव मांसस्य, स्नेहः स्निग्धत्वं मेदसः, धारणमवलंबनमस्थ्नां, पूरणमास्थिपूरणं मज्ज्ञः, गर्भोत्पादः शुक्रस्य, श्रेष्ठग्रहणादुत्तरधातुपुष्ट्यादीन्यपराण्यपि संतीति ज्ञापयति ॥ ३ ॥

इदानीं मलानां कर्माण्याह—

**अवष्टंभः पुरीषस्य मूत्रस्य क्लेदवाहनम् ।**
**स्वेदस्य क्लेदविधृतिः ॥ ४ ॥**

स०—अवष्टंभो देहधारणशक्तिः श्रेष्ठं कर्म पुरीषस्य स्मृतम् । मूत्रस्य क्लेदवाहनं श्रेष्ठं कर्म । मूत्रं क्लेदं निर्वाहयति । स्वेदस्य क्लेदविधारणं श्रेष्ठं कर्म । क्लेदाभावे हि नैव देहस्य मध्यमत्वक् । स्वेदस्य कचरोमधारणमपि ॥ ४ ॥

**प०—अवष्टम्भः शरीरस्य धारणं प्रधानं कर्म पुरीषस्य शकृतः । क्लेदवाहनमन्नक्लेदस्य बहिः क्षेपणं प्रधानं कर्म मूत्रस्य । केशविधृती रोमधारणं श्रेष्ठं कर्म स्वेदस्य ॥ ४ ॥**

हे०—पुरीषसाम्यं लक्षयति—अवष्टंभो धारणम् । मूत्रस्य साम्यं लक्षयति—क्लेदवाहनं क्लेदस्य बहिर्निर्गमनम् । स्वेदसाम्यं लक्षयति—केशविधृती रोम्णामवलंबनं, श्रेष्ठं कर्मेति वाक्यत्रयेऽनुवर्तते । तेन अनिलानलधारणबस्तिपूरणक्लेदधारणादीन्यपि कर्माणि ज्ञेयानि ॥ ४ ॥

**वृद्धस्तु कुरुतेऽनिलः ।**
**कार्श्यकार्ष्ण्योष्णकामित्वकंपाऽनाहशकृद्ग्रहान्**
**बलनिद्रेंद्रियभ्रंशप्रलापभ्रमदीनताः ॥ ५ ॥**

---

१ सू०-**प्रपीडयति च शरीरम्** । प्र

टी.—स वायुः आप्यायनं प्रकोपनञ्चासाद्य शरीदेशञ्च प्रपीडयति । तत्राभ्यन्तरस्तु प्रकुपितः नानाविधैर्विकारैः शरीरं पीडयति, बलवर्णसुखायुषामुपघातयति, सर्वेन्द्रियाणि, सर्वेन्द्रियार्थांश्चोपघातयति, पर्वणसंकोचः, अस्थ्नां भङ्गः, रोमहर्षः, प्रलापः, पाणिपृष्ठशिरोग्रहः, एकाङ्गग्रहः, सर्वांगग्रहः, खाञ्ज्यं, पाङ्गुल्यं, कुब्जत्वं च करोति । शोषोऽङ्गानां च करोति तथा गर्भशुक्ररजोनाशञ्च करोति, विकृतिमापादयति, भयशोकमोहदैन्यादीन् जनयाति । एवं हेत्वादीभिः स्थानसंस्थानविशेषैश्च नानाविधान् रोगांश्चोत्पादयति । यथा-"आध्मानस्तम्भरौक्ष्यस्फुटनविमथनक्षोभकम्पप्रतोदाः । कण्ठध्वंसाऽवसादौ श्रमक-विलपन-स्रंसशूलप्रभेदाः ॥ पारुष्यं कर्णनादो विषयपरिणति भ्रंशदृष्टिप्रमोहाः । विस्पन्दोद्वेष्टनानि ग्लपनमशयनं ताडनं पीडनं च ॥ नामोन्नामौ विषादो भ्रमपरितपनं जृम्भणं रोमहर्षं विक्षेपाक्षेप-शोषग्रहण-शुषिरताच्छेदनं वेष्टनं च । वर्णः श्यावोऽरुणो वा तृडपि च महती स्वापविश्लेषसंगो विद्यात्कर्माण्यमूनि प्रकुपितमरुतः स्यात्कषायो रसश्च" अत्र प्राण प्रकुपितः हिक्का, प्रतिश्याय, कास, श्वास, स्वरभेदादिकान् गदान् करोति । उदानः प्रकुपितः—ऊर्ध्वजत्रुगतान् मन्यास्तम्भादींश्च करोति । समानः प्रकुपितः—गुल्माग्निसादातिसारप्रभृतीन् जनयाति । व्यानस्तु-सर्वदेहगान् व्याधीन् जनयाति । अपानस्तु वस्ति-मेहन-गुदाश्रितान् कृच्छ्राश्मरीभगन्दरार्शादींश्च करोति । व्यानापानौ प्रकुपितौ-शुक्ररोगान् प्रमेहाँश्च कुरुतः ।

आमाशये प्रकुपितः छर्दि-पार्श्वोदरहृत्स्तम्भतोदादिकान् पिपासा-मोह-मूर्छादिकांश्च करोति पक्वाशये प्रकुपितः अन्त्रकूजन-शूलनाभौ वेदना-त्रिकवेदना मूत्रपुरीषविकृत्यादींश्च करोति । श्रोत्रादिषु कुद्धः इन्द्रियवधम् । त्वचि प्रकुपितः-वैवर्ण्यं, स्फुरणं, रौक्ष्यं, सुप्तिं, तोदं त्वग्भेदञ्च । रक्तगः प्रकुपितो-व्रणान् रक्तविकारांश्च । शिरागतः-शिराकुञ्चनपूरणादीनि । स्नायुगतः प्रकुपितः स्तम्भकम्पौ, शूलमाक्षेपणञ्च । एवं यत्र प्रकुपितो गच्छति वायुः तत्र स्तम्भनाक्षेपणस्वापशूलादीनि भवन्तीति । "दाहसन्तापमूर्च्छा स्युर्वायौ पित्तसमान्विते । शैत्य—शोफ—गुरुत्वानि तास्मिन्नेव कफावृते" एवं हेतुस्थानादि सम्यग्विचार्य वात-

---

अत्र " केशविधृतिः "इति पाठ० ।

[०–वृद्धः पुनर्वायुः कार्श्यादीन् करोति । बला-
भ्रंशेन संबंधः । बलस्य तु प्राणोपघातो भ्रंशः ।
ास्तु नाशो भ्रंशः ॥ ५ ॥

०–अनिलो वातो वृद्धः प्रकुपितः कार्श्यादीन्
। कार्श्यं कृशत्वम् , क्षीणरक्तादितः । कार्ष्ण्यं
र्णता । उष्णकामित्वमुष्णाभिलाषित्वम् । कम्पो
। आनाह उदरापूरः। शकृद्ग्रहः पुरीषबन्धः ।
ानां भ्रंशो विघातः । प्रलपनं-बद्धबद्धभाषणम्।
भ्रमोऽनवस्थानं कायस्य । दीनता दैन्यं
॥ ५ ॥

–अथ वैषम्यज्ञानम् । तच्च पञ्चधा वक्ष्यति–
ानं पूर्वरूपाणि रूपाण्युपशयस्तथा । संप्राप्तिश्चेति
रोगाणां पञ्चधा स्मृतम् '' इति । तत्रादौ रूपं
रंगत्वात् । पूर्वरूपं तु रूपमेवाव्यक्तं वक्ष्यति हि-
गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् । तदेव
यातं रूपमित्यभिधीयते ॥ '' इति । वैषम्यं च
–वृद्धिक्षयभेदात् । तत्रादौ वृद्धिलक्षणम् । तत्र
ह–कार्श्यं कृशत्वं, कार्ष्ण्यं कृष्णत्वम्, उष्ण-
मुष्णाभिलाषः, कंपो वेपथुः, आनाहः आन-
ा, शकृद्ग्रहः पुरीषरोधः, बलादीनां भ्रंशो
प्रलापोऽसंबद्धप्रलापः, भ्रमश्चक्रारूढस्येव, दीनता
॥ ५ ॥

**ण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाऽल्पनिद्रताः ।
॥ ६ ॥**

स०–पीतस्य विडादिभिस्त्वगंतैः संबंधः । ततः
क्षुदादिभिर्द्वंद्वस्ततस्ताप्रत्ययः । पित्तं पीतविण्मूत्रादीन्
करोति ॥ ६ ॥

प०–पित्तं वृद्धं पीतं शकृदादिकं करोति । पीताः
पीतवर्णाः शकृन्मूत्रचक्षुस्त्वचः । बुभुक्षापिपासादाह-
मन्दनिद्रताश्च कुरुते ॥ ६ ॥

हे०–पित्तस्याह—पीतविण्मूत्रेति । विण्मूत्रनेत्र-
त्वचां पीतत्वं, क्षुत्तृषाविह तीव्रे ज्ञेये, समयोः साम्य-
लक्षणत्वात् । दाहः संतापः, अल्पनिद्रता निद्राल्प-
त्वम् ॥ ६ ॥

**श्लेष्माऽग्निसदनप्रसेकालस्यगौरवम् ।
श्वैत्यशैत्यश्लथांगत्वं श्वासकासातिनिद्रताः॥७॥**

स०–श्लेष्मा वृद्धोऽग्निसादादीन् करोति । श्वैत्यं
गात्रशुक्लता । शैत्यमंगानां शिशिरत्वम् ॥ ७ ॥

प०–श्लेष्मा वृद्धोऽग्निसादादीन् करोति । अग्नेः
सादोऽग्निनाशः प्रसेकः श्लेष्मनिरसनम् । गौरवं
गुरुताऽङ्गस्य । श्वैत्यं शुक्लवर्णता । शैत्यमङ्गानां
शीतता । श्लथाङ्गत्वं शैथिल्यं देहस्य ॥ ७ ॥

हे०–श्लेष्मण आह—अग्निसदनमग्निमांद्यं, प्रसेको
लालास्रावः, आलस्यमनुत्साहः, गौरवं दुर्वहांगत्वं,
श्वैत्यं शुक्लत्वं, शैत्यं शीतस्पर्शत्वं, श्लथांगत्वमवयव-
शैथिल्यं, श्वासकासौ रोगौ, अतिनिद्रता निद्राधिक्यम्॥७॥

**रसोऽपि श्लेष्मवद्रक्तं विसर्पप्लीहविद्रधीन् ।
कुष्ठवातास्रपित्तास्रगुल्मोपकुशकामलाः ।**

---

र्गभादि कल्पनीयमिति वातव्याधेर्निदानोपदेशः ।
ग्रस्तु प्रकुपितो वातः सागराणामुत्पीडनम् , सरसामुद्र-
भूमेराकम्पनम्, अम्बुदानामाधमनम्, ऋतूनाञ्च व्या-
, जनपदध्वंसनम्, युगान्तकराणां मेघसूर्यानिलानाञ्च
करोति ।

(१) **सू०–तत्प्रकोप एव पित्तव्याधिः** । प्र.
ातिपित्तप्रकोप एव व्याधिः । यद्यपि
रूपेण वायुरेव व्याधिं करोति यथा चोक्तं **सुश्रुते**–
विकृतवात एव रोगसमूहजनकः''पित्तं पंगुकफः पंगुः
मलधातवः। वायुना यत्र नीयन्ते तत्र वर्षति मेघवत्''
स्वकारणैः कुपितं पित्तं वातानुबलप्राप्तेऽपि वातभि-
कान् पित्तव्याधीन् जनयति । यथा''विस्फोटाम्लकधू-
लपनं स्वेदस्रुतिर्मूर्च्छनं, दौर्गन्ध्यं दरणं मदो विस-
कोऽरतिस्तृड्भ्रमः । ऊष्माऽतृप्तितमःप्रवेशदहनं
तिक्ता रसाः, वर्णः पीतहरिद्रता क्वथितता कर्माणि
पित्तस्य वै ॥''अत्र प्रकृतिस्थं कटुरसं, विदग्धमम्लरसं निरामं
तिक्तरसं जानीयात् । तथाच ऊष्मा पित्तादृते नास्ति ।
एवं पित्तं वृद्धं मत्वा रेचयेत् इत्यादिवाक्यैः सर्वथा स्वतंत्र
एव पित्तव्याधिरिति पित्तव्याधिनिदानम् ।

(१) **सू०–स एव रुजाकरः** । प्र. टी.–
स कफप्रकोप एव रुजाकरः । तस्य कफस्य
प्रकुपिताऽवस्था एव व्याधिरिति । तत्प्रकुपितस्य
कर्माणि । ''तृप्तिस्तन्द्रा गुरुता स्तैमित्यं कठिनता मलाऽधि-
क्यम् । स्नेहाऽपक्त्युपलेपाः शैत्यं कण्डूप्रसेकश्च । चिरकर्तृत्वं
शोथो निद्राधिक्यं रसौ पटुस्वादू । वर्णश्वेताऽलसता कर्माणि
कफस्य जानीयात्'' ।

एवं प्रकुपितस्य श्लेष्मणः देशकालस्थानविशेषैः रोग–
विशेषं बलाऽबलं च प्रकल्पयेत् ।

व्यंगाग्निनाशसंमोहरक्तत्वङ्नेत्रमूत्रताः ॥ ८ ॥

स०—रसः श्लेष्मवत् । रसोऽपि वृद्धोऽग्निसादादीन् करोति । रक्तं वृद्धं विसर्पादीन् करोति । उपकुशो नाम दंतरुजोत्तरतंत्रे वक्ष्यमाणलक्षणा ॥ ८ ॥

प०—रसो वृद्धः श्लेष्मवत् श्लेष्मणः तुल्यमग्निसादादीनिद्रान्तम् । रक्तं वृद्धं विसर्पप्रभृतीन् रोगान् कुरुते । वातास्रं वातशोणितं, पित्तास्रं रक्तपित्तम् । उपकुशो नाम यो दन्तमांसेषु रक्तपित्तमांसं भवेत् कामलाश्च । व्यङ्गं श्याममण्डलं संमोहो वैचित्यम् । रक्तानि त्वङ्नेत्रमूत्राणि कुरुते ॥ ८ ॥

हे०—रसस्याह—रसोऽपि श्लेष्मवदिति । श्लेष्मवदग्निसादादीन् करोति । अपिशब्दोऽन्यानप्यतिदेशान् सूचयति तेन रक्तं पित्तवत्, मांसं श्लेष्मवत् । रक्तस्याह—वीसर्पादयो व्यंगांता रोगाः । तत्रोपकुशो दंतमांसजरोगः, व्यंगं क्षुद्ररोगविशेषः, संमोहो मूर्छा, त्वङ्नेत्रमूत्राणां रक्तत्वम् ॥ ८ ॥

मांसं गंडार्बुदग्रंथिगंडोरूदरवृद्धताः ।
कंठादिष्वधिमांसं च ॥ ९ ॥

स०—मांसं वृद्धं गंडादीन् रोगान् करोति । गंडशब्देन गंडमाला गलगंडश्च गृहीतौ । आद्यंतलोपात् । इतरश्च गंडो गंडमांसम् । गंडौ चार्बुदं च ग्रंथिश्च गंडार्बुदग्रंथयः । गंडौ च ऊरू चोदरं च तेषां वृद्धता । ततो द्वंद्वः । ताः करोति । वृद्धता वृद्धत्वम् । कंठादिष्वधिकं मांसं च कुरुते । आदिशब्देन तालुजिह्वादिपरिग्रहः ॥ ९ ॥

प०—मांसं वृद्धं गण्डादीन् कुरुते । गण्डार्बुदोदरवृद्धिताः स्थूलत्वमुपचय इति यावत् । कण्ठादिषु गलताल्वुजिह्वादिष्वधिमांसं मांसस्योपरि मांसम्॥९॥

हे०—मांसस्याह—गण्डादयो रोगाः । गंडो गलगंडादिः, गंडयोरूर्वोरुदरे च । वृद्धता स्थौल्यं, कंठादिगंडताल्वुजिह्वादिष्वधिमांसं मांसस्योपरि मांसम् ॥ ९ ॥

तद्वन्मेदस्तथा श्रमम् ।
अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलंबनम् ।

स०—मेदोऽपि वृद्धगंडादीन् कुरुते । तथाऽल्पेऽपि चेष्टिते श्रमं कुरुते श्वासं च । तथा स्फिजोः स्तनयोरुदरस्य च लंबनं कुरुते ॥ १० ॥

प०—मेदो वृद्धं तद्वन्मांसवृद्धिवत् गण्डादीन् कुरुते तथा श्रमम् । अल्पेऽपि चेष्टिते आयासं श्वासं स्फिक्स्तनोदराणां च लम्बनं स्थूलत्वाल्लम्बमानत्वम् ॥ १० ॥

हे०—मेदस आह—तद्वन्मांसवत् । तथा अल्पेऽपि चेष्टिते श्रमश्वासौ, स्फिगादीनां लंबनं, स्फिजौ कटिप्रोथौ ॥ १० ॥

अस्थ्यध्यस्थ्यधिदंतांश्च ॥ ११ ॥

स०—अस्थि वृद्धमध्यस्थ्यधिदंतांश्च कुरुते ॥ ११ ॥

प०—अस्थिवृद्धमध्यस्थि । अस्थ्न उपरि अधिदन्तानामुपरि दन्तान् कुरुते ॥ ११ ॥

हे०—अस्थ्न आह—अध्यस्थि अधिकमस्थि, अधिदंता अधिका दंताः ॥ ११ ॥

मज्जा नेत्रांगगौरवम् ।
पर्वसु स्थूलमूलानि कुर्यात्कृच्छ्राण्यरूंषि च ॥ १२ ॥

स०—मज्जा वृद्धो नेत्रयोरंगानां च गौरवं कुर्यात् । कुरुत इति प्रकृते कुर्यादित्युक्तं स्पष्टार्थम् । पर्वस्वंगुल्यादिसंधिषु स्थूलानि मूलानि येषां तानि अरूंषि पिटिकाविशेषान् कुर्यात् । कीदृशानि । स्थूलमूलानि कृच्छ्राणि कृच्छ्रसाध्यानि ॥ १२ ॥

प०—मज्जावृद्धौ नेत्राङ्गगौरवं लोचनशरीरगौरवं कुर्यात् । पर्वसु पर्वस्थानेषु स्थूलमूलानि कुर्यात् । कृच्छ्राण्यरूंषि च । स्थूलं बृहदधिदन्तान्मूलं येषां तान्यरूंषि गण्डादीन् ॥ १२ ॥

हे०—मज्ज आह—अंगगौरवेणैवाक्ते नेत्रगौरवे नेत्रग्रहणमातिशयार्थम् । पर्वसु संधिषु स्थूलमूलानिमूलप्रदेशे स्थूलानि, कृच्छ्राणि कष्टसाध्यानि, अरूंषि व्रणान् ॥ १२ ॥

अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि ॥ १३ ॥

स०—शुक्रं वृद्धमतिस्त्रीकामतां कुर्यात् । शुक्राश्मरीं च । अपिशब्दाद्बलस्नेहावपि ॥ १३ ॥

प०—शुक्रं वृद्धमत्यर्थं प्रमदाभिलाषं कुर्यात् । शुक्रजनितामश्मरीं कुर्यात् ॥ १३ ॥

हे०—शुक्रस्याह—अतिस्त्रीकामता—पुनः पुनः स्त्रीषु संगेच्छा, शुक्राश्मरीरोगः ॥ १३ ॥

**कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ॥१४॥**

स०—शकृत्पुरीषं वृद्धं कुक्षावाध्मानादीन् कुर्यात् । कुर्यादिति संभावनायां लिङ् । आध्मानमानाहः । आटोपोऽन्त्रकूजनम् ॥ १४ ॥

प०—शकृत्पुरीषं वृद्धं कुक्षावुदरे आध्मानमुदरापूरमाटोपमन्त्रकूजनं गौरवं, गुरुत्वं, वेदनां रुजं च कुर्यात् ॥ १४ ॥

हे०—शकृत आह—कुक्षावुदरे आध्मानादीनि । आध्मानं वातेनोदरपूरणम्, आटोपो गुडगुडाशब्दः, गौरवं दुर्वहत्वं, वेदना शूलं, शकृत्पुरीषम् ॥ १४ ॥

**मूत्रं तु बस्तिनिस्तोदं कृतेऽप्यकृतसंज्ञताम् ॥ १५॥**

स०—मूत्रं वृद्धं बस्तिनिस्तोदं बस्तिव्यथां कुर्यात् । तथा कृतेऽपि मूत्रेऽकृतसंज्ञतामकृताभासत्वमेव कुर्यात् ॥

प०—मूत्रं वृद्धं बस्तिनिस्तोदं बस्तेर्मूत्राधारस्य निस्तोदं व्यथां तथा कृते प्रवाहिते मूत्रेऽकृतसंज्ञतामपरित्यक्तचेतस्त्वं कुर्यात् । पुनः पुनरागमनान्न कृतमिव मन्यते ॥ १५ ॥

हे०—मूत्रस्याह—बस्तिनिस्तोदो बस्तिदेशे व्यथा, कृतमपि मूत्रोत्सर्गमकृतमिव मन्यते ॥ १५ ॥

**स्वेदोऽतिस्वेददौर्गन्ध्यकंडूः ॥ १६ ॥**

स०—स्वेदो वृद्धोऽतिस्वेदादीन् कुर्यात् ॥ १६ ॥

प०—स्वेदो वृद्धोऽतिस्वेदादीन् कुरुते । दौर्गन्ध्यं दुष्टगन्धताम् । कायस्य कण्डूः कण्डूयनम् ॥ १६ ॥

हे०—स्वेदस्याह—अतिस्वेदः स्वेदाधिक्यं, दौर्गंध्यं दुर्गन्धता, कंडूः कच्छूः ॥ १६ ॥

**एवं च लक्षयेत् ।**

**दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ॥१७॥**

स०—अनेन प्रकारेण दूषिकादीनपि मलान् लक्षयेदनुमिनुयात् । दूषिकाऽक्षिमलः । आदिशब्दाद् घ्राणकर्णनासामलादीनां ग्रहणम् । कथं लक्षयेदित्याह । बाहुल्येत्यादि । मलबाहुल्येन तत्स्थानगौरवेण च । आदिग्रहणात्कंडूक्लेदादयो गृह्यंते ॥ १७ ॥

प०—दूषिकाऽक्षिमलम् । आदिग्रहणात् क[र्णा]दिमला गृह्यन्ते । तान् दूषिकादीन् मलान् वृद्ध[ान्] बाहुल्यादिभिर्लक्षयेत् जानीयात् । बाहुल्येन भू[यि]स्त्वेन गुरुतया मलायतनानाम् । तथा आदिग्र[ह]णात् कण्डूक्लेदादयो गृह्यन्ते ॥ १७ ॥

हे०—दूषिकादीनाह—दूषिका नेत्रमलः, आदिश[ब्दा]त्कर्णमलादयः । एवमिति । यथा—स्वाधिक्यस्वाश्[रय]गौरवादिभिः पुरीषादयो वृद्धा लक्ष्यन्ते । आदिशब्दात्[स्वा]श्रयव्यथादयः ॥ १७ ॥

वृद्धानां वातादीनां लिंगान्यभिधाय क्षीणानां वा[ता]दीनां लिंगान्याह—

**लिंगं क्षीणेऽनिलेंऽगस्य सादोऽल्पं भाषितेहि[तम्] ।**
**संज्ञामोहस्तथा श्लेष्मवृद्ध्युक्तामयसंभवः ॥१[८॥]**

स०—अनिले क्षीणे स्वप्रमाणापचिते । वायो[ः] सर्वक्षये देह एव न स्यात् । कस्य तु लिंगं स्या[त्] किं पुनस्तल्लिंगमित्याह । अंगस्येत्यादि । अंगस्य स[ादः] क्रियास्वसामर्थ्यम् । ईहितं चेष्टितं कायिकं क[र्म] भाषितं चेहितं च । अल्पवचनताऽल्पचेष्टितत्[वं] स्यात् । तथा संज्ञामोहः संविदोऽभावः । तथा श्लेष्म[वृद्धौ] य उक्ता अग्निसादप्रसेकादयस्तेषामा यानां सं[भवः] भवति ॥ १८ ॥

प०—क्षीणानां लक्षणमाह—क्षीणे वायौ [इदं] चिह्नमिदं लक्षयेत् । अङ्गस्यावसादो देहस्यानुत्स[ाहः] अल्पं भाषितं स्वल्पवचनता, ईहितमपि चे[ष्टितं] कायिकं कर्म तदप्यल्पम् संज्ञामोहः संविदभा[वः] तथा श्लेष्मवृद्ध्युक्तामयसम्भवः-अग्निसदनादीन[ा]मयानां व्याधीनामुद्भवः ॥ १८ ॥

हे०—अथ क्षयलक्षणम् । तत्र वायोराह—[अंग]सादः श्रांतत्वमिव । भाषितेहितमल्पं भाषितं वाचिकं ईहितं कायिकं, संज्ञा बुद्धिस्तस्या मोहो विवेचनाक्[षमत्वं]; श्लेष्मवृद्ध्युक्तामयाः अग्निसदनादयः ॥ १८ ॥

**पित्ते मंदोऽनलः शीतं प्रभाहानिः ॥ १९ ॥**

स०—पित्ते क्षीणे लिंगमेतत् । अग्निर्मंदः शीतं [प्रभा]हानिश्च स्यात् ॥ १९ ॥

प०—पित्ते क्षीणे मन्दोऽनलोऽग्निरपटुः । शीतलत्वं कायस्य । प्रभायाः कान्तेर्हानिः ॥ [१९ ॥]

हे०-[illegible]-[illegible]ऽग्निमांद्यं, शीतं हिमस्पर्शनेव [illegible], [illegible]: [illegible] ॥ १९ ॥

**कफे भ्रमः।**
**[illegible]ष्माशयानां शून्यत्वं हृद्द्रवश्लथसंधिता:२०॥**

स०-कफे क्षीणे भ्रमो भवति। तथा श्लेष्माश[ya]नां शून्यत्वम्। श्लेष्माशया उरःशिरः-[illegible]: ॥ २० ॥

प०-कफे क्षीणे लिङ्गं भ्रमो देहमनसोरवस्था[illegible]म्। [illegible]ष्माशयानां कफस्थानानां नासिकादीनां [illegible] रिक्तता। हृद्द्रवो हृत्कम्पः। श्लथसान्धिता [illegible] ॥ २० ॥

हे०-[illegible]-भ्रम[illegible]रूढस्येव। श्लेष्माशयानामुरः-[illegible] रिक्तत्वं, हृद्द्रवोऽनुकंपयेव पीडा हृद-[illegible], [illegible] संधिशैथिल्यम् ॥ २० ॥

**[illegible] रौक्ष्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता।**

स०-रसे क्षीणे रौक्ष्यादयः स्युः ॥ २१ ॥

प०-रसे क्षीणे सति लिङ्गं रौक्ष्यं रूक्षता। [illegible] श्रमः खेदः। शोषो मुखशोषः। ग्लानि-[illegible]पचयः। शब्दासहिष्णुता वचनासहत्वम् ॥२१॥

हे०-रसस्याह—रौक्ष्यं स्नेहाभावः, श्रमः श्रांतत्वं, [illegible] मुखादीनां, ग्लानिः क्लमः, शब्दासहिष्णुता शब्द-[illegible] ॥ २१ ॥

**[illegible]ऽम्लशिशिरप्रीतिशिराशैथिल्यरूक्षताः २२**

स०-रक्ते क्षीणेऽम्लाद्यभिलाषादयः स्युः ॥ २२ ॥

प०-रक्ते क्षीणे लिङ्गमम्लशीतयोः प्रीतिराभि-[illegible]पः। शिराणां शैथिल्यं रूक्षता त्वचि ॥ २२ ॥

हे०-रक्तस्याह—अम्लशीतयोरभिलाषः, शिराणां शैथिल्यं, [illegible] शरीरस्य ॥ २२ ॥

**[illegible]सेऽक्षग्लानिगंडस्फिक्शुष्कतासंधिवेदनाः।**

स०-मांसे क्षीणेऽक्षग्लानिः। गल्लयोः स्फिजोश्च [illegible]। संधीनां वेदनाः स्युः। स्फुटंतीव संधयः [illegible] ॥ २३ ॥

प०-गण्डाक्षिशुष्कतासन्धिवेदनाः स्फुटन्तीव [illegible] ॥ २३ ॥

हे०-मांसस्याह—अक्षग्लानिरिंद्रियदौर्बल्यं, गंडयोः स्फिजोश्च शुष्कता, संधीनां व्यथा ॥ २३ ॥

**मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशांगता।**

स०-मेदसि क्षीणे कट्याः स्वापः प्लीहवृद्धिः कृशांगत्वं च ॥ २४ ॥

प०-मेदसि क्षीणे लिङ्गं कट्याः श्रोण्याः स्वपनं स्वापो, विचेतनत्वम्। प्लीह्नो वृद्धिरुपचयः ॥२४॥

हे०-मेदस आह—कट्याः स्वपनं स्पर्शाज्ञत्वं, प्लीह्नो वृद्धिरितरेषामंगानां कार्श्यम् ॥ २४ ॥

**अस्थ्न्यस्थितोदः शदनं दंतकेशनखादिषु२५॥**

स०-अस्थि क्षीणेऽस्थ्नां तोदो भवति। शदनं शातः। पात इत्यर्थः। केषाम्। दंतादीनाम् ॥ २५ ॥

प०-अस्थ्नि क्षीणे लक्षणमस्थ्नामेव तोदो व्यथा। सदनं पतनं दन्तानाम् ॥ २५ ॥

हे०-अस्थ्न आह—अस्थितोदोऽस्थ्नां व्यथा, दंतादीनां शदनं शातः, आदिशब्दाद्रोमादयः ॥ २५ ॥

**अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम्२६**

स०-मज्जनि क्षीणेऽस्थ्नां सौषिर्यं भ्रमादिश्च॥२६॥

प०-मज्जनि क्षीणेऽस्थ्नां शौषिर्यं शून्यता। भ्रमः। तिमिरदर्शनं तमसोऽवलोकनम् ॥ २६ ॥

हे०-मज्ज्ञ आह—अस्थ्नां सौषिर्यं सरंध्रत्वं, भ्रमश्च। [चक्रा]धिरूढस्येव, तिमिरदर्शनं सर्वस्यैव वस्तुनस्तमोरूपत्वेन भासः ॥ २६ ॥

**शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा।**
**तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥२७॥**

स०-शुक्रे क्षीणे शुक्रं चिरात् प्रसिच्येत रक्तं वा। प्रसिच्येतेति कर्मकर्तरि। वृषणयोरतिशयेन तोदो व्यथा स्यात्। मेढ्रं शिश्नं धूमायतीव च। लोहितादेराकृति-गणत्वात् क्यिप्। अकृत्सार्वेत्यादिना दीर्घः ॥ २७ ॥

प०-शुक्रे रेतश्चिराद्बहुकालेन सिच्येत। शोणितं रक्तमेव वा प्रसिच्येत। अत्यर्थमतिशयेन तोदो व्यथा फलकोशयोर्मेढ्रं लिङ्गं धूमायति धूममिव मुञ्चति ॥ २७ ॥

हे०-शुक्रस्याह—शुक्रं संभोगे चिरान्मुच्येत। शोणितमेव वा प्रसिच्येत स्रवेत्। वृषणयोरत्यर्थं व्यथा, मेढ्रं

धूमायति । लोहितादिक्यषन्तात्परस्मैपदम् ॥ २७ ॥

**पुरीषे वायुरन्त्राणि सशब्दो वेष्टयन्निव ।**
**कुक्षौ भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम्॥**

स०—पुरीषे क्षीणे वायुः कुक्षौ भ्रमति । अन्त्राणि वेष्टयन्निव शब्दं जनयन्यात्यूर्ध्वम् । किं कुर्वन् । हृत्पार्श्वे भृशं पीडयन् ॥ २८ ॥

प०—पुरीषे क्षीणे लिङ्गं वायुः सशब्दो वेष्टयन्निवान्त्राणि कुक्षौ भ्रमति । तथा हृत्पार्श्वे पीडयन् ताडयन् भृशमत्यर्थम् ॥ २८ ॥

हे०—पुरीषस्याह—अन्त्राणि वेष्टयन्निव सशब्दो वायुः कुक्षिं भ्रमति, कदाचित् हृदयपार्श्वे पीडयन्नूर्ध्वं याति ॥ २८ ॥

**मूत्रेऽल्पं मूत्रयेत्कृच्छ्राद्विवर्णं सास्रमेव वा २९॥**

स०—मूत्रे क्षीणेऽल्पं मूत्रयेत्कृच्छ्राद्विवर्णं रक्तसहितमेव वा ॥ २९ ॥

प०—मूत्रे क्षीणे लिङ्गं मूत्रमल्पं विवर्णं विकृतवर्णं, सास्रं सरक्तं, कृच्छ्रात् दुःखेन मूत्रयेत् त्यजेत् ॥ २९ ॥

हे०—मूत्रस्याह—अल्पं मूत्रं कृच्छ्रान्मूत्रयेत् तच्च विवर्णं रक्तमिश्रवर्णाभं रक्तमिश्रमेव वा, एवकारेण रक्तवर्णाभासत्वं व्यावर्तते । अतएव विवर्णशब्देन तल्लभ्यते ॥ २९ ॥

**स्वेदे रोमच्युतिः स्तब्धरोमता स्फुटनं त्वचः३०**

स०—स्वेदे क्षीणे रोम्णां च्युतिः शातो रोम्णां च स्तब्धत्वम् । त्वचश्चर्मणः स्फुटनं दरणम् ॥ ३० ॥

प०—स्वेदे क्षीणे लिङ्गं रोम्णां च्युतिः, रोमकूपाणां स्तब्धता, परिस्फुटनं त्वचः दरणम् ॥ ३० ॥

हे०—स्वेदस्याह—केषांचिद्रोम्णां च्युतिः, केषांचित्स्तब्धता, त्वचः स्फुटनं विदारणम् ॥ ३० ॥

इदानीं घ्राणादिमलानामपि सामान्येन क्षयलिङ्गमाह—

**मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम् ।**
**स्वमलायनसंशोषतोदशून्यत्वलाघवैः ॥ ३१ ॥**

स०—सूक्ष्माणां शुष्कात्पानां दूषिकादीनां दुःखेन बोद्धुं शक्यं दुर्लक्ष्यं क्षयं लक्षयेज्जानीयात् । कैः । मलानां स्थानानि मलायनानि स्वानि च तानि मलायनानि च स्वमलायनानि तेषां संशोषतोदशून्यत्वलाघवानि स्वमलायनसंशोषतोदशून्यत्वलाघवानि तैः ॥ ३१ ॥

प०—मलादीनां दूषिकादीनां क्षयं दुर्लक्ष्यं स्वमलायतनसंशोषादिभिर्लक्षयेन जानीयात् । स्वानि च तानि मलायतनानि चक्षुरादिस्थानानि तेषां संशोषादिभिर्दुर्लक्षं लक्षयेत् । [illegible] जनेन दुःखेनावबोधो दुर्लक्षः ॥ ३१ ॥

हे०—दूषिकादीनामाह-अतिसूक्ष्माणाम[illegible] अतिसूक्ष्मत्वादेव दुर्लक्ष्यं, मलायनं मलानां [illegible] संशोषादयः ॥ ३१ ॥

एवं व्यासेन दोषधातुमलानां वृद्धिक्षया[illegible] समासतोऽभिधातुमिदमाह—

**दोषादीनां यथास्वं च विद्याद्वृद्धिक्षयौ भिषक् ।**
**क्षयेण विपरीतानां गुणानां वर्धनेन च ॥**
**वृद्धिं मलानां सङ्गाच्च क्षयं चातिविसर्गतः ३२**

स०—दोषधातुमलानां वृद्धिक्षयौ जानीयात् । कथम् । यथास्वं दोषादीनां गुणेभ्यो विपरीता ये गुणास्तेषां गुणानां क्षयेण वर्धनेन च देहगतेन दोषादीनां वृद्धिं क्षयं च विद्यात् । यथा वायोर्गुणा रूक्षलघुशीतादयस्तेषां विपरीताः स्निग्धगुरूष्णादयस्तेषां स्निग्धादीनां देहे यदा वृद्धिर्दृश्यते तदा वायोः क्षयो ज्ञेयः । यदा तु तेषां स्निग्धादीनां देहे क्षयो दृश्यते तदा वायोर्वृद्धिं विद्यात् । एवं स्वबुद्ध्या विकल्प्य मलानां धातूनां च वाच्यम् । मलानामित्यादि न केवलं मलानां पूर्वोक्तेन प्रकारेण वृद्धिक्षयौ ज्ञेयौ यावदमुनाऽपि वक्ष्यमाणेन लक्षणेन तेषां वृद्धिक्षयौ ज्ञेयौ । एवं स्वबुद्ध्या विकल्प्य मलानां सङ्गाद्बहिर्निःसरणलक्षणाच्च वृद्धिं विद्यात् । तेषामेव मलानामतिविसर्गादतिप्रवर्तनात्क्षयं विद्यात् ॥ ३२ ॥

प०—एवं विस्तरतो दोषधातुमलानां वृद्धिक्षयौ व्याख्याय समासत आह-दोषादीनां दोषधातुमलानां वृद्धिक्षयौ विद्यात् जानीयात् । कथं विपरीतानां गुणानां यथास्वं क्षयेण वृद्धिं जानीयात् ।

१ स धूम इव भवति ।

तथा विपरीतानां गुणानां यथास्वं वर्धनेन क्षयं जानीयात् । दोषादिगुणेभ्यो ये विपरीतगुणा यथा वातस्य स्निग्धादयो विपरीताः, पित्तस्य शीतादयः, श्लेष्मणो रूक्षादयः । तेषां विपरीतानां गुणानां क्षयेणोपचये वृद्धिं लक्षयेत् । तेषामेव विपरीतानां गुणानां वर्धनेनाधिक्येन क्षयमपचयं लक्षयेत् । मलानां मूत्रपुरीषादीनां सङ्गादप्रवर्तनाद्वृद्धिं लक्षयेत् । अतिविसर्गादतिप्रवर्तनात् क्षयं जानीयात् । न केवलं पूर्वोक्तलक्षणेन,यावदमुनाप्युभावपि मलानां वृद्धिक्षयौ पीडाकरौ । तत्रापि य एषां क्षयः स वृद्धितोऽप्यतिशयेन पीडाकरतरः ॥ ३२ ॥

हे०—निदानमाह—विपरीतानां गुणानां क्षयेण निदानेन, दोषादीनां वृद्धिं वर्द्धनेन, क्षयं जानीयात् । तौ च रूक्षादीनां गुणानां बहुत्वाभ्यां क्रमाद्भवतः । तत्र क्षयेणोत्पन्नं विकारं वायोर्वृद्धिरिति व्यवस्येत् । वर्द्धनेनोत्पन्नः क्षय इति एवं पित्तादिष्वपि । तथा मलानामतिसंगान्निदानाद्दोषादीनां वृद्धिं विद्यात् । अतिविसर्गात् क्षयम् । तत्रातिसंगो यथाकालमशोधनाद्वेगविधारणाद्विष्टंभकाहारविहारशीलनाच्च । अतिविसर्गोऽतिशोधनाद्वेगोदीरणास्रंसनाहारविहारशीलनाच्च क्षयवृध्योः पीडाकरत्वे तारतम्यमाह—दोषादीनां वृद्धिर्देहस्य पीडनी ॥ ३२ ॥

**मलोचितत्वाद्देहस्य क्षयो वृद्धेस्तु पीडनः॥३३॥**

स०—द्वावपि मलानां वृद्धिक्षयौ पीडाकरौ देहस्य तत्रापि य एषां क्षयः स वृद्धितोऽप्यतिशयेन पीडाकरः । अनौचित्यात् । देहिनां हि प्रायो मलक्षयोऽनुचितोऽनभ्यस्तो वृद्धिस्तूचितैवेति न तथा पीडां करोति ॥ ३३ ॥

प०—देहस्य शरीरस्य मलोचितत्वान्मलसात्म्यभावान्मलानां वृद्धेराधिक्यात् क्षयो न्यूनतापचयः पीडाकरतरः । दोषादीनामाधाराधेयभावात् ॥३३॥

हे०—क्षयस्तु ततोऽपि देहपीडनः कुतः मलोचितत्वात् । देहो हि मलबलसात्म्यः सात्म्यं च बह्वपि नातिबाधते । वक्ष्यति-" सात्म्यं ह्याशुबलं धत्ते नातिदोषं च बह्वपि " इति । मलशब्देन दोषधातुमलानां ग्रहणम् । वक्ष्यति हि-विट्श्लेष्मपित्तादिमलाशयानां विक्षेपसंहारकरः स यस्मादिति ॥ ३३ ॥

अथ दोषादीनामाश्रयाश्रयिभावं दर्शयति—

**तत्राऽस्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः**
**श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणां मिथः ॥**
**यदेकस्य तदन्यस्य वर्धनक्षपणौषधम् ।**
**अस्थिमारुतयोर्नैवं प्रायो वृद्धिर्हि तर्पणात् ॥**
**श्लेष्मणाऽनुगता तस्मात् संक्षयस्तद्विपर्ययात् ।**
**वायुनाऽनुगतोऽस्माच्च वृद्धिक्षयसमुद्भवान् ।**
**विकारान् साधयेच्छीघ्रं क्रमाल्लँघनबृंहणैः ३४॥**

स०—तत्र तेषु वातादिषु मध्येऽस्थि वायुः स्थित आश्रितः। पित्तं तु स्वेदरक्तयोः स्थितम् । श्लेष्मा शेषेषु रसमांसमेदोमज्जशुक्रमूत्रपुरीषादिषु स्थितः । यतश्चैवमाश्रयाश्रयिभावो दोषधातूनां तेन हेतुनाऽऽश्रयाश्रयिणां मिथः परस्परं यदेकस्याऽऽश्रयस्य वर्धनं तत्तदाश्रयिणोऽपि वर्धनं यदाश्रयस्य क्षपणं तदाश्रयिणोऽपि क्षपणम् । नन्वेवमेवाऽस्थ्नो वाताश्रयस्य यद्वर्धनं तदप्याश्रयिणोऽपि वर्धनं यदस्य क्षपणं तदपि वातस्य क्षपणं प्राप्नोतीत्यत आह । अस्थिमारुतयोर्नैवं वर्धनक्षपणौषधम् । संभवतीत्यध्याहार्यम् । हि यस्मात् प्रायो बाहुल्येन या वृद्धिर्वर्धनं दोषधातूनां सा तर्पणाद् बृंहणाद्भवति। प्रायोग्रहणं वायुपरिहारार्थम् । सा च श्लेष्मणाऽनुगताऽनुबद्धा यत एवं या वृद्धिः संतर्पणात्तस्माल्लँघनेन एषां दोषादीनां क्षयः स प्रायो भूयिष्ठमपतर्पणाल्लँघनरूपाद्भवति । स च संक्षयो वायुनाऽनुगतः । एवं यदस्थ्नो वर्धनमौषधं तत् स्निग्धमधुरादि बृंहणरूपं वातस्य क्षपणम् । यच्च वातस्य वर्धनमौषधं तद्रूक्षतिक्ताद्यपतर्पणं लंघनरूपमस्थ्नः क्षपणम् । तदर्थमेतदुक्तम्। यत एवं वृद्धेः संतर्पणरूपत्वं क्षयस्याऽपतर्पणरूपत्वमतो वृद्धिक्षयसंभवान् विकारान् दोषधातूनां संबंधिनः क्रमाल्लंघनबृंहणैः साधयेदुपक्रमेत् । कथम् । शीघ्रम् । चिरोत्थिता हि ते दुश्चिकित्स्याः स्युः । वृद्ध्युत्थान् विकारान् लंघनैः क्षयोत्थान् बृंहणैरिति क्रमार्थः ॥ ३४ ॥

प०-के दोषाः कस्मिन्नाधारे आश्रिता इत्याह-तत्र तेषु वातादिषु मध्येऽस्थनि वायुः स्थितः आश्रितः स्वेदरक्तयोः पित्तं स्थितम् । श्लेष्मा शेषेषु रसमेदोमज्जशुक्रपुरीषमूत्रादिषु स्थिता आश्रिताः । येनैव रूपेण ते आश्रयाश्रयिभावेन दोषधातूनां तेन तेन हेतुनैषामाश्रयाश्रयिणां मिथः परस्परं यदेकस्य वर्धनं तदन्यस्यापि वर्धनं, यदेकस्य क्षपणं तदन्यस्यापि क्षपणमौषधम् । यदाश्रयस्य वर्धनं तदाश्रयिणोऽपि वर्धनम् । यदाश्रयस्य क्षपणं तदाश्रयिणोऽपि क्षपणम् । एवं चेदस्थ्नो वाताश्रयस्य वर्धनमौषधं तदाश्रयिणोऽपि वातस्य वर्द्धनं यदस्थ्नः क्षपणं तदपि वातस्य क्षपणं प्राप्नोति । तत्रेदमाह हिशब्दो यस्मादर्थे । यस्मात् प्रायो या वृद्धिर्वर्धनं दोषधातूनामेषां सा तर्पणाद् बृंहणाज्जायते । सा च श्लेष्मणानुगता । प्रायोग्रहणमत्र व्यभिचारदर्शनार्थम् । यत एवं या वृद्धिः सा तर्पणात् तस्माद्धेतोर्यः संक्षयः एषां दोषधातूनामाश्रयाश्रयिरूपाणां स प्रायोऽपतर्पणाल्लङ्घनापरपर्यायनाम्नो जायते । एवं यदस्थ्नो वर्धनमौषधं तत् स्निग्धमधुरादि बृंहणरूपं वातस्य क्षपणम् । यद्वातस्य वर्धनमौषधं रूक्षतिक्ताद्यपतर्पणं लङ्घनरूपमस्थ्नः क्षपणं तदर्थमेतदुक्तमस्थिमारुतयोर्नैवेति बाहुल्यं चाङ्गीकृत्य शास्त्रकार इदमाह--यत एवंरूपता वृद्धेस्तर्पणरूपत्वमपतर्पणरूपत्वं च संक्षयस्यातो वृद्धिक्षयसमुद्भवान् विकारान् दोषधातूनां सम्बन्धिनः क्रमाल्लङ्घनबृंहणैः साधयेत् चिकित्सेत् । व्याध्युत्थान् विकारान् लङ्घनैरपतर्पणैः, क्षयोत्थान् बृंहणैःसन्तर्पणैः ॥ ३४ ॥

हे०--दूष्याणां वृद्धिहेतुत्वादिज्ञानार्थं दोषदूष्ययोराश्रयाश्रयिभावमाह--तत्र तेषु दोषादिषु मध्ये शेषेषु रसमांसमेदोमज्जशुक्रमूत्रपुरीषादिषु । आश्रयाश्रयिभावस्य फलमाह-तेन आश्रयाश्रयिभावेन हेतुना एषां दोषादीनामाश्रयाश्रयिणामाधाराधेयभावेन हेतुना स्थितानां यदेकस्य वर्द्धनक्षपणौषधं तदेवान्यस्य कथं मिथः परस्परं यदाश्रयस्य तदाश्रयिणः यदाश्रयिणस्तदाश्रयस्येत्यर्थः । वर्द्धनं वृद्धिहेतुः, क्षपणं क्षयहेतुः, औषधं वैषम्यानिवर्तकं साम्यहेतुरित्यर्थः । अपवादमाह--अस्थिमारुतयोराश्रयाश्रयिभावेऽप्येवं न ज्ञेयम् । यद्वायोर्विवर्धनं रूक्षादि तदस्थ्नः क्षपणं, यदस्थ्नो विवर्द्धनं स्निग्धादि तद्वायोः क्षपणम् । अस्थिवृद्धौ लंघनमौषधं, वायुवृद्धौ बृंहणम्, अस्थिक्षये बृंहणमौषधं, वातक्षये लंघनम् । अथोपशयं विवक्षुश्चिकित्सामाह--चिकित्सैव हि प्रयुज्यमाना उपशय उच्यते । वक्ष्यति हि "हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् । औषधान्नविहाराणामुपयोगं सुखावहम् ॥ विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः" इति । चिकित्सा च द्विविधा--बृंहणलंघनभेदात् । तत्र बृंहणलंघने विभजति--वृद्धिजान् विकारान् लंघनेन साधयेत् । क्षयजान् बृंहणेन, कुतोऽयं विभागः । हि यस्माद्वृद्धिस्तर्पणाद्बृंहणाद्भवति । सा च श्लेष्मणानुगता यत्र यत्र वृद्धिस्तत्र तत्र श्लेष्मपित्तादिवृद्धावपि श्लेष्मानुगमोऽस्तीत्यर्थः । तस्मात्सर्वेषु वृद्धिविकारेषु लंघनमौषधं हेतुविपरीतत्वात्, श्लेष्मानुगमनेन व्याधिविपरीतत्वाच्च । तथा संक्षयस्तद्विपर्ययात्तर्पणविपर्ययाल्लंघनाद्भवति । स च वायुनानुगतः यत्र यत्र क्षयस्तत्र तत्र वायुः । कफादिक्षयेऽपि वायोरनुगमोऽस्तीत्यर्थः । तस्मात्सर्वेषु क्षयविकारेषु बृंहणमौषधं, हेतुविपरीतत्वाद्वातानुगमेन व्याधिविपरीतत्वाच्च ॥ ३४ ॥

नन्वेवं वातवृद्ध्युत्थान् विकारान् लंघनैस्तत्क्षयोत्थान् बृंहणैरिति स्यादत इदमाह—

**वायोरन्यत्र तज्जांस्तु तैरेवोत्क्रमयोजितैः ३५ ॥**

स०—वायुं हित्वा वृद्ध्युत्थान् विकारान् लंघनैः क्षयोत्थान् बृंहणैः साधयेत् । अथ तज्जान् वायुसंभवान् विकारान् पुनस्तैरेव लंघनबृंहणैरुत्क्रमयोजितैरुपक्रमेत् यथा निर्दिष्टक्रमाद्विपरीतः क्रमः उत्क्रमः । यथा वातवृद्ध्युत्थान् विकरान् बृंहणैस्तत्क्षयोत्थांश्च लंघनैरिति ॥ ३५ ॥

प०—एवं सति वायोरेवंरूपतोपक्रम्य प्राप्नोति । वातवृद्ध्युत्थान् विकारान् लङ्घनैः क्षयोत्थान् बृंहणैरित्याशङ्क्याह—वायुं वर्जयित्वा तज्जान् पुनर्विकारान् तैरेव लङ्घनबृंहणैरुत्क्रमयोजितैश्चिकित्सेत् उत्क्रम्य यथानिर्दिष्टक्रममुल्लङ्घ्य अन्यथाकृत्वा वातवृद्ध्युत्थान् आमयान् बृंहणैः सन्तर्पणैः भक्षणोत्थांश्च लङ्घनैरपतर्पणैः ॥ ३५ ॥

हे०--एतन्न सर्वं वायोरन्यत्र। वायुवृद्धौ न तर्पणं हेतुः, न लंघनमौषधमित्यर्थः । तर्हि तत्र :किमित्याह--तज्जानित्यादि । वायुवृद्धिक्षयजान् । वृद्धिजान्बृंहणेन साधयेत् । क्षयजान् लंघनेनेत्युत्क्रमयोजना । वातवृद्धिर्लंघनात् क्षयो

बृंहणादिवत एवं ज्ञेयम् । प्रायोग्रहणाद्व्यभिचारोऽपि यथा—" कफे लङ्घनसाध्येऽपि कर्तरि ज्वरगुल्मयोः । तुल्येऽपि देशकालादौ लङ्घनं न समं मतम् " इत्यादि ॥ ३५ ॥

दोषाणां विशेषचिकित्सेह नोक्ता । दोषोपक्रमणीये वक्ष्यमाणत्वात् । रसचिकित्सा च रसोऽपि श्लेष्मवदित्युक्तेनेह पुनर्निर्दिष्टाऽतो रक्तादीनां चिकित्सामाह—

**विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः ।**
**मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः ॥**
**स्थौल्यकार्श्योपचारेण मेदोजानस्थिसंक्षयात् ।**
**जातान् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिस्तथा ॥**
**विड्वृद्धिजानतीसारक्रियया विट्क्षयोद्भवान् ।**
**मेषाजमध्यकुल्माषयवमाषद्वयादिभिः ॥**
**मूत्रवृद्धिक्षयोत्थांश्च मेहकृच्छ्रचिकित्सया ।**
**व्यायामाऽभ्यंजनस्वेदमद्यैः स्वेदक्षयोद्भवान् ३६**

स०—वृद्धिक्षयोपक्रमे एवं स्थितेऽपि विशेषेण रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैरुपक्रमेत । मांसवृद्धिजान् शस्त्रक्षाराग्निकर्मभिः । स्थौल्यकार्श्योपचारेण मेदोवृद्धिक्षयाभ्यां जातान् । मेदोजानिति मध्यमपदलोपोऽत्र द्रष्टव्यः । मेदोवृद्धिजान् स्थौल्योपचारेण द्विविधोपक्रमणीयोक्तया स्थौल्यचिकित्सया । मेदःक्षयजान् कार्श्योपचारेणोपाचरेत् । अस्थिक्षयजान् क्षीरघृतैस्तिक्तसंयुक्तैर्बस्तिभिस्तथा तथारूपैस्तिक्तसंयुतैरित्यर्थः । ननु यानि वातकृन्ति द्रव्याणि तान्यस्थिक्षयोद्भवविकाराणां वृद्धिकरणानीति तद्द्रव्योपयोगोऽत्र न युक्तस्तिक्तस्य वातकृत्त्वात् । उच्यते । यद्द्रव्यं स्निग्धं शोषणं खरत्वमुत्पादयति तदस्थ्नो वर्धनं युक्तं खरस्वभावादस्थ्नाम् । न चैवंविधमेकं द्रव्यमस्ति यत् स्निग्धं शोषणं च । तस्मात् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिश्च तिक्तसंयुतैश्चेत्युपदिष्टम् । क्षीरघृतस्य तिक्तयुक्तस्य खरस्वभावत्वात् । विड्वृद्धिजान् पुरीषवृद्धिजानतीसारचिकित्सया साधयेत् । विट्क्षयोद्भवान् मेषाजमध्यादिभिः साधयेत् । मेष उरभ्रः । अजश्छागः । तयोर्मध्यमंतराधिः । कुल्माषोऽर्धस्विन्नो माषादिर्हिंगुघृतादिसंयुतः । माषद्वयं माषो राजमाषश्च । आदिशब्देन काकाण्डोलात्मगुप्तादीनां ग्रहणम् । मूत्रवृद्ध्युत्थान् मेहचिकित्सया मूत्रक्षयोत्थान् मूत्रकृच्छ्रचिकित्सया । स्वेदक्षयजान् व्याधीन् व्यायामादिभिः साधयेत् ॥ ३६ ॥

प०—विशेषादतिशयं कृत्वा रक्तवृद्धिजान् विकारान् रक्तस्रुत्या रक्तनिर्हरणेन विरेचनैः कायविरेचनैश्चिकित्सेत् । मांसवृद्धिजान् व्याधीन् शस्त्रकर्मादिभिरुपाचरेत् । मेदोजान् रोगान् वृद्ध्युत्थान् स्थौल्योपचारेण द्विविधोपक्रमणीयोक्तेनोपक्रमेण चिकित्सेत् । मेदःक्षयोत्थान् कार्श्योपचारेण कृशस्य चिकित्सया द्विविधोपक्रमणीयोक्तया चिकित्सेत् । अस्थिसंक्षयादुत्पन्नान् व्याधीन् तिक्तसंयुतैर्घृतक्षीरैश्चोपाचरेत् तथा बस्तिभिरुपाचरेत् । शकृद्वृद्धिजान् विकारान् अतीसारक्रियया अतीसारसाधनेनोपक्रमेत् । शकृत्क्षयजान् विकारान् मेषाजमध्यादिभिरुपाचरेत् । मेषाजयोर्मध्यमत्रादि, कुल्माषः स्विन्नानि सस्यानि, माषद्वयं—माषो, राजमाषश्च । आदिग्रहणात् वास्तुकात्मगुप्तापटोलादीनां परिग्रहः । मूत्रवृद्धिजान् विकारान् प्रमेहचिकित्सया चिकित्सेत् । मूत्रक्षयोत्थान् व्याधीन् मूत्रकृच्छ्रचिकित्सया उपक्रमेत् । स्वेदक्षयजान् विकारान् व्यायामादिभिरुपाचरेत् ॥ ३६ ॥

हे०—अथ केषांचिद्विशेषः । तत्र रक्तवृद्धिजानाह—रक्तस्रुतिः शिराव्यधादिः । मांसवृद्धिजानाह—मांसवृद्धीति । मेदोजानाह—मेदोवृद्धिजान् । स्थौल्योपचारेण द्विविधोपक्रमणीयाध्यायोक्तेन । मेदःक्षयजान् कार्श्योपचारेण । अस्थिक्षयजानाह—तथेति । तिक्तसंयुतैः । तथा च खारणादिः—" पञ्चकर्माणि सर्पींषि सतिक्ता बस्तयस्तथा । पयः " इति । न चैवं तिक्तसंयुतैरिति बस्तीनामेव विशेषणं वक्तुं युक्तम्, " बस्तयः क्षीरसर्पींषि तिक्तकोपहिताश्च ये " इति चरकवचनात् । विड्वृद्धिजानाह—अतीसारक्रियया अतीसारचिकित्सितेन । विट्क्षयजानाह—मेषाजयोर्मध्यमंतराधिः, माषद्वयं—माषो, राजमाषश्च । आदिशब्दात्मत्स्यमांसादयः। मूत्रवृद्धिक्षयजानाह-मूत्रवृद्धिजान् प्रमेहचिकित्सया, मूत्रक्षयजान् कृच्छ्रचिकित्सया, स्वेदक्षयजानाह-व्यायामेति ॥ ३६ ॥

**स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः ।**
**तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः ३७॥**

स०-स्वस्थाने कायाग्नेः पक्वामाशययोर्मध्यम् । यथा वक्ष्यति । पित्तं पंचात्मकं तत्तु पक्वामाशयमध्यगमित्यादि यावत्पाचकं नाम तत् स्मृतमिति । तत्र पक्वामाशयमध्ये तिष्ठतीति स्वस्थानस्थस्तस्यैवंविधस्य कायाग्नेर्जाठरानलस्यांऽशा भागा धातुषु रसादिषु संश्रितास्तेषामग्न्यंशानां सादेन मांद्येन धातूनां वृद्धयुद्भवस्तेषामंशानामतिदीप्त्याऽतितैक्ष्ण्याद्धातुक्षयोद्भवः ॥ ३७ ॥

प०-स्वस्थानस्थस्य स्वाशयस्थस्यामपक्वाशयमध्यस्थस्य कायाग्नेर्जठरानलस्य ये अंशा भागा धातुषु रसादिषु संश्रिताः स्थिताः तेषामग्न्यंशानां सादेनानुल्वणतया धातूनां वृद्धयुद्भवः तेषामेवांशानामतिदीप्त्या प्रबलत्वेन धातूनां क्षयोद्भवः ॥३७॥

हे०-धातुजानामुपक्रमांतरमाह-स्वस्थानस्थस्य ग्रहणीस्थस्य कायाग्नेरन्नपक्तुः, अंशाः क्षुद्राणि रूपांतराणि, धातुषु धात्वाशयेषु सर्वधात्वमय इत्यर्थः । तेषां सादेन मांद्येन धातुवृद्ध्युद्भवः, अतिदीप्त्या धातुक्षयश्च । धातुवृद्धौ मांद्योपक्रमः, धातुक्षये तैक्ष्ण्योपक्रमः कार्य इत्यर्थः ॥ ३७ ॥

**पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधम् ३८**

स०-पूर्वो रसाख्यो धातुर्वृद्धो भूत्वा परं रक्ताख्यं धातुं वृद्धं कुर्यात् पूर्ववत् क्षीणो धातुः परं धातुं तद्विधं क्षीणमेव कुर्यात् ॥ ३८ ॥

प०-पूर्वो रसाख्यो धातुः वृद्धो भूत्वा अपरं रक्ताख्यं धातुं वृद्धं कुर्यात् । पूर्वश्च क्षीणो धातूरसाख्यः परं रक्ताख्यं धातुं क्षीणमेतद्विधमेव कुर्यात् ॥ ३८ ॥

हे०-तथा पूर्वो धातुर्वृद्धः परं वृद्धं कुर्यात्, क्षीणः क्षीणम् । परधातोर्वृद्धौ पूर्वस्य क्षयः कार्यः क्षये वृद्धिरित्यर्थः । इत्युनशयप्रकरणम् ॥ ३८ ॥

**दोषा दुष्टा रसैर्धातून् दूषयंत्युभये मलान् ।**
**अधो द्वे सप्त शिरसि खानि स्वेदवहानि च ।**
**मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः३९**

स०-दोषा दुष्टा रसैर्मधुरादिभिर्मिथ्यायोगातियोगसेवितैः कुपिता धातून् दूषयंति । उभये दोषा धातवश्च मलान् दूषयंति । मला मलायनानि दूषयंतीति संबंधः । तथा च मुनिः । मलायनानि बाध्यंते दुष्टैर्मात्राधिकैर्मलैरिति । कानि मलायनानीत्याह । अधो द्वे गुदमेढ्राख्ये । सप्त शिरसि खानि द्वे अक्षिणी द्वौ कर्णौ द्वौ नासापुटावास्यं चेति । तथा स्वेदवहानि रोमकूपाख्यानि छिद्राणि सर्वशरीरगतानि मलायनानि स्युः । अतो दूषणात्कारणात् तेषु मलायनेषु दुष्टेषु यथास्वं गदाः स्युः । यो यस्य स्वो यथास्वम् ॥ ३९ ॥

प०-धातुमलायनानां दूषणक्रमं [illegible] चाह-दोषा वाताद्यो दुष्टाः स्वैर्हेतुभिः कुपिता धातून् रसादीन् दूषयन्ति । उभये ते दोषा धातवो दुष्टा मलान् भृशं दूषयन्ति । ते च मला दुष्टा मलायनानि मलमार्गान् दूषयन्ति । कियन्ति तानि मलायनानीत्यत आह-अधो द्वे मलायनानि गुदो मेढ्रं च । शिरसि सप्त मलायनानि । द्वे अक्षिणी, द्वौ कर्णौ, स्रोतसी द्वे घ्राणस्रोतसी, कण्ठस्रोत एकम् । खानि छिद्राणि । तथा स्वेदवहानि सकलदेहगतानि रोमकूपाख्यानि खानि सर्वाण्यपि मलायनानि दुष्टा मला दूषयन्ति । अतस्तेषु धातुमलायनेषु यथास्वं यो यस्य आत्मीयः आत्मीयरूपतया स्थितस्तेषु यथास्वं गदा व्याधयः स्युः भवेयुः । धातुदोषैर्दुष्टैर्मलायनेषु मलैर्दुष्टैर्यथायथं व्याधयो भवेयुः ॥ ३९ ॥

हे०-वृद्धिक्षयविकारसंप्राप्तिमाह-रसैर्मधुरादिभिर्दुष्टा दोषा धातून् दूषयंति । रसग्रहणं वीर्यादीनामुपलक्षणम् । उभये दोषधातवो मलान् दूषयंति । मला मलायनानि स्रोतांसि दूषयंति, कानि पुनस्तानि । अधो द्वे मुष्कं, गुदश्च । सप्त शिरसि-कर्णौ, नेत्रे, नासिके, मुखं च । स्वेदवहानि खानि रोमकूपाः, [illegible] अतो दुष्टेरनंतर तेषु दुष्टेषु [illegible] गदाः स्युः । कथं यथास्वं [illegible] विभागः उक्तः । संग्रहे तु-"वक्ष्यन्ते [illegible] वातरोगिके । पित्तं त्वचि स्थितं कुर्यात्[illegible] रिकाः ॥ रक्ते विसर्पं दाहं च मांसे मांसावकोथनम् । सदाहान्मेदसि ग्रन्थीन् स्वेदात्तृड्वमनं भृशम् ॥ अस्थिदाहं भृशं मज्जि हारिद्रनखनेत्रताम् । पूतिपीतावभासं च शुक्रं शुक्रसमाश्रितम् ॥ शिरागतं [illegible] स्नायुगं तृषम् । कोष्ठगं मंदतृड्दाहान् व्यापिनोऽन्यांश्च

यज्मणः ॥ श्लेष्मा त्वचि स्थितः कुर्यात्स्तंभं श्वेतावभासताम् । पांड्वामयं शोणितगोमांसस्थोऽर्बुदापची ॥ आर्द्रचर्मावनद्धाभगात्रतां चातिगौरवम् । मेदोऽगस्थूलतां मेहमस्थ्नां स्तब्धत्वमस्थिगः ॥ मज्जगः शुक्लनेत्रत्वं शुक्रस्थः शुक्रसंचयम् । विबन्धं गौरवं चाति शिरास्थः स्तब्धगात्रताम् ॥ स्नायुगः संधिशूनत्वं कोष्ठगो जठरोन्नतिम् । अरोचकाविपाकौ च तांस्तांश्च कफजान् गदान् ॥ विण्मूत्रयोः स्वाश्रययोस्तत्र तत्रोपदेक्ष्यते । उपतापोपघातौ च स्वाश्रयैंद्रियगैर्मलैः" इति ॥ ३९ ॥

दोषधातुमलानां समविषमाऽवस्था गदिता। ओजो निरूपयन्नाह-

**ओजस्तु तेजो धातूनां शुक्रांतानां परं स्मृतम् ।**
**हृदयस्थमपि व्यापि देहस्थितिनिबंधनम् ॥**
**स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम् ।**
**यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ।**
**निष्पद्यंते यतो भावा विविधा देहसंश्रयाः ४०॥**

स०-रसादीनां धातूनां शुक्रांतानां यत्परं तेजस्तदोजः स्मृतम् । तथा हृदयस्थमपि व्यापि । सकलशरीरव्यापि । यतस्तस्य षड्बिंदुकस्य विशेषेण हृदयं स्थानम् । तथा देहस्य स्थितिर्देहस्थितिस्तस्या निबंधनं जीविताधिष्ठानमित्यर्थः । अन्ये त्वाहुः परशब्देनैतद् द्योतयति । अन्यदप्योजोऽस्ति न तद्धातूनां शुक्रांतानां तेजः श्लेष्माख्यमिति । तथा चोक्तं संग्रहे । मृदु सोमात्मकं शुद्धं रक्तमीषत्सपीतकमित्यादि । यन्नाशे यस्यौजसो नाशेऽभावे नियतं निश्चितं प्राणिनोऽभावः । यस्मिन्नोजसि तिष्ठति विद्यमाने तिष्ठति प्राणिति देहीति शेषः । यतो यस्माच्च भावाः पदार्था निष्पद्यंते जायन्ते विविधा अनेकप्रकाराः । तथा देहः संश्रयो येषां ते देहसंश्रयाः । लक्षणमोजसो मुनिनाऽभ्यधायि । हृदि तिष्ठति यच्छुद्धं स्निग्धमीषत्सपीतकम् । ओजः शरीरे संख्यातं तन्नाशे ना विनश्यतीत्यादि ॥४०॥

प०-एवं दोषधातुमलान् स्वकर्मादिषु दर्शनेन व्याख्याय देहस्य, दोषधातुमलमूलस्याधुना यत्प्रधानं मूलं देहस्य येन्नासौ देहः क्षीणो न दोषधातुमलेषु सत्स्वपि क्षीयते जीवितेन सहान्यथा वृद्धेन वर्धते सह जीवितेनापि तद्व्याख्यायते-धातूरसादीनां शुक्रान्तानां परं तेजः प्रकृष्टं प्रधानं सारमोजः स्मृतमुक्तमाचार्यैः । तथा हृदयस्थमपि सकलशरीरव्यापि तद्विविधमुक्तम षड्बिन्दुपरिमाणम,प्रासृतिकं च । तस्य सकलशरीरव्यापिनः षड्बिन्दुकस्य शुद्धरक्तसदृशस्य किञ्चित् पीतवर्णस्य विशेषेण हृदयं स्थानम्, तच्च देहस्थितिनिबन्धनं देहस्य स्थितिर्देहस्थितिः तस्या निबन्धनं कारणम् । तेन देहस्थितिर्निबध्यते नियम्यते । अन्यच्च यन्नाशेऽभावे नियतं निश्चितं नाशो भवति तथा यस्मिन्नोजसि तिष्ठति विद्यमाने सति पुमांस्तिष्ठति जीवतीति यावत् । तथा निष्पद्यन्ते जायन्ते यस्माद्भावाः पदार्थाः अनेकप्रकाराः देहसंश्रयाः शरीराश्रयः देहः संश्रय आश्रयो येषां ते देहसंश्रयाः विविधाः पदार्था यतो निष्पद्यन्ते तदोजः । तथा सङ्ग्रहे-"तेजो यत्सर्वभूतानामोजस्तत्परमुच्यते मृदु सोमात्मकं शुद्धं रक्तमीषत्सपीतकम् । यत्सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः । संवर्तमानं हृदयं समाश्रयति यत्पुरा । यच्छरीररसः स्नेहप्रायो यत्र प्रतिष्ठितः । यस्य नाशाच्च नाशोऽस्ति प्रीणिता ये देहिनः । हृदयस्थमपि व्यापि तत्परं जीवितास्पदम्" ॥ ४० ॥

हे०-अथौजोविज्ञानं तस्यापि मलत्वात् । वक्ष्यति हि—"कफः पित्तं मलाः खेषु प्रस्वेदो मलरोम च स्नेहोऽक्षित्वड्निशामोजो धातूनां क्रमशो मलाः॥" यदुक्तं संग्रहे—शुक्रस्य सार ओजोऽत्यंतशुद्धतया चास्मिन् मलत्वाभावः । "स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु ॥ न शुक्रे पच्यमानेऽपि हेमनीवाक्षये मलाः । इति तंत्रांतरे । अन्ये पुनस्त एव तस्य नेच्छंति पावमिति तन्नरशरीरचरशुक्रविषयम् । यत्तु संभोगादंगनागर्भाशयगतमार्तवेनैकलोलीभूतं जीवाधिष्ठितं शुक्रं तस्य पाकाद्रसादिवन्मलसारौ स्तः । तत्र मल ओजः सारो गर्भः वक्ष्यति हि—"रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते" इति । मलत्वं च गर्भापेक्षया, रसाद्यपेक्षया तु सारत्वमेव अत एवाह चरकः—"यत्सारमादौ गर्भस्य यच्च गर्भरसाद्रसः । संवर्तमानं हृदयं समाविशति यत्पुरा ॥ यच्छरीरे रसः स्नेहः प्राणा यत्र प्रतिष्ठिताः" इति । न चैवं

मोजोऽनेकत्वं शक्यं, यदेव हि शुक्रमलरूपमोजस्तदेव गर्भेहृदयमनुप्रविष्टमष्टबिंदुकप्रमाणमार्तवानुविद्धत्वादीषद्रक्तपीतं जीवशोणितमुच्यते । उक्तं च तन्त्रान्तरे—"प्राणाश्रयस्यौजसोऽष्टौ बिंदवो हृदयाश्रिताः" इति । तथा चरकोऽपि—"हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् । ओजः शरीरे व्याख्यातं तन्नाशान्म्रियते नरः ।" इति । तदेवाहाररसेन समानगुणत्वादाप्यायितमर्धाञ्जलिपरिमाणं सर्वदेहव्यापि रसात्मकमुच्यते । तद्वक्ष्यति—"दशमूलशिरा हृत्स्थास्ताः सर्वं सर्वतोवपुः । रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् "इति । खरणादिरप्याह—"रसधातोः परं धाम पच्यमानात्प्रसीदति । सौम्यस्वभावं रक्ताग्रे यत्तदोजः प्रकीर्तितम् " इति । तदेव सर्वान् धातूननुप्रविष्टं तेषां प्रभावातिशयमादधानं तत्तेज उच्यते । यदाह सुश्रुतः-रसादीनां शुक्रांतानां धातूनां यत्परं तेजस्तदोजस्तद्बलमित्युच्यते । तदेव पुनः पुनः पाकाचामीकरमिवापेतोपाधिमलमत्यंतं शुक्रसार इत्युच्यते । तस्माच्छुक्रमलरूपं मूलभूतमेवौज इति स्थितम् । युत्तूक्तं चरकेण—"प्राकृतस्तु बलं श्लेष्मा विकृतो मल उच्यते" इति । तदोजो हेतुत्वादोजस्त्वम्, आयुर्घृतमितिवत् । एतेनैव तदुपपन्नं "धातूनां तेजसि रसे तथा जीवितशोणिते ॥ श्लेष्मणि प्राकृते वैद्यैरोजःशब्दः प्रकीर्तितः " इति । ओजसो मलत्वेऽपि पृथक्कथनं प्राधान्यख्यापनार्थम् । प्राधान्यहेतुमाह—ओजः पुनः परं प्रधानं स्मृतं तद्धि शुक्रांतानां धातूनां परं तेजः । शुक्रांतानां ग्रहणं सर्वधातुप्राप्त्यर्थम् । तथा हृदयस्थं न केवलं तत्स्थं व्याप्यपि देहस्थितिनिबंधनम् । देहस्य स्थितयो नानावस्थास्तासां निबंधनं कारणम् । कारणत्वमेव विवृणोति—यन्नाश इत्यादि ॥ ४० ॥

**ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ।**
**बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेंद्रियः॥**
**विच्छायो दुर्मना रूक्षो भवेत्क्षामश्च तत्क्षये ।**
**जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम् ॥ ४१ ॥**

स०—ओजः कोपादिभिः क्षीयेत । तत्क्षये बिभेति दुर्बल इत्यादिलक्षणम् । जीवनीयौषधाद्यास्तत्र भेषजम् । जीवनीयौषधानि जीवंत्यादीनि दश जीवनसंज्ञानि तथाऽन्यानि यानि मधुराणि द्रव्याणि । क्षीरस्य जीवनीयत्वेनैव ग्रहणे सिद्धे पृथग्भावोऽतिशयार्थोऽतिशयेनात्र क्षीरमौषधमिति । रसो मांसरसः । आदिग्रहणेन काकांडोलाऽत्मगुप्ताघृतादिपरिग्रहः ॥ ४१ ॥

प०—ओजः कोपादिभिः क्षीयते । कोपः क्रोधः । क्षुदत्तीव बुभुक्षा । ध्यानमनेकविधं चिन्तनम् । शोकश्चित्तदुःखम् । श्रमः शरीरायासः । आदिग्रहणाद्भयत्रासादीनां ग्रहणम् । तत्क्षये ओजसःक्षये सति नरो बिभेति अकस्मात्सभयः स्यात् । तथा दुर्बलोऽल्पसामर्थ्यः । अभीक्ष्णमत्यर्थं ध्यायति चिन्तापरः स्यात् । व्यथितेन्द्रियः व्यथितानि दुःखितानि अशक्तानि सर्वाणीन्द्रियाणि यस्य । दुश्छायो दुष्टकान्तिः । दुर्मनाः दुःखितचेताः । रूक्षस्त्वगादिषु स्नेहरहितः । क्षामः क्षीणधातुप्रायः । तत्रौजःक्षये भेषजमौषधं जीवन्तीकाकोल्यादीनि जीवनीयान्यौषधानि । तथा क्षीरम्, रसो मांसरसः । आदिग्रहणादन्यान्यपि बृंहणीयानि द्राक्षाप्रभृतीनि मधुरगणनिर्दिष्टानि तान्यपि भेषजम् । क्षीरस्यापि जीवनीयत्वाज्जीवनीयौषधत्वं सिद्धम् । तस्य पृथक्पाठोऽतिशयज्ञापनार्थम् । अतिशयेन क्षीरं तत्र भेषजम् ॥ ४१ ॥

---

१ "हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् । ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति ॥ प्रथमे जायते ह्योजः शरीरेऽस्मिञ्छरीरिणाम् । सर्पिर्वर्णं मधुरसं लाजगन्धि प्रजायते ॥" ओजसो दुर्ज्ञेयत्वेन लक्षणमाह—हृदीत्यादि । शुद्धमिति शुक्रम्, रक्तमीषदिति किंचिद्रक्तम्, सपीतकमिति ईषत्पीतकम्, तेन शुक्लवर्णमोजः, रक्तपीतौ तु वर्णावत्रानुगतौ किंवा ईषदित्यल्पप्रमाणम्, तेन अष्टबिन्दुकमोज इति दर्शयति । यदुक्तं **तन्त्रान्तरे**—"प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रयाः " इति । एतच्चाष्टबिन्दुकं परमोजो ज्ञेयम्, अर्धाञ्जलिपरिमाणं तु यदोजस्तदप्रधानम् । यच्छरीरे वक्ष्यति । तावच्चैव श्लेष्मण ओजसश्च प्रमाणमित्यनेन । तस्माद्द्विविधमिहौजः अतएवार्धे दशमहामूलीये वक्ष्यति । "तत्परस्यौजसः स्थानम्" इति । परस्य श्रेष्ठस्याष्टबिन्दुकस्येत्यर्थः । इह च क्षयलक्षणमर्धाञ्जलिमानस्यैव ज्ञेयम्, अष्टबिन्दुकस्य त्ववयवनाशेऽपि मृत्युर्भवतीति " हृदि " इत्यादिना ग्रंथेन दर्शयति । एतच्चौजः सार्वधातुसमुदायरूपम् , तेन सप्तधातुष्वेवावरुद्धमिति नाष्टमधातुत्वादिप्रसक्तिः, अतएव **सुश्रुतेनाप्युक्तम्**, "रसादीनां शुक्रान्तानां तत्परं तेजस्तत्खल्वोजः"इति । अन्यत्राप्युक्तम्—" भ्रमरैः फलपुष्पेभ्यो यथा संह्रियते मधु । तद्वदोजः शरीरेभ्यो गुणैः संह्रियते नृणाम्" इति। "प्रथमे जायते" इत्यादिपाठस्तु नातिप्रसिद्धः । इति **चक्रपाणिः** ।

हे०—क्षयहेतूनाह—क्षुद् बुभुक्षा, ध्यानं चिंता । आदि-शब्दाद्भ्रमोत्त्रासकटुभोजनादयः । ओजःक्षयं लक्षयति—बिभेति त्रस्यति, दुर्बलो हीनबलो भवति, अभीक्ष्णं पुनःपुनरकस्मात्, ध्यायति चिंतयति, व्यथितेन्द्रियः हृदयादिषु स्थानेषु व्यथावान् । तथा दुश्छायो मलिनकांतिः, दुर्मना निरुत्साहः, रूक्षो निःस्नेहांगः, क्षामः कृशांगः । क्षयौषधभंग्या वृद्धिहेतूनाह-जीवनीयानि जीवन्त्यादीनि, रसो मांसरसः । आदिशब्देन शर्करादयः ॥ ४१ ॥

**ओजोविवृद्धौ देहस्य तुष्टिपुष्टिबलोदयः ॥४२॥**

स०—ओजोविवृद्धौ सत्यां देहस्य तुष्टिः प्रहर्षः पुष्टिर्वृद्धिर्बलं सामर्थ्यमेषामुदयः सम्यग्वृद्धिर्भवति ॥ ४२ ॥

हे०—ओजोवृद्धिं लक्षयति-तुष्टिः सन्तोषः, पुष्टिः स्थौल्यं, बलोदयः शक्त्युत्कर्षः, ओजोवृद्धेस्तुष्ट्यादिहेतुत्वान्न वातादिवृद्धिवद्विकारकारित्वं, यदा त्वोजो व्यापद्यते स्वस्थानाद्विस्रंसते वा तदा वातादिवद्विकारकारित्वम्, तथा चाह सुश्रुतः—“ त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ” इति । बलमोजः ॥ ४२ ॥

इदानीं संक्षेपेण वृद्धिक्षयभेषजं कथयन्नाह—

**यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु ।**
**तत्तत्त्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत् ॥**

स०—यदन्नं पुरुषो द्वेष्टि नाभिनंदति यदप्यन्नं प्रार्थयेत तत्तदन्नं द्विष्टं त्यजन् परिहरन्निष्टमन्नं समश्नन् भक्षयन् दोषाणां संबंधिनौ वृद्धिक्षयौ तौ तौ यौ यस्य दोषस्यात्मीयौ वृद्धिक्षयौ तौ तौ जयेत् । ननु किमविशेषेणैतत्प्रार्थितमश्नन् दोषक्षयं जयेन्नेत्याह । अविरोधि । तुरवधारणे । अविरोध्येव तत्तथाविधमन्नमश्नन् दोषाणां क्षयं जयेन्न तु विरोध्यन्नमश्नन् ॥ ४३ ॥

प०—वृद्धिक्षययोः संक्षेपत औषधमाह—यदन्नमभ्यवहार्यं पुरुषो द्वेष्टि नाभिलषति, यदप्यन्नं प्रार्थयेताभिलषेत्तदन्नं प्रार्थितं समश्नन् भुञ्जानो यौ यौ वृद्धिक्षयौ तौ तौ जयेत् । यदि तत्तदन्नमविरोधि भवेत् न विरुद्धं स्यात् त्यजन् समश्नंश्च ॥ ४३ ॥

हे०—वृद्धिक्षयौ ज्ञात्वा यदनुष्ठेयं तत्संक्षेपादाह--यदन्नं द्वेष्टि तत्तत्त्यजन् तौ तौ वृद्धिक्षयौ जयेत् । तथा यद्यत्प्रार्थयते तत्तत्समश्नंस्तौ तौ वृद्धिक्षयौ जयेत् । तत्सर्वं नेत्याह—अविरोधि तु यत्प्रार्थयते तच्चेदविरोधि अपथ्यं न भवति तत्तत्समश्नीयादित्यर्थः । तच्छब्दे वीप्साकरणात् यच्छब्देऽपि वीप्सा ज्ञेया । नच यथारुच्युपचारस्यानुचितत्वमाशंकनीयम् ॥ ४३ ॥

ननु द्वेष्यान्नत्यागेनेष्टभक्षणेन कुतो हेतोर्दोषा वृद्धिक्षयौ जयेदित्याह —

**कुर्वते हि रुचिं दोषा विपरीतसमानयोः ।**
**वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयंत्यबुधास्तु न ४**

स०—यस्माद्दोषा वातादयो विपरीतसमानयोः रुचिं कुर्वंति । किंभूताः संतः । वृद्धाः । क्षीणाश्च यथाक्रमम् । वृद्धाः प्रमाणाधिकाः संतः स्वगुणेभ्यो यद्विपरीतगुणमन्नं तद्विषयां रुचिं प्रीतिमुत्पादयंति । भूयिष्ठं बाहुल्येन । क्षीणाः संतो यत्तत्समानगुणमाहारजातं तद्वर्धनहेतुस्तद्विषयां प्रीतिमुत्पादयंति । यथा वातो वृद्धः स्निग्धाम्लमधुरमन्नमभिलषति । पित्तं वृद्धं शीतमधुरकषायतिक्तकषायमन्नमभिलषति । श्लेष्मा वृद्धो रूक्षाम्लकटुतिक्तमन्नमभिलषति । वातः क्षीणो रूक्षकषायादन्नमभिलषति । पित्तं क्षीणमम्ललवणकटुकमन्नमभिलषति । श्लेष्मा क्षीणः स्निग्धमधुराम्ललवणमन्नमभिलषति भूयिष्ठमित्यनेन प्रायिकत्वमस्या व्यवस्थाया दर्शयति तेन दोषगतिवैचित्र्यादन्यथाऽपि कचिद्भवति । यथा कस्यचिन्नरस्य वातोऽपि क्षीणः स्निग्धमधुराद्यन्नमभिलषति पित्तमपि वृद्धमम्ललवणाद्यन्नमभिलषति श्लेष्माऽपि वृद्धो मधुराम्लाद्यन्नमभिलषतीति व्यभिचारात् । अत एवाऽबुधा न लक्षयंति न विदंति यथा किमयं दोषः क्षीण उत वृद्ध इति ॥ ४४ ॥

प०—हिशब्दो यस्मादर्थे । यस्माद्दोषा वातादयो रुचिं विपरीतसमानयोः कुर्वते । किंभूताः सन्तो वृद्धाः, क्षीणाश्च । यथाक्रमं वृद्धाः सन्तः स्वगुणेभ्यो यद्विपरीतगुणमन्नं तद्विषयां रुचिं प्रीतिमुत्पादयन्ति । बाहुल्येन क्षीणाः सन्तो यत्समानगुणमाहारजातं तद्विषयमभिलाषं जनयन्ति । यथा वातो वृद्धः स्निग्धाम्लमधुरेष्वन्नेषु प्रीतिं कुरुते । पित्तं वृद्धं

शीतमधुरादिकेषु । श्लेष्मा वृद्धो रूक्षकटुकादिषु । वायुःक्षीणः स्निग्धलवणादिषु । पित्तं क्षीणमम्लादिषु । श्लेष्मा क्षीणः स्निग्धमधुरादिष्वाहारजातेषु प्रीतिं कुरुते । वस्तुस्वाभाव्यात् । एतच्च दोषस्वरूपमबुधा अल्पप्रज्ञा भिषजो न लक्षयन्ति तद्विषयं तेषां ज्ञानं न जायत इत्यर्थः ॥ ४४ ॥

हे०—हि यस्माद्वृद्धा दोषाः विपरीते रुचिं कुर्वते क्षीणाः समाने । चकाराद्वृद्धा दोषाः समाने द्वेषं कुर्वते, क्षीणास्तु विपरीत इत्यपि ज्ञेयम् । अयमर्थः-यदा वायोर्वृद्धिस्तदा तद्विपरीतानां स्निग्धादिगुणानां रुचिस्तत्समानानां रूक्षादिगुणानां रुचिस्तद्विपरीतानां स्निग्धादिगुणानां द्वेष उत्पद्यते । अत इष्टसेवनादनिष्टत्यागाद्वायोः क्षयं जयेत् । एवं पित्तादिष्वपि वाच्यम् । दोषशब्दो दोषधातुमलानामुपलक्षणं भूयिष्ठं प्रायेण । कदाचिदन्यथापि रुचिद्वेषौ भवतः । यथा वक्ष्यति सामे वायौ कटुरूक्षाभिलषेण तद्विविधोपशमेन चेति । एवं सत्यप्येतादृशीं स्थितिमबुधा न लक्षयंति । एतेन बुद्धिमता भिषजा परीक्ष्यायमुपचारः कर्तव्यः, मन्दबुद्धिना तु यथोपदेशमित्युक्तं भवति । उक्तं च संग्रहे—"यथोक्तानुसरणमेव श्रेयो मन्दबुद्धेः" इति ॥ ४४ ॥

नचानेनैव लक्षणेन वृद्धाः क्षीणाश्च दोषा लक्षणीयाः किं तर्ह्यन्यदपि लक्षणमस्तीत्याह—

**यथाबलं यथास्वं च दोषा वृद्धा वितन्वते ।**
**रूपाणि जहति क्षीणाः समाः स्वं कर्म कुर्वते ॥ ४५**

स०—बलानतिक्रमेण यथास्वं च यद्यदात्मीयं यथास्वं रूपाणि गुणकर्मलक्षणानि दोषा वृद्धा वितन्वते विस्तारयंति । क्षीणाश्च बलानतिक्रमेण यथास्वं रूपाणि जहति त्यजंति । यथा वायुर्वृद्धो रूक्षशैत्यपारुष्यस्रंसव्यासादीनि विस्तारयति । क्षीणस्तु वायुः पूर्वोक्तानि रूक्षादीनि जहात्यत एव न व्यंजयति । अथ समा दोषाः किं विदधतीत्याह । समा इत्यादि । यदा न वृद्धा नच क्षीणाः समा दोषाः स्वप्रमाणस्थास्तदा स्वं कर्मोत्साहोच्छ्वासादिकं यथोक्तं कुर्वते । तल्लक्षणास्ते लक्षणीयाः ॥ ४५ ॥

प०—अन्यत्संक्षेपतो लक्षणान्तरमाह—यथाबलं बलानतिक्रमेणोत्कृष्टमध्याल्पतया यथास्वं यद्यदात्मीयं वातस्य रौक्ष्यादिकम्, पित्तस्यौष्ण्यादिकम्, श्लेष्मणः स्नैग्ध्यादिकं यद्रूपं लक्षणं यथास्वं तानि लक्षणानि वृद्धाः सन्तो दोषा वितन्वते विस्तारयन्ति प्रथयन्ति । तथैव क्षीणा यथाबलं क्षयस्याल्पमध्यभूयस्त्वेन यथास्वं च रूक्षौष्ण्यस्निग्धादिभावेन तानि रूपाणि चिह्नानि ते दोषा जहति त्यजन्ति । यदा न वृद्धा नापि क्षीणास्ते दोषाः स्वप्रमाणस्थास्तदा [illegible] लक्षणीयाः समाः सन्तः स्वं कर्म यथोक्तं तेषां [illegible]त्साहोच्छ्वासपक्त्यूष्मस्थिर[illegible] तत्कुर्वते जनयन्ति । तल्लक्षणास्ते समा अविकृता लक्षणीयाः । क्षीणा ये दोषास्ते देहस्य न काञ्चित्पीडामुत्पादयन्ति, अप्रकुपितत्वात्, [illegible]किञ्चित्करत्वाच्च ॥ ४५ ॥

हे०—उक्तयो [illegible] दोषा रूपाणि रौक्ष्यादीनि वितन्वते [illegible] । तान्येव क्षीणा जहति [illegible] । यथाबलम् अतिवृद्धाः अधिकानि, [illegible] अधिकतराणि, वृद्धतमाः अधिकतमानीत्यर्थः । [illegible] यथास्वं वायुः रौक्ष्यादीनि, पित्तमौष्ण्यादीनि, श्लेष्मा स्नेहादीनीत्यर्थः । एतदुक्तं भवति यो यो गुणः शरीरे अधिको भवति तस्य तस्य द्वेष उत्पद्यते, यो यो हीनस्तस्य तस्य रुचिः । वायौ च वृद्धे रूक्षादयः शरीरे अधिका भवन्ति ततस्तेषां द्वेषः, क्षीणेऽतएव हीना भवन्त्यत तेषां रुचि एवं पित्तादिष्वपि । समेषु पुनर्दोषेष्वमूी रुचिद्वेषौ नोत्पद्येते इत्याह—समाः स्वमिति । स्वशब्देन जातिवयोदेशकालानुरूपं शारीरं कर्मोच्यते, न दोषकर्म तस्य यथास्वशब्देनैव लब्धत्वात् । तस्माज्जात्यादिवशाद्यस्य यथारुचिद्वेषौ तस्य तथैवानुवर्तयन्ति समा दोषा नान्यथ कुर्वतीत्यर्थः ॥ ४५ ॥

तदेवं वृद्धक्षीणसमा दोषा वेद्याः । क्षीणा दोषा क्षीणत्वादेवाकिंचित्करत्वात्कदाचित्पीडां नोत्पादयंत्येवेति विचिंत्याऽल्पमतयो वैद्याः क्षीणदोषवर्धनार्थं कदाचिदनादरं कुर्युरित्याह—

**य एव देहस्य समा विवृद्धये**
**त एव दोषा विषमा वधाय ।**

यस्मादतस्ते हितचर्ययैव
क्षयाद्विवृद्धेरिव रक्षणीयाः ॥ ४६ ॥

स०—य एव दोषाः समाः संतो देहस्य विवृद्ध्यै वर्धनाय भवंति त एव दोषा विषमाः स्वप्रमाणादधिका हीना वा संतो वधाय देहविनाशाय स्युः । यस्मादेवं ततस्ते दोषा हितचर्ययैव क्षयाद्धीनत्वाद्रक्षणीयाः । कुत इव । विवृद्धेरिव । यथा विवृद्धेर्विशेषेण वर्धनात्ते रक्ष्यंते तथा क्षयादपि रक्षणीया इति । उपजातिर्वृत्तम् ॥ ४६ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्याया दोषादिविज्ञानीयो नामैकादशोऽध्यायः ॥ ११ ॥

प०—इत्येवं मनसि कृत्वा भिषजः क्षीणदोषवर्धनार्थं कदाचिदन्नं नातिस्पृहयन्तीत्येतदाशङ्क्य शास्त्रकार इदमाह—य एव दोषाः समाः सन्तो देहस्य शरीरस्य विवृद्ध्यै विवृद्ध्यर्थं सम्पद्यन्ते, ते स्वप्रमाणस्था देहवर्धनहेतवो भवन्ति । एत एव दोषा विषमाः स्वप्रमाणादधिका हीना वा वधाय विनाशाय देहस्य शरीरस्य सम्पद्यन्ते । यत एव समा दोषा देहवर्धनहेतवो विषमा देहनाशनहेतवो जायन्ते अतस्ते दोषा हितचर्ययैव हीनत्वादपि रक्षणीयाः पालनीयाः।कुत इव विवृद्धेरिव।यथा विवृद्धेस्ते रक्षणीयाः कथं सा भवत्येषा विवृद्धिर्विशेषेण वर्धनं प्रकोपनं तथा क्षयतोऽपि ते रक्षणीया इति भद्रम् ॥४६॥

इति चन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने दोषविज्ञानीयोऽध्याय एकादशः ॥ ११ ॥

हे०—दोषवैषम्यानुत्पादने हेतुं विधत्ते-हितचर्यया यथाभ्यासाहारविहाराभ्यां चरतेर्गतिभक्षणार्थत्वात् । एवशब्देन हितचर्याया अयोगः, अहितचर्यायाश्च योगो व्यवच्छिद्यते ॥ ४६ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने दोषादिचयप्रकरणं सामस्त्येन निरूपितम् ॥ ११ ॥

## द्वादशोऽध्यायः ।



दोषादिविज्ञानीयादनंतरं दोषभेदीयाध्यायारंभो यतो दोषभेदमंतरेण दोषविज्ञानं सम्यङ्नोक्तं स्यात् । पूर्वस्मिंश्चाध्याये बहुवक्तव्यत्वाद्दोषभेदो नोक्त इत्याह—

अथातो दोषभेदीयाध्यायं व्याख्यास्यामः ॥ १ ॥

स०—दोषाणां भेदो दोषभेदः। स्थाननामविभागादिभिस्तस्मै हितो दोषभेदीयः शेषं पूर्ववत् ॥ १ ॥

प०—पूर्वमुक्तं दोषविज्ञानं येन दोषाः पृथक्त्वेन ज्ञायन्ते । अतो दोषभेदं विना निरवशेषं दोषविज्ञानं नोक्तं भवति । अतो दोषादिविज्ञानीयाध्यायादनन्तरं दोषभेदीयोऽध्याय आरभ्यते । दोषाणां भेदो दोषभेदः । स्थानानामविभागादिभिः प्रकारैश्चिन्ता तस्मै हितो दोषभेदीयः ॥ १ ॥

हे०—अथातो दोषभेदीयमध्यायं व्याख्यातुं प्रतिजानीते—यतः पूर्वेऽध्याये दोषनैपम्यमुक्तं, तत्र दोषभेदा बहु भिद्यते दोषभेदज्ञानार्थमयमध्यायः । अतएवायं दोषभेदीयः ॥ १ ॥

पक्वाशयकटीसक्थिश्रोत्राऽस्थि स्पर्शनेंद्रियम् ।
स्थानं वातस्य तत्राऽपि पक्वाधानं विशेषतः ॥ २ ॥

स०—पक्वाशयादि वातस्य स्थानं तत्राऽपि षड्विधस्थाने विशेषेण पक्वमाधीयते स्थाप्यतेऽस्मिन्निति पक्वाधानं पक्वाशयः । अत एव वाते बस्तेरुपक्रमः प्रधान उक्तः । मूलापकर्षणात्सकलशरीरव्यापित्वेऽपि येषामिदं विशेषेणोक्तम् । तथा च प्रागुक्तम् । ते व्यापिनोऽपि हृन्नाभ्योरिति । विचित्रगतित्वाच्चैषां वक्ष्यमाणप्राणादिभेदेन पृथक् स्थानकर्मनिर्देशः ॥ २ ॥

प०—तत्र तावच्छरीरे स्थानविभागं वातादीनां निरूपयन्नाह—पक्वाशयप्रभृति वातस्थानम् । तत्र पक्वाशयो नाभेरधः । कटिः श्रोणिः । सक्थ्यूरुः । श्रोत्रं कर्णः । स्पर्शनेन्द्रियं त्वक् । तत्रापि तेष्वपि स्थानेषु विशेषेण पक्वाधानं स्थानं वातस्य । पक्वमाधीयतेऽस्मिन्निति कृत्वा ॥ २ ॥

हे०—तद्भेदश्च स्थानकर्मावस्थानहेत्वाकृतिसाधनसंयोगभेदाद्भवति । तत्र स्थानतो यथा—पक्वाशयस्थो वायुः कटिस्थोऽयम्।कर्मतो यथा-श्वासोच्छ्वासप्रवर्तकोऽयं विण्मूत्रप्रवर्तकोऽयम् । अवस्थातो यथा—चितोऽयं प्रकुपितोऽयम्। हेतुतो यथा—मिथ्यायोगप्रकुपितोऽयम्, अतियोगप्रकुपितोऽयम् । आकृतितो यथा—संसलक्षणोऽयमसंसलक्षणोऽयम् । साधनतो यथा—स्निग्धोपशयोऽयम् । योगतो यथा—पित्तयुक्तोऽयं श्लेष्मयुक्तोऽयमिति । एवं पित्तादिष्वपि तत्रादौ स्थानतो भेदः । स्थानं द्विधा-सामान्यं, विशिष्टं च । तत्रादौ सामान्यम्। तत्र वायोः स्थानमाह-पक्वाशयो नाभेरधः पक्वान्नस्य स्थानं कटिश्रोणिसक्थिवंक्षणादि, अंगुष्ठांतम् । श्रोत्रेंद्रियं कर्णः । स्पर्शनेंद्रियं त्वक् । तत्र तेषु स्थानेषु मध्ये पक्वाधानं पक्वाशयो विशेपत इति ॥ २ ॥

**नाभिरामाशयः स्वेदो लसीका रुधिरं रसः ।**
**दृक् स्पर्शनं च पित्तस्य नाभिरत्र विशेषतः ३॥**

स०—पित्तस्य नाभ्यादीनि स्थानानि । लसीका जलसदृशी । दृक् चक्षुः । स्पर्शनं त्वक् । ननु स्पर्शनेंद्रियं वायोः स्थानमुदिष्टं तदेव कथं पित्तस्याऽपि स्यात् । भ्रमः । वातसखित्वादग्नेः वातसखो ह्यग्निः । पित्तं च वह्निरिति वचनात् । तस्मादुभयोरप्येतद्युक्तं स्थानम् । विशेषत इति अत्रैषु स्थानेषु मध्ये पित्तस्य विशेषेण नाभिः स्थानम् ॥ ३ ॥

प०—रसग्रहणे रसाधारं हृदयमुपलभ्यते । यतो रसः सौम्यः । अन्यच्चोक्तम् । साधकं हृद्गतं पित्तमुक्तम् । दृक्स्पर्शनं च पित्तस्य नाभिरत्र विशेषतः । नाभिप्रभृति पित्तस्य स्थानम् । आमाशयो नाभेरूर्ध्वम् । त्वगन्तरे यदुदकं तल्लसीकाशब्दवाच्यम् । त्वचि विघृष्टायामुदकप्रायो वा यः स्रावो दृश्यते । रुधिरं रक्तम् । रस आद्यो धातुः । दृक् चक्षुरिन्द्रियम् । स्पर्शनं स्पर्शनेन्द्रियम् । तच्च वातस्यापि स्थानं निर्दिष्टं, पित्तस्यापि तदेव स्थानम् । वातसखत्वादग्नेस्तेषु स्थानेषु नाभिः प्रधानं स्थानं पित्तस्य ॥ ३ ॥

हे०—पित्तस्याह—आमाशयो नाभेरूर्ध्वम् अपक्वान्नस्थानं, लसीकाद्रसमलो जलप्रायस्त्वगाश्रयः, दृक् चक्षुः, स्पर्शनं त्वक् । अत्र एषु स्थानेषु मध्ये नाभिर्विशेपतः स्थानम् ॥ ३ ॥

**उरःकंठशिरःक्लोमपर्वाण्यामाशयो रसः ।**
**मेदो घ्राणं च जिह्वा च कफस्य सुतरामुरः ४॥**

स०—कफस्योरःप्रभृतीनि विविधानि स्थानानि । सुतरां सुष्ठु स्थानमुरो वक्षः ॥ ४ ॥

प०—कफस्योरःप्रभृतिस्थानम् । तत्रोरो वक्षः । कण्ठो गलः । शिरो मूर्धा । क्लोम-कोष्ठाङ्गविभागे शरीरे वक्ष्यमाणम् । पर्वाणि सन्धिस्थानानि । आमाशयो नाभेरूर्ध्वम् । घ्राणं नासिका । जिह्वा रसनेन्द्रियम् । अत्रोरो वक्षः सुतरामतिशयेन स्थानं कफस्य ॥ ४ ॥

हे०—कफस्याह—उरो वक्षः, क्लोम-उदककोष्ठमूलं, हृद्दक्षिणतो मांसग्रंथिः, पर्वाणि संधयः, घ्राणं नासा, एषु मध्ये उरो विशेषतः स्थानम् ॥ ४ ॥

अथ प्रत्येकमेतेषां दोषाणां विशिष्टस्थानाश्रयेण क्रियाभेदात्पंच पंच भेदानाह—

**प्राणादिभेदात्पंचात्मा वायुः ॥ ५ ॥**

स०—वायुरेक एव चलनस्वभावः सन् प्राणादिभिः प्राणोदानव्यानसमानापानैर्भेदाद्विशेषात्पंचात्मा

---

१ स च द्विविधः, आभ्यन्तरो बाह्यश्च । तत्राभ्यन्तरो यन्त्रतन्त्रधरः प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः प्राणोदानसमानव्यानापानात्मा, " प्राणो वायुर्वसति हृदयेऽपानसंज्ञो गुदे वै नाभेश्चक्रं भ्रमति परितो जीवभूतः समानः । कण्ठस्थाने चलति पवनो योऽहि रात्राबुदानः सर्वांगेषु प्रसरति मरुद् व्यानसंज्ञो नितान्तम् ॥" प्राणो नाम वायुः अन्नमन्तः प्रवेशयति प्राणांश्चावलम्बते । उदानेन भाषितगीतादिविशेषोऽभिवर्त्तते । समानस्तु आमपक्वाशयचरो वह्निसंयोगादन्नं पाचयति तज्जांश्च विशेषान् विविनक्ति । अपानस्तु शकृन्मूत्रशुक्रगर्भार्तवादीन्यधः क्षिपति समये । व्यानो वायुः कृत्स्नदेहचरो रससंवहनोद्यतः स्वेदासृक्स्रावणः प्रसारणाकुञ्चनविनमनोन्नमनतिर्य्यग्गमनानि करोति । प्रवर्त्तकश्चेष्टानामुच्चावचानां नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योतकः, सर्वेन्द्रियार्थानामभिवोढा, सर्वशरीरधातुव्यूहकरः, शरीरस्य सन्धानकरः, प्रवर्तको वाचः, स्पर्शशब्दयोः प्रकृतिः, श्रोत्रस्पर्शनयोर्मूलम् , हर्षोत्साहयोर्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता बहिर्मलानाम्, स्थूलाणुस्रोतसां भेत्ता, गर्भाऽऽकृतीनां कर्ता, अनुवृत्तिप्रत्ययभूत आयुषः, शरीरे सर्वकार्यसाधकमस्त्यतिस्थः ।—

पंचस्वभावः । यथैकोऽपि देवदत्तो यां यां क्रियां करोति तदनुरूपमेव संज्ञां लावकपाचकादिकां लभते तद्वद्वातादयः ॥ ५ ॥

प०—एक एव वायुश्चलनधर्मा प्राणादिभेदात् विशेषात् प्राणोदानसमानव्यानाऽपानाख्यात् पञ्चस्वभावः सम्पद्यते स्थानक्रियाभेदात् ॥ ५ ॥

हे०—अथ विशिष्टस्थानं, कर्म च । सामान्यकर्मणः उत्साहादेः पूर्वाध्याये निर्दिष्टत्वात् । तत्र वायोर्विशेषमाह—प्राणाऽपानोदानव्यानसमानाः पञ्चात्मा पञ्चविशेषः ॥ ५ ॥

**प्राणोऽत्र मूर्धगः ।**
**उरःकंठचरो बुद्धिहृदयेंद्रियचित्तधृक् ।**
**ष्ठीवनक्षवथूद्गारनिःश्वासान्नप्रवेशकृत् ॥ ६ ॥**

स०—अत्र एषु मध्ये प्राणो वायुर्मूर्धगः शिरसि स्थित उरः कंठं च चरति । तथा बुद्ध्यादीनां धारकस्तथा ष्ठीवनादिक्रियः । ष्ठीवनं मुखस्रावोद्गारः । ष्ठीवनमिति ष्ठिवेर्ल्युटि ष्ठिविसिव्योर्दीर्घश्चेति पृषोदरादिपाठाद्दीर्घः ॥ ६ ॥

प०—तत्रैतेषु पञ्चसु मध्ये प्राणो वायुः मूर्धगः शिरस्यवस्थितः उरःकण्ठचरः। तथा बुद्ध्यादिधारकः बुद्ध्यादीन् धारयति ष्ठीवनादीन् करोति ष्ठीवनादिकृत् ष्ठीवनं मुखेन श्लेष्मनिरसनम् । निश्वासोऽन्तःप्रवेशनं श्वासस्य ॥ ६ ॥

हे०—प्राणस्य स्थानकर्माण्याह—प्राणस्य मूर्धावस्थितिस्थानं, बुद्ध्यादिधारणम्; ष्ठीवनादिकरणं च कर्म । हृदयं मनोऽधिष्ठानं, चित्तं मनः, इंद्रियाणि चक्षुरादीनि ६

---

—बाह्यस्य च वायोः प्रकृतिभूतस्य लोके चरतः इमानि कर्माणि भवन्ति । तथा धरणी धारणम्, ज्वलनो-ज्वालनम्, आदित्यचन्द्रनक्षत्रग्रहगणानां सन्तानगतिविधानम्, सृष्टिश्च मेघानाम्, अपां विसर्गः, स्रोतसां संप्रवर्तनम्, पुष्पफलानाञ्चाभिनिर्वर्तनम्, उद्भिज्जानामुद्भेदनम्, ऋतूनां प्रविभाजनः, धातूनां च प्रविभागमानसंस्थानव्यक्तिः, बीजाभिसंस्कारः, शस्यादिवर्द्धनम्, प्रजापालनम्, विकासनमवैकारिकाणामन्येषां च भावानाम् ।

**उरःस्थानमुदानस्य नासानाभिगलांश्चरेत् ।**
**वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ॥ ७**

स०—उदानस्य प्रधानमुरः स्थानं नासादींश्च चरा[illegible] वाक्प्रवृत्त्यादिक्रियः । प्रयत्नः कार्येषु पदार्थग्रहा[illegible] दिषूद्यमः ॥ ७ ॥

प०—उदानस्य वायोरुरो वक्षःस्थानम्, नासा[illegible] तयं चरति । वाक्प्रकृत्यादिक्रियः । प्रयत्नक[illegible] मुद्यमः । ऊर्जा कान्तिमत्त्वम् । बलं सामर्थ्य[illegible] वर्णं गौरवादिभेदभिन्नम् । स्मृतिरतिक्रान्तस[illegible] र्थस्य स्मरणम् ॥ ७ ॥

हे०—उदानस्य स्थानकर्माण्याह-उदानस्योरोऽवस्थि[illegible] स्थानं, नासादिविचरणस्थानम्, वाक्प्रवृत्त्यादिकं क[illegible] प्रयत्न उत्साहः, ऊर्जा प्राणनम् ॥ ७ ॥

**व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः**
**गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ॥**
**प्रायः सर्वाःक्रियास्तस्मिन् प्रतिबद्धाःशरीरिण[illegible]**

स०—व्यानो हृदये स्थितः प्राधान्येन कृत्स्ने [illegible] स्मिन् शरीरे चरति । तथा महाजवः शीघ्रगा[illegible] प्राणाद्यपेक्षया । तथा गत्यादिकाः क्रियाः प्रायः [illegible] देहिनां तस्मिन्व्याने प्रतिबद्धास्तदायत्ताः । गति क्रमणम् । अपक्षेपणमंगस्याऽधोनयनम् । उत्क्षेपो[illegible] स्योर्ध्वनयनम् । निमेषोऽक्ष्णोर्निमीलनम् । उन्[illegible] स्तयोर्विकाशः । आदिग्रहणेन जृंभणान्नास्वादनविश[illegible] नादिपरिग्रहः ॥ ८ ॥

प०—व्यानो हृद्यवस्थितः कृत्स्नं हृद्यवस्थितः,कृ[illegible] निरवशेषं देहं चरति कृत्स्नदेहचारी, महाजवो म[illegible] बलः,शीघ्रतरगतिः गत्यादयश्च क्रियाः सर्वाः श[illegible] रिणां प्राणिनां सम्बन्धिन्यः प्रायेण बाहुल्येन त[illegible] न् व्यानाख्ये प्रतिबद्धास्तदायत्ताः । गतिर्देशान्त[illegible] मनम् । अपक्षेपणमङ्गस्याधो नयनम् । उत्क्षेपः ऊ[illegible] प्रेरणम् । निमेषः अक्ष्णोर्वर्त्मभ्यां पिधानम् । उ[illegible] षस्तस्यैव विकाशः ॥ ८ ॥

हे०—व्यानस्याह—व्यानस्य हृदयमवस्थितिः स्थ[illegible] सर्वशरीरविचरणस्थानम् । गत्यादयः सकलाः क्रि[illegible] कर्म अपक्षेपणमंगस्याधोनयनम्, उत्क्षेपणमूर्ध्वन[illegible]

तस्मिन्प्रतिबद्धाः तेनैव निष्पाद्याः, महाजवः प्राणादिभ्यो वेगवान् ॥ ८ ॥

**समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ।**
**अन्नं गृह्णाति पचति विवेचयति मुंचति ॥ ९ ॥**

स०-समानो वायुरग्निसमीपस्थ इति सामान्योक्तावपि प्राधान्यात्पाचकोऽग्निर्गृह्यते । अत एवाह । कोष्ठे चरतीति । सर्वत इत्याद्यादित्वात् सर्वस्मिन् कोष्ठे चरति स चान्नं गृह्णात्यपक्वमामाशये धारयतीत्यर्थः । पचत्यग्निसंधुक्षणाद्भक्तकार इव । विवेचयति संहतमन्नं पाकाय विभजते । मुंचति शकृन्मूत्रादिरूपमधः ॥ ९ ॥

प०-समानो वायुरग्निसमीपे स्थितस्तत्र तिष्ठति कोष्ठे पक्वामाशयपर्याये, सर्वतः समन्ताच्चरति भ्रमति । अन्नमाहारं गृह्णाति अवलम्बते । तथा पचति पाकं नयति, विवेचयति पृथक्करोति, मुञ्चत्यधो नयति ॥ ९ ॥

हे०-समानस्याह—समानस्याग्निसमीपमवस्थितिस्थानं, सर्वकोष्ठविचरणस्थानम्, अन्नस्य ग्रहणं गृहीत्वा पचनं पक्त्वा सारकिट्टविवेचनं विविच्य किट्टावमोचनं च कर्म । अग्निसमीपम् अग्निस्थानस्य ग्रहण्याख्यस्य अग्न्यनवरुद्धोऽवकाशः ॥ ९ ॥

**अपानोऽपानगः श्रोणिबस्तिमेढ्रोरुगोचरः ।**
**शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रमणक्रियः ॥ १० ॥**

स०-अपानो वायुरपानं प्राधान्येनाश्रितः श्रोण्यादिचरः शुक्रादिनिष्क्रमणक्रियः । इति वातभेदाः पंच ॥ १० ॥

प०-अपानो वायुरपानगः कटया अधः स्थितः । तथा श्रोण्यादिप्रदेशचरः । श्रोणिः कटिः । मेढ्रं लिंगम् । शुक्रार्तवादीनि—चंक्रमणं क्रिया । निष्क्रमणं बहिः-प्रेरणम् ॥ १० ॥

हे०-अपानस्याह—अपानस्यापानं गुदमवस्थितिस्थानं, श्रोण्यादीविचरणस्थानं, शुक्रादिनिष्क्रमणं कर्म । बस्तिर्मूत्राशयः, मेढ्रं मूत्रमार्गः, गोचरो विचरणविषयः ॥ १० ॥

पंच पित्तभेदानाह—

**पित्तं पंचात्मकं तत्र पक्वामाशयमध्यगम् ।**
**पंचभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ।**
**त्यक्तद्रवत्वं पाकादिकर्मणाऽनलशब्दितम् ।**

१-"तप सन्तापे" इति सन्तापार्थकतपधातोरिच्प्रत्यये तकारस्य द्वित्वे वर्णविपर्य्यये त च कृते पित्तमिति रूपं सिद्धम् । तच्च पित्तं शरीरे पाचकालोचकभ्राजकरञ्जकसाधकभेदात् पञ्चधा शरीरं पालयत्यविकृतः । यथा–"स्वाशये पाचकं पित्तमग्निरूपं तिलोन्मितम् । भ्राजकं कान्तिदं यत्तु लेपाभ्यङ्गादि पाचकम् ॥ रञ्जकं तु यकृत्प्लीन्होस्तद्रसं शोणितं व्रजेत् । आलोचकमुभौ नेत्रे रूपदर्शनकारि तत् ॥ साधकं हृदये तिष्ठेन्मेधाप्रज्ञाकरं च तत् ।" अत्र **चरकः**-"अग्निरेव शरीरे पित्तान्तर्गतकुपिताऽकुपितः शुभाशुभानि करोति" **सुश्रुत**स्तु पित्तव्यतिरेकान्नान्योऽग्निरुपलभ्यते आग्नेयत्वात् । पित्ते दहनपचनादिषु अभिवर्त्तमानेऽग्निवदुपचारः क्रियते । क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगात् अतिवृद्धे शीतक्रियोपयोगात् आगमाच्च । ननु यदि पित्ताग्न्योरभेदः तर्हि कथं घृतं पित्तप्रशमनमग्निदीपनम् , अजापयोमत्स्यादयश्च पित्तवृद्धिं कुर्वन्ति न चाग्निदीप्तिकराः दिवास्वप्नश्च । पित्तप्रकोपनोऽप्यग्निशमनः, तथेदमपि कथं स्यात् विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणेति । समदोषः समाग्निश्चेत्यादिकमपि कथं स्यात् । तत्रोच्यते-नैष दोषः, येनायमग्निः परमार्थतः पित्तादभिन्न एव **सुश्रुता**दिभिरंगीकृतः । परं च "क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः । पित्तं च केशान् पचति पलितं तेन जायते" अत्र शरीरोष्मा अग्निः पित्ताद्भिन्न एवोक्तः, तथा च "द्रवं स्निग्धमधोगं च पित्तं वन्हिरतोऽन्यथा" अत्र समाधीयते पञ्चपित्तान्तर्गतजठराग्निवाचको वह्निशब्दः तच्च पक्वामाशयमध्यस्थं चतुर्विधमन्नपानं पचति, विवेचयति च दोषरसमूत्रपुरीषाणि । तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाऽग्निकर्म्मणाऽनुग्रहं करोति तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा । यत्तु यकृत्प्लीन्होः पित्तम् सरसस्य रागकृदुक्तम्, तस्मिन् रञ्जकोऽग्निरिति संज्ञा । यच्च हृदयस्थः सोऽभिप्रार्थितमनोरथसाधनकरः तस्मिन् साधकोऽग्निरितिसंज्ञा यच्च त्वचि सोऽभ्यङ्गपरिषेकावगाहावलेपनादीनां पक्ता छायानाञ्च प्रकाशकः तस्मिन् भ्राजकोऽग्निरिति संज्ञा अत्र चिकित्सोपयोगिपित्तलक्षणानि "पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम् । कट्वतिक्तरसं ज्ञेयं विदग्धं चाऽम्लतां व्रजेदिति" । नीलं सामावस्थायाम्, पीतं निरामावस्थायां, कटुरसं प्रकृतिस्थम्, विदग्धं विरुद्धपाकोपपन्नं पुनरम्लरसं विदग्धाजीर्णसंदुष्टमम्लरसं वा भवति, विदग्धं पित्तम् अम्लपित्तरोगमिति केचित् ॥

**पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ।**
**तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ।**
**करोति बलदानेन पाचकं नाम तत्स्मृतम् ॥ ११ ॥**

स०—तत्र तेषु पञ्चसु मध्ये पक्वामाशययोर्मध्यस्थं तथा पञ्चभूतात्मकत्वेऽपि सति यत्तैजसगुणोदयादाग्नेयगुणोत्कर्षात्क्षपितसोमगुणत्वेन त्यक्तद्रवत्वं संजातकाठिन्यं तथा सहकारिकारणैः पाचनक्रियां प्रति सव्यापारैर्वाय्वादिभिरनुग्रहादुपकारात्पाकदाहादिक्रियया ऽनलशब्दितमग्निशब्दवाच्यं यत्पित्तं तत्पाचकमुच्यते । तच्चान्नं पचति । सारकिट्टौ पृथग् विभजति विभागीकरोति । किट्टशब्दस्य लोकाश्रयत्वाल्लिंगस्येति पुंस्त्वम् । तत्रस्थमेव पक्वामाशयमध्यगमेव शेषाणां रंजकादीनां धातुस्थानां चानुग्रहमुपकारं करोति । बलदानेन सामर्थ्याधानेन स्वस्थानस्थमेव तेषूपकुरुत इत्यर्थः ॥ ११ ॥

प०—पित्तं पञ्चात्मकम् । पाचकरञ्जकसाधकालोचकभ्राजकत्वभेदैः पञ्चप्रकारं पित्तम्—तत्र तेषु पञ्चसु मध्ये पाचनं नाम पित्तं पक्वामाशययोर्मध्ये स्थितम् । तच्च पञ्चभूतात्मकत्वेऽपि सति यद्यस्मात्तैजसगुणोदयादाग्नेयगुणोत्कर्षात्, त्यक्तद्रवत्वं क्षपितसोमगुणं क्षपितसोमगुणत्वाच्च त्यक्तद्रवस्वभावं,पाकादिकर्मणा पचनदहनक्रिययानलशब्दितं लब्धाग्न्यभिधानमन्नमाहारं पचति । चतुर्विधं तथाऽऽहारस्य पक्वस्य सारकिट्टौ विभजति पृथक्करोति । तत्रस्थमेव पक्वाशयमध्यस्थमेव शेषाणां पित्तानां चतुर्णां रञ्जकादीनामनुग्रहमुपकारं बलदानेन सामर्थ्योत्पादनेन करोति सम्पादयति तत्पाचकं नाम पित्तम् ॥ ११ ॥

हे०—पित्तविशेषानाह—पित्तमिति । पाचकरञ्जकसाधकालोचकभ्राजकभेदात्पञ्चधा पित्तम् । पाचकस्य स्थानकर्माण्याह—पाचकस्य पक्वाशयमध्यं ग्रहण्याख्यं स्थानम् । अन्नस्य पचनं पाकः, सारकिट्टविभागो, रञ्जकादिचतुष्टयानुग्रहश्च कर्म । कीदृशं तत् यत्पञ्चभूतात्मकत्वे सत्यपि तेजोभूतगुणाधिक्यात्त्यक्तद्रवत्वम् । तथा पाकादीनामाग्निकार्याणां करणादनलसंज्ञयोक्तम् । एतेन पाचकापेक्षया अग्निपित्तयोरभेदः रञ्जकापेक्षया भेद इति । मतद्वयं[1] व्यवस्थापितम् । तत्रस्थं स्वस्थानस्थम् ॥ ११ ॥

[1] मतद्वयमित्यर्थः ।

**आमाशयाश्रयं पित्तं रंजकं रसरंजनात् ॥ १२ ॥**

स०—यच्चाऽऽमाशयस्थं पित्तं तद्रसाख्यधातो रं[जन]ाद्रागनिष्पादनाद्रंजकमुच्यते ॥ १२ ॥

प०—आमाशयाश्रयमामाश्रयस्थं रञ्जकं न[ाम] पित्तं रसाख्यस्य धातो रक्तभावापत्तौ रञ्जनाद्रागनि[ष्]पादनात् रञ्जनशब्देनोच्यते ॥ १२ ॥

हे०—रञ्जकस्याह-रञ्जकस्यामाशयः स्थानं, रसरञ्[जनं] कर्म ॥ १२ ॥

**बुद्धिमेधाऽभिमानाद्यैरभिप्रेतार्थसाधनात् ।**
**साधकं हृद्गतं पित्तं ॥ १३ ॥**

स०—यत्तु हृद्गतं हृदयस्थं पित्तं तद्बुद्ध्यादि[भिः] करणभूतैरभिप्रेतस्याऽर्थस्य बाह्यग्रहणस्मरणादिरू[पेण] साधनात् साधकमुच्यते । वर्तमानकाले या मनोऽर्थसं[श]यस्य निश्चयं कर्तुं तदर्थाध्यवसायोपारूढा सा बुद्धि[ः ।] बुद्धिविशेषो मेधा ॥ १३ ॥

प०—हृद्गतं हृदयस्थं पित्तं साधकं नाम बुद्ध्य[ा]दिभिः करणभूतैरभिप्रेतमभिलषितमर्थं बाह्यग्रह[ण]स्मरणादिरूपेण साधयति तत्साधकम् । बुद्धिमेधयो[ः] परस्परं विशेषो बोद्धव्यः। वर्त्तमानकाले यो मनस[ो]ऽर्थसंशय उत्पद्यते तस्यार्थसंशयस्य निश्चयं करोति[,] अयमेवार्थो नान्य इति सा बुद्धिः । बु[द्धि]विशेषो मेधा ॥ १३ ॥

हे०—साधकस्याह—साधकस्य हृदयं स्थानं, बुद्ध्या[]दिद्वारेण अभीष्टार्थसाधनं कर्म, अभिमानोऽहंकारः ॥

**रूपालोचनतः स्मृतम् ।**
**दृक्स्थमालोचकं ॥ १४ ॥**

स०—दृष्टिस्थं पित्तं रूपालोचनादंतस्तारका[न्तः]स्थितं तदायत्तरूपग्रहणशक्तित्वादालोचकमुच्यते १[४]

प०—दृष्टिस्थं पित्तमालोचकं नाम रूपस्यालोचन[ाद्] दर्शनात् तारस्यान्तः स्थितमालोचकं रूपप्रदर्[शनं] यस्मात्तदायत्तं रूपग्रहणम् ॥ १४ ॥

हे०—आलोचकस्याह-आलोचकस्य दृष्टिः स्था[नं,] रूपालोकनं कर्म ॥ १४ ॥

**त्वक्स्थं भ्राजकं भ्राजनात्त्वचः ॥ १५**

स०--त्वचो भ्राजनादीपनाद् भ्राजकं नाम पित्तम् । एतच्च पित्तमभ्यंगलेपपरिषेकादीन् पाचयति ॥ १९ ॥

प०--त्वक्स्थं पित्तं भ्राजकं नाम तत्त्वचो भ्राजनादीप्तिमत्करणं भ्राजकशब्देनोच्यते । तद्भ्राजकमभ्यङ्गादीन् पाचयति । नह्यपक्वं द्रव्यं स्वं कर्म करोतीति ॥ १५ ॥

हे०--भ्राजकस्याह--भ्राजकस्य त्वक्स्थानं, त्वचो भ्राजनं प्रकाशनं कर्म । संग्रहे तु तदभ्यंगपरिषेकालेपादीन्पाचयतीत्युक्तम् ॥ १५ ॥

**श्लेष्मा तु पंचधा ॥ १६ ॥**

स०--श्लेष्मा तु पंचधा, श्लेष्माऽपि पंचप्रकारः ॥ १६ ॥

प०--अवलम्बकक्लेदकबोधकतर्पकश्लेषकत्वभेदात् पञ्चप्रकारः ॥ १६ ॥

हे०--श्लेष्मविशेषानाह--अवलम्बक-क्लेदक-बोधक-तर्पक-श्लेषकभेदात्पञ्चधा श्लेष्मा ॥ १६ ॥

---

१ सू०--श्लक्ष्णो मृत्स्नः गुरुर्मन्दः शीतः स्निग्धः स्थिरश्च कफः ॥ ९ ॥ प्र. टी.--अत्र कफः--श्लक्ष्णः श्वेतोऽपरुषश्च, मृत्स्नो मृद्यमानोऽङ्गुलिग्राही, गुरुः गुरुत्ववानलघुः मन्दः तीक्ष्णविपरीतश्चिरकारी, शीतः शीतलस्वभाववाननुष्णः, स्निग्धश्चिक्कणः, स्थिरोऽचलः, लिप्तस्वभावो वा । अत्र श्लिष आलिंगने धातोर्मनिन् प्रत्यये गुणे च कृते श्लेष्मेति रूपं जातम् । श्लेष्मा तमोगुणप्रधानः मधुरश्च । विदग्धस्तु लवणतां व्रजेत् । श्लेष्माऽपि क्लेदन-अवलम्बन-रसन-स्नेहन-विश्लेषण इति पञ्चधा विभज्य देहं पालयति । यथा--आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु। स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात् । क्लेदनः क्लेदयत्यन्नमातमशक्त्याऽपराण्यपि अनुगृह्णाति च श्लेष्मस्थानान्युदककर्मणा । रसयुक्तात्मवीर्य्येण हृदयस्याऽवलम्बनम्। त्रिकसन्धारणं वापि विदधात्यवलम्बनः । उभावपि ततः सौम्यौ तिष्ठतश्चान्तिक यतः । यतो रसान्विजानीतो रसनारसनौ समौ । स्नेहनः स्नेहदानेन समस्तेन्द्रियतर्पणः । श्लेष्मणः सर्वसन्धीनां संश्लेषं विदधात्यसौ । चकारात् श्लेष्मा श्वेतः मृदुस्थिरादिगुणयुक्तः । प्रकृतिस्थो मधुररसः, प्रदुष्टो लवणरसः ॥

तदेव पंचप्रकारत्वमाह--

**उरःस्थः स त्रिकस्य स्ववीर्यतः हृदयस्यान्नवीर्याच्च तत्स्थ एवांबुकर्मणा ॥ कफधाम्नां च शेषाणां यत्करोत्यवलंबनम् । अतोऽवलंबकः श्लेष्मा ॥ १७ ॥**

स०--स श्लेष्मा उरसि [illegible] पृष्ठाधारात्मस्य स्वप्रभावाद्यस्माद[illegible] करोति [illegible] मणि तस्य सामर्थ्यमुत्पादयति । [illegible] णाभ्यवहृतादन्नाद्रसरूपतापरिण[illegible] ण करोति । चशब्दात्स्ववीर्येणाऽपि [illegible] करोति । किंत्वन्नवीर्यादतिशयेन [illegible] करोति । न तथा स्ववीर्यतः यतोऽन्नरसः पूर्वं हृदि [illegible] कृत्वा ततो व्यानव्युत्क्षिप्तः सर्वं शरीरं याति [illegible] द्विशेषेण हृदयस्याऽन्नवीर्यादवलंबनं युक्तम् । [illegible] ऽपि हृदयं मनसः स्थानमोजसो [illegible] च । [illegible] शीचयो रक्तपद्माकारमधोमुखम् । [illegible] पश्यंति सम्यग् ज्योतिः समाहिताः । [illegible] तां यातः स तत्रैवाऽवतिष्ठते । ततो व्यानेन [illegible] कृत्स्नं देहं प्रपद्यते । तथा तत्स्थ एवोरःस्थ एवं श्लेष्मा शेषाणां कफस्थानानामंबुकर्मणा क्लेदसंश्लेषादि लक्षणेन जलव्यापारेणाऽवलंबनं करोत्यतोऽस्मादर्थ त्वाद्धेतोरवलंबकः श्लेष्मेत्युच्यते ॥ १७ ॥

प०--स तु श्लेष्मोरस्थः त्रिकस्य बाहुग्रीवासंयोगस्य स्ववीर्यतः स्वशक्त्या स्वबलेन यस्मादवलम्बं करोति स्वकार्यसामर्थ्यमुत्पादयति बलाधानोत्पादनेन तमुपकरोति । तथा हृदयस्याभ्यवहृतादन्नाद्रसरूपतया परिणताद्बलेनावलम्बनं करोति तत्स्थ एवोरस्थ एवाम्बुकर्मणा क्रियया तर्पणपूरणादिलक्षणया अन्येषां चतुर्णां कफधाम्नां कफस्थानानामवलम्बनं करोति । अतोऽस्माद्धेतोर्यथ निर्दिष्टादवलम्बकः श्लेष्मेत्युच्यते ॥ १७ ॥

हे०--अवलम्बकस्य स्थानकर्माण्याह--अवलम्बकस्य उरः स्थानं, त्रिकाद्यवलम्बनं कर्म । त्रिकस्य पृष्ठाधारस्य स्ववीर्यत आत्मप्रभावेनावलम्बनं करोति, हृदयस्यान्नवीर्यात् चकारात्स्ववीर्याच्च । हृदयावलम्बनेऽन्नवीर्यं सहकारि अन्नरससहितेनेति सुश्रुतवचनात् । तत्स्थ एव शेषाणां

कण्ठादीनाम् । कफधाम्नामंबुकर्मणा जलव्यापारेण क्लेदनतर्पणपूरणादिना अवलम्बनं करोति । केचित्तु बाहुग्रीवास्थित्रयसंघातं त्रिकमाहुः । तदसत्, त्रिकशब्दः पृष्ठवंशाधार एव रूढत्वात् । रूढिस्तु योगाद्बलीयसी आसन्नत्वं चाप्रयोजकत्वं दवीयसामपि कफधाम्नामवलम्बेनोक्तेः ॥ १७ ॥

**यस्त्वामाशयसंस्थितः॥**
**क्लेदकः सोऽन्नसंघातक्लेदनात् ॥ १८ ॥**

स०—स पुनः श्लेष्मा आमाशये स्थितः स क्लेदक इत्युच्यते । कुतः । अन्नसंघातक्लेदनात्कारणात्॥ १८॥

प०—स एव श्लेष्मा य आमाशयसंस्थितः क्लेदकः स आमाशयस्थोऽन्नसङ्घातस्याहारराशेः क्लेदनाद्विक्लित्तिजननात् क्लेदकसंज्ञकः ॥ १८ ॥

हे०—क्लेदस्याह-क्लेदकस्यामाशयः स्थानम् । अन्नसंघातक्लेदनं कर्म ॥ १८ ॥

**रसबोधनात् ।**
**बोधको रसनास्थायी ॥ १९ ॥**

स०—रसनास्थायी जिह्वास्थो बोधक इत्युच्यते रसबोधनात् कारणात् ॥ १९ ॥

प०—बोधको रसनस्थायी जिह्वासंस्थितः श्लेष्मा सम्यक् स्फुटं कृत्वा रसस्य बोधनात् ज्ञानात् बोधकसंज्ञकः ॥ १९ ॥

हे०—बोधकस्याह-बोधकस्य रसना जिह्वेंद्रियं स्थानं, रसबोधनं कर्म ॥ १९ ॥

**शिरःसंस्थोऽक्षतर्पणात् ॥**
**तर्पकः ॥ २० ॥**

स०—शिरःस्थोऽक्षतर्पणात्तर्पकः । शिरःस्थस्तर्पक इत्युच्यते । अक्षतर्पणाद्धेतोः ॥ २० ॥

प०—शिरस्थः श्लेष्मा अक्षाणामिन्द्रियाणां तर्पणात् प्रीणनात् तर्पकसंज्ञकः ॥ २० ॥

हे०—तर्पकस्याह—तर्पकस्य शिरः स्थानम् , इंद्रियतर्पणं कर्म ॥ २० ॥

**संधिसंश्लेषाच्छ्लेषकः संधिषु स्थितः २१॥**

स०—संधिषु स्थितः श्लेष्मा श्लेषक इत्युच्यते । संधिसंश्लेषात् कारणात् ॥ २१ ॥

प०—सन्धिषु स्थितः सन्धिषु पर्वसु स्थि श्लेष्मा—अस्थिसन्धिसंश्लेषात् श्लेषकसंज्ञः ॥ २१

हे०—श्लेष्मकस्याह-श्लेष्मकस्य सन्धयः स्थानम् ,सं श्लेषणं कर्म ॥ २१ ॥

एवं दोषाणां स्थानान्युक्त्वोपसंहरन्नाह—

**इति प्रायेण दोषाणां स्थानान्यविकृतात्मना व्यापिनामपि जानीयात्कर्माणि च पृथक्पृथ**

स०—बाहुल्येन दोषाणामविकृतात्मनामप्रच्यु भावानामित्युक्तप्रकाराणि स्थानानि व्यापिनामपि स शरीरचराणामपि ज्ञेयानि । तथा कर्माणि पृथक्पृ प्रत्येकं कृत्वा जानीयाद्वैद्यः ॥ २२ ॥

प०—एवं दोषाणां स्थानानि कर्माणि च वि गेनाख्यायोपसंहरन्नाह—इत्येवमनन्तरोक्तेन प्रक बाहुल्येन भूयसा दोषाणां वातादीनामविकृता मविकृतस्वभावानां यथाशास्त्रं स्वप्रमाणस्थि समस्वभावानां व्यापिनामपि कृच्छ्रदेहचारिणा स्थानानि जानीयात् विद्यात्। तथा न केवलं स्था नि यावत्कर्माणि चैषां जानीयात्, पृथक् प्रत्येकं कृत्वा ॥ २२ ॥

हे०—प्रकरणार्थमुपसंहरति—प्रायेण बाहुल्येन सर्वशरीरव्यापिनस्तथाप्यातिशयेन एषु स्थानेषु ति त्यर्थः । अविकृतात्मनामप्रच्युतस्वभावानां, विकृतात्म न स्थाननियमः । इति **स्थानकर्मप्रकरणम्** । वस्था । सा च द्वेधा-साम्यं, वैषम्यं च । वैषम्यं द्वेधा-वृद्धिश्च । वृद्धिर्द्विधा-चयप्रकोपभेदेन। चयप्रकोपक्षयः भेदाच्चतस्रोऽवस्थाः । तत्र क्षयसाम्ये प्रशमशब्दे निष्पाद्यमानस्य प्रशमस्य क्षयरूपत्वात् निष्पन्नस्य रूपत्वात् । प्रशमहेतूनां प्रमादातियोगे पुनः क्ष त्वात्, क्षयहेतूनामपि प्रशमहेतुत्वाच्च । तत्र च निदानम् ॥ २२ ॥

विकृतिरेषां वृद्धिः क्षयश्च । वृद्धिरपि धा चयप्रकोपभेदेन । दोषादिविज्ञानीये सा वृद्धिक्षयलक्षणमुक्तम् । संप्रति चयकोपरूपवृद्धि संक्षेपेण सूचयन्नाह——

**उष्णेन युक्ता रूक्षाद्या वायोः कुर्वंति संच शीतेन कोपमुष्णेन शमं स्निग्धादयो गुण**

स०-उष्णेन गुणेन विरुद्धेनोपहिता रूक्षादयः प्रथमाध्यायोक्ताः षड्वातगुणा वायोश्चयं कुर्वंति न कोपमुष्णस्य विरुद्धत्वात् । त एव रूक्षादयः शीतगुणोपहितास्तत्सदृशत्वाद्वायोः कोपं कुर्वंति । उष्णेन युक्ताः स्निग्धादयो गुणा वायोः शमं कुर्वंति विपरीतत्वात् ॥ २३ ॥

प०-यदपि प्रत्येकं वातादि पञ्चधा भिन्नं ततो रूक्षसस्नेहस्निग्धत्वं यथास्वं लक्षणं न जहात्यतःसमानैर्गुणैर्द्रव्याश्रितैस्तेषां दोषाणां चयप्रकोपौ प्राप्तौ तेषां यथास्वं विपरीतैर्गुणैर्द्रव्याश्रितैः शमः प्राप्नोति न काचिदेपक्षाऽन्या सम्भाव्यते "वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः" इत्याशङ्क्य ग्रन्थकार इदमाह—रूक्षाद्या गुणाः रूक्षलघुशीतखरसूक्ष्मचला उष्णेन गुणेन वातगुणप्रतिपक्षेण युक्ता वायोः सञ्चयं कुर्वन्ति । यद्यपि वायुगुणसामान्यमात्रा रूक्षादयो वातस्य चयहेतवो वृद्धिहेतवः प्राप्ताः तथापि न केवलाः किन्तर्ह्युष्णेन गुणेन वातप्रतिपक्षेण युक्तास्ते रूक्षादयो वातस्य चयं कुर्वन्ति । त एव रूक्षाद्या गुणा वातसमानाः शीतेन गुणेन युक्ताः समानत्वाद्वायोः कोपं कुर्वन्ति । स्निग्धादयो गुणाः स्निग्धगुरुश्लक्ष्णगुरुश्लक्ष्णगुरुस्थूलस्थिरा उष्णेन गुणेन युक्ताः वायोः प्रशमं कुर्वन्ति ॥ २३ ॥

हे०-तत्र वायोराह-उष्णेन गुणेन युक्ता रूक्षादयो वायोश्चयं कुर्वंति । त एव शीतेन युक्ताः प्रकोपम् । उष्णेन युक्ताः स्निग्धादयः शमं कुर्वते ॥ २३ ॥

**शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते ।**
**उष्णेन कोपं मंदाद्याः शमं शीतोपसंहिताः॥२४॥**

स०-एवं पित्तस्य शीतेन गुणेन युक्तास्तीक्ष्णादयो गुणाश्चयं कुर्वंति। एवं तीक्ष्णादयो गुणा उष्णेन सहिताः कोपं कुर्वंति । मंदादयो गुणाः शीतगुणयुक्ताः शमं कुर्वंति विपरीतत्वात् ॥ २४ ॥

प०-त एव तीक्ष्णाः शमं, शीतोपसंहितास्तीक्ष्णाद्या गुणास्तीक्ष्णलघुविस्रसद्रवाः पित्तगुणसमाः समानाः शीतेन गुणेन पित्तप्रतिपक्षेण युक्ताः पित्तस्य चयं कुर्वते । त एव तीक्ष्णादयो गुणाः पित्तसमाना उष्णेन गुणेन पित्तगुणसमानेन युक्ताः कोपं कुर्वते। मन्दाद्या गुणाः मन्दगुरुरूक्षस्थिरसान्द्राः पित्तगुणप्रतिपक्षेण युक्ताः शमं कुर्वते ॥ २४ ॥

हे०-पित्तस्याह-शीतेन गुणेन युक्तास्तीक्ष्णाद्याः पित्तस्य चयं कुर्वते । त एव उष्णेन युक्ताः कोपम् । शीतेन युक्ताः मंदाद्याः शमं कुर्वते ॥ २४ ॥

**शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम्।**
**उष्णेन कोपं तेनैव गुणा रूक्षादयः शमम् २५**

स०-शीतगुणोपहिताः स्निग्धादयः कफस्य चयं कुर्वंति । उष्णेन युक्तास्त एव स्निग्धादयः कफस्य कोपं कुर्वंति । तेनैवोष्णेन युक्ता रूक्षादयः कफस्य च शमं कुर्वंति । कफस्य हि शीतगुणेन [illegible] स्निग्धादिगुणयुक्तेन स्त्यानत्वाच्चयः स्यात् । [illegible]नोष्णेन विलयनात्कोपः । स एवोष्णो यदा रूक्षादियुक्तो भवति तदा विपरीतत्वाच्छमनो भवति ॥२५॥

प०—स्निग्धाद्या गुणाः स्निग्धगुणाः स्निग्धगुरुमन्दश्लक्ष्णस्थिराः श्लेष्मगुणसमानाः शीतेन गुणेन श्लेष्मगुणसमानेनापि युक्ताः कफस्य चयं कुर्वते । श्लेष्मणस्तु स्निग्धादयो गुणेन गुणसामान्यमात्रेण किञ्चिदपेक्ष्यैव चयं कुर्वते।किं नाम शीतगुणाधिक्यमपेक्षते नाधिकेन शीतेन गुणेन युक्ताः स्निग्धाद्याः श्लेष्मणश्चयं कुर्वते।इह यतः स्निग्धाद्याः श्लेष्मगुणान्स्तोदुतुमभिप्रेतानां संख्येया ये केवल गुणाः स्निग्धादयस्तन्मध्ये चावश्यं शीतो गुणः पठ्यते तस्मान्न प्रयोजनं शीते गुणा इत्येवं युक्ता इत्येवं निर्देशेन एवं पित्तको तीक्ष्णादय उष्णेन युक्ता व्याख्येयाः । श्लेष्मणः स्त्यानत्वाच्च य एते भवन्ति त एव स्निग्धादयः श्लेष्मगुणसमाना उष्णेन गुणेन श्लेष्मप्रतिपक्षेण युक्ताः कफस्य विलयनद्वारेण कोपं कुर्वन्ति, रूक्षादयो गुणा रूक्षलघुतीक्ष्णखरबलाः श्लेष्मगुणप्रतिपक्षास्तेनैवोष्णेन श्लेष्मप्रतिपक्षेण युक्ताः शमं कुर्वते । तत्रैवं वस्तुतत्त्व यदि रूक्षादयः केवला एव वातगुणसामान्यमात्राद्वातस्याधिक्यं कुर्वन्ति तदानीं न वातगुणाप्रतिपक्षभावा उष्णाख्याद्वातस्य कोपदशां कर्तुं रूक्षादयः संपन्ना भवन्ति नच यद्दशामुष्णगुणप्रतिबद्धशक्तयः पुनः हीनशक्तित्वात्ते वातस्य च यद्दशामुत्पादयन्ति, न कोपदशामतएव हेतोः पित्तस्य तीक्ष्णादयः केवलाः शीतगुणेन तत्पक्षेण विना कोपदशां कर्तुं सम्भाव्यन्ते नच यद्दशां पूर्वोक्तान्न्यायात् । श्लेष्मणः पुनः स्निग्धाद्या गुणास्तद्गुणसमाना अपि सन्तोऽधिकेन शीतेन गुणेन युक्त

त्वात् श्लेष्मणः स्थानरूपतामुत्पादयन्तश्चयावस्थामे-
वास्य कुर्वन्ति न कोपावस्थाम्। उष्णेन गुणेन पुन-
स्तत्प्रतिपक्षेणापि युक्ताः स्निग्धादयोऽस्य श्लेष्मणो
विलीनविग्रहतामुत्पादयन्तः कोपदशां कर्तुं समर्थाः
सम्पद्यन्ते न चयावस्थाम्। विलीनविग्र-
हत्वात्॥ २५॥

हे०—कफस्याह—शीतेन युक्ताः स्निग्धाद्याः कफस्य
चयं कुर्वते। उष्णेन कोपं, तेन उष्णेन सहिता रूक्षा-
दयो गुणाः शमं कुर्वते॥ २५॥

इदानीं चयादीनां लक्षणान्याह—

**चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु।**
**विपरीतगुणेच्छा च॥ २६॥**

स०—स्वधाम्न्यात्मीये स्थाने दोषस्य या वृद्धिः स
चय उच्यते। चितस्य दोषस्य लिंगमाह। यदा हि
वातश्चितो भवति तदा रूक्षादिषु तद्गुणसमानेषु प्रद्वेषः
स्यात्। तद्विपरीतगुणेषु स्निग्धादिष्वभिलाषः स्यात्। एवं
कफपित्तयोश्चितयोर्व्याख्या। ननु प्रद्वेषो वृद्धिहेतुष्वि-
त्येकमेव लक्षणं दोषचयसत्तानुमापकं कर्तुं न्याय्यम्।
यदि वा विपरीतगुणेच्छा चेत्येतत्। किं द्वयोरुपा-
दानेन। अत्रोच्यते। कदाचिदचितोऽपि दोषो
वाताख्यः स्वप्रमाणस्थः क्षीणो वा यस्य स वातवृ-
द्धिहेतून् रूक्षादीन्न द्वेष्टयपि तु तानिच्छति। सात्म्य-
वशात्। यथा गर्भिणी स्त्री दोहदवशात्। तदेवं व्य-
भिचारदर्शनात् प्रद्वेषो वृद्धिहेतुषु विपरीतगुणेच्छा
चेति द्वयमपि कर्तव्यम्। तेन यदा तुल्यकालं मनु-
जस्य वातसमानगुणेषु तद्वृद्धिहेतुषु च प्रद्वेषो जायते
वातगुणप्रतिपक्षेषु तत्क्षपणहेतुषु चाभिलाषस्तदा
सम्यक् निश्चीयते वातस्योपचितिरिति द्वयमप्येत-
दुक्तम्॥ २६॥

प०—एवं वातादीनां चयकोपौ यथायथं यथागुणै-
र्जायेते तथोपदिश्य इदानीमनयोश्चयप्रकोपयोस्तुल्य-
रूपभ्रान्तिमपनेतुं ग्रन्थकारः स्वलक्षणमभिधातु-
मिदमाह-या वृद्धिर्दोषाणां स्वधाम्नि आत्मीयस्थाने
स तेषां चयः। एवं चयो वृद्धिः स्वधाम्न्येवेत्यनेन चयः
परिभाष्यते। प्रद्वेषो वृद्धिहेतुष्विति। अनेन तत्कार्यं
प्रदर्श्यते। तथा विपरीतगुणेच्छा चेत्यनेनाप्येवम्।
यदा वातश्चितो भवति तदा रूक्षादीनां तद्गुणस
नानां प्रद्वेषो जायते। तद्विपरीतगुणानां स्निग्धा
नां चाभिलाषितोऽस्योचितस्य मत्यानुमीयते। तें
दमुक्तं भवति। स्वधाम्न्यात्मीयदोषस्य स्थाने
वृद्धिः स चयः। चीयमानस्य दोषस्य वृद्धिहे
विद्वेषो जायते। तद्विपरीतगुणेष्वौषधादिषु॥ २६

हे०—अथ चयादिलक्षणम्। तत्र चयं लक्ष
ति—दोषस्य वृद्धिश्चयः सा च प्रथमं स्वधाम्
भवति, यावानेवाशयः संचारवता दोषेण व्याप्तस्
वानेव निःसंचारेण व्याप्यते। स च संहतिरूपत्वा
चयाख्यः। यदा सर्व एवाशयो व्याप्यते तदा वृद्धि
तुषु समानगुणेषु प्रद्वेष उत्पद्यते, प्रकोपप्रारंभरूपत्वात्प्र
पाख्यः। ततः परस्याशयं प्रविशति तदाविपरीतगुणेच्
चकारात्समानगुणे द्वेषश्च। सप्रसररूपत्वात्प्रसराख्यः॥ २

**कोपस्तून्मार्गगामित**
**लिंगानां दर्शनं स्वेषामस्वास्थ्यं रोगसंभवः**
**(स्वस्थानस्थस्य समता विकाराणामसंभवः**

स०—उन्मार्गगामिता स्वस्थानं त्यक्त्वा दोष
यस्पुनर्मार्गांतरगमनं स कोपः। कोपस्य लिंगमाह
लिंगानां स्वेषां यथायथं दर्शनमुद्भवो वातादीनां कु
तानां यानि लिंगानि दोषादिविज्ञानीयेऽभिहिता
वातव्याधिनिदाने च वक्ष्यंते तेषां दर्शनमुपलब्धिः २

प०-कोपः पुनः वृद्धिरेवाधिक्यात्। दोषस्य स्वस्थ
नात् स्थानान्तरगमने स्वधामपरित्यागं कृत्वा माग
न्तरगामिता। कोपस्तून्मार्गगामितेत्यनेन कोपः प
भाव्यते। अन्यथा वृद्धिमात्रसामान्याच्चयकोपयोरेव
रूपतैवापद्यते। चयः स्वधाम्न्येव दोषस्य या वृद्धि
वृद्धिविशेषश्चयहेतुः। सामग्री तत्सामग्र्यन्तर
स्वधामपरित्यागं कृत्वा दोषाणां मार्गान्तरगामिता
कोप इत्युच्यते। तथाच पूर्वमेव प्रतिपादितमुष्णे
युक्ता रूक्षाद्या इत्यनेन। अस्यैव चयहेतुरन्य ए
कोपहेतुरकम्प्यमेतल्लिङ्गानां दर्शनम्। स्वेषां यथ
यथं दोषलक्षणानामुद्भवस्तथा स्वास्थ्यमुत्पित्सुरो
च्छायासामान्येन देहमनोभूतत्वम्। तथा रोगस
म्भव इत्यनेन तत्कार्यमुक्तं तत्सत्तानुमापकम्। ए
नैकैकस्मादपि केवलान्निश्चितं दोषकोप उन्मा
शक्यते, यतो व्यभिचारान्न सर्वो दोषः स्वप्रमाण

१ कोष्ठान्तर्गतोऽयमाधिकः पाठ उपलभ्यते।

(अधिकस्थ उन्मार्गगामिरोगश्चोत्पादको येन रोगसम्भवेन तस्य दोषस्य कोप उन्मीयते यतः स्वप्रमाणाद्धीनोऽपि दोषो बलवता अन्येन दोषेणाभिभूतः स्वमार्गं परित्यज्योन्मार्गगामित्वसामान्यं यथास्वं रोगमपि कुरुते । तस्माल्लक्षणत्रयमेतद्दोषकोपपरिज्ञानार्थं बोद्धव्यमित्यलमधिकाक्षेपेण । स्वस्थानस्थस्य समताविकाराणामसम्भवः स शम इति सङ्ग्रहोक्तोऽत्र पाठो विज्ञेयः । स्वस्थानस्थस्य समता साम्यं स शमः।तथा विकाराणां व्याधीनामसम्भवो व्याधयो न प्रादुर्भवन्ति तेन लक्षणेन शमोऽनुमीयते ॥२७॥

हे०—कोपं लक्षयति—उन्मार्गगामिता स्वमार्गादन्येन मार्गेण गमनं कोपः । तत्र प्रथमं स्थानिनमभिभूय अन्यस्थानव्याप्तिः तदा स्वेषां लिंगानां रौक्ष्यादीनां दर्शनं ससमंतादन्यस्थानाश्रयणात्स्थानसंश्रयाख्यः । ततो विकुर्वाणो ज्वरादिरूपेणाभिव्यज्यते तदा अस्वास्थ्यं प्रकृत्यन्यथात्वं सरोगरूपेण अभिव्यक्तत्वाद्व्यक्त्याख्यः । ततस्तमेव रोगमवस्थांतराण्यनुभवन्ननुबन्धाति तदा रोगसंभवः । संततभवनं दीर्घकालानुवर्तनमिति यावत् । षाऽवस्थाभेदरूपत्वात् भेदाख्यः । एताश्च षडवस्थाः सुश्रुतेन स्पष्टमुक्ताः " संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् । व्यक्तिं भेदं च यो वेत्ति स भवेद्भिषगुत्तमः " तत्प्रयोजनं च "संचयेऽपहृता दोषा लभंते नोत्तरा गतीः । ते तूत्तरासु गतिषु भवंति बलवत्तराः " इति । प्रशमं लक्षयति-स्वस्थानत्वं समत्वमविकृतित्वं चेति मिलितं शमलक्षणम् । रसवर्णाद्यन्यत्वं विकारः ॥ २७ ॥

**चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।**
**वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु २८॥**

स०—ग्रीष्मादिषु त्रिषु कालेषु ग्रीष्मवर्षाशरत्सु वातस्य चयप्रकोपप्रशमा भवंति । तथा वर्षादिषु त्रिषु वर्षाशरद्धेमंतेषु पित्तस्य चयप्रकोपप्रशमा भवंति । तथा शिशिरादिषु त्रिषु शिशिरवसंतग्रीष्मेषु श्लेष्मणश्चयप्रकोपप्रशमा भवंति ॥ २८ ॥

प०—दोषस्य चयदोपकोपयोर्लक्षणमभिधायेदानीं वातादीनां यस्मिन् काले चयप्रकोपोपशमा भवन्ति तं कालं दर्शयितुमाह—कालेषु यथाक्रमं चयप्रकोपोपशमा भवन्ति । तत्र ग्रीष्मे वायोश्चयः। वर्षासु प्रकोपः। शरदि प्रशमः । वर्षादिषु त्रिषु कालेषु पित्तस्य चयप्रकोपोपशमा भवन्ति । वर्षासु चयः। शरदि प्रकोपः । हेमन्ते प्रशमः । शिशिरादिषु त्रिषु कालेषु श्लेष्मणश्चयप्रकोपोपशमा भवन्ति । तत्र शिशिरे श्लेष्मणश्चयः । वसन्ते प्रकोपः। ग्रीष्मे प्रशमः ॥ २८ ॥

हे०—चयादीनां कालमाह—वायोर्ग्रीष्मे चयः, वर्षासु प्रकोपः, शरदि प्रशमः । पित्तस्य वर्षासु चयः, शरदि प्रकोपः, हेमंते प्रशमः । कफस्य शिशिरे चयः, वसंते प्रकोपः, ग्रीष्मे प्रशमः ॥ २८ ॥

ननु मरुतो ग्रीष्मे चयो न युक्तो यतस्तस्मिन्काले लघुरूक्षा ओषधयो भवंति । तथा वर्षासु पित्तचयो न युक्तो जलानामौषधीनां चाम्लपाकत्वात् । तथा श्लेष्मणः शिशिरे चयो न युक्तस्तदा ह्याप ओषधयश्च स्निग्धा भवंति कालश्च शीत इति कोप एवोपपन्न इत्यस्मिन् पर्यनुयोग इदमाह—

**चीयते लघुरूक्षाभिरोषधीभिः समीरणः ।**
**तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ।**
**अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम् ।**
**पित्तं याति चयं कोपं न तु कालस्य शैत्यतः**
**चीयते स्निग्धशीताभिरुदकौषधिभिः कफः ।**
**तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति२९**

स०—ग्रीष्मकाले वातो लघुरूक्षाभिरोषधीभिर्देचादानकालस्वाभाव्यात्तद्विधे लघुरूक्षः समीरण इति समानगुणत्वात्पवनस्य कोपः प्राप्तः स निषिध्यते कालस्यौष्ण्यादित्यनेन । एवं पित्तस्य वर्षासु कोप नतु कालस्य शैत्यत इत्यनेन निषिध्यते ॥ २९ ॥

प०—ननु ग्रीष्मे वायोश्चयानुपपत्तिः । कोपः प्राप्तः । यतस्तस्मिन् काले लघुरूक्षकालस्वाभाव्याल्लघ्व्यसौषध्यः सम्पद्यन्ते । तथा वर्षासु पित्तचयानुपपत्तिः । अपामम्लपाकत्वात् । तथौषध्यश्चाम्लपाकाः । अतः पित्तस्य प्रकोपः प्राप्तः । तथा कफस्य शिशिरे आपः स्निग्धास्तथौषध्यश्च स्निग्धा एव कालश्च शीतः । तस्मिन् काले तस्य कोपः प्राप्तो न चयोऽत्राह—ग्रीष्मे समीरणो वायुश्चीयते लघु

ध्याभिरोषधीभिः । तथा देहे च । तथैव लघुरूक्षे कालस्वभावात्सम्पन्ने समीरणस्तथाविधोऽपि लघुरूक्ष एव वातसमानगुणत्वाद्वायोः कोपः प्राप्तः न तस्य निषिध्यते कालस्यौष्ण्यादित्यनेन । वर्षा-बद्भिरविपाकाभिस्तथौषधीभिरम्लविपाकाभिस्ताद्-गे तद्रूपमेव पित्तमम्लं चयं याति । न पुनः कोपं याति कालस्य वर्षाख्यस्य शैत्यात् । एवं तस्य पित्तस्य तेन शीतेन कोपो निषिध्यते उष्णगुणप्र-तिपक्षभावेन । शिशिरे कफश्चीयते, स्निग्धशीताभि-रोषधीभिरुदकैश्च स्निग्धशीतैः कफोऽपि स्निग्धः शीतकालेऽपि स्निग्धशीतदेहे शरीरे चापि स्निग्ध-शीतकालस्वभावात् कोपं न याति स्त्यानत्वात् । घृतवत् । कफश्च शिशिरे सर्वसामान्याद् द्वितीयव-स्वनाक्रान्तत्वादपि सर्वदा कोप एव प्राप्तः सस्त्या-नत्वादित्यनेनास्य निषिध्यते ॥ २९ ॥

हे०—कालनियमे युक्तिमाह—ग्रीष्म आहारस्य देहस्य । लघुरूक्षत्वे करोति ताभ्यां लघुरूक्षो वायुश्चीयते, न तु कुप्यति उष्णेन प्रतिबद्धत्वात् । वर्षाकाल आहारस्याम्ल-विपाकत्वं करोति तेनाम्लविपाकं पित्तं चीयते, नतु कुप्यति शीतेन घृतवत् घनीभूतत्वात् ॥ २९ ॥

**इति कालस्वभावोऽयम् ॥ ३० ॥**

स०—इति पूर्वोक्तोऽयं वाय्वादिचयादिः कालस्य स्वभावः ॥ ३० ॥

प०—वर्ण्यत इति वाक्यशेषः । य एते चया-दयो ग्रीष्मादिषूक्तास्ते कालस्वभावमाश्रित्य वर्णि-ताः । तथा चोक्तम् "समयोगेऽपि धर्माद्या वातादि-चयहेतवः" किं काल एव दोषाणां चयादिहेतुः । नतोऽन्येऽपि विद्यन्ते ॥ ३० ॥

हे०—कालादाहारादीनां बलवत्तामाह ॥ ३० ॥

**आहारादिवशात्पुनः ।**
**चयादीन्यांतिसद्योऽपिदोषाःकालेऽपि वा ननु ३१**

स०—आहारादिवशादन्नपानसामर्थ्यात्पुनर्दोषाः सद्योऽपि तत्क्षणादेव कालमनपेक्ष्यैव चयादींश्चयप्रकोप-प्रशमान् यांति । तस्मादेव चाहारादिवशात् यथास्वं चयादिकालेऽपि वा दोषा न तु चयादीन् यांति । तस्मात्कालादाहारादीनां प्राधान्यमित्यर्थः । आहारादी-त्यत्राऽऽदिशब्देन रसायनवाजीकरणवमनविरेचनादयो गृह्यंते ॥ ३१ ॥

प०—अत आह—आहारादिवशादन्नपानसामर्थ्या-दादिग्रहणाद्वमनाद्विरेचनादास्थापनाद्विभ्रमाद्व्याप-त्सामर्थ्याद्दोषा वाताद्यश्चयप्रकोपप्रशमान् यान्ति सद्यो तत्क्षणादेव चयादिकालमनपेक्ष्यैव तस्मादेव चाहारादिवशाद्यथास्वं चयादिदोषकाले वा । ननु दोषचयादीन् यान्ति तस्मात्कालतो ह्याहारादी-नां प्राधान्यात् ॥ ३१ ॥

हे०—आदिशब्देन विहारो, देशश्च । सद्योऽपि स्वकालं विनापि यांति स्वकालेऽपि न यांति ॥ ३१ ॥

एवं दोषाणां चयादीन् प्रदर्श्य व्याप्तिनिवृत्तिवैचित्र्यं कोपजं दर्शयितुमाह—

**व्याप्नोति सहसा देहमापादतलमस्तकम् ।**
**निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ॥**

स०—मलः कुपितः सहसा शीघ्रमेवापादतल-मस्तकं व्याप्नोति । पादतलादारभ्य यावन्मस्तकमि-त्यर्थः । निवर्तते पुनरल्पाल्पं स्तोकं स्तोकमिति । यथा गिरिनद्यादीनां जलपूरः समविषमं सहसैव व्या-प्नोति । निवर्तते तु स्तोकं स्तोकमिति ॥ ३२ ॥

प०—मलो वातकफाख्यो मलिनीकरणान्मलसंज्ञः प्रकुपितः प्रदुष्टो देहं शरीरम् आपादतलमस्तकं कृत्स्नं सहसा झटिति व्याप्नोति आक्रमति । स एव मलः पुनस्तस्मात् शरीरान्निवर्तते चिकित्सया शमं याति । अल्पाल्पं शनैः शनैः कृत्वा । क इव यथा जलस्यौ-घः समूहः सेतुं भित्त्वा सहसा व्याप्नोति । स चौघः पुनः शनैः शनैः तस्मात् स्थानान्निवर्तते निर्याति । तद्दोषा अपि । एवमवश्यं दोषाः कुपिताः सर्वं विकारं कुर्वते ॥ ३२ ॥

हे०—प्रकोपप्रशमयोः क्षिप्रचिरनिष्पाद्यत्वमाह—सहसा वेगेन, मलो दोषः, अल्पाल्पं चिरेण जलौघवन्नदीपूरवत् । स हि वेगेन वर्द्धते, चिरेण ह्रसति ॥ ३२ ॥

ननु प्रतिरोगं निदानलक्षणचिकित्सितमानंत्याद्व-क्तुमशक्यं तद्वाऽविदन्न कश्चिदत्र तथा यत्नं कुर्यादि-त्याशंक्याह—

**नानारूपैरसंख्येयैर्विकारैः कुपिता मलाः ।**
**तापयंति तनुं तस्मात्तद्धेत्वाकृतिसाधनम् ।**
**शक्यं नैकैकशो वक्तुमतः सामान्यमुच्यते ३३॥**

स०—यत्तदोर्नित्यसंबंधाद्यस्मादिति लभ्यते । यस्मान्नानारूपैरनेकप्रकारैरसंख्येयैर्गणनां समतीतैर्विकारैर्ज्वरैर्मला वातपित्तश्लेष्माणः कुपितास्तनुं देहं तापयंति दुःखयंति तस्मात्तद्धेत्वाकृतिसाधनं शक्यं नैकैकशो वक्तुमयमस्य विकारस्य हेतुरियमाकृतिरिदं लक्षणमिदमस्य साधनं चिकित्सितमिति एकैकशः वक्तुं न शक्यमतः सामान्यमुच्यते ॥ ३३ ॥

प०—चोदितानां सर्वेषां विकाराणां प्रतिविकाराणां निदानलक्षणचिकित्सितमानन्त्याद्वक्तुमशक्यमतस्तदर्थेन कश्चिद्वक्तुमशक्यत्वात् यत्नमातिष्ठेदेवमाशंक्येदमाह—मला वातादयः कुपिताः प्रदुष्टाः तनुं शरीरं विकारैर्व्याधिभिर्नानारूपैर्विविधलक्षणैरसंख्येयैः संख्यामतीतैस्तापयन्ति । तस्मात्कारणात् तेषां विकाराणां हेतवः कारणानि तथा कृतयो लक्षणानि साधनं चिकित्सितमेकैकशः प्रतिविकारं वक्तुं न शक्यम् । इमेऽस्य विकारस्य हेतवः । तथा लक्षणान्यमूनि चिकित्सितमिदमतः सामान्यमुच्यते ॥ ३३ ॥

हे०—अथ हेतुः । तद्विशेषाणां निरूपयितुमशक्यत्वात्सामान्यं वाच्यं तदेवाह—विकाराणामसंख्यत्वं, प्रतिविकारं च रूपाणाम् अतस्तद्धेत्वादिप्रकृतिविकारं वक्तुमशक्यं, साधारणं तूच्यते । तत्र दोषहेतुरेव साधारणो रोगहेतुः ३३

अत्रैव हेत्वंतरमाह—

**दोषा एव हि सर्वेषां रोगाणामेककारणम् ।**
**यथा पक्षी परिपतन् सर्वतः सर्वमप्यहः ॥**
**छायामत्येति नात्मीयां यथा वा कृत्स्नमप्यदः ।**
**विकारजातं विविधं त्रीन् गुणान्नातिवर्तते ॥**
**तथा स्वधातुवैषम्यनिमित्तमपि सर्वदा ।**
**विकारजातं त्रीन्दोषान् ॥ ३४ ॥**

स०—सर्वेषां रोगाणां यस्माद्दोषा एवैककारणम् । एकं प्रधानं च तत्कारणं निमित्तमेककारणम् । यदि वा सर्वेषां रोगाणां दोषा एकं तुल्यं कारणं समानं कारणमित्यर्थः । एवशब्दोऽवधारणे । दोषा ए कारणं नाऽपरं किंचिद्वस्तुजातम् । अत्र दृष्टांतमाह पक्षी प्राचिकादिर्यथा सर्वतः समंतात्परिपतन् भ्रम सर्वमप्यहः सकलमपि दिवसमात्मीयां छायां नाऽत्येति नाऽतिक्रामति । तया विना क्षणमप्यसौ नोपलभ्यत इत्यर्थः । तथाऽन्यदपि निदर्शनमाह । यथा वेत्यादि यथा वा कृत्स्नं निरवशेषमेतद्विकारजातं स्थावरजंगमादिभेदभिन्नं जरायुजांडजादिभेदभिन्नं वा विविधं नानाप्रकारं त्रीन् गुणान् सत्त्वरजस्तमःसंज्ञान्नाऽतिवर्तते नात्येति । त्रिभिरेतैर्विरहितं न जातुचिद्भवतीत्यर्थः । तथा स्वधात्वित्यादि । धातवो दोषधातुमलाः शरीरधारणसामान्यात् तेषां वैषम्यं स्वलक्षणतोऽन्यथात्वं स्वधातुवैषम्यं निमित्तं यस्य तद्विकारजातं त्रीन् दोषान्नाऽतिक्रामति । त्रिदोषरहितं न संभवतीत्यर्थः । धातुवैषम्यं च प्रतिरोगमन्यादृशत्वान्नानाविधम् । यत्तु येन धातुवैषम्येण जन्यते तत्तस्य स्वं स्वीयं भवति । येषां तु रोगाणां दैवग्रहादि निमित्तं न तेषु तथा दोषानुबंधः । आगंतुकत्वात् । आगंतुकनिजयोर्ह्ययमेव भेदः । यदागंतुकेषु प्रथमं रोगोद्भूतिः पश्चाद्दोषानुबंधो निजेषु प्राग्दोषानुबंध इति । ये च व्याचक्षते । स्वे च ते धातवश्च तेषां वैषम्यमिति तेषां नायमर्थः प्रतिपादितः स्यात् । स्वग्रहणं चाऽतिरिच्यते । यतः शरीरांतरावस्थायिनो दोषा वातादय शरीरांतरे रोगं जनयितुं नालम् । तस्मात्पूर्वमेव व्याख्यानं श्रेयः ॥ ३४ ॥

प०—सामान्यं यद्वथापि यद्वचनं तदेवाख्यायते—सर्वेषां रोगाणामेकं च तुल्यं कारणमेककारणम् । समानकारणमित्यर्थः । एवकारोऽवधारणार्थः । त एव रोगकारणं नान्यत् किञ्चिद्वस्तुजातम् । आसन्नत्वात् । अस्यार्थस्योदाहरणं प्रदर्शयितुमाह—यथा पक्षी श्येनादिः सर्वतः परिपतन् समन्ताद्गच्छन् सर्वमप्यहः सकलं दिनमात्मीयां छायां नात्येति नातिक्रामति । तया विना क्षणमप्यसौ न दृश्यते । किंचान्यदप्यमुख्यार्थस्य निदर्शनमाह—यथा वा कृत्स्नमप्यदः सकलमेतज्जगद्विकारजातं जरायुजादिभेदभिन्नं स्थावरजङ्गमादिभेद-

भिन्नं वा नानावस्तुजातं त्रीन् गुणान् सत्त्वरजस्तमोरूपान्नातिवर्तते नातिक्रामति । त्रिभिर्गुणैर्न कदाचिदपि युक्तं भवति । सर्वकालं विकारजातं रोगाख्यं वस्तु त्रीन् दोषान् नातिवर्तते । न कदाचिन् त्रिभिरेतैर्युक्तं संभवति । धातूनां वातादीनां शरीरधारणस्वभावानामप्येषां यद्वैषम्यं तदपि रोगकारणम् । दोषमलरूपाणामेषां विनापि वैषम्यं रोगकारणत्वादिति । धातुशब्दोऽप्यत्र विशेषणार्थं उपात्तः । स्वं च तद्धातुवैषम्यं तत्स्वधातुवैषम्यम् । निमित्तं कारणम् । यस्य विकारजातस्य त्रीन् दोषान्नातिवर्तते ॥ ३४ ॥

हे०—तत्र युक्तिमाह—दोषा एव कारणं दोषाः कारणमेवेत्येवैकशब्दाभ्यामुच्यते । अत्रार्थे दृष्टान्तद्वयम् । यथा—पक्षी देशभेदेऽपि छायासंबंधं न त्यजति । तथा विकारो दोषसंबंधम् । यथा च महदादिपृथिव्यंतं कार्यं गुणसंबंधं न त्यजति, किं दोषजमेव दोषसंबंधं त्यजति नेत्याह—स्वधातुवैषम्यनिमित्तमपि यो धातुर्यस्य रोगस्याधिष्ठानत्वेनोक्तः स तस्य स्वधातुः तस्य वैषम्यं क्षयो वृद्धिर्विकृतत्वमुन्मार्गत्वं वा तन्निमित्तं यस्य तत्तथा । रसजादीनामपि दोषैर्विना नोत्पत्तिः ॥ ३४ ॥

**तेषां कोपे तु कारणम् ।**
**अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतम् ।**
**हीनातिमिथ्यायोगेन भिद्यते तत्पुनस्त्रिधा ३५॥**

स०—तेषां वातादीनां कोपे कारणमसात्म्यैरनुचितैरर्थैः शब्दस्पर्शरूपरसगंधाख्यैः श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानामिंद्रियाणां यः संयोगस्तथा कालः शीतोष्णवर्षलक्षणो दुष्टस्तथा कर्म चैहिकमन्यजन्मजं च यद् दुष्कृतमशुभमेतत्त्रयं दोषाणां कोपे हेतुः । तुशब्दः समुच्चये । न केवलं रूक्षादयो वातादीनां कोपकारणं यावदसात्म्येंद्रियार्थसंयोगादिरपि । एतच्च पूर्वोक्तं दोषकोपकारणमसात्म्येंद्रियार्थसंयोगादिभेदेन त्रिधा भिन्नमपि पुनर्भूयस्त्रिधा त्रिप्रकारमपि भिद्यते । कथम् । हीनमिथ्यातियोगेन ॥ ३५ ॥

प०—प्राग्देहिकं कर्मैहिकं च यदशुभं त्रिविधं कायवाङ्मनोभेदेन कृतं तत्सर्वं वातादीनां प्रदुष्टौ निमित्तम् । यदेतद्वातादीनां त्रिविधेन रूपेण कारणं पूर्वमेव भिन्नमपि तत्पुनस्त्रिधा भिद्यते हीनमिथ्यातियोगेनेत्यर्थः । तदेवं त्रिप्रकारं भूयोऽपि भिद्यते ॥ ३५ ॥

हे०—दोषकोपहेतुमाह—स च त्रिविधः—असात्म्यविषयसेवा, दुष्कालो, दुष्कर्म चेति । सोऽपि प्रत्येकं त्रिविधः—हीनयोगोऽतियोगो, मिथ्यायोगश्चेति ॥ ३५

तानेव हीनमिथ्यातियोगान्दर्शयति ।

**हीनोऽर्थेनेंद्रियस्याऽल्पः संयोगः स्वेन नैव वा**
**अतियोगोऽतिसंसर्गः सूक्ष्मभासुरभैरवम् ॥**
**अत्यासन्नाऽतिदूरस्थं विप्रियं विकृतादि च ।**
**यदक्ष्णा वीक्ष्यते रूपं मिथ्यायोगः स दारुणः**
**एवमत्युच्चपूत्यादीनिंद्रियार्थान् यथायथम् ॥**
**विद्यात् ॥ ३६ ॥**

स०—अर्थेन शब्दादिना स्वेनेंद्रियस्य श्रोत्रादिर्हि नोऽल्पो यः संयोगः स हीनयोगः । नैव वेति अथवा सर्वसर्विकया तेनार्थेन न संयोगः सोऽपि हीनयोगः तस्यैवेंद्रियस्य स्वेनार्थेन योऽतिसंसर्गोऽतिसेवलक्षणः स तस्य स्वेनार्थेनातियोगः । यच्च सूक्ष्मभासुरभैरवमित्यादि यदक्ष्णा वीक्ष्यते नयनेनालोक्य स तस्य चक्षुरिंद्रियस्य स्वेनार्थेन मिथ्यायोगः । एवमनया दिशा सूक्ष्मभासुरभैरवम् । अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च । यदक्ष्णा वीक्ष्य रूपं मिथ्यायोगः स दारुणः । तिमिरादिकृत्वात् । एवमनया चक्षुषो रीत्याऽन्यानपींद्रियार्थान् यथास्वमिंद्रियाणामत्युच्चपूत्यादीन् मिथ्यायोगरूपान्विद्यात् । यदाऽत्युच्चपरुषेष्टविनाशभीषणाद्यनिष्टशब्दः श्रोत्रेंद्रियेण गृह्यते तदा श्रोत्रेंद्रियस्य स्वेनार्थेन शब्दाख्येन मिथ्यायोगः । यदा पूतिविष्ठाद्यनिष्टगंधो घ्राणेंद्रियेण गृह्यते तदा घ्राणेंद्रियस्य स्वेनार्थेन गंधाख्येन मिथ्यायोगः । यदा स्नानानुलेपनादीनां शीतोष्णादीनां च स्पृश्यानामक्रमसेवनेन स्पर्शः स्पर्शनेंद्रियेण गृह्यते तदा स्पर्शनेंद्रियस्य स्वेनार्थेन स्पर्शाख्येन मिथ्यायोगः। तथा रसनेंद्रियेण यो रसोऽपरिपाट्या युज्यते । तथाऽपथ्य

द्रव्यनिविष्टो यो रसो रसनेंद्रियेण गृह्यते स तस्य रसनेंद्रियस्य स्वेन रसाख्येनाऽर्थेन मिथ्यायोगः ॥ ३६ ॥

प०—योऽर्थेन शब्दादिना श्रोत्रादिरिन्द्रियसंयोगः स तस्य तेनार्थेन हीनयोगः। अतियोगोऽतिसंसर्गः अतियोगस्तस्यैवेन्द्रियस्येत्येवं स्वेनार्थेनातिसंसर्गोऽतिश्लेषोऽतिसेवालक्षणः। स तस्यार्थेनातिसंयोगः। मिथ्यायोगो यः सूक्ष्मभासुरादिरूपं दर्शनेन्द्रियेण वीक्ष्यते दृश्यते।स तस्य चक्षुरिन्द्रियस्य स्वेनार्थेन मिथ्यायोगः। एवमत्युच्चपूत्यादीनेवमनया दिशा निर्दिष्टयाऽन्यान्यपि इन्द्रियाण्यपि इन्द्रियार्थान् यथास्वं यथात्मीयमिन्द्रियाणामत्युच्चपूत्यादीन् मिथ्यायोगरूपान् विद्यात् जानीयात्। यदात्युच्चपरुषेष्टविनाशादिरनिष्टः शब्दः श्रोत्रेन्द्रियेण गृह्यते तदा तस्यैव स्वेनार्थेन शब्दाख्येन मिथ्यायोगः। यदा पूतिद्विष्टामेध्यक्लिन्नादिरनिष्टो गन्धो घ्राणेन्द्रियेण गृह्यते तदा तस्यैव स्वेनार्थेन गन्धाख्येन मिथ्यायोगः। आदिग्रहणादत्यन्तलवणादीन्। जिह्वेन्द्रियार्थस्तथेत्यर्थः। शीतोष्णकठिनादीन् स्पर्शेन्द्रियार्थान् स्वेनार्थेन मिथ्यायोगः। प्रदर्शितोऽर्थेऽसात्म्येन्द्रियस्येन्द्रियस्यार्थे यः संयोगः स दोषाणां कोपकारणम्। चरकमुनिना स्पष्टं कृत्वा सर्वमेतदुक्तम्। तथा चाह। तत्रापि प्रभाववतां दृश्यानामतिमात्रं दर्शनमतियोगः। सर्वथाऽदर्शनमयोगः। सूक्ष्मातिक्लिष्टप्रकृष्टरौद्रभैरवद्विष्टबीभत्सविकृतवित्रासनादिरूपदर्शनं मिथ्यायोगः। तथाऽतिमात्रस्तनितपटहः कुष्टादीनां शब्दानामतिमात्रश्रवणमतियोगः। सर्वश्च श्रवणमयोगः। परुषेष्टेष्टविनाशविघातप्रधर्षणोद्धीपणादिश्रवणं मिथ्यायोगः। तथाऽतितीक्ष्णोग्राभिष्यन्दिनां गन्धानामतिमात्रघ्राणमतियोगः। सर्वश्च घ्राणमयोगः। स्नानादीनां पूतिद्विष्टामेध्यक्लिन्नविषवमनकुणपगन्धादिघ्राणं मिथ्यायोगः। तथा रसानामत्यादानमतियोगः। अनादानमयोगः। मिथ्यायोगो रसवर्ज्येष्वाहारविधिविशेषायतनेपूपदिश्यते। तथातिमात्रं शीतोष्णादीनां स्पृश्यानां स्नानाभ्यङ्गोत्सादनादीनां वात्युपसेवनमतियोगः। सर्वशश्चानुपसेवनमयोगः। स्नानादीनां शीतोष्णादीनां च स्पर्शानामनानुपूर्व्योपसेवनमभिघातभूताशुचिसंस्पर्शादयश्च मिथ्यायोगः ॥ ३६ ॥

हे०—तत्र असात्म्यविषयसेवायास्त्रैविध्यं लक्षयति—इंद्रियस्य चक्षुरादेः स्वेनार्थेन रूपादिना अल्पः संयोगो नैव वा योगो हीनयोगः। विषयोत्कंठायाः अनिवृत्तिर्हीनत्वमित्यर्थः। उत्कंठानिवृत्तावपि सेवनमतियोगः, सूक्ष्मादिरूपसेवा, अत्युच्चादिशब्दसेवा, पूत्यादिगंधसेवा, अत्यम्लादिरससेवा, अतिशीतादिस्पर्शसेवा च; मिथ्यायोगः। भासुरमतिदीप्तं, भैरवं भयंकरं, विप्रियं द्विष्टम् ॥ ३६ ॥

**कालस्तु शीतोष्णवर्षभेदात्त्रिधा मतः।**
**स हीनो हीनशीतादिरतियोगोऽतिलक्षणः॥**
**मिथ्यायोगस्तु निर्दिष्टो विपरीतस्वलक्षणः ३७॥**

स०—कालः पुनः शीतोष्णवर्षभेदेन त्रिधा त्रिप्रकारो मतो मुनीनाम्। तत्र हेमंतशिशिरलक्षणः शीतः। उष्णो वसंतग्रीष्मलक्षणः। प्रावृड्लक्षणो वर्षाख्यः स च कालो हीनशीतादिर्हीनयोगलक्षणः। अतियोगोऽतिमात्रयोगलक्षणः। विपरीतं स्वं शीतोष्णवर्षाख्यं लक्षणं यस्य कालस्य स विपरीतस्वलक्षणो मिथ्यायोगः। गुणगुणिनोरभेदोपचारात् काल एवमुच्यते। तत्र यथा हेमंते शीतस्यालपत्वं हीनो योगस्तस्मिन्नेव हेमंतेऽतिशैत्यमतियोगस्तस्मिन्नेव हेमंत औष्ण्यं मिथ्यायोगः। उपलक्षणं चेदम्। एवं शरद्वसंतयोरपि यन्मंदवर्षोष्णत्वं स्वलक्षणं तद्यदा हीनतरं स्यात् सोऽपि हीनयोगः एवमतियोगायोगयोरपि योज्यम् ॥ ३७ ॥

प०—तथा कालः शीतोष्णादिभेदेन त्रिधा त्रिप्रकारः। तत्र शीतो हेमन्तशिशिराख्यः। उष्णो ग्रीष्माख्यः। वर्षालक्षणो वर्षाख्यः। तस्य योगातियोगमिथ्यायोगान् दर्शयितुमाह-एवं शीतोष्णवर्षादिर्हेमन्तग्रीष्मवर्षाख्यानां लक्षणं यावन्मात्रं पुरा दृष्टं ततो हीनतरं दृश्यते स एष कालस्य योगोऽल्पो योग इत्युच्यते। अतियोगोऽतिलक्षणः। अति यदस्य त्रिविधस्य लक्षणमस्य सतोऽतिमात्रमुपलभ्यते सोऽतियोगः। मिथ्यायोगः पुनः स्वलक्षणविपरीतः। यथा हेमंते उष्णो, ग्रीष्मे शीतम्। वर्षास्ववर्षणम्। अत्रापि चरकमुनिः पठति। शीतोष्णवर्षालक्षणः

पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरस्य कालः । तत्रातिमात्रस्वलक्षणकालोऽतियोगो, हीनस्वलक्षणः कालोऽयोगो, यथास्वलक्षणविपरीतलक्षणस्तु कालो मिथ्यायोगः कालः ॥ ३७ ॥

हे०—दुष्कालस्य त्रैविध्यं लक्षयति—शीतोष्णवर्षभेदात्त्रिविधस्य कालस्य शीतादीनामल्पत्वं हीनयोगः । आधिक्यमतियोगः, वैपरीत्यं मिथ्यायोगः ॥ ३७ ॥

**कायवाक्चित्तभेदेन कर्माऽपि विभजेत्त्रिधा ।**
**कायादिकर्मणां हीना प्रवृत्तिर्हीनसंज्ञिका ॥**
**अतियोगोऽतिवृत्तिस्तु वेगोदीरणधारणम् ।**
**विषमाङ्गक्रियारम्भपतनस्खलनादिकम् ॥**
**भाषणं सामिभुक्तस्य रागद्वेषभयादि च ।**
**कर्मप्राणातिपातादि दशधा यच्च निंदितम् ॥**
**मिथ्यायोगः समस्तोऽसाविह चामुत्र वा कृतम् ।**

अ०—यथा कालस्त्रिधा निरूपितस्तथा कर्मापि कायवाक्चित्तभेदेन त्रिप्रकारं विभजेत् । तथा कायकर्मणस्तथा वाक्कर्मणस्तथा चित्तकर्मणो हीना या प्रवृत्तिः स हीनसंज्ञको योगः । अतिप्रवृत्तिस्त्वतियोगः । कायादिकर्मणो मिथ्यायोगमधिकृत्याह । वेगोदीरणधारणमित्यारभ्य यावत्पतनस्खलनादिकं यदेतत् कायिकं कर्म तस्य कर्मण एवंरूपस्य या वृत्तिः स कायकर्मणो मिथ्यायोगः । विषमाङ्गैः क्रिया कर्म विषमारंभ उभयलोकविरुद्धः। विषमपतनं विषमस्खलनम् । आदिशब्देन विषमगमनादीनां ग्रहणम् । सामिभुक्तस्याऽर्धभुक्तस्य यद्भाषणं जल्पनमेवंरूपा या प्रवृत्तिः स वाक्कर्मणो मिथ्यायोगः । रागद्वेषभयादि यदेतन्मानसं कर्म तस्य कर्मण एवंरूपा या प्रवृत्तिः स चित्तकर्मणो मिथ्यायोगः । तथा दिनचर्याध्यायोक्तं यत्प्राणातिपातादि दशधा दशप्रकारं कर्म निंदितमशुभं निर्दिष्टं हिंसास्तेयेत्यादिना ग्रंथेन तच्च यथायथं कायवाक्चित्तकर्मणां मिथ्यायोगः । समस्तोऽसाविह चामुत्र कृतमस्मिन् लोके कृतमन्यत्र वा लोके कृतमाचरितं सर्व एव मिथ्यायोगः ॥ ३८ ॥

प०—पुनः परिणाम उच्यते। कर्माख्यं रोगनिदानं त्रिधा विभजेत् कायवाक्चित्तभेदेन शरीरवाङ्मनोविशेषणे त्रिविधं विभागं नयेत् । तत्र कायकर्म गमनादि । वाक्कर्माध्ययनादि । चित्तकर्म चिन्तनादि। कायकर्मणस्तथा वाक्कर्मणस्तथा गमनकर्मणश्च यथायथं स्वविषये या हीना प्रवृत्तिः स तस्य हीनयोगः । कायवाङ्मनसां कर्मणो याऽतिवृत्तिरतिप्रवर्तनं सोऽतियोगः । मिथ्यायोगस्तु वेगोदीरणधारणमित्यारभ्य यावत् पतनस्खलनादिकं यत्कर्म तस्य कर्मण एवंरूपस्य या प्रवृत्तिः सा कायकर्मणो मिथ्यायोगः। वेगानामुदीरणमन्तर्मुखीभूतानामभिमुखीकरणम् । विषमाङ्गमित्यत्र विषमशब्दः प्रत्येकं योज्यः । आदिशब्देन गमनादिपरिग्रहः । भाषणं सामिभुक्तस्य अर्धभुक्तस्य यदेतद्वाक्कर्म तस्य कर्मण एवंरूपस्य या प्रवृत्तिः सा वाक्कर्मणो मिथ्यायोगः । अत्र भाषणमुच्चैर्भाषणं बोद्धव्यं न भाषणमात्रम् । रागद्वेषभयादि च यदेतन्मनःकर्म तस्य कर्मण एवंरूपस्य या प्रवृत्तिः सा मनसः कर्मणो मिथ्यायोगः। तथा दिनचर्याध्याये उक्तं कर्म प्राणातिपातान्तादि दशधा यन्निन्दितं पूर्वं निर्दिष्टं हिंसास्तेयान्यकामेत्यादिना ग्रन्थेन तस्य वा यथाकायवाक्कर्मणो मिथ्यायोगः । समस्तोऽसाविह वाऽमुत्र वा कृतम् । इहास्मिञ्जन्मानि कृतममुत्र वाऽन्यस्मिन् जन्मानि कृतं तत्सर्वं मिथ्यायोग इति बोद्धव्यम् । अत्रापि चरकमुनिना सविस्तरमुक्तम्। अत्र कर्म वाङ्मनःशरीरप्रवृत्तिरयोगः वेगविधारणोदीरणविषमस्खलनगमनपतनाङ्गप्रणिधानस्वप्रदूषणप्रहारावमर्दप्रापणोपरोधसंक्लेशनादि शरीरे मिथ्यायोगः । सूचकानृतकालकलहविप्रियाबन्धूपचारपरपुरुषवचनादिर्वाङ्मिथ्यायोगः । भयशोकमोहलोभक्रोधमानेर्ष्यादिमिथ्यादर्शनादिमानसो मिथ्यायोगः । सङ्ग्रहेण चातियोगो योगवर्ज्यं कर्म वाङ्मनःशरीरसाहितमनुपदिष्टं यत्तच्च मिथ्यायोगं विद्यादिति ॥ ३८ ॥

हे०—दुष्कर्मस्य त्रैविध्यं लक्षयति—कायिकवाचिकमानसभेदात्त्रिविधस्य कर्मणः प्रवृत्तेरल्पत्वं हीनयोगः,आधिक्यमतियोगः, वेगोदीरणादिरूपत्वं मिथ्यायोगः, धारणं वेगधारणं, विषमैर्दुस्थितैरङ्गैः क्रियायाश्चेष्टाया आरम्भः, सामिभुक्तस्य भाषणम् अर्द्धभोजने मौनित्यागः । प्राणातिपातादिहिंसादिहिंसास्तेयान्यथाकाममित्यादिना दिनचर्यायामुक्तम् । इहास्मिन् जन्मानि, अमुत्र प्राग्जन्मनि । संग्रहे तु त एते अतियोगादयः सामान्यतोऽनुपशयल-

लक्षणाः। सर्वो वा प्रज्ञापराध एवायं यदेषामविसर्जनम्। अथ कर्मकालाः पुनः सम्यग्योगेनोपशयाद्धृयिष्टं स्वास्थ्यहेतवः, तत्रापि रसवर्ज्या विषया यथायथमिंद्रियं बाधन्ते, अनुगृह्णन्ति च विशेषास्तु सर्वदेहम्। अपि च सर्वभावानां भावाभावौ नांतरेण योगातियोगादीन् व्यवस्येत्। सर्वेषां पुनर्विकाराणां निदानं दोषदूष्यविशेषेभ्यो भावाभावविशेषा भवंति। यदा ह्येते त्रयो निदानादिविशेषा नान्योन्यमनुबध्नंति, ईषद्वानुबध्नंत्यबला वा न तदाभिनिवर्तंते व्याधयश्चिराद्वाभिनिवर्तंते न वा भवंत्यसम्पूर्णलिंगा वा विपर्ययेण तु विपरीताः। तथान्यः प्रधान एव रोगोऽन्यस्य प्रधानस्य हेतुर्भवति। यथा-ज्वरस्तु पित्तस्य, पित्तं वा ज्वरस्य, तौ श्वासस्य, प्लीहा जठरस्य, ते श्वयथोः, अर्शांसि गुल्मोदरातीसारग्रहणीनां प्रतिश्याय: कासज्वरयोः, तौ क्षयस्य, क्षयः शोषस्य। एकश्चापचारो निमित्तमेकस्य व्याधेः, बहूनां च तथा बहवः। तद्वदेकं लिंगम् एकमेव प्रशमेऽभ्युपायस्तथा स एवान्यस्य प्रकोपे तस्मात्नानवहितः सम्यगागमादिभिः परीक्षेत। तत्रागमतो-रोगमेकैकम्, एवं प्रकोपनमेवंयोनिमेवमात्मानमेवमधिष्ठानमेवं वेदनमेवं शब्दरूपगन्धस्पर्शरसमेवंपूर्वरूपमेवमुपद्रवमेवं वृद्धिस्थानक्षयान्वितमुदर्कमेवंविधं नामानम्। तस्मिन्नियं प्रतीकारस्य प्रवृत्तिरथवा निवृत्तिः। प्रत्यक्षतस्त्वातुरस्य यथास्वमिंद्रियैर्वर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दितादिकमन्त्रकूजनमंगुल्यादिसंधिस्फुटनं, देहे शकृद्व्रणादिगन्धं, शीतोष्णस्तम्भस्यंदश्लक्ष्ण्याखरसंस्पर्शं च प्रकृतिविकृतियुक्तम्। आस्यरसं तु प्रश्नेन तथा सुच्छर्ददुश्छर्दत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्रं द्विष्टेष्टसुखदुःखानि। तथा वयः प्रत्यक्षेण अनुमानतस्तु यूकापसर्पणेन शरीरवैरस्यं, मक्षिकोपसर्पणेन माधुर्यं तथा अग्निं जरणशक्त्या, बलं व्यायामशक्त्या गूढलिंगं, व्याधिमुपशयानुपशयतः, दोषप्रमाणमपचारविशेषेण आयुषः, क्षयं रिष्टैः, प्रकृतिसत्त्वसारसात्म्यबलान्यनुशीलनेनेति। भवंति चात्र-"ज्ञानबुद्धिप्रदीपेन यो नाविशति योगवित्। आतुरस्यांतरात्मानं न स रोगांश्चिकित्सति॥ द्वाविमौ व्याधितौ व्याधिस्वरूपपस्याप्रकाशकौ। तत्रैको गुरुव्याधिः सत्त्वदेहबलाश्रयात्॥ लघुव्याधिवदाभाति लघुव्याधिस्ततोऽन्यथा। बाह्यावयवमात्रेण तयोर्मुह्यति बालिशः॥ ततोऽल्पमल्पवीर्यं वा विपरीतं ततोऽन्यथा। पथ्यं विपर्यये युञ्जन् प्राणान् मुष्णाति रोगिणाम्॥ ज्ञानांशेन नाहि ज्ञानं कृत्स्ने ज्ञेये प्रवर्तते। बुभुत्सेत भिषक् तस्मात्तत्त्वं तन्त्रानुशीलनात्॥ अभियुक्तस्तु सततं सर्वमालोच्य सर्वथा। न जातु स्खलति प्राज्ञो विषमेऽपि क्रियापथे॥ आगंतुरन्वेति निजं विकारं निजस्तथागन्तुमतिप्रवृद्धम्। तत्रानुबन्धं प्रकृतिं च सम्यक् ज्ञात्वा ततः कर्म समारभेत" इति॥ ३८॥

**निदानमेतद्दोषाणां कुपितास्तेन नैकधा।**
**कुर्वंति विविधान्व्याधीन्शाखाकोष्ठास्थिसंधिषु॥**

स०—निदानमेतद्दोषाणां कोपे इति वाक्यशेषः। कुपितास्तेन निदानेन नैकधा अनेकप्रकारेण व्याधीन् विविधान् नानाप्रकारान् कुर्वंति। कुपिता दोषा इति विभक्तिविपरिणामेन संबंधः। क्व व्याधीन् कुर्वंतीत्याह। शाखाश्च कोष्ठश्चाऽस्थीनि च संधयश्च तेषु॥ ३९॥

प०—एतत्त्रिविधं त्रिविधकल्पं दोषाणां निदानं प्रकोपकारणम्। तेन निदानेन ते दोषाः प्रकुपिताः प्रदुष्टाः। नैकधा बहुधा नैकप्रकारेण व्याधीन् विविधान् अनेकप्रकारान् कुर्वन्ति उत्पादयन्ति। क्व शाखासु तथा कोष्ठे अस्थिषु मर्मसन्धिषु॥ ३९॥

हे०—दोषहेतुमुपसंहरति निदानमिति। दोषहेतो रोगहेतुत्वमाह—तेन निदानेन नैकधा विविधानिति हेत्वानंत्यात्कोपानंत्यं तस्माद्रोगानंत्यं दोषा एव कारणमित्युक्तं, तन्निर्वाहार्थमाह—शाखादीनामाधारत्वं न कारणत्वम्॥ ३९॥

शाखेति किमुच्यत इत्याह—

**शाखा रक्तादयस्त्वक् च बाह्यरोगायनं हि तत्।**
**तदाश्रया मषव्यंगगंडालज्यर्बुदादयः॥**
**बहिर्भागाश्च दुर्नामगुल्मशोफादयो गदाः॥ ४०॥**

स०—शाखा रक्तादयः षड्धातवस्त्वक् चैतद्बाह्यं रोगायनं बाह्यानां रोगाणामयनं स्थानम्। हिशब्दो यस्मादर्थे। यस्माद्बाह्यानां रोगाणामयनमतस्तदाश्रया मषव्यंगादयो रोगा बहिर्भागा उच्यंते। आदिशब्देन विसर्पविद्रधिप्लीहकुष्ठादयो गृह्यंते। दुर्नामेत्यादि। बहिर्भागाश्चेत्यत्र चशब्दो भिन्नक्रमः शोफादय इत्यस्मादनंतरं द्रष्टव्यः। दुर्नामगुल्मशोफादयश्च बहिर्भागा इत्यर्थः॥ ४०॥

प०---तत्र शाखा रक्तादयो धातवस्त्वक्पर्यन्ता उच्यन्ते । तच्च बाह्यानां रोगाणामयनं स्थानम् । हिशब्दो यस्मादर्थे । यस्माद्बाह्यानां रोगाणां शाखा रक्तादयो धातवः अयनं स्थानमतस्तदाश्रया मष-व्यङ्गादयो रोगा भवन्ति । तथा बहिर्भागा दुर्नामादयः शाखासु जायन्ते ॥ ४० ॥

हे०--तत्र शाखां व्याचष्टे--रक्तादयो धातवस्त्वक् च शाखा । सा च बाह्यरोगायनं, बहिर्मार्गो रोगाणां ते च रोगा मसादयः । मषव्यंगौ क्षुद्ररोगेषु, गंडालजीमुखरोगेषु बहिर्भागा इति । दुर्नामादीनां विशेषणमंतर्भागनिवृत्त्यर्थम् ॥ ४० ॥

**अंतः कोष्ठो महास्रोत आमपक्वाशयाश्रयः ।**
**तत्स्थानाश्छर्द्यतीसारकासश्वासोदरज्वराः ।**
**अंतर्भागं च शोफार्शोगुल्मवीसर्पविद्रधि ४१ ॥**

स०--कोष्ठः कथ्यते अंतः स महास्रोत आमपक्वाशयाश्रयः । तत्स्थाना अंतर्भागाश्रयाश्छर्द्यादयो रोगाः । न केवलास्त एव छर्द्यादयोऽतर्भागाश्रया यावच्छोफार्शोगुल्मवीसर्पविद्रध्यप्यंतर्भागं च शोफादीनां विद्रध्यंतानां समाहारद्वंद्वनिर्देशः ॥ ४१ ॥

प०--कोष्ठं पुनरुच्यतेऽतस्तथा महास्रोत आमपक्वाश्रयश्च । अन्तर्भागाश्च शोफादयो जायन्ते । एवं शोफादीनां द्वैविध्यम् । बहिर्भागान्तरभागभेदात् ॥ ४१ ॥

हे०--कोष्ठं व्याचष्टे--अंतःकोष्ठो महास्रोतः महाविवरम्, आमाशयो यत्राममन्नं तिष्ठति, पक्वाशयो यत्र पक्वं तत्स्थानाः कोष्ठाश्रिताः । अंतर्भागमिति । शोफादीनां विशेषणं बहिर्भागनिवृत्त्यर्थं, समाहारद्वंद्वत्वादेकत्वनपुंसकत्वे ॥ ४१ ॥

इदानीं मध्यमं रोगमार्गं वक्ति--

**शिरोहृदयबस्त्यादिमर्माण्यस्थ्नां च संधयः ।**
**तन्निबद्धाः शिरास्नायुकंडराद्याश्च मध्यमाः ॥**
**रोगमार्गास्थितास्तत्र यक्ष्मपक्षवधार्दिताः ।**
**मूर्धादिरोगाः संध्यस्थित्रिकशूलग्रहादयः ४२॥**

स०--शिरोहृदयादीनि मध्यमो रोगमार्गः । अस्थ्नां च संधय इत्येवं निर्देशेनेदं बोधयति । नाऽत्र द्वयं विवक्षितमस्थीनि च संधयश्चेति किं तर्ह्यस्थ्नां संबंधिनः संधय इति । संधयो ह्यन्येऽपि संति। तथा च वक्ष्यति मांसास्थिस्नायुधमनीशिरासंधिसमागम इति । तन्निबद्धास्तेष्वस्थिनिबद्धाः संलग्ना इत्यर्थः । शिराः स्नायवः कंडराश्चादयो येषां धमनीकूर्चादीनां ते । च शब्दात्पूर्वोक्ताश्च तत्र मध्यमे रोगमार्गे यक्ष्मादयो गदास्त्रिकशूलग्रहान्तर्गताः मूर्धादीत्यत्राऽदिशब्देन हृदयबस्त्यादिपरिग्रहः । संध्यस्थित्रिके शूलानि सन्ध्यस्थित्रिके ग्रहा इति योज्यम् आदिशब्देन पक्षग्रहादयो वातविकारा गृह्यंते यक्ष्मणोऽत्र मर्मास्थिसन्ध्यधिष्ठानत्वात्पूर्वं निर्देशः वक्ष्यतिहि । तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वत शरीरसंधीनाविश्य तान् शिराश्च प्रपीडयन्नित्यादि॥ ४२

प०--मर्माणि सर्वाण्युच्यन्ते । तानि शिरोहृदयबस्तिप्रभृतीनि । सन्धयोऽस्थ्नां सम्बन्धिनः नान्ये सन्धयः । यतो बहवः सन्धयो विद्यन्ते । मांसास्थिस्नायुधमनीशिरासन्धिसमागमः । इत्यतो ग्रन्थज्जायन्ते । तेषु निबद्धास्तन्निबद्धाः । तेषु मर्मसु तथास्थिसन्धिषु शिराद्या निबद्धा आश्रिता इति स च मर्मास्थिसन्ध्याख्यो मध्यमो रोगमार्गो विधेय तत्र तेषु मर्मास्थिसन्धिषु मध्यमरोगमार्गसंज्ञिते यक्ष्मादयो रोगाः स्थिताः । तथा मूर्धादिरोग सन्ध्यस्थित्रिकशूलग्रहादयश्च ॥ ४२ ॥

हे०--अस्थिसंधीन् व्याचष्टे--मर्माणि मर्मनिबद्ध शिरादयश्चास्थिसंधयः । तेन मध्यमो रोगमार्गः तदाश्रिता यक्ष्मादयः । यक्ष्मा राजयक्ष्मा, पक्षवधः एकांगरोगः, अर्दित एकायामः, ग्रहः स्तब्धत्वं, संध्यस्थित्रिकेष्वेव ॥ ४२ ॥

इदानीं वायोः कर्माण्याह--

**स्रंसव्यासव्यधस्वापसादरुक्तोदभेदनम् ।**
**संगांगभंगसंकोचवर्तहर्षणतर्षणम् ॥**
**कंपपारुष्यसौषिर्यशोषस्पंदनवेष्टनम् ।**
**स्तंभः कषायरसतावर्णःश्यावोऽरुणोऽपि वा ।**
**कर्माणि वायोः ॥ ४३ ॥**

स०–स्रंसो हन्वादिसंधेर्भ्रंशः । व्यसनं व्यासो विक्षेपणमंगप्रत्यंगादेर्यथाऽऽक्षेपकादिषु । व्यधस्ताडमिव मुद्गरादिना । स्वापः सुप्तिः कर्मण्यचैतन्यम् । सादनं सादोऽगानां क्रियास्वसामर्थ्यम् । रुक् सततं शूलम् । तोदो विच्छिन्नं शूलम् । भेदनं भेदो विदारणमिवांगस्य । संगो मूत्रपुरीषादेः स्वाशयेभ्योऽनिःसारो वाक्संगादिश्च अंगानां जंघोरुप्रभृतीनां भंग इव भंगश्चूर्णनमिवांगभंगः । संकोचनं संकोचः शिरादीनाम् । वर्तनं वर्तः पुरीषादीनां पिंडीकरणम् । हर्षण रोम्णामूर्ध्वीभावः । तर्षणं तर्षस्तृट् । तथा कंपोऽतिवेपनम् । पारुष्यम् । परुषत्वम सौषिर्यमस्थ्नाम् । शोषः शोषणम् । स्पंदनं हि किंचिच्चलनम् । वेष्टनं ग्रथनमिवांगस्य । स्तंभो बाहूरुजंघादीनामाकुंचनाद्यभावः । कषायरसता कषायास्वादत्वम् । वर्णः श्यावोऽरुणोऽपि वा । श्यावारुणौ वर्णावित्यर्थः । एतानि वायोः कर्माणि ॥ ४३ ॥

प०–वायोः प्रकुपितस्य स्रंसादीनि कर्माणि भवन्ति । तत्र स्रंसोऽधःपतनमिव नेत्रादेर्वस्तुनः । व्यासो विशेषेणासनं क्षेपणम् । व्यधः विदारणमिवाङ्गस्य ताडनमिव मुद्गरादिना वा । स्वापो विचेतनत्वमङ्गस्य । सादोऽङ्गावसादो निरुत्साहतो गतिनिरोध एवाङ्गादेः । रुक्–प्रबन्धप्रवृद्धमध्याः, छेत्रं शूलम् । तोदो व्युच्छिन्नशूलप्रादुर्भावः । भेदनं विदारणमिवाङ्गस्य । सङ्गः शकृतो निश्चलत्वम् । अङ्गानां भङ्ग इवाङ्गभङ्गः । सङ्कोचोऽल्पीकरणम् । वर्तयतीति वर्तोऽणुशो भिन्नानां पिण्डीकरणमिव । हर्षणं रोम्णाम्, दन्तानामङ्गानां च । तर्षणं तृष्णा । कम्पश्चलनमंगस्य । पारुष्यं खरस्पर्शता । सौषिर्यमन्तःशून्यम् । शोषोऽङ्गस्य शोषणम् । स्पन्दनं किञ्चिच्चलनम् । वेष्टनं ग्रन्थनमिवाङ्गस्य । स्तम्भः स्तब्धताङ्गावयवानाम् । कषायरसता कषायरसत्वम् । रसान्तरेऽपि कषायग्रहः । श्यावो श्यामलो मलिनो वर्णः । तथाऽरुणो रोहितप्रायो वर्णः ॥ ४३ ॥

हे०–अथाकृतिः । तत्र वातरोगाणां लक्षणमाह—स्रंसः—शैथिल्यं, व्यासः—असंकोच्यत्वं, व्यधः—सूचीविद्धस्येव व्यथा, स्वापः स्पर्शाज्ञानं, सादः स्वकार्याक्षमत्वं, रुक् शूलं, तोदः तोत्रेणेव व्यथा, भेद भिद्यमानस्येव व्यथा, संगः अवरोधः, अंग उन्मार्गगमनम्, अंगेर्गत्यर्थत्वात् । भंगो वक्रता, संकोचोऽप्रसार्यत्व वर्तः पिंडितत्वं, हर्षणं कंटकितत्वं, तर्षणं पिपासा, कंप श्चलनं, पारुष्यं रूक्षत्वं, सौषिर्यं सरंध्रत्वं, शोषः शुष्कत्वं स्पंदनं स्फुरणं, वेष्टनं वलनं, स्तंभः निष्क्रियत्वं, कषाय रसता—रसांतरेऽपि कषायग्रहणं, श्यावः कपिशः, अरु ईषद्रक्तः, स्रंसादीनि कुपितवायोः कर्माणि ॥ ४३ ॥

अथ पित्तस्याह—

**पित्तस्य दाहरागोष्मपाकिताः स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्च्छनं मदः कटुकाम्लौ रसौ वर्णः पांडुरारुणवर्जितः॥४४॥**

स०–दाहादीनि पित्तस्य कर्माणि । सर्वांगीण संतापो दाहः । रागो लौहित्यम् । ऊष्मा औष्ण्यम् पाकिता पाककर्तृत्वमजीर्णेष्वन्ने च । स्वेदनं स्वेदः।क्लेद शोणितादिषु विकारः । स्रुतिः स्रावः । कोथः क्लेदस्यातिशयेऽस्याऽविच्छिन्नत्वम् । सदनं सादः । मूर्च्छा भ्रमः । मदो वक्ष्यमाणो रोगविशेषः । रसास्वादे कटुकाम्लौ । वर्णः पांडुरारुणाभ्यामन्यः । शुक्ललोहित वर्णनिषेधेन तच्छेषनानावर्णसंभवः सूच्यते ॥ ४४ ॥

प०–पित्तस्य दुष्टस्य दाहादीनि कर्माणि भवन्ति यः सर्वाङ्गभवस्तीव्रश्च दाहः स सामान्यदाहशब्दवाच्यः । रागो लौहित्यमङ्गादेः । ऊष्मा–सन्तापोऽङ्गानामवयवानाम् । पाकोऽन्नपाकोऽङ्गैकदेशानाम् । स्वेदः स्विन्नता आर्द्रभावो देहस्य । स्रुतिः स्रावः, कोथः पूत्यादीनां कोथपूतिभावः । सदनं विशरणं गात्रावयवानां शातनम् । मूर्छनं मोहो विचेतनत्वम् । मदो व्याधिः मदात्ययनिदाने वक्ष्यमाणः । रसौ द्वौ कटुकश्चाम्लश्च मुखस्थौ भवेताम् । वर्णः शरीरे पाण्डुरारुण्यवर्जितोऽन्यः सर्वो नीलपीतभेदभिन्न उपलभ्यते ॥ ४४ ॥

हे०–पित्तरोगाणां लक्षणमाह—दाहः संतापः, रागं रंजनं वर्णांतरोपमर्देन स्ववर्णापादनम्, ऊष्मा उष्णत्वं पाकिता पक्वत्वं, स्वेदो धर्मः, क्लेदो मलार्द्रत्वं, स्रुति स्रावः, कोथः कुथितत्वं, सदनं सादः, मूर्छनं मोहः

गतो मद्यादिभिरिव मत्तता, कटुकस्तिक्तः, "कषाय-तिक्तमधुरं वातादिषु मुखं क्रमात्" इति वचनात् ॥४४॥

श्लेष्मकर्माण्याह—

**श्लेष्मणः स्नेहकाठिन्यकंडूशीतत्वगौरवम् ।**
**बंधोपलेपस्तैमित्यशोफापक्त्यतिनिद्रताः ।**
**वर्णः श्वेतो रसौ स्वादुलवणौ चिरकारिता ।**
**इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् ।**
**दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ।**
**व्याध्यवस्थाविभागज्ञः पश्यन्नार्तान् प्रतिक्षणम् ।**

स०—कफस्य स्नेहादीनि कर्माणि । स्नेहः स्निग्ध्यम् । काठिन्यममृदुत्वम् । कंडूः खर्जूः । शीतत्वं शीतसद्भावः । गौरवं गुरुत्वम् । बंधः स्रोतसाम् । अस्थ्यादीनामुपलेपः । स्तैमित्यं गात्राणामपटुत्वम् । काये वर्णः शुक्लः । रसौ च मधुरपटू । चिरकारिता कार्यादौ विश्रब्धत्वम् । ननु वायोरमूर्तत्वाद्वर्णरसोपलब्धिरनुपपन्ना । अमूर्तस्य हि वर्णरसौ दूरोत्सारितौ । नैतदस्ति । न हि सर्वाणि कार्याणि कारणसदृशान्येव भवंति । यथा चेंद्रियेभ्यो जडेभ्यो बुद्धेरजडाया उत्पत्तिर्दृष्टा । तस्मात्कारणसदृशानि कार्याणीति प्रायिकमेतत् । अचिंत्यत्वाच्च द्रव्यप्रभावस्य वायोः सकाशात् कषायरसता श्यावारुणवर्णोत्पत्तिश्चाऽन्वयव्यतिरेकसिद्धा कथमिव निवार्यताम् । इत्येवं दोषाणां कर्माण्युपदिष्टानि । तद्विकाराश्च संग्रह उक्ताः । तथा च तद्ग्रंथः । अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजाः । विंशतिः श्लेष्मजाश्चैव स्थूला नानात्वजा मताः । नखभेदः पादशूलं सुप्तिभ्रंशो विपादिका । खुडो गुल्फग्रहो जानुविश्लेषो जानुकुंचनम् । पिंडिकोद्वेष्टनं सादश्चोर्वोः स्तंभश्च गृध्रसी । पांगुल्यं भ्रंशशूलं च गुदे स्तंभस्तु मेहने । मुष्काक्षेपः श्रोणिभेदो वंक्षणानाह एव च । उदावर्तोऽथ विड्भेदः पार्श्वपृष्ठत्रिकग्रहाः । खंजवामनकुब्जत्वं हृद्द्रवोदरवेष्टकौ । हन्मोहोवक्षनिस्तोदः शोषोद्घातौ तथोरसः । बाहुशोषो हनुग्रीवामन्यास्तंभौष्ठभेदनम् । दंतभेदोऽथ शैथिल्यं कंठध्वंसोऽथ वा ग्रहः । कषायास्यत्वमूकत्वे मुखशोषो रसाज्ञता । घ्राणानाहोऽज्ञता गंधे शब्द[illegible] तथा । बाधिर्यं कर्णशूलं च वर्त्मस्तंभ[illegible] तिमिरं चाऽक्षिशूलं च भ्रूव्युदासोऽथ नेत्रयोः शंखभेदौ च केशभ्रूस्फुटनं तथा । शिरो[illegible] जृंभा प्रलापो वेपथुर्भ्रमः । एकांगव्याधिराय[illegible] वातोऽपतंत्रकः । दंडकः स्वप्ननाशश्च ग्लानि[illegible] रूक्षता । विषादश्चाऽनवस्थानमरुणश्यामवर्ण[illegible] शीतिः समाख्याता रोगा वातसमुद्भवाः । विदाहश्च प्लोषोऽथ दवथुर्दवः । अत्यूष्मा[illegible] हश्च स्वेदोऽत्यम्लकधूमकौ । रक्तक्लेदोऽगगंध[illegible] वयवशातनम् । त्वङ्मांसदरणं मांसक्लेदश्चमेद[illegible] रक्तविस्फोटकः कोठः पित्तासृग्रक्तमंडले । कामला कक्षा गात्रे हरितपीतता । पूति[illegible] तृष्णा लोहगंधास्यता तथा । जीवादानमतृप्ति[illegible] शस्तमसस्तथा । गलास्यगुदमेढ्राक्षिपाको[illegible] तता । नखाक्षिमूत्रशकृतां चत्वारिंशत्तु । स्तैमित्यं गौरवं तृप्तिरालस्यमतिनिद्रता । तंद्र[illegible] माधुर्यं प्रलेपो हृदयस्य च । सादः कंठप्रलेपश्[illegible] द्गिरणमेव च । मलाधिक्यमतिस्थौल्यं वमनं[illegible] यम् । उदर्दो गलगंडश्च शैत्यं श्वेतावभासता । नखनेत्राणां शुक्लता च कफामयाः । यथास्थूलं [illegible] प्रसंख्यानमिदं स्मृतमिति । हृदादौ शूलवद्दाहो[illegible] दाहः स कीर्तितः । पाणिपादांसमूलेषु संतापो[illegible] घस्तु यः । अग्न्यर्चिषेव निःस्वेदो विदाहः स [illegible] ओषः सर्वांगिकस्तीव्रो दाहः स्वेदारतिप्रदः [illegible] श्चक्षुरादिभ्यस्तीव्र ऊष्मा प्रवर्तते । मुखे[illegible] दवश्चाम्लोद्गिरणमम्लकः । धूमायनं शिरोघ्राण[illegible] लुष्ठु धूमकः । प्रमीलकस्तु स्तैमित्यं गुरुतांऽगग[illegible] वम् । आहारानभिलाषस्तु तृप्तिः स्याद्विषया[illegible] निद्रार्तस्येव तंद्रा स्याच्छ्लेषाः प्रथितनामकाः । कर्माण्युपदिश्य निर्देशप्रयोजनमधिकृत्याह । इति दोषाणां लक्षणं दोषलक्षणं यथायथं लिंगम् पूर्वोक्तेन प्रकारेण यद्दोषलक्षणमुक्तं तद्दर्शनाद्यैः स[illegible] लक्षयेत् जानीयात् । वैद्य इति शेषः । द[illegible] रित्यादिशब्देन स्पर्शनप्रश्नौ गृह्येते । किंभूतं दो[illegible]

। अशेषाश्च त आमयाश्चाशेषामया तान् सर्वानाम-
् व्याप्नोति तदशेषामयव्यापि । किंभूतो वैद्यः ।
हितो दत्तावधानः । तथा व्याध्यवस्थाविभागज्ञः ।
धेरवस्थाः कालकृता दशास्तासां विभागः पृथक्त्वं
थमन्यस्य व्याधेरवस्थेयमन्यावस्थेत्यवस्थाभेदाच्चोपक्र-
दः । तथा ह्येकस्यैव ज्वरस्य नवस्याऽन्य उपक्रमो
स्याऽन्यस्तदेवं विभागं यो जानाति स व्याध्यवस्था-
ागज्ञः । तथाऽऽर्तान् व्याधितान् प्रतिक्षणं मुहूर्ते
ि पश्यन्नालोकयन् ॥ ४९ ॥

च०—श्लेष्मणो दुष्टस्य स्नेहकाठिन्यादीनि
णि भवन्ति । अत्र स्नेहः स्निग्धता
ादिषु । काठिन्यं कठिनत्वमङ्गावयवानाम् ।
त्वं शीतता । अङ्गस्य गौरवं गुरुत्वम् । धातू-
बन्धः स्रोतसामावृत्तिः । उपलेप इवोपलेपः ।
मणः प्रदेहो मुखकण्ठादीनां शरीरावयवानाम् ।
मेत्यं विपयेष्वप्रचुरता । प्रमीलकमित्यन्यैः पठि-
। शोफः श्वयथुः । अपक्तिरग्न्यपाटवम् । शरी-
र्णः शुक्लः श्वेतः । रसौ द्वौ स्वादुलवणौ मुखे
तः । चिरकारिता व्याधेश्चिरेण निवृत्तिः । मर-
वाच्चिरेण करोति । इतिशब्दः परिसमाप्तिवचनः।
ारार्थे चापरिसमाप्तौ । दोषाणां यथास्वं चिह्नं
दोषा लक्ष्यन्ते । किंभूतम् । यदशेषामयव्यापि
लामयव्यापि शीलं यस्य तत्तथा । दोषलक्षणमेत-
क्तमशेषामयव्यापि तद्दोषलक्षणं दर्शनाद्यैर्दर्शन-
लिप्रश्नैरवहितो यत्नपरो दत्तावधानो नान्य-
ा वैद्यः सम्यगुपलक्षयेज्जानीयात् । तत्र दर्शनेन
स्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्द्यादिकमुप-
येत् । आदिग्रहणात् श्रोत्रेणान्त्रकूजनमङ्गुल्या-
न्धिस्फुटनं लक्षयेत् । घ्राणेन देहशकृद्व्रणादि-
ं लक्षयेत् । स्पर्शेन शीतोष्णस्तब्धस्पन्दश्लक्ष्ण-
स्पर्शांश्च लक्षयेत् । अस्य रसं प्रश्नेन लक्षयेत् ।
ा सुच्छन्ददुश्छन्दत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शन-
नप्रायं जन्मामये प्रवृत्तिनक्षत्राद्विष्टेष्टसुखदुःखा-
च्चेति निदर्शनमात्रमेतद्विज्ञेयम् । तथाऽनुमाने-
पे लक्षयेत् । यूकापसर्पणेन शरीरवैरस्यं, मक्षि-
पसर्पणेन माधुर्यं तथाग्निर्जरणशक्त्या बलं व्याया-
ाक्त्या गूढलिङ्गव्याधिमुपशयानुपशयतः दोष-

प्रमाणमपचारं विशेषेणायुःक्षयं रिष्टैः प्रकृतिसत्त्वसार-
साम्यबलान्यनुशीलनेनेति । तथाचोक्तं चरकमुनिना-
"ज्ञानबुद्धिप्रदीपेन यो नाविशति योगवित् । आतु-
रस्यान्तरात्मानं न स रोगांश्चिकित्सति" किमेवमेव
यः कश्चिद्वैद्यः सततं लक्षयेत् न सर्वः कश्चित् किंत-
र्हि यः व्याधेरवस्थाकालकृतास्तास्ता दशास्तासां वि-
भागः पृथक्त्वं यथेयमन्यस्य व्याधेरवस्थेयमन्येत्यव-
स्थाभेदाच्चोपक्रमभेदः । येनैकस्यैव ज्वरस्यान्याव-
स्थान्य उपक्रमो जीर्णस्यान्यस्तं विभागं यो जानाति
स व्याध्यवस्थाविभागज्ञः । पश्यन्नवलोकयन् प्रति-
क्षणं प्रत्यवसरं पुनरनवरतमेव यावत् । एवं वैद्यो
व्याध्यवस्थाविभागज्ञः तथा व्याधितान् प्रति-
क्षणं पश्यति ॥ ४५ ॥

हे०—श्लेष्मरोगाणां लक्षणमाह—स्नेहः स्निग्धं, बंधः
संश्लेषः, उपलेपो लिप्तत्वं, स्तैमित्यमालस्यं, शोफः श्वयथुः,
अपक्तिरपाकः, चिरकारिता चिरेण रोगवृद्धिः । **संग्रहे**
तु अथ कुपिता वातादयो नानाविधैर्विकारैः शरीरमुपताप-
यन्ति । विकृततमास्तु वायोरशीतिर्विकाराः । चत्वारिंश-
त्पित्तस्य । विंशतिः श्लेष्मणः । तत्र वातविकारास्तद्यथा—
नखभेदो, विपादिका, पादशूलं, पादभ्रंशः, सुप्तपादता,
वातखुडता, गुल्फग्रहः, पिंडिकोद्वेष्टनं, गृध्रसी, जानुभेदो
जानुविश्लेषः, ऊरुसादः, उरस्तंभः, पंगुत्वं, गुदभ्रंशो,
गुदार्तिर्वृषणाक्षेपो, मेढ्रस्तंभो, वंक्षणानाहः, श्रोणीभेदो,
विड्भेद, उदावर्तः, खंजत्वं, कुब्जत्वं, वामनत्वं, त्रिक-
ग्रहः, पृष्ठग्रहः, पार्श्वावमर्दनम् , उदरावेष्टो, हृन्मोहो,
हृद्द्रवो, वक्षउद्धर्षो, वक्षउपरोधः, वक्षस्तोदो, बाहुशोषो,
ग्रीवास्तम्भो, मन्यास्तम्भः, कण्ठध्वंसो, हनुताडनम्,
ओष्ठभेदो, दन्तभेदो, दन्तशैथिल्यं, मूकत्वं, वाक्संगः,
प्रलापः, कषायास्यता, मुखशोषो, रसाज्ञत्वं, गन्धाज्ञत्वं,
घ्राणनाशः, कर्णशूलम् अशब्दश्रुतिः, उच्चैश्रुतिर्बाधिर्यः,
वर्त्मस्तम्भो वर्त्मसंकोचः, तिमिरम् अक्षिशूलमक्षिव्युदा-
सो, भ्रूव्युदासः, शंखभेदो, ललाटभेदः, शिरोरुक्, केश-
भूमिस्फुटनम्, अर्दितमेकांगरोगः, पक्षवध, आक्षेपको,
दण्डकः, श्रमो, भ्रमो, वेपथुर्जृंभा, ग्लानिर्विषादोऽति-
प्रलापो, रौक्ष्यं, पारुष्यं, श्यावारुणावभासत्वमस्वप्नोऽ-
नवस्थितता च । पित्तविकाराः-पुनरोषः प्लोषो, दवो
दवथुः, विदाहः, सदाहस्त्वग्दाहोऽतर्दाहः, धूमकोऽम्लक,
ऊष्माधिक्यमतिस्वेदोऽगगंधोऽगावयवशरणं, शोणित-
क्लेदो, मांसक्लेदस्त्वङ्मांसदरणं, चर्मदरणं, रक्तकोठो,

रक्तविस्फोटा, रक्तमण्डलानि, रक्तपित्तं, हरितत्वं, हारिद्रत्वं, नीलिकाश्च, कामला, तिक्तास्यता लोहितगन्धास्यता, पूतिमुखत्वं, तृषाधिक्यमतृप्तिरास्यपाकोऽक्षिपाकः, पायुपाको, मेढ्रपाको, जीवादानं, तमःप्रवेशो, हरितहारिद्रनेत्रमूत्रशकृत्त्वं च । श्लेष्मविकारास्तु-तृप्तिस्तंद्रा निद्राधिक्यं, स्तैमित्यं, गुरुगात्रता, आलस्यं, मुखमाधुर्यं प्रसेकः, श्लेष्मोद्गिरणं, मलाधिक्यं, बलासो, हृदये लेपः, कंठलेपो,धमनीप्रतिचयो, गलगण्डोऽतिस्थौल्यं, शीताग्नित्वम्, उदर्दः,श्वेतावभासता,श्वेतनेत्रमूत्रशकृत्त्वं च । तत्र सर्वांगीणस्तीव्रो दाहः स्वेदारतिमानोषः, प्रादोशिकः, स्वेदरहितः अग्न्यर्चिषेव दाहः प्लोषः, मुखोष्ठताल्वादि दाहो दवः, चक्षुरादीष्विन्द्रियेषु दाहो दवथुः, पाणिपादांसमूलेषु विविधः सन्तापो विदाहः, कोष्ठदाहोंऽतर्दाहः कोष्ठस्यांतर्मार्गसंग्रहात् । शिरोग्रीवाघ्राणकण्ठताल्वधूमायनं धूमकः, सान्तर्दाहहृदयशूलोऽम्लोद्गारोऽम्लकः, शोणितस्य कृष्णता, दौर्गंध्यतनुत्वादिक्लेदो, मांसस्य, तु कृष्णता, दौर्गन्ध्यं च । बाह्यत्वक्संहतिश्चर्म कोष्ठगौरवादाहाराऽस्पृहातृप्तिः । अन्ये पुनराहुः—अन्नानभिनन्दनात्तृप्तिरिव तृप्तिररोचकः निद्रार्तस्येव विषयाग्रहणं तन्द्रा, स्तैमित्यं तु प्रमीलकः, इत्यन्यैः पठितम् । उपलेप इव उपलेपः, तदतिशयः,प्रतिचयोऽतिपूरणम्,अग्नेरातिमन्दता शैत्यम्, उरोऽभिष्यन्द उदर्दः । केषांचिच्छीतवेपथुः उदर्दः अन्ये पुनराहुः—"शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः । सरागकण्डूः शोफः स्यादुदर्दः सकफोद्भवः" इति । महाविकारास्तु यथा स्वयमेवोपदिश्यन्ते, क्षुद्रविकाराः पुनर्यदेवां गमाविशन्ति तदुपपदमेव नाम लभन्ते । यथा-नखशंखललाटभेदाः स्वांतर्दाहकण्ठहृदयोपलेपादयः । तेषां हि तथैव स्वरूपमुपदिष्टं भवतीति । लक्षणज्ञाने सावधानेन भवितव्यमाह-दर्शनस्पर्शनप्रश्नैरवस्थाविभागशः यथा-आमज्वरो जीर्णज्वरः पच्यमानज्वर इति ॥ ४५ ॥

किमिति पुनः पुनर्व्याधितदर्शनं क्रियत इत्याह—

**अभ्यासात्प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी ।**
**रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ४६ ॥**

स०—अभ्यासान्मुहुर्मुहुश्चिकित्सितकर्मणि प्रवर्तनाद्दृष्टिर्दर्शनं चिकित्साविज्ञानं जायते न केवलाच्चिकित्साशास्त्रावगमात् । किंभूता दृष्टिः । कर्मणि सिद्धिस्तां प्रकाशयितुं शीलं यस्याः सा कर्मसिद्धिप्रकाशिनी । अत्र दृष्टांतमाह । रत्नादीत्यादि । आदिशब्देन सुवर्णहिरण्यादीनां ग्रहणम् । तेषां यत्सदसज्ज्ञानमिदं शोभनमिदं न शोभनमित्यवगमस्तन्न शास्त्रादेव जायते किंतर्ह्यभ्यासाच्च । एवकारोऽवधारणार्थः । न शास्त्रावबोधान्न च केवलादभ्यासादित्येवकारेण बोधयति । किल यथा रत्नपरीक्षा तच्छास्त्रावबोधदर्शनाभ्यां सम्यग्जायते तथैव चिकित्साशास्त्रावबोधान्नित्यं नित्यमातुरदर्शनाच्चाऽवगम्यत इत्यर्थः ॥ ४६ ॥

प०—तस्य कर्मण्यभ्यासो जायते जायत एव तमाह—अभ्यासात् पुनः पुनः चिकित्साकर्मनिवर्तनात् दृष्टिः दर्शनं चिकित्साविज्ञानं जायते न केवलाच्चिकित्साशास्त्रावबोधात् किंभूता दृष्टिः कर्मसिद्धिप्रकाशिनी । कर्मणः सिद्धिस्तस्या दीपिका प्रकाशिनी । तथा निदर्शनम् । रत्नादीनां मरकतप्रभृतीनां यदेतत् सदसज्ज्ञानमिदं शोभनं रत्नमिदं नेत्यस्यार्थस्य योऽवबोधस्तस्याभ्यासः प्रबोधनकारणम्।यद्यप्यत्र परीक्षाशास्त्रं विद्यते तथापि न तदवबोधमात्रात् केवलादभ्यासं विना बहुशो रत्नदर्शनं विनैव निश्चय उत्पद्यते । इदं रत्नमिदं नेति । एवं यः चिकित्साशास्त्रमवबुध्यते तस्याभ्यस्तकर्मा वैद्यः स व्याधिप्रशमान् कुर्वन् प्राणिनां प्राणानां दाता न केवलात् शास्त्रावबोधोत्कर्षात् अभ्यासरहितान्नापि केवलादभ्यासात् शास्त्रावबोधरहितात् । अत एवकारोऽवधारणार्थो न शास्त्रादेव ज्ञायत इति कृतम् ॥ ४६ ॥

हे०—लक्षणदर्शनाभ्यासो लक्षणज्ञाने सहकारीत्याह४६

**दृष्टापचारजः कश्चित्कश्चित्पूर्वापराधजः ।**
**तत्संकराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः४७॥**

स०—दृष्टश्चासावपचारश्च तस्माज्जातो दृष्टापचारजः। अपचारो व्याधिहेतुः । ऐहिकलौकिकाद्याधिकारणाज्जातो दृष्टापचारजः । कश्चिदात्मकृतात्पूर्वापराधादशुभकर्माख्याज्जातः पूर्वापराधजः । अपरः कश्चित्तत्संकराद्भवति । तयोः संकरस्तत्संकरो मिश्रत्वं तस्मात् । न केवलात्पूर्वापराधान्न च केवलाद्दृष्टापराधादपि तु द्वयोः

१. यथात्वमेवेति खपुस्तके ।

संसर्गाज्जात इत्यर्थः । एवमनेन प्रकारेण व्याधिस्त्रिधा त्रिप्रकारः स्मृतः ॥ ४७ ॥

प०—दृष्टश्चासावपचारो दृष्टापचारः । व्याधिकारणमपचार इत्युच्यते । इह लौकिकाद्व्याधिकारणाज्जातो व्याधिः दृष्टापचारजः । तथा कश्चित् पूर्वापराधजः आत्मकृतात् पूर्वापराधाच्च यो जातः सोऽन्यस्तृतीयः सम्भवति । एवं त्रिधा त्रिप्रकारो व्याधिर्बोद्धव्यः ॥ ४७ ॥

हे०—व्याधिभेदानाह-दृष्टकर्मजः, अदृष्टकर्मजः, दृष्टादृष्टकर्मज इति त्रिविधो व्याधिः ॥४७ ॥

अथ त्रिप्रकारव्याधिलक्षणार्थमाह—

**यथानिदानं दोषोत्थः कर्मजो हेतुभिर्विना ।**
**महारंभोऽल्पके हेतावातंको दोषकर्मजः ॥४८॥**

स०—यथानिदानं दोषोत्थ इति । यद्यस्य दोषस्य वातादेर्लघुरूक्षादि निदानं तेन कुपिता दोषास्तेभ्य उत्थितो व्याधिः स दोषोत्थो ज्ञेयः । यो दृष्टापचारज इत्युक्त इत्यर्थः । हेतुभिर्वातादिनिदानैर्लघुरूक्षादिभिर्विना यो भवति स कर्मजः । यस्त्वल्पे निदाने सेविते महारंभः स्यात् स कर्मदोषजो रोगो ज्ञेयः । महानारंभो यस्य सः । पूर्वरूपरूपैर्बलवद्भिर्युक्त इत्यर्थः ॥ ४८ ॥

प०—तेषां यथाक्रमं लक्षणमधिकृत्याह—य एव दृष्टापचारजो वातपित्तश्लेष्मसमुत्थः स यथानिदानदोपोक्तो बोद्धव्यः । निदानानतिक्रमेण यस्य दोपस्य कोपे यन्निदानमुक्तं तन्निदानमेव नान्यत असौ व्याधिस्तद्दोप एव जायते नान्यदोषः स दृष्टापचारजः । इत्येवं व्याधिर्निश्चेतव्यः । अन्यथा यथानिदानं विनावश्यं येन यन केनाचिद्दोषेण जातः कर्मण एव नूनं व्याधिरिति व्यवस्येत्तं यथानिदानं दोषेण नोत्पन्नत्वात् । यो व्याधिरल्पके हेतावासेविते सति महारम्भो दृश्यते स यथानिदानं दोषोत्पन्नोऽप्यातङ्को दोषकर्मत एव नूनमिति निश्चयात् ॥ ४८ ॥

हे०—त्रयाणां लक्षणमाह-यथानिदानं स्वहेत्वनतिक्रमेण दोषोत्थो दृष्टजः, हेतुभिर्विना जातः कर्मजोऽदृष्टजः, हेतुविपरीतशीलनात् पूर्वापराधजः । अल्पहेतौ महारम्भस्तत्रिसंरम्भो दोषकर्मजः, दोषक्षोभपूर्वकत्वात् दृष्टजस्य दोषजत्वं, तद्विपरीतत्वाददृष्टजस्य कर्मजत्वम् । वक्ष्यति हि ते ज्वराः केवलाः पूर्वं व्याप्यन्तेऽनन्तरं मलैरिति॥४८।

अथ त्रिविधस्याऽपि व्याधेश्चिकित्सामाह—

**विपक्षशीलनात्पूर्वः कर्मजः कर्मसंक्षयात् ।**
**गच्छत्युभयजन्मा तु दोषकर्मक्षयात्क्षयम् ४९ ।**

स०--विपक्षशीलनात्पूर्व इति । पूर्वः पूर्वमुक्तो य केवलं दोषजो व्याधिः स विपक्षशीलनात् यथोक्तविपक्षादिसेवनात्क्षयं याति । कर्मजो रोगः कर्मसंक्षयात्क्षयं याति । उभयजन्मा दोषकर्मोत्थो दोषकर्मणोरुभयोरपि क्षयात्क्षयं याति ॥ ४९ ॥

प०—साम्प्रतमस्य त्रिविधस्य चिकित्सामाह—पूर्वं पठितत्वात् पूर्वो यः केवलदोषजो यथोक्तवातादिप्रतिपक्षासेवनाद्गच्छति क्षयमित्यक्षरयोजनात् । कर्मजः कर्मसंक्षयादेव क्षयं गच्छति । उभयजन्मा पुनर्दोषकर्मसमुत्थित आतङ्कस्तयोर्दोषकर्मणोः क्षयाद्विनाशात् क्षयं गच्छति ॥ ४९ ॥

हे०—विपक्षशीलनात् ॥ ४९ ॥

व्याधीनां त्रैविध्यमाख्याय द्वैविध्यं दर्शयितुमाह—

**द्विधा स्वपरतंत्रत्वाद्व्याधयः ॥ ५० ॥**

स०—स्वतंत्रश्च परतंत्रश्च स्वतंत्रपरतंत्रौ तयोर्भाव स्वतंत्रपरतंत्रत्वं तस्माद्धेतोर्द्विधा व्याधयः । एके स्वतंत्रा अन्ये परतंत्रा इत्यर्थः ॥ ५० ॥

प०—एवं तावद्व्याधीनां त्रैविध्यं दर्शयित्वा पुनरपि द्विविधभेदमधिकृत्याह—भवन्तीति वाक्यशेषः व्याधयो द्विधा—स्वतन्त्रपरतन्त्रत्वप्रकाराभ्याम् तत्र स्वतन्त्राः स्वप्रधानाः स्वबंधना इत्येकोऽर्थः परतन्त्रा अन्यपरिवारा अप्राधान्या अनुबन्धाख्य इत्यनर्थान्तरम् ॥ ५० ॥

हे०—त्रयाणां पृथक्द्वैविध्यमाह—द्विधा इति ॥ ५० ।

**अंत्याः पुनर्द्विधा ॥ ५१ ।**

स०—अंते भवा अंत्याः परतंत्रास्ते पुनर्भूयो द्विधा ॥ ५१ ॥

प०—अन्त्याः परतन्त्रा अन्ते निर्दिष्टास्तत्र भव अन्त्याः । अन्यपरिवारास्ते पुनर्द्विधा द्विप्रकाराः॥५१।

तदेव द्वैविध्यं दर्शयितुमाह—

**पूर्वजाः पूर्वरूपाख्या जाताः पश्चादुपद्रवाः ५२ ।**

स०—पूर्वं जाताः पूर्वजाः । अन्येष्वपि दृश्यत इति डः । पूर्वजाः पूर्वरूपसंज्ञा रोगाः । ये च पश्चाज्जाता गदास्ते व्याधीनामुपद्रवा इत्थं ते द्विविधाः ॥ ५२ ॥

**प०—एके पूर्वं जायन्ते अपरे पश्चाज्जायन्ते । ये पूर्वजाः पुरोगामिनस्ते पूर्वरूपाख्या व्याधयो व्याधीनामुच्यन्ते । ये पश्चाज्जाता अनुगामिनो व्याधयस्ते व्याधीनामुपद्रवसंज्ञाः ॥ ५२ ॥**

हे०—तौ स्वतन्त्रात्पूर्वं पश्चात्क्रमेण जायेते ॥ ५२ ॥

संप्रति स्वतंत्रं लक्षयति—

**यथास्वजन्मोपशयाः स्वतंत्राः स्पष्टलक्षणाः ५३**

स०—जन्म चोपशयश्च जन्मोपशयौ । जन्मोत्पत्तरुपशयः सुखानुबंधः । यो यः स्वं यथास्वम् । यस्य ज्वरादेर्यावात्मीयौ शास्त्रनिर्दिष्टौ तौ यथास्वशब्देन सूच्येते । यथास्वं जन्मोपशयौ येषां ते यथास्वजन्मोपशया व्याधयः स्वतंत्रा उच्यंते । चिकित्सागुरुलाघवप्रतिपत्त्यर्थं च स्वतंत्रादिसंज्ञाकरणम् । स्वग्रहणाद्येऽन्यजन्मनि जायंतेऽन्यस्य च व्याधेर्येत उपशयः सुखानुबंधस्तत एतत्परिवारस्याऽपि । ते तु न स्वतंत्राः । तथा चोक्तम् । पूर्वरूपरूपादिक्रमेण ज्वरादावुत्पन्ने तत्परिवारा ये श्वासादय उत्पद्यंते तदुपशये चोपशेरते न ते स्वतंत्राः । ज्वरादय एव मूलव्याधिरूपत्वात्स्वतंत्रा इत्युच्यंत इति ॥ ५३ ॥

**प०—स्फुटाकृतयो मूलव्याधयस्ते यथास्वजन्मोपशयाः यथास्वसमुत्थाना यथास्वोपशयाश्च यथास्वं जन्म तथोपशयोऽपि सुखानुबन्धो येषान्ते यथास्वजन्मोपशयाः तथा स्पष्टलक्षणाश्च स्पष्टं स्फुटं व्यक्तं लक्षणं यथास्वं येषान्ते स्पष्टलक्षणाः स्वतन्त्राः स्वाधीनजन्मोपशयलक्षणत्वादुच्यन्ते ॥ ५३ ॥**

हे०—यस्य स्वेन हेतुना जन्म स्वेनोपशमः स्पष्टं च लिंगं स स्वतंत्रः ॥ ५३ ॥

**विपरीतास्ततोऽन्ये तु ॥ ५४ ॥**

स०—स्वतंत्रेभ्यो रोगेभ्यो येऽन्ये परतंत्राः पूर्वरूपाख्यास्तथोपद्रवसंज्ञाश्च ते विपरीता विपरीतस्वरूपा न यथास्वजन्मोपशया न च स्पष्टलक्षणाः ५४ ।

**प०—अन्ये ये पूर्वरूपाख्यास्तथोपद्रवसंज्ञाश्च व्याधयस्ते ततः स्वतन्त्रेभ्यो व्याधिभ्यो विपरीता विपरीतस्वरूपा न यथा स्वजन्मोपशयस्पष्टलक्षणाः पराधीनत्वात्परतन्त्रा उच्यन्ते ॥ ५४ ॥**

एवं व्याधीनां स्वतंत्रपरतंत्रत्वं प्रतिपाद्य दोषाण प्रतिपादयन्नाह—

**विद्यादेवं मलानपि ॥ ५५ ॥**

स०—न केवलं रोगान् स्वतंत्रपरतंत्रभेदैर्विद्याद्वैद्यो यावन्मलान् दोषानपि वातादीनेवं स्वतंत्रपरतंत्रभेदैर्जानीयात् ॥ ५५ ॥

**प०—किं व्याधय एव स्वतन्त्रपरतन्त्रभेदभिन्ना यथास्वलक्षणे मार्गेणोद्दिष्टेन ज्ञातव्या उतान्येऽप्यत आह—न केवलं व्याधीनेव स्वतन्त्रपरतन्त्रभेदेन जानीयाद्यावन्मलानपि वातपित्तश्लेष्मणः ॥ ५५ ।**

हे०—व्याधिवद्दोषानपि स्वतंत्रपरतंत्रान्विद्यात् ॥५५।

**ताँल्लक्षयेदवहितो विकुर्वाणान् प्रतिज्वरम् ५६**

स०—तान् वातपित्तकफान् यथास्वजन्मोपशयलक्षणावच्छिन्नस्वरूपान् प्रतिज्वरं प्रतिविकारं विकुर्वाणान् विकृतिं कोपं गच्छतो जानीयात् वैद्य इति शेषः कीदृक् । अवहितो दत्तचित्तः ॥ ५६ ॥

**प०—तान् लक्षयेत् जानीयात् । भिषग्वरं यथास्वजन्मोपशयलक्षणावच्छिन्नस्वरूपान स्वतन्त्राणां व्याधीनां यथास्वजन्मलक्षणानुरूपेण भेषजादिना सुखानुबन्धस्तल्लक्षणार्थमुक्तत्वाऽतः स एव तस्योपशमः ॥ ५६ ॥**

हे०—तांश्च प्रतिरोगं लक्षयेत् । कोऽत्र स्वतंत्रः कः परतंत्र इति ॥ ५६ ॥

एवं स्वतंत्राणां व्याधीनां यथास्वोपशय एव भेषजमुक्तम् । परतंत्राणां व्याधीनां कः प्रशमोपाय इत्याह—

**तेषां प्रधानप्रशमे प्रशमोऽशाम्यतस्तथा ।**
**पश्चाच्चिकित्सेत्तूर्णं वा बलवंतमुपद्रवम् ॥ ५७ ॥**

स०—तेषां परतंत्राणां रोगाणामप्रधानानां प्रधानप्रशमे स्वतंत्रव्याधिप्रशमे शमो भवति । न तु तेषां पृथगुपक्रमो विधेय इत्यर्थः । अशाम्यतस्तथा शममगच्छतः परतंत्रान् व्याधीन् दोषान् वा तथा तेन प्रकारेण प्रधानचिकित्सालक्षणेन पश्चात् प्रधानचिकित्सात उत्तरकालं चिकित्सेत् । अचिकित्स्यमानो ह्यसाध्यतां यायात् । तूर्णं वेति । उपद्रवश्चेद्बलवान् स्यात्तदा तमेवोपद्रवं तूर्णमेव चिकित्सेन्न पश्चात् ॥५७ ॥

प०—परतन्त्राणां व्याधीनां कः प्रशमोपाय इत्याह—तेषां परतन्त्राणां व्याधीनां प्रधानप्रशमे स्वतन्त्रव्याधिशान्त्यै प्रशमो जायते न पृथक्-चिकित्सायाः। कदाचित् प्रधानव्याध्युपक्रमेऽप्यप्रधानानामस्वतन्त्राणामुपशमो जायते तदा परतन्त्रानपि व्याधीन् शाम्यतः पश्चाच्चिकित्सेदेव नोपेक्ष्यास्ते साध्याशङ्क्यत्वात् । यत एते स्वतन्त्रव्याध्युपशमेन प्रशान्ताः । उत वा परतन्त्रो व्याधिरुपद्रवो बलवान् भवेत्तदा तं व्याधिमुपद्रवसंज्ञं बलवन्तं तूर्णमेव शीघ्रमेवादावेव चिकित्सेन्न पश्चादित्यर्थः ॥ ५७ ॥

हे०—तेषां परतंत्राणां स्वतंत्रप्रशमे प्रशमः तथा स्वतंत्रौषधेन येन शाम्यंति तान् पश्चात्स्वौषधेन चिकित्सेत् । यस्तु बलवानुपद्रवस्तं तूर्णं प्रागेव चिकित्सेत् ॥ ५७ ॥

ननु कुतोऽप्रधानं शीघ्रं चिकित्सेदित्याह—

**व्याधिक्लिष्टशरीरस्य पीडाकरतरो हि सः ५८।**

स०—हि यस्माद्व्याधिक्लिष्टशरीरस्य पुंसः सोऽतिशयेन पीडाकरः। प्रागुत्पन्नोऽपि रोगः पीडाकरः। उपद्रवश्च पश्चाज्जायमानो व्याधिक्लिष्टशरीरस्योत्पन्नत्वात्पीडाकरतरः। तदयमत्रार्थः। परतंत्रो व्याधिर्हीनबलः प्रधानोपक्रमेणैवोपशाम्याति। यस्तु परतंत्रः पश्चादुत्पद्यमानोऽपि स्वतंत्रव्याध्युपक्रमेण शामं न याति तं पश्चादुपक्रमेत्। यस्तु बलवान् परतंत्रस्तमादावेव चिकित्सेदतिपीडाकरत्वात् ॥ ५८ ॥

प०—हि यस्मादर्थे । यस्माद्व्याधिक्लिष्टशरीरस्य रोगक्षपितदेहस्य पुंसः स उपद्रवोऽतिशयेन पीडाकरतरः आदावुत्पन्नो व्याधिरुपद्रवः पश्चादुत्पद्यमानो व्याधिः क्लिष्टशरीरस्योत्पन्नत्वात् पीडाकरतरः प्रमेहपिडिकावत् । एवं परतन्त्रो व्याधिरप्रधानो हीनबलः स्वतन्त्रव्याध्युपक्रमे प्रशमं याति । बलवान् पुनः स्वतन्त्रो व्याधिः पश्चादुत्पद्यमान उपद्रवरूपः सन् स्वतन्त्रव्याध्युपशमे प्रशमं याति सोपक्रमं विना बलवत्वात् ॥ ५८ ॥

हे०—स हि स्वतंत्रेण हि पीडितस्य नरस्य स्वतंत्राद्दतिपीडकः । संग्रहे तु सप्तविधाः खलु रोगा भवंति । सह—गर्भ—जात—पीडा—काल—प्रभाव—स्वभावजाः । ते तु पृथग्विधाः । तत्र सहजाः शुक्रार्तवदोषान्वयाः । कुष्ठार्शोमेहादयः, पितृजा मातृजाश्च । गर्भजा जनन्यपचारात्कौब्ज्यपांगुल्यपैंगल्यकिलासादयो रसजाः, मातृदौहृदविमानजाश्च। जातजाः स्वापचारात् संतर्पणजाः, अपतर्पणजाश्च । पीडाकृताः क्षतभंगप्रहारक्रोधशोकभयादयः, शारीरा, मानसाश्च । कालजाः शीतादिकृता ज्वरादयः, व्यापन्नजा, असंस्करणरक्षणजाश्च । प्रभावजा देवगुरूल्लंघनशापाथर्वणादिकृताः ज्वरादयः, पिशाचादयश्च । स्वभावजाः क्षुत्पिपासाज्वरादयः कालजा, अकालजाश्च । त एते समासतः पुनर्द्विविधा भवंति । प्रत्युत्पन्नकर्मजाः, पूर्वकर्मजाश्च । तत्र रोगोत्पत्तिं प्रत्युत्पन्नं कर्म यदनेनैव शरीरेण दृष्टमदृष्टं चोपदिश्याप्तोपदिष्टप्रतिषिद्धानामननुष्ठानमनुष्ठानं वा । जन्मांतरातीतेन तु पूर्वं तत्पुनर्दैवाख्यमुक्तं नियतानियतभेदेन प्राक् तस्माद्दृष्टहेतवः प्रत्युत्पन्नकर्मजाः, विपरीता दैवजन्मानः। अल्पनिदाना महारुजश्चोभयात्मकाः। तत्र यथास्वं प्रतिपक्षशीलनात् पूर्वेषां रोगाणामुपशमः । सत्येव विपक्षशीलने निर्दिष्टकर्मक्षयाद्दैविकानां, दोषकर्मक्षयादन्येषाम् । अन्ये पुनः प्रत्युत्पन्नं कर्म परकृतमपि वर्णयंति । तच्च पराभिसंस्कारमाचक्षते । एवं चाहुः—यदि स्वयं कृतादेव कर्मणः कार्यनिर्वृत्तिः स्यान्न दृष्टं पुरुषांतरकृतात् किमिति विद्वानपि पराचरितयोरुपकारापकारयोः सुखदुःखानुरोधात्तोषरोषौ प्रतिकर्तव्यचित्तं वा प्रतिपद्यते । एवमेते व्याधयो द्विविधाः संतस्त्रिविधा जायंते । ततश्च दोषवंतो भूयः सप्तविधाः सकलोऽपि चायं रोगसमूहः प्रतीकारवान् आयुर्वेदविहितमुपदेशमपेक्षते । यस्मान्नियतहेतुकोऽप्यामयः सम्यग्भिषगादेशानुष्ठानादुपात्तायुषः संस्कारपरिक्षये सद्यवेदनतां प्रतिपद्यते । अनुपक्रम्यमाणस्तु सर्व एव प्रायशो भनक्त्यकांडे । स्वयमपि च दैवान्निदानाल्पतया वा निवर्त-

मानः षोडशगुणसमुदितक्रियोपालंभादाशुतरमपक्लिष्टस्य शमनच्छति । अनियतफलदायि तु दैवे हिताभ्यासरतस्याप्यकालमेव न लभते व्याधिः । तस्मान्न कस्यांचिदवस्थायामात्मवान् हिताहितयोस्तुल्यदर्शी स्यात् । त्रिविधाश्च पुनर्व्याधयो मृदुमध्यातिमात्रभेदेन। तत्राल्पलक्षणा मृदवो, मध्यलक्षणा मध्याः, संपूर्णलक्षणास्त्वतिमात्राः । ते पुनः सुखसाध्यादिविशेषेण चतुर्धा प्रागुपदिष्टाः । सुबहुशोऽपि च भिद्यमाना व्याधयो निजागंतुतां न व्यभिचरंति । तत्र निजास्त्रिदोषोत्थाः तेषु पूर्वं वातादयो वैषम्यमापद्यंते ततो व्यथाभिर्निवर्तते । बाह्यहेतुजा आगंतवः तेषु व्यथा पूर्वमुपजायते ततो दोषवैषम्यं दोषवैषम्येणैव च बहुरूपा रुगनुबध्यते, प्रवर्द्धते च । एवं च कृत्वा न दोषव्यतिरेकेण रोगानुबंधः, केवलं पौर्वापर्ये विशेषः । तस्मादेकाकारा एव रोगास्तथा रुक्सामान्यादसंख्या भेदा वा प्रत्येकं समुत्थानसंख्यानवर्णनमवेदनाप्रभावोपक्रमविशेषाद्यथास्थूलं यथास्वमेवोपदेक्ष्यते । असंख्येयत्वाच्च दोषलिंगैरेव दोषानुपक्रमं च विभजेदिति ॥ ५८ ॥

ननु येषां विकाराणां नामग्राहं चिकित्सा नोक्ता तेषां नामाकुशलो वैद्यः किं चिकित्सेन्नेत्याशंक्याह—

**विकारनामाकुशलो न जिह्रीयात्कदाचन ।**
**न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः॥**

स०—विकारा रोगास्तेषां नामानि तेष्वकुशलो वैद्यो न जातुचिज्जिह्रीयात् रोगसंज्ञाऽनभिज्ञोऽहमिति लज्जां न कुर्यात् । चिकित्सामेव विदध्यादित्यर्थः । कुतो हेतोरित्याह । नहीत्यादि । यस्मात्सर्वविकाराणां नामतः संज्ञातो ध्रुवा निश्चिता स्थितिः स्थानं नास्ति ॥ ५९ ॥

प०—एवं दोषलक्षणेषु व्यापदशेषामयव्यापिसर्वविकारान्नामतः शृङ्गग्राहिकयाऽप्युक्तम् । तथाच नाम च विना ये विकारा दृश्यन्ते तानपि चिकित्सेत् । यतो दोषं विना विकारासम्भवः विकारनामाकुशलो—व्याधिसंज्ञानभिज्ञो वैद्यो न जिह्रीयात् न लज्जां गच्छेत् । अहं विकाराणां संज्ञास्वनभिज्ञः यस्मान्न सर्वविकाराणां कृत्स्नानां व्याधीनां नामतः संज्ञातो ध्रुवा निश्चिता स्थितिरवस्थानं विद्यते ॥ ५९ ॥

हे०—शास्त्रेऽनुक्तं स्वयमूहनीयमित्याह—यो वातजादित्वं जानाति नाम न जानाति शास्त्रे[:] त्संकीर्णत्वाद्वा स न जिह्रीयाल्लज्जां न कुर्या[त्] नामाधीना सर्वत्र चिकित्सा वातजादिज्ञानं हि त्सायां प्रधानं कारणम् । अथ साधनम् । साधन लक्षणज्ञानाधीनम् ॥ ५९ ॥

ननु कुतोऽशेषरोगाणां नामतो नास्ति रित्याशंक्याह—

**स एव कुपितो दोषः समुत्थानविशेषतः**
**स्थानांतराणि च प्राप्य विकारान् कुरुते**

स०—यस्मात्स एक एव दोषो वाता[दि] समुत्थानविशेषतो हेतुभेदात् तथा स्थानांतरा[णि] स्थानं हित्वा पराणि स्थानानि प्राप्य गत्वा [वि]... बहूननंतान् कुरुते । तथा चोक्तं तंत्रांतरे । योऽ[नि]... रसंधीनाविशति तेन जृंभा ज्वरश्चोपजायते । ...माशयमभ्युपैति तेन रोगा भवंत्युरस्यरोचकश्[च] कंठमभिप्रपद्यते कंठस्ततो भ्रंशते स्वरश्चाऽवसी[दति] यः प्राणवहानि स्रोतांस्यन्वेति श्वासः प्रति[श्यायः] तेनोपजायत इति ॥ ६० ॥

प०—यस्मादेक एव दोषो वाताद्यन्यतमः [कु]पितः प्रदुष्टः समुत्थानविशेषात् निदानभेद[ात्] स्थानान्तराण्यन्यस्थानानि तानि प्राप्य स्[व] परित्यज्य परकीयानि तानि तानि स्थान[ान्या]क्रम्य गत्वा विकारान् व्याधीन् बहून् सं[...] कुरुते जनयति ॥ ६० ॥

हे०—तत्र लक्षणस्य दुर्बोधत्वमाह—स एव [...] लक्षितो बहून् विकारान् कुरुते येऽन्यत्र न दृष्ट[ाः] द्वौ हेतू समुत्थानविशेषात्कुपितत्वं, स्थानांतरप्राप्तिश्च मौनविशेषोऽन्यत्राहष्टं समुत्थानम् ॥ ६० ॥

**तस्माद्विकारप्रकृतीरधिष्ठानांतराणि च ।**
**बुद्ध्वा हेतुविशेषांश्च शीघ्रं कुर्यादुपक्रमम्**

स०—विकारस्य ज्वरादेः प्रकृतय उपादा[न]... णानि वातादिदोषास्ता विकारप्रकृती रोगहेतु... षान् बुद्ध्वा ज्ञात्वा तथाऽधिष्ठानांतराणि स्थानवि[शे]...

१ समुत्थानविशेष इति खपुस्तके ।

बुद्ध्वा तथा हेतुविशेषानधिष्ठाननिदानभेदांश्च बुद्ध्वा यथा किमयं कुपितः पवनो रूक्षेण हेतुना लघुना शीतेन चेत्यादि ज्ञात्वा शीघ्रमेवोपक्रमं चिकित्सां कुर्यान्न तु विकारानभिज्ञ इति न चिकित्सेत् ॥ ६१ ॥

प०—यत एवं व्याधेरसंख्यानतो विकारप्रभृतीन् व्याधिहेतून् वातादीन् विकारानुपक्रमं कुर्यात् । विकारानभिज्ञत्वाद्विकारान्नोपक्रमेत् । यद्यपि हेतुप्रकृत्योर्नार्थान्तरत्वं तथापि स्वालक्षण्यमनयोः प्रवृत्तिनिमित्तमवश्यं भिन्नं बोद्धव्यम्। प्रकर्षेण यया क्रियते विकारः सा तस्य प्रकृतिः वातादयः । रूक्षादि यत्तेषां कोपकारणम् । स हेतुर्न तद्रूक्षाधिकारस्य प्रकृतिरुच्यते । विप्रकृष्टकारणत्वात् ॥ ६१ ॥

हे०—तस्माद्विकारादित्रितयज्ञानपूर्वक उपक्रमः कार्यः स च शीघ्रम् अवस्थांतरोत्पत्तिभयात् । प्रकृतिः स्वभावोऽसाधारणं चिन्हम् ॥ ६१ ॥

ननु बुद्ध्वाऽपि विकारप्रकृत्यादित्रयमुपक्रमं कुर्वतः कदाचित्सिद्धिमाप्नुवंतो दृश्यंते भिषजः कदाचिन्नेति तदत्र संशयस्खलिते कर्मणि कथं नियुज्यते वैद्य इति कथमुक्तं शीघ्रं कुर्यादुपक्रममित्याशंक्याह—

**दूष्यं देशं बलं कालमनलं प्रकृतिं वयः ।**
**सत्त्वं सात्म्यं तथाऽऽहारमवस्थाश्च पृथग्विधाः ॥**
**सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे ।**
**यो वर्तते चिकित्सायां न स स्खलति जातुचित् ।**

स०—दोषौषधनिरूपणे सति दूष्यादीन् दश समीक्ष्य सम्यग्विलोक्य यश्चिकित्सायां वर्तते यत्नं करोति स वैद्यो न कदाचित् स्खलति नाऽपराधी स्यात्। दोषो वातादिः । औषधं हरीतक्यादि । तयोर्निरूपणं पर्यालोचनं तस्मिन् दोषौषधनिरूपणे । दूष्यादीनां समस्तानामुपादानं सर्वेषामेवावगमे चिकित्साकरणं प्रति यत्नातिशयद्योतनार्थं न पुनरेषां द्वौ वा त्रीन् वा चतुरः पंच वा समीक्ष्य किंतर्हि सर्वानेतान् सम्यगवबुध्येति । अथ दूष्यादीनेव समीक्ष्य नेत्याह । अवस्थाश्च पृथग्विधाः । एषामेव दूष्यादीनामवस्थाः सूक्ष्मसूक्ष्मा अतिशयेन सूक्ष्मास्ताश्च यथावद् बुद्ध्वेति ॥ ६२ ॥

प०—तत् किमेतावन्मात्रानुष्ठानात् वैद्य उपक्रमं कुर्वन्नापराधवान् भवतीत्यतः किञ्चिदन्यदप्यवेक्ष्यं तान्याह—असमासकरणाद्दूष्यादीन् पृथक् स्वतन्त्रान् समस्तान् समीक्ष्य यथावत् बुद्ध्वा तथा तेषामपि दूष्यादीनां तास्ताः सूक्ष्मसूक्ष्मा अतिशयेन सूक्ष्मा दुर्लक्षा अवस्थाः समीक्ष्य दोषौषधानां निरूपणे पर्यालोचने निश्चयीकरणे सति यो वर्तते तिष्ठति चिकित्सायां यत्नं करोति स वैद्यो न कदाचित् तत्र चिकित्सायामौषधप्रयोगे स्खलति नापराधवान् भवति। दृष्टमर्थं सम्पादयतीत्यर्थः । तद्विषये तस्य विषये तस्य विपत्तिर्न भवेत् । तत्र दूष्या धातवो मलाश्च । देशो भूमिः । देशो देहदेशश्च । स च जाङ्गलानूपसाधारणभेदभिन्नः । बलं त्रिविधं सहजं, कालकृतं, युक्तिकृतं च । कालस्त्रिविधः—शीतोष्णवर्षालक्षणः । अग्निश्चतुर्विधः । समः, विषमः, तीक्ष्णः, मन्दश्च । प्रकृतयः सप्त दोषैः पृथग्द्वंद्वसमवेतैः । वयस्त्रिविधम्—बालमध्यवृद्धत्वेन । सत्त्वं त्रिविधं—सात्त्विकराजसतामसभेदेन । सात्म्यं त्रिविधम्—प्रवरावरमध्यविभागेन। आहारो द्विधा—हिताहितत्वभेदेन । तान् दश परीक्ष्य परीक्ष्य तथैषामेव च दशानां सूक्ष्मसूक्ष्मदुर्लक्षतमा अवस्थाश्च बुद्ध्वा न कदाचित् चिकित्सायां स्खलति। यस्मात्ता अवस्था अनालोचिता भिषज आतुरं हन्युः।

हे०—दूष्याद्येकादशकज्ञाने सत्यप्यव्यभिचार्युपक्रम इत्याह—दूष्यो धातुर्मलश्च, देशो भूमिर्देहश्च, बलं सामर्थ्यं, कालः पूर्वाह्णादिः, प्रकृतिर्वातप्रकृत्यादिः, वयो बाल्यादिः, सत्त्वं मनः, सात्म्यं देशसात्म्यादि, आहारो मधुरादिः, अवस्था रूपेष्ववांतरं रूपं, सूक्ष्मसूक्ष्मा अतिसूक्ष्माः । एषां रोगाणां दोषौषधनिरूपणे दोषस्यौषधस्य च विचारणे ॥ ६२ ॥

न च दूष्याद्येव परीक्ष्यं किंतर्हि व्याधिरपि गुरुलघुत्वेन परीक्ष्य एवेत्याह—

**गुर्वल्पव्याधिसंस्थानं सत्त्वदेहबलाबलात् ।**
**दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ६३॥**

स०—गुरुश्चाऽल्पश्च गुर्वल्पौ गुर्वल्पौ च तौ व्याधी च गुर्वल्पव्याधी तयोः संस्थानमाकृतिः । अपिशब्दो भिन्नक्रमे । तद्गुर्वल्पव्याधिसंस्थानमन्यथाकारमपि दृश्यते विपरीतमपि लक्ष्यते । अपिशब्दात्क्वचिद्गुर्वल्पव्याधि-

संस्थानं यथातत्त्वं दृश्यते कचिन्नेति व्याधिलक्षणस्य गमकत्वाभावः प्रसज्येत । ततश्च रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिरिति दूष्येत्तस्मादपिशब्दोऽत्र गुर्वल्पसंस्थानस्य यथातत्त्वदर्शनं कचिद्भवत्येवेति सूचनार्थं कृतः । कुतो हेतोरित्याह । सत्त्वेत्यादि । सत्त्वं धैर्यम् । देहो महदल्पस्थूलकृशादिः । सत्त्वं च देहश्च सत्त्वदेहौ । बलं चाबलं च बलाबले । तस्मात्सत्त्वदेहबलाबलाद्धेतोर्गुर्वल्पव्याधिसंस्थानेऽवहितो भवेत् । अधिकसत्त्वे तथोत्कृष्टदेहबले च गुरुर्महानपि व्याधिरुत्पन्नोऽल्पसंस्थानो हीनबल इव लक्ष्यते । सत्त्वदेहबलयोरुत्कृष्टत्वात् । तथा हीनसत्त्वे हीनदेहबले चोत्पन्नो लघुरपि महानिव लक्ष्यते।हीनसत्त्वदेहबलात् तस्मादस्मिन्व्याधिसंस्थानेऽर्थे दत्तावधानेन भाव्यम् ॥ ६३ ॥

प०—गुर्वल्पयोर्व्याध्योः संस्थानं तद्गुर्वल्पव्याधिसंस्थानलक्षणमन्यथाकारं यस्माद्दृश्यते विपरीतं लक्ष्यते । कुतः सत्त्वदेहबलाबलान् सत्त्वदेहयोर्बलाबलं तस्मात्तस्मिन् गुर्वल्पव्याधिसंस्थानेऽवहितः सम्यग्दत्तावधानो भवेत् । उत्कृष्टसत्त्वे तथोत्कृष्टदेहबलेऽत्र गुरुर्महात् बलवानपि व्याधिरुत्पन्नः स्वल्पबल इव लक्ष्यते । सत्त्वदेहयोरुत्कृष्टत्वात्तथा लघुर्व्याधिरपि हीनसत्त्वे तथा हीनदेहबले चोत्पत्तौ महानिव दृश्यते । हीनसत्त्वदेहबलवान् सर्वस्य देहबलाद्गुर्वल्पव्याधिसंस्थानमन्यथाकारं दृश्यते न यथातत्त्वाकारम् । अपिशब्दात् सर्वदा गुर्वल्पव्याधिसंस्थानं यथातत्त्वं दृश्यते कदाचिन्न यथातत्त्वं दृश्यते । अन्यथा तस्य व्याधिसंस्थानस्य व्याधिगमत्वात्ततोऽतः प्रसज्येत तत्प्रसक्तेश्चानुपादेयत्वम् । अनुपादेयत्वाद्रोगनिदानप्राग्रूपलक्षणोपशयाप्तिभिरित्यत्रास्य निर्देशकरणं तदुच्यते । तस्माच्च तस्य पञ्चदिनादिभिः सहितेऽस्मिन् व्याधिसंस्थानेऽर्थे विहितो भवेत् ॥ ६३ ॥

हे०—ततोऽपि सत्त्वदेहयोर्बलं तात्पर्येण परीक्ष्यमित्याह-संस्थानं लक्षणं, अन्यथाकारं गुरोरल्पत्वम् । अल्पस्यापि गुरुत्वम् ॥ ६३ ॥

**गुरुं लघुमिति व्याधिं कल्पयंस्तु भिषग्ब्रुवः ।**
**अल्पदोषाकलनया पथ्ये विप्रतिपद्यते ६४ ॥**

स०—भिषग्ब्रुव इत्यादि । यश्च भिषग्ब्रुवः [illegible] वैद्यः स व्याधिसंस्थानमात्रावलोकनाद् गुरुं लघुमिति कल्पयन्निश्चिन्वन्नल्पदोषाकलनया हीन[illegible] षनिश्चयेन पथ्ये विप्रतिपद्यते । चिकित्सिते [illegible] गच्छति । गुरुव्याधावल्पव्याधियोग्यं भेषजं द[illegible] एवं लघुव्याधिं गुरुमिति कल्पयन् बहुदोषाव[illegible] पथ्ये विप्रतिपद्यते भिषग्ब्रुवत्वात् । अन्यत्रापि ब्रु[illegible] कुत्सितत्वमेव प्रसिद्धम् । यथाह मनुः । जाति[illegible] पजीवी स्यात् कामं वा ब्राह्मणब्रुवः । धर्मप्रवक्ता[illegible] तु शूद्रः कथंचनेति । केचित् भिषग्ब्रुवमिति [illegible] भिषग्वैद्यो गुरुं लघुमिति व्याधिं कलयन् ध्रुवं [illegible] पथ्ये विप्रतिपद्यत इति च व्याचक्षते ॥ ६४ ॥

प०—यश्च भिषग्ब्रुवः कुत्सितो वैद्यः संस्थानमात्रदर्शनात् गुरुं व्याधिं लघुमिव क[illegible] निश्चयीकुर्वन् अल्पदोषाकल्पनया हीनप्रमा[illegible] निश्चयेन पथ्ये विप्रतिपद्यते चिकित्सिते मोहं [illegible] गुरुव्याधौलघुव्याधियोग्यमौषधं ददात्येवमनया[illegible] लघुव्याधिं गुरुमिव कल्पयन् बहुदोषकलनया[illegible] विप्रतिपद्यते । लघुव्याधौ गुरुव्याधियोग्य[illegible] ददाति ॥ ६४ ॥

हे०—अनवहितत्वे दोषमाह—अल्पोऽयं दो[illegible] गणनया विप्रतिपद्यते विपरीतं जानाति ॥ ६४ ॥

यस्मादेवम्—

**ततोऽल्पमल्पवीर्यं वा गुरुव्याधौ प्रयोजि[illegible]**
**उदीरयेत्तरां रोगान् संशोधनमयोगतः ६[illegible]**

स०—ततोऽल्पमल्पमात्रमल्पवीर्यं वाऽनुल[illegible] क्तिकं वा भेषजं गुरुव्याधौ प्रयोजितं दत्तं सं[illegible] रोगानुदीरयेत्तरामतिशयेनोत्क्लेशयेत् । कुतः अ[illegible] हीनयोगात् । अयोगो हि हीनयोग उच्यते । पुत्रकार्याकरणादपुत्र इत्युच्यते ॥ ६५ ॥

प०—यत एवं ततोऽल्पमात्रयाऽल्पमल्पवीर्यं [illegible] दोषाकल्पनया गुरुव्याधौ प्रबले रोगे प्रये[illegible] दत्तमौषधमुदीरयेत्तदा रोगमतिशयेनोत्क्लेशयेत् [illegible] धनमयोगतो हीनयोगात् ॥ ६५ ॥

हे०—विपर्ययज्ञाने दोषमाह-अयोगतः हीनयोगेन ६५

**ोधनं त्वतियोगेन विपरीतं विपर्यये ।**
**क्षणुयान्न मलानेव केवलं वपुरस्यति ६६ ॥**

स०—विपर्यये च लघुव्याधौ विपरीतं शोधनं तु योजितं कस्माद्विपरीतमल्पवीर्यात् संशोधनादतिमात्रकृष्टवीर्यं च बहुदोषाकलनयाऽतियोगेन प्रयोजितं न वलं मलान् क्षिणुयात् क्षपयेद्यावद्वपुरस्यति शरीरमपि हिंस्यात् । अत्र च संशोधनं यद् दृष्टांतत्वेनोपन्यस्तं तदयोगातियोगाभ्यां रोगिशरीरक्षपणकृदिति निर्वर्तयतीति । खरनादेनाऽप्युक्तम् । अल्पमुत्क्लेशयेद्दोषं बहु गुणान्निहंति च । तस्मान्निरूप्य भिषजा देयं युक्तं विरेचनमिति । तथा ज्वरगुल्मादीनां च तत्प्रतीकारार्थं दीयते भेषजं तत्राऽपि महारंभेऽल्पमल्पवीर्यं चौषधं न यमित्यस्मादेव दृष्टांतीभूतादर्थादवगंतव्यम् ॥ ६६ ॥

प०—शोधनं त्वतियोगेन । बहुदोषाकलनया विपर्यये लघुव्याधिविपरीतं संशोधनं प्रयोजितम् । कस्माद्विपरीतम् । प्रकृत्यात्पाल्पवीर्यादतिमात्रमुत्कृष्टवीर्यं च शोधनं प्रयोजितमतियोगेन मलान् क्षिणुयात् हिंस्यात् । वपुरस्यति क्षणुयाच्छरीरमतिशयेन हिंस्यात् । एतन्निदर्शनाज्ज्वरादौ विकारे भेषजमल्पं बहु वाल्पवीर्यमुत्कृष्टवीर्यं वा ज्ञेयम् ॥ ६६ ॥

हे०—विपरीतमतिमात्रमतिवीर्यं वा विपर्यये लघुव्याधौ वपुरप्यतिशयेन क्षयं नयेन्न दोषानेव ॥ ६६ ॥

**अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा ।**
**तथा युंजीत भैषज्यमारोग्याय यथा ध्रुवम् ६७॥**

स०—यस्माच्चैवं रोगाणां दुर्विज्ञेया गतिरतोऽस्माद्धेतोः सततमभियुक्तः सदाऽऽयुर्वेदपाठावबोधानुष्ठानपरो वैद्यः सर्वं दूष्यादिवस्तुजातमालोच्य सर्वथा सर्वेण प्रकारेणाऽऽयुर्वेदानुसारिण्या स्वमनीषया तद्विद्यसंभाषातः संभवया च तथा कर्माभ्यासतोऽपि निपुणं निरूप्य तथा तेन प्रकारेण दोषदूष्यदेशाद्यनुगुणेन भैषज्यं युंजीत भेषजं युंज्यात् । यथाऽऽरोग्याय ध्रुवं येन प्रकारेणाऽऽरोग्यार्थमवश्यं स्यात् ॥ ६७ ॥

प०—यत एवंरूपविकाराणां दुःशक्यविज्ञानगतिरतोऽस्मात् कारणात् अभियुक्तः प्राज्ञो निपुणः सततं सर्वकालं सर्वमालोच्य दूष्यादिवस्तुजातं सर्वथा सर्वेण प्रकारेणायुर्वेदानुसारिणा स्वबुद्ध्या तद्विदा सम्भाषणाच्च निपुणं विमृश्य यथा युञ्जीत भैषज्यं तेन प्रकारेण दोषदूष्याद्यालोच्यानुगुणेन कल्पेन यथा येन प्रकारेण तदौषधमुपयुक्तमात्रमारोग्याय सम्पद्यते स्वास्थ्यायोपजायते ॥ ६७ ॥

हे०—अशेषविशेषपरीक्षायामत्यादरः कार्य इत्याह—अत इति । अथ संयोगः ॥ ६७ ॥

पूर्वमुक्तं दोषा एव हि सर्वेषां रोगाणामेककारणमतस्तानेव दोषान् वृद्धिक्षयभेदेनाह—

**वक्ष्यंतेऽतः परं दोषा वृद्धिक्षयविभेदतः ॥६८॥**

स०—वृद्धिश्च क्षयश्च वृद्धिक्षयौ तयोर्विभेदो वृद्धिक्षयविभेदः विविधो भेदो विभेदस्तस्माद्वृद्धिक्षयविभेदतः अतोऽनंतरं दोषा वातादयो वक्ष्यंते भणिष्यंते ॥६८॥

प०—पूर्वमुक्तं दोषा एव हि सर्वेषां रोगाणामेव कारणम् । इत्यतस्ते दोषाः परमनन्तरं द्रव्यादिर्वचसा वक्ष्यन्त इत्यत आह-ते दोषाः परमनन्तरं वक्ष्यन्ते । कथं वृद्धिक्षयविभेदतः । वृद्धिश्च क्षयश्च तयोर्विभेदो विशेषेण भेदः तस्माद्वृद्धिक्षयविभेदतः ॥ ६८ ॥

हे०—तस्य त्रिषष्टिभेदाः । तानाह—दोषा दोषभेदाः, विभेदः तारतम्यं, तत्साम्ये नास्ति, वृद्धौ क्षये चास्ति वृद्धिक्षयवत्साम्यं च भेदे कारणम् ॥ ६८ ॥

**पृथक् त्रीन् विद्धि संसर्गस्त्रिधा तत्र तु तान्नव६९**
**(संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः)**[1]

स०—पृथग्व्यस्तान् स्वप्रमाणाधिकान् त्रीन् दोषान् रोगहेतून् विद्धयवेहि । वातो वृद्धः पित्तं वृद्धं श्लेष्मा वृद्धः एवं त्रयो दोषाः । संसर्गभेदानधुना वक्ति । संसर्गस्त्रिधा त्रिप्रकारः । तत्र संसर्गे नव दोषभेदान्स्वप्रमाणाधिकान् विद्धीत्येतदनुवृत्तिकृतेन संबंधेन सर्वत्र योज्यम् ॥ ६९ ॥

प०—त्रीनेव समतावृद्ध्या पृथक् एकशः तान् दोषान् स्वप्रमाणाद्वृद्धावधिकान् त्रीन् विद्धि जा-

१ कोष्ठान्तर्गतोऽत्राधिकः पाठ उपलभ्यते ।

नीहि । वातो वृद्धः, पित्तं वृद्धं, श्लेष्मा वृद्धः एवं त्रीन् दोषभेदान् जानीहि इति संसर्गः संनिपातश्च प्राक् परिभाषितः । संसर्गस्त्रिधा भवति । वातपित्तं, वातकफं, पित्तकफं चेति । तत्र संसर्गे त्रिधा कल्पिते नव दोषभेदाननुप्रमाणाधिकभावेन त्रीनेव समया वृद्धया विद्धीत्येतत् सर्वत्रानुवर्तनीयम् । कथं त्रीनेव तावत् संसर्गदोषभेदात् ॥ ६९ ॥

हे०-तत्र वृद्धिसाम्याभ्यां द्वादश । तत्र पृथक् त्रीन् विद्धि पृथक्प्रत्येकं वृद्धया, पंचविंशतिरित्युपचारात् । पारिशेष्यात् द्विशः साम्येन । यथा-वायुर्वृद्धः पित्तकफौ समौ, पित्तं वृद्धं वातकफौ समौ, कफो वृद्धः वायुपित्ते समे । संसर्गं त्रिधा विद्धि वायुपित्ते, वायुकफौ, पित्तकफौ इति । तत्र संयोगे तान् संयोगान्नव विद्धि॥ ६९ ॥

कथं नव भेदा इत्याह—

**त्रीनेव समया वृद्धया षडेकस्याऽतिशायने ॥**

**स०**--समया वृद्धया त्रीनेवाऽन्यूनाधिकान् संसर्गदोषभेदान् । एको वातपित्ताभ्यामधिकाभ्यां द्वितीयो वातकफाभ्यामधिकाभ्यां तृतीयः पित्तश्लेष्मभ्यामधिकाभ्यामिति । संसर्गोत्थयोर्दोषयोरेकस्य दोषस्याऽतिशायनेऽधिकतरया वृद्धया षट् संसर्गदोषभेदान् विद्धि । अतिशयोऽतिशायनम् । अतिशायने तमबिष्ठनाविति निपातनाद्दीर्घः । दोषद्वयवृद्धेश्चित्यमानत्वादपरदोषचिंता नास्त्यत्र । वातो वृद्धः पित्तं वृद्धतरम् । पित्तं वृद्धं वातो वृद्धतरः । कफो वृद्धः पित्तं वृद्धतरम् । पित्तं वृद्धं कफो वृद्धतरः । कफो वृद्धो वातो वृद्धतरः । वातो वृद्धः कफो वृद्धतरः । एवं षट् संसर्गभेदान् विद्धि ॥ ७० ॥

**प०**—समयाऽधिका वृद्धया एकोऽधिकः वातपित्तसंसर्गभेदः, द्वितीयोऽधिकः वातकफसंसर्गभेदः, तृतीयोऽधिकः पित्तश्लेष्मसंसर्गभेदः । एवं त्रीन् संसर्गभेदान् जानीहि । अनयोः संसर्गस्थयोर्दोषयोरेकस्य दोषस्यातिशायने एकया वृद्धया षट्संसर्गभेदान् विद्धि । ( १ ) वातो वृद्धः पित्तं वृद्धतरं, ( २ ) पित्तं वृद्धं वातो वृद्धतरः, ( ३ ) वातो वृद्धः कफो वृद्धतरः, ( ४ ) कफो वृद्धः वातो वृद्धतरः, ( ५ ) कफो वृद्धः पित्तं वृद्धतरम्, ( ६ ) पित्तं वृद्धं कफो वृद्धतरः । एवं संस[र्ग] दोषभेदाः ॥ ७० ॥

हे०-तत्र त्रीन् समया वृद्धया प्रवृद्धाः । यथा-वायुपित्ते कफः समः, वायुकफौ वृद्धौ पित्तं समं, पित्तकफौ [वृद्धौ] वायुः समः । एकस्यातिशयने षट् । यथा-वायोः [पित्तं] वृद्धं कफः समः, पित्ताद्वायुर्वृद्धः कफः समः, व[ायोः] कफो वृद्धः पित्तं समं, कफाद्वायुर्वृद्धः पित्तं समं, पि[त्ता]त्कफो वृद्धः वायुः समः, कफात्पित्तं वृद्धं वायुः समः [इति] द्वादश ॥ ७० ॥

**त्रयोदश समस्तेषु ॥ ७१ ॥**

**स०**—समस्तेषु सन्निपतितेषु त्रिष्वपि दोषेषु वृ[द्धेषु] त्रयोदश दोषभेदान् विद्धि ॥ ७१ ॥

**प०**—दोषेषु त्रिषु सन्निपातेषु त्रयोदश सन्नि[पात]भेदान् विद्धि । कथंकृत्वा ॥ ७१ ॥

हे०-वृद्धेष्वेव समस्तेषु त्रयोदशसंयोगान् विद्धि

कथमित्याह--

**षड् द्व्येकातिशयेन तु ॥ ७[२ ॥]**

**स०**—द्वावेकश्च द्व्येकास्तेषां द्व्येकेषामतिशयो[ऽतिशयि]कत्वं तेन द्व्येकातिशयेन । ततो द्व्यातिशयेन [त्रयो] भेदाः । तथा एकस्याऽतिशयेन त्रय इति षट् भेद[ाः] । यथा कफो वृद्धो वातपित्तमधिकवृद्धम् । पित्तं [वृद्धं] वातकफावतिवृद्धौ । वातो वृद्धः पित्तकफावतिवृ[द्धौ] । पित्तकफौ वृद्धौ वातोऽतिवृद्धः । वातकफौ वृद्धौ [पित्त]मतिवृद्धम् । वातपित्ते वृद्धे कफोऽतिवृद्धः । इति [षट्] भेदान् द्व्येकातिशयेन सन्निपाते विद्धि ॥ ७२ ॥

**प०**—द्वौ च एकश्च द्व्येकास्तेषामतिशयो द्व्ये[काति]तिशयोऽधिकसंयोगःतद्द्व्येकातिशयसंयोगदोष[स्यैक]स्यातिशयेन । ( १ ) वातो वृद्धः पित्तश्लेष्म[णा]वतिशयेनात्यन्तवृद्धौ, ( २ ) पित्तं वृद्धं वातश्ले[ष्म]णावतिशयेन वृद्धौ, ( ३ ) कफो वृद्धो वातपि[त्ते अ]तिशयेन वृद्धौ, ( ४ ) वातपित्ते वृद्धे कफोऽ[तिश]येन, ( ५ ) पित्तश्लेष्माणौ वृद्धौ वातोऽतिश[येन], ( ६ ) वातश्लेष्माणौ वृद्धौ पित्तमतिशयेन एवं ष[ट् सन्नि]निपातभेदान् द्व्येकातिशयेन जानीहि ॥ ७२

हे०–तत्रैकस्माद्द्वयोर्वृद्धयोस्त्रीन् । यथा-वायोः पित्तकफौ वृद्धौ, पित्तात्कफवायू, कफाद्वायुपित्ते । द्वाभ्यामेकस्मिन् वृद्धे त्रीन् । यथा वायुपित्ताभ्यां कफो वृद्धः, वायुकफाभ्यां पित्तं वृद्धं, पित्तकफाभ्यां वायुर्वृद्धः॥७२॥

**एकं तुल्याधिकैः ॥ ७३ ॥**

स०–तुल्यं कृत्वा समं कृत्वा वृद्धैर्दोषैरेकं सन्निपातमेकभेदं विद्धि ॥ ७३ ॥

प०–एकं सन्निपातभेदं तुल्याधिकैर्दोषैर्जानीहि । तुल्यं कृत्वा समं कृत्वा आधिक्यं येषां तैस्तुल्याधिकैरेकं सन्निपातदोषभेदं जानीहि ॥ ७३ ॥

हे०–तुल्याधिकैरेकम् । यथा-वायुपित्तकफा वृद्धाः॥७३

**षट् च तारतम्यविकल्पनात् ॥ ७४ ॥**

स०–तरतमयोर्भावस्तारतम्यम् । कस्य तारतम्यम् । प्रकृतत्वात्संनिपातस्थदोषाणाम् । तारतम्यस्य विकल्पनं भेदस्तारतम्यविकल्पनं तस्मात्संनिपातस्थदोषाणां वृद्धिरूपाणां षड्भेदान् विद्धि । यथा वातो वृद्धः पित्तं वृद्धतरं कफो वृद्धतमः । वातो वृद्धः कफो वृद्धतरः पित्तं वृद्धतमम् । पित्तं वृद्धं कफो वृद्धतरो वातो वृद्धतमः । पित्तं वृद्धं वातो वृद्धतरः कफो वृद्धतमः । कफो वृद्धो वातो वृद्धतरः पित्तं वृद्धतमम् । कफो वृद्धः पित्तं वृद्धतरं वातो वृद्धतमः । एतेषां च लक्षणं मुनिरध्यगीष्ट । तथा च ग्रंथः । सन्निपातज्वरस्योर्ध्वं त्रयोदशविधस्य हि । प्राक् सूत्रितस्य वक्ष्यामि लक्षणं वै पृथक्पृथक् । भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् । वातपित्तोल्बणे विद्याल्लिंगं मंदकफे ज्वरे । शैत्यं कासोऽरुचिस्तंद्रा पिपासा दाहरुग्व्यथा । वातश्लेष्मोल्बणे विद्याल्लिंगं पित्तज्वरे विदुः । छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना । मंदवातेऽभ्यवस्यंति लिंगं पित्तकफोल्बणे । संध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः।वातोल्बणे स्याद् द्व्यनुगे तृष्णा कंठास्यशुष्कता। रक्तविण्मूत्रता दाहः स्वेदस्तृड्बलसंक्षयः । मूर्छा चेति त्रिदोषे स्याल्लिंगं पित्ते गरीयसि । आलस्याऽरुचिहृल्लासदाहवम्यरतिभ्रमैः । कफोल्बणं सन्निपातं तंद्राकासेन चादिशेत् । समं दोषैस्त्रिभिर्वृद्धैः सन्निपातस्य लक्षणम् । मुहुर्दाहो मुहुः शीतं कर्णक्ष्वेडनपार्श्वरुक् । मोहश्छर्दिर्दिवा निद्रा रात्रौ जागरणं तथा । प्रतिश्या छर्दिरालस्यं तंद्रारुच्यग्निमार्दवम् । हीनवाते पित्तमध्ये चिह्नं श्लेष्माधिके मतम् । हारिद्रमूत्रनेत्रत्वग्दाहस्तृष्णा भ्रमोऽरुचिः । हीनवाते मध्यकफे लिंगं पित्ताधिके मतम् । शिरोरुग्वेपथुः श्वासः प्रलापश्छर्द्यरोचकौ । हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् । शीतकं गौरवं तंद्रा प्रलापोऽस्थिशिरोऽतिरुक् । हीनपित्ते वातमध्ये लिंगं श्लेष्माधिके विदुः । वर्चोभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः । कफहीने वातमध्ये लिंगं पित्ताधिके मतम् । श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् । कफहीने पित्तमध्ये लिंगं वाताधिके स्मृतमिति ॥ ७४ ॥

प०–तरतमयोर्भावस्तारतम्यम् । तच्च तारतम्यं प्रकृतत्वात् सन्निपातदोषाणां तारतम्यस्य विकल्पनं भेदतारतम्यस्य कल्पनम् । तस्मात् तारतम्यावकल्पनात् सन्निपातस्थदोषाणां वृद्धिरूपाणां षड्भेदान् विद्धि ( १ ) वातो वृद्धः, पित्तं वृद्धतरं, कफो वृद्धतमः ( २ ) वातो वृद्धः, कफो वृद्धतरः, पित्तं वृद्धतमम् ( ३ ) पित्तं वृद्धं, कफो वृद्धतरो, वातो वृद्धतमः ( ४ ) पित्तं वृद्धं, वातो वृद्धतरः, कफो वृद्धतमः ( ५ ) कफो वृद्धः, वातो वृद्धतरः, पित्तं वृद्धतमम् ( ६ ) कफो वृद्धः, पित्तं वृद्धतरं, वातो वृद्धतमः ॥ ७४ ॥

हे०–तारतम्यविकल्पात्षट् । यथा-वायुपित्तकफा-वृद्धा वृद्धतरा वृद्धतमाः । एवं वायुपित्तकफानि, पित्तकफवायवः, पित्तवायुकफाः, कफवायुपित्तानि, कफपित्तवायव एवं त्रयोदश ॥ ७४ ॥

**पंचविंशतिमित्येवं वृद्धैः ॥ ७५ ॥**

स०–एवं पूर्वोक्तेन प्रकारेण पंचविंशतिसंख्यान् दोषभेदान् वृद्धैर्दोषैर्विद्धि ॥ ७५ ॥

प०–वृद्धैर्दोषैर्दोषभेदान् विद्धि । एवमनेन प्रकारेण यथानिर्दिष्टेन पञ्चविंशतिसंख्यावच्छिन्नान् दोषभेदान् विद्धि जानीहि ॥ ७५ ॥

हे०–एवं वृद्धौ पंचविंशतिं विद्धि ॥ ७५ ॥

क्षीणैश्च तावतः ॥ ७६ ॥

स०–क्षीणैः क्षयावस्थैर्दोषैस्तावतस्तत्परिमाणान्पंचविंशतिसंख्याकान् दोषभेदान् विद्धि।यथा वृद्धैः पृथक् त्रीन् दोषभेदान् तथा क्षीणैः । पृथक् त्रीनित्यादिग्रंथे वृद्धिशब्दस्थाने क्षीणशब्दो निपात्यः । तद्यथा । वातः क्षीणः पित्तं क्षीणं कफः क्षीणः । तदेवं संसर्गे नव दोषभेदान् विद्धि । कथम् । त्रीनेव समक्षीणत्वेन क्षीणवातपित्तसंसर्गः। क्षीणपित्तकफसंसर्गः । क्षीणवातकफसंसर्गः । षडेकस्यातिशायने । अतिशायनेऽन्यदोषापेक्षया क्षीणत्वातिरेके । वातः क्षीणः पित्तं क्षीणतरम् । पित्तं क्षीणं वातः क्षीणतरः । वातः क्षीणः कफः क्षीणतरः । कफः क्षीणो वातः क्षीणतरः कफः क्षीणः पित्तं क्षीणतरम् । पित्तं क्षीणं कफः क्षीणतरः। एवं षड् दोषभेदान् विद्धि। त्रयोदश समस्तेषु सन्निपतितेषु क्षीणेषु दोषेषु दोषभेदांस्त्रयोदश विद्धि । कथम् । षड् द्व्येकातिशये न तु । दोषद्वयस्याऽतिशयेनाऽतिक्षीणत्वेन तथा दोषैकस्याऽतिक्षीणत्वेन पर्यायतः षट् क्षीणसंनिपातैर्दोषभेदान् विद्धि । यथा वातः क्षीणः पित्तकफावतिक्षीणौ । पित्तं क्षीणं वातकफावतिक्षीणौ । कफः क्षीणः पित्तवातावतिक्षीणौ । वातपित्ते क्षीणे कफोऽतिक्षीणः । पितकफौ क्षीणौ वातोऽतिक्षीणः। वातकफौ क्षीणौ पित्तमतिक्षीणम् । एकं तुल्यक्षीणैर्भेदं विद्धि । षट् तारतम्यविकल्पनात् । कफः क्षीणः पित्तं क्षीणतरं वातः क्षीणतमः । वातः क्षीणः कफः क्षीणतरः पित्तं क्षीणतमम् । पित्तं क्षीणं कफः क्षीणतरो वातः क्षीणतमः । कफः क्षीणो वातः क्षीणतरः पित्तं क्षीणतमम् । वातः क्षीणः पित्तं क्षीणतरं कफः क्षीणतमः । पित्तं क्षीणं वातः क्षीणतरः कफः क्षीणतमः । एवं पंचविंशतिदोषभेदान् क्षीणैर्दोषैर्विद्धि ॥ ७६ ॥

प०–दोषैः क्षीणैः क्षयावस्थैस्तावतस्तावत्सङ्ख्यापरिमाणान् पञ्चविंशतिसङ्ख्यावच्छिन्नानेव दोषभेदान् जानीहि। पृथक् त्रीन् दोषभेदान् क्षीणैर्दोषैः वातः क्षीणः, पित्तं क्षीणम्, कफः क्षीणः । एवं त्रीन् दोषभेदान् विद्धि । क्षीणैरपि दोषैर्य एष संसर्गः एवं त्रीन् दोषभेदान्। षडेकस्यातिशायने अतिशयनमन्यदोषापेक्षया क्षीणताधिक्यम् ( १ ) वातः क्षीणः, पित्तं क्षीणतरं, ( २ ) पित्तं क्षीणं, वातः क्षीणतरः, ( ३ ) वातः क्षीणः, कफः क्षीणतरः ( ४ ) कफः क्षीणः, वातः क्षीणतरः ( ५ ) कफः क्षीणः, पित्तं क्षीणतरम्, ( ६ ) पित्तं क्षीणं, कफः क्षीणतरः । एवं षट् क्षीणदोषसंसर्गभेदान् विजानीहि । त्रयोदश समस्तेषु क्षीणेषु दोषेषु त्रयोदश दोषभेदान् विद्धि कथं, षड्द्व्येकातिशये न दोषद्वयस्यातिशयेनात्यन्तक्षीणतया तथा दोषैकस्यातिशयेनात्यन्तक्षीणतया पर्यायतः षट् क्षीणदोषसन्निपातदोषान् विद्धि ( १ ) वातः क्षीणः, पित्तश्लेष्माणावतिशयेन क्षीणौ, ( २ ) पित्तं क्षीणम् वातश्लेष्माणावतिशयेन, ( ३ ) कफः क्षीणः वातपित्तावतिशयेन, ( ४ ) वातपित्ते क्षीणे कफोऽतिशयेन, ( ५ ) पित्तश्लेष्माणौ क्षीणौ वातोऽतिशयेन, ( ६ ) वातश्लेष्माणौ क्षीणौ पित्तमतिशयेन । "वातपित्तकफाः क्षीणाः षट्तारतम्यविकल्पनात्" दोषभेदान् विद्धि । ( १ ) वातः क्षीणः, पित्तं क्षीणतरं, कफः क्षीणतमः,( २ ) पित्तं क्षीणं, वातः क्षीणतरः, कफः क्षीणतमः, ( ३ ) कफः क्षीणः, पित्तं क्षीणतरं, वायुः क्षीणतमः (४) वातः क्षीणः, कफः क्षीणतरः, पित्तं क्षीणतमम् ( ५ ) पित्तं क्षीणं, कफः क्षीणतरो, वायुः क्षीणतमः,(६) कफः क्षीणः, वायुः क्षीणतरः,पित्तं क्षीणतमम् । एवं पञ्चविंशतिक्षीणैर्दोषभेदान् विद्धि एवं पृथक् त्रीन् वृद्ध्यादिग्रन्थे वृद्धिशब्दमपास्य तत्प्रदेशे क्षीणशब्दं क्षिप्त्वा क्षीणदोषभेदान् पृथक् त्रीन् विद्ध्यादिग्रन्थः ॥ ७६ ॥

हे०–क्षीणैश्च तावतो विद्धि। वृद्धशब्दस्थाने क्षीणशब्दप्रयोगात्ते ज्ञेयाः ॥ ७६ ॥

**एकैकवृद्धिसमताक्षयैः षट् ते ॥ ७७ ॥**

स०–ते सन्निपातस्थदोषास्त्रयः षोढा भवंति कथमित्याह। वृद्धिश्च समता च क्षयश्च वृद्धिसमताक्षयाः

एकैकस्य वाताद्यन्यतमस्य वृद्धिसमताक्षयाः एकैकवृद्धिसमताक्षयास्तैरेकैकवृद्धिसमताक्षयैः षट् । यथा । वातो वृद्धः पित्तं समं कफः क्षीणः । पित्तं वृद्धं वातः समः कफः क्षीणः । कफो वृद्धः पित्तं समं वातः क्षीणः। कफो वृद्धो वातः समः पित्तं क्षीणम् । वातो वृद्धः कफः समः पित्तं क्षीणम् । पित्तं वृद्धं कफः समो वातः क्षीणः । एवमेकैकवृद्धिसमताक्षयैः षट् ॥ ७७ ॥

प०—समता च क्षयश्च वृद्धिः षट्भेद इति ते दोषभेदा अनया वक्ष्यमाणया दोषभेदसंज्ञया दोषाःसम्पद्यन्ते । षट् वृद्धिश्च समता च क्षयश्च वृद्धिसमताक्षयाः एकैकस्य वातादेरन्यतमस्य वृद्धिसमताक्षयाः तैरेकैकस्य वृद्धिसमताक्षयैः । ( १ ) वातो वृद्धः, पित्तं समं, कफः क्षीणः ( २ ) पित्तं वृद्धं, वातः समः, कफः क्षीणः ( ३ ) कफो वृद्धः, पित्तं समं, वातः क्षीणः ( ४ ) वातो वृद्धः, कफः समः, पित्तं क्षीणम ( ५ ) पित्तं वृद्धं, वातः समः, कफः क्षीणः ( ६ ) कफो वृद्धः, वातः समः, पित्तं क्षीणम् । एवमेकैकवृद्धिसमताक्षयैः षट् ॥ ७७ ॥

हे०—वृद्धिक्षयसाम्यैः षट् । वृद्धवृद्धतरवृद्धतमस्थाने वृद्धक्षीणसमयोगात्ते ज्ञेयाः । तेषां लक्षणमुक्तं संग्रहे—" रोगावस्थासु युगपद्वृद्धिसाम्यक्षयानुगम् । षट्कं हि दुर्बोधतरं विकारैरिति दृश्यते ॥ प्रकृतिस्थं यदा पित्तं वृद्धो वायुः कफक्षये । स्थानादादाय गात्रेषु तत्र तत्र विसर्पति ॥ तदा भेदश्च दाहश्च तत्र तत्रानवस्थितौ । गात्रदेशे तथा स्यातां बलहानिपरिश्रमौ ॥ प्रकृतिस्थं कफं क्षीणे पित्ते वायुर्यदा बली । कुक्षौ कुर्यात्तदा शूलं सशैत्यस्तंभगौरवम्॥ प्रकृतिस्थं यदा वातं पित्तं वृद्धं कफक्षये। संरुणद्धि तदा दाहः शूलं चास्योपजायते । प्रकृतिस्थं कफं वृद्धं पित्तं वातक्षये यदा । संनिरुध्यात्तदा कुर्यात्संतंद्रागौरवं ज्वरम् ॥ प्रकृतिस्थं यदा वायुं क्षीणे पित्ते कफोऽधिकः । संनिरुध्यात्तदा कुर्याच्छीतकं गौरवं रुजम् । शीतलं शीतपूर्वं ज्वरम् । प्रकृतिस्थं यदा पित्तं वृद्धश्लेष्मानिलक्षये । संनिरुध्यात्तदा कुर्यान्मदाग्नित्वं शिरोग्रहम्। निद्रातंद्रोपलेपांश्च हृद्रोगं गात्रगौरवम् । ष्ठीवनं पित्तकफयोर्नखादीनां च पीतता ॥ ये दोषवृद्धिक्षययोर्विकाराः कीर्तिताः पृथक् । शेषेष्वपि तु तानेव कल्पयेत्तद्यथायथम्" इति ॥ ७७ ॥

पुनश्च षट्

**एकक्षयद्वंद्ववृद्ध्या सविपर्ययाऽपि ते ।**
**भेदा द्विषष्टिर्निर्दिष्टाः ॥ ७८ ॥**

स०--एकस्य क्षय एकक्षयः ।द्वंद्वस्य वृद्धिर्द्वंद्ववृद्धिः एकक्षयसहिता द्वंद्ववृद्धिरेकक्षयद्वंद्ववृद्धिस्तया। किंभूतया सविपर्ययया सहविपर्ययेण वैपरीत्येन वर्तते तया । एकक्षयद्वंद्ववृद्ध्या पुनरेव षट् दोषभेदाः । वातः क्षीणः पित्तकफौ वृद्धौ । पित्तं क्षीणं वातकफौ वृद्धौ । कफः क्षीणो वातपित्ते वृद्धे । एवमेकक्षयद्वंद्ववृद्ध्या त्रयो भेदाः । सविपर्ययया च वृद्ध्या त्रयो दोषभेदाः द्वंद्वक्षयैकदोषवृद्ध्या द्वंद्वक्षयसहितैकदोषवृद्धिस्तया यथा । वातपित्ते क्षीणे श्लेष्मा वृद्धः । वातकफौ क्षीणौ पित्तं वृद्धम् । पित्तकफौ क्षीणौ वातो वृद्धः इति सविपर्ययया वृद्ध्या त्रयो दोषभेदाः । एवं सन्निपातभेदाः । द्विरूपया वृद्ध्या षडेते । पञ्चभेदगणनया दोषाणां भेदा द्विषष्टिर्निर्दिष्टाः ॥ ७८ ॥

प०—ते दोषाः षट् । एकस्य क्षयः एकक्षयः द्वन्द्वस्य वृद्धिः द्वन्द्ववृद्धिः । तया सविपर्ययया सहविपर्ययेण वर्तत इति सा सविपर्ययैकक्षयद्वन्द्ववृद्धिस्तया एकक्षयद्वन्द्ववृद्ध्या षट् । ( १ ) वातः क्षीणः पित्तश्लेष्माणौ वृद्धौ, ( २ ) पित्तं क्षीणं, वातश्लेष्माणौ वृद्धौ, ( ३ ) कफः क्षीणः वातपित्ते वृद्धे एवमुभयरूपया वृद्ध्या षट् दोषभेदात् । द्वन्द्वक्षयैकदोषवृद्ध्या द्वन्द्वक्षयसहितैकदोषवृद्धिस्तया ( १ ) वातपित्ते क्षीणे कफो वृद्धः ( २ ) वातकफौ क्षीणौ पित्तं वृद्धम्, ( ३ ) पित्तकफौ क्षीणौ वातो वृद्ध एवमुभयवृद्ध्या षट् दोषभेदाः । एवं द्विषष्टिर्दोषभेदाः द्विषष्टिसंख्यानिर्दिष्टाः कथिताः ॥ ७८ ॥

हे०—एकक्षयद्विवृद्धिभ्यां त्रयः । यथा—वायुः क्षीणः पित्तकफौ वृद्धौ, पित्तं क्षीणं कफवायू वृद्धौ, कफः क्षीणो वायुपित्ते वृद्धे । द्विक्षयैकवृद्धिभ्यां त्रयः । यथा-वायुपित्ते क्षीणे कफो वृद्धः, पित्तकफौ क्षीणौ वायुर्वृद्धः कफवायू क्षीणौ पित्तं वृद्धम् । एवं द्विषष्टिर्भेदाः । वायु पित्तकफाः समा इति ॥७८॥

## त्रिषष्टः स्वास्थ्यकारणम् ७९

स०—त्रिषष्टीनां पूरणो यो दोषभेदः स स्वास्थ्यकारणमारोग्यहेतुर्धातुसाम्यात् । अत्र हि स्वप्रमाणस्था वातपित्तकफाः । ये च दोषभेदा द्विषष्टिस्ते च रोगकारणमित्यर्थादुक्तं भवति । अत्र च रोगहेतुत्वे दोषवैषम्यं कारणम् । त्रिषष्ट इति तस्य पूरणे डडिति डट् ७९॥

प०—स्वास्थ्यकारणम् भेदस्त्रिषष्टितमः । त्रय एव वातपित्तकफाः समानवृद्धथापि क्षीणास्तत् स्वास्थ्यस्यारोग्यस्य कारणं हेतुरिति ॥ ७९ ॥

हे०—त्रिषष्टो भेदः स्वास्थ्यकारणम् ॥ ७९ ॥

अधुना रसादिभेदादानंत्यं दोषभेदानां दर्शयन्नाह—

**संसर्गाद्रसरुधिरादिभिस्तथैषां**
**दोषांस्तु क्षयसमताविवृद्धिभेदैः ।**
**आनंत्यं तरतमयोगतश्च यातान्**
**जानीयादवहितमानसो यथास्वम् ॥ ८० ॥**

स०—न केवलं द्विषष्टिभेदभिन्नान् दोषान् जानीयात् । आनंत्यं च गतान्विद्यात् । कथमानंत्यमित्याह । एषां दोषभेदानां यथास्वं रसादिभिः संयोगात् । तथैषामेव क्षयादिभेदैस्तरतमयोगाच्चाऽऽनंत्यं गतान्विद्यात् । तत्र दिङ्मात्रं शिष्यव्युत्पत्तये प्रदर्श्यते । तत्र रसे वातपित्तकफानां पृथक् त्रयो भेदा भवंति पृथक् त्रीन् विद्धदीत्यनुसारेण । संसर्गस्त्रिधा । तत्र तु तान् रसमेवाऽधिकृत्य नव विद्धि । कथम् । पूर्ववत् । त्रीनेव समया वृद्ध्या षडेकस्याऽतिशायने । एवं पूर्वोक्तेन न्यायेन रसमधिकृत्य संसर्गं योजयित्वा संनिपाते योजनीयाः । यथा त्रयोदश समस्तेषु । कथम् । षड्द्व्येकातिशयेन तु । एकं तुल्याधिकैः षट् च तारतम्यविकल्पनादिति समानं पूर्वेण । रसाख्यं स्थानं केवलमधिकम् । पंचविंशतिमित्येवं वृद्धैः क्षीणैश्च तावतो रसमधिकृत्य भेदान् विद्धि । इत्येवं रुधिरमांसादिभिर्योज्यम् । एकैकापह्रासेनत्येवं द्विषष्टिभेदभिन्नानां दोषाणां रसादिभिः सप्तभिः संयोगाच्चत्वारि शतान्येकचत्वारिंशदधिकानि स्युः । शकृदादिसंसर्गात्क्षीणतमादि चिंत्यमाना दोषा आनंत्यं यांतीति । रसभेदे द चाऽवगते वैद्यस्य हेतुलक्षणोपक्रमेषु मोहो न भ तथा च मुनिः । यः स्याद्रसविकल्पज्ञः स्याच्च विकल्पवित् । न स मुह्येद्विकाराणां हेतुलिंगो ष्विति । म्नौजौगस्त्रिदशभवा प्रहर्षिणी स्यात् ॥८

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचिताय मष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां दोषभेदीयो नाम द्वादशोऽध्यायः ॥

प०—एषां दोषादिभेदानां रसादिभिः सं त्तथा क्षयसमताविवृद्धिभेदैः यथैषां तरतम तश्च यथास्वमानंत्यं यातान् प्राप्तान् दोषां चेता लक्षयेत् । तत्र रसे वातपित्तकफानां भेदास्त्रयो भेदा भवन्ति । पृथक् त्रीन् विद्धील रेण । संसर्गस्त्रिधा रसे वातादीनां द्विसूत्र दोषान् रसमेवाधिकृत्य नव विद्धि पूर्ववत् र सर्वमूह्यम् । न चैवमत्राशङ्कनीयम् । यथा वा श्लेष्माणोऽपि विरुद्धगुणाः सन्तोऽप्यथात्मलो भ्यन्तरस्य हिंसाद्यशुभकर्मवशाद्विकृतिम संनिपातं जनयन्ति । न च परस्परमुपशमाय भ स्वाभाव्यात् सहजातत्वात् सात्म्यभूतत्वात् । भूतानीव परस्पराभिभवे कार्यमारभन्ते । रसादि यथोक्तम् । क्ष्माम्भोऽग्निरित्याद्यनु मेतादिति भद्रम् ॥ ८० ॥

इति श्री चन्द्रनन्दनविरचितायां पदार्थच न्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने दोषभेदाध्यायो द्वादशः ॥

हे०—एते भेदा रसादिभिर्दूष्यैः प्रत्येकं संस भवंति । तथा एषां दूष्याणां क्षयादिभेदनैः संसर्गात्ततोऽपि बहवः । एवमानंत्यं यातान् दोषान मानसो जानीयाद्यथास्वं स्वेन लक्षणेन ॥ ८० ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने दोषप्रकरणं स्त्येन निरूपितम् ॥ १२ ॥

# त्रयोदशोऽध्यायः ।



पूर्वेऽध्याये विकृतान् दोषानाश्वेवोपक्रमेदित्युक्तमतस्तमेवोपक्रमं दर्शयितुं दोषोपक्रमणीयमारिरिप्सुरिदमाह—

**अथाऽतो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

स०-दोषाणामुपक्रमणं चिकित्सा दोषोपक्रमणं तस्मै हितो दोषोपक्रमणीयः । शेषं पूर्ववद्योज्यम् ॥ १ ॥

प०—भेदज्ञानस्यैतावत्फलम् । यत्तद्भेदज्ञानं दोषाणां चिकित्सा । तत् ज्ञाने सम्यक् शक्यते कर्तुम् । अतस्ततोऽनन्तरं दोषोपक्रमणीयोऽधिकृतः आधिक्येन स्मर्यते । अस्मिन्नर्थानां दोषोपशमोपयोगिनां स्नेहादीनां नाम इत्यध्यायः । तं व्याख्यास्यामः॥१॥

हे०—लक्षणस्कंधानंतरमौषधस्कंधमारभते-तत्र अथेति। दोषोपक्रमणीयमध्यायं व्याख्यातुं प्रतिजानीते—दोषोपक्रमणस्य सर्वरोगौषधत्वात् । उपक्रमणमौषधम् ॥ १ ॥

सर्वदोषेभ्यश्च प्रधानो वात इति तदुपक्रमं पूर्वमाह—

**वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु ।**
**स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यंगमर्दनम् ।**
**वेष्टनं त्रासनं सेको मद्यं पैष्टिकगौडिकम् ।**
**स्निग्धोष्णा बस्तयो बस्तिनियमः सुखशीलता**
**दीपनैः पाचनैः सिद्धाः स्नेहाश्चानेकयोनयः ।**
**विशेषान्मेध्यपिशितरसतैलानुवासनम् ॥ २ ॥**

स०—वातस्योपक्रमः स्नेहः । श्रेष्ठत्वाच्च प्रागुपादानं स्नेहस्य । ततः स्वेदः । कृतस्नेहस्वेदस्य च संशोधनं तच्च मृदु न तीक्ष्णम् । तीक्ष्णस्य वातकोपहेतुत्वात् । तथा स्वाद्वादीनि भोज्यानि भक्ष्याणि । अभ्यंगश्च मर्दनं चाऽभ्यंगमर्दनं पाण्यादिना । वेष्टनं शाटकादिना । त्रासनं खड्गव्यग्रोग्रहस्तराजपुरुषादिदर्शनादिना । ननु भीशोकादिभिर्मारुतस्य कोप उक्तः । वक्ष्यति हि । क्रियाऽतियोगभीशोकेत्यादि । तत् कथं त्रासनं वायोरुपक्रमः । उच्यते । भयं वातप्रकोपहेतुर्न तु त्रासनम् । त्रासनं हि सर्ववातावजयनं तस्माद्वातोपशांत्यर्थं त्रासनं युक्तम् । यथोन्मादादिषु । तथा च वक्ष्यति । वातोन्मादे हर्षणाश्वासनत्रासभयताडनेत्यादि । तथा सेकादिरुपक्रमः । सेको दशमूलक्काथादिना । तथा मद्यं पैष्टिकं गौडिकं वातस्योपक्रमः । तथा स्निग्धोष्णा बस्तयो वातस्योपक्रमः । स्निग्धोष्णा इत्युक्त्या रूक्षशीतं बस्तिमत्र निराकरोति । तथा बस्तिनियमो यथाविधि बस्तिदानं वातस्योपक्रमोऽथवा बस्तिनियमः कर्मकाले योगाख्यत्रिपंचाशद्बस्तिसंख्यः प्राक्स्नेह एकः पंचांत इत्येवमादिना ग्रंथेन यो दर्शितः स वातस्योपक्रमः। तथा सुखं शीलयतीति सुखशीलः । शीलिकामिभिक्ष्याचारिभ्यो णः । तस्य भावः सुखशीलता सौख्यवृत्तित्वम्। तिलप्रियालाक्षोडादयोऽनेका योनयो येषां तेऽनेकयोनयः स्नेहास्ते च वातस्योपक्रम इति योज्यम् । किंभूताः । दीपनपाचनैर्द्रव्यैः सिद्धाः विशेषेण पुष्टमांसरसस्तैलमनुवासनं च वातस्योपक्रमः ॥ २ ॥

प०—सर्वदोषप्रधानत्वात् वातस्य पूर्वं चिकित्सामाह—वातस्य दुष्टस्य स्नेहादिरनुवासनपर्यन्त उपक्रमः । तस्य मारुतस्य स्नेह एव सर्वोपक्रमेभ्यः प्रधान एवोपक्रमः । स चानेकप्रकारस्ततोऽनन्तरं स्वेदः । यस्मात्समीरो रूक्षशीतैरन्नपानौषधैर्यथा शीघ्रं कुप्यति, न तथान्यैर्लध्वादिगुणयुक्तैः सामान्यगुणैरप्यतः स्नेहस्वेदावनेकप्रकारौ वातस्य कुपितस्य पूर्वमन्योपक्रमेभ्यस्तदुपशान्त्यर्थौ कार्यौ, न तथाऽन्ये उपक्रमाः कृतस्नेहस्वेदस्य संशोधनं मृदुतीक्ष्णम् , तीक्ष्णस्य वातकोपकरत्वात् प्रतिषेधस्तथा भोज्यान्यौषधानि स्वाद्वम्ललवणोष्णानि नान्यरसाश्रातानि । अभ्यङ्गपूर्वं मर्दनमभ्यङ्गमर्दनम् । वेष्टनं—शाटकादिना । अङ्गस्य त्रासनमुपक्रमो वातिकेषून्मादापस्मारादिषु, न पक्षघातादिषु वातविकारेषु । सेक औषधक्काथस्नेहक्षीरादिभिः परिषेकः। पिष्टेन कृतं पैष्टिकं मद्यं सुरादि । गुडेन कृतं गौडिकम् । स्निग्धोष्णा बस्तय इति निर्देशात् रूक्षशीतानां निषेधः । बस्तिनियमो वातस्योपक्रमः । बस्तेर्नियमो नियमेन यथा बस्तिदानमित्यर्थः । बस्तिसिद्ध्युक्ताचार उत वा बस्तीनां नियमाः कर्म

कालयोगानां संख्याप्रश्चाशत् अधिका वस्तयो वस्तिनियम इयन्तः स्निग्धा इयन्तो रूक्षाः। तथा"-प्राक् स्नेह एकः पश्चान्ते द्वादशास्थापनानिच। सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः। कालः पञ्चदशै कोऽत्र प्राक्स्नेहान्ते त्रयः स्मृताः।षट् पञ्च-बस्त्यन्तरिता योगाष्टौ बस्तयोऽत्र तु॥ त्रयो नि-रूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ" सुखशी-लताशोकादि मनोऽविक्षोभकरता वर्जितेष्टविषयसे-वासौख्या निरन्तरमनेकयोनयः स्थावरजङ्गमभेदभि-न्नास्ते च दीपनैः पाचनैरौषधैः सह सिद्धा अने-का योनिराकारो येषां ते अनेकयोनयः, तस्य च वायोः कुपितस्य सर्वेभ्य उपक्रमेभ्यः विशेषाद्वल्यर्थं मद्यपिशितरस उपक्रमः मेध्यं पिशितं वल्यं मांसं तद्रसस्तथा तैलमनेनैवानुवासनेन॥ २॥

हे०—तत्र वातौषधमाह—स्नेहः शोधनादिः,स्वेदः ता-पादिः, शोधनं वमनादि। तच्च मृदु--हीनयोगेन कृतम्। वेष्टनं--वलितवस्त्रादिना समंताद्बंधनं, त्रासनमकस्माद्भयो-त्पादनं, सेकः सेचनं, वस्तयो निरूहाः, बस्तिनियमो-ऽनुवासनं, तस्य बस्तिनानियतत्वात्। सुखशीलता सुखा-भ्यासः। स्नेहास्तैलादयः। तिलतैलातसीतैलगोघृतमहिषी-घृतादिभेदादनेकयोनयः। दीपनार्थं मेध्यं मेदुरं यत्पिशितं मांसं तस्य रसस्तिलतैलमनुवासनं चेति एतत्त्रितयं विशेषे-णौषधम्॥ २॥

पित्तस्योपक्रमं वक्ति—

**पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम्।**
**स्वादुतिक्तकषायाणि भोजनान्यौषधानि च॥**
**सुगंधशीतहृद्यानां गंधानामुपसेवनम्।**
**कंठे गुणानां हाराणां मणीनामुरसा धृतिः॥**
**कर्पूरचंदनोशीरैरनुलेपः क्षणे क्षणे।**
**प्रदोषश्चंद्रमाः सौधं हारि गीतं हिमोऽनिलः॥**
**अयंत्रणसु(सु)खं मित्रं पुत्रः संदिग्धमुग्धवाक्।**
**छंदानुवर्तिनो दाराः प्रियाः शीलविभूषिताः॥**
**शीतांबुधारागर्भाणि गृहाण्युद्यानदीर्घिकाः।**
**सुतीर्थविपुलस्वच्छसलिलाशयसैकते॥**
**सांभोजजलतीरांते कायमाने द्रुमाकुले।**
**सौम्या भावाः पयःसर्पिर्विरेकश्च विशेषतः॥३॥**

सु०—उपक्रम इति वर्तते। सर्पिषः पानमि पित्तस्य प्रकुपितस्योपक्रमः। तथा हाराणां मुक्त कंठे गुणसंज्ञानां वक्षसा धृतिर्धारणम्। मणीनां कतचंद्रकांतपद्मरागादीनाम्। तथा कर्पूरादिभिः क्षणमनुलेपनम्। तथा प्रदोषादिः पित्तस्योपक्रम वर्तते। प्रदोषो रात्रिमुखम्। सुधाया इदं धवलगृहम्। हारि रम्यं गीतं गानम्। तथा मयंत्रणसुखं न विद्यते यंत्रणा यस्मिंस्तथाविधं यस्मिंस्तथाविधं मित्रम्। तथा संदिग्धाऽव्यक्ता ऽप्रौढा वाग् गीर्यस्य स एवंविधः पुत्रः। दाराः त्राणि वल्लभाः सुशीलाश्च। तथा छंदानुवर्तिन नुगुणकारिणः। शीतांबुधारा गर्भेऽभ्यंतरे येषां विधानि गृहाणि। तथोद्यानमुपवनम्। तथा दीर्घि गृहपुष्करिण्यः। तथा सौम्या भावाः पित्तस्योपक्रम क्व स्थितस्य। सुतीर्थविपुलस्वच्छसलिलाशयसैकत कायमानस्तृणगृहं तस्मिन्। शोभनं तीर्थं यस्य स सुतीर्थश्चासौ विततविमलजलाशयश्च सुतीर्थवि स्वच्छसलिलाशयस्तस्य समीपे सैकतं तस्मिन्। सि अस्मिन्देशे संतीति सिकताशर्कराभ्यां चेलण्। हार्थे ठग्दुर्निवारः स्यात्। कीदृशे कायमाने सां सपद्मं जलं यस्मिंस्तीरांते स एवं सांभोजजलस्ती यस्मिन् कायमाने तस्मिन् तथा द्रुमैर्वृक्षैराकुले व्य विशेषेण तु पयो घृतं विरेकश्चोपक्रमः॥ ३॥

प०—पित्तस्य प्रकुपितस्य सर्पिषः पानमित पक्रमः। तथा स्वादुशीतैर्मधुरशीतवीर्यैरौषधैर्वि नमधोदोषहरणमुपक्रमः। तथा भोजनान्यभ्य हाराणि स्वादुतिक्तकषायाण्युपक्रमः। तथौष नि स्वादुतिक्तकषायाण्येवोपक्रमः। तथा सुग शीतहृद्यानां मृदुसुरभिशीतलानां गन्धानां गन्ध व्याणां चन्दनादीनामुपसेवनं पित्तस्योपक्रम तथा कण्ठे गुणानां हाराणामाभरणद्रव्यप्रकार हाटकादिमयानामुरसा धृतिर्धारणम्। तेषां मौ कानां हाराणामुरसा धृतिः। तथा मणीनां वै पद्मरागचन्द्रकान्तानामुरसा धृतिः पित्तस्योपक्रम तथा कर्पूरचन्दनौषधैः क्षणे क्षणेऽनुलेपनं पित्तस्य पक्रमः। तथा प्रदोषः रात्रिप्राग्भागः। चन्द्र

सोमः । सुधया निष्पादितं गृहम् । हारि मनोहारि, रम्यं गीतं, हिमोऽनिलः शीतो वायुः पित्तस्योपक्रमः । तथा मित्रमयन्त्रणसुखं हृदयाह्लादकारि समानवेषचरितम् । पुत्रः सन्दिग्धमुग्धवाक् सन्दिग्धमुग्धानभिस्पष्टाऽप्रौढा वाक् यस्य स तथाविधः । तथा दारा गृहिण्यश्छन्दानुवर्तिन्यः । चित्तानुकूलाः प्रिया वल्लभाः पित्तस्योपक्रमः । गृहाणि शीताम्बुधारागर्भाणि, उद्यानानि दीर्घिकाः पुष्करिण्यः पित्तस्योपक्रमः । तथा कायमानं वेण्वादिनिष्पादितं गृहं विशेषद्रुमाकुलसुतीर्थविपुलस्वच्छसलिलाशयसैकते साम्भोजजलतीरान्ते स्थाने कृते पित्तस्योपक्रमः। तथा भोजनान्यभ्यवहार्याणि । सोपानपङ्क्तिस्तीर्थशब्देन भण्यते । शोभनानि च तीर्थानि विपुलं च तत् स्वच्छं च तत् सलिलं तस्याशयं स्थानं तस्य सैकतं तटं तत्र कायमानं द्रुमैराकुलं द्रुमाकुलं सहाम्भोजैर्वर्तते यज्जलं तीरान्तं यस्मिंस्तत्तथाविधं सैकतं तथा सौम्या भावादेहमनसोराह्लादाद्यैःसत्यकारिणस्तेऽपि तस्योपक्रमः । विशेषतः पयःसर्पिर्विरेकः सर्वेभ्य उपक्रमेभ्यः प्रधानतम उपक्रमः ॥ ३ ॥

हे०—पित्तस्यौषधमाह—सुगंधिशीतहृद्यानां द्रव्याणां चंदनादीनां ये गंधास्तेषाम् उपसेवनं, कंठे गुणानां कंठावलंबिनां हाराणां मुक्तावलीनां ये मणयस्तेषामुरसा धृतिः । उशीरं वीरणं, प्रदोषश्चंद्रं विनापि, अयंत्रणसुखं यन्मुखेन नियंत्रणां न करोति बुद्ध्या तु करोति, मुग्धा मृदुला, उद्यानदीर्घिका क्रीडावनवापी, सुतीर्थः सुगमप्रवेशमार्गः विपुलः स्वच्छश्च यः सलिलाशयस्तस्य सैकते सिकतामयप्रदेशे सांभोजजलतीरांतस्तीरजलाशययोः संधिर्यस्मिन्सैकते तत्तथा कायमानं तृणादिरचितागारं, सौम्या भावा मनःप्रसादनाः पदार्थाः पयःसर्पिर्विरेकश्चेति चतुष्टयं विशेषादौषधम् ॥ ३ ॥

अधुना श्लेष्मण उपक्रममाह—

**श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् ।**
**अन्नं रूक्षाऽल्पतीक्ष्णोष्णं कटुतिक्तकषायकम्॥**
**दीर्घकालस्थितं मद्यं रतिप्रीतिः प्रजागरः ।**
**अनेकरूपो व्यायामश्चिंता रूक्षं विमर्दनम् ॥**
**विशेषद्वमनं यूषः क्षौद्रं मेदोघ्नमौषधम् ।**
**धूमोपवासगंडूषा निःसुखत्वं सुखाय च ॥४॥**

स०—विधिना शास्त्रोक्तेन युक्तं तीक्ष्णं वमनविरे कफस्योपक्रमः । तथाऽन्नं रूक्षादिगुणयुक्तम् । तथा पुराणम् । रतिप्रीतिप्रजागरः । रमणं रतिस्तस्याः प्री सुखम् । तथा प्रजागरोऽतिजागरणं तथाऽनेकरू व्यायामो नियुद्धधनुराकर्षणादिकः । विशेषेण तु व यूषो माक्षिकं तथा मेदोघ्नं यदौषधं तच्च धूमादयश्च तथा निःसुखत्वं सुखाभावो दुःखरूपत्वम् । वाग्देह नःकर्मणो दुःखदस्याऽनुष्ठानाद्यदसुखमुत्पद्यते श्लेष्मणो वृद्धस्य विकारकरणहेतोरुपशमात्सुख जायते ॥ ४ ॥

प०—श्लेष्मणो निचितस्य तथा वृद्धस्य विकार रणसमर्थस्य वमनाद्युपक्रमः । तत्र वमनमूर्ध्वदो हरणम् । तच्च विधिना यथाशास्त्रोदितेन वि नेन युक्तं योजितं, तच्च तीक्ष्णद्रव्यनिष्पादितम् तथा रेचनं तीक्ष्णं श्लेष्मण उपक्रमः । तथान्नं रूक्षमल्पं तीक्ष्णं कटु तिक्तकषायं च । तथा दीर्घकालस्थितं श्लेष्मण उपक्रमः । रतिर्हृच्छ वेशक्रुपा तत्तद्व्यापारः रमणं रतिः स्त्रीसेवा त रतेः प्रीतिः सुखं तस्यां रतौ सुखेन सेवन प्रजागरो निद्राक्षयः श्लेष्मण उपक्रमः । तथा रूपो नानारूपो व्यायामो शरीरायासजननं वा । नियुद्धं धनुराकर्षणादिभिः श्लेष्मण उपक्र तथा चिन्तनं चिन्ता भावानां स्मरणम् । रूक्षं रूक्षप्रायं विमर्दनं श्लेष्मण उपक्रमः । नादीनि सर्वेभ्य उपक्रमेभ्यः श्लेष्मणः प्रधान क्रमः । तत्र यूषो धान्यैः कृतः । क्षौद्रं माक्षिक मेदोघ्नमौषधं गुग्गुल्वादि । धूमो वक्ष्यमाणलक्ष उपवासो लंघनम् । गण्डूषो मुखपूरः । निःसु त्वं सुखाभावो दुःखरूपता, वाग्देहमनःकर्म त्यन्तानुष्ठानाद्यदुत्पद्यते सहनत्वं तान्निःसुखत्वं त्वप्रतिषेधः श्लेष्मण उपक्रमः, सुखाय सु सम्पद्यन्ते ॥ ४ ॥

हे०—श्लेष्मौषधमाह—विधिना युक्तं तीक्ष्णं शोध तीक्ष्णेन शोधनेन व्यापदोऽसंभवात् । अतएव मृदुम वातपित्तशोधनयोरुक्तिः । रतिप्रीतिः—रत्यां संभोगे न तु रतिः । वमनाद्यष्टकं विशेषादौषधं सुखाय सु धनाय धर्माय, यन्निःसुखत्वं दुःखानुभवः नाऽधर्मा रोगहेतुत्वात् ॥ ४ ॥

इदानीं संसर्गोपक्रमं वक्ति—

**उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्तितः।
संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥५॥**

स०—पृथक् प्रत्येकं दोषान्वातादीनुद्दिश्याऽऽश्रित्य य उपक्रमः कीर्तित उक्तः संसर्गसंनिपातेषु च तमुपक्रमं यथास्वं विकल्पयेत् । प्रवृद्धदोषानुसारेण निरूप्य प्रयुंजीतेत्यर्थः । यथा वातपित्तसंसर्गे वातपित्तोपक्रमौ मिश्रौ । वातकफसंसर्गे वातकफोपक्रमावित्यादि एवं संनिपातेऽपि निरूप्योपक्रमः प्रयोज्यः ॥ ५ ॥

प०—योऽयमुपक्रमः पृथग्दोषानुद्दिश्य कीर्तितस्तमेवोपक्रमं संसर्गेषु तथा सन्निपाते च यथास्वं यथायथं कल्पयेत् । यथा वातपित्तसंसर्गे वातपित्तोपक्रमो विकल्पयेत् । पित्तश्लेष्मसंसर्गे पित्तकफोपक्रमो विकल्पयेत् । एवं सन्निपातेष्वप्युपक्रमत्रयं युगपद्यथायोग्यं विकल्पयेत् ॥ ५ ॥

हे०—संसर्गसन्निपातभेदानामौषधमाह—यथास्वं स्वम् आत्मीयं विशेषमनतिक्रम्य विकल्पयेत् । यथा वातपित्तसंसर्गो वातपित्तौषधमेलनमविरोधेन । तस्मिन्नेव वाताधिके वातौषधाधिक्यं, पित्ताधिक्ये पित्तौषधाधिक्यम् । एवमन्यत्रापि ॥ ५ ॥

संसर्गे भूयोऽप्युपक्रममाह—

**ग्रैष्मः प्रायो मरुत्पित्ते वासंतः कफमारुते ।
मरुतो योगवाहित्वात्कफपित्ते तु शारदः ॥६॥**

स०—उपक्रम इति वर्तते । वातपित्तसंसर्गे ग्रीष्मर्तुचर्याविहित उपक्रमः प्रायेण योज्यः । यथाऽतोऽस्मिन् पट्वम्लकटुव्यायामार्ककरांस्त्यजेत् । भजेन्मधुरमेवान्नमित्यादि सर्वं त्याज्यं सेव्यं च । कफमारुतसंसर्गे वसंतर्तुभवस्तीक्ष्णैर्वमननस्याद्यैरित्यादिरुपक्रमो योज्यः । प्रायेणेत्यत्रापि योज्यम् । ननु ग्रीष्मेऽत्यंतशीतसेवोक्ता वसंते च तीक्ष्णं वमननस्याद्युक्तमेतच्च द्वयमप्येकांतेन पवनहेतुः । तत्कथमुक्तं ग्रैष्मः प्रायो मरुत्पित्ते वासंतः कफमारुत इत्याशंक्याह । मरुतो योगवाहित्वात् । अत्राऽयं भावः । यदा किल वायुः पित्तेन युज्यते तदा दाहादिकृत् । पित्ते समे सति दाहादिकं कर्तुं मरुत्सामर्थ्यमपि च ग्रीष्मे शीतमेव सेव्यत इ नियमः । किं तर्हि स्निग्धाद्यपि तस्मान्मरुत्पित्ते विधिर्युक्तः । वसंते च कफयोगात् कफविका भवति योगवाहित्वादतो वासंतस्तीक्ष्णो वम दिर्न्याय्यः । एवं पित्तेन सह स्थितस्य वायोः चिकित्सा कफेन सह स्थितस्य वायोः कफचि स्वभाववशादिति भावः । कफपित्तसंसर्गे तु शार ऋतुचर्याविहित उपक्रमः । संनिपाते क उपक्रम वर्षर्तुचर्याविहितः । प्रावृषि हि दोषत्रयकोप ए एवाह । भजेत्साधारणं सर्वमित्यादि ॥ ६ ॥

प०—पुनरस्मिंस्त्रिविधिसंसर्गे सुखेनोपक्रमं ष्टार्थमिति निदर्शयन्नाह—मरुत्पित्ते वाता संसर्गे ग्रैष्मो विधिः ग्रैष्मर्तुचर्याध्यायोक्तः शीतः प्रयोज्यः । तथा कफमारुते संसर्गे व वसन्तचर्योक्तो विधी रूक्षोष्णप्रायो यो ननु ग्रीष्मे शीतप्रायो विधिरुक्त वसन्ते रूक्षप्रायः तत्कथं वायोः समानगुण क्रमो युज्यते शीतरूक्षत्वाद्वातस्य तत आह रुतो योगवाहित्वादिति । यस्माद्वायुर्योगवाही संयुज्यते तेनैवैक्ययोगक्षमो भवतीत्यर्थः । त ग्रन्थः—"योगवाहः परं वातः संयोगादुभयार्थ दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात् एवं यथास्वलक्षणविषये योगवाहित्वं दृष्टं चिकित्सायामपि योगसमानत्वं युज्यते तेन पित्तेन सह स्थितस्य पित्तचिकित्सा प्रयोज्या यो हित्वाद्धेतोः । तथा कफेन सह स्थितस्य क कित्सा शारदः शरच्चर्याविहितो विधिः कफपि सर्गे योज्यः ॥ ६ ॥

हे०—संसर्गभेदानामौषधांतरमाह—मरुत्पित्ते ग्रैष्म उपचारः कार्यः । कफमारुते वासंतः शारदस्य कफपित्तघ्नत्वाद्युक्तोऽतिदेशः, ग्रैष्मस्य त्वाद्वासंतस्य कफपित्तघ्नत्वादयुक्तस्तत्राह—मरुतो यो हित्वादिति योगं संबंधं वहति निर्वहति द्वितीयस्यानु नेति योगवाही । तेन पित्तयुक्तस्य वायोः नोपशांतिः, कफयुक्तस्य कफघ्नेन । प्रायोग्रहणादनु शल्यागोऽपि ॥ ६ ॥

संप्रत्युपक्रमस्य कालं वक्ति—

**चय एव जयेद्दोषं कुपितं त्वविरोधयन् ।**
**सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ ७ ॥**

स०—चयकाल एव दोषं वातादिं जयेत् । तथा छिन्नमूलत्वान्न विकुर्वीत । न कोपकालं प्रतीक्षेतेति सूचनार्थं एवशब्दः । कथं जयेदित्याह । कुपितं दोषमविरोधयन् । सर्वदोषकोपे केवलं बलवत्तरं दोषं जयेत् । कथम् । शेषदोषाविरोधेन ॥ ७ ॥

प०—साम्प्रतमुपक्रमकालमाह—दोषे वातपित्तकफाख्ये चय एव चयावस्थायामेव जयेत् चिकित्सेत् न प्रकोपकालं प्रतीक्षेत । यदा चयकाल उपेक्षितः संस्तदा तं दोषं कुपितमकुपितेनाविरोधयन् चिकित्सेत् । तेनैतदुक्तं भवति । कुपितस्तथा जेतव्यो यथा तद्विपरीतैराहारादिसदृशत्वाद्दोषान्तरं न कुप्यतीति । यदा सर्वे दोषा युगपत्कुपितास्तदा गरीयांसमधिकबलं कुपितबलं दोषं जयेत् । शेषयोः स्वल्पकुपितयोरविरोधेन साम्येन कुपितानां तु बलीयान् वायुरसाम्ये पुनर्यो यस्मादधिकः प्रदुष्टवृद्ध्या वृद्धस्तं बलीयांसं शेषदोषाविरोधेनैव जयेत् । एतत्प्रपञ्चसङ्ग्रहे ग्रन्थकारेणोक्तम्—"क्रमान्मरुत्पित्तकफाः सर्वत्र सदृशे बले । वातादीनयथापूर्वं यतः स्वाभाविकं बलम् । ऊचे पराशरो ह्यर्थममुमेव प्रमाणयन् । यथोपन्यासतः प्राप्तमादौ दोषभिषग्जितम् ॥ नेत्रभङ्गेन दृष्टो हि समं सैन्यपराजयः । स्थानतः केचिदिच्छन्ति प्राक्तावच्छ्लेष्मणो वधम् ॥ शिरस्युरसि कण्ठे च प्रलिप्तेन रुचिः कुतः । तदभावे कथं भोज्यमानद्रव्यावधारणम् ॥ असत्यभ्यवहारे च कुतो दोषविनिग्रहः । तस्मादादौ कफो घात्यः कायद्वारागतो हि सः ॥ मध्यस्थायि यतः पित्तमाशुकारि विचिन्त्यते । अतो वातसखस्यास्य कुर्यात्तदनु निग्रहम् ॥ अतएव च पित्तादिकफान्तोऽन्यैः कुतः स्मृतः । सुश्रुतस्य न सर्वत्र मतमेतद्ब्रवीमि तु ॥ जयेज्ज्वरातिसारे च क्रमात् पित्तकफानिलान् । प्रायेण तापात्मतया ज्वरतेजो विशिष्यते ॥ विशश्च सरता पित्तात्तथा च मृदुकोष्ठता । तस्य चानुबलं श्लेष्मा गौरवापक्तिजाडयकृत् ॥ वायुश्च वर्धतेऽवश्यं यत्स्नेहस्वेदयोः क्षये । ज्वरातिसारयोस्तस्मादेष दोषजये क्रमः॥कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि।यस्मादामाशयोत्क्लेशा भूयिष्ठं तत्समुद्भवः ॥ क्रमेणाद्येन तत्रापि प्रवृद्धान् स्वाशये स्थितान् । स्वाशयेषु प्रदुष्टानां स्थिरत्वैव ह्याशुकारिता ॥ विज्ञाय कर्मभिः स्वैः स्वैर्दोषोद्रेका यथाबलम् । भेषजं योजयेत्तत्र तत्र कुर्यान्न तु क्रमम् ॥ ७ ॥

हे०—औषधकालमाह—चय एव दोषं जयेन्न कोपं प्रतीक्षेत । अथ कथंचिच्चयातिक्रमकुपितं दोषं जयेत्तं पुनरविरोधयन् जयेत् । कुपितो द्विविधः प्रकृतिसमसमवेतो विकृतिविषमसमवेतश्च । तत्र प्रथमे दोषस्वरूपतुल्यरोगस्वरूपं, द्वितीयं विपरीतम् । यथा कफज्वरे कफविपरीतमुष्णत्वं तत्र ज्वरस्वरूपस्य कफप्रकोपस्य विरोधित्वान्नात्युष्णमौषधं कार्यम् । वक्ष्यति च—" ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना । तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम् ॥ " इति सर्वेषां युगपत्कोपे यो बलीयान् तं जयेच्छेषं दोषमविरोधयन् । संग्रहकारस्त्वाह " क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले । वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् ॥ ऊचे पराशरोऽप्यर्थममुमेव प्रमाणयन् । यथोपन्यासतः प्राप्तमादौ दोषे भिषग्जितम् ॥ नेतृभंगेन दृष्टो हि समं सैन्यमनाजयः । स्थानतः केचिदिच्छंति प्राक्तावत् श्लेष्मणो वधम् ॥ शिरस्युरसि कंठे च प्रलिप्तेऽन्नरुचिः कुतः । तदभावे कथं भोज्यपानद्रव्यावचारणम् ॥ असत्यभ्यवहारे च कुतो

---

१ सू०—चय एवाऽविरोधयन्वा ।

प्र. टी.—अथवा चये चयकाले एवोपचीयमानं पथ्याऽऽहारादिभिरुपक्रमेत । यथा-ग्रीष्मे कट्वम्ललवणानि वर्जयेत्, लघुस्निग्धमधुराणि द्रव्याणि शीतं द्रवञ्च सेवेत । यथा-प्रावृषि वातप्रकोपो न भवेदिति । वर्षासु जीर्णधान्यमधुरलघुस्निग्धानि च द्रव्याणि,शृतशीत जलं च सेवेत । यथा--पित्तसंचयो न भवेद्वातप्रकोपोऽपि न भवेत् । एवं हेमन्तेऽप्यविरोधयन् शुण्ठयादिसंयुक्तानि द्रव्याण्युपसेवेत । येन च प्रकोप एव न भवेदिति ॥

सू०-संसर्गसन्निपातेषु च बलवत्तरम् ।

प्र. टी.–संसर्गे द्विदोषचये सन्निपाते त्रिदोषचये च मिश्रितोपक्रमः सम्मिलितचिकित्सया उपक्रमेत । अथवा बलवत्तरं दोषं पूर्वं जयेत् । यथा वातकफसंसर्गे वातकफोपक्रमः । वातपित्तसंसर्गे वातपित्तोपक्रमः । पित्तकफसंसर्गे पित्तकफोपक्रमः । एवं वातपित्ते ग्रैष्मिको विधिः प्रयोज्यः । वातकफे वसन्तोक्तः । कफपित्ते शारदीयः । एवं संसर्गे, सन्निपाते च वा बलवत्तरं पूर्वमुपक्रमेत ॥

दोषस्य विग्रहः । तस्मादादौ कफो जेयः कायद्वारार्गलो हि सः ॥ मध्यस्थायि यतः पित्तमाशुकारि च चिन्त्यते । अतो वातसखस्यास्य कुर्यात्तदनु विग्रहम् ॥ अत एव च पित्तादिः। कफान्तोऽन्यैः क्रमः स्मृतः । सुश्रुतश्च न सर्वत्र मतमेतद्ब्रवीति तु ॥ जयेज्ज्वरेऽतिसारे च क्रमात्पित्तकफानिलान् । प्रायेण तापात्मतया ज्वरे पित्तं विशिष्यते ॥ विशेषात्सार्यते पित्तात्तथा च मृदुकोष्ठता । तस्य चानुबलः श्लेष्मा गौरवापक्तिजाड्यकृत् । वायुश्च वर्धतेऽवश्यं यत्स्नेहस्य तयोः क्षये ॥ ज्वरातिसारयोस्तस्मादेष दोषजये क्रमः ॥ कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि ॥ यस्मादामाशयोत्क्लेशाद्भूयिष्ठं तत्समुद्भवः ॥ क्रमेणानेन तत्रापि प्रवृद्धान् स्वाशये स्थितान् । स्वाशयेषु प्रदुष्टानां स्थितैवं ह्याशुकारिता ॥ विज्ञाय कर्मभिः स्वैः स्वैर्दोषोद्रेकं यथाबलम् । भेषजं योजयेत्तत्र तंत्रीकुर्यान्नतु क्रमम् '' इति ॥ ७ ॥

कुतो हेतोरित्याह—

**प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् ।**
**नाऽसौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत्॥**

स०—प्रयोगो व्याधिं शमयेदन्यमन्यं व्याधिमुदीरयेत्प्रकोपयेन्नाऽसौ विशुद्धो न श्रेष्ठ इत्यर्थः । स तु विशुद्धः प्रयोगो यः शमयेद्व्याधिं न कोपयेत् । तस्मादन्यं व्याधिमविरोधयन् व्याधिं जयेत् ॥ ८ ॥

प०—एवं मतान्तराण्युपमतान्याचार्येण—औषधाहारादियोजनारूपो यः प्रयोग एकं व्याधिं शमयेदन्यं द्वितीयमुदीरयेत् । असौ प्रयोगो न विशुद्धो न श्रेष्ठो यस्तं शमयेदन्यं न च कोपयेत् । स शुद्धः शोभनकारणत्वात् ॥ ८ ॥

हे०—तत्राशुद्धप्रयोगो हेयः, शुद्ध उपादेयः तस्मात्तयोर्लक्षणमाह——दोषाणां परस्परं न शम इत्युक्तं संग्रहे—— ''शुद्धं मलमलं जेतुं नाल्पभावादुभावपि । दोषादोषात्मकत्वाच्च न साम्येऽपि परस्परम्॥शीतस्निग्धाम्ललवणकट्वादिगुणतुल्यता । दुष्टा मिथश्च दोषेषु नातोऽन्योन्यं जयंति ते॥ आरंभकं विरोधोऽपि मिथो यद्गुणत्रयम् । विश्वस्य दृष्टं युगपद् व्याधेर्दोषत्रयं तथा '' इति ॥ ८ ॥

अथ कथं दोषाः कोष्ठाच्छाखास्थिमर्मसु यांतीत्याह—

**व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ।**
**कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च**
**दोषा यांति ॥ ९ ॥**

स०—कोष्ठादुदराच्छाखास्थिमर्माणि दोषा यांति कुत इति हेतुचतुष्टयमाह । व्यायामादिभिः शाखा मर्माणि दोषा यांति । तत्र व्यायामोपजातश्रमस्य प्रपन्नः पवनो व्यायामकृतक्षोभश्रमोष्मादिभिः प्रशि चलं च दोषं स्वास्पदाच्च्यावयित्वा पर्याकुलं शाखा क्षिपति । तथाऽन्यातपादिसंबंधिन ऊष्मणस्तैक्ष्ण्या क्ष्णेन हृदूष्मणा विलायिता दोषास्तेनैव चोष्म विवृतेषु स्रोतोमुखेषु सत्सु शाखादीन् यांति । अ त्यादि । अहितेन सेवितेन दोषाः स्वप्रमाणादतिरि मानाः कोष्ठमापूर्य वार्षिका इव जलौघा निम्नोन्नता शाखास्थिमर्माणि प्रपद्यंते । अपिः समुच्चये । द्रुत दित्यादि । द्रुतत्वाच्छीघ्रवाहित्वान्मारुतस्य कोष्ठाच्छा स्थिमर्माणि दोषा यांति ॥ ९ ॥

प०—कोष्ठादामपक्वाशयापरपर्यायाच्छाखास्थि र्माणि व्यायामादिभिः दोषा यान्ति । शा रक्तादयो धातवः त्वक् अस्थीन्यस्थिसन्धयः मर्म शिरोहृदयप्रभृतीनि । शरीरायासजननं व्याय उच्यते । ऊष्मणोऽग्नेस्तैक्ष्ण्यात् प्रबलत्वात् अ ताचरणादपथ्यसेवनात्तथा मारुतस्य वातस्य त्वात् प्रकोपाच्छाखादीनि दोषा यान्ति ॥ ९ ॥

हे०—अथ स्थानभेदोपक्रमः । तत्र दोषाणां स्थानां प्राप्तिप्रकारमाह--व्यायामादिभिश्चतुर्भिः कोष्ठस्था दो शाखाख्यं बहिर्मार्गं यांति, मध्यं वा अस्थिमर्माख्यम् । शाखास्था अस्थिमर्मस्था वा ॥ ९ ॥

शाखादिभ्यः कथं दोषाः कोष्ठं यांतीत्याह—

**तथा तेभ्यः स्रोतोमुखविशोधना**
**वृद्ध्याभिष्यंदनात्पाकात्कोष्ठं वायोश्च निग्रहा**

स०—स्रोतसां मुखानि तेषां विशोधनं वि तस्माद्दोषाः कोष्ठं यांति । तथा वृद्ध्यादिभिः । वृ स्वप्रमाणातिरेकः । वृद्धा हि दोषाः स्वानि स्रोतां पूर्य कोष्ठं यांति।अभिष्यंदनं च नाग्नितापादितीक्ष्णो

दिसंश्लेषादेवाऽपि तु क्षीराद्यभिष्यंदिभोजनादपि । एवं पाकात् । पाचनादिभिः पक्का दोषाः क्वचिदनासज्जंतः कोष्ठं यांति । किंच । वायोश्च निग्रहात् । चशब्दान्न केवलं पूर्वेभ्यो हेतुभ्यो यावद्वाय्वप्रेरणाच्चेत्यर्थः॥१०॥

प०–तथा तेभ्यः शाखास्थिमर्मभ्यः कोष्ठे शरीरमध्ये पुनर्दोषा यान्ति । स्रोतसां यानि मुखानि तेषां शोधनाद्विशुद्धेस्तथा वृद्ध्याधिक्येन प्रबलत्वेन तथाभिष्यन्दनाद्द्रलनाल्लवणक्षीराभिष्यन्दिद्रव्याभ्यवहारात् पाकान्निरामतया पवनादिभिः कोष्ठं यान्तीति सम्बन्धः तथा वायोर्विक्षेपसंहारकस्य निग्रहात् प्रशमात् ॥ १० ॥

हे०–स्रोतोमुखशुद्ध्यादिभिः । पञ्चभिर्हेतुभिः कोष्ठं यांति । अभिष्यंदनं--द्रवीभावः ॥ १० ॥

कोष्ठस्था दोषाः किं कुर्युरित्याह–

**तत्रस्थाश्च विलंबेरन् भूयो हेतुप्रतीक्षिणः॥११॥**

स०–तत्रस्थाः कोष्ठस्थाश्च दोषा विलंबेरन्न रोगानुत्पादयेयुर्यस्मात्ते भूयो हेतुप्रतीक्षिणः । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनाद्धेतौ प्रथमा । भूयो हेतुप्रतीक्षित्वादित्यर्थः । वृद्धोऽपि हि दोषः कोष्ठे शाखादौ वा मार्गांतरे गतो हीनशक्तित्वान्न रोगोत्पादनसमर्थो भवति ॥ ११ ॥

प०–तत्रस्थाः कोष्ठस्थानस्था दोषा विलम्बेरन् न रोगान् कुर्वीरन् । सहकारणवैकल्याद्यदा रोगोत्पादनक्षमा न भवन्ति विकारकारणकरणान्तरापेक्षिणो भूयो बहुनिमित्तमपेक्षन्ते तच्छीलाः ११॥

हे०–एवं दोषाः कोष्ठस्थाः किं कुर्युरित्याह-यावत्स्थानांतरगमने हेतुं न लभंते, लब्धे तु हेतौ पुनः स्थानांतरं यांतीत्यर्थः ॥ ११ ॥

यद्येवं किं कदाचिदप्यन्यस्थानगता दोषा हीनशक्तित्वान्न रोगान् कुर्युरित्याह–

**ते कालादिबलं लब्ध्वा कुप्यंत्यन्याश्रयेष्वपि ।**

स०–ते दोषाः कालदेशदूष्यप्रकृत्यपथ्यादेः समानगुणाद्बलं लब्ध्वा कुप्यंति । विकारमुत्पादयंतीत्यर्थः । कुत्र स्थान इत्याह । अन्याश्रयेष्वपि कोष्ठाश्रयाः शाखादिमर्मस्वपि । शाखामर्माश्रिताः कोष्ठेष्वपीत्यर्थः । न केवलं स्वस्थानस्था एव कुप्यंतीति सूचनार्थोऽपिशब्दः ॥ १२ ॥

प०–ते दोषाः कालदूष्यदेशप्रकृतीनां बलं सामर्थ्यं लब्ध्वा प्राप्य कुप्यन्ति । अन्याश्रयेष्वपि पराश्रयेष्वपि ॥ १२ ॥

हे०–स्वस्थाने परस्थाने वा विलंबमानाद्दोषाः स्वैः स्वैः प्रकोपणैः प्रकुप्यंतीत्याह--ते कालादिबलं लब्ध्वा कुप्यंत्यन्याश्रयेष्वपीति ॥ १२ ॥

इदानीं परस्थानगतानां दोषाणां विकल्पेन चिकित्सामुपदिशन्नाह–

**तत्राऽन्यस्थानसंस्थेषु तदीयामबलेषु तु ॥१३॥**

स०–तत्र तेषु वातादिष्वन्यस्थानसंस्थेषु । अन्यस्य स्थानमन्यस्थानं तत्र संतिष्ठंतेऽन्यस्थानसंस्थास्तेषु परस्थानगतेषु तदीयां स्थानिदोषसंबंधिनीमेव चिकित्सां कुर्यान्न स्वकीयाम् । तस्य परस्थानदोषस्येयं तदीया ताम्। किंभूतेषु दोषेषु । अबलेषु । तुरवधारणे । अबलेष्वेव न बलवत्सु । बलवत्सु हि स्वामेव चिकित्सां वक्ष्यति ॥ १३ ॥

प०—तत्र तेषु दोषेषु प्रकुपितेष्वन्यस्थानसंस्थेषु तदीयां कुर्यादिति सम्बन्धः। तत्रेति निर्धारणे। तेषुदोषेष्वन्यस्थानसंस्थेषु तदीयामन्यस्थानसम्बन्धिनीं चिकित्सां कुर्यात्। आगन्तुकदोषसम्बन्धिनीं तदित्यनेन सर्वनाम्नाऽन्यस्थानं परामृश्यते। तात्स्थ्याच्च तत्स्वामी दोषोऽन्यस्थानसंस्थेष्वित्यत्र यदेतद्बहुवचनं तत्पर्यायंतोऽन्यस्थाने सन्तिष्ठमानत्वात्तदपेक्षमन्यथा द्वयोरेकस्य वा दोषस्यान्यस्थानसंस्थानं सम्भवति। त्रयाणां स्थानान्तराभावात्त्रयो दोषाः स्थानान्येतेषां त्रीण्येव न चतुर्थकं पदापेक्षान्यस्थानसंस्थानं तेषां सम्भवति तस्मात्पर्यायतः सन्तिष्ठमानत्वात्तेषां बहुवचनमत्र बोद्धव्यमित्येषोऽर्थः। अन्यस्थानं तत्र सन्तिष्ठत इत्यन्यस्थानसंस्थानुपाकेषु च तदेवात आह-अबलेषु हीनबलेषु दोषेष्वन्यस्थानसंस्थेषु तदीयामन्यस्थानदोषसम्बन्धिनीं चिकित्सां कुर्यान्न सर्वेषु बलवत्सु हीनबलेष्वपि। तुशब्दोऽवधारणे । तदीयामन्यस्थानस

न्यसम्बन्धिनीमेव नागन्तुदोषसम्बन्धिनीं बलवत्सु पुनर्नान्यस्थानसंस्थेषु किं कुर्यात्॥ १३ ॥

हे०—आगंतोर्दोषस्य हीनबलस्य स्थानिनश्चिकित्सा कार्येत्याह—तदीयां यस्य स्थाने कुपितस्तस्य चिकित्साम् ॥ १३ ॥

अत एवाह—

**कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु१४**

स०—बलेनात्मीयया शक्त्याऽन्याभिभाविष्वन्यस्थानिदोषमभिभवितुं शीलं येषां तेऽन्याभिभाविनः । स्थानिदोषं पराभूय तत्र ये संतिष्ठंत इत्यर्थः । तेषु स्वामेव चिकित्सां कुर्यादित्यर्थः । किमेष एव नियमो यदन्यस्थानगतेष्वबलेष्वागंतुषु स्थानिदोषसंबंधिनीं चिकित्सां कुर्यात् । बलवत्सु पुनरागंतुसंबंधिनीं चिकित्सां कुर्यात् ॥ १४ ॥

प०—इत्यत आह—स्वामेव बलेनान्याभिभाविषु स्वामेवात्मीयामेवान्यस्थानसंस्थेषु चिकित्सां कुर्यान्न तदीयमन्यस्थानसम्बन्धिनीम् । किंभूतेषु बलेन स्वशक्त्यान्यदोषमाभिभवितुं शीलं येषां तेऽन्याभिभाविनो दोषा अन्यस्थानसंस्थानेष्वन्याभिभवनशीलेष्विति ॥ १४ ॥

हे०—आगंतोरपि प्रबलस्य स्वचिकित्सैव कार्येत्याह—स्वामेव बलेनान्याभिभाविष्विति ॥ १४ ॥

अथ पक्षांतरेऽपि कुत्रचित्क्वचिद्विद्यत इत्यत आह—

**आगंतुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा१५॥**

स०—स्थानिनं दोषं प्रतिकृत्य यथाऽसौ स्थानिदोष आगंतुदोषचिकित्सानिर्वर्तनान्न विकारं कुर्यात्तथा तस्य पूर्वं प्रतीकारं कृत्वा पश्चात् स्वैरेवोपक्रमैरबलिनमप्यागंतुं दोषं शमयेच्चिकित्सेत् । न केवलमन्यस्थानसंस्थेष्वागंतुष्वबलेषु स्थानिदोषचिकित्सां कुर्याद्यावदागंतुदोषचिकित्सामपि कुर्यादित्यर्थः । अथाऽसौ स्थानिदोष आगंतुदोषेण बलवत्त्वादभिभूयते ततोऽस्य विकारकरणं प्रत्यसमर्थत्वात्तत्प्रतीकारमकृत्वैव चागंतुं शमयेदिति वाशब्दार्थः । अन्यस्थानसंस्थेष्विति बहुवचननिर्देशः पर्यायेण दोषाणां स्थितत्व द्वयोरेकस्य वाऽन्यस्थानस्थितत्वं संभवति न णाम् ॥ १५ ॥

प०—किमेष एव नियमोऽथ पक्षान्तरं दन्यमत्र विद्यत इत्याह—स्थानिनो दोषान् ! यथायथं दोषोपक्रमणीयोक्तैरुपक्रमैर्वाऽऽगन शमयेत् । अबलवन्तमपि तस्याबलवत अ दोषस्य चिकित्सा कार्येति अबलवदागन्तु षय एवं विकल्पवतागन्तुषु यतः स्वामेव चि कुर्यादित्येवंनियमस्तस्मादन्यस्थानसंस्थेष्वबले यान्यस्थानदोषचिकित्सा कार्या । अन्यस दोषान् प्रतिकृत्यागन्तुदोषचिकित्सा कार्या वत्सु पुनर्दोषेषु अन्यस्थानसंस्थेषु सर्वद चिकित्सा कार्या । बलवत्सु पुनर्दोषेषु अ नसंस्थेषु सर्वदात्मीयैव चिकित्सा कार्येति इत्यत्रापि यद्बहुवचनं तत्पर्यायत एव दोषा बहुवाख्या तदा ॥ १५ ॥

हे०—आगंतुस्थानिनोस्तुल्यबलयोः क्रमेण कार्येत्याह—स्थानिनं प्रतिकृत्य आगंतुं श आगंतु प्रतिकृत्य स्थानिनं शमयेत् । प्रतिकृत्य कृत्वा ॥ १५ ॥

तिर्यग्गतेषु दोषेषु यत्कार्यं तदाह—

**प्रायस्तिर्यग्गता दोषाः क्लेशयंत्यातुरांश्चि**
**कुर्यान्न तेषु त्वरया देहाग्निबलवित्क्रियाः**

स०—तिर्यग्गता दोषाः प्रायो बाहुल्येन श्चिरं क्लेशयंति पीडयंति । तेषु तिर्यग्गतेषु त्वरया शीघ्रमेव क्रियां चिकित्सां न कुर्याद्वैद्य इ कीदृशो वैद्यो देहाग्निबलाभिज्ञः॥ १६ ॥

प०—इदानीं तिर्यग्गतेषु दोषेष्वपरं चि कल्पं दर्शयन्नाह—प्रायो बाहुल्येन तिर्यग्ग ग्विमिश्रिता दोषा वातादयः क्लेशयन्ति न्यातुरान् रोगिणः चिरं बहुकालं तेषु तिर्यग्गतेषु त्वरया देहाग्निबलविद्वैद्यः चिकित्सां कुर्यात् ॥ १६ ॥

हे०—तिर्यग्गताः शोधनमार्गं परित्यज्य स्थित र्बहिर्वा शोधयितुमशक्यत्वाच्चिरं क्लेशयंति । अ त्वरया चिकित्सां कुर्यात् । देहमग्निबलं विचार्य श दित्यर्थः । तान् तिर्यग्गतान् शमयेत् ॥ १६ ॥

कथं तेषामुपक्रमः कार्य इत्याह--

**शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ।**

स०—तांस्तिर्यग्गतान् दोषान् प्रयोगेण शास्त्रविहितेन शमयेत् । सुखं वेति । यथा वा देहपीडा न भवति तथा क्रमेण कोष्ठमानयेद्वृद्ध्याऽभिष्यंदनादित्यादिना ॥ १७ ॥

प०—किं तर्हि तान् दोषान् प्रयोगेण युक्त्या शमनात् शमं नयेत् ॥ १७ ॥

हे०--अथवा सुखमक्लेशेन स्नेहस्वेदादिप्रयोगेण कोष्ठमानयेत् ॥ १७ ॥

**ज्ञात्वा कोष्ठप्रपन्नांश्च यथाऽऽसन्नं विनिर्हरेत् १८**

स०—ज्ञात्वेत्यादि । कोष्ठगतांश्चावगत्य यथाऽऽसन्नं विनिर्हरेत् । यो यस्यासन्नो मार्गो गुदं मुखं घ्राणं वा तेनैव यथाऽऽसन्नं वमनविरेचनादिना निष्कासयेदित्यर्थः ॥ १८ ॥

प०—ज्ञात्वा बुद्ध्वा । कोष्ठप्रपन्नान् शरीरे सम्यग्गतान् दोषांस्तिर्यगन्यथासन्नं यो य आसन्नो मार्गो घ्राणमुखादिस्तेन मार्गेण वमनादिभिर्विनिर्हरेत् बहिर्निष्कासयेत् ॥ १८ ॥

हे०—तत ऊर्ध्वम् अधोवायुर्निर्हरेत् । अल्पत्वबहुत्वाभ्यां विकल्पव्यवस्था विचार्या ॥ १८ ॥

संप्रति साममललिंगमाह—

**स्रोतोरोधबलभ्रंशगौरवानिलमूढताः ।**
**आलस्यापक्तिनिष्ठीवमलसंगारुचिक्लमाः ।**
**लिंगं मलानां सामानां निरामाणां विपर्ययः १९**

स०--स्रोतसां रोधः । बलस्य भ्रंशो हानिर्बलभ्रंशः । गौरवं गुरुत्वम् । अनिलस्य वायोर्मूढता सम्यगसंचारः । आलस्यं तंद्रा । अपक्तिराहारस्याऽपाकः । निष्ठीवो मुखस्रावः । मलस्य पुरीषादेः संगोऽप्रवृत्तिः । अरुचिरन्नानभिलाषः । क्लमो ग्लानिः इत्येतत्सामानां मलानां लिंगं लक्षणम् । निरामाणां विपर्ययोऽस्माद्वैपरीत्यम् ॥ १९ ॥

प०—स्रोतोरोधादिर्लिंगं लक्षणं भवति । तत्र स्रोतसो रोधः ऊर्ध्वाधो दोषाप्रवृत्तिः । बलस्य भ्रंशो विघातः । गौरवमंगस्य । अनिलस्य मूढता स्पष्टताऽगतिः । आलस्यमनुत्साहः । अपक्तिरपचनमाहारस्य । निष्ठीवः श्लेष्मणो निरसनम् । मलानां मूत्रपूरीषादीनां संगोऽप्रवृत्तिः । अरुचिरन्नविद्वेषः । क्लमोऽपचयः । एतत्सर्वं लिंगं मलानामामानां विद्यात् । निरामानां पुनर्विपर्ययोऽन्यथाभावः । प्रकृतादनन्तरोक्ताल्लक्षणात्तेन स्रोतःशुद्धिर्बलप्रादुर्भावो लघुत्वं मारुतस्यानुलोम्यमन्नपाकः । कफस्यानुद्गिरणम् । मलप्रवृत्तिराहाराभिलाष उत्साहश्चेति ॥ १९ ॥

हे०—अथ सामदोषोपक्रमः । तत्र सामलक्षणमाह—स्रोतोरोधेति । निरामलक्षणमाह—निरामाणामिति । विपर्ययः--स्रोतःशुद्ध्यादिरूपः ॥ १९ ॥

संप्रति आमसंभवमाह--

**ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।**
**दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ २० ॥**

स०—ऊष्मणोऽग्नेरल्पबलत्वेन दौर्बल्येनाद्यं प्रथमधातुं रसं रसाख्यमपाचितमामं प्रचक्षते वदंत्याचार्या इति शेषः । किंभूतं रसम् । आमाशयगतम् । तथा दुष्टं वाताद्यनुशयितम् । रसग्रहणं पवनस्य निरासार्थम् । अन्यथा आद्यो धातुर्वाताख्य इत्याशंक्येत । वातादीनामपि हि धारणाद्धातुसंज्ञाऽस्त्येव ॥ २० ॥

प०—निरामानां लक्षणं पुनरामयुक्ता मला वातादयः सामा इत्युच्यन्ते तदर्थमाह—आद्यं धातुं महारसाख्यं जाठरस्योष्मणोऽबलत्वेन हेतुनाऽपाचितमपक्वं वातादिदोषानुशयितमामाशयस्थं दुष्टं विकृतं रसमामामित्येके वदन्ति प्रचक्षते ॥ २० ॥

हे०—आमलक्षणमाह—ऊष्मणो रसाग्नेः धातुं न दोषं मलं वा । आद्यं न रक्तादिकं, रसं न रसत्वात्प्रच्युतं रक्तत्वमप्राप्तम् ॥ २० ॥

**अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्छनात् ।**
**कोद्रवेभ्यो विषस्येव वदंत्यामस्य संभवम् २१॥**

स०--अन्येऽपरे आचार्या दोषेभ्य एव वातादिभ्योऽतिदुष्टेभ्योऽन्योन्यमूर्छनात् । परस्परमिश्रीभावादामस्य संभवं कथयंति । केभ्यः कस्येव । यथा कोद्रवेभ्यो विषस्य सम्भवं कथयंति तथा दोषेभ्य आमस्य संभवम् ॥ २१ ॥

प०—अन्ये पुनराचार्या अन्यथाऽऽमस्य सम्भवं वदन्ति । दोषेभ्यो वातादिभ्य एवातिदुष्टेभ्यः प्रागत्यर्थं निचितेभ्य उत्तरकालं विदग्धेनाहारेणान्योन्यं परस्परं मूर्छनान्मिश्रीभावात्तेन तदामयस्य सम्भवं कथयन्ति । यथा कोद्रवाख्येभ्यो धान्येभ्यो देवाकालाद्यपेक्षया विषसम्भवं वर्णयंति । तेनैतदुक्तं भवति । यथा कोद्रवा एव विषं सम्पद्यन्ते एवं दोषा अपि अतिदुष्टेन स्वेनैव भावेनामाः सम्पद्यन्ते २१॥

हे०—मतांतरेणामलक्षणमाह—अन्योऽन्यमूर्छनात् परस्परमेकलोलीभावात् ॥ २१ ॥

**आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः ।**
**सामा इत्युपदिश्यंते ये च रोगास्तदुद्भवाः २२॥**

स०--तेन पूर्वोक्तलक्षणेनाऽमेन संपृक्ताः संयुक्ता दोषा दूष्याश्च रसादयः । कीदृशाः । दूषितास्तैरेव वातादिभिः । सहामेन सामा इत्युपदिश्यंते तत्र तत्र प्रदेशे तंत्रे भण्यंते । ये च रोगा ज्वरादयस्तदुद्भवा वातादिदोषसमुत्थास्तेनामेन युक्ताः सामा इत्युच्यंते । यथेहैव । अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे इति। आमलक्षणं चैवं पठंति । द्रवं गुर्वनेकवर्णं हेतुः सर्वरोगाणां स्निग्धं पिच्छिलमामं तंतुमदनुबद्धशूलं दुर्गंधीत्यादि । समानां च वातादीनां संग्रहे पृथग्लक्षणमुक्तम् । यथा । वायुरामान्वयः सार्तिराध्मानकृदसंचरः। दुर्गंधमसितं पित्तं कटुकं बहलं गुरु । आविलस्तंतुमान्स्त्यानः प्रलेपी पिच्छिलः कफः । विपर्यये तु पक्वत्वं तथा ताम्रं समेचकम् । पीतं च पित्तमच्छं च श्लेष्माऽच्छः पिंडितोऽथवा । विशदश्च सफेनश्च धवलो मधुरो रस इति ॥ २२ ॥

प०—अतएव वातादिभ्यः सकाशादामस्यार्थान्तरतामवगमयन्नाह—आमेन तेन यथोक्तलक्षणेन दोषा वातादयः सम्पृक्ता मिश्रीभावं प्राप्ताः । तथा दूष्याश्च । रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राख्या मिश्रितार्थप्रकृताः । कीदृशास्ते दूषिताः प्रवृत्तत्वाद् दुष्टतां नीताः सन्तः सहामेन सामा इत्युपदिश्यन्ते । तथा ये च रोगास्तदुद्भवाः सामेभ्यो दोषेभ्यः तथा प्रदूषितेभ्यो धातुभ्यो मलेभ्यश्च उत्पन्नाः सामा इत्युपदिश्यन्ते भण्यन्ते ॥ २२ ॥

हे०—सामत्वं व्याचष्टे—" वायुः सामो विबंधाग्निसादस्तंभान्त्रकूजनैः । वेदनाशोफनिस्तोदैः क्रमशोऽङ्गानि पीडयन् ॥ विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् । स्नेहाद्यैर्वृद्धिमायाति सूर्यमेघोदये निशि ॥ निरामो विशदो रूक्षो निर्विबंधोऽल्पवेदनः । विपरीतगुणैः शांतिं स्निग्धैर्याति विशेषतः॥ दुर्गंधि हरितं श्यावं पित्तमम्लं घनं गुरु । अम्लीकाकंठहृद्दाहकरं सामं विनिर्दिशेत् ॥ आताम्रपीतमत्युष्णं रसे कटुकमस्थिरम् । पक्वं विगंधि विज्ञेयं रुचिवह्निबलप्रदम् ॥ आविलस्तंतुलः स्त्यानः कंठदेशेऽवतिष्ठते। सामो बलासो दुर्गंधिः क्षुदुद्गारविघातकृत् ॥ फेनवान्पिंडितः पांडुर्निःसारो गंध एव च । पक्वः स एव विज्ञेयश्छेदवान् वक्त्रशुद्धिदः॥" सामैर्दोषैर्धातुभिर्मलैश्च जनिता दोषा अपि सामा उच्यंते ॥ २२ ॥

सामा अपि दोषा यादृशा न निर्हार्यास्तादृशान् दर्शयति--

**सर्वदेहप्रविसृतान् सामान् दोषान्न निर्हरेत् ।**
**लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ।**
**आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः २३॥**

स०--सामान् दोषान् वातादीन् सर्वस्मिन्देहे प्रविसृतान् व्याप्ताशेषकायान् धातुषु रसादिषु लीनान् क्लिष्टाननुत्क्लिष्टान् स्वस्थानादचलितान् न निर्हरेद्वमनादिभिर्न शोधयेत् । कुतः । दुर्निर्हरत्वाद्दुःखेन निर्हर्तुं शक्यत्वात् । ते हि निर्ह्रियमाणा आश्रयस्य शरीराख्यस्य नाशाय स्युः । यावत्तु सर्वदेहप्रविसृता न भवंति यथा भुक्तानंतरं ज्वरोत्पत्तौ नवातिसारे च तथा वमनेन हरीतक्या च यथायोगं निर्हारोऽनुज्ञात एव ग्रन्थकृता । अत्र दृष्टांतमाह । फलादित्यादि । आमादपक्वात्फलादाम्रादे रसो निर्ह्रियमाणो दुर्निर्हरत्वादाश्रयस्य फलस्य यथा नाशाय भवत्येवं दोषा अपि ॥ २३ ॥

प०–ते पुनः किं निर्हर्तव्या आहोस्विन्न र्हर्तव्या इत्यत्यत आह-दोषान् सामानामसंपृक्तान् देहप्रविसृतान् आपादमस्तकं व्याप्य स्थितान् नान् सूक्ष्मशिरास्नायुमर्मान्तरानुसन्ध्यन्तरानु- ष्टान् धातुषु रसाद्येषु विलग्नान् श्लिष्टान् स्या- भूतानन्नुत्क्लिष्टान् स्वाशयादचलितान् वमना- भिर्न निर्हरेन्नापकर्षेत् । महात्ययत्वाच्च तेषाम् । देव दृष्टान्तेनाह–फलादामाद्रसानिवेति । इव- दो यथार्थे । यथा फलान्मातुलिङ्गामलकद्राक्षा- मादपक्काद्रस आह्रियमाणः फलस्यैव विनाशाय ति नच शक्यते सर्वो रसो निःसारयितुम् । प्राप्तकालत्वात् । अतएवोदाहरणसूचितमर्थं प्रक- न्नाह यस्मात्ते सामा दोषा अनुत्क्लिष्टाः सर्वदेह- ष्टा धातुषु लीना ह्रियमाणा आश्रयस्य शरी- व्यस्य विनाशाय स्युर्भवेयुः । दुर्निर्हरत्वाद्धेतोः खेन निर्हर्तुं शक्यमानत्वेन क्लेशेनाल्पं च स्राव- तुं शक्यते ॥ २३ ॥

हे०–सामेषु दोषेषु अवस्थाविशेषेण शोधनं निषे- तें—व्याप्तदेहान् धातुलीनान् अनुत्क्लिष्टान् सामान् शोधयेत् । ते हि दुःखसाध्यत्वादाश्रयस्य नाशाय : ॥ २३ ॥

तर्हीदृशे दोषे किं कार्यमित्याह--

**चनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ।**
**ाधयेत् शोधनैः काले यथासन्नं यथाबलम् ॥**

स०–तांस्तथाविधान् दोषान् पाचनैर्ज्वराद्यध्या- क्तैः । दीपनैरिति पाचनानां स्नेहानां च विशेषणं व्यदीपवत् । अग्निदीप्तिकृद्भिः पाचनैः स्नेहैश्च रिष्कृतान् परिकल्पितान् कृतसंस्कारान् यथा- न्नं यथाबलं च कृत्वा यथोक्ते काले शोधनै- व्यैः शोधयेत् । यथासन्नमिति । यस्य दोषस्या- न्नो यो मार्गस्तेनैव तं निर्हरेत् । यथाबल- ति । यस्य यावद्बलमातुरस्योत्तमं मध्यममधमं वा ज्ञात्वा मृदुना मध्येन तीक्ष्णेन वा शोधनेन शोधये- त्यर्थः ॥ २४ ॥

प०–तेषां किं भेषजमिति दर्शयन्नाह–दोषपच- ात् पाचनस्य निर्वचनम् । तस्मात्तांस्तथाविधान् दोषान् स्नेहैः स्वेदैश्च वक्ष्यमाणाननुत्क्लिष्टान् पाच- नादिभिः क्रमेण परिष्कृतान् यथासन्नं यथाबलं काले योग्ये शोधनैः शोधनद्रव्यैः शोधने निर्ह- रेत् । यथासन्नमिति यस्य दोषस्यासन्नो मार्गस्तेनैव निर्हरेत् । यथामाशयस्थान् वमनेन निर्हरेत्। पक्वा- शयस्थान् बस्तिभिः,शिरोगतान् नस्यैर्यथाबलमतिप्र- कृष्टबलांस्तीक्ष्णैर्मात्राधिकैरौषधैर्निर्हरेत् । मध्यबला- न्मध्यैरल्पबलान् मृदुभिरिति यथोक्ते काले शोधन- द्रव्यैः शोधयेत् ॥ २४ ॥

हे०–तानेव शोधनयोग्यान् कृत्वा शोधयेदित्याह— परिष्कृतान् शोधनयोग्यतां नीतान् । तत्र पाचनैः पक्वत्वं, दीपनैर्धातुभ्यः पृथक्त्वं, स्नेहैः क्लिन्नत्वं, स्वेदैः कोष्ठगतत्वम् ॥ २४ ॥

कस्य को मार्ग आसन्न इत्याह—

**हंत्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ।**
**घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद्गुदेन च २५॥**

स०–द्रव्यं वक्त्रेण युक्तं पीतमामाशयादाशु मलान् हंति । घ्राणेन तु पीतमूर्ध्वजत्रूत्थान्मलानाशु हंति । गुदेन युक्तं पक्वाधानात् पक्वाशयादाशु मलान् हंति ॥ २५ ॥

प०–वक्त्रेणास्येन प्रयुक्तं द्रव्यमौषधमामाशयान् दोषान् मलान् हन्तीति । शीघ्रं घ्राणेन नासया युक्तं द्रव्यमूर्ध्वजत्रूत्थान् मलान् आशु हन्ति । गुदेन पायुना युक्तं द्रव्यं पक्वाधानस्थानपक्वाशयस्थान् मलानाशु शीघ्रं हन्ति । यथानुत्क्लिष्टा दोषा सामा न वाहयितव्या एवं स्वयं वहन्तोऽपि सामा दोषा रक्तपित्तातिसारादिषु प्रथमतः सङ्ग्रहेण निवाह- यितव्याः ॥ २५ ॥

हे०–यथासन्नत्वं व्याचष्टे—आमाशयादामाश- यमभिव्याप्य पक्वाधानात्पक्वाशयमभिव्याप्य " ल्य- ब्लोपे पञ्चमी " जत्रूत्थान् जत्रु स्कंधसंधिः तस्योर्ध्वम् , ऊर्ध्वजत्रु ॥ २५ ॥

इदानीं यादृशा आमा न धार्यास्तादृशान् दर्शयति-

**उत्क्लिष्टानध ऊर्ध्वं वा न चामान्वहतः स्वयम् ।**
**धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः २६॥**

स०—अथ ऊर्ध्वं वोत्क्लिष्टानामान् स्वयं वहतो यत्नं विनैव प्रवृत्तानौषधैः स्तंभनैर्न धारयेत् । कुत इत्याह। हि यस्मात्ते दोषा विधृता रोगदा ज्वरादिकारिणः ॥ २६ ॥

प०—अनेन रोगकारणका यादृशा न धार्यास्तानाह—उत्क्लिष्टान् बहिर्मुखीभूतान् दोषान् निर्गमाभिमुखान् स्थानेभ्यः प्रविचलितान् सामान् सतः अधोमार्गेण गुदमेढ्राख्येन तथोर्ध्वमार्गेण मुखनासिकाख्येन स्वयं वहतः यत्नं विनैव प्रवृत्तांस्तान्निर्गच्छत । औषधैस्स्तम्भनरूपैर्न धारयेत् न स्तम्भयेत् । यस्मात्ते सामदोषाः स्वयं वहन्तो विधृताः सन्तो रोगदा व्याधिहेतवो भवन्ति ॥ २६ ॥

हे०—स्वयं प्रवृत्तान् सामान् न स्तंभयेदित्याह ॥२६॥

तेषु तु यत्कार्यं तदाह—

**प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ।**
**विबद्धान् पाचनैस्तैस्तैः पाचयन्निर्हरेत वा ॥**

स०—अतोऽस्माद्धेतोः प्रवृत्तान् प्राक् प्रारंभकाले दोषान् हितभोजिन उपेक्षेत संग्रहणेन न धारयेत्। विबद्धानीषत्प्रवृत्तांस्तैस्तैर्यथोक्तैः पाचनैः पाचयेत् पाकं नयेन्निर्हरेद्वा ॥ २७ ॥

प०—अतो हेतोः प्राक् पूर्वं प्रवृत्तान् दोषानुपेक्षेत न स्तम्भयेत् कस्य हिताशिनो ह्यनुरूपहितभोजिनः पुंसः दोषाद्यनुरूपेण हितं पथ्यमश्नाति यः तस्य हितभुजः पथ्यसेविन इत्यर्थः । तत्र स्तम्भनमौषधं न प्रयोज्यं पाचनं दीपनं शमनं वात्र भेषजम् । अथवा विबद्धान् सामान् दोषान् ईषत्प्रवृत्तांस्तैस्तैः पाचनैर्यथायोग्यं पाचयेत् । निरामतां कुर्वन्निर्हरेत् "तथा चय एव जयेद्दोषान् प्रकोपं न प्रतीक्षयेत्" इति ॥ २७ ॥

हे०—स्वयं प्रवृत्तेष्वामेषूपेक्षैव भेषजमित्याह—प्राक् प्रथमं यावन्न बलहानिः । स्वयं प्रवृत्तेषु सविबंधेषु पाचनं निर्हरणं वा कार्यमित्याह--पूर्ववद्विकल्पव्यवस्था । अथौषधकालः । तत्रौषधं द्विविधं—शोधनं, शमनं चेति ॥ २७ ॥

अथ कः शोधनकाल इत्याह—

**श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् ।**
**ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ॥**

स०—क्रमाद्यथाक्रमं ग्रीष्मचितं वायुं श्रावणे निर्हरेत् । वर्षाचितं पित्तं शरदि निर्हरेत् । हेमंतशिशिरचितं कफं वसन्ते निर्हरेत् । एते हि साधारणाः कालाः । अत एतेषु शोधनं युक्तम् ॥ २८ ॥

प०—दोषाणां शोधनकालमाह—ग्रीष्मादिषु त्रिषु कालेषु चितान् सञ्चयं प्राप्तान् श्रावणे कार्तिके चैत्रे साधारणे काले निर्हरेत् शोधयेत् । ग्रीष्मे चितं वातं श्रावणे साधारणे काले निर्हरेत् शोधयेत् । तथा वर्षाचितं पित्तं कार्तिके साधारणे निर्हरेत् । हिमचितं कफं चैत्रे साधारणे काले निर्हरेत् ॥ २८ ॥

हे०—तत्र स्वस्थस्य शोधनकालमाह—साधारणे वृष्टिशीतोष्णातिशयरहिते हेतुगर्भं चेदं विशेषणम् ॥ २८ ॥

ननु ग्रीष्मादिष्वेव कस्माद्वातादयो न शोध्यंत इत्याह—

**अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ।**
**संधौ साधारणे तेषां दुष्टान्दोषान्विशोधयेत् २९॥**

स०—यतो ग्रीष्मादयोऽत्युष्णादियुक्तास्तेषामत्युष्णवर्षशीतानां ग्रीष्मवर्षाहिमागमानां साधारणे संधौ शीतोष्णवर्षसमभावे काले दोषान् वातादीन्दुष्टान्विकृतान्विशोधयेद्विनिर्हरेत् । संधौ हि साम्यमतः शोधनं प्रति न ते कालाः । तथा हि । ग्रीष्मे तावदादानग्लानं खरतररविकिरणततं पिपासाक्रमाद्याकुलमतिप्रविलीनदोषमतिशिथिलं शरीरं भवति । औषधं पुनरतिखरदिवाकरकरनिर्भरतापादुष्णतीक्ष्णतां यातमतियोगाय संपद्यते । प्रावृषि घनघनौघसंवट्टसादिते सर्वतो जगत्यवसन्नोऽग्निर्भवति । आदानदुर्बलं च शरीरं भवति । ओषधयश्च जलदजलप्लावितमूला अल्पवीर्याः संपद्यन्ते। भूबाष्पसंयोगाच्चौषधीनां विदग्धत्वम् । अतो मध्यतां गता अयोगायैव । शीतकाले चाऽतिशीतोपहतत्वाच्छरीरमतिवातविष्टब्धमतिस्निग्धगुरुदोषं भवति । शीतोपहतत्वाच्चोष्णस्वभावमप्यौषधं संशोधनायोपयुक्तं मंदवीर्यतां प्राप्तमयोगायैव कल्पते।तस्माद्युक्तमुक्तमत्युष्णवर्षशीतत्वाद्ग्रीष्मादिषु स्वस्थस्य शोधनमयुक्तम् ॥२९॥

प०—यस्माद्ग्रीष्मवर्षा हिमागमा अत्युष्णवर्षशीताः क्रमात् । तत्रात्युष्णो ग्रीष्माख्यः कालः अतिवृष्टियुक्तो वर्षाख्यः । अतिशीतयुक्तः शिशिराख्यः । सन्धौ साधारणे तेषु दुष्टान् दोषान् विशोधयेत् । तेषामत्युष्णशीतवर्षाणं ग्रीष्मवर्षाहिमागमानां साधारणे सन्धौ शीतोष्णवर्षसमस्वभावे काले दोषान् वातादीन् दुष्टान् विकृतान् विशोधयेत् विनिर्हरेत् । सन्धौ हि साम्यम् ॥ २९ ॥

हे०—संधिनियमेनात्यंतव्याधौ शोधनं निषेधति—उष्णवृष्ट्योर्वृष्टिशीतयोः शीतोष्णयोश्चापगमोद्गमावस्था संधिः ॥ २९ ॥

नन्वातुरस्य संशोधनसाध्यस्याऽयमेव संशोधनकालो नेत्याह—

**स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ३०॥**

स०—स्वस्थावस्थमधिकृत्याऽयं संशोधनकाल उक्तः। व्याधौ चात्यधिके व्याध्यनुरोधेन शोधनकालः॥ ३०॥

प०—स्वस्थवृत्तं स्वस्थवृत्ताधिकार आत्ययिकत्वात्तस्य विधेः साध्योऽप्यसाध्यानां गच्छत्युपेक्षितः । आत्ययिके पुनः समुत्पन्नव्याधिवशेन रोगानुकूल्येन ॥ ३० ॥

हे०—स्वस्थवृत्तमभिप्रेत्य स्वस्थोपचाराभिप्रायेण स्वस्थस्यापि रोगानुत्पत्तये शोधनमुचितम् ॥ ३० ॥

यदि हेमंतादावतिशीतोष्णादौ काले व्याधिः संशोधनसाध्यः संभवेत्तदा कथं संशोधनं कार्यमित्याह—

**कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ।**
**प्रयोजयेत्क्रियां प्राप्तां क्रियाकालं न हापयेत्॥**

स०—शीतोष्णवृष्टीनां प्रतीकारं कृत्रिमऋतुगुणं यथायथमुत्पाद्य संशोधनादिलक्षणं क्रियां प्रयोजयेत् । कृत्रिमगुणोपधानं च यथा । हेमंते गर्भगृहादि । ग्रीष्मे धारागृहादीनि । क्रियाकालं न हापयेन्नाऽतिक्रामयेदात्ययिकस्य व्याधेः प्राणहारित्वात् ॥ ३१ ॥

प०—शीतोष्णवृष्टीनां प्रतीकारं प्रतिपन्नं कृत्रिमगुणोपधानेन सर्वर्तुगुणविपरीते संयोगसंस्कारप्रमाणविकल्पैश्चाप्याबाधौषधमेवावहितोऽवचारयेदिति यथायथं यथास्वं शीतस्योष्णं तथो[illegible] शीतं प्राप्तं, क्रियां व्याधिवशेन योग्यां चिकि[illegible] न हापयेत् न तस्याः कालातिक्रमं कुर्यात् ॥३१॥

हे०—व्याधितस्य शोधनकालमाह—[illegible] यदैव व्याधितस्यवते तदैव प्राप्तम् [illegible] सराम् ॥ ३१ ॥

संप्रत्यौषधकालान् दर्शयन्नाह—

**युंज्यादनन्नमन्नादौ मध्येऽन्ते कवलांतरे ।**
**ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम्।**

स०—दशैते औषधस्य कालाः । अनन्न[illegible] तदुच्यते यदुपयुज्य तस्मिन्परिणते भुज्यते । अन्नादौ तदुच्यते यदुपयुज्य समनंतरमाहारोपयोगो [illegible] मध्य इति । अन्नस्याहारस्य मध्ये यदौषधं भुज्यते [illegible] अंतेऽवसाने । कवलांतर इति । [illegible] मध्ये न तु ग्रासमिश्रितं कृत्वेत्यर्थः । ग्रासे ग्रासे इति यद्ग्राससंपृक्तं भुज्यते । मुहुरिति । पुनः पुनर्[illegible] वा यदौषधं भुज्यते । सान्नमिति । [illegible] यदौषधं भुज्यते । सामुद्गं तदुच्यते । यदाहार[illegible] प्राक् पश्चाच्च प्रयुज्यते । तेन हि समुद्गपुटकु[illegible] नौषधद्वयेनाहारो मध्ये क्रियते समुद्गः संपुटकः । निशि यच्छयनवेलायां भुज्यते ॥ ३२ ॥

प०—औषधं दशसु कालेषु युञ्ज्यादन्नादीष्व[illegible] दिषु । तत्रानन्नं केवलमौषधं यदुपयुज्यते तदुच्यते अन्नादौ भुक्तात्पूर्वं यदनन्तरं भुक्तं मध्ये भुक्तं [illegible] हारस्य मध्ये, अन्त्ये भुक्तादनन्तरं कवलान्तरे [illegible] ग्रासस्य मध्ये यद्ग्राससंपृक्तं ग्रासे ग्रासे यद्ग्रास[illegible] ग्रासयोर्मध्ये मुहुः मुहुः पुनः पुनर्[illegible] यद्भुक्ते वा सान्नं यदन्नेन समं [illegible] समालोडितं समुद्गः यदादावन्ते च भक्तस्य [illegible] प्रदोषे यदौषधं युज्यते ॥ ३२ ॥

हे०—शमनौषधकालमाह—[illegible] जीर्णे आहारस्तदनन्नम्, अभक्तं नाम । [illegible] एवौषधे आहारस्तदन्नादौ प्राग्भक्तं नाम । [illegible] भेषजं पश्चाच्चेद आहारस्तन्मध्यभक्तं नाम । [illegible] एवाहारे भेषजं तदंते अधोभक्तं नाम । [illegible]

ग्रासासंपृक्तमौषधं तत्कवलांतरे ग्रासांतरं नाम । यत्र प्रतिग्रासं ग्रासे संपृक्तमौषधं तद्ग्रासे ग्रासे सग्रासं नाम । यत्र भुक्तस्याभुक्तस्य वा पुनः पुनरौषधं तन्मुहुर्नाम । यदाहारेण सह साधितं मिश्रीकृतं चौषधं तत्सान्नं नाम । यत्रादौ भेषजं ततोऽनंतरमेवाहारः ततोऽनंतरमेव पुनर्भेषजं तत्सामुद्गं नाम । सामुद्गः संपुटः । यद्रात्रौ स्वप्नकाले भेषजं तन्निशि नैशं नाम । एवं दश औषधकालाः ॥ ३२ ॥

अधुना विषयविभागेन यस्मिन् व्याधौ यदुपयुज्यते तद्दर्शयति—

**कफोद्रेके गदेऽनन्नं बलिनो रोगरोगिणोः ।**
**अन्नादौ विगुणेऽपाने समाने मध्य इष्यते ॥**
**व्यानेऽन्ते प्रातराशस्य सायमाशस्य तूत्तरे ।**
**ग्रासग्रासांतयोः प्राणे प्रदुष्टे मातरिश्वनि ॥**
**मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु ।**
**योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके ३२**

स०—कफोद्रेके रोगे निरन्नमौषधं योज्यम् । कयोरित्याह । बलिनोरित्यादि । बलवति रोगे तत्केवलमन्नादिरहितमौषधम् । तद्धयनन्नमतिवीर्यं भवति । बलवांश्च यदि रोगी तदोपयुंजीत नतु दुर्बले । दुर्बलस्य त्वन्नसहितं न ग्लानिकरं भवति । अन्नादावितिं । अपानाख्ये वायौ विगुणे कुपिते सत्यौषधं भुक्त्वा समनंतरमेवाहार इष्यत इत्यर्थः । समाने वायौ विगुणे मध्ये भक्तस्यौषधमिष्यते । व्यानाख्ये विगुणे प्रातराशस्य पूर्वाह्णभुक्तस्यांतेऽवसाने भेषजमिष्यते । सायमित्यादि । उत्तरे व्यानापेक्षयोदानाख्येन मरुति विगुणे सायमाशस्याऽपराह्णभुक्तस्य त्वंते भेषजमिष्यते । प्राणाख्ये मातरिश्वनि वाते प्रदुष्टे विकृते ग्रासग्रासांतरयोर्भेषजमिष्यते । ग्रासश्च ग्रासांतश्च तयोस्तेन ग्राससंपृक्तमौषधं ग्रासयोर्मध्ये भेषजमित्यवतिष्ठते । मुहुर्मुहुर्भुक्ते यदभुक्ते वा भेषजं तत्तु विषादिषु योज्यम् । अरोचकेऽरुचौ सह भोज्यैर्भैषज्यं योज्यम् । कीदृशैर्भोज्यैश्चित्रैरनेकविधैः ॥ ३२ ॥

प०—कफोद्रेकयुक्ते व्याधौ साम्यावस्थायामनतिक्रान्तायां बलिनोर्बलवतो रोगरोगिणोः साध्यातुरयोरनन्नं भक्तरहितमौषधं युज्यते । अपानाख्ये मातरिश्वनि कुपिते विगुणे अन्नादौ भोजनपूर्वं भेषजमिष्यते । समानाख्ये मारुते विगुणे भोजनमध्ये भेषजमिष्यते । भोज्यस्यार्धभुक्तस्य मध्ये भेषजमुपयुज्य शेषमन्नं युज्यते । व्याने वाते प्रदुष्टे प्रातराशस्य पूर्वाह्णे भुक्तस्याहारस्यान्तेऽवसाने भेषजमिष्यते । सायमाशस्य सायंभुक्तस्यान्नस्यान्ते उत्तरे उदानाख्ये विकृते वायौ भेषजमिष्यते । प्राणे मातरिश्वनि वायौ प्रदुष्टे प्रकुपिते पित्ते ग्रासे तथा ग्रासान्ते भेषजमिष्यते । ग्रासे यद्ग्राससंपृक्तं ग्रासांते यद्ग्रासयोर्मध्ये मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु मुहुर्मुहुः क्षणे क्षणे भुक्ते यदभुक्ते वा विषे छर्दिषु हिध्मासु तृष्णासु श्वासिषु भेषजमिष्यते । अरोचके भैषज्यमौषधं योज्यं देयम् । सभोज्यं भोजनसंपृक्तं भोज्यैरन्नैश्चित्रैरनेकविधैः सह ॥ ३२ ॥

हे०—अनन्नस्य विषयमाह—अह्नस्तृतीयो भागः श्लेष्मकालस्तदर्धं कफोद्रेकस्तस्मिन् गते तदनंतरमेव प्राग्भक्तस्य विषयमाह—**अन्नादाविति** । मध्ये भक्तस्य विषयमाह—**समान** इति । अधोभक्तस्य विषयमाह—व्याने विगुणे प्रातर्भोजनस्यांते भेषजम् । उत्तरे उदाने विगुणे सायं भोजनस्यांते । ग्रासग्रासांतयोर्विषयमाह—**ग्रासग्रासांतयोरिति** । मुहुरौषधस्य विषयमाह—मुहुर्मुहुरिति वीप्सया क्रियासंकरस्त्विष्टः न क्रियासंकरो हित इत्यस्य बाधः । सान्नस्य विषयमाह—**योज्यमिति** ॥ ३२ ॥

**कम्पाक्षेपकहिध्मासु सामुद्गं लघुभोजिनाम् ३४॥**

स०—सामुद्गं नाम यदादावंते चाहारस्य भुज्यते तत्कंपादिषु प्रशस्यत इति वक्ष्यमाणेन संबन्धः । केषाम् लघ्वन्नाशिनाम् ॥ ३४ ॥

प०—सामुद्गमौषधं तदुच्यते यदाहारस्य पूर्वं पश्चाच्चोपयुज्यते। येनाहारः सामुद्गकाभ्यन्तर इव चोर्ध्वाधश्चौषधेन पिहितोऽवतिष्ठते। तच्च कम्पादिषु व्याधिषु लघुभोजिनां स्वल्पभुक्ताहाराणां भोज्यम्॥३४॥

हे०—सामुद्गस्य विषयमाह—**कंपाक्षेपकेति** ॥ ३४ ॥

**ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ३५॥**

स०---ऊर्ध्वजत्रुविकारेषु शयनवेलायामौषधं प्रशस्यत इति ॥ ३९ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुन्दराख्यायां दोषोपक्रमणीयो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

प०-जत्रोरूर्ध्वविकारा नेत्रकर्णमुखादिविकारास्तेषु स्वप्नकाले निशायां शयनवेलायां भैषज्यं प्रशस्यते प्रकर्षेणेष्यत इति भद्रम् ॥ ३९ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने दोषोपक्रमणीयाध्यायस्त्रयोदशः ॥ १३ ॥

हे०-नैशौषधस्य विषयमाह--ऊर्ध्वजत्रिविति ॥ संग्रहे तु एकादशौषधकाला उक्ताः । अंतर्भक्तं यत्पूर्वाह्णे भुक्ते जीर्णे मध्याह्ने भेषजमुपयुज्यते तस्मिंश्च जीर्णे पुनरपराह्णे भोजनम् । एतेन रात्रिर्व्याख्याता । तद्दीतामेव्यानिजेष्वामयेष्विति । तथा तत्राद्यकाले तृषितः पीतांबुरजीर्णी क्षुधितः क्षामश्च भेषजं वर्जयेत् । शेषेषु चाहृद्यमसात्म्यमिति । तीक्ष्णोष्णोग्रगंधं भूरिमात्रं चेति भवंति चात्र " रोगमादौ परीक्षेत ततोऽनंतरमौषधम् । ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत् ॥ निर्वृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना । देहे मार्गीकृते दोषैः शेषः सूक्ष्म इवानलः ॥ तस्मात्तमनुबध्नीयात् प्रयोगेणानपायिना । सिद्धानामपि योगानां पूर्वेषां दार्ढ्यमावहन् ॥ सातत्यात्स्वाद्वभावाच्च पथ्यं द्वेष्यत्वमागतम् । कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत्पुनः ॥ मनसोऽर्थानुकूल्येन तुष्टिरूर्जा रुचिर्बलम् । सुखोपयोगिता च स्याद् व्याधेश्चातः परिक्षयः ॥ लौल्याद्दोषक्षयाद्याधेर्वैषम्येण च या रुचिः । तासु पथ्योपचारज्ञो योगेनान्यं प्रकल्पयेत् ॥ सप्ताहेन गुणालाभे युक्तिमन्यां प्रयोजयेत् । पूर्वस्यां शांतवेगायां न क्रियासंकरो हितः ॥ गुणे चाल्पे तु तामेव विशेषोत्कर्षलब्धये । भेषजं नृपतेर्हृद्यमल्पमल्पात्ययं शुचिः ॥ शुद्धागमं बहुगुणं बहुकृत्वः प्रयोजितम् । अनन्यकार्योऽवहितस्तन्मंत्रिगुरुसंमतः ॥ आस्वादितं परिचरैः स्वयं चानुप्रयोजयेत् । उचितो यस्य यो देशस्तज्जं तस्यौषधं हितम् । देशेऽन्यत्रापि वसतस्तत्तुल्यगुणजन्म वा । वीर्यवद्भावितं सम्यक् स्वरसे रसवल्लघु॥ रसगंधादिसंपन्नं काले जीर्णं च मात्रया । एकाग्रमनसा युक्तं भैषज्यममृतायते ॥ भेषजमवचारयन् प्रागेव तावदातुरं परीक्षेत । कस्मिन्नयं देशे जातः संवृद्धो वा तस्मिंश्च देशे मनुष्याणामिदमाहारजातमिदं विहारजातमेतावद्बलमेवंविधं सत्त्वमिदं सात्म्यमियं शक्तिरिमे व्याधयो हितमिदमहितमिदमिति । प्रायोग्रहणेन केन वा निदानविशेषेणास्य कुपितो दोषो दोषस्यैकस्यापि बहवः प्रकोपहेतवः । तस्माद्यथास्वलक्षणैः कर्मभिश्च बुद्ध्यापि दोषमेवमवगमयेत्। तद्यथा-किमाहारेण कुपितो वायुः किं विहारेण । तथा-रूक्षेण लघुना शिशिरेण वा साहसेन वेगरोधेन भयेन शोकेन वेति । ततश्च तत्प्रतिपक्षमेवौषधं प्रयुज्यमानमाशु सिद्धये संपद्यते । तत्र मधुराम्ललवणा रसाः कटुतिक्तकषायाश्चेतरेतरप्रतिपक्षाः तदनंतरं चोपलक्ष्येत मृदुमध्यातिमात्रविकल्पनया कथं निदानमासेवितमेकरूपस्यापि हि हेतोर्मृद्वादिविभागेन पृथक् समवेतानां दोषाणाम् अंशांशबलविकल्पविशेष इति व्याधेर्बलाबलविशेषः । तत्र नैकदोषात्मकेषु व्याधिषु अनेकरसेषु च भेषजेषु दोषरसप्रभावमेकैकशोऽभिसमीक्ष्य व्याधिभेषजप्रभावतत्त्वं व्यवस्येत् । नत्वेवं सर्वत्र । नहि विकृतिसमसमवेतानां परस्परेणोपगृहीतानामुपहतानां वान्यैश्च विकल्पनैर्विकल्पितानाम् अवयवप्रभावानुमानेन समुदायप्रभावतत्त्वमध्यवसितुं शक्यम् । तथाविधे हि समुदाये समुदायप्रभावमेवोपलभ्य व्याध्यौषधप्रभावतत्त्वमवगच्छेत् । तथा कस्य धामाधिष्ठाय व्याधिरयमवस्थित इति निरूपयेत् । प्रविसृतो हि दोषः स्वकीयमेव स्थानम् । तं कायाधितिष्ठन् मूर्धादीन् वा दुस्तरो भवति । ततः स्थानविशेषेण भेषजविशेषः परीक्षितव्यः । ततश्चौषधमालोचयेत् । कस्यायमौषधस्य व्याधिरातुरो वा योग्यः कियतो वा । दोषानुरूपो हि भैषज्यवीर्यप्रमाणविकल्पो व्याधिव्याधितबलापेक्षो भवति । सहसातिबलानि संशोधनान्यौषधान्याग्नेयवायव्यान्यतिसौम्यानि अतिमात्राणि तथा चाग्निक्षारशस्त्रकर्माण्यल्पसत्त्वमातुरमल्पबलं वा निपातयेयुः । संशमनानि तु व्याधिबलादधिकानि तमुपशमय्य व्याधिं व्याधिक्षपितदेहे ग्लानिमन्यमावहंति । शरीरबलादधिकानुपशमय्य व्याधिं व्याधिक्षपिते देहे ग्लानिमूर्च्छामदमोहबलक्षयमथान् अग्निबलादधिकानि ग्लानिमग्निसादं च । अपि च अतिस्थूलोऽतिकृशोऽतिदुर्बलो दुष्टमांसशोणितास्थ्यंगावयवोऽल्पाग्निः स्वल्पाहारोऽपचितः साररहितो व्याधिबलमेव तावदसमर्थः सोढुं किं पुनस्तथाविधो भेषजवेगम् । तस्मात्तादृशमविषादकैर्मृदुसुखैरुत्तरोत्तरं गुरुभिरविभ्रमैश्चोपाचरेत्

षधैर्विशेषादबलास्ता ह्यनवस्थितमृदुविक्लवहृदयाः प्रायः
कुमाराः परं संस्तम्भाश्च । ततो विशेषेण शिशवः । तथा
स्वति बलवद्व्याध्यातुरे अल्पबलमल्पं वा भेषजमकिंचि-
रं भूय एव दोषमुत्क्लेश्य व्याधिमुदीरयेत् । योग्यमपि
षधमेवं परीक्षेत । इदमेवंरसवीर्यविपाकमेवंगुणमेवं-
प्रमेवंकर्मैवं प्रभावमस्मिन्देशे जातमस्मिन्नृतावेवं गृही-
वं विहितमेवं निषिद्धमेवं संस्कृतमेवं संयुक्तमेवंयुक्तमनया
त्रयैवंविधस्य पुरुषस्यैवंविधे काले एतावंतं दोषमपकर्ष-
शमयति । अन्यदपि वा चैवंविधं भेषजमभूत्तच्चान्येन
विशेषेण प्रयुक्तमिदमपाकरोत्सूक्ष्माणि हि दोषौषधदूष्यदे-
कालबलाऽनलाहारसात्म्यसत्त्वप्रकृतिवयसामवस्थांतराणि
न्यनालोचितानि निहन्युरातुरम् । आलोच्यमानान्यपि तु
पुलबुद्धिमपि चिकित्सकमाकुलीकुर्युः, किंपुनरल्पबुद्धिम्।
स्मादभीक्ष्णशः शास्त्रार्थकर्मानुशीलनेन संस्कुर्वीत प्रज्ञाम्।
पि च संति व्याधयो ये शास्त्रे उत्सर्गापवादैरुपक्रमं
तेनिर्दिष्टाः । तत्र प्रज्ञयैव दोषादिगुरुलाघवेन सम्य-
ग्व्यवस्येत् अन्यतरनिष्ठायाम् । **कालश्च चिकित्सायो-**
**ग्यतामापादयति ।** स तु क्षणलवमुहूर्तादिभेदेनातुरावस्थ-
। च द्विधोक्तः प्राक् तत्र शीतोष्णवर्षलक्षणा ऋतवस्त्रयो
मंतग्रीष्मवर्षाख्यास्तेषामंतरे शोधनार्थं साधारणा वसंतप्रा-
ट्शरदाख्यास्त्रयो विकल्पन्ते । तत्र शोधनं प्रति फाल्गु-
चैत्रौ वसंतः । आषाढश्रावणौ प्रावृट् । कार्तिकमार्ग-
शीर्षौ शरत् । प्रागपि च शीतोष्णवर्षलक्षणास्त्रिविधः
कालस्तत्र शीतोष्णयोश्चांतरेण साधारणौ वसंतजलदात्ययौ।
ग्रीष्मवर्षाकालयोस्तु प्रारंभो वृष्टेः प्रावृडिति विकल्प्यते ।
षु साधारणेष्वहःसु वमनादीनां प्रवृत्तिर्निवृत्तिरितरेष्वयो-
गातियोगभयात्साधारणा हि मंदशीतोष्णवर्षतया सुख-
त्वात् भवंति अविकल्पकाः शरीरौषधानाम् । विपरीता-
स्त्वितरे । तथा हि शीतकालेऽतिमात्रशीतोपहतत्वाच्छरी-
मत्यर्थं शीतवातविष्टब्धमतिस्तब्धगुरुदोषं युक्तिव्यपाश्रयं,
सत्त्वावजयश्च । तत्र दैवव्यपाश्रयं——शीतोष्णहतत्वा-
न्मंदवीर्यतां गतमयोगाय जायते । शरीरं च वातप्रायोपद्र-
वाय । तद्वद्वर्षास्वपि समंतादतिघनेन घनसंघातेनावतते
नभस्युपरुद्धतेजःप्रसरेषु दिनकरकरेषु जलदपटलप्लाव-
नोद्दामकर्दमायां भूमावत्यर्थोपक्लिन्नमवसन्नानलबलमुद्रिक्त-
मलबलमादानदुर्बलं शरीरं भवति। औषधग्रामस्तु जलदो-
दरप्रततमुक्तधारावपातसंभृतांबुनिवहोपप्लावितमूलजालसा-
रविटपो बहलकोमलपल्लवोपचितस्कंधशाखः पुनरिव
बालत्वतामुपगतोऽल्पवीर्यो भवति । अपरिसंस्थिततया च
क्षितिमलप्रायाभिरम्लविपाकाभिः खगमृगसरीसृपादिशव-
वातुमूत्रपुरीषसंसृष्टाभिरद्भिः सलिलसीकरानुविद्धशिशिरप-
वनसंपृक्तेन च धाराधरधरोष्मणा कोमलत्वादपरिणतस्यास्य
सुतरां विदाहो जन्यते । ततश्चापथ्यतामुपगतो ध्रुवमयोगाय।
प्रथमं संगृहीतमपि चौषधं तोयदतोयानुगतमारुतोपहते
जयतीति ग्रीष्मे पुनरादानोपहतत्वात् शरीरमुष्णरूक्ष-
वातातपाध्मानप्रतिस्विन्नमतिशिथिलमतिप्रविलीनदोषं भ-
वति । भेषजं पुनरनुष्णमपि तपनतरुणतरकरनिपातादु-
ष्णवीर्यतामुपगतमतियोगायोपकल्पते । शरीरं च भ्रम-
पिपासोपद्रवाय तस्मात्साधारणेष्वेव तदंतरालेषु वमना-
दीनि योजयेत् । नात्ययिके व्याधौ, आत्ययिके तु
कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन संयोगसंस्कारं
प्रमाणविकल्पैश्चोपपाद्यौषधमवहितोऽवचारयेत् । आतुराव-
स्थासु तु कालाकालसंज्ञा । तद्यथा-अस्यामवस्थायामस्यौ-
षधस्य कालोऽकालो वा । नह्यस्यातीतकालमौषधं यौगिकं
भवति । औषधभेदाश्च संग्रहे दर्शिताः । द्विविधमौषधम्
ऊर्जस्करं, रोगघ्नं च उभयमपि चोभयात्मकं बाहुल्येन तु
निर्देशः । तत्रोर्जस्करं द्विविधं-रसायनं, वाजीकरणं च ।
रोगघ्नमपि द्विविधं-रोगप्रशमनमपुनर्भवकरम् । पुनश्च द्वि-
विधं-द्रव्यमद्रव्यं च । तत्र द्रव्यं त्रिविधं-भौममौद्भिदं
जंगमं चेति । तेषु वक्ष्यमाणं हेमादिलवणांतं प्रायेण
भौमम् । औद्भिदं पुनर्वनस्पतिवानस्पत्यवीरुदोषधिभे-
देन चतुर्विधं भवति । तत्र फलिनो वनस्पतयः फलवन्तः।
अपुष्पाः न्यग्रोधोदुम्बराश्वत्थप्लक्षादयः । वानस्पत्य
फलपुष्पादयः । वल्लिगुल्मं वीरुत् ( शालिपर्णी पृश्निपर्णी
विदारी चेति वीरुधः ) फलपाकांता ओषधिरिति
जंगमोद्भवन्तु मधुघृतादिजंगमामित्याहुः । अद्रव्यं पुनरु
पवासानिलातपच्छायामन्त्रसत्त्वदानभयोत्त्रासनक्षोभणहर्ष-
णभर्त्सनस्वप्नजागरणसंवाहनादि । तथा त्रिविधं औषधः
दैवव्यपाश्रयं-युक्तिव्यपाश्रयं, सत्त्वावजयश्च । तत्र दैव
व्यपाश्रयं—मन्त्रौषधमणिमंगलबल्युपहारयमनियमप्रायश्चि-
त्तोपवासस्वस्त्ययनप्रणिपातगमनादि । युक्तिव्यपाश्रयम्
आहारौषधयोजना । सत्त्वावजयः-पुनरहितादात्मनः
निग्रहः । पुनरपि च त्रिविधम्-अपकर्षणं, प्रकृतिविघातः
निदानत्यागश्च। ते पुनरपकर्षणादयो द्विविधाः बाह्याभ्यन्त
रभेदेन । तत्र बाह्यमपकर्षणं ग्रन्थ्यर्बुदोपपक्ष्मकृमिशल्य
दिषु शस्त्रहस्तयन्त्रादिभिः।आभ्यन्तरं-वमनविरेचनादिभि
प्रकृतिविधानं-संशमनम् । तत्र बाह्यमभ्यंगस्वेदप्रदेह
रिषेकोन्मर्दनाद्यम् । आभ्यन्तरं यदन्तः प्रविश्य विक्षो
भयन् दोषान् शमयति । निदानत्यागो-यथाद
शीतोष्णाशनव्यायामादिवर्जनं, स्निग्धरूक्षाद्यभ्यवहारश्च
ततः शस्त्रादिसाध्ये भेषजमुपक्रमते नतु भेषजसा

ादि । पुनरपि च त्रिविधं—हेतुविपरीतं, व्याधिविप-
ुभयार्थकारि च । तत्र हेतुरपि गुरुस्निग्धशीतादिजे
ौ लघुरूक्षोष्णादि । तथेतरस्मिन्निति । व्याधिविपरीतं
मूलोपक्रमौ लंघनबृंहणे पञ्चकर्माणि धूमांजनादीनि ।
। विम्लापनोपनाहपाठनादीनि । यच्च दोषशमनहेतु-
सत्यपि ज्वरे विशेषतो हितं मुस्तपर्पटकं यवागूश्च ।
हे—रजनी यवान्नं चेति । रक्तपित्ते चोर्ध्वगे विरेचन-
ोगे वमनम् । उभयार्थकारि-पुनर्दैवव्यपाश्रयमौष-
। यथा-छर्द्यां छर्दनम्, अतीसारेऽनुलोमनं, मदात्यये
ापानं, तुच्छदग्धेऽग्निप्रतापनं, पित्तेऽन्तर्गूढे विमार्गगे वा
दः । कट्वम्ललवणतीक्ष्णोष्णाभ्यवहारश्च बहिः प्रवर्त-
य स्वमार्गापादनाय च श्लेष्मणि चान्तर्गूढे स्तब्धेन
शीतोपचारः तत्पीडितस्योष्मांतःप्रवेशेन कफं विला-
ति । एवंविधं ह्यविपरीतमेव सद्वेषजं हेतुविपरीतार्थं
रोति । अनौषधं पुनर्द्विविधं-बाधनमनुबाधनं च । तत्र
यः प्राणहरं बाधनं, कालांतरेणानुबाधनमिति ॥ ३५ ॥
इति हेमाद्रिटीकायामायुर्वेदरसायने दोषोपक्रमणी-
यस्तु सामस्त्येन निरूपितः ॥ १३ ॥

# चतुर्दशोऽध्यायः ।



दोषोपक्रमणीयादनंतरं द्विविधोपक्रमणीयारंभेऽयं
ंबन्धः । पूर्वं सामान्येनोपक्रमो दोषोपक्रमणी-
येऽभिहितः । अत्र तूपक्रम्यस्य विशेषेणोपक्रमविशेष
उच्यत इत्याह—

**अथाऽतो द्विविधोपक्रमणीयमध्यायं व्या-
ख्यास्यामः ॥ १ ॥**

स०—द्विविधं द्विप्रकारं च तदुपक्रमणं च
द्विविधोपक्रमणं तस्मै हितो द्विविधोपक्रमणीयः ।
शेषं पूर्ववत् ॥ १ ॥

प०—दोषाणां वातादीनां स्नेहाद्यनेकप्रकार उप-
क्रम उक्तः । स चानेकप्रकारोऽपि सन्तर्पणापतर्प-
णरूप्यद्वैरूप्यं नातिवर्तते । अतो द्विविधोपक्रम-
णीयोऽध्याय आरब्धः । द्विविधं च तदुपक्रमणं तस्मै
हितो योऽध्यायः यत्रैतद् द्विधोपक्रमणीयं निर्णीयते
स द्विविधोपक्रमणीयोऽध्यायस्तं व्याख्यास्यामः ॥१॥

हे०—अथातो द्विविधोपक्रमणीयमध्यायं व्याख्यातुं
प्रतिजानीते--अथेति । यतः पूर्वाध्याये दोषाणामुपक्रम
उक्तस्तस्येदानीं भेदा वाच्याः । तत्र द्वौ भेदौ मुख्यौ ।
अतएवायं द्विविधोपक्रमणीयः ॥ १ ॥

उपक्रमश्च समासतो द्विविधः । तंत्रांतरपठिता-
नां चतुर्णामुपक्रमाणामत्रैवांतर्भावात् । अतएव सहेतु-
कमुपदिशन्नाह—

**उपक्रम्यस्य हि द्वित्वाद्विधैवोपक्रमो मतः ॥ २ ॥**

स०—हि यस्मादुपक्रम्यस्य चिकित्स्यस्य द्वित्वा-
द्धेतोरुपक्रमो द्विधैव मत इष्टः । एवशब्दोऽवधारणे
परमतं क्षिपति ॥ २ ॥

प०-द्वैविध्येनोक्तिमुपदिशन्नाह-यस्मादुपक्रम्यस्य
व्याधेरथवा तद्वतः पुरुषस्य द्वित्वं सन्तर्पणसाध्य-

---

१ सू०--सन्तर्पणाऽपतर्पणाभ्यामुपक्रमः ॥
प्र, टी. –दोषाणां वातादीनां, धातूनां रसादीनां च क्षयो
वृद्धिर्वा रुजाकरः व्याध्यवस्था इति प्रथमाऽध्याये प्रतिपादि-
तम् । अत्रोच्यते क्षीणं दोषं, क्षीणं धातुं वा सन्तर्पणेन विव-
र्द्धनेन समतां नयेत् साम्यावस्थां प्रापयेत् । वृद्धं दोषं, धातुं
वा अपतर्पणेन ह्रासनेन उपक्रमेत साम्यावस्थां प्रापयेदिति ।
सन्तर्पणपर्यायो बृंहणम्, अपतर्पणपर्यायो लंघनम् । "बृंहणं
यद् बृहत्त्वाय लंघनं लाघवाय यत्" इति ॥
तत्र क्षीणं वातं रूक्षैः विवर्द्धयेत् । क्षीणं पित्तम्
उष्णैः, क्षीणं कफं स्नेहाद्यैर्विवर्द्धयेत् । क्षीणं रसं रसैः,
दुग्धादिभिश्च वर्द्धयेत् । रक्तं रक्तवर्द्धनैर्द्रव्यैर्वर्द्धयेदित्यादि ।
अत्र क्रमः पूर्वो धातुर्वृद्धः परं वर्द्धयति, क्षीणः क्षपयतीति ॥
वृद्धं वातं स्नेहाद्यैः स्निग्धवस्तिभिश्च समं कुर्यात् ।
वृद्धं पित्तं विरेचनेन, शीतलद्रव्यैश्चोपक्रमेत् । वृद्धं कफं रूक्षो-
ष्णैः, वमनादिभिश्च जयेदिति । एवं वृद्धं रसं लंघनेन,
कषणद्रव्यैश्च । वृद्धं रक्तं रक्तमोक्षणेन, कर्षणद्रव्यैश्च जयेदिति॥
अपतर्पणं द्विधा-शोधनं, शमनं च । तत्र शोधनं यद्दो-
षान् बहिर्नयेत् । यथा—निरूहणं, वमनं, कायविरेचनं,
शिरोविरेचनं, रक्तमोक्षणं, स्वेदनञ्च ॥ शमनं तु समीकरणं,
यच्च न निष्कासयति न चोदीरयति किन्तु स्वप्रमाणाद्धीना-
धिकभावस्थितान् समीकरोति स्वप्रमाणस्थान् विदधाति तच्छ-
मनम् ॥
सम्यग्लंघिते । विमलेन्द्रियता, लाघवं, रुचिः सम्य-
ङ्मलादिविसर्गः, क्षुत्पिपासोदयः, उत्साहश्च । सम्यग्बृंहिते
बलं, पुष्टिः, तत्साध्यामयसंक्षयश्च । अतः नातिबृंहयेन्नाति-
ह्रासयेत् किन्तु साम्यावस्थां प्रापयेदिति भावः ॥

ातर्पणसाध्यत्वं वा न तृतीयो राश्यन्तरः वति । तस्मादुपक्रम्यस्य द्वित्वात् द्विधैवो- ो मतः । द्विधैव चिकित्सा—एकः सन्तर्पण- उपक्रमो द्वितीयोऽपतर्पणरूपः । उपक्रमश्चि- ा क्रियाक्रम इत्यनर्थान्तरम् । चरकाचार्य- तानामन्येषां चतुर्णामुपक्रमाणां लङ्घनादिना- ान्तर्भावः । एवकारोऽत्रावधारणार्थः ॥ २ ॥

०—उपक्रमभेदानाह-उपक्रम्यस्येति । उपक्रम्यस्य त्वात् सामनिरामभेदेन ॥ २ ॥

कथं द्विधेत्याह—

**: संतर्पणस्तत्र द्वितीयश्चापतर्पणः ।**
**गो लंघनश्चेति तत्पर्यायावुदाहृतौ ॥**
**गं यद्बृहत्त्वाय लंघनं लाघवाय यत् ।**
**त्य ॥ ३ ॥**

स०—तत्र तयोर्द्वयोरुपक्रमयोरेकः संतर्पणरूप क्रमो द्वितीयश्चापतर्पणरूप उपक्रमः बृंहणं लंघनं ायोः संतर्पणाऽपतर्पणयोः पर्यायावुदाहृतौ । देह- बृंहणं तदुच्यते यद्देहस्य बृहत्त्वाय भवति । नं तदुच्यते यद्देहस्य लाघवाय लाघवोत्पाद- ा भवति ॥ ३ ॥

प०—अतएवाह—तत्र तयोर्द्वयोरुपक्रमयोरेकः तर्पणरूप उपक्रमो द्वितीयोऽपतर्पणरूपः । तयोः तर्पणापतर्पणयोर्यथासंख्येन बृंहणलङ्घनशब्दौ ान्तरावुदाहृतावागमविद्भिस्तयोरर्थान्तरौ कथि- वित्यर्थः । बृंहणं तदुच्यते यद्देहस्य शरीरस्य त्त्वाय स्थूलीकरणाय सम्पद्यते । यथा मांसक्षी- ृतादि । लङ्घनं तदुच्यते यद्देहस्य लाघवाय ुत्वोत्पादनाय सम्पद्यते ॥ ३ ॥

हे०—बृंहणलंघनयोर्लक्षणमाह—बृंहणमिति । यद्देहस्य ृत्त्वाय स्थौल्याय तद्बृंहणं, यल्लाघवाय कार्श्याय लंघनम् ॥ ३ ॥

**भवतः प्रायो भौमापमितरच्च ते ॥ ४ ॥**

स०—संतर्पणापतर्पणे भौमापमितरच्च भवतः । भूमे- दं भौमम् । अपामिदमापम् । भौमयुक्तमापं संतर्प- णम् । इतरद्भौमापादन्यदग्निवाय्वाकाशात्मकमपतर्प- णम् । प्रायोग्रहणात्किंचिद्भौममप्यपतर्पणम् । यथा यवमसूरमकुष्ठतंडुलीयादि । तथाऽग्निपवनोत्कटस्याऽपि शुण्ठीपिप्पल्यादेर्वृष्यत्वेन संतर्पणकार्यदर्शनाच्च ॥ ४ ॥

प०—किंभूतात्मके अत आह-ते बृंहणलङ्घने भवतः भौमापमितरच्च । भूमेरिदं भौमम् । अपामिदमापम् । भौमं चापं च भौमापम् । तेनैतदुक्तं भवति । भौमापं द्रव्यं बृंहणम् । तत्स्वभावात्तयोर्लङ्घनमितरत् अन्यत् । कुतः प्रस्तावात् कृतत्वाद्भौमापादभौमाप- मग्निवाय्वाकाशात्मकम् । प्रायोग्रहणादतिशयेन बृंहणं भौमापमतिशयेन लङ्घनं चेत्तदग्निवाय्वाका- शात्मकम् । ननु बृंहणेऽग्निवाय्वाकाशात्मकं न विद्यते लङ्घने भौमापत्वं पञ्चमहाभूतारब्धत्वाद्द्र- व्यस्य । क्वचिद्व्यभिचारोऽनयोः ॥ ४ ॥

हे०—लंघनबृंहणे उदाहरति—भवत इति । भौम- माप्यं च द्रव्यं बृंहणम् । इतरदाग्नेयं वायव्यं नाभसं च लंघनमिति विभागेन द्वे भवतः ॥ ४ ॥

अधुना स्नेहनादेश्चतुर्विधस्योपक्रमस्य संतर्पणा- ऽपतर्पणयोरेवांतर्भावं दर्शयन्नाह—

**स्नेहनं रूक्षणं कर्म स्वेदनं स्तंभनं च यत् ।**
**भूतानां तदपि द्वैध्याद्द्वितयं नाऽतिवर्तते ॥५॥**

स०—स्नेहनादि यच्चतुर्विधं कर्म तदपि द्वितयं संत- र्पणापतर्पणरूपं नाऽतिवर्तते नाऽतिक्रामति । कुतो हेतोरित्याह । भूतानां संतर्पणापतर्पणरूपाद्द्वैध्या- द्द्विप्रकारकत्वात् ॥ ५ ॥

प०—बहूपक्रमवादिनं प्रतीदमुच्यते । अनयो- र्द्वयोः स्नेहनादि यदेतच्चतुर्विधं तदनयोः कर्म । ननु सन्तर्पणापतर्पणवत्ते स्नेहादयश्चत्वारोऽर्थान्त- रम् । एतच्चतुर्विधं यत्कर्म तदपि द्वितयसन्तर्प- णापतर्पणरूपं नातिवर्तते नातिक्रामति । भूतानां सन्तर्पणापतर्पणस्वभावद्वैविध्यात् द्विप्रकारत्वात् । तथाग्नीषोमात्मकरूपद्वैविध्याद्द्वितयं बृंहणलङ्घनाख्यं नातिवर्तते न स्नेहनस्तम्भने । सौम्यत्वाद् बृंहणवर्गे- ऽपि । ततः रूक्षस्वेदने वाग्नेयत्वाल्लङ्घने पततः । भूतानां पृथिव्यादीनां सन्तर्पणापतर्पणरूपत्वात् ॥५॥

१ अत्र "भौमाप्यम्" इति पाठः ।

हे०–स्नेहादीनाम् उपक्रमाणां बृंहणे, रूक्षादीनां च लंघनेऽतर्भावमाह–स्नेहनं रूक्षणमिति । भूतानां द्वैध्यात्स्नेहरूक्षणादिकद्रव्यकारणानां पृथिव्यादीनां बृंहणलंघनरूपद्वैध्याव्यभिचारात् ॥ ५ ॥

इदानीं प्रत्येकं तयोर्भेदानाह–

**शोधनं शमनं चेति द्विधा तत्राऽपि लंघनम्॥६॥**

स०–तत्र च तयोः संतर्पणापतर्पणयोर्बृंहणलंघनापरपर्याययोर्मध्याद्यल्लंघनमतर्पणं तद् द्विधा । कथमित्याह। शोधनं शमनं चेति। इति हेत्वर्थे। यतः शोधनं शमनं च ततो द्विधेत्यर्थः ॥ ६ ॥

प०–इदानीं प्रत्येकं तयोर्भेदानाह–तत्रेति निर्धारणे । तत्र तयोः सन्तर्पणापतर्पणयोः बृंहणलङ्घनापरनाम्नोर्यदेतल्लङ्घनमपतर्पणं तद्द्विधा–शोधनशमनभेदेन । इतिशब्दः समाप्तौ । नातो विकल्पनमस्तीतिप्रकारो वानेन प्रकारेण द्वादशधा लङ्घनशोधनस्य स्वरूपकथनार्थम् ॥ ६ ॥

हे०–लंघनभेदानाह–शोधनमिति॥ ६ ॥

इदानीं शोधनस्य लक्षणं प्रभेदं चाऽधिकृत्याह–

**यदीरयेद्बहिर्दोषान्पंचधा शोधनं च तत्॥ ७ ॥**

स०–यदौषधं दोषान् वातादीनंतःस्थितान् बहिरीरयेत् क्षिपेत्तच्छोधनम् । तच्च पंचधा पंचविधम् ॥ ७ ॥

प०–तथा भेदकथनार्थमिदमाह–यदौषधं बहिर्दोषान् अन्तःशरीरस्थानीरयेत् प्रेरयेत् विद्यात्तच्छोधनम् । तच्च पञ्चधा पञ्चप्रकारं निरूहादिभेदेन ॥ ७ ॥

हे०–शोधनस्य लक्षणं भेदांश्चाह–यदीरयेदिति॥७॥

तदेव पंचविधत्वमाह–

**निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः॥ ८ ॥**

स०–निरूहो बस्तिस्तथा वमनं तथा कायविरेकः शिरोविरेकश्च तथाऽस्रविस्रुती रक्तस्रावश्चेति पंचधा शोधनम्। सर्वशरीरस्य शिरःप्रभृतेरधो मलनिर्हरणं यत्स कायविरेकशब्देनोच्यते । यत्तु केवलं शिरःसंज्ञकस्य शरीरावयवस्य घ्राणेनोर्ध्वमलनिर्हरणं स शिरोविरेकः ॥८॥

प०–तत्र निरूहत्वात्स्थापनं गुदप्रणिधेयमौषधं क्वाथस्नेहादि । वमनं दोषाणामूर्ध्वहरणम् । कायशिरोरेको दोषाणामधोहरणं केवलस्य कायैकदेशस्य शिरःसंज्ञाकस्य यन्नासयोरूर्ध्वमलनिर्हरणं स शिरोविरेकः । कायत्वेऽपि सति अस्रस्य रक्तस्य शिरादिभिर्निर्हरणमस्रविस्रुतिः ॥ ८ ॥

हे०–यद्दोषान् बहिर्निष्कासयेत्तच्छोधनं तत्तु निरूहादिभेदात्पञ्चधा कायरेको विरेचनं, शिरोरेको नस्यम् ॥ ८ ॥

संप्रति शमनाख्यस्य लक्षणं प्रभेदं चाधिकृत्याह–

**न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।**
**समीकरोति विषमान् शमनं तच्च सप्तधा ॥**
**पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः ॥९॥**

स०–यदौषधं दोषान् वातादीन्न शोधयति नांतःस्थितान्बहिर्निष्कासयति तथा समान् स्वप्रमाणस्थान्नोदीरयति नोत्क्लेशयति विषमांश्च स्वप्रमाणाद्धीनाधिकभावावस्थितान् समीकरोति स्वप्रमाणस्थान् विदधाति तच्छमनमुच्यते । तच्च सप्तधा सप्तप्रकारं पाचनादिभेदेन । पाचयतीति पाचनम्। पचतोऽग्नेः पक्तुं शक्तिमधिकां यदुत्पादयति तद्द्रव्यं क्रिया वा पाचनमुच्यते । यथा लंघनं किराततिक्ताख्यं मुस्तादि वा । दीपनं यथा घृतादि । तंत्रांतरे च दीपनपाचनयोर्लक्षणमुक्तम् । क्षारपाणिनाऽप्युक्तम् । पाचनं पाचयेद्दोषान् सामान् शमनमेव तु । दीपनं ह्यग्निकृच्चामं कदाचित्पाचयेन्न वा । यथा । यदग्निकृत्पचेन्नामं दीपनं तद्यथा घृतम् । पाचनं तद्विपर्यस्तं यथा वक्ष्यामि लक्षणमिति । क्षुत्तृट्शब्दाभ्यां क्षुत्तृष्णानिग्रहाविह गृहीतौ ॥ ९ ॥

प०–इदानीं शमनस्य स्वलक्षणं तथा भेदं व्याख्यातुमिदमाह–यद्द्रव्यं वातादीन् शोधयत्यन्तःस्थितान् नहि बहिर्विक्षिपति तथा समानस्वप्रमाणस्थितान् नोदीरयति नोत्क्लेशयति न स्वस्थानात च्यावयति तथा विषमान् स्वप्रमाणाद्धीनाधिकभावेन स्थितान् समीकरोति स्वप्रमाणस्थान् सम्पादयति तद्द्रव्यं शमनमित्युच्यते । शमनं सप्तधा सप्तभिः प्रकारैः पाचनत्वादिभेदेनेति । तत्र पाचयतीति पाचनम् । पच

तोऽग्नेः पाकक्रियामभिनिर्वर्तयतः पचनशक्तिमन्याधिकां तस्य यदुत्पादयति द्रव्यक्रियावत् । पाचनं यथा किराततिक्तकादिलंघनं वा । दीप्यतेऽनेनेति दीपनम् । यथा त्रिकटुकपञ्चकोलादि यदग्निवर्धनत्वादन्तःपक्तिमग्नेः कुर्वतस्तस्य शक्त्युपबृंहकं सम्पद्यते तद्दीपनमित्युच्यते । क्षारपाणिनाप्युक्तम् । "पाचनं पाचयेद्दोषान् शमाच्छमनमेव तु। दीपनं ह्यग्निकृत्त्वाऽमं कदाचित्पाचयेन्न वा" ॥ ९ ॥

हे०—शमनस्य लक्षणभेदांश्चाह—न शोधयतीति । यद्दोषान् न शोधयति बहिर्निष्कासयति, समानविकृतान्नोदीरयति न विकृतिं नयति, विषमान् विकृतान् समीकरोति प्रकृतिं नयति तच्छमनम् । तच्च पाचनादिभेदात्सप्तधा। पाचनमिति । क्षुदन्नवर्जनं, तृट् उदकवर्जनम् ॥ ९ ॥

पाचनादीनां दोषशमनत्वमुक्तं तच्च वाते वातपित्ते च न संभवतीत्याह—

**बृंहणं शमनं त्वेव वायोः पित्तानिलस्य च १०॥**

स०—तुशब्दो विशेषे । विशेषस्तु लंघनापेक्षया । शोधनं शमनं चेति द्विधा लंघनमुक्तम् । बृंहणमपि शोधनं भवति दुग्धादिद्रव्यं शोधनस्वभावद्रव्यत्वात् । तेन तथाविधेन द्रव्येण केवलस्य वातस्य पित्तयुक्तस्य वा कोप आशंक्यते । यथा लंघनशोधनद्रव्येण हरीतक्यादिना ततो बृंहणस्य विशेषणार्थस्तुशब्दः कृतः । बृंहणं यतः शोधनं मरुतः केवलस्य पित्तसहितस्य वा शमनं नतु लंघनशोधनवत्कोपनम् । एवकारोऽवधारणार्थः । बृंहणं यच्छोधनरूपं शोधनं वातस्य पित्तयुक्तस्य वा शमनमेव न कोपनं जातुचिदित्यर्थः । लंघनं तूभयरूपमपि वातस्य वातपित्तयोर्वा कोपनमेव ॥ १० ॥

प०—इदानीं बृंहणमुच्यते—तुशब्दो विशेषे । विशेषे लंघनापेक्षया लंघनादनेन तु शब्देन विशिष्यते । बृंहणमपि शोधनं भवति । क्षीरादृद्रव्यशोधनस्य चापतर्पणात्मकत्वात् । ततः केवलस्य वायोः पित्तसहितस्य वा कोपः प्राप्तो यथा लंघनाच्छोधनादद्रव्येण पथ्यादिना बृंहणस्य तुशब्दो विशेषणार्थ उपात्तः । बृंहणं यच्छोधनं शमनं तद्वायोः केवलस्य तथा पित्तसहितस्य शमनमेव लंघनशोधनवमनमेवं लंघनाद् बृंहणं विशेषितं भ ति । एवं बृंहणमेव शमनमेव सर्वदा वायोः केवल तथा पित्तसहितस्य । एवकारोऽवधारणार्थः । वाः रेव केवलस्य तथा पित्तसहितस्यास्यैव न तु के लस्य पित्तस्य नापि केवलस्य वातस्यापि पित्त वातसहितस्य वातपित्तसन्निपातस्य बृंहणं श भवति ॥ १० ॥

हे०—शोधनशमनव्यतिरिक्तस्यौषधस्याभावाद्द्र लंघनभेदत्वाद्बृंहणस्यानौषधत्वे प्राप्ते बृंहणं शमनं त्याह—बृंहणं शमनं त्विति शुद्धस्य पित्तसंसृष्टवाये षमस्य समीकरणाच्छमनम् ॥ १० ॥

इदानीं ये बृंह्यास्तानाह—

**बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् । भाराध्वोरःक्षतक्षीणरूक्षदुर्बलान् । गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ११**

स०—कर्शितशब्दस्य व्याध्यादिभिः ऽ संबन्धः । व्याधिकर्शितान् बृंहयेदेवं शेषेष्वपि योज भारादिभिः क्षीणस्य प्रत्येकं संबंधः । भारक्षी बृंहयेत् । एवं शेषेषु । रूक्षादीन् बृंहये ग्रीष्मेऽपरानप्यन्यानप्युक्तानपि बृंहयेत् । च ग्रीष्मेऽपि सर्वानपि बृंहयेदिति विशेषेण तु व्या र्शितादीन् ॥ ११ ॥

प०—इत्येवं बृंहणस्य यो दोषो विषयस्त द्वारेण शमनमपि तद्विषयमेवास्य नियम्येदा ये बृंह्यास्तान् सूचयन्नाह—कर्षितशब्दः ! संसार्यः । तेन व्याधिकर्षितान् भैषज्यका मद्यकर्षितान् शोककर्षितान् स्त्रीकर्षितांश्च बृंह तथा भारनित्यातुरःक्षतान् क्षीणान् रूक्षान लान् तथा गर्भिणीसूतिकाः प्रसूताः बालान् बृंहयेत् । नित्यं ग्रीष्मे परानप्यन्यानर्नि स्वस्थानातुरांश्च सर्वान् बृंहयेत् । तथाऽस्मिन् अतिशयेन व्याधिकर्षितादीन् बृंहयेत् ॥ ११

हे०—बृंहणविषयमाह—बृंहयेदित्यादि । ग्रीष्मे नपि स्वस्थानपि ॥ ११ ॥

कैर्बृंहयेदित्याह—

**मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः ।**
**स्वप्नशय्यासुखाऽभ्यंगस्नाननिर्वृतिहर्षणैः १२ ॥**

स०—मांसादिभिर्बृंहयेत् । मधुरस्निग्धैर्बस्तिभिर्न तु रूक्षतीक्ष्णैस्तेषामपतर्पणस्वभावत्वात् । स्वप्नो निद्रा । शय्यासुखं खट्वाजनितं शर्म । निर्वृतिश्चित्तस्याऽनाकुलत्वम् ॥ १२ ॥

प०-कैरित्याह-मांसादिभिः समनन्तरोक्तान् पुरुषान् बृंहयेत् । तत्र मांसमष्टप्रकारं प्रागुपदिष्टम् । क्षीरमपि तथैव । सिता शर्करा सर्पिर्घृतं मधुराश्च स्निग्धाश्च ते बस्तयः । स्वप्नसुखं शय्यासुखमपि खट्वाजनितम् । अभ्यञ्जनमभ्यङ्गः, निर्वृतिः प्रीतिश्चेतसः । हर्षणं हर्षो मनसो हृष्टता ॥ १२ ॥

हे०-बृंहणान्याह—मांसक्षीरेत्यादि। मधुरस्निग्धैर्बस्तिभिः शय्यासुखं—निद्रां विना शयनेऽवस्थानं, निर्वृतिः-सन्तोषः, हर्षणमानन्दः ॥ १२ ॥

**मेहामदोषाऽतिस्निग्धज्वरोरुस्तंभकुष्ठिनः ।**
**विसर्पविद्रधिप्लीहशिरःकंठाऽक्षिरोगिणः ।**
**स्थूलांश्च लंघयेन्नित्यं शिशिरे त्वपरानपि १३॥**

स०—मेहादीनामिनिर्मत्वर्थीयः । मेहिप्रभृतीन् लंघयेत् । शिशिरे पुनरन्यानप्यपरानपीति व्याधितानां ग्रहणम् । स्वस्थानां तु शिशिरे हेमंतविधिर्विशेषेणोक्त एव । शिशिरशब्दः शीतमात्रोपलक्षणार्थः । तेन हेमंतेऽपि लंघयेदित्यर्थ उपलभ्यते ॥ १३ ॥

प०—इदानीं लङ्घ्यान्निर्दिशति—मेहामदोषातिस्निग्धादीन् नित्यं सर्वकालं लंघयेत् । शिशिरे निर्दिष्टान् वातविकारिणोऽपि बृंह्यान् लंघयेत् । श्लेष्मचयभयात् सम्पूर्णबलत्वाच्च । अपरानित्यनेन व्याधितानां ग्रहणम् । अन्यथा स्वास्थ्यवृत्ते शिशिरे हेमन्तोक्तो विधिरुक्तः ॥ १३ ॥

हे०—लंघनस्य विषयमाह-मेहामदोषेत्यादि । आमदोषोऽजीर्णम् ॥ १३ ॥

पूर्वमुक्तं लंघनं द्विधा । शोधनं शमनं चेति। तत्र शोधनविषयं निरूपयन्नाह—

**तत्र संशोधनैः स्थौल्यबलपित्तकफाऽधिकान् ।**
**आमदोषज्वरच्छर्दिरतीसारहृदामयैः ॥**
**विबंधगौरवोद्गारहृल्लासादिभिरातुरान् ।**
**मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः॥**
**एभिरेवाऽऽमयैरार्तान् हीनस्थौल्यबलादिकान्**
**क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान् ।**
**समीरणातपाऽऽयासैः किमुताऽल्पबलैर्नरान् १**

स०—लंघयेदिति वर्तते । तत्र तेषु लंघनीयेषु मध संशोधनाख्यैर्लंघनैः स्थौल्याद्यधिकान् तथाऽऽमदोष दिभिरार्तान् लंघयेत् । तथा मध्यस्थौल्यबलपित्तकफा नेभिरेवाऽऽमदोषज्वरादिभिर्गदैरातुरान् प्रायः पू पाचनदीपनैर्लंघनभेदैर्लंघयेत् । प्रायोग्रहणं देशकालाद पेक्षया नियमस्याऽसर्वविषयत्वज्ञापनार्थम् । हीनस्थौ ल्यबलादिकांस्तु सतः क्षुत्तृष्णानिग्रहैर्बुभुक्षापिपासावेग विधारणाद्यैर्लंघनविशेषैर्लंघयेत् । दोषैर्वातपित्तकफै ध्यबलैरार्तान् तथा दृढान् शक्तान् समीरण दिभिर्लंघयेत् । आयासो व्यायामः । कि किंपुनरल्पबलैर्दोषैरार्तान् समीरणादिभिर्लंघयेत् सुतरां तु हीनबलैरार्तान् समीरणादिभिरेव लंघ दित्यर्थः ॥ १४ ॥

प०—शोधनीयान् दर्शयन्नाह—तत्र लंघनी मध्यात् स्थौल्यबलपित्तकफविकारान्नरान् सं धनैर्वमनादिभिः पञ्चभिर्लंघनप्रकारैर्यथायोग्यं ह येत् । आतुरान् नरान् मध्यस्थौल्यादिकान् र प्रायो बाहुल्येन पूर्वमादौ दीपनपाचनैर्लंघनप्र रैर्लंघयेत् । आदिग्रहणात् । अत्र चलपित्तकप ग्रहणम् । पूर्वं प्रथमं दीपनपाचनैर्यथार्हेण लंघ प्रायोग्रहणं दोषबलाद्यपेक्षया नियमस्यासर्वप्र नार्थम् । एभिरेवानन्तरोक्तैरामदोषज्वरादिभिरा रार्तान् पीडितान् हीनादिकान्नरान् स्थौल्यकफा बलान् सतः क्षुत्तृष्णानिग्रहैः बुभुक्षापिपासावे रणैर्लंघनप्रकारैर्लंघयेदित्यर्थः । हीनाः स्व स्थौल्यबलपित्तकफा येषां ते तथा दोषैर्वा भिर्मध्यबलैर्नोत्कृष्टबलैरार्तान् पीडितानार्तान् । समर्थान् नाशक्तान् समीरणातपायासैर्लंघ इत्येव स्थितो नियमः । अमी य ते वृद्धाः अ

ते पुनर्लङ्घ्याः । बृंह्येषु लंघनमुपक्रमः । लंघ्येषु न । बृंहणीयत्वात् । बृंहणं ततश्च ज्वरादिरोगाणामुपशमं किं बृंहणीयस्य पुंसो लंघनसाध्यामयार्तस्य लंघनमुपक्रमः प्रवर्त्यस्त्वथ बृंहणीयत्वात् ॥ १४ ॥

हे०—लंघनभेदस्य शोधनस्य विषयमाह—तत्र संशोधनैरिति । अधिकस्थौल्यादीन् लंघनीयान् संशोधनैर्लंघयेत् । पाचनदीपनयोर्विषयमाह—आमदोषेति । विबन्धगौरवेति । मध्यस्थौल्यादिकानिति । आमदोषादिभिरार्तान् पथ्यस्थौल्यादिकान् पूर्वं पाचनदीपनैर्लंघयेत् । पश्चाच्छोधनैः । क्षुत्तृषोर्विषयमाह—एभिरेवेति । क्षुत्तृष्णानिग्रहैरिति । एभिरामदोषादिभिः व्यायामातपमारुतानां विषयमाह—दोषैस्त्वार्तानिति । समीरणेति । मध्यबलैर्दोषैरार्तान् समीरणादिभिर्लंघयेत् । किंपुनरल्पबलैर्दोषैरार्तान् सुतरां हीनबलैरार्तान् लंघयेदेवेत्यर्थः ॥१४ ॥

## न बृंहयेल्लंघनीयान् ॥ १५ ॥

स०—लंघनीयान् लंघनार्हान् मेहामदोषादीन्न बृंहयेत् ॥ १५ ॥

प०—बृंहणीयस्थलं लंघनमित्यस्मिन् संशये इदमाह—लंघनीयान्न कदाचिद् बृंहयेत् । बृंहणसाध्यामयार्तानप्यतिप्रत्यवायभयात् ॥ १५ ॥

हे०—लंघनीयेषु पुरुषेषु बृंहणसाध्यरोगोत्पत्तौ बृंहणे प्राप्ते निषेधमाह—न बृंहयेदिति ॥ १५ ॥

तर्हि बृंह्यस्य वातलादेर्यदा ज्वरादिव्याधिर्लंघनसाध्यो जायते तदा किं लंघनं कार्यमुत बृंहणमित्यत्र संशय इत्याह—

## बृंह्यांस्तु मृदु लंघयेत् । युक्त्या वा देशकालादिबलतस्तानुपाचरेत् १६

स०—ये पुनर्बृंह्यास्तान् लंघनसाध्यामयार्तान् मृदु कृत्वा लंघयेत् । मृदुना लंघनप्रकारेणाऽपतर्पयेदित्यर्थः । युक्त्या वा प्रयोगेण संतर्पणाऽपतर्पणव्यामिश्रलक्षणेन देशकालादीनां बलतोऽनुरोधेन तानुपाचरेदुपक्रमेत् । नैव लंघयेदित्यर्थः । आदिग्रहणेन सत्त्वसात्म्यादिग्रहणम् ॥ १६ ॥

प०—ये पुनर्बृंह्यास्तान् पुनर्लंघनसाध्यामयार्तान् मृदु कृत्वा मृदुना लंघनप्रकारेण लंघयेदपतर्पयेत् । अन्यथा हि प्रत्यवायभयं सम्भाव्यते । यथा बृंहणाद्धीनमात्रातिमात्राभ्यवहारवदितस्तस्यार्थस्य ज्ञापनार्थमेतदुक्तम् । न बृंहयेल्लंघनीयानेष सर्वदा नियमः । बृंह्यान् बृंहणयोग्यान् युक्त्या प्रयोगदेशकालादिबलतस्तान् बृंह्यान् लंघनसाध्यामयार्तान् उपक्रमेत् । आदिग्रहणात् द्रष्यादिबलतोऽपि तानुपाचरेत् । एवं बृंह्यस्तु मृदु लंघयेत् । कदाचित्प्रयोगेण सन्तर्पणापतर्पणलक्षणेनोपक्रमेणोपाचरेत् ॥ १६ ॥

हे०—बृंहणीयेषु पुरुषेषु लंघनसाध्यरोगोत्पत्तौ स्वल्पं लंघनं कार्यमित्याह—बृंह्यानिति । देशादिवशेन त्वन्यथाप्युपाचरेदित्याह—युक्त्या वेति। तान् लंघ्यान् बृंह्यांश्च १६

बृंहितलंघितयोः किं लक्षणमित्याह—

## बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसंक्षयः॥१७॥

स०—बृंहिते सति बलं पुष्टिश्च स्यात् । तथा बृंहणसाध्या य आमयास्तेषां संक्षयो विनाशो भवेत्॥ १७ ॥

प०—बृंहिते सति किं लक्षणं भवत्याह-बृंहिते पुंसि सति बलं सामर्थ्यं पुष्टिः पोषो रसादीनि । तथा तत्साध्यामयसंक्षयः स्यात् । तदिति बृंहणं परामृश्यते । बृंहणसाध्या ये रोगास्तेषां विनाशो भवेत् । बृंहणेन ये साध्यन्ते आमयास्तेषां तत्साध्यानामामयानां व्याधीनां सम्यक्क्षयो विनाशो भवेदित्यर्थः ॥ १७ ॥

हे०—अथ बृंहितलंघितलक्षणमाह—तत्र बृंहितस्य लक्षणमाह—बृंहिते स्यादिति ॥ १७ ॥

संप्रति लंघितलक्षणमाह—

## विमलेंद्रियता सर्गो मलानां लाघवं रुचिः । क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकंठता । व्याधिमार्दवमुत्साहस्तंद्रानाशश्च लंघिते॥ १८॥

स०--विमलेंद्रियतादिस्तंद्रानाशश्चेत्यंतो ग्रंथं लंघितलक्षणम् । विमलेंद्रियता करणपाटवम् । क्षुत्तृषं सहैककालमुदयः । शुद्धहृदयेति । हृदयं चोद्गारश्च कंठश्च हृदयोद्गारकंठं शुद्धं च तद्धृदयोद्गारकंठं च तस्

भावः शुद्धहृदयोद्गारकंठता । विमलेंद्रियतादीनां पदानामकृतसमासानामेव समस्तानां निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतराणां सर्वेषां च लंघितलक्षणत्वद्योतनार्थः । अन्यथा सर्वेषां लक्षणानामुत्पत्तौ लंघितलक्षणत्वं भवेन्न त्वेकस्य द्वयोर्बहूनां चोत्पत्तौ लंघितलक्षणत्वं स्यात् । मुनिरप्यनेनैव हेतुनाऽसमासेनैव लक्षणं व्यधत्त । तथा । वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे । हृदयोद्गारकंठस्य शुद्धौ तंद्राक्लमे गते । स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये । कृतं लंघनमादेश्यं निर्व्यथे चांतरात्मनीति ॥ १८ ॥

प०—लङ्घिते पुंसि किं लक्षणमुच्यते तत आह–लङ्घिते नरे सति विमलेन्द्रियता पटुविन्द्रियता । सर्गः प्रवृत्तिर्मलानां मूत्रपुरीषादीनाम् । लघुत्वं कायस्य । रुचिरन्नाभिलाषः । क्षुत्तृषोर्बुभुक्षापिपासयोः सहैककालमेवोदय उद्भवः।शुद्धहृदयं,मृदुता। उत्साहः कार्यं प्रत्युद्योगः । तन्द्राया नाशः स्याद्भवेत्। निद्रेव जाग्रतस्तन्द्रा ॥ १८ ॥

हे०लंघितस्य लक्षणमाह–विमलेंद्रियतेति । सर्गो मलानां प्रवृत्तिः । क्षुत्तृडिति । व्याधिमार्दवमिति॥१८॥

**अनपेक्षितमात्रादिसेविते कुरुतस्तु ते ।**
**अतिस्थौल्याऽतिकार्श्यादीन्वक्ष्यन्ते ते च सौषधाः ॥ १९ ॥**

स०—ते बृंहणलंघनेऽनपेक्षितमात्रादिसेवितेऽतिस्थौल्याऽतिकार्श्यादीन् कुरुतः । अनपेक्षिताश्च ते मात्रादयश्चाऽनपेक्षितमात्रादयस्तैः सेविते । मात्राद्यनपेक्षया कृते इत्यर्थः । ते चाऽतिस्थौल्याऽतिकार्श्यादयः सौषधाः सभेषजा वक्ष्यंते पुरस्ताद्भणिष्यंते ॥ १९ ॥

प०—तयोरेवातिमात्रक्रियाया दोषमाह–ते बृंहणलङ्घने अनेपक्षितमात्रादिसेविते अधिकमात्रासेविते यथासंख्येनातिस्थौल्यादीन् अतिकार्श्यादींश्च कुरुतः । बृंहणं मात्रादेशकालादीनपेक्ष्य वा सेवितमतिस्थौल्यादीन् करोति तथा लङ्घनमेवातिसेवितमनपेक्षितमात्रादिकार्श्यादीन् करोति । ते चातिस्थौल्यादीनां चयान्यौषधानि तान्यपि वक्ष्यन्ते ॥ १९ ॥

हे०-अतिबृंहितातिलंघितयोर्लक्षणमाह—अनपेक्षितेत्यादि । अतिस्थौल्येति । मात्रादेशकालादीननपेक्ष्यातिसेवितं बृंहणमतिस्थौल्यादीन्कुरुते, लंघनं त्वतिकार्श्यादीन्। के तेऽतिस्थौल्यादयोऽतिकार्श्यादयश्चेत्यत आह–वक्ष्यन्ते ते चेति ॥ १९ ॥

अथाऽतिबृंहितलंघितयोः किं लक्षणमित्याह—

**रूपं तैरेव च ज्ञेयमतिबृंहितलंघिते ॥ २० ॥**

स०—अतिबृंहितश्चातिलंघितश्चेत्येकवद्भावः । अतिबृंहितेऽतिलंघिते च तैरेवाऽतिस्थौल्यादिभिस्तथाऽतिकार्श्यादिभिश्च रूपं बृंहणलंघनाऽतियोगलक्षणं वेद्यम् । चशब्दः समुच्चये ॥ २० ॥

प०—तथा रूपं लवणं तैरेवातिस्थौल्यादिभिरतिकार्श्यादिभिश्च यथासंख्येनातिबृंहितेऽतिलंघिते सति विज्ञेयम् ॥ २० ॥

हे०—अतिस्थौल्यादीनां कार्यत्वात्कथं लक्षणत्वमित्यत आह-रूपं तैरेवेति । यत्र कार्यैकसमधिगम्यं कारणं त[त्]कारणमेव लक्षणमित्यर्थः ॥ २० ॥

तानेवाऽतिस्थौल्यादीनाह—

**अतिस्थौल्यापचीमेहज्वरोदरभगंदरान् ।**
**काससंन्यासकृच्छ्रामकुष्ठादीनतिदारुणान् २१**

स०--अतिस्थौल्यादीनतिबृंहितं कर्तृ कुरुते इत्य[नु]पात्तेनाऽपि प्रकृतत्वादत्र कर्तृपदेन क्रियापदेन च सं[बन्धः]कार्यः । अत एव तदपेक्षयाऽतिस्थौल्यादीनां द्विती[या]। अथवा योग्यतयैवाऽनुपात्तेनाऽपि क्रियादीनां सं[बन्धो] भवत्येव । सुकविलक्षणस्यैवंस्थितत्वात् । तथा भगवतो व्यासस्य । यश्च निंबं परशुना य[श्चैनं] मधुसर्पिषा । यश्चैनं गंधमाल्येन सर्वस्य कटुरेव [सः] अत्र हि छेदसेकालंकारक्रिया अपेक्ष्य निंबा[द्] द्वितीयाऽर्थसंबंधश्च ॥ २१ ॥

प०—तानपि बृंहितदोषान् सौषधाना[न्] बृंहणमतिसेवितं तत् स्थौल्यादीन् कुष्ठादिपर्य[न्तान्] करोति । अतिस्थौल्यस्य लक्षणमुक्तं चरकमु[नि]

" मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः । अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते । " अतिस्थूलस्य भावोऽतिस्थौल्यम् । अपची गण्डमाला ॥ २१ ॥

हे०-अतिस्थौल्यादीनाह—अतिस्थौल्यापचीति । कासंसन्यासेति । अतिबृंहणं कुर्यादित्यध्याहारः ॥२१॥

अथैषां स्थौल्यादीनामुपक्रममाह—

**तत्र मेदोऽनिलश्लेष्मनाशनं सर्वमिष्यते ॥ २२॥**

स०-तेष्वतिस्थौल्यादिषु मेदोऽनिलश्लेष्मनाशनं सर्वमन्नपानौषधमिष्यते ॥ २२ ॥

प०-मेहाद्या वक्ष्यमाणास्तेषामौषधमाह-तत्रैतेषु स्थौल्यादिषु सर्वमाहारविहारजातं मेदोऽनिलश्लेष्मनाशनमिष्यते ॥ २२ ॥

हे०-अतिस्थौल्यादीनामौषधमाह-तत्रेति ॥ २२ ॥

किं तदिति ब्रूते—

**कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम् ।**
**मस्तुदंडाहतारिष्टचिंताशोधनजागरम् ॥**
**मधुना त्रिफलां लिह्याद्गुडूचीमभयां घनम् ।**
**रसांजनस्य महतः पंचमूलस्य गुग्गुलोः ॥**
**शिलाजतुप्रयोगश्च साग्निमंथरसो हितः ।**
**विडंगं नागरं क्षारः काललोहरजो मधु ।**
**यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित्२३**

स०--कुलत्थादिकं स्थूलायेष्यते । जूर्णस्तृणधान्यविशेषो दक्षिणापथे जोंधलक इति प्रसिद्धः । दंडाहतं मथितम् । त्रिफलादीनामन्यतमं मधुना लिह्यात् । तथा रसांजनादेश्च प्रयोगोऽग्निमंथरससहितो हितोऽतिस्थूलायेति प्रकृतेन योज्यम् । विडंगादियोगः सर्वसमभागोऽतिस्थौल्यदोषजित् ॥ २३ ॥

प०-कुलत्थजूर्णश्यामाकं यवमाहारार्थम् । मुद्गं व्यञ्जनार्थम् । मधूदकं मस्तु तक्रारिष्टं पानार्थम् । चिन्ता जागरणं विहारार्थं, शोधनं मेदःकफादिशुद्ध्यर्थम् । तेष्वतिस्थौल्यादिषु पुंसस्त्रिफलां मधुना माक्षिकेण लिह्यात् । अथवा गुडूचीं मधुना लिह्यात् । अभयां हरीतकीं वा मधुना लिह्यात् । घनं मुस्तं वा मधुना लिह्यात् । तेषामतिस्थौल्यादीनां रसाञ्जनस्य प्रयोगो हितः । पञ्चमूलस्य बिल्वादेर्महतः तथा गुग्गुलोः प्रयोगो हितः । शिलाह्वयस्य शिलाजतुनः साग्निमन्थो रसो हितः । तेषामतिस्थौल्यादीनामग्निमन्थोऽग्निमथनस्तर्कारी वैजयन्तिका । अयं विडंगादियोगो मधुना च लीढोऽतिस्थूलदोषं जयति । विडंगं विडङ्गसारं, नागरं शुण्ठी, क्षारो यवक्षारः, काललोहरजः शस्त्रचूर्णम् । मधु माक्षिकम् । यवाः प्रसिद्धाः ॥ २३ ॥

हे०-कुलत्थेति । जूर्णो यावनालः, मधूकजं मधुमिश्रमुदकम् । दंडाहतं तक्रम् । त्रिफलादींश्चतुरो योगानाह—मधुना त्रिफलामिति । रसांजनादींश्चतुरो योगानाह—रसांजनस्येति । शिलाजतुप्रयोगश्चेति । साग्निमंथरस इति । चतुर्भिः संबध्यते । अग्निमंथस्तर्कारी तत्स्वरसः । विडंगादियोगमाह—विडंगमिति । यवामलकचूर्णमिति । क्षारो यवक्षारः, काललोहरजो लोहचूर्णम् ॥ २३ ॥

**व्योषकट्वीवराशिग्रुविडंगाऽतिविषास्थिराः ।**
**हिंगुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥**
**निशे बृहत्यौ हपुषा पाठा मूलं च केंबुकात् ।**
**एषां चूर्णं मधु घृतं तैलं च सदृशांशकम् ॥**
**सक्तुभिः षोडशगुणैर्युक्तं पीतं निहंति तत् ।**
**अतिस्थौल्यादिकान्सर्वान्रोगानन्यांश्च तद्विधान् ॥**
**हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ।**
**बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम्॥२४॥**

स०--व्योषादीनि द्रव्याणि चतुर्विंशतिः । परस्परसमभागानीत्येको भागः । तत्समो मधुनो द्वितीयो भागः घृतस्य तृतीयस्तैलस्य चतुर्थः । एषां सर्वेषां मिश्रीभूताः षोडशगुणा यवसक्तवः । तदेतत्पीतमतिस्थौल्यादिकान् पूर्वोक्तान् सर्वान् रोगान्निहंति । अन्यांस्तथाविधान् रोगान् बृंहणोत्थानित्यर्थः । तथा हृद्रोगादीन् निहंति । तथा बुद्ध्यादिकरम् । सन्नस्य मंदस्याग्नेर्दीपनं च ॥ २४ ॥

प०-अतः व्योषादीन्यौषधानि चतुर्विंशत्युक्तानि । एषां समस्तानां चूर्णं मधु घृतं तैलं

१ " मधूकजम् " इति पाठा० ।

सदृशांशकं तेन चूर्णस्यैको भागो माक्षिकस्य तृतीयो घृतस्य तैलस्य च चतुर्थो भागश्चूर्णाद्यपेक्षया यवसक्तूनां षोडश भागाः। तेनेदमुक्तं भवति। व्योषादीनां चूर्णपलं माक्षिकपलं घृतपलं तैलपलं यवसक्तूनां पलानि षोडश। व्योषपिप्पलीशुण्ठीमरिचाख्यम्। कट्वी कटुका। वरा त्रिफला। शिग्रु शोभाञ्जनम्। स्थिरा शालिपर्णी। सौवर्चलं लवणम्। अजाजी जीरकम्। धान्यकं धनाफलम्। निशे हरिद्रे द्वे। केम्बुकान्मूलं केम्बुमूलं तत्समस्तं भेषजपटलं यथार्हं द्रवालोडितं पीतमतिस्थौल्यादीन् रोगान् हन्ति। अन्यांश्च तद्विधान् बृंहणेनोत्पन्नान् रोगान् हन्ति। हृद्रोगादींश्च हन्ति। बुद्धिमेधास्मृतिकरं तद्भवेत्। सन्नस्य मन्दाग्नेः सन्दीपनं संधुक्षकं स्यात्॥ २४॥

हे०--व्योषादियोगमाह--व्योष इति। हिंगुसौवर्चलेति। निशे इति। एषामिति। सक्तुभिरिति। अतिस्थौल्यादिकानिति। हृद्रोगकामलेति। बुद्धिमेधास्मृतिकरामिति। केंबुकान्मूलं, केंबुकं स्वनामप्रसिद्धम्। षोडशगुणैश्चूर्णापेक्षया पीतं शीतोदकेन। संग्रहे तु--"गुर्वादिवृद्धिसंलीनश्लेष्ममिश्रोऽन्नजो रसः। आम एव श्लथीकुर्वन् धातून्स्थौल्यमुपानयेत्॥ अतिस्थौल्यादतिक्षुत्तृट्स्वेदश्वासातिनिद्रताः। आयासाक्षमताजाड्यमल्पायुर्बलवेगताः॥ दौर्गन्ध्यगद्गदत्वे च भवेन्मेदोऽतिपुष्टता। स्रोतस्सु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः॥ चरन् प्रज्वलयत्यग्निं क्षुत्तृडोस्तु ततोऽधिकम्। स्थूलं कोठरवद्वृद्धौ दहतोऽग्न्यनिलौ च तौ॥ स्वेदवाहिशिरामूलभावाभिष्यंदनादपि। भेदुरः श्लेष्मयोगाच्च भवति स्वेदभूरिता॥ कोष्ठ एव विपक्वेऽस्य संरुद्धस्रोतसो रसे। सर्वत्रालब्धवृत्तित्वात्प्रायो मेदः प्रचीयते॥ तच्छेषो विरसोऽल्पत्वान्नालं रक्तादिपुष्टये। तुल्येऽपि रक्तादिचये प्राक् चितं चीयतेतराम्॥ मेदसो नासमत्वेन धातूनां विदधाति तत्। श्वासादीनचिरायास्यान् ज्वरोदरभगंदरान्॥ मेहोरुस्तंभपिटिकाविद्रधिप्रभृतीन् गदान्। अयथोपचयोत्साहश्चलस्फिग्गुदरस्तनः॥ अतिस्थूलः स्मृतो योज्यं तच्चान्नं मारुतापहम्। मदनं त्रिफलामुस्तारिष्टसप्ताह्ववत्सकम्॥ सपाठारग्वधं पीतमतिबृंहणरोगजित्। तद्वद्वत्सकशम्याकदेवदारुनिशाद्वयम्॥ समुस्तपाठाखदिरत्रिफलानिंबगोक्षुरम्। मदनादीनि वा लेपस्नानादिष्वपि योजयेत्॥ हिंगुगोमेदकव्योषकुष्ठकौंचास्थिगोक्षुरम्। एलात्रुप्रकपड्ग्रंथाखराश्मोपलभेदकम्॥ तक्रेण दधिमंडेन पीतं कौलरसेन वा। मूत्रकृच्छ्रं कृमीन् मेहान् स्थूलतां च व्यपोहति॥ कृमिघ्नत्रिफलातैलसक्तुत्र्यूषणदीपनैः। लोहोदकाप्लुतो मंथः शस्तो बृंहणरोगिणाम्। योज्यं तथा यथाव्याधि स्वेदासृक्स्रवणादपि"॥ २४॥

सांप्रतमतिलंघनोत्थान् रोगान् सौषधादीनाह--

**अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः।**
**स्नेहाऽग्निनिद्राद्दक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः।**
**बस्तिहृन्मूर्धजंघोरुत्रिकपार्श्वरुजा ज्वरः।**
**प्रलापोऽधोऽनिलोग्लानिश्छर्दिः पर्वास्थिभेदनम्**
**विण्मूत्रादिग्रहाद्याश्च जायंतेऽतिविलंघनात्॥ २५॥**

स०--अतिकार्श्यादयोऽतिविलंघनाज्जायंते। स्नेहादीनां क्षयशब्देन समासः। बस्त्यादीनां च रुजाशब्देन। मूत्रादिग्रहाद्याश्चेत्याद्यशब्देन नानाविधानां वातरोगाणां ग्रहणम्॥ २५॥

प०--विशेषलङ्घनाज्जातानुपद्रवानाह---आतिलङ्घनादत्यर्थं विशेषेण कृताल्लङ्घनात् कार्श्यादयो जायन्ते। तत्रातिकार्श्यमतिकृशत्वम्। क्षीणधातुत्वम्। भ्रमणं भ्रमः। चक्रोपारूढस्येव भ्रान्तिः। तृष्णाया आधिक्यमतितृट्। स्नेहादीनामष्टानां क्षयशब्देन सम्बन्धः। तेन स्नेहक्षयोऽग्निक्षयो यावत् स्वरक्षय इति। बस्त्यादीनां सप्तानां रुजाशब्देन सम्बन्धः। तेन बस्तिरुजा हृद्रुजा यावत्पार्श्वरुजा चेति। प्रलापोऽसम्बद्धभाषणम्। ऊर्ध्वानिल ऊर्ध्ववातः। ग्लानिरपचयः। छर्दिर्वमनमन्नादेः पर्वणां तथास्थ्नां भेदनं विदारणमिव। वर्चो मूत्रग्रहाश्चेत्यत्रादिग्रहणेन नानाविधानां रोगाणां वातजानां ग्रहणम्॥ २५॥

हे०--अतिकार्श्यादीनाह--स्नेहादीनां नवानां क्षयः स्नेहः स्निग्धत्वम्। बस्त्यादीनां सप्तादीनां रुजा॥ २५

यद्यपि कार्श्याख्योऽयं महान्दोषस्तथापि स्थौल्यमपेक्ष्य वर एवेति प्रतिपादयन्नाह--

**कार्श्यमेव वरं स्थौल्यात्॥ २६॥**

स०--अत्र चातिकार्श्यमेव वरमतिस्थौल्यादि वेद्यम्। न कार्श्यमात्रं स्थौल्यमात्रं वा। यस्मादतिस्

लातिकृशावेव लंघनबृंहणाभ्यामुपक्रम्यावत्र विवक्षितौ न स्थूलकृशौ सामान्येन ॥ २६ ॥

प०—यद्यप्ययं कार्श्याख्यो महान् रोगस्तथाप्य-तिस्थौल्यात् कार्श्यमेव वरम्। अत्र कार्श्यमेव वरं स्थौल्यादिति। तत्रातिकार्श्यमेव वरं स्थौल्यादिति बोद्धव्यम्। न कार्श्यमात्रं स्थौल्यमात्रात्। यतोऽ-तिस्थूलातिकृशावेव लङ्घनबृंहणाभ्यामुपक्रम्यावत्र विवक्षितौ न स्थूलकृशौ सामान्येन कार्श्यमेव वरं स्थौल्यादत्रोपपत्तिः ॥२६॥

हे०—स्थौल्यात्कार्श्यस्य सुखसाध्यत्वमाह—कार्श्यमे-वेति ॥ २६ ॥

कार्श्यमेव स्थौल्याद्वरं कुत इत्याह—

**नहि स्थूलस्य भेषजम्।**
**बृंहणं लंघनं नालमतिमेदोऽग्निवातजित्॥ २७॥**

स०—यस्मात् स्थूलस्य भेषजं बृंहणं नालं न समर्थं न च लंघनं समर्थम्। यस्मात्स्थूलस्य भेषजमतिमे-दोऽग्निवातजित्। यन्मेदःक्षपणं तदग्निनाशकृद्वात-हृच्च न। स्थूलस्य हि बृंहणेन मेदोऽतितरानुपचीयते लंघनेन मेदःक्षपणं भवति किंत्वग्निपवनावस्योपचीयेते। तस्माद् बृंहणं मांसक्षीरादि यच्च लंघनं कोद्रवश्यामाकादि तत्पूर्वस्माद्धेतोः स्थूलस्य न भेषजम् ॥ २७ ॥

प०—अतिस्थूलस्यापि भेषजं मेदसोऽग्नेर्वाय्वोश्च नाशनम्। यत्तत्साधु तथाविधं चातिमेदोऽग्निवातजि-द्भेषजमतिस्थूलस्य बृंहणं नालं न पर्याप्तम्। यस्मान्न स्थूलस्य सन्तर्पणं भेषजं पर्याप्तम्।स्थौल्यनिवारणाय न चाप्यपतर्पणं यस्माद्बृंहणं मांसादि तदस्य मेदोऽ-ग्निवर्धयति सन्तर्पणस्वभावत्वात्। तेनैतदुक्तं भवति। यद्यतिस्थूलाय बृंहणं दीयते तेनाग्निमेदसी वृद्धिं गच्छतः। वातश्चापचयमप्यथ लङ्घनं क्रियते। तेन मेदसोऽपचयो भवति नतु वायव्योऽग्नेर्विघात इत्यतो युक्तमुक्तमिति मेदोऽग्निवातजिन्न बृंहणम् अलं नापि लङ्घनं स्थूलस्य यन्मेदःक्षपणं वातजि-दग्निजित्तस्य पथ्यम् ॥ २८ ॥

हे०—स्थौल्यस्य कृच्छ्रसाध्यत्वे हेतुमाह—लंघनं बृंहणं स्थूलस्य भेषजं, यतस्तस्यातिमेदोऽग्निवातजिद्भेषजं नालं समर्थः। लंघनमतिमेदोजित् भवति। नात्य-ग्निवातजिद्भवति। बृंहणमत्यग्निवातजिद्भवति न त्वतिमेदो-जित् ॥ २७ ॥

**मधुरस्निग्धसौहित्यैर्यत्सौख्येन विनश्यति।**
**कृशिमा स्थविमाऽत्यंतविपरीतनिषेवणैः २८।**

स०—यतो यस्मात्कृशिमा मधुरस्निग्धतृप्तिभि सौख्येनानायासेन नश्यति शाम्यति तस्मात्कार्श्यं स्थौ-ल्याद्वरम्। यतश्च स्थविमा स्थूलत्वमत्यंतविपरीतनि-षेवणैः शाम्यति। अत्यंतविपरीतानां निषेवणान्यत्यंत-विपरीतनिषेवणानि तैस्तिक्तकटुकषायप्रायैरन्नपानौषध-सेवनैः शाम्यतीत्यर्थः। स्थूलकृशयोश्च यदि बृंहण-साध्यस्तुल्यो व्याधिः स्यात्ततः स्थूलस्योपक्रमविरोधात्तथ सुखेन न शाम्यति। यथा कृशस्य लंघनसाध्यो विसू-चिकादिर्यदि चैतयोः स्यात् सोऽपि कृशस्य सुखेनोप-शाम्यति। स्थूलस्य विरुद्धोपक्रमत्वाद्दुःखेन शाम्यति। यथा ह्यत्र प्रधानोपक्रमः स्वेदः स च तावन्न घटते। न स्वेदयेदतिस्थूलमिति निषेधात्। अथैनं लंघयति तदा। स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः। चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ स्तस्ततोऽधिकम्। स्थूलं कोटर-वद्वृक्षौ दहतोऽन्यनिलौ च तौ। इत्यादिना यावद्वा-तसखेन वनवह्निना वनस्येवाऽस्य महती व्यापदुत्प-द्यते। अथ बृंहणोपक्रमः क्रियते तदाऽऽमदोषो वर्धते। कृशस्य त्वविरुद्धोपक्रमत्वाद्विसूचिकादिः सुखेनोपक्रम्य-स्तस्मात्कार्श्यमेव स्थौल्याद्वरम्। कृशिमेति कृशशब्दा-त्पृथ्वादिपाठादिमनिच्। रऋतो हलादेरिति रेफादेशः। स्थविमेति दृढादेराकृतिगणत्वादिमनिजिति केचित्। तस्मिंश्च सति स्थूलदूरेति यणादिपरस्य लोपः। ऋकारस्य च गुणः ॥ २८ ॥

प०—कृशस्य भावः कृशिमा। स्थूलस्य भावः स्थविमा। पृथ्वादिपाठादिमनिच्। स्थूलस्य यन्मेदस्तथायमपरः कार्श्यमवरत्वे हेतुः। कृशिमा कृशत्वम्। मधुरादिभिः यस्मादनायासेन शाम्येत् तत्स्थौल्यात् कृशिमैव ज्यायान् स्थूलत्वं यस्मात् स्थविमा स्थूलत्वं कार्श्यसाधनोपायादत्यन्तं विपरी-तनिषेवितैर्नश्यति। अत्यन्तेन विपरीतानि च

तानि निषेवणानि तैस्तिक्तकटुकषायैः रूक्षैरन्नपानौ-षधैः सेवितैः स्थूलत्वं नश्यति मेदःक्षपणहेतुभिः। ननु सौम्येन मधुरस्निग्धानामन्नपानानां सौहित्येन तृप्त्या वृद्धिहेतुत्वात्तेषां स्थूलकृशयोश्च तस्य व्याधि-बृंहणसाध्य एवोत्पन्नः। स्थूलस्योपक्रमविरोधात् स व्याधिर्नोपशमं याति स एव कृशस्य सुखेनो-पशमं गच्छति। स्थूलस्य विरुद्धोपक्रमत्वाच्चिरेणैवे-त्येवं कार्श्यमेव श्रेष्ठम्॥ २८॥

हे०—कार्श्यस्थौल्ययोर्वरावरत्वे हेत्वंतरमाह—मधुरस्नि-ग्धानां सौहित्यं तृप्तिरभ्यासार्थं बहुवचनम्। कृशिमा-कार्श्यं, स्थविमा—स्थौल्यम्। स चात्यंतविपरीतनिषेवणैर्नश्यति। अत्यंतविपरीतानि अम्लातिरूक्षादीनि अतिदुःखम्॥२८॥

अथ कृशे कीदृशं भेषजमित्याह—

**योजयेद् बृंहणं तत्र सर्वं पानान्नभेषजम्॥२९॥**

स०—तत्र कृशे बृंहणं सर्वं पानाद्यौषधं योज्यम्॥२९

प०—तस्य कीदृशमौषधमित्याह—तत्र कृशे पुंसि पानान्नभेषजं शालिषष्टिकमांसक्षीरेक्षुरसजीवनीय-बृंहणीयवस्तुजातं सर्वं बृंहणं योजयेत्॥ २९॥

हे०—कार्श्यस्यौषधमाह—योजयेदिति॥ २९॥

**अचिंतया हर्षणेन ध्रुवं संतर्पणेन च।**
**स्वप्नप्रसंगाच्च कृशो वराह इव पुष्यति॥३०॥**

स०—अचिंतया चेतसः शोककार्याद्यनाकुलत्वेन तथा हर्षणेन चित्तस्य तुष्ट्या तथा संतर्पणेनाहार-विशेषादिना बृंहणेन तथा स्वप्नप्रसंगादतिनिद्रासेवनेन कृशः पुष्यति सर्वोपचितधातुः संपद्यते। क इव। वराहः शूकरो यथा। अन्येभ्यश्च पुष्टिहेतुभ्यः कृश-विषये स्वप्न एव प्रधान इति च दर्शयितुं वराहो दृष्टांतत्वेनोपन्यस्तो ग्रंथकृता। तथाहि। वराहस्य स्वप्नमंतरेण न कश्चित्तथाविधोऽभ्यवहारादिरुपलभ्यते। यथाऽसौ पुष्टोऽतिमेदुरो दृश्यते। अतिस्थूलाऽतिकृ-शयोश्च मुनिना लक्षणमभ्यधायि। मेदोमांसातिवृद्ध-त्वाच्चलस्फिगुदरस्तनः। अयथोपचयोत्साहो नरोऽति-स्थूल उच्यते। तथा। शुष्कस्फिगुदरग्रीवो धमनीजा-लसंततः। त्वगस्थिशेषोऽतिकृशः स्थूलपर्वा नरो मत इति॥ ३०॥

प०—अचिन्तया निःशोकतया अथवा किञ्चि-दपि कार्यजातं मनसा अपर्यालोचनेन हर्षणेन निर्वृत्यान्तःसन्तर्पणेन तथात्यन्तस्वप्नसेवनेन सर्व-धातूपचितः संपद्यते। यथा वराहः स्वप्नप्रसङ्गस्य कृशविषयेऽन्येभ्यः पुष्टिहेतुभ्यः प्राधान्यं प्रदर्शयन् वराहोदाहरणेन दत्त एवमचिन्तनहर्षणादिसंतर्पण-स्वप्नप्रसङ्गैः कृशः पुष्यति। सर्वधातूपचितः सम्पद्यते॥ ३०॥

हे०—अचिंतादिचतुष्टयं कार्श्यस्य परमौषधमित्याह—अचिंतयेति। हर्षणेन प्रियदर्शनादिना संतर्पणेन सौहित्येन स्वप्नप्रसंगान्निद्राभ्यासात्॥ ३०॥

**नहि मांससमं किंचिदन्यद्देहबृहत्त्वकृत्।**
**मांसादमांसं मांसेन संभृतत्वाद्विशेषतः॥ ३१॥**

स०—मांसेन सममपरं देहबृहत्त्वकरं न च विद्यते। सर्वबृंहणत्वकरेभ्यो मांसमतिबृंहणमित्यर्थः। विशेषेण मांसादमांसं देहस्य बृंहणत्वकृत्। कुत इत्याह। मांसेन संभृतत्वात्। पुष्टत्वात्॥ ३१॥

प०—यतोऽस्याहारो न कश्चित्तथाविधोऽभ्यव-ह्रियमाणो दृश्यते। येनासौ पुष्टो मेदुरः सम्प-द्यते। मांसेन समं तुल्यमन्यन्न किञ्चिदाहारजातं देहस्य बृहत्त्वकृत्सम्भवति। यस्मादतो मांसादी-नामामिषभुजां सिंहादीनां प्राणिनां सम्बन्धि यन्मांसं तन्मृगादिमांसेन सम्भृतत्वात् शरीरपोषणात् विशेषतो बृहत्त्वकृदिति सम्बन्धः॥ ३१॥

हे०—कार्श्ये प्रधानतरमौषधमाह—नहीत्यादि। कार्श्यस्य प्रधानतममौषधमाह—मांसादेत्यादि। मांसादानां मांससेविनां मांसेन संभृतत्वात् पुष्टत्वात् विशेषतो देहकृत् इत्यनुषंगः। संग्रहे तु—अतिकार्श्येनानाया-सवर्षशीतोष्णतृट्क्षुधः। तृप्तिव्याध्योषधमदान् सहते-ऽल्पबलत्वतः॥ श्वासकासक्षयप्लीहगुल्मोऽर्शोवह्निमं-दता। कृशं प्रायश्च बाधंते रक्तपित्तानिलामयाः॥ शुष्कस्फिगुदरग्रीवः स्थूलपर्वा शिराततः। उच्यतेऽतिकृ-शस्तत्र प्रागुक्तो बृंहणो विधिः॥अश्वगंधाविदार्याद्या वृष्या-श्चौषधयो हिताः। लंघनोत्थेषु रोगेषु विशेषेष्वनुकल्पयेत्॥ यत्तदात्वे समर्थः स्याद्यच्चाभ्यासेन पुष्टये। सद्यः क्षीणो ह्ययतः सद्यो बृंहणेनोपचीयते॥ चिरं क्रमेण च क्षीणस्तद-भ्यासेन तत्र च। बृंहणं देहमात्राग्निमलादीन् वीक्ष्य

योजयेत् ॥ क्रमान्मांसरसांस्तद्वत्कलालावाणिकाँस्त्विधून् । वेसवारैः कृतैस्तद्वज्जांगलैश्च कृताकृतान् ॥ रसांस्तथा च क्षीरादींस्तर्पणास्तर्पणांस्तुनः । युंज्यात्कृशानां ज्वरिणां कासिनां मूत्रकृच्छ्रिणाम्॥ तृष्यतामूर्द्ध्ववातानां मूढमारुतवर्चसाम् । समकृष्णासितातैलक्षौद्राज्यो हि स तर्पणः ॥ मंथस्तद्वत्सिताक्षौद्रमदिरासक्तुयोजितः । फाणितं सक्तवः सर्पिर्दधिमंडोऽम्लकांजिकम् ॥ तर्पणं मूत्रकृच्छ्रघ्नमुदावर्तहरं परम् । मंथः खर्जूरमृद्वीकावृक्षाम्लाम्लकदाडिमैः ॥ परूषकैः सामलकैः सद्यस्तृष्णातिरोगजित् । स्वादुरम्लश्च बलकृत् सस्नेहो रूक्ष एव च ॥ सद्यः संतर्पणो मंथः स्थैर्यवर्णबलप्रदः '' इति ॥ ३१ ॥

एवं विस्तरेण स्थूलकृशयोरुपक्रममुक्त्वा समासेनाह—

**गुरु चाऽतर्पणं स्थूले विपरीतं हितं कृशे॥३२॥**

स०--यद्गुरु तथापतर्पणं तत्समासेन स्थूलाय हितं माक्षिकशाल्वकादि । एतद्धि रौक्ष्यान्मेदः क्षपयति । गौरवाच्च शीघ्रं जरां न गच्छति । यदतो विपरीतं लघु संतर्पणं च तदतिकृशाय हितं शालिषष्टिकैणेयमांसलावकपिंजलादिकम् । अतिकृशस्य ह्यग्निरपि कृशो भवति । तस्माद्यदि तस्य गुर्वन्नपानौषधमुपयुज्यते । ततोऽग्निसादोऽस्य जायते । अथाऽस्य लघु अपतर्पणमुपयुज्यते तद्भूयः कार्श्यमेवाऽस्यापद्यते । तस्माल्लघु संतर्पणं च यत्तत्कृशाय हितम् । गुरु चेत्यत्र चशब्दाल्लघु च यदपतर्पणं श्यामाककोरदूषादिकं तथाऽन्यदपि यन्न गुरु नच लघु मेदोघ्नं जागरव्यवायव्यायामचिंतादिकं तच्च स्थूले हितं गमयति ॥ ३२ ॥

प०—संक्षेपेण स्थूलकृशयोरुपक्रममाह—स्थूले नरे गुरावपतर्पणं हितम् । यथा माक्षिकशृंगाटकबिसशालूकादिरूक्षत्वान्मेदःक्षपणहेतुः, गुरुत्वाच्छीघ्रं जरां न याति । लघ्वपतर्पणं स्थूले हितं कुलत्थश्यामाकाद्यतो विपरीतं लघु तथा सन्तर्पणं च तदतिकृशे पथ्यम् । शालिषष्टिकैणेयशशादि यस्मादतिकृशस्यापि अतिकृशोऽग्निं कुर्वन् अन्नपानौषधमग्निनाऽऽदाय यद्यपि बृंहणं तद्भूयः कृशत्वाय सम्पद्यते ॥ ३२ ॥

हे०—स्थौल्यकार्श्ययोः संक्षेपादौषधमाह—गुरु चातर्पणमित्यादि । गुरुत्वे सति यदपतर्पणं तत्स्थूले हितं, लघुत्वे सति यत्संतर्पणं तत्कृशे हितम् ॥ ३२ ॥

**यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥३३॥**

स०--उभयोः स्थूलकृशयोर्यवगोधूमं हितम् । किंभूतं यवगोधूममित्याह—तद्योग्येत्यादि । तयोः स्थूलकृशयोर्योग्या उचिताऽऽहिता कृता कल्पना संयोगसंस्कारादिनोपयोगोपायो वा यस्मिन् यवं गोधूमे तदेवं यवाः स्थूले हिताः गोधूमाः कृशे इत्यर्थः । हितयोगे चतुर्थी वक्तव्येत्यस्य प्रायिकत्वात् स्थूले हितमित्यत्र न चतुर्थी । अन्येऽपि ह्येवं प्रयोगा दृश्यन्ते। यथा रुद्रटस्य । सामाजाधीमतां हितमिति । तथाऽत्रैव । विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता । व्रणाऽक्षिरोगसंशुद्धदुर्बलस्नेहपायिनामिति ॥ ३३ ॥

प०—तयोः स्थूलकृशयोः तद्योग्योचिता तद्योग्या हिता कृता संयोगसंस्कारादिभिः कल्पनोपयोगोपायौ यस्मिंस्तत् । तेनैतदुक्तं भवति । यदा स्थूलाय यवगोधूमं दीयते तदा स्थूलयोग्ययैवापतर्पणरूपया कल्पनया यदा तु तदेव यवगोधूमं कृशाय दीयते तदा कृशयोग्ययैवापतर्पणोपक्रमयोः संयोगतरतमभावभिन्नत्वेन प्राप्तास्तत्कथं द्विविधोपक्रम उच्यत इति प्रत्यभियुक्तो ग्रन्थकारः ॥ ३३ ॥

हे०—यवाश्च गोधूमाश्च यवगोधूमं तदुभयोः कृशस्थूलयोः क्रमेण हितम् । तच्च तदुचितकृतकल्पनम् । यथा—स्थूले तैलतक्रादिसिद्धा भक्ष्याः, कृशे घृतक्षीरादिसिद्धाः । संग्रहे तु—"स्थौल्यकार्श्यप्रकृत्यापि स्यातां तत्राप्ययं विधिः। सततव्याधिततया योज्यो सदा विभज्य च ॥ मात्रादियुक्तो सेवेत यस्तु बृंहणलंघने । समधात्वग्निदेहोऽसौ सिंहसंहननो भवेत्॥दृढेंद्रियबलत्वाच्च न द्वंद्वैरभिभूयते॥"इति। स्नेहनं रूक्षणं कर्मेत्यादिना सर्वोपक्रमाणां पृथक्त्वे उपक्रमद्वयेऽन्तर्भाव उक्तः ॥ ३३ ॥

ननु चाऽतीसारज्वरगुल्मादीनामनेकरूपत्वादनंता एवोपक्रमाः प्राप्तास्तत्कथमुपक्रम्यस्य हि द्वित्वाद्द्विविधो-पक्रमो मत इत्यह—

**दोषगत्याऽतिरिच्यंते ग्राहिभेद्यादिभेदतः ।**

**उपक्रमा न ते द्वित्वाद्भिन्ना अपि गदा इव ॥**

**स०**—दोषाणां पृथग्रूपाणां संसर्गसन्निपाततरतमभेदेनाऽऽनंत्यं यातानां या गतिस्तथा तेषामेव स्थानवृद्धिक्षयलक्षणाया गतिस्तिर्यगूर्ध्वाधोलक्षणा या गतिस्तथा शाखाकोष्ठास्थिसंधिलक्षणा च या गतिस्तयाऽतिरिच्यंते बहवो भवंत्युपक्रमाः । कथमित्याह । ग्राहिभेद्यादिभेदतः । ग्राही च भेदी च ग्राहिभेदिनौ तावादी येषां रोगानुरोधान्नानाविधानामुपक्रमाणां ते ग्राहिभेद्यादयस्तेषां भेदो विशेषो ग्राहिभेद्यादिभेदस्तस्मात् । यद्यप्यतिरिच्यंतेऽनंताः संपद्यंते तथाऽपि द्वित्वात्संतर्पणाऽपतर्पणरूपान्न तेऽतिरिच्यंते । संतर्पणरूपत्वमपतर्पणरूपत्वं वा वर्जयित्वा न तेषामुपक्रमाणां रूपांतरं संभवतीत्यर्थः । कथमिव नाऽतिरिच्यंत इत्याह । भिन्ना अपि गदा इव । यथा वातादिदोषवशान्नानाविधा अपि ज्वरादयो बृंहणलंघनसाध्यत्वं सामत्वं निरामत्वं वा नातिवर्तंते तथोपक्रमा अपीति ॥ ३४ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां द्विविधोपक्रमणीयो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

**प०**—अतएव तदाह—दोषाणां क्षयस्थानवृद्ध्यूर्ध्वाधस्तिर्यग्रूपादिलक्षणयाऽगत्या अतिरिच्यमाना अप्यनन्ता भवन्तोऽपि नतु द्वित्वं तेऽतिरिच्यन्त उपक्रमाः । तथा ग्राहिभेद्यादिभेदतोऽप्यसंग्राह्युपक्रमोऽयं भेदी अयं ग्राही अयं ग्राहितरोऽयं ग्राहितमो भेदितरोऽयं भेदितमोऽयं ग्रहणात् स्निग्धरूक्षादयः । कथमिव ते अनन्ता भिन्ना अपि ये गदा इव यथा भिन्ना दोषादिवशादपि गदा व्याधयो ज्वरादय उपक्रम्यस्य द्वैरूप्यात् सन्तर्पणापतर्पणसाध्यत्वलक्षणान्नातिरिच्यन्ते । कदाचित् सन्तर्पणसाध्यास्ते भवन्ति कदाचिदपतर्पणसाध्याः न तद्व्यतिरिक्तरूपान्तरसाध्या इति भद्रम् ॥३४ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने द्विविधोपक्रमणीयोऽध्यायश्चतुर्दशः ॥१४॥

हे०—इदानीं तेषां पृथक्त्वमेव कुत इत्याह—दोषगत्येति । दोषगत्या दोषप्रकारत्वेन यथा यथा दोषा भिद्यंते तथा तथोपक्रमा भिद्यंते । यथा अनिलवृत्ते ग्राही, अप्रवृत्ते च भेदी, दाहे शीतः, शीते उष्ण इत्यादि । पृथक्त्वे हेतुश्चेत्पृथक्त्वमेवास्तु नेत्याह—न ते द्वित्वादिति द्वित्वान्नातिरिच्यंते । बृंहणत्वं लंघनत्वं वा सामान्यं न त्यजति । यथा नानाविधा अपि गदाः सामत्वं, निरामत्वम् ॥ ३४ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने उपक्रमप्रकरणं सामस्त्येन निरूपितम् ॥ १४ ॥

# पञ्चदशोऽध्यायः ।

द्विविधोपक्रमणीयाध्यायादनंतरं शोधनादिगणसंग्रहाध्यायारंभः । यतो दोषोपक्रमणीये द्विविधोपक्रमणीये च नानाविधा उपक्रमा अभिहितास्ते च मदनमधुकादिभेषजाश्रया अतस्तानि शोधनान्युपयोगीनि सर्वोपक्रमाधिकाराणि संजिघृक्षुरध्यायमिममारेभे—

**अथाऽतः शोधनादिगणसंग्रहमध्यायं व्याख्यास्यामः ॥ १ ॥**

**स०**—शोधनं शोधनरूपो द्रव्यगण आदिर्येषां एवम् । आदिशब्देन वातहरादिगणपरिग्रहः । ते संग्रहो यस्मिन्नध्याये स शोधनादिगणसंग्रहस्तं शोधनादिगणसंग्रहसंज्ञमध्यायं व्याख्यास्यामः । गण समूहः । विक्षिप्तानां पदार्थानामेकत्र राशीकर संग्रहः । तत्र शोधनगणस्य सर्वदोषविजयत्वेन प्राधान्यात्पूर्वमुपन्यासः ॥ १ ॥

**प०**—अथातः शोधनादिगणसंग्रहमध्यायं व्याख्यास्यामः । यथेह नानारूपेऽप्युपक्रमे सति द्वैरूप्यानतिक्रमस्तथा भेषजस्यापि नानारूपस्य स शोधनशमनभेदेन द्वैरूप्यानतिक्रम इत्यतो द्विविधोपक्रमणादनन्तरं शोधनादिगणसंग्रहोऽध्याय आरब्धः । विक्षिप्तानां पदानामेकत्र राशीकरणं प्रधानसङ्ग्रहः । शोधनरूपो द्रव्यगण आदिर्येषां गणा ते शोधनादिगणाः सङ्गतास्तेषां सङ्ग्रहस्तं वक्ष्यिष्यामः ॥ १ ॥

हे०–अथातः शोधनादिगणीयमध्यायं व्याख्यातु प्रतिजानीते–अथेति । शोधनादिद्रव्यगणः ॥ १ ॥

शोधनं च चतुर्विधम् । वमनविरेचनास्थापनशिरोविरेचनद्रव्यभेदेन । तत्रापि वमनस्योपधगणं तावत्पूर्वं वक्ति–

**मदनमधुकलंबानिंबबिंबीविशाला**
**त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।**
**विदुलदहनचित्राः कोशवत्यौ करंजः**
**कणलवणवचैलासर्षपाश्छर्दनानि ॥२॥**

स०–मदनं राठः मधुकं मधुयष्टिका । लंबा तुंबी दीर्घतिक्ताऽलाबुसंज्ञा । निंबः पिचुमन्दः बिंबी गोह्वा ओष्ठोपमफलसंज्ञा । विशाला इंद्रवारुणी । त्रपुसं तिक्तत्रपुसं वेद्यम् । तस्य वमने योग्यत्वात् । कुटजं वत्सकम् । मूर्वा पीलुपर्णी । देवदाली घरघरा । कृमिघ्नं विडंगम् । विदुलो जलवेतसः । दहनश्चित्रकः । चित्रा मूषिकपर्णी । कोशवत्यौ घंटालिकैका धामार्गवो द्वितीया राजकोशातकी । करंजो नक्तमालम् । कणः पिप्पली । लवणं सैंधवम् । वचा गोलोमी । एला त्रुटिः । सर्षपो रक्षोघ्नः । एतानि मदनादीनि छर्दनानि छर्दिकृन्ति छर्दिकाराणि । अत्र मदनविशालात्रपुसकुटजविडंगैलासर्षपाणां फलानि वमनकृंति । मधुकविदुलचित्रकदंतीवचानां तु मूलानि । रोध्रसुवर्णक्षीरीकंपिल्लानां त्वचो रेचनाः । शेषाणां फलपत्रपुष्पाणीति । वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः ॥ २ ॥

प०–शोधनपञ्चकर्माख्यस्य वमनादिभेदभिन्नस्योत्तरोत्तरप्रधानस्य प्राधान्यादग्रे वमनस्य तावदौषधगणं प्रधानं व्याख्यातुमिदमाह–मदनादीनि द्रव्याणि छर्दनानि वमनोपयोगीनि । मदनं मदनफलम् । मधुकं मधुयष्टिका । लम्बा कटुका । निम्बः, बिम्बी गोह्वा रक्तफलापरपर्याया । त्रपुसं कटुकम् । कुटजः वत्सकः । मूर्वा मधुरसा । देवदाली जीमूतकः । कृमिघ्नं विडङ्गम् । विदुलो वेतसः । दहनश्चित्रकः । चित्रा द्रवन्ती । कोशवत्यौ द्वे राजकोशातकी एका, कटुकोशातकी द्वितीया । करञ्जः पूतिकरञ्जः । कणा पिप्पली । एला सूक्ष्मैला सर्षपाः श्वेतसर्षपाः ॥ २ ॥

हे०–तत्र वमनगणमाह–मदनमधुकेत्यादि । मदनं गालः, मधुकं यष्टीमधु, लंबा कडुतुंबी, निंबः–पिचुमंदः, बिंबी–कडुतुंडिकेरी, विशाला–इंद्रवारुणी, त्रपुसं–कटुवालुकं, कुटजो–वत्सकः, मूर्वा–मधुरसा, देवदाली–जीमूतकः, कृमिघ्नं–विडंगं, विदुलो–वेतसः, दहनः–चित्रकः, चित्रा–चिरलांडका, कडुपटोलफलं, पत्रकं च, कोशवत्यौ–कटुकोशातकी, राजकोशातकी, करंजो–नक्तमालः, कणा–पिप्पली, लवणं–सैन्धवं, वचा–उग्रा, एला–त्रुटिः, सर्षपो–रक्षोघ्नः, छर्दनानीति बहुवचनगुणबहुत्वार्थं तेन वमनादिद्रव्याणां यस्य कस्यचित्त्रिकचतुष्कपंचकादेः प्रयोजकत्वम् । उक्तं च सुश्रुतेन–"समस्तवर्गमर्धं वा यथालाभमथापि वा । प्रयुंजीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु॥" इति । उपलक्षणं चेदम् । अतएव संग्रहकारोऽधिकमधीते । मदनजीमूतेक्ष्वाकुकोशातकीद्वयफलपुष्पपत्राणि । कुटजकरंजत्रपुससर्षपपिप्पलीविडंगैलाप्रत्यक्पुष्पीहेरणुपृथ्वीकाकुस्तुंबरीप्रपुन्नाटानां फलानि शारदानि । बस्तितर्पणकोविदारकर्बुदारकछुलाविदुराबिंबीबंधुजीवकश्वेताशणपुष्पीसदापुष्पीवचाचित्राचित्रकमूर्वारुकेंद्रवारुणीसुवर्चीचतुरंगुलस्वादुकंटकपाठापाटलीशार्ङ्गेष्ठामधुकमूर्वासप्तपर्णसोमवल्कद्विपशिग्रुसुमनस्सौमनस्यायवानीवृश्चीवपुनर्नवामहासहाक्षुद्रासहेक्षुसहाकाण्डेक्षुकांडकतकपिप्पलीमूलकदंबचविकानलदेशीह्रीवेरमूलानि शाल्मलीशालुकाभद्रपर्ण्यैरावण्युपोदकौद्दालकधन्वनरसांजनराजादनोपवित्राणोपशृंगादिकापिच्छाः प्रियंगुपुष्प्यः तालीसपत्रं हरिद्राशृंगबेरकंदौ मधूकदारुहरिद्रासारौ तगरगुडूचीमधुकफाणितक्षीरक्षारलवणानि चेति वमनोपयोगीनीति ॥ २ ॥

**निकुंभकुंभत्रिफलागवाक्षी-**
**स्नुकूशंखिनीनीलिनितिल्वकानि ।**
**शम्याककंपिल्लकहेमदुग्धा**
**दुग्धं च मूत्रं च विरेचनानि ॥ ३ ॥**

स०–निकुंभो दंती । कुंभस्त्रिवृत् । त्रिफला वरा । गवाक्षी विशाला द्वितीयेंद्रवारुणी । स्नुग्गुडा । शंखिनी यवतिक्ता । नीलिनी नीलपुष्पा भारवाहीसंज्ञा । तिल्वको रोध्रः । शम्याकः कर्णिकारः । कंपिल्लको रंजनकः । हेमदुग्धा कनकक्षीरी । दुग्धं क्षीरम् । मूत्रं प्रसिद्धम् । निकुंभादीन्येतानि विरेचनानि । उपजातिर्वृत्तम् ॥ ३ ॥

प०–निकुम्भादीनि द्रव्याणि विरेचनानि । निकुम्भो दन्ती । कुम्भस्त्रिवृत् । गवाक्षी विशाला ।

स्नुक् सुधा। शंखिनी शङ्खकुसुमा। नीलिनी नीलपुष्पा। तिल्वको रोध्रः। शम्याक आरग्वधः। कम्पिल्लको रञ्जनकः। हेमदुग्धा स्वर्णक्षीरी। दुग्धं क्षीरम्। गोमूत्रं गोजलम्॥ ३॥

हे०—विरेचनगणमाह—निकुंभकुंभेति। निकुंभो- दंती, कुंभस्त्रिवृत्, त्रिफला प्रसिद्धा। गवाक्षी—श्वेतपुष्पेन्द्रवारुणी, स्नुक्—स्नुही, शंखिनी—कालांजनीसदृशा श्वेतपुष्पा, नीलिनी—कालांजनिका, तिल्वको—रोध्रः, शम्याक आरग्वधः, कंपिल्लो—रक्तांगः, हेमदुग्धा—हैमावती कंकुष्ठप्रकृतिः। संग्रहे त्वधिकमुक्तम्। त्रिवृच्छयामादंतीद्रवंतीशंखिनीसप्तलाऽजगंधाऽजशृंगीवचागवाक्षीछगलांत्रीसुवर्णक्षीरीचित्रककिणिहिह्रस्वपंचमूलवृश्चीवपुनर्नवापलंकषाशाकमूलानि, तिलकशम्याककंपिल्लकपाटलीत्वचः, त्रिफलापीलुप्रियालबहुलबदरककंधुकाश्मर्यपरूषकद्राक्षाशंखिनीक्लीतक्षीरकोदकीर्याविडंगपूगपंचांगुलफलानि, चतुरंगुलफलपत्राणि, पूतीकत्वक्फलपत्राणि, महावृक्षसप्तपर्णज्योतिष्मतीक्षीराणि, क्षीरमस्तुमद्यधान्याम्लमूत्राणि चेति विरेचनोपयोगीनि। कोशातकीदेवदालीसप्तलाकारवेल्लिकेक्ष्वदंष्ट्राकंक्षीरमुष्णोदकं चेत्युभयात्मकानीति॥ ३॥

मदनकुटजकुष्ठदेवदाली—
मधुकवचादशमूलदारुरास्नाः।
यवमिसिकृतवेधनं कुलत्थो
मधु लवणं त्रिवृता निरूहणानि॥ ४॥

स०—मदनं मदनफलम्। कुटजं वत्सत्वक्। कुष्ठं गदनाम। दारु देवदारुः। रास्ना युक्तरसा। मिसिः शतपुष्पा। कृतवेधनं धामार्गवः। निरूहणानि निरूहणसाधनानि। भवति जगति नौ ततः परौ यौ नजसहितैर्जरगैश्च पुष्पिताग्रा॥४॥

प०—मदनादीनि निरूहणान्यास्थापनद्रव्याणि। कुटजो वत्सकः। देवदाली खनी जीमूतापरपर्याया। मधुकं मधुयष्टी। ह्रस्वं महत्पञ्चमूलं दशमूलमुभे स्मृते। दारु देवदारुः। मिसिः शतपुष्पा। कृतवेधनं कटुकोशातकी। मधु माक्षिकम्। लवणं सैन्धवादि। त्रिवृत् कूटरणापरपर्यायः॥ ४॥

हे०—निरूहणमाह मदनेत्यादि। कुष्ठं—पाकलं, दशमूलं—बृहत्, ह्रस्वपंचमूलं, दारु—देवदारुः रास्ना प्रसिद्धा। यवः—तीक्ष्णशूलकः, मिसिः—शतपुष्पा, कृतवेधनं—कटुकोशातकी, कुलत्थः—शिंबीधान्यविशेषः, मधु—माक्षिकम्। संग्रहे त्वधिकमुक्तं बस्तिषु तेषु तेष्ववस्थांतरेषु यान्युपयुज्यंते द्रव्याणि तान्यसंख्येयत्वान्नोपदिश्यंते। रसस्कंधेभ्य एव यथादोषं यथावस्थं विभज्यसर्वेषु प्रयोजयेत्। मदनकुटजजीमूतकेक्ष्वाकुकोशातकीद्वयत्रपुससिद्धार्थकशताह्वाफलानि, बलादशमूलैरंडत्रिवृद्वृद्धदारुयष्ट्याह्वकुष्ठरास्नापुनर्नवाकतृणमूलानि, सरलदेवदारुहपुषाहिंगुरसांजनव्योषपत्रैलामृतायवकोलकुलत्थलवणगुडलवणमस्तुधान्याम्लमूत्रस्नेहक्षीरक्षौद्राणि चेति॥ ४॥

वेल्लाऽपामार्गव्योषदार्वीसुराला
बीजं शैरीषं बार्हतं शैग्रवं च।
सारो माधूकः सैंधवं तार्क्ष्यशैलं
त्रुटयौ पृथ्वीका शोधयंत्युत्तमांगम्॥ ५॥

स०—वेल्लो विडंगः। अपामार्गः प्रत्यक्पुष्पी व्योषं त्रिकटुकम्। दार्वी पीतद्रुः। सुराला श्रेष्ठसर्जरसः। शिरीषबीजं शैरीषम्। बृहत्या बीजं बार्हतम्। शिग्रोः बीजं शैग्रवम्। सारो माधूको मधुपुष्पसारः सैंधवं सिंधूत्थम्। तार्क्ष्यशैलं शुष्करसांजनम्, त्रुटयौ सूक्ष्मैला स्थूलैला च। पृथ्वीका हिंगुपत्री एतान्युत्तमांगं शोधयंति। मूर्धविरेचनानीत्यर्थः। म्यौ पंचाश्वैर्वैश्वदेवीति नाम्ना॥ ५॥

प०—वेल्लादीनि द्रव्याणि उत्तमाङ्गं शिरः शोधयन्ति। वेल्लं विडङ्गम्। अपामार्गः प्रत्यक्पुष्पम्। व्योषं त्र्यूषणम्। 'पिप्पली मरिचं शुण्ठी त्रयमेविमिश्रितम्।' दार्वी दारुहरिद्रा। सुराला सुलक्षण शिरीषस्य बीजं शैरीषम्। बृहत्या बीजं बार्हतम्। शिग्रुबीजं शैग्रवम्। सारो माधूको मधूकसारः उत्क्लिष्टं मधूकपुष्पम्। तार्क्ष्यशैलं शुष्करसाञ्जनम् त्रुटयौ एलाद्वयं—सूक्ष्मैला, पत्रैला च। पृथ्वीका स्थूलजीरकः॥ ५॥

हे०—नावनगणमाह—वेल्लापामार्गेति। सुराला—श्रेसर्जरसः, शिरीषबृहतीशिग्रूणां बीजं मधुकस्य सार तार्क्ष्यशैलं—रसांजनं, त्रुटयौ—एलाद्वयं, पृथ्वीका—बाष्पिव संग्रहेत्वधिकमुक्तम्—अपामार्गविडंगमरिचपिप्पलीशिरीषबिल्वाजाजमोदावार्ताकपृथ्वीकैलाहरेणुफलानि, ताल सतमालतर्कारीहरीतकवर्गपत्राणि, सर्षपफलपत्राणि, शि

त्वत्वचः, हरिद्रामूलकलशुनतगरकंदपत्राणि, अतिविषा-
द:, कुष्ठवचाभार्ङ्गीश्वेताकणिहिनागदंतीज्योतिष्मती-
वाक्षीवयस्थावृश्चिकालीविंबीकरंजमूलानि, अर्का-
र्कपुष्पफलमूलानि, रोध्रमदनसप्तपर्णनिंबपीलुबीजानि,
रसामातुलिंगलवंगपुष्पाणि, अगुरुसुरदारुसरलशल्लकी-
तगण्यशनरसांजनहिंगुलाक्षानिर्यासाः, सालतालमधूकदा-
सारातिजस्विनीमेषशृंगीवरांगेंगुदीबृहतीद्वयत्वचः, राजा-
नमज्जा क्षौद्रं लवणानि मद्यानि, गवादिशकृन्मूत्रपि-
ानि । एवंविधानि चेंद्रियोपशमनीयान्यन्यान्यपि ।
था स्नेहं क्षीरं रक्तं मांसरसो धान्यरसस्तोयमिति शिरो-
रेचनोपयोगीनि । मधुकपद्मकमंजिष्ठासारिवामुस्तपुन्नाग-
ागकेशरैलावालुकसुपर्णत्वक्तमालपत्रपृथ्वीकाहरेणुलाक्षाश-
पुष्पाशल्लकीशर्करामदनकमरुबकन्यग्रोधोदुंबराश्वत्थप्ल-
रोध्रत्वक्पद्मोत्पलानि सर्वगंधद्रव्याणि च कुष्ठतगरुवर्ज्यानि
योगिकधूमोपयोगीनि । अगुरुगुग्गुलुशल्लकीशैलेयनल-
ह्रीवेरहरेणूशीरमुस्तध्यामकवरांगकश्रीवेष्टकस्थौणेयकपारि-
ठववचैलवालुककुंदरुसर्जरसयष्ट्याह्वफलसारस्नेहमधूच्छिष्ट-
त्वफलमज्जतिलयवमाषकुंकुमैरिमेदोमज्जवसासर्पींषि वा
हिकधूमोपयोगीनि । शिरोविरेकद्रव्याणि गंधद्रव्याणि
तीक्ष्णानि । मनोह्वा हरितालं चेति तीक्ष्णे धूमोपयो-
ानि ॥ ५ ॥

**द्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ।**
**ायुं वीरतरादिश्च विदार्यादिश्च नाशयेत्॥ ६ ॥**

स०—भद्रदारु द्रुकिलिमम् । नतं तगरम् । कुष्ठं
द:। दशमूलं द्विपंचमूलम् । बलाद्वयं बलाऽतिबला च ।
तानि भद्रदार्वादीनि तथा वक्ष्यमाणो वीरतरादि-
ेदार्यादिश्च गणो वायुं नाशयति ॥ ६ ॥

प०—भद्रदार्वादीनि द्रव्याणि वायुं घ्नन्ति । भद्र-
ारु देवदारु । नतं तगरम् । बलाद्वयं—बलाऽतिब-
। वीरतरादिर्वक्ष्यमाणो गणः तथा विदार्यादिश्च ।
ौ च वातघ्नौ वर्गौ ॥ ६ ॥

हे०—वातघ्नगणमाह—भद्रदारु—देवदारु, नतं—तगरं,
ीरतरादिर्विदार्यादिर्वक्ष्यमाणौ गणौ तयोर्यानि पुनरुक्तानि
द्विगुणानि योजनीयानि । संग्रहे तु-भद्रदारुकुष्ठलवणतगरब-
अतिबलार्तगलकच्छुरावाह्लीककुबेराक्षिवत्सादन्यर्कालर्क-
केशुककतकभार्गीकार्पासीवृश्चिकालीधत्तूरप्रभृतीनि विदार्या-
दिगणो वीरतरादिस्तृणाख्यवर्ज्यानि षट् पंचमूलानि चेति
वातशमनानि ॥ ६ ॥

**दूर्वाऽनंता निंबवासाऽऽत्मगुप्ता**
**गुंद्राऽभीरुः शीतपाकी प्रियंगुः ।**
**न्यग्रोधादिः पद्मकादिः स्थिरे द्वे**
**पद्मं वन्यं सारिवादिश्च पित्तम् ॥ ७ ॥**

स०—दूर्वा शाद्वलम् । अनंता यवासः । निंबः
प्रसिद्धः । वासा आटरूषकः । आत्मगुप्ता कपि-
कच्छूः । गुंद्रा पदएरकः । अभीरुः शतावरी । शीत-
पाकी शिखंडिका काकणंतिकाभेदः । प्रियंगुः श्यामा ।
एष दूर्वादिगणस्तथा वक्ष्यमाणो न्यग्रोधादिस्तथा
पद्मकादिगणस्तथा शालिपर्णीपृश्निपर्ण्यौ तथा पद्मं
जलजं वन्यं कुटंनटं सारिवादिश्च गणः । एते पित्तं
नाशयंति । म्तौ तो गौ चेच्छालिनी वेद-
लोकैः ॥ ७ ॥

प०—दूर्वादीनि पित्तं घ्नन्ति । दूर्वा शाद्वला ।
अनन्ता यवासकः । वासा वासकः । आत्मगुप्ता
कपिकच्छूः । अभीरुः शतावरी । शीतपाकी शिख-
ण्डिका । प्रियंगुः गन्धप्रियंगुः । न्यग्रोधादिपद्मका-
दिसारिवादिगणा वक्ष्यमाणाः । स्थिरे द्वे शालि-
पर्णीपृश्निपर्ण्यौ । पद्मं कमलम् । वन्यं कुटंनटं
परिपेलवापरपर्यायम् ॥ ७ ॥

हे०—पित्तघ्नगणमाह—अनंता—दुरालभा, गुंद्रा—एरका,
शीतपाकी-गुंजा, स्थिरे द्वे शालिपर्णी, माषपर्णी च । वन्यं
क्षुद्रमुस्तान्यग्रोधादिपद्मकादिसारिवादि वक्ष्यमाणा गणाः ।
अत्रापि पुनरुक्तानि द्विगुणानि ॥ ७ ॥

**आरग्वधादिरर्कादिर्मुष्ककाद्योसनादिकः ।**
**सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित्॥८॥**

स०—आरग्वधाद्यादयो गणाः सप्तैते बलासं श्लेष्माणं
जयंति ॥ ८ ॥

प०——बलासः कफः । एते सर्वे गणा बलासं
कफं घ्नन्ति ॥ ८ ॥

हे०—संग्रहे तु—दूर्वानंतामोचरसमंजिष्ठापारिपेलवकाला-
वलीयककदलीकंदलीपद्मस्यात्मगुप्तानालिकेरखर्जूरद्राक्षावि-

विदारीबलानागबलानागपुष्पाशतावरीशीतपाकयोदनपार्कातृ-
णशूल्यांशुमतीद्वयारिष्टकारूपकेत्कटप्रियंगुधातकीधवधन्वन-
स्यंदनखदिरकदरप्रियालतालशालसर्जतिनिशाश्वपर्णगुंजावा-
नीरपद्मापद्मकपद्मबीजमृणालकुमुदनलिनसौगंधिकपुंडरीक--
शतपत्राशैवालकह्लीरोत्पलकाकोत्पलिकाशालूकश्रृंगायकसे--
रुकक्रौंचादनप्रभृतीनि शीतवीर्याणि । सा-
रिवादिः पद्मकादिः पटोलादिर्न्यग्रोधादिर्दाहहरो महाक-
षायस्तृणपञ्चमूलं चेति पित्तशमनानि । श्लेष्मघ्नगणमाह—
एते सप्तगणा वक्ष्यमाणाः अत्रापि पुनरुक्तानि द्विगुणानि।
संग्रहे तु——शीताशिवशतपुष्पासरलसुरदारुराखिंगुदीसा-
तलसुमनःकाकादनीलांगलकीहस्तिकर्णमुञ्जातकलामज्ज---
कप्रभृतीनि आरग्वधादिरसनादिरर्कादिः सुरसादिर्मुष्क-
कादिर्वत्सकादिर्मुस्तादिः शीतघ्नो महाकषायो वल्लीकंट-
कपञ्चमूले चेति श्लेष्मप्रशमनानीति ॥ ८ ॥

**जीवंती काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च ।**
**ऋषभकजीवकमधुकं चेति गणोजीवनीयाख्यः९**

स०—जीवंत्यादिर्गणो जीवनीयसंज्ञः। उदाहरणमात्रं चेदम्। धीमता स्वादुशीतस्निग्धादीन् जीवंत्यादिषु साधारणगुणानालोच्य क्षीरेक्षुद्राक्षाऽक्षोडविदार्यादिषु तद्गुणेषु जीवनीयादित्वमवधारयितुं युक्तमिति । जीवंती जीववर्धना । काकोल्यौ द्वे एका काकोली कवडीसंज्ञा । अन्या क्षीरकालोली पयस्विनीसंज्ञा । द्वे मेदे एका मेदा मणिच्छिद्रसंज्ञा । अन्या महामेदा वृक्षसहासंज्ञा । मुद्गपर्ण्यादीनां प्रागुक्तानि नामानि । द्रुथंतांतरादिगुरुभिः सोदविलैः सप्तभिर्गणैर्गुरुणा । आर्योर्धे नाऽत्रायुजि जः षष्ठोऽयं नलघुकौ वा ॥ ९ ॥

प०—जीवन्त्याद्यो गणोऽयं जीवनीयनामा तथा मधुकापरपर्यायः। जीवन्ती जीवनी । काकोल्यौ द्वे—काकोली क्षीरकाकोली च। मेदे द्वे—मेदा महामेदा च। मुद्गमाषपर्ण्यौ द्वे—मुद्गपर्णी माषपर्णी च। ऋषभको विषाणी। जीवकः कूर्चशीर्षापरपर्यायः। मधुकं मधुयष्टी ॥ ९ ॥

हे०—अथ महाकषायाः। तत्र जीवनीयगणमाह—संग्रहे तु-आनंत्यादौषधानामामयानां चानन्ता एव कषायाः। ये तु सुतरामुपयोगवन्तः प्रकर्षवार्तिनो वाते जीवनीयादिसंज्ञाः । प्रत्येकं दशकषायसंयोगात्पञ्चचत्वारिंशन्महाकषाया वक्ष्यन्ते । तत्प्रतिपत्त्यर्थमेव मन्दबुद्धीनामुदाहरणमात्रदर्शनार्थम् । शक्यं हि बुद्धिमद्भिः स्वादुस्निग्धशीतादीन् जीवन्त्यादिषु साधारणान् गुणानालोच्य क्षीरेक्षुद्राक्षाक्षोडविदारिकन्दादिष्वपि तद्गुणेषु जीवनीयादित्वमवधारयितुं यथोक्तानुसरणमेव श्रेयो मंदबुद्धेरिति। व्यस्ताश्च ते चत्वारिंशच्छतानि पञ्चाशदाधिकानि तदभिधानान्येव। यद्यपि च तानि तान्येव द्रव्याणीति द्रव्यसंकरः कषायेषु तथापि न संज्ञाविरोधः। एकस्यापि बहुकार्यनिवर्तनात्। तत्र लवणवर्ज्याः पञ्चरसाः कल्पनायां कषाया इत्युच्यन्ते तद्योनित्वात्। लवणे तु निर्यासादिकल्पनानामसम्भवः । पृथगुपयोगोपकाररहितत्वाच्च नैरर्थक्यमिति। भवन्ति चात्र जीवन्तीकाकोल्यौ द्वे मेदे मुद्गमाषपर्ण्यौ च । ऋषभकजीवकसहित चेति गणो जीवनीयाख्यः॥ वाट्याबलापयस्याकाकोल्या विक्षुभवाजिगन्धे च । क्षीरिणी राजक्षवके भारद्वाजं च बृंहणीयोऽयम्॥ वाट्या अतिबला, पयस्या ऋष्यगन्धा विदारी क्षीरविदारी, क्षीरिणी श्रीपर्णी, राजक्षवक दुग्धिका, भारद्वाजी वनकार्पासी । हैमवती चिरिबिल मुस्ता कुष्ठं वचा हरिद्रे च । चित्रककटुकातिविषावर्गोऽलेखनीयाख्यः॥ हैमवती श्वेतवचा। अर्कैरण्डौ चित्राचित्र कचिरिबिल्वशंखिनीसरलाः । हेमक्षीरी कटुका वह्निमुख भेदनीयानि ॥ चित्रा दन्ती, सरला त्रिवृत्, वह्निमुख लांगली । मधुमधुकपर्णीकट्फलरोध्रप्रियंगुधातक्यः अंबष्ठकीसमंगामोचरसश्चेति सन्धानम् ॥ अम्बष्ठक मोचिका । हिंगुमरिचाम्लवेतसदीप्यकभल्लातकास्थि संयोगात्। वर्गः सपञ्चकोलो निर्दिष्टो दीपनीयोऽयम्॥ ऐंद्र्यतिरसा पयस्या ऋष्यप्रोक्ता स्थिरावलाऽतिबला इति बल्यो दशकोऽयं हयगन्धा रोहिणी ऋषभी ॥ ऐं इन्द्रवारुणी, अतिरसा मूर्वा, ऋष्यप्रोक्ता शतावरी रोहिणी श्रीपर्णी, ऋषभी कपिकच्छुः । चन्दनतुंगप स्यासितालतामधुकपद्मकोशीरम् । वर्ण्यो गणोऽयमुदि माञ्जिष्ठासारिवासहिता ॥ तुंगं किंजल्कं, सिता श्वेतदू लता प्रियंगुः । हंसपदीबृहतीद्वयमृद्वीकासारिवेक्षुमूलानि कैडर्यमधुककृष्णाः सविदार्यः कण्ठजननानि ॥ कैड कट्फलः । वृक्षाम्लबदरदाडिमकुवलाम्रान्नातककुचक

र्दम् । द्वयं समातुलुंगं विद्धि तथा साम्लवेतसं वर्गम्॥ कुवलं कोलम्। नागरचविकाचित्रकविडंगमूर्वामृतावचा-मुस्ताः । सहपिप्पलीपटोलास्तृप्तिघ्नोऽयं गणः प्रथितः॥ कुटजफलबिल्वचित्रकमहौषधप्रतिविषावचाचविकाः। धन्वयवासं पथ्या दारुहरिद्रगणोऽर्शोघ्नः ॥ खदिरामलकारुष्करानिशाभयासप्तपर्णकरवीराः । कुष्ठघ्नाश्चतुरंगुलविडंगजातीप्रवालाश्च ॥ नलदकृतमालचन्दनसर्षपघननिम्बकुटजमधुकानि । कण्डूं दारुहरिद्रासनक्तमालानि निघ्नन्ति॥ अक्षीवमरिचकैंबुकविडंगकांडीरकिणिहिनिर्गुंडयः । घ्नंति कृमीञ्श्वदंष्ट्रावृषाखुपर्ण्यस्तथा न चिरात् ॥ अक्षीवः शिग्रुः, कांडीर उग्रकीटः । मंजिष्ठाश्लेष्मातकरजनीसुवहाशिरीषपालिंद्यः । सैलाश्चन्दनकतकाः ससिंदुवारा विषं घ्नंति ॥ सुवहा गन्धनाकुली, पालिंदी त्रिवृता। शालिकुशकाशषष्टिकवीरणदर्भेक्षुवालिकेक्षूणाम् । तद्वद्दुग्धोत्कटयोर्मूलमलं स्तन्यजननाय ॥ इक्षुवालिका-इस्वेक्षुः । पाठानागरसुरतरुघनामृतासारिवेंद्रयवा मूर्वाः । कटुका किराततिक्तं वर्गोऽयं स्तन्यशुद्धिकरः ॥ मेदाकाकोलीद्वयवृक्षरुहाजीवकर्षभकुलिंगाः । शुक्रजननो गणोऽयं सहजटिलासूर्यपर्णीति । कुलिंगा कर्कटशृङ्गी, जटिला उचटा, कुष्ठैलवालककट्फलकांडेक्षुसमुद्रफेनकोशीरैः । वसुकेक्षुरकैः शुक्रं शुध्येत्सकदम्बनिर्यासैः ॥ कांडेक्षुः काशः, वसुकस्छूकः, इक्षुरकः कोकिलाक्षः। द्राक्षाकाकोलीद्वयमधुपर्णीमधुकजीवकविदार्यः । स्नेहोपगाः समेदाजीवन्तीशालिपर्णीकाः ॥ सौभांजनपुनर्नववृश्चीवकुलत्थमाषबदराणि । स्वेदोपगानि विद्यात्सयवतिलार्कोरुबूकाणि ॥ लाजाम्लबदरदाडिमषष्टिकमातुलुंगसेव्यानि । जम्ब्वाम्रपल्लवानि च वमिनिग्रहणाय मृत्स्ना च ॥ नागरधन्वयवासकवालकपर्पटकचन्दनगुडूच्यः । भूनिंबघनपटोलीकुस्तुंबर्यस्तृषं घ्नंति । बृहतीद्वयवृक्षरुहापुष्करमूलाग्र्याकणाशृंग्यः । हिध्मां निघ्नन्ति शठी दुरालभा बदरीजं च ॥ श्यामानन्ता पद्मा कट्वंगः पद्मकेशरं रोध्रम्। धातकीकुसुमसमंगामोचरसाम्रास्थिविड्ग्रहणम् ॥ श्यामा प्रियंगुः, अनन्ता धन्वयासकः, पद्मा पद्मचारिणी । जम्बूह्लकी मधुकं नीलोत्पलकच्छुरातिलाः श्याह्वम् । मृष्टा च मूत्रपयस्या सशाल्मली विट्विरजनानि ॥ कच्छुरा धन्वयासकः, श्याह्वः श्रीवेष्टकः । जंब्वाम्रोदुम्बरवटकपीतनप्लक्षपिप्पलाश्मन्तम्। भल्लातकसोमवल्कं मूत्रसंग्रहणाय निर्दिष्टम्॥ कमलनलिनकुमुदमधुकसौगन्धिकधातकीलताकुसुमम्। मूत्रं नयति विरागं सोत्पलशतपत्रपुण्डरीकं च । मधुकधातकीलताकुसुमेभ्योऽन्यानि पद्मानि । लता प्रियंगुः, कमलं त्रिवर्णं, नलिनं रक्तं, शतपत्रं नीलं, पुण्डरीकं श्वेतं, तानि दिवा विकसन्ति । कुमुदं श्वेतम्, उत्पलं नीलं, ते रात्रौ । सौगन्धिकं सन्ध्यायाम्।वृक्षादनी श्वदंष्ट्रादर्भैत्कटलोहितेक्षुवास्तुककुशकाशाः । मूत्रं विरेचयेयुर्गुंद्रा पाषाणभेदश्च ॥ द्राक्षामलकपुनर्नववृश्चीवदुरालभाभयाकृष्णाः । कासं घ्नंति सशृंगी तामलकी कण्टकारी च॥ चण्डाम्लवेतसशठीतामलकीसुरसहिंगुजीवन्त्यः।पुष्करमूलैलागुरुवर्गोऽयं श्वासशमनाय ॥ द्राक्षापीलुपरूषकमंजिष्ठासारिवामृतापाठाः । त्रिफला चेति गणोऽयं ज्वरसंशमनाय निर्दिष्टः ॥ दाडिमफल्गुपरूषकप्रियालयवषष्टिकेक्षुबदराणि । श्रमनाशनानि विद्याद्द्राक्षाखर्जूरसहितानि ॥ पद्मकलाजोशीरं मधुकोत्पलसारिवासितोदीच्यम्। काश्मर्यफलचन्दनमेष गणो दाहहा विनिर्दिष्टः ॥नतनागरागुरुवचाधान्यकभूतीकपिप्पलीव्याघ्रः । शीतं शमयंत्यचिराच्छ्योनाकः साग्निमन्थश्च ॥ भूतीकं कट्तृणम् । तिंदुकपियालबीजकसप्रच्छदखादिरकदरबदराणि । अहिमारवाजिकर्णौ ककुभश्चोदर्दशमनानि ॥ काकोल्येलासेव्यं निदिग्धिके शालिपृश्निपर्ण्यौ च । घ्नंत्यंगमर्दमाचिराच्चंदनमधुकोरुबूकं च ॥ दीप्यकमरिचाजाजीकण्डीरं साजगंधमथ शूलम्। शमयाति सपञ्चकोलं शोफं दशमूलमाद्यं च ॥ मधुमधुकलाजगैरिकफलिनीमोचरसमृत्कपालानि । संस्थापयंति रुधिरं रुधिरं च सशर्करारोध्रम् ॥ मृत्कपालं कर्परं, रुधिरं कुंकुमम्। शालैलावालुककट्फलमोचरसाशोकपद्मकशिरीषम् । स्थापयाति वेदनामथ सहानिम्बकदम्बविदुलं च । विदुलो वेतसः । कैडर्यहिंगुचोरकपलंकषाशोकरोहिणीवयःस्थाः । पूत्यरिमेदोजटिला गोलोमीवचाश्च संज्ञादाः ॥ पलंकषा गुग्गुलुः, अशोकरोहिणी कटुका, वयःस्था हरीतकी, पूत्यरिमेदो दुर्गन्धोऽहिमारकः, जटिला मांसी, गोलोमी दूर्वा । ऐंद्री दूर्वाऽमोघा विष्वक्सेनाऽव्यथा शिवाऽरिष्टा । ब्राह्मी सवाट्यपुष्पी शतवीर्या स्थापयेद्गर्भम् ॥ अमोघा पाटला, विष्वक्सेना वाराही, अव्यथा ब्रह्मचारिणी, शिवा आमलकी, अरिष्टा नागबला, वाट्यपुष्पी अतिबला, शतवीर्या शतावरी, अमृता पथ्या, धात्री जीवन्ती, श्रेयसी स्थिरा युक्ता मंडूकपर्ण्यतिरसा स्थापयति पुनर्नवा च वयः । श्रेयसी पाठा, युक्ता रास्ना । इति नानाविधव्याधिविघातार्थमुदाहृताः । योगा रोगातुरवशात्कल्पयेत्तान् यथायथमिति ॥ ९ ॥

विदारिपंचांगुलवृश्चिकाली-
वृश्चीवदेवाह्वयशूर्पपर्ण्यः ।
कंडूकरी जीवनह्रस्वसंज्ञे
द्वे पंचके गोपसुता त्रिपादी ॥
विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ।
शोषगुल्मांगमर्दोर्ध्वश्वासकासहरो गणः १० ॥

स०—विदारी वृष्यकंदा। पंचांगुल एरंडः। वृश्चिकाल्युष्ट्रधूसको मेषशृंगी । वृश्चीवः क्षुद्रवर्षाभूः । देवाह्वयः सुरदारुः । देवाह्वयेति पाठे एका सहदेवा द्वितीया विश्वदेवा चेति देवाद्वयम् । शूर्पपर्णी मुद्गपर्णी तथा माषपर्णी च । कंडूकरी कपिकच्छूः। जीवनेत्यादि । अभीरुवीराजीवंतीजीवकर्षभकैः स्मृतम्। जीवनाख्यमिति जीवनसंज्ञं पंचमूलम् । बृहती कंटकारिका। शालिपर्णी पृश्निपर्णी गोक्षुरकमिति ह्रस्वसंज्ञं पंचमूलम्। गोपसुता सारिवा । त्रिपादी हंसपादी कीटमारिकाख्या। उपजातिर्वृत्तम्। एष विदार्यादिगणो बृंहणो वातपित्तघ्नः शोषादिहरश्च ॥ १० ॥

प०—विदार्यादिरयं वर्गो हृद्यो हृदयप्रियः। बृंहणो बृंहत्त्वकृत् । तथा वातपित्तहृत्, शोकादिहरश्च । विदारी क्षीरविदारी । पञ्चांगुल एरण्डः । वृश्चिकाल्युष्ट्रामकः । वृश्चीवः पुनर्नवा । देवाह्वयः सहदेवा द्वितीया विश्वदेवा नागबलापरपर्याया । शूर्पपर्ण्यौ द्वे मुद्गपर्णीमाषपर्ण्यौ च। कण्डूकरी कपिकच्छूः। जीवनीह्रस्वसंज्ञिके द्वे पञ्चके जीवनाख्यं यत्पञ्चमूलम् । अभीरुवीराजीवन्तीजीवकर्षभकद्रव्यनिष्पादितं ह्रस्वं पञ्चमूलम् । बृहतीकण्टकारिका—शालिपर्णीपृश्निपर्णीगोक्षुरकद्रव्यनिष्पादितम् । गोपसुता सारिवा । त्रिपादी हंसपदी कीटमारिपरपर्याया ॥ १० ॥

हे०—अथ विदार्यादिप्रभृतयः । तत्र विदार्यादिगणमाह—वृश्चिकाली वृश्चिकपत्रा,वृश्चीवः पुनर्नवा,देवाह्वयं सहदेवा विश्वदेवा च, शूर्पपर्ण्यौ मुद्गपर्णी माषपर्णी च, कंडूकरी कपिकच्छूः, जीवनं ह्रस्वं च पंचमूलं प्रागुक्तम्। गोपसुता सारिवा, त्रिपादी हंसपादी। अयं विदार्यादिगणो हृद्यत्वादिगुणः । शोषो राजयक्ष्मा, ऊर्ध्व उदावर्तः ॥ १० ॥

सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम् ।
यष्टी परूषकं हंति दाहपित्ताऽस्रतृड्ज्वरान् ११

स०—सारिवोष्णवल्ली । उशीरं वीरणकः। काश्मर्यः सर्वतोभद्रा । मधूको गुडपुष्पकः। शिशिरद्वयमेकं सितं चंदनं मलयजसंज्ञमन्यद्रक्तचंदनसंज्ञम् । यष्टी [illegible] संज्ञा । परूषकं मृदुफलम् । सारिवादिगण [illegible] दीन् हंति ॥ ११ ॥

प०—सारिवादिरयं वर्गो [illegible] । काश्मर्यं काश्मरी । मधूकं मधूकपुष्पम् । शिशिरद्वयं श्वेतचन्दनं रक्तचन्दनं च । यष्टी मधुयष्टी । परूषको मृदुफलपर्यायः ॥ ११ ॥

हे०—सारिवादिगणमाह—शिशिरद्वयं—[illegible] दने ॥ ११ ॥

पद्मकपुंड्रौ वृद्धितुगर्द्ध्यः
शृंग्यमृता दश जीवनसंज्ञाः ।
स्तन्यकरा घ्नंतीरणपित्तं
प्रीणनजीवनबृंहणवृष्याः ॥ १२ ॥

स०—पद्मकं हेमपद्मम् । पुंड्रः प्रपौंडरीकम्। वृद्धिः श्रावणी । तुगा तुगाक्षीरी । ऋद्धिर्महाश्रावणी । शृंगी कुलीरशृंगी । अमृता छिन्नरुहा, दश जीवनसंज्ञा जीवंत्यादिगणोक्ताः एते पद्मकादयः स्तन्यहेतवः। तथा वातपित्तं घ्नंति । तथा प्रीणनादियुक्ताः। अष्टाभ्यो भाद्गौ योज्या उपचित्रा ॥ १२ ॥

प०—पद्मकाद्या औषधयः स्तन्यकराः । स्तन्यं स्त्रीक्षीरं कुर्वन्ति । ईरणपित्तं वातपित्तं घ्नन्ति। प्रीणयन्तीति प्रीणनाः।बृंहयन्तीति बृंहणाः। जीवयन्तीति जीवनाः । वृष्या रेतोवृद्धिकराः । पद्मको हेमपद्मापरपर्यायः । पौंड्रं प्रपौण्डरीकम् । वृद्धिः श्रावणी। तुगा वंशरोचना। ऋद्धिस्तुष्टिः। शृंगी कर्कटशृङ्गी । अमृता गुडूची । दश जीवनसंज्ञा जीवनीकाकोल्याद्याः प्रागुक्ताः ॥ १२ ॥

हे०—पद्मकादिगणमाह—पुंड्रः प्रपौंडरीकः,तुगा वंशरोचना, शृंगी कर्कटशृंगी, अमृता गुडूची, जीवनसंज्ञा दश जीवनीयो गणः। ईरणो वायुः ॥ १२ ॥

**परूषकं वरा द्राक्षा कट्फलं कतकाफलम् ।**
**राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् १३ ॥**

स०—परूषको मृदुफलो बंधनच्छदः। वरा श्रेष्ठा। द्राक्षा मधुफला। कट्फलं रोहिणी सोमवल्कः। कतकाफलं वारिप्रसादनम्। राजाह्वं कर्णिकारम्। दाडिमं शुकेष्टम्। शाकं खरच्छदं वृक्षविशेषः। परूषकादिरेष तृडामयादिजित्॥ १३ ॥

प०—परूषकादिगणः तृण्मूत्ररोगवातान् जयति। वरा त्रिफला। द्राक्षा गोस्तनी। कट्फलं सोमवल्कलः। कतकाफलं काष्ठं वारिप्रसादनपरपर्यायः। राजाह्वं राजादनम्। दाडिमं शुकेष्टम्। शाकं वरदारु खरपत्रम्॥ १३ ॥

हे०—परूषादिगणमाह—वरा त्रिफला, राजाह्वं राजादनं, शाकं शाकवृक्षफलम्॥ १३ ॥

**अंजनं फलिनी मांसी पद्मोत्पलरसांजनम् ।**
**सैलामधुकनागाह्वं विषांतर्दाहपित्तनुत् ॥१४॥**

स०—अंजनं द्विधा। एकं स्रोतोंजनं यामुनसंज्ञमपरं सौवीरांजनं नेत्रभूषणाख्यम्। फलिनी प्रियंगुः। मांसी कृष्णजटा। पद्मं पुष्करम्। उत्पलं शशिप्रियम्। रसांजनं तार्क्ष्यशैलम्। एला बहुला प्रसिद्धा। मधुकं मधुयष्टी। नागाह्वं नागकेसरम्। एषोंऽजनादिर्विषादिजित्॥ १४ ॥

प०—अञ्जनादिवर्गो विषान्तर्दाहपित्तान्नुदति। अञ्जनं द्विधा—स्रोतोञ्जनं सौवीरं च। फलिनी गन्धप्रियंगुः। मांसी नलदम्। पद्ममरविन्दम्। उत्पलं द्विधा—नीलं रक्तं च। रसाञ्जनं तार्क्ष्यशैलम्। एला सूक्ष्मैला। मधुकं नागाह्वं नागकेसरम्॥ १४ ॥

हे०—अंजनादिगणमाह—अंजनं स्रोतोऽजनं, सैला सूक्ष्मैला, सशब्द ईषद्वाची, नागाह्वं नागकेसरम्॥१४॥

**पटोलकटुरोहिणीचंदनं**
**मधुस्रवगुडूचिपाठान्वितम् ।**
**निहंति कफपित्तकुष्ठज्वरान्**
**विषं वमिमरोचकं कामलाम् ॥ १५ ॥**

स०—पटोलं पांडुफलम्। कटुरोहिणी कटुकी। गंधसारम्। मधुस्रवा मरुद्री सुरंगी। गुडूची रुहा। पाठाऽम्बष्ठा। एतैर्द्रव्यैर्युक्तमेतत् पटोल कफादीन् हंति। मात्रासमकं नवमोलंगतम्॥ १

प०—पटोलादिरयं वर्गः कफपित्तप्रभृतीन् ह कटुरोहिणी कटुका। मधुस्रवा मूर्वा॥ १५ ॥

हे०—पटोलादिगणमाह—मधुस्रवा मूर्वा॥ १५ ॥

**गुडूचीपद्मकारिष्टधानका रक्तचंदनम् ।**
**पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत १**

स०—गुडूची छिन्नोद्भवा। पद्मको मरुद्भवः। ३ निंबः। धानका धान्याकम्। रक्तचंदनं रक्तकाष्ठम्। गुडूच्यादिः पित्तादीन् हंति॥ १६ ॥

प०—गुडूच्यादिवर्गोऽयं पित्तश्लेष्मादीन् ह अग्निं च करोति। अरिष्टो निम्बः। धानका ध म्। रक्तचन्दनं लोहितचन्दनम्॥ १६ ॥

हे०—गुडूच्यादिगणमाह—अरिष्टो निंबः॥ १६

**आरग्वधेंद्रयवपाटलिकाकतिक्ता—**
**निंबाऽमृतामधुरसास्रुववृक्षपाठाः ।**
**भूनिंबसैर्यकपटोलकरंजयुग्मं**
**सप्तच्छदाग्निसुषवीफलबाणघोंटाः ।**
**आरग्वधादिर्जयति छर्दिकुष्ठविषज्व**
**कफं कंडूं प्रमेहं च दुष्टव्रणविशोधन**

स०—आरग्वधः शम्याकः। इंद्रयवाः कलि। पाटलिर्वसंतदूती। काकतिक्ता शार्ङ्गेष्टा। निंबः भद्रकः। अमृता गुडूची। मधुरसा मूर्वा। स्रु विकंकतः कंटकीवृक्षः कंटकारिकेति प्रसि पाठाऽम्बष्ठा। भूनिंबः कैरातः। सैर्यकः सह पटोलं कर्कशच्छदम्। करंजयुग्ममेकः पूतिक श्चिरिबिल्वाख्योऽपरो नक्तमालाख्यः। सप्तच्छदोऽ च्छदः। अग्निश्चित्रकः। सुषवी कारवी पानि अजशृंगी। फलं मदनफलम्। बाणः सहचरः। पूगविशेषः। अयमारग्वधादिश्छर्द्यादीन्निहंति। वसं लकावृत्तम्॥ १७ ॥

प०—आरग्वधादिवर्गोऽयं छर्दिप्रभृतीन् मेहपर्यन्तान् जयति हन्ति। तथा दुष्टव्रणानां शोधनः। आरग्वधः शम्याकः। इन्द्रयवाः कुटजफलानि। पाटली कृष्णवृन्ताका। कतिका शार्ङ्गेष्टा। अमृता गुडूची। मधुरसा मूर्वा। स्रुवावृक्षो विकङ्कतः। भूनिम्बः किरातः। सैर्यकः सहचरः। करञ्जयुग्मं करञ्जद्वयम्। एकः पूतिकरञ्जः चिरबिल्वपरपर्यायः। द्वितीयो नक्तमालपरपर्यायः। सप्तच्छदः सप्तपर्णः। अग्निश्चित्रकः। सुषवी तोयवल्ली। बृहद्वल्ली तथा फला। फलं मदनफलम्। बाणः सहचरो नीलपुष्पः। घोंटा गोपघोंटा बदरी ॥ १७ ॥

हे०—आरग्वधादिगणमाह—काकतिक्ता करंजिका, स्रुवावृक्षो विकंकतः, सैर्यकः सहचरः, सुषवी कारवेल्लकं, फलं मदनफलं, बाणो नीलसहचरः, घोंटा बदरी ॥ १७ ॥

**असनतिनिशभूर्जश्वेतवाहप्रकीर्याः**
**खदिरकदरभंडीशिंशपामेषशृंग्यः।**
**त्रिहिमतलपलाशा जोंगकः शाकशालौ**
**क्रमुकधवकलिंगच्छागकर्णाश्वकर्णाः ॥**
**असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन्।**
**पांडुरोगं प्रमेहं च मेदोदोषनिबर्हणः ॥ १८ ॥**

स०—असनः पीतशालाख्यः। तिनिशः स्यंदनसंज्ञः। भूर्जो बहुपुटाख्यः। श्वेतवाहोऽर्जुनः। प्रकीर्यः पूतिकरंजः। खदिरो गायत्री। कदरः खदिराकृतिः श्वेतसारः। भंडी शिरीषः। शिंशपा मंडलपत्रिका। मेषशृंग्यजशृंगी। त्रिहिमं चंदनत्रयं मलयजरक्तचंदनदारुहरिद्राभेदेन। तलस्तालः। पलाशः किंशुकः। जोंगकोऽगुरुसंज्ञः। शाकं वरदारु। शालो रसनिर्यासाख्यः। क्रमुकं पूगम्। धवः शकटाख्यः। कलिंगं शक्रयवाः। छागकर्णो बस्तकर्णः। अश्वकर्णः कुशिकः। मालिनीवृत्तम्। अयमसनादिः श्वित्रादीन् विजयते शमयति। विजयत इति विपराभ्यां जेरित्यात्मनेपदम्। तथा मेदोदोषं निबर्हति पराकरोति ॥ १८ ॥

प०—असनादिर्गणोऽयं श्वित्रप्रभृतीन् मेहावसानान् विजयते विनाशयति। मेदोदोषाणां स्थौल्यादीनां निबर्हणो हन्ता। असनः पीतशालः। तिनिशः स्यन्दनः। भूर्जो मृदुत्वक्। श्वेतवाहोऽर्जुनः। प्रकीर्यः पूतिकरञ्जः। खदिरो गायत्री। कदरः खदिराकृतिः श्यामसारः। भिण्डी शिरीषः। शिंशपा कृष्णसारा। मेषशृङ्गी वस्तशृङ्गी। हिमं चन्दनत्रयम्। श्वेतं, रक्तं, पीतं च। तलो वृक्षविशेषः ध्वजापरपर्यायः। पलाशः किंशुकः। जोंगको गुरुपर्यायः। शाकः शरच्छदः। शालः शीतलो वृक्षविशेषः। क्रमुकं पूगम्। कलिङ्ग इन्द्रयवः। छागकर्णो बस्तकर्णः। अश्वकर्णः कुशिकापरपर्यायः ॥ १८ ॥

हे०—असनादिगणमाह—श्वेतवाहोऽर्जुनः, प्रकीर्यः पूतिकरंजः, कदरः श्वेतखदिरः, भंडी शिरीषः, त्रिहिमं चंदनत्रयं, तलस्तालवृक्षः, जोंगकः अगुरुः, क्रमुकः पूगः, कालिंग इंद्रयवः ॥ १८ ॥

**वरणसैर्यकयुग्मशतावरी**
**दहनमोरटबिल्वविषाणिकाः।**
**द्विबृहतीद्विकरंजजयाद्वयं**
**बहलपल्लवदर्भरुजाकराः ॥**
**वरणादिः कफं मेदो मंदाग्नित्वं नियच्छति।**
**अधोवातं शिरःशूलं गुल्मं चांतःसविद्रधिम् १९**

स०—वरणो रुमालः। सैर्यकयुग्मं सहचरद्वयमेक रक्तपुष्पः कुरबकाख्योऽन्यः पीतपुष्पः कुरंटकाख्यः शतावरी वरा। दहनो वह्निः। मोरटो मूर्वा। बिल्व पूतिवातः। विषाणिकाऽजशृंगी। द्विबृहत्यौ कंटक रिकामोटिकाऽख्ये। करंजयुग्मं प्रागुक्तम्। तर्का हरीतकी चेति जयाद्वयम्। बहलपल्लवः शोभांजनः दर्भाः कुशाः। रुजाकरो हितालुः। द्रुतविलंबितमा नभौ भरौ। वरणादिरयं कफादीन् हंति ॥ १९ ॥

प०—वरणादिरयं वर्गः कफादीनन्तविद्रधिपर न्तान्नियच्छति निवारयति। आढ्यवातो मेद वृतो वायुः। वरणस्तमालः। सैर्यकद्वयं सह रद्वयं पीतरक्तभेदभिन्नम्। दहनश्चित्रकः। मोर क्षीरमोरटः। बिल्वः शलाटवृक्षः। विषाणि अजशृङ्गी। द्वे बृहत्यौ कण्टकारिका, बृहती च करञ्जद्वयमेकः पूतिकरञ्जो द्वितीयो नक्तमालः

अथाह्वयं तर्कारीद्वयम् । बहलपल्लवः शिग्रुशोभाञ्जनापरपर्यायः । दर्भः कुशः । रुजाकरं स्यात्मलः ॥ १९ ॥

हे०—वरुणादिगणमाह—मोरटः क्षीरदूर्वा, विषाणिका मेषशृंगी, अथाह्वयं तर्कारीद्वयं, बहलपल्लवः शिग्रुः । आढ्यवातम् ऊरुस्तंभम्, आन्तरं गुल्मं विद्रधिं च॥१९॥

**ऊषकस्तुत्थकं हिंगु कासीसद्वयसैंधवम् ।**
**सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफापहम्॥२०॥**

स०—ऊषको वृष्यकः कल्हर इति प्रसिद्धः । तुत्थकं कार्पूरं किट्टिहापरसंज्ञम् । हिंगु रामठम् । कासीसद्वयमेकं पांशुधातुसंज्ञमपरं पुष्पकासीसाख्यम् । सैंधवं माणिमन्थम् । शिलाजतु शिलाजम् । ऊषकादियं मूत्रकृच्छ्रादीनपहंति ॥ २० ॥

प०—ऊषकादिगणोऽयं कृच्छ्राश्मादिघ्नः । कृच्छ्रं मूत्रकृच्छ्रम् । अश्म अश्मरी । ऊषको वृक्षकः । तुत्थकं द्विधा–कर्पूरं, मायूरग्रीवं च । कासीसद्वयमेकं पांशुकासीसं, द्वितीयं पुष्पकासीसम् । सैन्धवं लवणोत्तमम् । शिलाजतु शिलानिर्यासः ॥ २० ॥

हे०—ऊषकादिगणमाह—ऊषकः–क्षारमृत्तिका, कृच्छ्रं मूत्रकृच्छ्रम् ॥ २० ॥

**वेल्लंतरारणिकबूकवृषाऽश्मभेद-**
**गोकंटकेत्कटसहाचरबाणकाशाः ।**
**वृक्षादनीनलकुशद्वयगुंठगुंद्रा**
**भल्लूकमोरटकुरंटकरंभपार्थाः ॥**
**वर्गो वीरतराद्योऽयं हंति वातकृतान् गदान् ।**
**अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः ॥ २१ ॥**

वेल्लंतरो वीरतर उशीराख्यः । अरणिकोऽग्निमंथः । बूक ईश्वरमल्लिका । वृष आटरूषकः । अश्मभेदः पाषाणभेदः । गोकंटको गोक्षुरकः । इत्कटा सूक्ष्मपत्रिका दीर्घलोहितयष्टिका काष्ठविशेषः । सहाचरः सहचरः । बाणो नीलपुष्पसैरेयकः । काशः श्वेतचामरः । वृक्षादनी कामवृक्षकः । नलो मृत्युपुष्पाख्यः । कुशद्वयं स्थूलसूक्ष्मभेदेन दर्भद्वयम् । गुंठो वृंततृणम् । गुंद्रागुंठकामरसंज्ञः। गुंद्रा पदएरकः। भल्लूकः श्योनाकः। मोरटः क्षीरमोरटः । कुरंटः सितिवारकः । करंभ उत्तमारणिः । पार्था सुवर्चला । वसंततिलकावृत्तम् । एष वीरतरादिर्वर्गो गणो वातजान् रोगान् हंति तथाऽश्मर्यादिहरः ॥ २१ ॥

प०—वीरतरादिरयं वर्गो वातकृतान् वातजनिताम् व्याधीन् हन्ति । अश्मर्यादिहरश्च । अश्मरी वायुनाऽणुशो भिन्ना शर्करेत्युच्यते । मूत्रकृच्छ्राणि-मूत्राघातनिदानोक्तः । वेल्लन्तरो वीरतरुः । अरणिकोऽग्निमन्थः । बूकः स्थूलपुष्पः ईश्वरमल्लिका । अश्मभेदः पाषाणभेदः । गोकण्टको गोक्षुरकः । इत्कटः सूक्ष्मपत्त्रः । सहाचरः सहचरः । बाणो द्वितीयः सहचरः । काशः श्वेतचामरः । वृक्षादनी वन्दाकः कामवृक्षः । नलो नडोऽन्तः सुषिरः । कुशद्वयं दर्भद्वयम् । स्थूलसूक्ष्मभेदात् । गुण्ठशुण्ठः शृङ्गवेरो भूमूलकः । गुन्द्रा गुण्ठमूलिका । भल्लूकः योनाकः । मोरटो मुरङ्गी । कुरण्टः शितिवारकः । करम्भ उत्तमारणी कर्कशापरपर्यायः । कपोतवंका पार्थिवरविभुक्ता सुवर्चला ॥ २१ ॥

हे०—वीरतरादिगणमाह—अरणिकः तर्कारी, बूको वकपुष्पः,इत्कटः इक्षुः,वृक्षादनी वंदाकः,भल्लूकः डिंडुकः, करंभा उत्तमारणी, पार्था आदित्यभक्ता ॥ २१ ॥

**रोध्रशाबररोध्रपलाशा**
**जिंगिणीसरलकट्फलयुक्ताः ।**
**कुत्सितांबकदलीगतशोकाः**
**सैलवालुपरिपेलवमोचाः ॥**
**एष रोध्रादिको नाम मेदःकफहरो गणः ।**
**योनिदोषहरः स्तंभी वर्ण्यो विषविनाशनः २२ ॥**

स०—रोध्रस्तिल्वकः । शाबररोध्रोऽक्षिभेषजापरसंज्ञः । पलाशः शठी । जिंगिणी जिंजिणी कृष्णशाल्मली । सरलं देवदारुः । कट्फलं कुमुदारोहिणी । युक्ता रास्ना गिरिकर्णिकेत्यन्ये।कुत्सितांबः कदंबः। कदली रंभा । गतशोकोऽशोकः । एलवालु ऐलेयम् । परिपेलवं कुटन्नटं गोपालदमनकाख्यम् । मोचा शल्लकी । स्वागतावृत्तम् । अयं रोध्रादिको गणो मेदःकफापहो योनिदोषघ्नश्च । तथा स्तंभी दोषाणां शकृदादेश्च । तथा वर्णाय हितो विषघ्नश्च ॥ २२ ॥

प०—एष रोध्रादिको नाम मेदःकफहरो गणः योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः । अयं रोध्रादिगणो मेदःकफघ्नः योनिरोगान् हन्ति । स्तम्भी स्तम्भनशीलः शकृदादीन् स्तम्भयति । वर्ण्यो वर्णाय हितः । विषस्य नाशनः एकः पट्टिकारोध्रः, द्वितीयः शाबरकरोध्रः । पलाशः किंशुकः । किंकिणी गुडमञ्जरी । सरलश्चीडासंयुक्ता रास्ना । कुत्सितांबः कदम्बः । कदली वृत्तपुष्पा रम्भापरपर्याया । गतशोको वीतशोकः । एलवालुकं हरिवालुकमैलेयापरपर्यायम् । परिपेलवः कुटंनटं वितुन्नकापरपर्यायः । मोचा शल्लकी ॥ २२ ॥

हे०—रोध्रादिगणमाह—शावरकरोध्रः श्वेतरोध्रः,जिंगिणी मादकी, युक्ता रास्ना, कुत्सितांबः कदंबः, गतशोकः अशोकः, परिपेलवः क्षुद्रमुस्ता । मोचा सल्लकम् ॥२२॥

**अर्कालर्कौ नागदंती विशल्या**
**भार्गी रास्ना वृश्चिकाली प्रकीर्या ।**
**प्रत्यक्पुष्पी पीततैलोदकीर्या**
**श्वेतायुग्मं तापसानां च वृक्षः ॥**
**अयमर्कादिको वर्गः कफमेदोविषापहः ।**
**कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ २३ ॥**

स०—अर्कः सदापुष्पी । अलर्को मंदारकाख्यः श्वेतकुसुमः। नागदंती पर्वपुष्पिका। विशल्या लांगली। भार्गी फंजी । रास्ना रस्या । वृश्चिकाल्युष्ट्रधूमकः। प्रकीर्या करंजकः । प्रत्यक्पुष्पी अपामार्गः । पीततैला काकादनी । उदकीर्या करंजकः । श्वेतायुग्ममेका किणिहिसंज्ञाऽन्या महाश्वेता पार्लिदीसंज्ञा । तापसानां वृक्ष इंगुदी । शालिनीवृत्तम् । एषोऽर्कादिर्वर्गः कफादिघ्नोऽतिशयेन व्रणशोधनः ॥ २३ ॥

प०—अर्कादिकोऽयं वर्गः कफमेदोविषघ्नः । कृमिकुष्ठानि च प्रशमयति । विशेषादतिशयेन व्रणानां शोधनः शुद्धिकरः । अर्कः सदापुष्पी रूपिकापरपर्यायः । अलर्को विकिरणः श्वेतपुष्पः । नागदन्ती श्वेतघण्टा । विशल्या लाङ्गली । भार्ङ्गी भृङ्गा । वृश्चिकाल्युष्ट्रधूमिका सर्पदंष्ट्रिकापरपर्याया । प्रकीर्या करञ्जः । प्रत्यक्पुष्पाऽपामार्गः । पीततैला काकादनी । उदकीर्या करञ्जकः [illegible]परपर्यायः । श्वेतायुग्ममेका श्वेता [illegible], द्वितीया श्वेता कटभी कुमार्यान्या [illegible] । [illegible] कर्कटकी स्मृता । इंगुदस्तापसवृक्षः ॥ २३ ॥

हे०—अर्कादिगणमाह–[illegible] पुष्पी, प्रत्यक्पुष्पी अपामार्गः, पीततैलः [illegible], उदकीर्या पूतिकरंजः, श्वेतायुग्मं [illegible] वृक्षः इंगुदः ॥ २३ ॥

**सुरसयुगफणिज्जं कालमाला विडंगं**
**खरबुसवृषकर्णीकट्फलं कासमर्दः ।**
**क्षवकसरसिभार्गी कामुका काकमाची**
**कुलहलविषमुष्टी भूस्तृणी भूतकेशी ॥**
**सुरसादिगणः श्लेष्ममेदःकृमिनिषूदनः ।**
**प्रतिश्यायाऽरुचिश्वासकासघ्नो व्रणशोधनः ॥ २४ ॥**

स०—सुरसयुगं तुलसीद्वयं गौरकृष्णभेदेन । फणिज्जो मरीचकः । कालमाला कृष्णार्जकः [illegible]भेदः । विडंगं वेल्लम् । खरबुसो मरुवकः । वृषकर्णी । मूषिककर्णी । कट्फलं सोमवल्कम् । कासमर्दः कासघ्नः । क्षवकः क्षुद्विबोधनः । सरसी तुंबरपत्रिका । भार्गी अंगारवल्ली । कामुका रक्तमंजरी । अतिमुक्तक इत्यन्ये । काकमाची गुडफला । कुलहलो मुंडितकोऽलंबुसाख्यः । विषमुष्टिः कुचिला । महानिंब इत्यन्ये । भूस्तृणं गुह्यबीजमतिच्छत्राख्यम् । भूतकेशी मांसी[illegible]चारा । सालिनीवृत्तम् । सुरसादिरयं गणः श्लेष्मादिघ्नः प्रतिश्यायादिहरो व्रणशुद्धिकृत् ॥ २४ ॥

प०—अयं सुरसादिगणः श्लेष्ममेदःकृमीन् नाशयति । तथा प्रतिश्यायादिघ्नः व्रणांश्च शोधयति व्रणशोधनः । सुरसयुगं सुरसद्वयं गौरकृष्णभेदेन । फणिज्जको मारिचकः । कालमाला कृष्णार्जकः । विडङ्गं कृमिघ्नम् । खरमुखो मरुवकः खरपत्रकः । वृषपर्णी आखुपर्णी। कासमर्दो राजक्षवकः पीतपुष्पः। क्षवकः क्षुद्विबोधनः। सरसी कपित्थपत्रा । कामुको नदीकान्तोऽतिमुक्तकः । काकमाची काकमाता । कुलहलोऽलंबुसा भूकम्पः । विषमुष्टिः केशमुष्टिः । भूस्तृणो गुह्यबीजकः । भूतकेशी पुत्रंजारी ॥ २४ ॥

हे०—सुरसादिगणमाह—सुरसयुगं—श्वेतकृष्णे तुलस्यौ। फणिज्जो मरिचकः, कालमाला अर्जकः, खरबुसो मरुवकः वृषकर्णी वृक्षकर्णी, क्षवकः क्षुतकारी, सुरसी कपित्थपर्णी, कासुकः प्राचीबलः, कुलहलो मुंडी, भूस्तृणो भूतिकतृणं, भूतकेशी निर्गुंडी ॥ २४ ॥

**मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशपाः ।**
**गुल्ममेहाश्मरीपांडुमेदोऽर्शःकफशुक्रजित् २५ ॥**

स०-- मुष्ककी मोक्षकः । स्नुक् गुडा उग्रकांडः । वरादीनां प्रोक्तानि नामानि । मुष्ककादिरेष गुल्मादिजित् ॥ २५ ॥

प०—मुष्ककादिगणोऽयं गुल्मादीन् शुक्रपर्यंताञ्जयति । मुष्कको मोक्षः । स्नुक् सुधा । वरा त्रिफला । द्वीपिश्चित्रकः । पलाशो ब्रह्मतरुः । धवो दृढतरुः । शिंशपा मण्डलपत्रा ॥ २५ ॥

हे०—मुष्ककादिगणमाह—मुष्कको मोक्षकः, द्वीपी चित्रकः ॥ २५ ॥

**वत्सकमूर्वाभार्गी**
**कटुका मरिचं घुणप्रिया च गंडीरम् ।**
**एला पाठाऽजाजी**
**कट्वंगफलाजमोदसिद्धार्थवचाः ॥**
**जीरकहिंगुविडंगं पशुगंधा पंचकोलकं हंति ।**
**चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः २६ ॥**

स०—वत्सको वनतिक्तकः । मूर्वा मधुरसा । मरिचमूषणम् । घुणप्रियाऽतिविषा । गंडीरं स्नुही । एला बेला । पाठा प्राचीना । अजाजी जीरकः । कट्वंगफलमरलुकफलम् । केचित्तु कट्वंगं टुंटुकं फलं राठमित्याहुः । अजमोदो दीप्यकः । सिद्धार्थो गौरसर्षपः । वचादीनामुक्तानि नामानि । गुर्वंताष्टपदननभागार्यापूर्वसदृशाकलद्वितया। आर्यैरार्यागीतिर्गीता संगीतगीतविधौ । पशुगंधा अजगंधा मकरंतराख्या । पंचकोलकं प्रागुक्तम् । वत्सकादयश्चलादीन् घ्नंति । आर्या ॥२६॥

प०—वत्सकादिगणः पठितः चलकफादीन् दुर्नामपर्यन्तान् हन्ति । वत्सकः कुटजः । घुणप्रिया अतिविषा । गण्डीरं कण्डीरः । कट्वङ्गोऽरलुकः । विषमुष्टिः महानिम्बः । फलं मदनफलम् । अजमो दीप्यकः । सिद्धार्थः गौरसर्षपः । वचा षड्ग्रन्था जीरकमजाजी । पशुगन्धः पूतिमयूरकः । पञ्च लः—"पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः" इ

हे०—वत्सकादिगणमाह—घुणप्रिया अतिविषा, गं स्नुही, कट्वङ्गः टुंटुकः,फलं मदनफलं,पशुगंधा अजग चलो वायुः ॥ २६ ॥

**वचाजलददेवाह्वनागराऽतिविषाऽभयाः ।**
**हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥**
**वचाहरिद्रादिगणावामातीसारनाशनौ ।**
**मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ २७**

स०—वचा गोलोमी । जलदोऽम्बुधरः । दे किलिमम् । नागरं विश्वम् । अतिविषा भंगुरा । अ हरीतकी । हरिद्राद्वयं पिंडा एका पचंपचा दा ज्ञान्या । यष्ट्याह्वं क्लीतिका । कलशी पृश्निपर्णी । जोद्भवा इंद्रयवाः । एतौ वचादिहरिद्रादिगणावाम तीसारघ्नौ मेदःकफादिहरौ च ॥ २७ ॥

प०-एतौ गणौ वचाहरिद्रात्मकावामातीसारौ प यतः । मेदःकफादींश्च निहतः । आढ्यपवनो म वृतो वायुः । स्तन्यदोषः क्षीरविदोषः।जलदं मु देवाह्वं देवदारुः । नागरं शुण्ठी । अभया हरीत हरिद्राद्वयं दारुहरिद्रा पिण्डहरिद्रा यष्ट्याह्वं यष्टी । कलशी पृश्निपर्णी । कुटजो इन्द्रयवाः ॥ २७ ॥

हे०—वचाहरिद्रादिगणावाह—कलशी पृश्निपर्णी,कु द्भव इंद्रयवः, आढ्यपवनः ऊरुस्तंभः ॥ २७ ॥

**प्रियंगुपुष्पांजनयुग्मपद्मा-**
**पद्माद्रजोयोजनवल्ल्यनंता ।**
**मानद्रुमो मोचरसः समंगा**
**पुन्नागशीतं मदनीयहेतुः ॥**
**अंबष्ठा मधुकं नमस्करी**
**नंदीवृक्षपलाशकच्छुराः ।**
**रोध्रं धातकिबिल्वपेशिके**
**कट्वंगः कमलोद्भवं रजः ॥**

**गणौ प्रियंग्वंबष्ठादी पक्कातीसारनाशनौ ।**
**संधानीयौ हितौ पित्ते व्रणानामपि रोपणौ २८ ॥**

स०—प्रियंगुः श्यामा । पुष्पांजनं रीतिपुष्पम् । युग्मेत्यत्राऽनुवृत्तिकृतेन संबंधेनांऽजनमिति संबध्यते । तेनांऽजनयुग्मं स्रोतोंऽजनमेकमन्यत्सौवीरमित्यर्थोऽवतिष्ठते । पद्मा पद्मचारिणी । पद्मात् कमलाद्रजः केसरम् । योजनवल्ली मंजिष्ठा । अनंता यवासकः । मानद्रुमः शाल्मली । मोचरसः शाल्मलीनिर्यासः । समंगा नमस्कारी रक्तमूलाख्या । पुन्नागस्तुंगो रक्तकेसराख्यः । शीतं चंदनम् । मदनीयहेतुर्धातुकी । उपजातिर्वृत्तम्।अंबष्ठा मयूरशिखाख्या।मधुकं मधुयष्टिका । नमस्करी समंगा । नंदीवृक्षः प्ररोही । पलाशः प्रसिद्धः । कच्छुरा फणिहारी धन्वयवासकाख्यः । बिल्वपेशिका बिल्वमज्जा । कट्वंगः स्योनाकः । कमलोद्भवं रजः पद्मरेणुः । एतौ प्रियंग्वंबष्ठादिगणौ पक्कातीसारनाशनौ संधानीयौ हितौ पित्ते व्रणरोपणौ च । अष्टाभ्योऽथो गुरावुपचित्रा ॥ २८ ॥

प०—द्वाविमौ गणौ प्रियङ्ग्वम्बष्ठादी पक्कातीसारनाशनौ । तथा सन्धानीयौ व्रणानामतिसारस्य च तथा पथ्ये हितौ पथ्यौ । तथा व्रणानामपि रोपणे रोपणाविषये हितौ।प्रियंगुर्गन्धप्रियंगुस्तस्याःपुष्पम् । अञ्जनयुग्ममञ्जनद्वयम् । स्रोतोऽञ्जनसौवीरभेदाभिन्नम् । पद्मा पद्मचारिणी । पद्माद्रजः पद्मकिञ्जल्कः । योजनवल्ली मञ्जिष्ठा । अनन्ता दीर्घमूलश्च । समुद्रान्तो यवासकः । मानद्रुमः शाल्मली । मोचरसः शाल्मल्या निर्यासः। "निर्यासो यस्तु शाल्मल्याः समोचरससंज्ञकः" इत्याम्नायात् । समङ्गा नमस्कारी रक्तमूला च । पुन्नागो रक्तकेसरः। शीतं चंदनम् ,मदहेतुर्धातकी । अम्बष्ठा बहुमूलिका । नमस्कारी समङ्गा । नन्दीवृक्षो जयवृक्षः । कच्छुरा फणिहारी च । सूक्ष्मपत्रा मरुद्भवा । बिल्वपेशिका बिल्वमज्जा । कट्वङ्गोऽरलुकः । कमलोद्भवं रजः पद्मकेसरः ॥ २८ ॥

हे०—प्रियंग्वंबष्ठादिगणावाह—पुष्पांजनयुग्मं—स्रोतोंजनं रसांजनं च, पद्मा भार्ङ्गी, पद्माद्रजः पद्मकेशरं, योजनवल्ली मंजिष्ठा, अनंता दुरालभा, सारद्रुमः शाल्मली, मोचरसस्तन्निर्यासः, समंगा लज्जिका, पुन्नाम पुंनाग, शीतं चंदनं, मदनीयहेतुर्धातकी, अंबष्ठा मयूरशिखा,नमस्कारी लज्जिका,बिल्वपेशिका शुष्कबिल्वपेशिका । संधानीयौ संधानजननौ ॥ २८ ॥

**मुस्तावचाऽग्निद्विनिशाद्वितिक्ता-**
**भल्लातपाठात्रिफलाविषाख्याः ।**
**कुष्ठं त्रुटी हैमवती च योनि-**
**स्तन्यामयघ्नामलपाचनाश्च ॥ २९ ॥**

स०—मुस्ता गांगेयी । तिक्ताद्वयमेका कटुकाऽन्या काकतिक्ता । विषाख्या शुक्लकंदा । हैमवती श्वेतवचा । एते योन्यामयघ्नाः स्तन्यामयघ्ना मलपाचनाश्च । तौ ज्गौ गुरुश्चेद्रवतींद्रवज्रा ॥ २९ ॥

प०—मुस्ताद्या वर्गीकृतास्तन्यामयघ्नाः स्त्रीक्षीरव्याधिनाशनाः । मलादीनां वातादीनां शकृदादीनां च सामानां पाचनाः । अग्निश्चित्रकः । द्वे निशे हरिद्राद्वयम् । द्वे कटुके एका कटुका द्वितीया काकतिक्ता । हैमवती च ॥ २९ ॥

हे०—मुस्तादिगणमाह—द्वितिक्ता—कटुका करंजिका च, हैमवती श्वेतवचा ॥ २९ ॥

**न्यग्रोधपिप्पलसदाफलरोध्रयुग्मं**
**जंबूद्वयाऽर्जुनकपीतनसोमवल्काः ।**
**प्लक्षाम्रवंजुलपियालपलाशनंदी-**
**कोलीकदंबविरलामधुकं मधूकम् ॥**
**न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधनः ।**
**मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ३० ॥**

स०—न्यग्रोधो वटवृक्षः । पिप्पलोऽश्वत्थः । सदाफल उदुंबरः । जंबूद्वयमेका राजजंबूर्ह्रस्वफलाऽन्या ह्रस्वफला काकजंबूः । अर्जुनः पार्थः । कपीतनः कपिचूडो वानीराख्यः । सोमवल्कः सितसारः खदिरः । प्लक्षः शृंगीप्लक्षकाख्यः । आम्रश्चूतः। वंजुलो वेतसः । प्रियालो द्राक्षारसप्रियः खरस्कंधाख्यः । नंदी जयवृक्षः । कोली बदरी । विरला तिंदुकी । मधुकं यष्टिः । मधूकं मधूकपुष्पम् । न्यग्रोधादिरयं संग्रहणादिगुणयुक्तः। वसंततिलकम् ॥ ३० ॥

प०-गणोऽयं न्यग्रोधादिर्व्रण्यो व्रणाय हितः संग्रहण शीलः संङ्ग्राही भग्नान् सन्धयति भग्नसाधनः मेदः-पित्तादिनिबर्हणः । न्यग्रोधो वटः । पिप्पलोऽश्वत्थः । सदाफल उदुम्बरः । जम्बूद्वयमेका राजजम्बूर्बृहत्फला, द्वितीया काकजम्बूः ह्रस्वफला । अर्जुनः ककुभः । कपीतनो वानीरः कपिचूडः । सोमवल्कः कट्फलः । प्लक्षो गर्दभाण्डः । वञ्जुलो वेतसः । प्रियालः खदिरस्कन्धः । पलाशः किंशुको वातपोदः । नन्दीवृक्षो राजवृक्षः । कोली बदरी । विरला दीर्घनखी तिन्दुकीत्यपरे । मधुकं मधुयष्टी । मधूकं मधूकपुष्पम् ॥ ३० ॥

हे०-न्यग्रोधादिगणमाह—सदाफल उदुंबरः, जंबूद्वयं—जंबू राजजंबूश्च, कपीतनः पारीसापिप्पलः, सोमवल्कः कट्फलः, प्रियालश्चारः, नंदी नंदीवृक्षः, कोली बदरी, विरला तिंदुकी, भग्नसाधनो भग्नसंधानकृत् ॥ ३० ॥

एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं
स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः ।
शुक्तिर्व्याघ्रनखोऽमराह्वमगुरुः श्रीवासकं कुंकुमं
चण्डागुग्गुलुदेवधूपखपुराःपुन्नागनागाह्वयम् ॥
एलादिको वातकफौ विषं च विनियच्छति ।
वर्णप्रसादनः कंडूपिटिकाकोठनाशनः ३१ ॥

स०-एलायुग्मं सूक्ष्मैला स्थूलैला च। तुरुष्कः कृत्रिमो निर्यासविशेषः । कुष्ठं गदः । फलिनी गंधप्रियंगुः । मांसी नलदम् । जलं ह्रीबेरम् । ध्यामकं दवदग्धकम् । स्पृक्का देवी । चोरको ग्रंथिपर्णी । चोचं त्वक् । पत्रं गंधपत्रम् । तगरं चक्रम् । स्थौणेयं तैलपीतकम् । जातीरसो बोलः। शुक्तिर्नखः । व्याघ्रनखः समुद्रजः । अमराह्वं देवदारुः । अगुरुः प्रसिद्धः । श्रीवासः श्रीवेष्टकाख्यः । कुंकुमं बाह्लकम् । चंडा कोपना । गुग्गुलुः पुरः । देवधूपः सर्जरसः । खपुरः कुंदुरुकः । पुन्नागो रक्तकेसरः । नागाह्वयं नागकेसरम् । एलादियं वातादीन् हंति । तथा वर्णप्रसन्नत्वकृत् कंड्वादिं च । म्सौ ज्सौ तौ गुरुकं च सूर्यतुरगैः शार्दूलविक्रीडितम् ॥ ३१ ॥

प०-एलादिकोऽयं वर्गो वातकफविषान् विनिहन्ति । तथा वर्णस्य प्रसादनः कण्ड्वादिनाशनश्च । एलायुग्मं सूक्ष्मैला, स्थूलैला च । तुरुष्कः कृत्रिमः पिण्याकापरपर्यायः । फलिनी गन्धप्रियंगुः । जलं वालकम् । ध्यामकं देवदग्धकम् । स्पृक्का देवी लता सती । चोरको ग्रंथिवर्णः । चोचं त्वक् । पत्रं चन्दनं गन्धपत्रापरपर्यायम् । तगरं चक्रम् । स्थौणेयं तैलपीतकम् । जातीरसो रसोवलः । शुक्तिः कररुहः । व्याघ्र नखः समुद्रजः । अमराह्वो देवदारुः । श्रीवासः श्रीवेष्टकः । कुंकुमं बाह्लीकम् । चण्डा पिशुना । गुग्गुलुः महिषाख्यः । देवधूपः सर्जरसः। खपुरः कुन्दरुः । पुन्नागो रक्तकेसरः । नागाह्वं नागकेसरम् ॥ ३१ ॥

हे०-एलादिगणमाह—तुरुष्कः सिह्लकः, ध्यामकं रोहिषं, चोरको ग्रंथिपर्णः, चोचं त्वचम् , पत्रं पत्रकं, जातीरसो बोलः, शुक्तिर्नखं, व्याघ्रनखस्तद्भेदः, श्रीवासः सरलनिर्यासः, देवधूपो रालः, खपुरः सल्लकीनिर्यासः, नागाह्वं नागकेशरम् ॥ ३१ ॥

श्यामादंतीद्रवंतीक्रमुककुटरणी-
शंखिनीचर्मसाह्वा-
स्वर्णक्षीरीगवाक्षीशिखरिरजनक-
च्छिन्नरोहाकरंजाः ।
बस्तांत्री व्याधिघातो बहलबहुरस-
स्तीक्ष्णवृक्षात् फलानि
श्यामाद्यो हंति गुल्मं विषमरुचिकफौ
हृद्रुजं मूत्रकृच्छ्रम् ॥ ३२ ॥

स०-श्यामा मालविका त्रिवृत् मसूरविदनाख्या। दंती मुकूलकश्चित्राख्यः । द्रवंती उंदुरुकर्णिका । क्रमुकः पट्टिकारोध्रः । कुटरणी शुक्ला त्रिवृत् । शंखिनी यवतिक्ता । चर्मसाह्वा सातला । ब्राह्मीत्यन्ये । स्वर्णक्षीरी पीतधतूरः । गवाक्षी गवादनी स्थाणुकर्णी संज्ञा । इंद्रवारुणीत्यन्ये । शिखरी अपामार्गः । रजनकः कंपिल्लकः । छिन्नरोहाऽमृतवल्ली । करंजः कैडर्यः । बस्तांत्री वृषगंधा । व्याधिघातः कृतमालः । बहलबहुरस इक्षुः । तीक्ष्णवृक्षात् पीलोः फलानि । श्यामादिरेष गुल्मादीन् हंति । म्रौ भ्नौ याश्च त्रयः स्युः स्वरमुनितुरगैः स्रग्धरा स्याद्विरामैः ॥ ३२ ॥

प०—श्यामाद्योऽयं वर्गो गुल्मादीन् हन्ति।श्यामा पालिन्दी त्रिवृता।दन्ती मुकूलकः।द्रवन्त्युदुम्बरकर्णिका। क्रमुकः रोध्रः।क्रमुकीमित्यपरे। कुटरणी त्रिवृत्। शङ्खिनीति कुल्यविश्वायवतिक्ताक्षिपीडकः। सातला सप्तला चर्मकसाह्वा वर्तकी स्मृता। अन्येषां सातला ब्राह्मी ब्रह्मसोमा तु सप्तला॥ स्वर्णक्षीरी तिक्तदुग्धिका। गवाक्षी विशाला। शिखरिसुधा।रजनकः कम्पिल्लकः। छिन्नरुहा गुडूची। करञ्जः पूतिकरञ्जः। बस्तान्त्री विषगन्धा। व्यामेषा परियकः स्मृतः। "घनभूरिरसस्त्विक्षुर्गुडमूलोऽसिपत्रकः। श्लक्ष्णवृक्षः सणः पीलुः प्रोक्तोऽन्यः स्वादुकस्तथा" ॥ ३२ ॥

हे०—श्यामादिगणमाह—श्यामा कृष्णमूला, त्रिवृत् द्रवंती, चीरितपत्रा दन्ती,क्रमुकः पूगः, कुठरणा--अरुणमूला त्रिवृत्, चर्मसाह्वा सप्तला, शिखरी अपामार्गः, रजनकः कंपिल्लः, छिन्नरोहा गुडूची, बस्तांत्री वृद्धदारुकः, व्याधिघातः आरग्वधः, बहलरसः इक्षुः, तीक्ष्णवृक्षः पीलुः तस्य फलानि ॥ ३२ ॥

**त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः। युंज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ३३॥**

स०—इति प्रकारे। त्रयस्त्रिंशदिति वर्गाः कथिताः। अत्र संख्योपादानमेषां प्राधान्यख्यापनार्थम्। अन्येऽप्येवं प्रकाराः संत्येते तु प्रधाना इत्यर्थः। सुखग्रहणार्थं वा संख्यावचनं कृतम्। एतेषु त्रयस्त्रिंशत्सु वर्गेष्वलाभतोऽलाभे सति तद्विधं रसवीर्यपाकैस्तुल्यं द्रव्यमन्यदनुक्तमपि युंज्यात्। नचैतावदत्र विधेयमित्याह। जह्यादयौगिकम्। न केवलमेषु वर्गेषु तद्द्रव्यालाभे यथलाभमन्यत्तद्विधं द्रव्यं युंज्याद्यावदयौगिकं यत्तु द्रव्यं तच्च त्यजेत्। दोषरोगातुराद्यपेक्षया पुरुषस्याऽस्मिन् काले वयसि वा यो गणः समस्तत्साध्यामयशमनाय च वारयितुं युक्तः। एकस्य द्रव्यस्याऽलाभे द्वयोर्बहूनां वा तत्प्रकारमेकमपरं द्रव्यं द्वे वा बहूनि वा द्रव्याणि संयोज्य प्रयोज्यः। एवं न समस्तद्रव्यापेक्षा कार्येति। यथा च सुश्रुतः। 'समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत्। पृथङ्मिश्रान् समस्तांश्च गणान् वा व्यस्तसंहतानिति।' त्रयस्त्रिंशदिति त्रेस्त्रयश्चेति त्रयसादेशः। यौगिकमिति योगाय प्रभवतीत्यर्थे योगाद्यच्चेति ठञ् ॥ ३३ ॥

प०—इतिशब्दः परिसमाप्त्यर्थः प्रकारार्थो वा। परिसमाप्तास्त्रयस्त्रिंशद्वर्गाः।अथानेन प्रकारेण त्रयस्त्रिंशद्वर्गान् येन प्रकारान्तरेण पुनरानन्त्यं वर्गाणां दोषभेदादीन् समीक्ष्य यद्यद्यौगिकं मन्ये तत्तदनुक्तमपि गणमध्ये विदध्यात्। यद्यदयौगिकं मन्ये तत्तदुक्तमप्यपकर्षेण तथा गणमप्यन्येन गणेनैकेन वा परस्परं मिश्रयित्वा युञ्ज्यादेवं वर्गाणामानन्त्यम्। एवं त्रयस्त्रिंशत् ये वर्गा निर्दिष्टास्तेषु वर्गेष्वलाभतो युञ्ज्यात्। तद्विधमन्यच्च कोऽर्थः। उक्तद्रव्यालाभे यथालाभमन्यद्द्रव्यं तद्विधप्रभावं वर्जयित्वा रसवीर्यविपाकैस्तुल्यं प्रक्षिपेत्। किमेतावदेवात्र कर्तव्यतया निर्दिष्टमुतान्यदपि किञ्चित्तत्र कर्तव्यमतोऽनन्तरमिदमाह—जह्यादयौगिकं द्रव्यं योगार्हं न भवति जह्यात् त्यजेत्। अर्थादयौगिकम्। योगार्हं दोषाद्यपेक्षया सम्भाव्यते तद्विदध्यात्। एवं स्थिते दोषाद्यपेक्षया समस्तवर्गस्तत्साध्यव्याधिप्रशमनाय देयः। कदाचित् समस्तद्रव्यलाभे न देयः। कदाचिदेकं द्रव्यं द्वेधा बहूनि वा यावन्ति सम्भवन्ति द्वित्राणि पञ्चषाणि वा तानि दातुं युज्यन्ते न समस्तवर्गद्रव्यापेक्षाऽत्र कार्येति। अलाभे सतीति सप्तमर्थे तस् ॥ ३३ ॥

हे०—उपसंहरति—एते गणा गणनया च न तदुक्ता ग्राह्याः। किं तर्हि ऊहापोहयोग्याम् इत्याह—देशतः कालतो वा कस्यचिद् द्रव्यस्यालाभे तत्सदृशगुणमन्यदनुक्तमपि यौगिकं युंज्यात्। उक्तमप्यौषधमयौगिकं जह्यात्। देशकालाद्यवस्थापेक्षया उचितं यौगिकम्, अनुचितमयौगिकं यथालाभप्रयोगोऽपि सुश्रुतेनोक्तः—"समस्तवर्गमर्द्धं वा यथालाभमथापि वा। प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु॥" इति ॥ ३३ ॥

**एते वर्गा दोषदूष्याद्यपेक्ष्य**
**कल्कक्वाथस्नेहलेहादियुक्ताः।**
**पाने नस्येऽन्वासनेऽन्तर्बहिर्वा**
**लेपाभ्यंगैर्घ्नंति रोगान् सुकृच्छ्रान् ३४ ॥**

स०—एते पूर्वोक्ता वर्गा दोषदूष्यवयोबलादीनपेक्ष्य कल्कादियुक्ताः सुकृच्छ्रान् रोगानामयान् घ्नंति।

युक्ता इत्यत्रांऽतर्भावितण्यर्थो युजिः । ततः कल्कादिषु वैद्येन योजिता इत्यर्थोऽवतिष्ठते । आदिशब्देन फांटशीतकषायादिपरिग्रहः । कथमेते घ्नंतीति प्रकारं युक्त्याऽऽह । पाने इत्यादि । पानाद्युपयोगे सति । लेपाभ्यंगैरिति बहुवचनेन लेपाभ्यंगस्नानादिभिश्चेति योज्यम् । मालिनीवृत्तम् ॥ ३४ ॥

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां पंचदशोऽध्यायः ॥ १५ ॥

प०-विकृतिः पतितास्य तन्त्रान्तरेऽप्युक्तम्।"समीक्ष्य दोषभेदांश्च गणानिष्टान् प्रयोजयेत् । पृथङ्मिश्रान् समस्तांश्च नान्तर्व्यस्तान्न संहितान्॥" इति भद्रम्३४

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने शोधनादिगणसंग्रहाध्यायः पञ्चदशः ॥ १५ ॥

हे०—एते वर्गाः सर्वकल्पयोग्याश्चेत्याह—दोषाद्यपेक्षया कल्कादीनामन्यतमेन कल्पेन, पानादीनामन्यतमेनांतःप्रयोगेण, लेपादीनामन्यतमेन बहिःप्रयोगेण, वा दुःसाध्यानानपि रोगान् घ्नंति । अथाग्र्यसंग्रहः । संग्रहे—श्रेष्ठमुदकमाश्वासनस्तंभनक्लेदानां, वायुः प्राणसंज्ञाप्रदानहेतूनाम्, अग्निरामस्तंभशीतशूलोद्वेष्टकप्रशमनानां, स्नानं सुरा च श्रमहराणां, क्षीरं जीवनीयानां, मांसं बृंहणीयानां, रसः प्रीणनीयानां, लवणमन्नद्रव्यरुचिकराणाम्, अम्लं हृद्यानां, कुक्कुटो बल्यानां, तैलं वातश्लेष्मप्रशमनानां, सर्पिर्वातपित्तप्रशमनानां, स्नेहो मार्दवकराणां, व्यायामः स्थैर्यकराणां, क्षारः पुंस्त्वोपघातिनाम्, आमकपित्थकमकण्ठ्यानाम्, आविकं सर्पिरहृद्यानां, माहिषं क्षीरं स्वप्नजननानां, मण्डकं दधि अभिष्यन्दकराणाम्, इक्षुर्मूत्रजननानां, यवाः पुरीषजननानां, जांबवं वातजननानां, कुलत्थोऽम्लपित्तजननानां, माषाः शष्कुल्योऽविक्षीरं च श्लेष्मपित्तजननानां, दुरालभा पित्तश्लेष्मोपशमनानाम्, पवासो ज्वरहराणां, वृषो रक्तपित्तप्रशमनानां, कंण्टकारिका कासघ्नानां, लाक्षा सद्यः क्षतघ्नानां, नागबलाभ्यासः यक्षतघ्नानां, पुष्करमूलं हिक्काश्वासकासपार्श्वशूलारुचिहराणां, अजापयः शोषघ्नस्तन्यकररक्तसंग्रहणप्रशमनानां दृक्प्रलोष्ठप्रसादच्छर्दितृष्णातियोगप्रशमनानाम्, अरुष्करश्चित्रकमूलं च शुष्कार्शःप्रशमनानां, कुटजो रक्तार्शःप्रशमनानां, लाजाच्छर्दिघ्नानां, यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां, तक्राभ्यासोऽर्शःश्वयथुग्रहणीदोषघृतव्यापत्प्रशमनानां, क्रव्यान्मांसरसाभ्यासोऽर्शःशोषग्रहणीदोषघ्नानां, मुस्तं संग्रहणीयदीपनीयपाचनीयानाम्, अतिविषा पाचनीयसंग्रहणीयसर्वदोषहराणां, बिल्वं संग्रहणीयदीपनीयवातकफप्रशमनानां, गन्धप्रियंगुः शोणितपित्तातिवेगप्रशमनीयानाम्, उदीच्यं निर्वापणदीपनीयच्छर्द्यतीसारहराणां, कट्वंगं संग्रहणीयदीपनीयानां, कुटजत्वक् श्लेष्मपित्तरक्तसंग्रहणीयोपशोषणीयानाम्, उत्पलकुमुदकिंजल्कोऽनन्ता च संग्रहणीयरक्तपित्तप्रशमनानां, काश्मर्यफलं रक्तसंग्रहणीयरक्तपित्तप्रशमनानां, पृश्निपर्णी रक्तसंग्रहणीयदीपनीयपाचनीयवातहरवृष्याणां, शालिपर्णी वृष्यसर्वदोषहराणां, बला संग्रहणीयबल्यवातहराणां, पिप्पलीमूलं दीपनीयपाचनीयानाहहराणां, चित्रकमूलं दीपनीयगुदशोफशूलहराणां, गोक्षुरको मूत्रकृच्छ्रानिलहराणां, हरिद्रा प्रमेहहराणां, रक्तावसेको विद्रधिवीसर्पपिटिकागण्डमालामयहराणाम्, एरण्डतैलाभ्यासो वर्ध्मगुल्मशूलहराणां, लशुनो गुल्मानिलहराणां, हिंगुनिर्यासो दीपनीयच्छेदनीयानुलोमिकवातकफप्रशमनीयानाम्, अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्महराणाम्, उष्ट्रीक्षीरमुदरश्वयथुघ्नानाम्, अयोरजः पांडुरोगघ्नानां, खदिरः कुष्ठघ्नानां, विडंगं कृमिघ्नानां, रास्ना वातहराणाम्, एरण्डमूलं वृष्यवातहराणां गुग्गुलुर्मेदोऽनिलहराणाम्, अमृता संग्रहणीयदीपनीयवातश्लेष्मशोणितविबन्धप्रशमनानां, मदनफलं वमनास्थापनानुवासनोपयोगिनां, त्रिवृत्सुखविरेचनीयानां, स्नुक्पयस्तीक्ष्णविरेचनानां, प्रत्यक्पुष्पी शिरोविरेचनानां, त्रिफला तिमिरघ्नानां, त्रिफलागुग्गुलुर्व्रण्यानां, शिरीषो विषघ्नानाम्, आमलकं वयःस्थापनानां, हरीतकी पथ्यानां, क्षीरघृताभ्यासो रसायनानां, समघृतसक्तुप्राशाभ्यासो वृष्योदावर्तहराणां, संकल्पो नक्ररेतश्च वृष्याणां, दौर्मनस्यमवृष्याणां, तैलगण्डूषाभ्यासो दन्तबलरुचिकराणां, चन्दनोदुम्बरं निर्वापणालेपनानां, रास्नाऽगुरुणी शीतापनयनप्रलेपानां, लामज्जकोशीरे त्वग्दोषदाहस्वेदापनयनप्रलेपनानां, कुष्ठं वातहराभ्यंगोपनाहोपयोगिनां, मधुकं चक्षुष्यकेश्यकंठ्यबल्यविरजनीयरोपणीयानाम्, अजीर्णाशनं ग्रहणीदूषणानां, विरुद्धवीर्याशनं निंदितव्याधिकराणां, गुरुभोजनं दुर्विपाकानाम्, अतिमात्राशनमामदोषहेतूनां, यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानां, यथासात्म्यमाहारावि०

द्वारी सेव्यानाम्, एकासनशयनभोजनं सुखपरिणामकराणां, विषमाशनमग्निवैषम्यकराणां, काले भोजनमारोग्यकराणां, वेगधारणमनारोग्यकराणां, तृप्तिराहारगुणानाम्, अनशनमायुषो ह्रासकराणां, प्रमिताशनं गवेधुकान्नं च कर्शनीयानाम्, उद्दालकान्नं रूक्षणीयानां, मद्यं सौमनस्यजननानां, मद्याक्षेपो धीधृतिस्मृतिहराणां, स्त्रीष्वतिप्रसंगः शोषद्वाराणां, शुक्रवेगनिग्रहः षांढ्यकराणां, पादाभ्यामुद्वर्तनमक्षश्रद्धाजननानां, मिथ्यायोगो व्याधिसुखानां, रजस्वलागमनमलक्ष्मीमुखानां, ब्रह्मचर्यमायुष्याणां, परदारगमनमनायुष्याणाम्, अयथाप्राणमारम्भः प्राणोपरोधिनां, विषादो रोगवर्द्धनानां, हर्षः प्रीणनानां, शोकः शोषणानां, निर्वृतिः पुष्टिकराणां, पुष्टिः स्वप्नकराणां, स्वप्नस्तन्द्राकराणां, सौख्यं निर्वृतिहेतूनां, सर्वरसाभ्यासो बलकराणाम्, एकरसाभ्यासो दौर्बल्यारोचकान्यतमदोषप्रकोपकराणां, गर्भशल्यमहार्याणाम्, अजीर्णमुद्धार्याणां, बाले , मृदुभेषजाहार्याणां, वृद्धो याप्यानां, गर्भिणी तीक्ष्णौषधव्यायामवर्जनीयानां, सौमनस्यं गर्भधारणानां, सन्निपातो दुःश्चिकित्स्यानाम्, आमविषमचिकित्स्यानां, ज्वरः शीघ्ररोगाणां, कुष्ठं दीर्घरोगाणां, राजयक्ष्मा रोगसमूहानां, प्रमेहोऽनुषंगिणां, जलौकसोऽनुशस्त्राणां, बस्तिर्यन्त्राणां, हिमवानौषधभूमीनां, सोम औषधीनां, मरुभूमिरारोग्यदेशानाम्, आनूपभूमिरहितदेशानां, निर्देशकारित्वमातुरगुणानाम्, अनिर्देशकारित्वं रिष्टानां, भिषक्चिकित्सांगानां, सिद्धिवैद्यगुणानां, नास्तिको वर्ज्यानां, लौल्यं क्लेशकराणाम्, आत्मवक्तोपकारिणां, शास्त्रसहितस्तर्कः साधकानां, दुष्टकर्मता निःसंशयकराणाम्, असमर्थता भयकराणां, सद्विद्यासंभाषा बुद्धिवर्धनानाम्, आचार्यः शास्त्राधिगमहेतूनाम्, आयुर्वेदोऽमृतानां, सवनमनुष्ठेयानां, सर्वसंन्यासः सुखानामिति । तत्रोदकाग्निमृद्दृष्टलोष्ठप्रसादतक्राभ्यासरक्तावसेकैरंडतैलाभ्यासोष्ट्रक्षीरमदनफलमद्याक्षेपैकरसाभ्यासगर्भिणीनामेकैकस्मात्समुदायाच्च निर्धारणं, पुष्करमूलादीनां तु समुदायादेवेति । भवति चात्र "अग्र्याणां शतमुद्दिष्टं पञ्चपञ्चाशदुत्तरम् । अलमेतद्विजानीयाद्धिताहितविनिश्चये ॥ " इति ॥ ३४ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने गणस्य संग्रहं नाम सामस्त्येन निरूपितम् ॥ १५ ॥

# षोडशोऽध्यायः ।



शोधनादिगणसंग्रहाऽध्यायादनंतरं स्नेहाध्यायारंभः । यतः शोधनं स्नेहस्वेदावंतरेण न संभवति । वक्ष्यति हि स्नेहस्वेदावनभ्यस्येत्यादि । तस्मात्स्नेहस्वेदाध्याययोरारंभो युक्त इत्याह—

**अथातः स्नेहविधिमध्यायं व्याख्यास्यामः १ ।**

स०—स्नेहस्य सर्पिरादेर्विधिः स्नेहविधिस्तं व्याख्यास्यामः । शेषं पूर्ववद्योज्यम् ॥ १ ॥

प०—शोधनादिगणसङ्ग्रहाध्यायादनन्तरमयं स्नेहनाध्याय आरब्धः । यतः शोधनवमनादिकमन्तरा स्नेहस्वेदौ न कर्तव्यौ । प्रत्यपायभयादिति । स्नेहः सर्पिर्मज्जादि तस्य विधिर्विधानं कल्पना यस्मिन्नध्याये विहितः स स्नेहविधिस्तं व्याख्यास्यामः ॥ १ ॥

हे०—अथातः स्नेहविधिमध्यायं व्याख्यातुं प्रतिजानीते—यतः पूर्वेऽध्याये भेषजान्युक्तानि तेषां प्रयोगो वक्तव्यः । स च स्नेहनस्वेदनशोधनास्थापननावनधूमगंडूषाश्चोतनतर्पणादिभेदादनेकधा । चिकित्साकलिकायां तु-"प्राक् पाचनं स्नेहविधिस्ततश्च स्वेदस्ततः स्याद्वमनं विरेकः । निरूहणान्वासनबस्तिकर्म नस्यं क्रमश्चेति भिषग्वराणाम् ॥ रास्नापटोलपिचुमंदपयोभिरादौ भूम्याटरूषकफलत्रयवारिभिर्वा । पक्वामदोषवपुषस्तदनंतरं हि स्नेहो हितः सुरभिवासककट्फलादिः॥" इति । रास्नाक्वाथादित्रयं, शुंठीक्वाथादित्रयं वा वातादित्रये क्रमात्पाचनं तत्र स्नेहनोऽस्मिन्नध्याये अतएवायं स्नेहविधिः ॥ १ ॥

**गुरुशीतसरस्निग्धमंदसूक्ष्ममृदुद्रवम् ।**
**औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥२॥**

स०—गुर्वादिगुणयुक्तं यद्द्रव्यं तत् स्नेहनं भवति । विपरीतमतो यल्लघूष्णस्थिररूक्षतीक्ष्णस्थूलकठिनसांद्रगुणोपेतं तद्विरूक्षणम् । प्रायोग्रहणं विरूक्षणे स्नेहने च योज्यम् । तथा च लघ्वपि सार्षपं तैलं छागं च दुग्धं तथा विष्किरप्रतुदमृगाख्यं वर्गत्रयं स्नेहनं भवति । तथोष्णमपि मत्स्यमहिषमांसं स्नेहनं भवति । एवं रूक्षणेऽपि वेद्यम् । तथा च यवो गुरुशीतसरादिगुणयुक्तोऽपि विरूक्षणस्तथा राजमाषोऽपि । स्नेहने प्रकृ-

तेऽपि विरूक्षणोपन्यासोऽन्वयव्यतिरेकेण सुतरां स्नेहस्य तारतम्यप्रतिपादनार्थः ॥ २ ॥

प०—अनेन सामान्यनिर्देशेन स्नेहनरूक्षणयोर्द्रव्ययोर्लक्षणं संक्षेपतः शेषयोरुक्तं शास्त्रकृता यत्किञ्चिद्द्रव्यं गुर्वादिगुणयुक्तं तत् स्नेहनम् । तद्गुणविपर्यययुक्तं लघूष्णस्थिररूक्षतीक्ष्णस्थूलकठिनसान्द्रगुणोपेतं तत् विरूक्षणम् । प्रायोग्रहणमुभयत्रापि बोद्धव्यम् । स्नेहनं रूक्षणं च । तच्च व्यभिचारदर्शनार्थम् । यथाजं क्षीरं लघ्वपि स्नेहनम् । तथा तैलमुष्णमपि स्नेहनम् । तथा राजमाषो गुरुगुणयुक्तोऽपि रूक्षणः ॥ २ ॥

हे०—तत्र स्नेहनं द्रव्यमाह—गुरुशीतेति । रूक्षणमाह—विपरीतमिति । तस्मात्स्नेहनाद्गुर्वादिगुणात् विपरीतं लघ्वादिगुणम् ॥ २ ॥

**सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।**
**तत्राऽपि चोत्तमं सर्पिः संस्कारस्याऽनुवर्तनात् ३**

स०—स्नेहेषु क्षीरानूपाऽमिषादिषु मध्ये सर्पिरादयश्चत्वारः स्नेहाः प्रकर्षेण वराः । आशु स्वकार्यकरणात् । तत्रापि च तेष्वपि चतुर्षु मध्ये सर्पिरुत्तमं संस्कारस्याऽनुवर्तनात् । ननु यदि संस्कारमनुरुध्यते सर्पिस्तदानीं मरिचचित्रकादिद्रव्यादिभिः संस्कृतस्य घृतस्य शैत्यादिगुणविपर्यासः प्राप्तः । न चेदं दृष्टम् । यदस्य शैत्यादयो गुणा विनश्यंत्यौष्ण्यादयश्चोत्पद्यंत इति । अत्रोच्यते । अनुशब्दोऽत्र सहार्थे । अनेकार्थत्वान्निपातानाम् । तेनात्रयमर्थः । सर्पिषो गुणाः संस्कारगुणैः सह वर्तंते नतु तैलादीनाम् । तैलवसामज्जानो हि संस्कारवशात् स्वगुणांस्त्यजंति । अत्र चोदाहरणं चंदनाद्यं तैलम् । अतो द्रव्यगुणांतरैरनभिभूतगुणत्वात्सर्पिष इतरेषां तैलादीनां द्रव्यैरभिभूतगुणत्वादुत्तमत्वम् । अत एवच वातपित्तज्वरादिषु विकारेषु घृतसाध्येषु भेषजं तैलं नेष्टमनिष्टसंपादनात् । तैलसाध्येषु तु विकारेषु तदुपशांत्यर्थं तथाविधद्रव्यसंस्कृतं घृतमपीष्टम् । तद्धि न तथाऽनिष्टहेतुः । तस्मात्सर्वस्नेहेभ्यः सर्पिरेवोतमम् संस्कारस्याऽनुवर्तनादिति न्यायात् न्याय्यमेव । माधुर्यादिहेतोश्च ॥ ३ ॥

प०—तत्रापि तेष्वपि चतुर्षु मध्ये सर्पिरुत्तमं घृतं श्रेष्ठम् । संस्कारोऽनुवृत्तो येन द्रव्येण । संस्क्रियते तमनुवर्तते । एवं सर्पिषः सर्वस्नेहोत्तमत्वं न तैलस्य समानेऽपि हेतौ । सर्पिर्ह्युष्णगुणैर्द्रव्यैः संस्कृतमपि गुडूच्यादिभिः स्वं शैत्यमजहत् संस्कारकद्रव्यगुणाननुवर्तते । तथा तैलं शीतगुणैश्चन्दनादिभिः संस्कृतं सर्वसर्विकया घृतवदात्मीयमौष्ण्यं परित्यजति । यत्परित्यागाद्रक्तपित्तविसर्पादौ विकारे दीयते । यथा घृतं तथा न वसाप्रभृतिरक्तपित्तादिविकारप्रशमनार्थमिति ॥ ३ ॥

हे०—स्नेहनतरमाह—सर्पिरिति । स्नेहनतममाह—संस्कारस्यानुवर्तनात् यथा शीतैः संस्कृतं शीततामुष्णैः संस्कृतमुष्णतां भजति इत्यादि । संग्रहे तु—"माधुर्यादविदाहित्वाज्जन्माद्येव च शीलनात्" इति ॥ ३ ॥

**पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ॥ ४**

स०—यो यः पूर्वो यथापूर्वं यो य उत्तरो यथोत्तरमिति यथासादृश्य इत्यव्ययीभावः । उत्तरमपेक्ष्य पूर्वः पूर्वं चापेक्ष्योत्तरः । तेन चतुर्णां स्नेहानां यथाविहितानां सर्पिरादीनां त्रय एव स्नेहा वसामज्जसर्पिःसंज्ञका यथापूर्वत्वेन संबंध्यते नतु तैलाख्यः स्नेहस्तस्य पूर्वत्वाभावात् । न ह्यन्योऽस्मात्कश्चिदुत्तरोऽस्ति यदपेक्षयैष पूर्वत्वमात्मन आसादयेत्तस्मान्नास्ति पूर्वत्वसंबंधस्तैलस्य । तथा चतुर्णां स्नेहानां त्रय एव स्नेहा मज्जावसातैलाख्या यथोत्तरत्वेनाऽभिसंबध्यते न सर्पिःसंज्ञकः स्नेहः उत्तरत्वाभावात् । न ह्यन्यः कश्चिदस्य पूर्वो विद्यते यदपेक्षयैवोत्तरत्वमात्मन आसादयतीत्युक्तम् । तदेवं यथापूर्वं पित्तघ्नत्वं वसामज्जसर्पिषां सामान्येनोक्तम् । विशेषेण च वसा पित्तघ्नी मज्जा पित्तघ्नतरः सर्पिः पित्तघ्नतममित्यर्थः । इतरघ्ना इति । इतरौ वातकफौ पित्तापेक्षया तौ घ्नंति पराकुर्वंतीतीतरघ्नाः । यथोत्तरं त्रयः स्नेहा मज्जवसातैलाख्या वातश्लेष्मघ्नाः । तेन मज्जा वातश्लेष्मघ्नो वसा वातश्लेष्मघ्नतरा तैलं वातश्लेष्मघ्नतममिति प्रकृतम् । अन्ये त्वेवं व्याचक्षते । श्लेष्मणि स्नेहनिषेधादितरघ्ना इति सामान्योक्तावपि वातघ्ना इति गम्यते । अथवा द्रव्यांतरसंस्कृतसर्पिराद्यपेक्षया कफस्याऽपीतरशब्देन ग्रहणमिति ॥ ४ ॥

प०—यो यः पूर्वस्नेहो यथापूर्वम् । यो य उत्तरः स्नेहो यथोत्तरम् । उत्तरमपेक्ष्य पूर्वः पूर्वं चापेक्ष्योत्तरः । ततश्चतुर्णां स्नेहानां निर्दिष्टानां सर्पिरादीनां त्रय एव स्नेहा वसामज्जासर्पिःसंज्ञकाः यथापूर्वकत्वे चाभिसम्बध्यन्ते । तैलाख्यः स्नेहपूर्वत्वाभावात् नह्यन्यः कश्चिदुत्तरो विद्यते । यदपेक्षयैष पूर्वत्वमात्मन आसादयति । तथा चतुर्णां स्नेहानां त्रय एव स्नेहा वसामज्जातैलाख्याः यथोत्तरत्वं नाभिसम्बध्यन्ते । न सर्पिःसंज्ञकः स्नेह उत्तरत्वाभावान्नह्यस्य कश्चित्पूर्वो विद्यते । यदपेक्षयैष उत्तरत्वमात्मन आसादयति । एवं पूर्वं पित्तघ्नत्वं वसामज्जासर्पींषि पित्तघ्नानि । वसा पित्तघ्नी । यथोत्तरं त्रयः स्नेहा मज्जावसातैलानि । मज्जा वातश्लेष्मघ्नः। वसा वातश्लेष्मघ्नतरा।तैलं वातश्लेष्मघ्नतममिति भट्टश्रीवर्धमानोक्तः सारोद्धारः ॥ ४ ॥

हे०—सर्पिरादीनां स्नेहप्रयोगे दोषविशेषेण तारतम्यज्ञानमाह पित्तघ्ना इति ॥ ४ ॥

**घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ५॥**

स०—घृताद्गुरुणः सकाशात्तैलं गुरु गुरुतरमित्यर्थः । वसा तु तैलाद्गुरुतरा ततोऽप्यतिशयेन मज्जा गुरुतमः ॥ ५ ॥

प०—घृतात्तैलं गुरुतरं भवति । तैलाद्वसा गुर्वी । वसाया अपि मज्जा गुरुः ॥ ५ ॥

हे०—तैलाद्वसा ततो मज्जा ततः सर्पिः पित्तघ्नं, सर्पिषो मज्जा ततो वसा ततस्तैलं वातघ्नं,कफघ्नं च । स्नेहनसाध्ये पित्तरोगेऽपि तैलस्याभ्यनुज्ञार्थं पित्तघ्नत्वमुक्तम् । एवमन्यत्र सर्पिरादीनां गुरुत्वे तारतम्यमाह—घृतादिति ॥ ५ ॥

इदानीं यमकस्नेहस्त्रिवृतस्नेहो महास्नेह इति तत्रतत्रोच्यते न च ते ज्ञायंत इत्याह—

**द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ६॥**

स०—द्वाभ्यां स्नेहाभ्यां यमको नाम्ना स्नेहः । यथा सर्पिर्वसाभ्यां, सर्पिस्तैलाभ्यां, सर्पिर्मज्जभ्यामित्यादि । एवं त्रिभिः स्नेहैस्त्रिवृतश्चतुर्भिर्महास्नेह उच्यत इति शेषः ॥ ६ ॥

प०—स्नेहानां संज्ञासंज्ञिसम्बन्धं प्रतिपादयन्नाह—द्वाभ्यां स्नेहाभ्यां यमकः । त्रिभिः स्नेहैस्त्रिवृतः । चतुर्भिः स्नेहैर्महान् ॥ ६ ॥

हे०—यमकादिसंज्ञात्रयमाह—तैर्गुरुत्वोक्तक्रमैः, ते घृततैलाभ्यां यमकः, घृततैलवसाभिस्त्रिवृतः सर्वैर्महान्, संग्रहे तु—" स्नेहाद्वयादधिक्षीरं मांसास्थि फलदारु च इति ॥ ६ ॥

संप्रति स्नेह्यान्निरूपयति—

**स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिंतकाः ।**
**वृद्धबालाऽबलकृशा रूक्षाः क्षीणास्ररेतसः ॥**
**वातार्तस्यंदतिमिरदारुणप्रतिबोधिनः ।**
**स्नेह्याः ॥ ७ ॥**

स०—स्वेद्यादयः स्नेह्याः स्नेहार्हाः । न वास्नेहि स्वेद्य इत्यर्थः । एवं योऽपि शोध्यः सोऽपि पूर्वं स्नेह्यः स्वेदार्हाः स्वेद्याः । अर्हार्थे कृत्यप्रत्ययोऽत्र ण्यः । ए संशोध्याः शोधनार्हाः । मद्यासक्तस्त्रीसक्तव्यायामसक्ता तथा येऽपि चिंतकास्तथा वृद्धा बाला अबला अह बला इत्यर्थः । तथा कृशा रूक्षाः क्षीणरुधिर क्षीणशुक्राश्च । वातार्ता वातपीडिताः । आर्तशब्द स्यंदादिषु प्रत्येकस्मिन् योज्यः । स्यंदोऽभिष्यंदस्ति मिरोऽक्षिरोगः । दारुणप्रतिबोधिनः कृच्छ्रोन्मीलि इत्यर्थः । एते स्नेह्याः स्नेहार्हाः ॥ ७ ॥

प०-स्वेद्यादयः स्नेह्याः स्वेदनार्हाः । स्वेद्याः शो नार्हाः संशोध्याः। तथा मद्यस्त्रीव्यायामेष्वासक्ताः तथा चिन्तकाः । क्षीणमस्रं रक्तं रेतः शुक्रं येषां तथा वातार्ता वातपीडिताः । तथा स्यन्दतिमि रनेत्ररोगदारुणप्रतिबोधिनः स्नेह्याः । दारुणः प्रति बोधः कृच्छ्रदुन्मेषणं येषां ते दारुणप्रतिबोधिनः ७

हे०—स्नेहनीयानाह—स्वेद्यः कर्तव्यस्वेदः, संशोध्य कर्तव्यशोधनः, मद्यादिषु त्रिष्वासक्तः, चिंतकः चिंतापर स्यंदो नेत्रकोपः, दारुणप्रतिबोधः कृच्छ्रोन्मीलः ॥ ७

**न त्वतिमंदाऽग्नितीक्ष्णाग्निस्थूलदुर्बलाः ।**
**ऊरुस्तंभाऽतिसाराऽऽमगलरोगगरोदरैः ॥**
**मूर्छाच्छर्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ।**
**अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने ॥८**

स०—अतिमंदाग्न्यादयो न स्नेह्याः । अति शब्दो यावद्दुर्बलेषु प्रत्येकं योज्यः । तेनाऽतिदुर्बल

न स्नेह्या इत्यर्थः । अत एवाल्पबलाः स्नेह्या नत्व-तिदुर्बला इति न पूर्वापरविरोधः । अतितीक्ष्णाग्नेः स्नेह-नादत्यग्निवृद्धिः । अतिस्थूलस्य चाऽग्निमेदसोर्वृद्धिः । अतिदुर्बलस्य च जरणाशक्तेः स्नेहस्य व्यापत् । ऊरुस्तंभादिभिर्यावन्मद्येन च पीडिता न स्नेह्याः । अत्र शोधनप्रसंगे तु स्नेहनं विना शोधनं न कार्य-मिति यावत् । अपप्रसूता सुतगर्भा न स्नेह्येति लिंग-वचनविपरिणामः । प्रयुक्ते च नस्यादिकर्मणि सर्व एव न स्नेह्याः ॥ ८ ॥

प०—अतिमन्दाग्न्यादयो नतु स्नेह्या इति सम्बन्धः । तीक्ष्णाग्नेः स्नेहनादत्याग्निवृद्धिः । स्थूल-स्याग्निमेदसो वृद्धिः । दुर्बलस्याजरणशक्तिः । ऊरु-स्तम्भादीनां पीडितशब्देन सम्बन्धः । तेनोरुस्त-म्भपीडितः अतिसारेण पीडितः आमपीडितो याव-न्मद्यपीडित इति । अत्र शोधनप्रसङ्गेऽप्यस्नेहनं विधिना न शोधनमिति यावत् । अपप्रसूता न स्नेह्येति विपरिणामः । अपप्रसूता अकालप्रसूता । अपरिपूर्णमासप्रसूतेति यावत् । तथा नस्यादिकर्मत्रि-तये युक्ते सत्यदोषसाम्ये स्नेहो न योज्यः ॥ ८ ॥

हे०—अस्नेहनीयानाह—अबलस्य स्नेह्यत्वमति-दुर्बलस्यास्नेह्यत्वमित्यविरोधः।अपप्रसूता अयथावत्प्रसूता ८

सांप्रतं चतुर्णां स्नेहानां मध्ये यो येभ्यो हितस्तं दर्शयन्नाह—

**तत्र धीस्मृतिमेधाऽग्निकांक्षिणां शस्यते घृतम् ९**

स०—तत्र तेषु स्नेहेषु मध्ये धीस्मृत्याद्यभिलाषिणां घृतं शस्यते यावदग्निकांक्षिणाम् । अन्ये तु मेधादि-कांक्षिणामिति पठंति । आदिशब्देन स्वरायुर्व-र्णादिपरिग्रहः ॥ ९ ॥

प०—तत्र तेषु स्नेहेषु मध्ये धीप्रभृतिकांक्षिणाम-भिलाषिणां पुंसां स्नेहप्रसङ्गे सति घृतं स्नेहः शस्यते। तस्य तथा शक्तत्वात् । धीर्बुद्धिः । मेधा प्रज्ञा । ग्रन्थस्य ग्रहणे शक्तिरुक्ता । स्मृतिः पूर्वानुभूतस्मर-णम् । आदिग्रहणेन स्वरायुर्वर्णादिपरिग्रहः ॥ ९ ॥

हे०-घृतस्य विषयमाह-आदिशब्दाद्घृतगुणोक्ता अग्न्या-दयः ॥ ९ ॥

**ग्रंथिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ।**
**तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ॥ १०**

स०—तैलं ग्रंथ्यादिरोगिषु शस्यते । लाघवदार्ढ्या-र्थिषु क्रूरकोष्ठेषु प्राणिषु च शस्यते ॥ १० ॥

प०—ग्रन्थ्यादिषु तथा श्लेष्ममेदोमारुतरोगिषु पुरुषेषु तथा शरीरलाघवदृढत्वार्थिषु तथा क्रूरको-ष्ठेषु देहिषु शरीरिषु तैलं शस्यत इति सम्बन्धः ॥ १० ॥

हे०—तैलस्य विषयमाह ॥ १० ॥

**वातातपाऽध्वभारस्त्रीव्यायामक्षीणधातुषु ।**
**रूक्षक्लेशक्षमाऽत्यग्निवातावृतपथेषु च ॥**
**शेषौ ॥ ११ ॥**

स०—वातादीनां क्षीणधातुना प्रत्येकं संबन्धः वातक्षीणधातुषु एवमातपक्षीणधातुष्वित्यादि । घृततैलाभ्यामुक्ताभ्यामन्यौ वसामज्जानौ शस्येते तथा रूक्षेषु क्लेशसहेषु । अल्पाग्निषु बलवदग्नि-द्रष्टव्यम् । अन्यथाऽत्यग्निषु स्नेहनिषेधात्पूर्वापरविरोधः स्यात् । अथवा । अत्यग्निष्वपि वसामज्जानावनु-अपवादवाक्यत्वादस्येति व्याख्येयम् । वातेनाऽऽवृ-पंथानश्छिद्राख्या येषां तेषु च शस्येते शेषौ ॥ ११ ॥

प०—वातातपादिभिः क्षीणा धातवो येषां तेषु नरेषु यथा रूक्षादिषु च शेषौ स्नेहौ वसामज्जानौ शस्येते । क्लेशक्षमशब्देन क्लेशक्षम-सर्पिस्तैलं प्रयोजयेत् । अत्यग्निरतितीक्ष्णाग्निः स्नेह-प्रतिषेध वसामज्जत्वापवादवाक्यम । वातावृतप-वातरुद्धस्रोतःसु मज्जा ॥ ११ ॥

हे०—वसामज्ज्ञोर्विषयमाह—वातादिभिः पञ्चभिः क्षीण-धातुषु वातावृतपथो मारुतावरुद्धस्रोताः, शेषौ वसा-मज्जानौ ॥ ११ ॥

वसायास्त्वन्यदपि विशेषांतरमाह—

**वसा तु संध्यस्थिमर्मकोष्ठरुजासु च**
**तथा दग्धाऽऽहतभ्रष्टयोनिकर्णशिरोरुजि॥१२**

स०—तुर्विशेषे । चः समुच्चये रुजाशब्दः प्रत्ये-संबध्यते । संधिरुजास्वस्थिरुजास्वित्यादिषु । त

दग्धरुग्व्याहतरुजि तथा भ्रष्टयोनिरुजीत्येवं संबंधः कार्यः ॥ १२ ॥

**प०—वसा पुनः सन्ध्यस्थिरुजाक्षपीडा । तथा दग्धादिषु रुजासु वसा शस्यते इति सम्बन्धः॥१२॥**

हे०—वसाया विषयांतरमाह—दग्धोऽग्निना, आहतो दण्डादिना, भ्रष्टयोनिः ॥ १२ ॥

इदानीं कस्मिन्काले कस्यस्नेहस्योपयोगः शस्त इति दर्शयन्नाह—

**तैलं प्रावृषि वर्षांते सर्पिरन्यौ तु माधवे १३ ॥**

**स०**—तैलं प्रावृषि शस्यत इति संबंधः । एवमुत्तरत्राऽपि योजनीयम् । स्वस्थस्य स्नेहनार्थं सर्वत्रैव स्नेहस्य प्रसंगे नियमोऽयं क्रियते । तैलं प्रावृष्येव वर्षांत एव सर्पिर्वसामज्जानौ माधव एवेति ॥ १३ ॥

प०—इदानीं कस्मिन् काले कस्य स्नेहस्योपयोगः शस्त इति निर्णयन्नाह—वृष्टेः प्रारम्भः प्रावृडिति कल्प्यते । तस्यां प्रावृषि श्रावणाख्ये मासे शोधनप्रसंगे स्नेहनार्थं शस्तो स्वस्थावस्थस्य संशोधविषय एष ग्रन्थ आरब्धः । स्वस्थस्य यथोक्तार्तवविध्यनुष्ठाने सत्यपि दोषसञ्चयः कालकृतः सम्भाव्यते । अनन्तरं दोषकोपः । दोषकोपाच्च रोगप्रादुर्भावस्तदर्थं शोधनमायुर्वेदतत्त्वज्ञैः प्रतितन्त्रं कर्तव्यत्वेन निर्दिष्टम् । यथा शीतोद्भवं दोषचयं वसन्ते विशोधयन् इत्यनेनर्तुविधानेन शेषभूतस्थितेन ग्रन्थेन संशोधनं च स्नेहस्वेदपूर्वकं कर्तव्यं नान्यथा । तथा शीतोद्भवं दोषचयं वसन्ते प्रवाहयन् पूर्वं स्नेहस्वेदाववश्यं कर्तव्यौ । तत्र सर्वस्य पूर्वमुपयोगः प्राप्तः । स्नेहसामान्यात् नियम्यते । वसामज्जानाविव स्नेहनार्थं प्रयोज्यो नान्यः स्नेहः । तथा ग्रीष्मजं दोषचयं वर्षाकाले प्रवाहयन् पूर्वं स्नेहस्वेदौ कर्तव्यौ । तत्र यथैव तैलं नियम्यते तथा घनात्यये वार्षिकं दोषचयं प्रवाहयन् पूर्वं स्नेहस्वेदौ कर्तव्यौ । अत्र च तथैव स्नेहस्य सर्वस्य स्नेहनार्थमभ्यसनं प्राप्तं स्नेहनसामान्यात्तन्नियम्यते । सर्पिष एवाभ्यसनमित्येव स्वस्थविषये नियमः । अस्वस्थविषये नियमः पुनः संशोधनसाध्यामयत्वेन तैलोचितेन कदाचिदमुचितेनापि प्रावृषि संशोधनात् पूर्वं तैलमेव स्नेहनार्थमभ्यसनीयम् । नान्यः स्नेहः । एवमन्यदपि स्वयमूह्यम् ॥ १३ ॥

हे०—स्नेहानां कालविभागमाह—प्रावृषि तैलं, वर्षांते शरदि सर्पिः, माधवे वसंते, शेषौ ॥ १३ ॥

ननु वर्षासु तैलं वर्षांते सर्पिर्वसामज्जानौ माधव इति योऽयं नियमः स किंचिदपेक्ष्य वर्तते आहोस्विदनपेक्ष्येत्यस्मिन् पर्यनुयोग इदमाह—

**ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ १४**

**स०**—साधारणे ऋतौ श्रावणादौ संशोधनात् पूर्वं स्नेहनार्थं स्नेहस्तैलादिकः शस्तः । तथाऽह्नि वासरे । न निशि । तथा विमले रवौ जलदनीहारादिनाऽनाच्छादिते खरांशौ । स्नेह इति सामान्यशब्दप्रयोगात्सर्वः स्नेहः सर्पिरादिश्चतुष्प्रकारो गृह्यते ॥ १४ ॥

प०—प्रावृषि यदेतत् तैलं तथा वर्षान्ते सर्पिर्वसामज्जानौ माधव एवेत्येवंरूपो नियमः स किञ्चिदपेक्ष्यत तदर्थमिदमाह—ऋतौ साधारणे नात्युष्णशीते मध्यावस्थे ततो यथायथं तैलादयः संशोधनात् पूर्वं स्नेहार्थमुपयोज्याः । तथाऽह्नि दिवसे न निशायां तथा विमले रवौ निर्मले भास्वति नात्र संछादिते । एवमेतेषु कालेषु प्रावृडादिष्वार्तवदोषसञ्चयस्य निहर्तुं सर्वो विधिर्निर्दिष्टः । प्रावृडादिवर्ज्ये पुनरन्यस्मिन् काले व्याधिवशात्त्वरायामुपजाते संशोधनस्य कर्तव्यत्वे प्राप्तेऽप्यकर्तव्यत्वं प्राप्तम् । यतः मूत्रशोधनात्पूर्वं स्नेहनार्थं स्नेहनियमान्न कश्चित्स्नेह उपयोक्तुं शक्यते ॥ १४ ॥

हे०—यो यस्मिन्नृतावुक्तः स तस्य साधारणभागे निर्मले रवौ निरभ्रे दिवसे शस्तः, साधारणे श्रावणचैत्रकार्त्तिकेषु ॥ १४ ॥

**तैलं त्वरायां शीतेऽपि ॥ १५ ॥**

स०—त्वरायां सत्यां व्याधिक्रियां प्रति प्राप्ते काले स्नेहयोग्यतायां सत्यां शीते हेमंतशिशिराख्ये काले तैलं संशोधनात्पूर्वं स्नेहनार्थं शस्तं नान्यस्नेहः । अपिशब्दान्न केवलं वर्षास्ववर्षासु च शस्तमित्यर्थः ॥१५॥

प०—स्नेहनपूर्वं संशोधनं कुर्यान्नान्यथेत्याशङ्क्य इदमाह—त्वरायामुपजातायां व्याधिक्रियाप्राप्ते काले

संशोधनसाध्यत्वाद्व्याधेर्यदा संशोधनं क्रियते हेमन्तशिशिराख्ये तदा तैलमेव संशोधनात्पूर्वं स्नेहनार्थं देयम् । अपिशब्दान्न केवलं प्रावृष्येव तैलं देयम् इत्येष नियमः ॥ १५ ॥

हे०—व्याधिवशादकालेऽपि स्नेहनं कार्यमित्याह—त्वरायामात्ययिके कार्ये शीतेऽपि स्नेहनं कार्यं तच्च तैलेन ॥ १५ ॥

सर्वस्य स्नेहस्याऽह्न्युपयोगान्नात्रावप्रयोगः प्राप्त इत्याह—

**घर्मेऽपि च घृतं निशि**
**निश्येव पित्ते पवने संसर्गे पित्तवत्यपि १६ ॥**

स०—न केवलं शरदि घृतं प्रयुंजीत यावद्घर्मेऽपि निश्युपयुंजीत । नच घर्म एव निश्युपयुंजीत यावत्पित्ते कुपिते पित्तजे वा विकारे तथा पवने कुपिते तज्जे वा विकारे स्नेहसाध्ये घर्मे घृतं निश्युपयुंजीत न दिवा न च तैलं वसामज्जानौ वा । तथा पित्तवति पित्ताधिके संसर्गे वातपित्ताख्ये श्लेष्मपित्ताख्ये कुपिते तज्जे वा विकारे स्नेहसाध्ये घर्मे घृतं निश्युपयुंजीत । पित्ते पवन इत्येतद्दोषविकारोभयोपलक्षणार्थं ज्ञेयम् । पित्तवतीति भूम्नि मतुप् ॥ १६ ॥

प०—तथैव त्वरायां सत्यां यदा ग्रीष्मे संशोधनं क्रियते तदा घृतमेव संशोधनात् पूर्वं देयम् । अपिशब्दान्न केवलं वर्षान्ते सर्पिर्यावदस्मिन् ऋतौ सर्वस्य स्नेहस्य दिवोपयोगः प्राप्तः स निशीत्यनेन निषिध्यते । न केवलं घृतं घर्मे निशि उपयुञ्जीत स्नेहनार्थं संशोधनात्पूर्वमित्येव नियमः यावदयमपि नियमः । पित्ते कुपिते तज्जे च विकारे तथा पवने कुपिते तज्जे च विकारे स्नेहसाध्ये तदुपशान्त्यर्थं घृतमेव संस्कृतमसंस्कृतं वा नित्यमुपयुञ्जीत न दिवा न तैलं वसामज्जानौ वा । तथा संसर्गे पित्तवत्यपि द्विविधेऽपि संसर्गे पित्ताधिके वातपित्ताख्ये पित्तश्लेष्माख्ये कुपिते तथाभूते विकारे तज्जे स्नेहसाध्ये तदुपशान्त्यर्थं घृतमेव संस्कृतमसंस्कृतं वा निश्युपयुञ्जीत न तैलं वसामज्जानौ नैवाहनि पित्तेऽपि वमने इत्येव दोषविकारोभयलक्षणार्थं बोद्धव्यम् ॥ १६ ॥

हे०—ग्रीष्मेऽपि घृतेन तच्च निशि पित्तादिषु दि स्नेहनस्यापवादमाह ॥ १६ ॥

**निश्यन्यथा वातकफाद्रोगाः स्युः पित्ततो दिव**

स०—अन्यथोक्तप्रकारादपरेण प्रकारेण यथा शी काले निशि घृतोपयोगाद्वातकफाद्वेतो रोगा भवेयु तथा दिवा घर्मे काले तैलोपयोगात्पित्ततः पित्ताद्रो स्युः । वसामज्ज्ञोस्त्वनिश्चितस्वरूपत्वान्नोष्णक नाऽपि शीतकाले त्वरायां सत्यामुपयोगस्तंत्रका दर्शितः । तथा चोक्तम् । यथासत्त्वं तु शैत्योष्णे वस मज्ज्ञोस्तु निर्दिशेदिति ॥ १७ ॥

प०—अयमर्थः । घृततैलयोर्यथानिर्दिष्टोपयो गकालनियमाद्यत इतरोपयोगकालस्तयोरिति वस मज्ज्ञोस्तु शीते काले नाप्युष्णे काले त्वरायामुपज तायामित्यर्थः । तत्र यस्तैलोपयोगो दिवा सोऽन्य थान्येन प्रकारेण । एवं शीतकाले निशि घृत पयोगाद्वातकफाद्रोगा भवेयुः । तथा घर्मे का दिवा तैलोपयोगात् पित्ततो रोगा भवेयुरिति वस मज्ज्ञोस्तु न शीते काले नाप्युष्णे काले त्वरा समुपजातायां संशोधनात् पूर्वं स्नेहनार्थमुपयो ग्रन्थकृता प्रदर्शितो निश्चितशीतोष्णगुणत्वाभा शीतगुणो वक्तुं युज्येत नाप्युष्णगुणः स्वस्वरू पराधीनस्वरूपत्वात् । तथाचेह तौ मांसस्य रूपा गस्वरूपाविति पठ्यते । तथाचागमेऽपि । "यथासत्त्व तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत्" इति ॥ १७ ॥

हे०—दिवारात्रिनियमत्यागे दोषमाह—येषां दि स्नेहनमुक्तं तेषां निशि करणे वातकफजाः रोगा स्युः ॥ १७ ॥

कथं स्नेह उपयोज्य इत्याह—

**युक्त्याऽवचारयेत्स्नेहं भक्ष्याद्यन्नेन बस्तिभिः ।**
**नस्याभ्यंजनगंडूषमूर्धकर्णाक्षितर्पणैः ॥ १८ ॥**

स०—युक्तिर्योग उपायलक्षणः । युक्त्या मात्रा कालक्रियाभूमिदेहदोषस्वभावया स्नेहं सर्पिरादिकम वचारयेदुपयुंजीत । केन सहेत्याह । भक्ष्याद्यन्नेन आदिशब्देन भोज्यलेह्यपेयस्य त्रिविधस्याऽप्यन्नस्य ग्रह णम् । तथा बस्तिभिर्नस्येनाभ्यंजनेन गंडूषेण च स्नेह-

विचारयेत् । मूर्धादीनां तर्पणशब्देन प्रत्येकं संबंधः ।
न मूर्धतर्पणेन शिरोबस्त्याख्येन तथा कर्णतर्पणेन
कर्णपूरणाख्येन तथाऽक्षितर्पणेन तर्पणपुटपाकविध्यु-
क्तेन । भक्ष्यं शशांककिरणादि तेन भक्ष्येण
ह । आदिग्रहणादोदनादयो मुन्युक्ता गृह्यंते । तथा
मुनिः । ओदनश्च विलेपी च रसो मांसं पयो
धि । यवागूः सूपशाके च यूषः कांबलिकः खलः॥
क्तवस्तिलपिष्टं च मद्यं लाजास्तथैव च । भक्ष्यमभ्यं-
नं बस्तिस्तथैवोत्तरबस्तय इत्यादि । बस्तिभिरिति
हुवचननिर्देशो बस्तित्रयग्रहणार्थः । तेन निरू-
ऽन्वासनं बस्तिरुत्तर इति ॥ १८ ॥

प०—एवं स्नेहस्य यथायथमुपयोगकालं नियम्ये-
नीं यथासौ स्नेह उपयुज्यते तद्दर्शयितुमिदमाह—
क्तियोग उपयोगो मात्रादिलक्षणः । युक्त्या
त्राकालक्रियाभूमिदेहदोषस्वरूपया स्नेहमुपचार-
दुपयुञ्जीत । कथं केन सहोपसेवनरहितो भक्ष्यः
शाङ्ककिरणादिस्तेन भक्ष्याद्यन्नेन च । तथा बस्ति-
भिस्त्रिभिः निरूहोऽन्वासनं बस्तिरुत्तर इति ॥१८॥

हे०—येषां निशि स्नेहनमुक्तं तेषां दिवा करणे पित्त-
गाः स्युः । स्नेहदानप्रकारमाह—युक्त्याऽवचारयेत्स्नेहं
यात् भक्ष्यादिभिरन्नैः संयोज्य बस्त्यादिप्रयोगेण च१८

**रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणाः ।**
**स्नेहस्याऽन्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः॥**

स०—रसभेदश्चैककत्वं च ताभ्यां रसभेदैकक-
त्वाभ्यां स्नेहस्याऽवचार्यमाणस्य चतुःषष्टिर्विचारणा
भवंति । रसभेदैनैकैकहीनानित्यादिग्रंथनिर्दिष्टेन त्रिष-
ष्टिसंख्यावच्छिन्नेन सहोपयुक्तस्य स्नेहस्य तथैकक-
त्वेनाऽसहायेन केवलेन स्नेहेन सहाऽस्य चतुःषष्टि-
र्विचारणाः स्नेहप्रयोगकल्पना या एता भक्ष्याद्यन्नेन
तथा रसभेदेन मूर्धकर्णाक्षितर्पणेन च या एताः क्रमा-
द्यथाक्रमं निर्दिष्टास्ताः कल्पनाः स्नेहस्याऽन्याभिभूत-
त्वादन्येन भक्ष्यादिना बहुना तथा रसभेदेन सहो-
पयुक्तस्याऽभिभूतत्वात्तथाऽल्पत्वादल्पोपयोगित्वान्मूर्धा-
ऽक्षितर्पणादौ पानद्रवप्रभूतस्येवावचारयितुमशक्य-
त्वाच्च विचारणाः स्मृताः । आयुर्वेदस्य कर्तृभि-
रिति शेषः ॥ १९ ॥

प०—रसभेदैरेकैकहीनैनेत्यादिग्रन्थनिर्दिष्टेन त्रिष-
ष्टिसंख्यावच्छिन्नेन सहोपयोगस्य स्नेहस्य तथैकैक-
त्वोपयोगेनासहायेन केवलेन स्नेहेन सतास्य स्नेहस्य
चतुःषष्टिर्विचारणा भवन्ति । किं कारणमेताः
प्रतिविचारणा उच्यन्त इति युक्तिद्वयमाह-स्नेहस्या-
ल्पत्वादल्पोपयोगित्वात्तथान्नाभिभूतत्वादन्नेन भक्ष्या-
दिना बहुना तथा रसभेदेनापि तथा विविधेन सहो-
पयुक्तस्य स्नेहस्याभिभवः क्रियते । तास्तास्तस्य
विचारणा उच्यन्ते ॥ १९ ॥

हे०—उक्तानां प्रकाराणां संज्ञामाह—उक्तप्रकारः
स्नेहो विचारणासंज्ञः स च चतुःषष्टिधा । तत्र भक्ष्या-
द्यन्नेन युक्तोऽन्नस्य मधुरादिरसभेदैस्त्रिषष्टिभेदत्वात्त्रिष-

---

( १ ) अथ "काश्च विचारणाः" इति प्रश्नस्योत्तरमाह—
रसैरित्यादि । ओदनादिविचारणासु च विचारणाः सर्पि-
रादिः स्नेहो रसैर्मधुरादिभिः षड्भिः समासव्यासयोगिभिरुप-
हितः । उपाधिमान् सन् त्रिषष्टिधा संख्यां प्राप्नोति ।
केवलोऽनुपहितश्चैक इत्येवमेषा स्नेहानां चतुष्षष्टिः प्रविचा-
रणा, ओकर्तुव्याधिपुरुषानजानता भिषजा प्रयोज्या भवेत् ।
यद्यपि स्वच्छपेयो न विचारणा तथापि प्रथमकल्पविचारणा
भवतीति चतुष्षष्टिरुक्ता इति **गङ्गाधरः** ॥

**चक्रपाणिस्तु** प्रकारान्तरेण विचारणाभेदमाह—
रसैश्चेत्यादि । समासो रसानामन्योन्यमेलकः, व्यासोऽमे-
लकः, समासव्यासवद्भिः षड्भी रसैरोदनादिगतैरुपहितो
युक्तः सन् स्नेहस्त्रिषष्टिसंख्यां प्राप्नोति, एकश्च केवल इत्य-
च्छपेयं वर्जयित्वाऽभ्यञ्जनादि-प्रयोज्यः, त्रिषष्टी रसभेदा
**आत्रेयभद्रकाप्यीये** "स्वाद्वम्लादिभिर्योगम्" इत्यादि-
वाक्ये वक्ष्यमाणो बोद्धव्यः, एवं स्नेहानां रसयुक्तानां चतु-
ष्षष्टिः प्रविचारणाः स्युः, चतुःषष्टिरिति स्नेहानामित्यनेन
सम्बध्यते, तेन, प्रविचारणेत्येकवचनमुपपन्नं स्यात् । न
सर्वविचारणा सर्वत्र कर्तव्या, किन्तु, सात्म्यर्तुव्याधिदोष-
पुरुषान् परीक्ष्य या यत्र युज्यते तत्र सा कर्तव्येत्याह—**ओक-
र्त्वि**त्यादि । ओकोऽभ्यासः । पुरुषग्रहणेन कस्मिन् देशेऽयं
पुरुषो वर्तत इति परीक्षया देशोऽप्यवरुद्धो बोद्धव्यः, वयो-
बलप्रभृतयश्च बोद्धव्याः ॥

**श्रीमदरुणदत्तः चरकभद्रकाप्यीया**ध्यायोक्त-
रसभेदानुसारेण, **सुश्रुत**रसभेदविकल्पानुसारेण चास्य वाग्भ-
टसूत्रस्थानस्य रसभेदीयनामके दशमेऽध्याये सर्वाङ्गसुन्द-
राख्यां स्पष्टीकृतवानिति ॥

द्विधा । स चान्यैः संयोगद्रव्यैः अभिभूतत्वादल्पवीर्यः, बस्त्यादिप्रयुक्तस्तु केवलत्वादेकधा स चाल्पमात्रत्वादल्पवीर्यः, अल्पवीर्यत्वाद्विविधोऽपि विचारणासंज्ञः तच्छक्तविचारणविषयत्वात् ॥ १९ ॥

**यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा ।**
**स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात् ॥**

स०–स्नेहस्य विचारणासंज्ञात्वे यथानिर्दिष्टो हेतुस्तस्य यथोक्तस्य हेतोरभावादविद्यमानहेतुत्वाद्योऽच्छपेयः स्नेहः केवल एव न सा विचारणा केवलोपयोगित्वाद्बहूपयोगित्वाच्चेत्यर्थः । नन्विह केवलः स्नेहो न विचारणेत्युच्यते । प्राक्केवलस्यैव स्नेहस्य बस्त्याद्युपयोगो विचारणेत्यभ्यधायि तदेतत्पूर्वापरव्याहतमिव मन्यामहे । नैतदस्ति अच्छपेय इत्यस्य ह्ययमर्थः । अच्छः केवलो यः स्नेहः पीयते सा विचारणा न भवति । मूर्धादितर्पणादिना तु केवलस्य स्नेहस्य य उपयोगः सा च विचारणेति सोऽच्छपेयाख्यः कल्पः प्रयोगः स्नेहस्य श्रेष्ठः प्रशस्यतमः । कुत इत्याह । स्नेहकर्माशुसाधनात् स्नेहकर्मणां तर्पणमार्दवादीनां शीघ्रं संपादनात् ॥ २० ॥

प०-अतएवाच्छपेयस्य शुद्धपेयस्य विचारणत्वं तदेवं दर्शयन्नाह–यथोक्तहेत्वभावाद्यथानिर्दिष्टहेतोरभावादविद्यमानत्वाद्बहूपयोगित्वाच्चात एव स्नेहस्य कल्पः प्रयोगः स चेष्टविचारणातः प्रशस्यतमः किं कारणम् । स्नेहव्यापारशीघ्रोत्पादनात्स्नेहसाध्यामयप्रशमनोत्पादनादिति यावत् ॥ २० ॥

हे०–अच्छपेयमाह–यस्तु केवलः पीयते स उद्भूतशक्तित्वान्न विचारणासंज्ञः । अच्छः केवलः । अच्छपेयस्य श्रेष्ठत्वमाह–कल्पः प्रयोगः अच्छपेयः ॥ २० ॥

अधुना स्नेहस्य त्रिविधमात्रालक्षणमधिकृत्याह–

**द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ।**
**ह्रस्वमध्योत्तमा मात्रास्ताभ्यश्च ह्रसीयसीम् ।**
**कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ॥**

स०–द्वाभ्यां यामाभ्यां या स्नेहस्य मात्रा प्रयुक्ता जाठरानलवशाज्जरां याति सा तस्य ह्रस्वा मात्रा । चतुर्भिर्यामैर्या जीर्यति सा तस्य मध्यमा मात्रा । अष्टभिर्यामैर्या जीर्यति सोत्तमा मात्रा । क्रमाद्यथाक्रमं ते ह्रस्वमध्योत्तमा मात्रास्ताभ्यश्च तिसृभ्यो मात्राभ्यो ह्रसीयसीमतिशयेन ह्रस्वां कल्पयेत् । वैद्य इति शेषः । ह्रस्वमध्योत्तमा इति निर्देशे ङ्यापोरित्यादिना ह्रस्वः । ह्रस्वा मात्रा यामद्वयजरणलक्षणा ततोऽप्यर्वाक्कालेन या जरां याति सा ह्रसीयसीति । दोषादीन् दोषभेषजदेशकालबलशरीराऽऽहारसत्त्वसात्म्यप्रकृतीर्वीक्ष्याकलय्य प्राक् पूर्वमेवाऽज्ञातकोष्ठे पुरुष उत्तममात्राविषये ह्रसीयसीं कल्पयेत् । ततो ह्रस्वामनंतरं मध्यमामनंतरमुत्तमाम् । एवं मध्यममात्राविषये ह्रसीयसीं ह्रस्वमात्राविषयेऽपि ह्रसीयसीं प्राक्कल्पयेत् । अतिप्रत्यवायभयात् । एवकारोऽवधारणे । तुशब्दो यथोत्तरमिति क्रमनिर्देशार्थः । संग्रहेऽप्युक्तम् । अज्ञातकोष्ठे हि बह्वः कुर्याज्जीवितसंशयमिति इयं ह्रस्वेयं ह्रस्वा इयमनयोरतिशयेन ह्रस्वा ह्रसीयसीतीयसुन् स्थूलदूरेत्यादिना लोपः । अन्यैस्तु पलद्वयपलचतुष्टयपलषट्कसंख्यावच्छिन्ना मात्रा उक्ताः । न चैतद्युज्यते । यतो जठरानलशक्तिमनपेक्ष्य स्नेहमात्रा प्रयुज्यमानाऽनर्थायैव । अतोऽस्माभिः पलद्वयादिसंख्याऽवच्छिन्ना नोक्ता । मुनेरपि नैतन्मतम् । तद्ग्रन्थो हि । अहोरात्रमहः कृत्स्नमर्धाहं च प्रतीक्षते । प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रतीति ॥ २१ ॥

प०-यस्य चाच्छपेयस्य स्नेहोपयोगमात्रा ह्रस्वमध्योत्तमाख्या जठरानलजरणकालानुमीयमानाः प्रसाधयितुमिदमाह–तस्य च स्नेहस्य ह्रस्वमध्योत्तमा मात्रा जठरानलजरणकालानुमीयमानास्तिस्रो भवन्ति । द्वाभ्यां यामाभ्यां स्नेहमात्रा जीर्यते । सा ह्रस्वा-याश्चतुर्भिर्यामैर्जीर्यते । सा मध्यायास्त्वष्टभिर्यामैर्जीर्यति सोत्तमा यामोऽत्र प्रहरः । ताभ्यो मात्राभ्यो या ह्रसीयस्यतिशयेन ह्रस्वा साप्युत्तमा श्रेष्ठा । सर्वत्र प्रयोगार्हत्वाच्च शब्देनोत्तमेत्येतदेकवचनान्तम् । ह्रसीयस्या विशेषणार्थो मतोऽनुकृष्यते । ह्रसीयसी हि या मात्रा सा ह्रस्वमात्रा विषयेष्वप्रयुज्यमाना निरपाया तथा मध्यममात्राविषये तथोत्तममात्रा–

विषयेऽपि प्रयुज्यमाना निरपायैवात आह—प्रागेव प्रथममेव सर्वत्र ह्रसीयसीं मात्रां कल्पयेत् दोषदेशकालादीन् बुद्ध्वा वीक्ष्य।तेनैतदुक्तं भवति । दोषदूष्याद्यानुगुण्येन ह्रसीयसीमपि चतुर्थीं कल्पयेत् । यस्मादज्ञातकोष्ठे पुरुषे बहुस्नेहमुपर्युक्तोऽसंहतत्वात् कदाचिज्जीवितसंशयं कुर्यात् ।।२१ ।।

हे०—अच्छपेयस्य मात्रात्रयमाह—द्वाभ्यामिति । अच्छपेयस्य चतुर्थीं मात्रामाह—दोषान् वीक्ष्य ताभ्योऽपि ह्रसीयसीं यामपरिणामिनीं मात्रां परिकल्पयेत् । ह्रसीयसीमेव प्रथमं योजयेदित्याह—तत्र हेतुरुक्तः । संग्रहे तु—" अज्ञातकोष्ठे हि बहिः कुर्याज्जीवितसंशयम् " इति मात्राणां विषयश्चोक्तः । " तत्र दुर्बलमंदाग्निबालवृद्धसुखात्मकैः । अपथ्यरिक्तकोष्ठैश्च ज्वरातीसारकासिभिः ।। ह्रस्वा पेया सुखा सा हि परिहारेऽनुवर्तते । चिराच्च बल्या न रुजे व्यापन्नापि प्रकल्पते ।। मेहारुःपिटिकाकुष्ठवातशोणितपीडितैः । मध्यमा मृदुकोष्ठैश्च स्नेहनी स्यात्सुखेन सा ।। न बलक्षपणीमदंविभ्रंशाशुद्धयेऽप्यलम् । महामेदानलबलक्षुत्तृट्क्लेशसहिष्णुभिः ।। गुल्मोदावर्तवीसर्पसर्पदंशाभिपीडितैः । उन्मत्तैर्मूत्रकृच्छ्रैश्च महती शीघ्रमेव सा ।। सर्वमार्गानुसारेण जयेद्व्याधीन् सुयोजिता " इति ।। २१ ।।

अधुना शोधनशमनबृंहणभेदात्त्रिविधस्य स्नेहस्य कालमात्रालक्षणमधिकृत्याह—

**ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः२२**

स०—ह्यस्तनेऽन्न आहारे जीर्णे एव जीर्णमात्र एव न त्वन्नाभिलाषे सति शुद्धये शोधनार्थं बहुरुत्तमया मात्रया स्नेहोऽच्छः केवलः पेयत्वेन शस्यते। संजातबुभुक्षेण तु पीतो जाठरानलस्य दीप्तत्वाच्छोधनकार्यमकुर्वाणस्तद्योग्यतां चाऽनुत्पादयन्नाश्वेव जरामुपैति । षमनमपि बुभुक्षितस्य न संपद्यते कफाऽपचितेः पूर्वोक्ताद्धेतोः । तस्माद्युक्तमुक्तं ह्यस्तने जीर्णे एवान्न इति ।। २२ ।।

प०-इदानीं तिसृणां स्नेहमात्राणामुपयोगकालमसुलभयोगविषयं विभजन्नाह—ह्यस्तनेऽन्ने जीर्णमात्र एव तत्काल एव न जातायां बुभुक्षायां शोधनार्थं बहुस्नेहः पेयत्वेनेष्टः केवलः शस्यते । अत एवकारोऽत्रावधारणार्थः कृतः । ह्यस्तने जीर्णे एवान्ने इति प्रधाना स्नेहमात्रा पेयत्वेन शस्यते । न जातायां बुभुक्षायां यत आश्वेव जरां याति संशोधनमकुर्वन्नग्नेर्दीप्तत्वात् । तथाचोक्तम् ।:"रूक्षबह्वनिलक्रूरकोष्ठव्यायामशालिनाम् । दीप्ताग्नीनां च भैषज्यमविरच्यैव जीर्यते" इति ।। २२ ।।

हे०—शोधनस्याच्छपेयस्य कालं मात्रां चाह—जीर्ण ए[व]... जरणसमनंतरमेव क्षुधितत्वस्य शमनकालत्वात् । शुद्ध्यै शुद्ध्यर्थं शुध्यर्थत्वं च स्नेहनधारणेन साक्षात् । अतएवा तादर्थ्ये चतुर्थी।शमनबृंहणौ तु स्वयं साधनत्वाच्छमनबृंहण शब्दाभ्यामुक्तौ । स्वयं शोधनस्य तु स्नेहस्य विरेचनोक्तै मात्रा बहुरुत्तममात्रः । संग्रहे तु—" वाते सलवणं सर्पि पित्ते केवलमिष्यते । वैद्यो दद्याद्बहुकफे क्षारत्रिकटुकान्वितम् ।।" इति ।। २२ ।।

**शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते।।२३**

स०—शमनो यो रोगस्य शमनायोपयुज्यते स्ने[हः] स क्षुद्वतो जातबुभुक्षस्य शस्यते जातायां बुभुक्षायां जीर्णमात्र एवान्ने शोधन इव शमनः स्नेहो [य]त्र तत्रस्थं दोषं कुपितं सर्वशरीरव्यापित्वात् शमयति यदि पुनर्जीर्णमात्र एवान्ने स्नेहोऽयमबुभुक्षितस्[ये]वोपयुज्यते तदानीं स्रोतसां कफाद्युपलेपा[नु]वर्तनात्तत्संपृक्तोऽसौ स्नेहो न सर्वं शरीरं [व्या]प्नुवंश्च न दोषं शमयेत् । तस्मात्क्षुद्वत ए[व] शस्यते । स च मध्यममात्रयाऽनन्नः केवल एव भक्ष्यादिविचारणारहितः । अच्छ एव पेय इत्यर्थ अत्र चोत्तमया मात्रया स्नेहपानादिनानंतरं पथ्यं का[र्यं] पुनः स्नेहप्रयोगः पुनरन्यस्मिन्नहनि पथ्यं कार्य[ं] मध्यममात्रया स्नेहपाने तु लघुभोजिनो न याममात्रेऽ[न्ना]कांक्षा भवति । तदा च स्नेहोपयोगे रात्र्यारंभे रात्रिमार्धे गते वा रसकौदनप्रायं भोजनं भोज्यं मात्रै[व] ग्रंथकारो हि शमने स्वल्पभोजनमेवाऽनुजज्ञे । व[क्ष्य]ति । उपचारस्तु शमने कार्यः स्नेहे विरिक्तवर्दि[ति] सुश्रुते चोक्तम् । परिषिच्याऽद्भिरुष्णाभिर्जीर्णस्नेहं [तु] परम् । यवागूं पाययेदुष्णामक्लिन्नामल्पतंडुलाम् । यूषो रसो वा स्यादक्तः सौरभायुतः । कृतो वा ह्लपसर्पिष्को विलेपी वा विधीयत इति ।। २३ ।।

प०—इदानीं शमनस्नेहनमाह—शमनः स्नेहः क्षु[द्वतो] बुभुक्षितस्य पुंसः शस्यते । नच मध्यमात्रो म

मया मात्रया चतुर्भिर्यामैर्जीर्यमाणयाऽनन्नोऽन्नर-हितः केवल एव शस्यते । अन्नग्रहणमुपलक्षणा-र्थम् नान्येन किञ्चिन्मिश्रित इति यावत् ॥ २३ ॥

हे०—शमनस्याच्छपेयस्य कालं मात्रां चाह—अन-न्नोऽन्न संबंधरहितः । यावत्स्नेहो जीर्यति तावन्न भोक्तव्य-मित्यर्थः ॥ २३ ॥

**बृंहणो रसमद्याद्यैः सभक्तोऽल्पः ॥ २४ ॥**

स०—बृंहणः स्नेहो रसमद्याद्यैः सह शस्यते । रस इत्यविशेषोक्तौ ज्ञेयो मांसभवो रस इति तत्रातरोक्त्या रसशब्देन मांसरसोऽत्र बोद्धव्यः । आद्यशब्देन क्षीर-दध्यादेर्द्रवरूपस्य ग्रहणम् । तथा सह भक्तेनौदनेनाऽसौ वर्तते इति सभक्तः शस्यते । एष च स्नेहो ह्रसीयसी-तोऽपि मात्रातोऽल्पः ॥ २४ ॥

प०—बृंहणं स्नेहमाह—बृंहणः स्नेहो रसमद्याद्यैः सह शस्यते । रसो मांसरसः । आदिग्रहणाद्भक्ष्यसू-पादीनां परिग्रहः । स च भक्तः सहभक्तेनान्नेन वर्तते । यद्यपि चात्रादिग्रहणादन्नं मध्येऽन्तर्भूतं तथाप्युत्तरार्धं पुनः सभक्त इति निर्दि-ष्टम् । यथा यौ स्नेहावेतौ संशोधनशमनसंज्ञकौ प्राक् निर्दिष्टौ न तौ सभुक्तावुभावपि अन्नकालस्या-प्राशितस्यापि कर्तुं नावसरः किमुत दिवा शमन-स्यापि स्नेहस्य मध्यमात्रोपयोजनात् । कृत्स्नेन दिवसेन जरणात् सायंप्रातर्निरूपितयोरन्नकालयोः कर्तुं नावसरः । तस्मादन्नतः सभक्तो भक्तशब्देना-न्नकाल उपलक्षित इत्येषोऽर्थः । स चाल्पोपचारे-णावचारितो मात्रयाऽल्पो हितः॥ २४ ॥

हे०—बृंहणस्य कालं मात्रां चाह—रसमद्याद्यैर्यथा-चि यथासात्म्यं मिश्रितः एष विचारणाख्यः सभक्तः । भोजनस्यादौ, मध्ये, अंते वा पीतः अल्पोऽल्पमात्रः॥२४

**हितः स च ।**
**बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ॥**
**स्त्रीस्नेहनित्यमंदाग्निसुखितक्लेशभीरुषु ।**
**मृदुकोष्ठाऽल्पदोषेषु काले चोष्णे कृशेषु च २५**

स०—स च स्नेहो बालादिषु हितः । बालादीना-मितरेतरद्वंद्वः । पिपासार्तास्तृट्पीडिताः । स्नेहद्विषो ये स्वभावेनैव स्नेहं द्विषंति । स्त्रीस्नेहयोर्नित्यशब्देन संबंधः । स्त्रीनित्येषु स्नेहनित्येषु चेत्यर्थः । काले चोष्णे ग्रीष्मादौ कृशेषु नरेषु च हितः ॥ २५ ॥

प०—स च बालवृद्धादिषु पिपासार्तास्तृषाक्रान्ताः स्नेहद्विषो ये स्नेहं द्विषन्ति स्नेहे येषामप्रीति मद्यशी-लिनो मद्यनित्याः स्नेहनित्याश्च ये स्त्रियं स्नेहं च नित्यमभ्यस्यन्ति । मन्दाग्निर्मन्दवह्निः । सुखिताः सुकुमाराः निर्दुःखाः । क्लेशे भीर्भयं येषान्ते क्लेश-भीरवः।मृदुकोष्ठाः। सुखविरेच्याः अल्पदोषा अनुत्क्लि-ष्टधातवः । उष्णकालो ग्रीष्माख्यः । कृशाः क्षीण-धातवः । तेषु सर्वेषु बृंहणः स्नेहो हितः ॥२५॥

हे०—बृंहणस्य विषयमाह—स्नेहद्विट् स्नेहारोचकी, स्नेहनित्यः स्नेहशीली, सुखितः सुखी ॥ २५ ॥

स चोपयुक्तः किं करोतीत्याह—

**प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ।**
**व्याधीञ्जयेद्बलं कुर्यादंगानां च यथाक्रमम् २६**

स०—प्राक् च मध्यं चोत्तरं च तत् प्राङ्मध्यो-त्तरं भक्तं यस्मिन्स्नेहे स प्राङ्मध्योत्तरभक्तः । तेनाऽय-मर्थः। भक्तस्याऽऽदावुपयुक्तोऽसौ स्नेहोऽधोदेहजान् व्या-धीन् जयेत् । मध्य उपयुक्तो मध्यदेहजान् भक्तस्यो-पर्युपयुक्त ऊर्ध्वदेहजानिति यथाक्रमम् । तथाऽगानां शरीरावयवानामधोमध्योर्ध्वसंज्ञकानां बलं कुर्यात् । इदं चोक्तम् । मारुतेऽभ्यधिके सर्पिः सदा सलवणं हितम् । केवलं चाधिके पित्ते कफे सत्र्यूषणं तथेति ॥ २६ ॥

प०—असावल्पः स्नेहो बृंहणाख्यो भक्तस्यान्नस्य प्रागुपयुक्तोऽधोदेहजान् व्याधीन् जयेत् । मध्य उप-युक्तो मध्यजान् भक्तस्योपर्युक्तः ऊर्ध्वजान् व्याधीन् जयेत् । यथाक्रमं च क्रमानतिक्रमेणाधोमध्योर्ध्वदेह-संज्ञकानां बलं कुर्यात्। न तस्य भक्तस्य प्रागुपयुक्तोऽ-धोदेहजानामङ्गावयवानां कट्यादीनां बलं कुर्यात् । मध्ये भक्तस्योपर्युक्तः शरीरमध्यसंज्ञकानां वक्षउदरा-दीनां बलं कुर्यात् । भक्तस्योपरिप्रयुक्त ऊर्ध्वजत्रुसं-ज्ञकानां शिरःप्रभृतीनां बलं कुर्यात् ॥ २६ ॥

हे०—बृंहणस्यैव प्राग्भक्तादिभेदेन विषयमाह—प्राङ्म-ध्येति ॥ २६ ॥

**वार्युष्णमच्छेऽनुपिबेत् स्नेहे तत्सुखपक्तये ।**
**आस्योपलेपशुद्ध्यै च तौवरारुष्करे न तु ॥**
**जीर्णाऽजीर्णविशंकायां पुनरुष्णोदकं पिबेत् ।**
**तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिः २७**

स०—अच्छे पेये स्नेह उत्तममध्यमह्रस्वमात्रोपयोजितेऽनु पश्चादुष्णं वारि पिबेत् । किमर्थम् । तत्सुखपक्तये तस्य स्नेहस्य सुखपक्तिः सुखेन पाकस्तदर्थम् । तथाऽऽस्योपलेपशुद्ध्यै स्नेहलिप्तस्य मुखस्य शुद्धिनिमित्तम् । तुवरतैले भल्लातकतैले वाऽच्छे पेयेऽप्युष्णोदकं न पिबेत् । तयोरत्युष्णवीर्यत्वादिति भावः । तुवरस्याऽयं विकारः स्नेहस्तौवरस्तस्य विकार इत्यण् । एवमारुष्करे च । चिरपीते च स्नेहे जीर्णाऽजीर्णं प्रति संशये सति भूयोऽप्युष्णं जलं पिबेत् । अनुपानापेक्षं पुनर्ग्रहणं न वीप्सार्थम् । तेनोष्णोदकपानेनोद्गारस्य विशुद्धिर्भवेत् । ततश्च जीर्णाऽजीर्णशंकातोऽधिकमंगलाघवं रुचिश्च स्नेहस्य पातुः स्यात् । संग्रहेऽप्यन्यदप्युक्तम् । यथा । ततो गुरुप्रावरणो निवाते शयने स्थितः । जरणांतं प्रतीक्षेत तृष्यन्नुष्णाऽल्पवारिपः । शिरोरुग्भ्रमनिष्ठीवमूर्छादाहाऽरुचिक्लमैः । जानीयाद्भेषजं जीर्यज्जीर्णं तच्छांतिलाघवात् । अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिरिति ॥ २७ ॥

प०—इदानीं स्नेहस्यानुपानविधिं दर्शयन्नाह—स्नेहोपलेपतास्ये मुखे यस्य तदानीं जायते तच्छुद्ध्यर्थं किं सर्वस्याच्छस्य रसस्य वार्युष्णमनुपिबेत् उतं कस्यचिदुष्णं वारिपेयमत आह—न पिबेदित्यर्थः । तुवरस्यायं विकारः स्नेहस्तौवरः तस्मिन्न पिबेत् । अरुष्करस्य भल्लातकस्य विकारः स्नेह आरुष्करः तस्मिन्न पिबेत् । अत्युष्णवीर्यत्वात्तयोः । उष्णो ह्युष्णैरिति विरुध्यत इति वचनात्—अच्छे स्नेह उपयुक्ते जीर्णाजीर्णविशङ्कायां परिणतसन्देहे परिणतो वा स्नेह उपयुक्त उत नेत्येवंविधायां शङ्कायां पुनरजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् । तेनोष्णोदकेनोपयुक्तेन सता तस्योद्गारविशुद्धिः स्याद्भवेत् । ततश्च तस्योद्गारविशुद्धौ शरीरस्य लघुता लघुत्वं स्याद्भवेत् । तथा रुचिरन्नेऽभिलाषः स्यात् ॥ २७ ॥

हे०—अच्छपेयस्यानुपानमाह—**वार्युष्णमिति** । तुवरभल्लातकस्नेहयोरुष्णोपचारं निषेधति । उक्तं हि संग्रहे—" उष्णोपचारः स्नेहे स्यादुष्णोऽत्युष्णैर्विरुध्यते " इति । यथाकालमजीर्यति स्नेहे पुनरुष्णोदकपानमाह—**जीर्णाजीर्णमिति** । तस्य फलमाह—**तेनोद्गारविशुद्धिरिति** । जीर्णाजीर्णलक्षणमुक्तं संग्रहे—" ततो गुरुप्रावरणो निवाते शयने स्थितः । जरणांतं प्रतीक्षेत तृष्यन्नुष्णाल्पवारिपः । शिरोरुग्भ्रमनिष्ठीवमूर्छासादारुचिक्लमैः । जानीयाद्भेषजं जीर्यज्जीर्णं तद्धन्ति लाघवात् ॥ अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिः " इति ॥ २७ ॥

**भोज्योऽन्नं मात्रया पास्यन्श्वः पिबन् पीतवान्**
**द्रवोष्णमनभिष्यन्दि नाऽतिस्निग्धमसंकरम्**
**उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः ।**
**न वेगरोधी व्यायामक्रोधशोकहिमातपान् ॥**
**प्रवातयानयानाध्वभाष्याभ्यासनसंस्थितीः ।**
**नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ॥**
**यान्यहानि पिबेत्तानि तावंत्यन्यान्यपि त्यजेत्**
**सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः २८**

स०—भोज्यो भोजयितव्यो नरः । किं सः अन्नम् । कीदृशम् । द्रवोष्णम् । अत्र चोभयः समासः । द्रवेण मुद्गयूषादिना सहोष्णमन्नं द्रवोष्णं तथा केवलं द्रवं च तदुष्णं च द्रवोष्णं पेयादि केवलमेवेति । तथाऽनभिष्यंदि न कफकृत् । तथा नाऽतिस्निग्धमर्थादीषत्स्निग्धम् । तथाऽसंकरमसंकरं मपथ्येनामिश्रितमित्यर्थः । कः पुरुषः किं कुर्वन्नीदृशं मात्रया भोजयितव्य इत्याह । श्वः स्नेहं पास्यन्पातुकामः सन् । तथा तस्मिन्नेव दिने स्नेहं पिबन् । तथा पीतवानपि यः स्नेहम् । अपिः समुच्चये । ननु मात्राशी सर्वदा काल स्यादिति प्रागुक्तमेव तत्किमिह पुनर्मात्राग्रहणे ब्रूमः । मात्राशब्दस्तत्र प्रमाणार्थः इह स्वल्पार्थः तेनायमर्थः । यावदन्नमस्य सम्यग्यथाकालं परिणमति तावतोऽप्यन्नादनेन स्वल्पं भोज्यमिति । तथा स्नेहस्य पाता उष्णोदकोपचारी स्यात् । उष्णोदकमुपचरितुं सेवितुं शीलमस्य स एवम् । तथा ब्रह्मचारी ललनासंगरहितः । क्षपाशयः इत्यधिकरणे शेतेरिति क्षपाशय इत्यनेन दिवास्वप्नस्य रात्रिजागरस्य च नि-

स्नेहं पिबति यावंत्यहानि तावंत्यन्यान्यपि स्नेहपानरहितानि व्यायामादींस्त्यजेत् । सर्वकर्मसु वमनविरेचनादिष्वयमुष्णोदकोपचारीत्यादिक्रमो विधिरित्यर्थः । व्याधिक्षीणेषु च प्रायोऽयमेव विधिः । अत्राऽप्यतीसारादिष्वहःस्वप्नादीनामनुज्ञानात्प्रायोग्रहणम् ॥ २८ ॥

प०–भोज्यो भोजयितव्यः पुरुषः किं तदन्नं किंभूतं द्रवमुष्णं चानभिष्यन्दि नच श्लेष्मकारि नातिस्निग्धमीषत् स्निग्धमसङ्करमसंकीर्णं नापथ्यमिश्रम् । अथवा सङ्करणम् । नानाजातीयानुभावात्मकः पुरुषः किं कुर्वन् श्वोऽन्यस्मिन्नहनि स्नेहं पास्यन् तथा तस्मिन्नेवाहनि स्नेहं पिबन्पुमान् उष्णोदकोपचारी स्यात् । उपचरणमुपचारः । उष्णोदकेनोपचारः शीलं यस्य स उष्णोदकोपचारी ब्रह्मचारी स्त्रीषु सङ्गविनिवृत्तिशीलः । क्षपासु रात्रिषु शयीत इति क्षपाशयः। वेगान् न रुणद्धि तच्छीलो न वेगरोधी।व्यायाम आदि र्येषां तानि व्यायामादीनि धूमरजःपर्यन्तानि वर्जयेत्। तत्र व्यायामः शरीरायासजननं कर्म नैकविधम्। क्रोधः कोपः। शोको दुःखरूपचिन्ता । हिमं शीतमातपो घर्मः। प्रकर्षेण वातो यस्मिन् देशे स प्रवातः।यानैरश्वादिभिर्यानं गमनम् । अध्वा पादाभ्यांमार्गगमनम्। भाष्यमध्ययनं ग्रन्थपाठाभ्यसनम्। अभ्यसने संस्थितिमेकत्र चिरमवस्थानम्।उपधीयते उपधानं शय्यायां शिरस आधारभूतं यत्तदुच्यते तत्र नीचात्युन्नतमधरोन्नतं त्यजेत्। अहःस्वप्नो दिवास्वापः।धूमः प्रसिद्धः। रजो धूलिः। तत्सर्वं स्नेहे क्रियमाणे यान्यहानि यावन्ति दिनानि पुमान् स्नेहं पिबेत् तानि तावन्त्येवाहानि अन्यानि तत्सर्वं त्यजेत् । अयं क्रमोऽनन्तरोक्त उष्णोदकोपचारादिसर्वकर्मसु स्नेहस्वेदवमनादिष्वग्निक्षारपर्यन्तेषु तथा व्याधिक्षीणेषु कार्य इति सम्बन्धः। न केवलं स्नेहविषय एव ॥ २८ ॥

हे०–स्नेहनप्रयोगे भोजननियममाह-भोज्य इति । भोज्यो भोजयितव्यः मात्रया अल्पमानेन श्वः पास्यन् स्नेहपानात्पूर्वदिने पिबन् यावंति दिनानि स्नेहं पिबति तावंति पीतवान् समाप्ते स्नेहपाने तावंत्येव दिनानि । असंकरं नानाजातीयभक्ष्यादिसंकररहितं, स्नेहनप्रयोगे विहारनियममाह--उष्णोदकोपचारीति । उपचारः स्नानपानादिः व्यायामादींस्त्यजेत् । यानमश्वादिना गमनं,संस्थितिरूर्ध्वतयाऽवस्थानं, नीचमत्युच्चं वा यदुपधानमुच्छीर्षकम् । स्नेहनोक्तमुष्णोपचारादिनियमं स्वेदनादिषु व्याधिक्षीणेषु चातिदिशति--सर्वकर्मस्विति ॥ २८ ॥

**उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् २९**

स०–तुर्व्यतिरेके । शमने स्नेहे तूपयुक्ते उपचारो भोजनादिविधिर्विरिक्तवत्कार्यः । यथा विरिक्ते पेयादिक्रमस्तथाऽस्मिन्नपीत्यर्थः ॥ २९ ॥

प०–शमने स्नेहयुक्ते उपचारो भोजनादिक्रमो विरिक्तस्यैव कार्यः। विरिक्तस्यैव यदुक्तं पेयादिकं तत्सर्वं शमने स्नेहे क्रियमाणे जीर्णस्नेहस्य पुंसः कार्यः

हे०–शमने स्नेहे विरिक्तोपचारमतिदिशति--उपच इति । विरिक्तवत्पेयादिक्रमेण। संग्रहे तु स्नेहपानस्य पूगमुक्तं, "स्नेहस्य पानात्पूर्वं च दातव्यं मृदुभेषजम् उत्तेजनं हुताशस्य कोष्ठलाघवकारि च " इति ॥ २९

**त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् । सम्यक्स्निग्धोऽथवा यावदतः सात्मीभवेत्परम्**

स०–मृदौ कोष्ठे सति पुरुषस्त्रिदिनमच्छं स्नेहं पिबेत् । क्रूरकोष्ठे सप्ताहम् । मध्यकोष्ठस्तु षड्रात्रम् मध्यकोष्ठस्त्वत एव लक्षणादधिगम्यते । मृदुकोष्ठे स्नेहगो दोषः संग्रहे कथितः । यथा । चत्वार्यहानि पंच वा स्नेहं पिबेदिति । यदि च त्र्यहेण सम्यक्स्निग्धलक्षणं न स्यात्ततश्चतुष्पंचरात्रमपि स्नेहं पिबेत् मध्यकोष्ठस्तु षड्रात्रं पिबेदित्याह । सम्यक्स्निग्धोऽथ यावदित्यादि । अथवा नैष नियमः सम्यक्स्निग्धलक्षणोत्पत्तिरेव नियमोऽतः सप्ताहादप्यूर्ध्वमच्छस्नेहः पेयः यावत्स्निग्धलक्षणं स्यात् । अतः परं स्नेहः सात्म्यं भवेत् सात्मीभूते च स्नेहे यो दोषः स संग्रहे कथितः यथा । सात्मीभूतो हि कुरुते न मलानामुदीरणम् अतियोगेन वा व्याधीन् यथांऽभो ह्यतियोजनादिति यदि तु सप्ताहेनाऽपि स्नेहलक्षणं नोत्पद्यते तत् दिनमेकं विश्रमय्य पुनः स्नेहो योज्य इति सद्वैद्याः ॥

प०–मृदौ कोष्ठे नरः स्नेहमच्छं त्र्यहं त्रीणि दिनानि पिबेत्। क्रूरे कोष्ठे स्नेहमच्छं सप्तदिनं सप्तरात्रं पिबेत्। अथवा नैष नियमस्तयोः किंतर्हि सम्यक्स्निग्

यावत् पुमान् भवेत् तावत् पिबेत्। सम्यक्स्निग्धस्य लक्षणोत्पत्तिरेव नियमः। यावता कालेन सम्यक्स्निग्धत्वलक्षणानि जायन्ते तावंतं कालं पिबेदित्यर्थः। अतः परं सम्यक्स्निग्धलक्षणोत्पत्तेरनन्तरमच्छं स्नेहः प्रयुक्तः सात्मीभवेन्न शोधनकार्यं करोतीत्यर्थः॥३०॥

हे०—अच्छपेयस्य पानावधिमाह--मृदौ कोष्ठे त्रिदिनं, क्रूरे सप्तदिनं यावद्वा स्निग्धलक्षणोत्पत्तिर्मृदौ क्रूरे च। अवध्यतिक्रमे दोषमाह--सात्मीभूतस्य दोषत्वमुक्तं संग्रहे--"सात्मीभूतो हि कुरुते न मलानामुदीरणम्। अतियोगेन वा व्याधीन् यथांब्वोघोति योजनात्॥ विहत्य सेतुं मृत्कोष्ठान् स्रवति क्षपयन्मृदम्॥ स्नेहोऽप्यग्निं तथा हत्वा स्रवति क्षपयन्तनुम्" इति॥ ३०॥

**वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम्।**
**स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्ययः।**
**अतिस्निग्धे तु पांडुत्वं घ्राणवक्त्रगुदस्रवाः ३१॥**

स०—सम्यक्स्निग्धे पुरुषे तु वातानुलोम्यादि क्लमांतं लक्षणं भवति। वर्चः शकृत् स्निग्धं तथाऽसंहतं शिथिलम्। रूक्षेऽस्निग्धे विपर्ययो वैपरीत्यम्। अतिस्निग्धे तु स्नेहस्याऽतियोजनात्पुनः पाण्डुत्वादयो भवंति। स्रवशब्दस्य घ्राणादिभिः प्रत्येकं संबंधः॥ ३१॥

प०—सम्यक्स्निग्धे पुंसि वातस्यानुलोम्यमनुलोमता भवति। तथा दीप्तोऽग्निः प्रवृद्धो वन्हिर्भवेत्। तथा वर्चः पुरीषं स्निग्धं स्यान्नतु रूक्षम्। तथाऽसंहतं शिथिलप्रायं तथा तस्य स्नेहोपसेविनः स्नेहोद्वेगः स्नेहविषये प्रद्वेषः स्यात्। तथा क्लमो ग्लानिः। तत्सर्वं सम्यक्स्निग्धलक्षणं भवति। रूक्षे स्निग्धः विपर्ययः विपरीतता। अस्मादुक्तलक्षणाद्विपर्यासः भवेत्तेन वातस्याननुलोमता मन्दाग्निर्वर्चो रूक्षं संहतं च स्नेहाभिलाषो भवेत्। ग्लानिश्च न स्यात्। अतिस्निग्धे पुंसि सति पाण्डुत्वं घ्राणस्रावो वक्त्रस्रावो गुदस्रावश्च भवति॥ ३१॥

हे०—सम्यक्स्निग्धलक्षणमाह--मृदुस्निग्धांगता लाघवं विमलेंद्रियता चेत्यधिकं संग्रहे। अस्निग्धलक्षणमाह--रूक्ष इति। विपर्ययो वातप्रातिलोम्यादिः। अतिस्निग्धलक्षणमाह--अतिस्निग्ध इति। पांडुत्वं पांडुरोगः। संग्रहे तु "गुददाहारुचिच्छर्दिमूर्च्छातृष्णाप्रवाहिकाः। शुष्कोद्गारभ्रमश्वासकासाः स्नेहातिसेवनात्"॥ ३१॥

**अमात्रयाऽहितो काले मिथ्याहारविहारतः।**
**स्नेहः करोति शोफार्शस्तन्द्रास्तंभविसंज्ञताः।**
**कंडूकुष्ठज्वरोत्क्लेशशूलाऽऽनाहभ्रमादिकान् ३२**

स०—अमात्रः पीतः स्नेहः सर्पिरादिः शोफादीन् करोति। आदिशब्देन तु बलक्षयजाड्यवाग्ग्रहादयः संग्रहोक्ता गृह्यंते। अहितो यो यस्य प्रतिषिद्धः स्नेहः। तथाऽकाले ग्रीष्मादौ पूर्वं प्रतिषिद्धे। तथा मिथ्याऽऽहारतो द्रवोष्णमित्यादिविपर्ययेण। तथा मिथ्याविहारत उष्णोदकोपचारी स्यादित्यादिविपर्ययेण ३२॥

प०—सर्वश्च स्नेहोऽमात्रयाऽहितो यस्याः पथ्य-स्तथाऽकालप्रयुक्तस्तथा मिथ्याहारविहाराभ्यां यत्नोपयुक्तः स शोफादीन् करोति। मात्राःत्रिस्रः हीनमध्योत्तमाः। ताभिर्दोषदूष्याद्यपेक्षयैव प्रयुक्तः सोऽमात्रायुक्तोऽहितः। यथा श्लेष्मविकारे घृतं पथ्यं विकारे तैलम्। अकाले प्रयोगस्य। यथा हेमन्ते निशि ग्रीष्मे दिवा तैलमाहारे भोज्यान्नम्। मात्रयास्य मितयनेनोक्तः।तस्या मिथ्यावैपरीत्येन यदोपयोगं करोति उष्णोदकोपचारी स्यादित्यादिविहारस्तस्य मिथ्याकरणमन्यथासेवा॥ ३२॥

हे०—मिथ्यास्निग्धलक्षणमाह---अमात्रयेति। अहितोऽनुचितः। संग्रहे तु--"जठरेंद्रियदौर्बल्यजाड्यामस्तंभवाग्ग्रहान्। तांस्तान्स्वदोषहेतूत्थान् पांड्वादींश्चानियोगजान्"इति॥ ३२॥

**क्षुत्तृष्णोल्लिखनस्वेदरूक्षपानान्नभेषजम्।**
**तक्रारिष्टं खलोद्दालयवश्यामाककोद्रवाः॥**
**पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु।**
**यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम् ३३॥**

स०—स्नेहव्यापदि स्नेहविधिविभ्रंशे सति क्षुत्तृष्णादि साधनं चिकित्सा। क्षुत्तृष्णानिग्रहौ क्षुत्तृष्णाशब्देनाऽत्रोक्तौ। उल्लेखनं वमनम्। रूक्षशब्दस्य पानादिभिस्त्रिभिर्योगः। तक्राणि चारिष्टश्चेत्येवं समासः। खलो व्यंजनविशेषः प्रागुक्तः। उद्दालः शालिविशेषः। यथास्वं दोषानुगुण्येन प्रतिरोगं यद्यस्मिन् रोगे स्वे स्वेऽध्याय उक्तं तदपि साधनम्॥३३॥

प०—स्नेहव्यापदि सत्यां स्नेहविभ्रंशे रोगोद्भूतौ क्षुत्तृष्णादिसाधनं चिकित्सितम् । अत्र क्षुद् बुभुक्षा भोजननिवृत्तिः । तृष्णा पिपासा पाननिग्रहः । उल्लेखनं वमनं, रूक्षं पानं, रूक्षमन्नं, रूक्षं भेषजं च । तक्रमुदश्वित् । अरिष्टं मद्यविशेषः । मूलैः फलैश्च कृतो व्यञ्जनविशेषः । खल उद्दालः शालिविशेषः । श्यामाकस्तृणधान्यविशेषः । कोद्रवाः कोरदूष्याः । पिप्पल्यादीनि द्रव्यविशेषाणि पृथक् प्रयोक्तव्यानि । रोगं रोगं प्रति प्रतिरोगं यथास्वं भेषजं रोगस्यात्मीयं तत्तत्र देयम् ॥ ३३ ॥

हे०—अतिस्निग्धमिथ्यास्निग्धयोश्चिकित्सितमाह--उल्लेखनं वमनं, रूक्षं पानादिश्रयम्, उद्दालो वनकोद्रवः, प्रतिरोगं यथास्वं च यस्मिन् रोगे यदुक्तं तदपि कुर्यात् ३३

स्नेहव्यापत्साधनस्य विरूक्षणस्वभावत्वात्प्रसंगेन विरूक्षणस्य सम्यक्कृताऽतिकृतलक्षणमाह—

**विरूक्षणे लंघनवत्कृताऽतिकृतलक्षणम् ॥ ३४ ॥**

स०—विरूक्षणे सम्यगुत्पन्ने तथाऽत्यर्थोत्पन्ने च लंघनवत् कृतातिकृतलक्षणं ज्ञेयम् । कृतं चाऽतिकृतं च कृतातिकृतं तयोर्लक्षणं कृतातिकृतलक्षणम् । कृतशब्देन सम्यक्कृतमुच्यते। विरूक्षणाऽतियोगलक्षणं तु स्नेहाऽतियोगलक्षणेनैवोक्तम् । तत्र सम्यक्कृतस्य लंघनस्य यल्लक्षणं विमलेंद्रियतादि तदेव विरूक्षणे कृते लक्षणं बोध्यम् । तथाऽतिकृते विरूक्षणेऽतिलंघितस्य लक्षणं कार्श्यादिकं वेद्यम् ॥ ३४ ॥

प०—विरूक्षणे लङ्घने च कृतातिकृतलक्षणं कृतं चाऽतिकृतं च तत् कृतातिकृतं तच्च लक्षणं कृतातिकृतलक्षणम् । विरूक्षणे सम्यगुत्पन्ने तथात्यर्थोत्पन्ने च लङ्घनवल्लक्षणं बोद्धव्यम् । यथा सम्यक्कृतस्य लङ्घनस्य यल्लक्षणं तथातिलङ्घनस्य यल्लक्षणं तत्सम्यक् विचक्षणैस्तथातिविरूक्षणे कृते बोद्धव्यम् ॥ ३४ ॥

हे०—स्नेहव्यापद्युक्तविरूक्षणस्य सम्यग्योगातियोगलक्षणमाह--लंघनवत्सम्यग्योगे विमलेंद्रियतेत्यादि, अतियोगे अतिकार्श्यमित्यादि । कृतं सम्यग्योगः, अतिकृतमतियोगः संग्रहे तु--" स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः । स्नेहमाशु जरां नीत्वा पुनरोजोऽन्वितश्चरन् ॥ उदीरयेत्तोपसर्गां पिपासामस्य चाधिकाम् । सार्द्रस्त्यजेद्यद्युदकं न पिबेदाशु शीतलम् ॥ शीतसेकावगाहान्वा तत्तृष्णापीडितो भजेत् ॥ स्नेहाग्निना दह्यमानः स्वविषेणेव पन्नगः ॥ अजीर्णबलवत्यां तु शीतैर्दिह्याच्छिरामुखम् । छर्दयेत्तदशांती च पीत्वा शीतोदकं पुनः ॥ रूक्षान्नमुल्लिखेद्भुक्त्वा तादृश्यां तु कफानिले। सप्रदोषश्च निःशेषं स्नेहमुष्णांबुनोद्वमन् ॥ ततो दोषादिबलतः पूर्वोक्तं च विधिं श्रयेत् । न सर्पिः केवलं पित्ते देयं सामे विशेषतः ॥ सर्वं ह्यनुरजेद्देहं हत्वा संज्ञां च मारयेत्'' इति ॥ ३४ ॥

**स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत् ।**
**स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेकं वमनं पुनः ॥**
**एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ३५॥**

स०—स्निग्धश्चाऽसौ द्रवोष्णधन्वोत्थरसश्च तं भुंक्ते यः स स्निग्धद्रवोष्णधन्वोत्थरसभुक् धन्वोत्थरसो जांगलदेशमांससमुद्भूतो रसः । मांसरसस्य स्वभावत एव स्निग्धद्रवत्वात्स्निग्धद्रवग्रहणमधिकयोगायेति वेद्यम् । उष्णमुभयथा वीर्यतोऽग्निसंयोगाच्च । एवंभूतः पुरुषः पूर्वं स्निग्धोऽनंतरं स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् दिनत्रयं स्थितः सन् विरेकं कुर्यात् । वमनं पुनरिति । यदा तु स्नेहादनंतरं वमनमेवोपयुंक्ते तदैकाहमनेनैव प्रकारेण स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् स्थितोऽन्यच्च दिनं द्वितीयमहः कफमुत्क्लेश्य स्थानात् प्रच्याव्याऽवस्थितो वमनं कुर्यात् । केनोत्क्लेश्य तत्करैः कफकरणहेतुभिर्माषक्षीरमत्स्यगुडादिभिः । तत्करैरित्यादि कृञो हेत्वादिना हेतौ टः ॥ ३५ ॥

प०—स्निग्धश्चासौ द्रवोष्णो धन्वोत्थो रसस्तं स्निग्धद्रवोष्णजाङ्गलदेशमांससमुद्भूतं रसं यो भुङ्क्ते स स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् एकाहं स्थित आसीनः त्र्यहं त्रीणि दिनानि स्निग्धसमनन्तरं चतुर्थेऽह्नि वमनं विरेकं च कुर्यात् आचरेत् । पूर्वं स्निग्धोऽनन्तरं स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् एकाहः स्थितोऽन्यच्च दिनं द्वितीयमहः कफमुत्क्लेश्य प्रच्याव्य कफस्य समुच्छ्रयं कृत्वा । केन तत्करैः तत्फलं कुर्वन्तीति तत्कराः कफकरैः क्षीरमांसमत्स्यादिभिः ॥ ३५ ॥

हे०-स्निग्धस्य समनंतरमेव स्वेदः कार्य इत्याह— स्निग्धः पुरुषोऽनंतरमेव स्वेदमाचरेत् । स्वेदे च क्रियमाणे स्निग्धद्रवोष्णमन्नं जांगलमांसरसं च भुंजीत । स्निग्धस्य त्रिदिनं विश्रांतस्य विरेचनं कार्यमित्याह--त्र्यहं स्थितः कुर्याद्विरेकमिति । स्निग्धस्य त्र्यहं विश्रांतस्य वमनं कार्यमित्याह--स्निग्ध एकाहं विश्रांतो द्वितीये दिने कफकरैः कफमुत्क्लेश्य तृतीये वमनं कुर्यात् ॥ ३५ ॥

**मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।**
**स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ।**
**संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ॥ ३६ ॥**

स०—मांसलत्वादियुक्ताः पुरुषा ये शोध्यत्वेन स्नेहयितुमभीष्टास्तान् पूर्वं प्रथमं रूक्षयेत् । ततो रूक्षयित्वानंतरं संस्नेह्य शोधयेत् । किमेवं स्यादित्याह । एवं स्नेहव्यापन्न जायते । मांसला उपचितमांसाः । मेदुरा मेदस्विनः ॥ ३६ ॥

प०—मांसलाः पीवराः । मेदुराः मेदसा परिमृष्टाः । भूरिश्लेष्माणो बहुकफाः । विषमाग्नयः विषमानलाः । स्नेहोचिताः स्नेहाभ्यासनित्याः । ये च स्नेह्याः स्नेहनीयास्तान् स्नेहनीयान् पूर्वं प्रथममादौ रूक्षणद्रव्यै रूक्षयेत् । ततोऽनन्तरं रूक्षयित्वा पश्चात् संस्नेह्य शोधयेत् । एवं सत्येषां मांसलादीनां स्नेहव्यापन्न जायते ॥ ३६ ॥

हे०—मांसलादीनां विरूक्षणपूर्वकं स्नेहनं कार्यमित्याह— स्नेहोचिताः स्नेहसात्म्याः ॥ ३६ ॥

**अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ३७॥**

स०—न केवलं स्नेहव्यापदेवं न स्यात् । यावत् स्नेहोऽसात्म्यतां गतः सन् मलान् वातादीन् पुरीषादींश्चेरयितुं प्रेरयितुमलं पर्याप्तः ॥ ३७ ॥

प०—तथा रूक्षाणां मांसलादीनां सतां स्नेहः प्रयुक्तोऽसात्म्यत्वान्मलानीरयितुं शोधयितुमलं पर्याप्तो भवति ॥ ३७ ॥

हे०—पूर्वस्नेहापनयने युक्तिमाह--स्निग्धस्य स्नेहसात्म्यत्वादनुत्क्लेशनमित्यर्थः । अतएवान्यत्र स्नेहनस्य पाचनपूर्वकत्वमुक्तं पाचनं हि रूक्षणमेव ॥ ३७ ॥

**बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।**
**योगानिमाननुद्वेगान् सद्यःस्नेहान् प्रयोजयेत् ३८**

स०—बालादिषु तथा यः स्नेहविषयः परिहार शीतोदकादिस्तदसहिष्णुष्वक्षमेषु सद्यःस्नेहाख्यानानुद्वेगानुद्वेजकानेतान् योगान् प्रयोजयेत् ॥ ३८ ॥

प०—बालवृद्धादिषु स्नेहनीयेषु पूर्वं बृंहणस्नेहविषयपठितेषु स्नेहपरिहारासहिष्णुषु तत्सुस्नेहे प्रयुज्यमाने वर्ज्यं यत्परिहार्यं तत्परिहर्तुं न शक्नुवन्ति । तेषु तथाभूतेषु स्नेहनार्थमिमान् योगान् सद्यःस्नेहान् प्राज्यमांसादीन् प्रयोजयेत् कथं सलवणान् ॥ ३८ ॥

हे०—बालादिषु सद्यःस्नेहनं कार्यमित्याह--इमान् वक्ष्यमाणान् अनुद्वेगान् सुखसेव्यान् ॥ ३८ ॥

कांस्तानित्याह—

**प्राज्यमांसरसास्तेषु पेया वा स्नेहभर्जिता ।**
**तिलचूर्णश्च सस्नेहफाणितः कृशरा तथा ॥**
**क्षीरपेया घृताढ्योष्णा दध्नो वा सगुडः सरः**
**पेया च पंचप्रसृता स्नेहैस्तंडुलपंचमैः ।**
**सप्तैते स्नेहनाः सद्यःस्नेहाश्च लवणोल्बणाः ३९।**

स०—तेषु बालादिषु प्राज्यमांसरसाः प्रभूतमांसानामेव रसास्तथा स्नेहभर्जिता पेया तथा तिलचूर्ण पललाख्यः स स्नेहफाणितः सर्पिरादिना युक्तः क्षुद्र गुडेन च युक्तस्तथा क्षैरेयी वा पेया सर्पिष्मत्युष्ण च दधिसरो वा सगुडः । पेया च पंचप्रसृता द्वे पले प्रसृतं विदुः पंच प्रसृतानि यस्यां सा पंचप्रसृता । केषां पंच प्रसृतानीति युक्त्याह । स्नेहैस्तंडुलपंचमैरिति । सर्पिस्तैलं वसा मज्जेति चतुर्ण स्नेहानां चत्वारि प्रसृतानि तंडुलाश्च प्रसृतमित्यर्थः एते सप्त पूर्वोक्ताः सद्यः शीघ्रं स्नेहना निष्परिहाराश्च न केवलमेत एव स्नेहना इत्याह । स्नेहाः लवणोल्बणाः सर्पिरादयो लवणाढ्याश्च सद्यः स्नेहनाः ॥ ३९ ॥

प०—तेषु बालवृद्धादिषु परिहारासहिष्णुषु प्राज्यमांसरसादयः सप्तैते योगाः सद्यःस्नेहना भवन्ति

प्राज्यं प्रभूतं मांसं तस्माद्रस इत्येको योगः । अथवा प्रभूतेन स्नेहेन भर्जिता भृष्टेति द्वितीयः । तथा तिलानां चूर्णः सस्नेहः सफाणित इति तृतीयः स्नेहोऽत्र गुडादिः । फाणितः क्षुद्रगुडः । तथा कृशरा तन्दुलादिकृता विलेप्याकारा तथैव सस्नेहा सफाणितेति चतुर्थः । अथवा क्षीरपेया क्षैरेयी घृताढ्या सर्पिष्मती तथोष्णा चेति पञ्चमः । अथ दध्नः सरो दध्युत्तरः सगुड इति षष्ठः । अथवा पेया पञ्चप्रसृताख्या स्नेहैश्चतुर्भिः सर्पिस्तैलवसामज्जभिः प्रसृताः तैः द्विपलीनैस्तन्दुलपञ्चमैः पञ्चमेन तण्डुलेन तावता प्रसृतपरिणामेन कृतेति सप्तमः । एते योगाः सद्यः स्नेहाःनिष्परिहाराश्च । तथा स्नेहाश्चत्वारः सर्पिस्तैलवसामज्जाख्याः लवणोल्वणाः लवणाढ्याः सद्यःस्नेहनाः शीघ्रं स्नेहयन्ति यतस्ते सद्यःस्नेहनाः ॥ ३९ ॥

हे०—सद्यःस्नेहनान् सप्तयोगानाह—प्राज्यमांसाः प्रभूतमांसा अल्पोदकसिद्धा रसा इत्येकः । तेषु मांसरसेषु सिद्धा स्नेहभृष्टा पेयेति द्वितीयः । स्नेहफाणिताभ्यां युक्तस्तिलचूर्ण इति तृतीयः । ताभ्यामेव युक्ता कृशरेति चतुर्थः । उष्णा घृताढ्या क्षीरपेयेति पञ्चमः । सगुडो दधिसर इति षष्ठः । घृततैलवसामज्जतंडुलैः प्रत्येकं प्रसृतप्रमाणैः कृता पेयेति सप्तमः । अष्टमं सद्यःस्नेहनमाह—सद्यःस्नेहाश्चेति ॥ ३९ ॥

कस्मादित्याह—

**तद्ध्यभिष्यंद्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ४०**

स०—यस्माल्लवणमभिष्यंदि स्रोतसां स्रावकमरूक्षत्वादिगुणयुक्तं सूक्ष्मं सूक्ष्मस्रोतोगामि व्यवायि देहमखिलं व्याप्य पाकाय कल्पते ॥ ४० ॥

प०—तल्लवणं यस्माद्भिष्यन्दि स्रवणशीलं श्लेष्मकारि तथा रूक्षमस्नेहं सूक्ष्मं स्रोतःप्रवेशि । उष्णमुष्णवीर्यम् । व्यवायि सकलशरीरं व्याप्य पाकाय कल्पते तदा स्नेहलवणोल्वणाः सद्यःस्नेहना भवन्ति ॥ ४० ॥

हे०—लवणसंयोगात् कथं सद्यःस्नेहनत्वमित्यत आह—तल्लवणं हि यस्माद्भिष्यंदि स्रोतोलीनमलोत्क्लेशनम् अरूक्षं स्नेहाविपरीतं, सूक्ष्मं सूक्ष्मस्रोतःसंचारि, उष्णं स्नेहविलायनं, व्यवायि विचरणशीलम् । संग्रहे तु— "प्रभूतमांसनिष्काथान् जांगलानूपजान् रसान् । स्नेहभृष्टेषु वातेषु यवागूं नातिसंहिताम् ॥ तिलकांबलकं भूरि स्नेहं सर्पिष्मतीमपि । पेयां सुखोष्णां क्षैरेयीं पात्रे वा ससिताघृते । सर्पिर्लवणयुक्तं वा सद्योदुग्धं तथा पयः । पायसं माषमि[श्रं] च बहुस्नेहसमायुतम् ॥ तैलशुंठीगुडसुरां जीर्णमांसरसाशिनः । स्नेहं चैकं सुराच्छेन दध्नो वा सगुडं सरम् । वसां वराहजां सर्पिः पिप्पलीं लवणं तिलान् ।पिप्पलीं लव[णं] स्नेहांश्चतुरो दधिमस्तकम् ॥ दध्ना सिद्धं व्योषगर्भं धात्रीद्राक्षारसे घृतम् । यवकोलकुलत्थांबुक्षारक्षीरसुरादधि । घृतं च सिद्धं तुल्यांशं सद्यःस्नेहनमुत्तमम् । सिद्धांश्च चतुर स्नेहान् बदरत्रिफलारसैः ॥ योनिशुक्रामयहरान् सद्यःस्नेहा[न्] प्रयोजयेत् " इति ॥ ४० ॥

**गुडानूपाऽऽमिषक्षीरतिलमाषसुरादधि ।**
**कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥ ४१ ।**

स०—कुष्ठादिषु स्नेहयोग्यत्वे सति गुडादि स्नेहनार्थं न प्रकल्पयेन्न योजयेत् ॥ ४१ ॥

प०—न प्रकल्पयेत् न प्रयोजयेत् ॥ ४१ ॥

हे०—कुष्ठादिषु गुडादीनि स्नेहनानि निषेधति--गुडानूपेति ॥ ४१ ॥

तर्हि ते कथं स्नेह्या इत्याह—

**त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ।**
**स्नेहान्यथास्वमेतेषां योजयेदविकारिणः ४२ ॥**

स०—एतेषां कुष्ठादीनां यथास्वमध्यायेषु पथ्यत्वेनाऽभिहितैस्त्रिफलादिभिः पाचितान् साधितानविकारिणः स्नेहान् योजयेत् । कुष्ठादीनां संबंधी यो विकारस्तद्रहिताम् । तेन कुष्ठिनां शोफिनां मेहिनामित्यर्थोऽवतिष्ठते ॥ ४२ ॥

प०—केन तर्हि स्नेहयेदित्याह—एतेषामनन्तरोक्तानां कुष्ठादीनां स्नेहांस्त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् विकारिणो यथास्वं योजयेत् ॥ ४२ ॥

हे०—कुष्ठादिषु उचितानि स्नेहनान्याह—त्रिफलेत्यादि । एतेषां कुष्ठशोथप्रमेहाणाम् । अविकारिण इति हेतुगर्भं विशेषणम् ॥ ४२ ॥

**क्षीणानां त्वामयैरग्निदेहसंधुक्षणक्षमान् ॥ ४३ ॥**

स०—आमयैर्व्याधिभिः क्षीणानां पुंसामग्निदेहसंधुक्षणक्षमान् स्नेहान् योजयेत् । अग्निश्च देहश्चाऽग्नि-

देहौ। संधुक्षणाश्च क्षमाश्च संधुक्षणक्षमास्तान्। यथासंख्येनाऽत्र संबंधः। अग्नेः संधुक्षणास्तद्दीपकाः देहस्य क्षमाः पुष्टयावहाः। अत्र चाऽयं भावः। किल व्याधिभिः क्षीणानां वह्निरपि क्षीणो भवति। अतस्तेषां न केवलं ये पुष्टयावहाः कुतः ते वह्निमांद्यमावहंति। अथवा वह्निसंधुक्षणा न पुष्टयावहाः स्नेहा उपयोक्तुं युक्ताः। किं तर्ह्युभयकारिण एव योक्तुं युक्ता इति॥ ४३॥

प०—आमयैर्व्याधिभिः क्षीणानामग्निसन्धुक्षणक्षमास्तान् दीपकान् देहस्य सन्धुक्षणक्षमान् योग्यान् पुष्टयावहान्॥ ४३॥

हे०—व्याधिक्षीणानामुचितानि स्नेहनान्याह—क्षीणानामिति। अग्निदेहयोः संधुक्षणे अभिवर्द्धने क्षमान् दीपनान् बृंहणान्॥ ४३॥

**दीप्तांतराग्निः परिशुद्धकोष्ठः**
**प्रत्यग्रधातुर्बलवर्णयुक्तः।**
**दृढेंद्रियो मंदजरः शतायुः**
**स्नेहोपसेवी पुरुषः प्रदिष्टः॥ ४४॥**

स०—यः पुमानाभीक्ष्ण्येन स्नेहमुपसेवते स दीप्तांतराऽग्नित्वादिगुणयुक्तो भवतीति प्रदिष्टः। सद्भैरिति शेषः। उपजातिर्वृत्तम्॥ ४४॥

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षोडशोऽध्यायः॥ १६॥

प०—दीप्तः समिद्धोऽग्निः जठरानलो यस्य स दीप्तान्तराग्निः। परिशुद्धो निर्दोषः कोष्ठ उदरं यस्य स परिशुद्धकोष्ठः। प्रत्यग्रा अभिनवास्तरुणा धातवो रसादयो यस्य स प्रत्यग्रधातुः। बलवर्णाभ्यां युक्तो बलवर्णयुक्तः। दृढानि स्वकार्यकरणक्षमाणि इन्द्रियाणि यस्य च। मन्दा स्वल्पा जरा पलितानि यस्य स मन्दजरः। शतमायुर्यस्य स शतायुः स तथाविधः पुरुषः स्नेहोपसेवी मुनिभिः कथितः प्रदिष्टः॥ ४४॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने स्नेहनविधिरध्यायः षोडशः॥ १६॥

हे०—स्नेहशीलनस्य फलमाह—दीप्तांतराग्निरिति। प्रत्यग्रधातुर्नूतनधातुः॥ ४४॥

इति हेमाद्रिटीकायामायुर्वेदरसायने स्नेहपानप्रकरणं सामस्त्येन निरूपितम्॥ १६॥

## सप्तदशोऽध्यायः।

शोधनप्रसंगेन स्नेहोपयोगः स्निग्धे च देहे दोषाणां मार्दवीकरणाय स्वेदस्य प्रसंगोऽतस्तत्परिज्ञानार्थोऽयमध्याय आरभ्यते—

**अथाऽतः स्वेदविधिमध्यायं व्याख्यास्यामः १**

स०—अथाऽत इति। स्वेदनं स्वेदस्तस्य विधिर्विधानं व्याख्यास्यामः। शेषं पूर्ववत्॥ १॥

प०—वर्णयिष्यामः प्रायेण स्नेहपूर्वः स्वेदो विधातव्यः। तथाच मुनिः "स्वेदसाध्याः प्रशाम्यन्ति तदा वातकफात्मकाः"। स्नेहपूर्वं प्रयुक्तः स्वेदेनेति स्वेदस्य विधिर्विधानमितिकर्तव्यतारूपोऽध्यायः॥१॥

हे०—अथेतिक्रमप्राप्तं स्वेदविधिमध्यायं व्याख्यातुं प्रतिजानीते॥ १॥

स्वेदस्य चातुर्विध्यमाह—

**स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः॥ २॥**

स०—स्वेदश्चतुर्विधस्तापादिभेदात्॥ २॥

प०—तत्र स्वेदस्य पूर्वं भेदमधिकृत्याह—तापश्चोपनाहश्चोष्मा च द्रवश्चेति द्वन्द्वः। तेन तापादिभेदेन चतुर्विधश्चतुष्प्रकारः अग्निस्वेदो भवति२॥

हे०—स्वेदभेदानाह—स्वेद इति॥ २॥

तत्र तापादीनेव लक्षयितुमाचष्टे—

**तापोऽग्नितप्तवसनफालहस्ततलादिभिः॥ ३॥**

स०—तापः स्वेदोऽग्नितप्तेन वसनेन तथा फालेनाऽयोमयेनाऽग्निना तप्तेन तथा हस्ततलेनाऽपि आदिग्रहणाद्दारुवालुकाघटिकाकांस्यपात्रादयो गृह्यंते॥ ३॥

प०—तत्र तापः स्वेदोऽग्नितापतप्तैर्वसनादिभिः। वसनं वस्त्रमूर्णादिमयम्। फालं शस्त्रमयम्। हस्ततलं पाणितलम्। आदिग्रहणाद्घटिकाकांस्यभाजनादीनां परिग्रहः॥ ३॥

हे०—तापस्य लक्षणमाह—अग्नितप्तैर्वस्त्रादिभिः क्रियते यः स्वेदः संतापः आदिशब्दात्कांस्यवालुकाघटिकासाक्षा-द्ग्रयः ॥ ३ ॥

**उपनाहो वचाकिण्वशताह्वादेवदारुभिः।**
**धान्यैः समस्तैर्गन्धैश्च रास्नैरंडजटामिषैः॥**
**उद्रिक्तलवणैः स्नेहचुक्रतक्रपयः प्लुतैः।**
**केवले पवने श्लेष्मसंसृष्टे सुरसादिभिः।**
**पित्तेन पद्मकाद्यैस्तु साल्वणाख्यैः पुनःपुनः॥४॥**

स०—किण्वं सुराप्रकृतिः। धान्यैरिति सामान्योक्तावपि तिलाऽतसीमाषादीनि योग्यत्वाद्यान्युष्णवीर्याणि स्निग्धानि वा तानि प्रायेण प्रयोज्यानीति। समस्तग्रहणं गंधैरेव युज्यते। अत एव संग्रहेऽवदत्। सर्वगंधानीति। गंधैर्गंधद्रव्यैः कुष्ठागुरुतगरसुरसादिभिस्तथा रास्नादिभिः। किंभूतैः पूर्वोक्तैः उद्रिक्तलवणैर्लवणाढ्यैः। तथा स्नेहश्च चुक्रं च तक्रं च पयश्च तैः प्लुतैरालोडितैः। चुक्रमम्लम्। तक्रस्य चुक्रत्वादेव ग्रहणे सिद्धे तक्रग्रहणमतिशयाय। अतिशयेन साल्वणाख्ये स्वेदे तक्रं प्रयोज्यमिति। केवले पवने वचादिभिरुपनाहः स्वेदः कार्यः। श्लेष्मसंसृष्टे पवने सुरसादिभिः सुरसयुगादिना गणेन। पित्तेन संसृष्टे पवने पद्मकाद्यैः पद्मकपुंड्राविल्यादिभिः। पित्तेन संसृष्टे पवन इत्यत्र किंचिदेव पित्तेन संसृष्टे पवने पद्मकादिभिरुपनाहः कार्य इत्यादि योज्यं नाऽधिकेन पित्तेन युक्ते पवने नाऽपि तुल्येन पित्तेन युक्ते पवन इति। एवं ह्युक्तम्। ग्रैष्मः प्रायो मरुत्पित्ते विधिः कार्य इति। ग्रैष्मश्च विधिः प्रायेण सर्वः शीतस्तत्र स्वेदो दूरोत्सारित एव। तस्मात् किंचित्पित्तेन संसृष्टे पवने पद्मकाद्यैरुपनाहः कार्य इति वेद्यम्। एते च त्रय उपनाहाः केवले वायौ तथा कफयुक्ते पित्तयुक्ते च क्रमेण योज्याः। एते च साल्वणाभिधाना स्वेदा इत्याह। साल्वणाख्यैरिति। पुनः पुनरिति। असकृत्तैः स्वेदयोजना कार्येत्यर्थः। निरपायो हि यथाऽयं साल्वणापरसंज्ञ उपनाहाख्यः स्वेदो न तथाऽपरे स्वेदा इति। उपनह्यते बध्यते चर्मपट्टादिनेत्यन्वर्थं नामाऽस्योपनाह इति। साल्वण इत्यस्य च तंत्रांतरे प्रसिद्धं नाम। तथा च धन्वंतरिः—काकोल्यादिः स वातघ्नः सर्वाम्लद्रव्यसंयुतः। सानूपोदकमांसस्तु सर्वस्नेहसमन्वितः। सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तित इति। उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैरिति त्रिष्वपि स्वेदे योज्यम्॥ ४॥

प०—उपनाहः स्वेदो वचाकिण्वादिभिः। प्लुतैः प्रगाढैरालोडितैस्तथोद्रिक्तलवणैः लवणप्रसूतैः केवले पवने दोषान्तरेणासंसृष्टे वायौ पद्मकाद्यैः पद्मकपुण्ड्रकादिभिर्गणोक्तैर्लवणाढ्यैः स्नेहचुक्रतक्रपयःप्लुतैरिति च त्रिष्वपि योज्यमित्यागमिकाः। पित्तसंसृष्टे तु लवणस्य तैलस्नेहस्य चापकर्षः कार्यः। अल्पत्वं वोह्यादयौगिकमित्याम्नायात्। एते च त्रय उपनाहाः क्रमेण योज्यास्तेन साल्वणाभिधानास्तैः पुनः पुनः बहुशः स्वेदः कार्यः। पुनः पुनरित्यनेनास्य निरपायित्वं द्योतयति। अन्यत्राप्युक्तम्। "काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः। सानूपमांसः सुस्निग्धः सर्वस्नेहसमन्वितः सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः" इति। उपनहनमुपनाहो बन्धनमित्यर्थः॥ ४॥

हे०—उपनाहस्य लक्षणमाह—वचादिभिर्यः स्वेदः क्रियते स उपनाहः किण्वं—सुराकांजिकाद्यधःस्थितद्रव्यं, गंधैः—कुष्ठादिगंधद्रव्यैः, एरंडजटा—एरंडमूलम्, आमिषं मांसम्, उद्रिक्तलवणैः सैंधवाद्युत्कटैः स्नेहादिभिः प्लुतैरालोडितैः चुक्रं सुक्तं, पयः क्षीरम्, एषः स्वेदः केवले पवने एव एव श्लेष्मसंसृष्टपवने सुरसादिवर्गेण सह कार्यः। पित्तेन संसृष्टे पवने पद्मकादिवर्गेण सह कार्यः साल्वणाख्यैः साल्वण इत्याख्या उपनाहस्य। येभ्यः पद्मकादिभ्यस्तैः पद्मकादियुक्त उपनाहः साल्वणाख्यः। उक्तं च सुश्रुतेन "काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः। सानूपमांसः सुस्विन्नः सर्वः स्नेहसमन्वितः। सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः। तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम्" इति। तद्व्याख्यानं च—"काकोल्यादिगणो ग्राह्यो नाष्टवर्गकसंज्ञितः। वातघ्नो भद्रदार्वादिवर्गोऽम्लो दाडिमादिकः॥ सर्वस्नेहश्चतुःस्नेहो लवणं सैंधवादिकम्। अम्लादिभिश्च संस्कार्यः काकोल्यादित्रयं त्रिभिः" इति॥ पद्मकादिरेव तन्मते काकोल्यादिः स चोपनाहः पुनः पुनः कार्यः। उपनाहो बंधनम्॥ ४॥

बंधात्मकश्चाऽयं स्वेद इति बंधात्मकस्वेदोपाय-भूतांश्चर्मपट्टादीनाह—

**स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ।**
**अलाभे वातजित्पत्रकौशेयाऽऽविकशाटकैः ।**
**रात्रौ बद्धं दिवा मुंचेन्मुंचेद्रात्रौ दिवाकृतम्॥५॥**

स०—चर्मपट्टैर्बद्धमुपनद्धमंगं रात्रौ दिवा मुंचेत् । कैंभूतैः । स्निग्धोष्णवीर्यैस्तथाऽपूतिभिरदुर्गन्धैः । दुपरिकर्मितत्वात् । अलाभे चर्मपट्टादीनामभावे वात-जित्पत्रैरेरंडजादिभिस्तथा कौशेयादिभिः । कौशेयं टंकवादिवस्त्रविशेषः । आविकं कंबलम् । तैर्बद्धं रात्रौ दिवा मुंचेत् । दिवा बद्धं रात्रौ मुंचेद्रात्रौ मोक्तव्यम् ॥ ५ ॥

प०—अतो बहुशः प्रदिष्टः स्निग्धोष्णवीर्यमृदुरो-मापूतिश्चर्मपट्टैरलाभे तदभावे सति घनवातहरपत्र-कौशेयाविकपट्टैर्बद्धमुपनद्धमित्यर्थः । अङ्गभंगं रात्रौ निशायां कृतं दिवा मुञ्चेद्विहारपरिहारार्थं दिवाकृतं दिवा बद्धं रात्रौ मुञ्चेत् । देशकालवशेन कचिद् द्वि-त्राण्यहानि धारयितव्योऽङ्गभङ्गादौ । किद्वं सुरसा-प्रकृतिः, शताह्वा शतपुष्पा, धान्यानि शूकशिम्बि-धान्यपठितानि । गन्धद्रव्याणि कुष्टमांसीतगरप्र-भृतीनि । एरण्डजटा एरण्डमूलम् । आमिषं मांसं वेसवारीकृतम् । स्नेहास्तैलादयः । चुक्रं शुक्तं तक्रं कालसेयम् । पयः क्षीरम् ॥ ५ ॥

हे०—बंधनविधिं चाह--स्निग्धोष्णवीर्यैरिति । अलाभे चर्मालाभे वातजित्पत्राणि एरंडादिपत्राणि ॥ ५ ॥

**ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभिः ।**
**पत्रभंगेन धान्येन करीषसिकतातुषैः ॥**
**अनेकोपायसंतप्तैः प्रयोज्यो देशकालतः ॥६॥**

स०—ऊष्मोष्णबाष्पः । ऊष्माख्यः स्वेद उत्कारिका-दिभिः प्रयोज्यः । तत्र यवमाषैरंडबीजातसीकुसुंभबीजा-दिभिःपिष्टखिन्नैर्लेपसिकाकृतिर्यः स्वेदनोपायः सा उत्का-रिका । लोष्टं मृत्पिंडः । कपालं कर्परम् । उपलः पाषाणः । पांसुर्धूलिः । तथा पत्रभंगेन छदसमूहेन । तथा धान्येन । करीषो गवादिशकृच्चूर्णम् । सिकता वालुका तुषो धान्यत्वक् । एतैरुत्कारिकादिभिस्तुप्तैः स्वेदो विधातव्यः । किंभूतैः । अनेके च त उपायास्तैः संतप्तोष्णीकृता य उत्कारिकादयस्तैरनेकोपायसंतप्तैः । कथं प्रयोज्य इत्याह । देशकालतः । ल्यब्लोपे पंचमी चेयम् । तेन देशकालावपेक्ष्य उपलक्षणं चेदम् । तेन दोषदूष्यादीनपेक्ष्य स्वेदोऽयं प्रयोज्यः । लोष्टकपालपाषाणानग्निवर्णान्संदंशेन गृहीत्वा स्वेददो-षाद्यपेक्षयाऽम्भस्यम्ले धान्याम्ले शुक्तादौ वा निमज्जयेत् । तदुद्भूतबाष्पैः स्वेदः शयनस्थस्य कार्यः । अथवा गवादिशकृता पिंडीकृतेनोष्णेन स्वेदः स च पिण्डस्वेद-संज्ञः । अथवैरंडादिद्रव्ययुक्तानि यवादीनि धान्यानि साम्लकादीनि गृहीत्वा पिहितमुखायां मृषायां नाल-मुपस्वेद्य निवाते गृहे शयनस्थे किलिंजे प्रस्तीर्णाऽ-विककौशेयवातहरपत्रान्यतमोत्तरप्रच्छदे गौरवाजिन-प्रावारादिष्ववच्छन्नं स्वेदयेत् । अथवा पूर्वकस्वेद-द्रव्याणि कुंभ्यामुत्क्वाथ्य नलिकटोपविष्टो घनवस्त्रप्रा-वृत ऊष्माणं गृह्णीयात् । एष संस्तरस्वेदः । एव-मनेकोपायसंतप्तत्वं दोषदूष्याद्यपेक्षया निरूप्य स्वेदो योज्यः ॥ ६ ॥

प०—ऊष्माख्यः स्वेदः उत्कारिकादिभिः प्रयोज्यः । यवमाषैरण्डतिलादिभिः । स्विन्नः पुपूलिकाकृति-भिर्यः स्वेदनोपायः स उत्करिकास्वेदो भण्यते । लोष्टकपालपाषाणानग्निवर्णान् कृत्वाऽम्भस्यम्ले वा निमज्जयेत् । तैरार्द्रान्वितवस्त्रेण वेष्टितैः स्वेद-येत् । पांशुना पत्रभङ्गेन धान्येन च तथा गवां करीषैः सिकतादिभिः सुखैश्चाम्लैः कथितैर्वस्त्रवेष्टितैः स्वेदयेत् । अनेकोपायसन्तप्तैरिति कुम्भीनाडीघ-टाद्यादिभिरुपायैः सन्तप्तैरुत्कारिकादिभिरूष्माख्यः स्वेदो देशतः कालश्च योज्यः । देशतः शरीर-देशो भूमिदेशश्च । कालो मुहूर्तादिलक्षणः आतुरा-वस्थालक्षणश्च । तद्वशात्तत्सामर्थ्यादस्य स्वेदस्य प्रयोगः कार्यः । शरीरदेशतो यथा—आमाशयगते वायावित्यादि । तथाऽल्पवङ्क्षणयोरिति । भूमि-देशतो यथा—आनूपं स्वेदस्य योग्यं न तथा जाङ्गलम् कालतो यथा--हेमन्तेऽन्योन्यस्वेदयोग्यता न तथ ग्रीष्मे । व्यवस्थातो यथा- । पित्त-संसृष्टे वायौ कश्चिद्योगः कश्चित् श्लेष्मसंसृष्टे कश्चि द्बले वाते पत्रभङ्गे धान्येनेति पत्राणामङ्गभञ्जन

क्षोदनमामर्दनमङ्गभङ्गो यस्य धान्यस्य तत्पत्रभङ्ग-धान्यम् । करीषो गवां शकृत् । सिकता वालुका ॥ ६ ॥

हे०--उष्णस्वेदस्य लक्षणमाह----उत्कारिकादिभिः सोष्मभिः कंबलादिवेष्टितैर्यः स्वेदः क्रियते स ऊष्मस्वेदः। उत्कारिका रोटिका, पत्रभंगेन खंडशः कृतैः पत्रैः धान्येन गोधूमादिना । संग्रहे तु ऊष्मभेदः पुनरष्टधा भिद्यते पिण्डः, संस्तरो, नाडी, घनाश्मा, कुंभी, कूपः, कुटी, जयंताकश्च । तत्र कपालपाषाणलोष्ठलोहपिंडानग्निवर्णान् संदंशेन गृहीत्वांभस्यम्ले वा निमज्जयेत् । तैरार्द्रविक-वस्त्रेण वेष्टितैः श्लेष्ममेदोभूयिष्ठं सरुजमंगं ग्रंथिमद्वा स्वेद-येत् । पांशुसिकतगवादिकरीषतुषधान्यबुसापुलाकपललैर्वा-ऽम्लोत्क्वथितैः पूर्ववद्वेष्टितैर्गवादिशकृतार्द्रेण पिंडीकृतेनोप-नाहद्रव्योत्कारिकाकृशरापायसपिंडैर्वा वातरोगिष्विति पिंड-स्वेदः । स एव च संकराख्यः । यथार्हस्वेदद्रव्याणि विहितमुखायामूषायां सम्यगुपस्वेद्य निवातशरणशयनस्थे कलिजे प्रस्तार्याविककौशेयवातहरपत्रान्यतमोत्तरप्रच्छेदरौर-वाजिनप्रावारादिष्ववच्छन्नं स्वेदयेदिति संस्तरस्वेदः । पूर्व-वदेवोपस्वेद्योखामुखेनामुखां नाडीमूलच्छिद्रप्रमाणपार्श्वच्छि-द्रामभिसंधायोपलिप्य च पार्श्वच्छिद्रस्थया नाड्या शरीरेषी-कावंशदलकलिंजकरंजपत्रान्यतमकृतया गजाग्रहस्तसंस्थान-या व्यामदीर्घयाऽध्यर्द्धव्यामदीर्घया वा स्वायामचतुर्भागा-ष्टभागपरिणाहमूलाग्रस्रोतसा सर्वतोवातहरपत्रसंवृत्तच्छि-द्रया द्विस्त्रिर्वा विनमितया सुखोपविष्टस्य स्वभ्यक्तप्रावृतेऽगे बाष्पमुपहरेत् । बाष्पो ह्यनृजुगामी विहतचंडवेगस्त्वचमवि-दहन् सुखं स्वेदयतीति नाडीस्वेदः । पुरुषायाममात्रमधिकं वा घनं समं सुखं च शिलातलं भूप्रदेशं वातहरदारुदीप्तेना-ग्निना सर्वतस्तापयित्वा अग्निमपोह्योष्णोदकाम्लादिभिर-भ्युक्ष्य यथोक्तप्रच्छदे संस्तरवत्स्वेदयेदिति घनाश्मस्वेदः । पूर्ववत्स्वेदद्रव्याणि कुंभ्यां समुत्क्वाथ्याश्लिष्योपविष्ट-स्तदूष्माणं गृह्णीयात् । भूमौ वा तां निखाय तदूर्ध्वमासनं शयनं वा नातिघनप्रच्छदं परितः प्रलम्बमानकुथकम्बल-गोणकान्निधाय तत्रस्थस्योष्माणं गृह्णतः स्थाल्यामग्निव-र्णानयोगुडानुपलांश्च शनैर्निमज्जयेदिति कुम्भीस्वेदः । शयनस्याधो विस्तारद्विगुणखाते कूपे वातहरदारुकरी-षान्यतरपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदये-दिति कूपस्वेदः । कुटीं नात्युच्चविस्तारां वृत्तामच्छिद्रामु-पनाहद्रव्यकल्कघनप्रदिग्धकुड्यां सर्वतो विधूमप्रदीप्त-खदिरांगारपूर्णहसंतिकासमूहपरितप्तां विधाय तन्मध्ये शय्यां तत्रस्थं स्वेदयेदिति कुटीस्वेदः । जयंताकस्वेदः अशक्यत्वान्न लिख्यते ॥ ६ ॥

अथ द्रवस्वेदमाह—

**शिग्रुवरिणकैरंडकारंजसुरसार्जकात् ।**
**शिरीषवासावंशार्कमालतीदीर्घवृंततः ॥**
**पत्रभंगैर्वचाद्यैश्च मांसैश्चाऽनूपवारिजैः ।**
**दशमूलेन च पृथक् सहितैर्वा यथामलम् ॥**
**स्नेहवद्भिः सुराशुक्तवारिक्षीरादिसाधितैः ।**
**कुंभीर्गलंतीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।**
**वाससाच्छादितं गात्रं स्निग्धं सिंचेद्यथासुखम् ॥ ७ ॥**

अ०--शिग्र्वादिजैः पत्रसमूहैस्तथा वचाद्यैर्वचादि गणोक्तैस्तथा मांसैरनूपजैर्जलजैश्च दशमूलेन च पृथग् व्यस्तैर्द्वित्र्यादिभिः सहितैः समस्तैर्वा यथामलं स्नेहवद्भि र्दोषहरघृताद्यन्यतमस्नेहयुक्तैर्यथादोषं सुराशुक्तवारिक्षी रादिसाधितैः कुंभीः स्थालीः पूरयित्वा तथा गलंतीर्गर्ग रीश्च वंशादिमयीर्नाडीर्वा पूरयित्वा रुजार्दितं पीडार्तं गात्रमंगं वाससाच्छादितं तथा स्निग्धं सद्यथासुखं सुख स्पर्शं कदाचिदत्युष्णं कदाचिदीषदुष्णं दोषपीडावशात् सिंचेदिति ॥ ७ ॥

प०--शिग्रोरारभ्य यावद्दीर्घवृन्तमौषधगण् । त-स्मादौषधगणात् पत्रभङ्गैः पत्रक्षोदैः पत्राणां भङ्गाः पत्रभङ्गाः । संक्षुण्णानि पत्राणि तैस्तथा वचाद्यैः पूर्वोक्तैरुपनाहस्वेदपठितैः वचाकिण्वसिताह्वादिभि-स्तथा मांसैश्चानूपवारिजैः । रोहीतपाठीनकूर्मप्रभृ-तिभिर्मत्स्यैस्तथा दशमूलेन यथादोषं पृथक्सहितैर्वा पृथक्व्यस्तैर्वा सहितैः समस्तैः मिश्रैर्वा यथामलं मलानतिक्रमेण दोषानुसारेणेति यावत् । स्नेहव-द्भिर्विद्यमानस्नेहोऽत्रापि यथामलमिति योज्यम् । योग्यः स्नेहो योग्यस्नेहो घृताद्यन्यतमस्तेन युक्तै-स्तथा यथामलं सुरादिभिः साधितैस्तत्क्वथितैरेतैः सर्वैः कुम्भीस्थालीर्गलन्तीर्गर्गरिका वा धान्यापर-पर्यायाः । नाडी उद्धृतारिष्टः भाण्डं पूरयित्वा रुजार्दितं शूलाद्याक्रान्तं गात्रमङ्गं वाससाच्छादितं वस्त्रावच्छिन्नं स्निग्धं वातहरस्निग्धसिद्धस्नेहा-

भ्यक्तं सिञ्चेत्परिषेचयेत् । यथासुखं यथासुखस्पर्शं कदाचिदीषदुष्णं कदाचिदुष्णतरं जलाधारविशेषा गलन्त्यो या अनवरतं धारया जलादि स्रवन्ति ता गलन्त्यो भण्यन्ते । द्रवस्वेदस्तु द्विविधः। परिषेकोऽवगाहश्च तत्र परिषेक उक्तः॥७॥

हे०—द्रवस्वेदमाह—शिग्रुवीरणेति । वीरणकः कंटककरञ्जः । दीर्घवृंतष्टिंटुकः, शिग्र्वादीनां पत्रभंगैः वचाद्यैरुपनाहोक्तैः द्रवस्वेदो द्विविधः—परिषेकोऽवगाहश्च ॥७॥

परिषेकस्वेदमाख्यायाऽवगाहस्वेदं द्रवभेदमाह—

**तैरेव वा द्रवैः पूर्णं कुंडं सर्वांगगेऽनिले ।**
**अवगाह्याऽऽतुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥८॥**

स०—तैरेव पूर्वोक्तैः स्वेदद्रवैः पूर्णं कुंडं भृशमवगाह्य प्रविश्याऽऽतुरो रोगी तिष्ठेत् । कीदृशे दोषे इत्याह । सर्वांगगेऽनिले सर्वशरीरव्यापिनि वायौ तथाऽर्शःप्रभृतिरोगकष्टपीडासु । आदिग्रहणेन हस्तपादपीडासु वा । कुंडग्रहणमुपलक्षणार्थम् । तेन कूपकुटी स्वेदौ च वेद्यौ । संग्रहे उक्तम् । शयनस्याऽधोविस्तारद्विगुणखाते कूपे वातहरदारुकरीषाद्यन्यतरपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदयेदिति कूपस्वेदः । कुटीं नाऽत्युच्चविस्तारां वृत्तामच्छिद्रामुपनाहद्रव्यकल्कघनप्रदिग्धकुड्यां सर्वतो विधूमप्रदीप्तखदिरांगारपूर्णहसंतिकासमूहपरिवृतां विधाय तन्मध्यस्थितशय्यास्थं स्वेदयेदिति कुटीस्वेदः । पद्मोत्पलादिभिः सक्तुपिंड्या वाऽऽच्छाद्य चक्षुषी । शीतैर्मुक्तावलीपद्ममुकुलोत्पलभाजनैः । मुहुः करैश्च सजलैः स्विद्यतो हृदयं स्पृशेदिति ॥ ८ ॥

प०—अवगाहस्तु कथ्यते तैरेव पूर्वोक्तैर्द्रवैः परिषेककाथैः पूर्णं कुण्डमवगाह्यानुप्रविश्यातुरं हृदयादीन् रक्षंस्तिष्ठेत् । सर्वाङ्गगेऽनिले इति । सकलशरीरव्यापिनि सति कुण्डग्रहणमुपलक्षणमात्रम् । तेन कटाहे द्रोण्यां द्रवपूर्णायामप्यवगाहयेत्तथैकाङ्गरोगेष्वर्शःकृच्छ्रादिरुक्षु च दोषाद्यपेक्षयाऽवगाहयेत् ॥ ८ ॥

हे०—तत्र परिषेकमुक्त्वाऽवगाहमाह—तैरेव पूर्वोक्तैः स्वेदद्रवैः पूर्णं कुण्डं भृशमवगाह्य प्रविश्य रोगी तिष्ठेत् । कदेत्याह—सर्वशरीरव्यापिनि वायौ तथा अर्शः—प्रभृतिरोगपीडासु आदिग्रहणेन हस्तपादपीडासु कुण्डग्रहणमुपलक्षणार्थं तेन कूपकुटी स्वेदौ च वेद्यौ ॥ ८ ॥

**निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत्[१]**

स०—अपगतवाते देशे स्वेदमाचरेत् । किंभूत. । अंतः स्नेहपानेन बहिश्चाऽभ्यंगादिना स्निग्धः । तथा

(१) "सङ्करः प्रस्तरो नाडी परिषेकोऽवगाहनम् । जेन्ताकोऽश्मघनः कर्षूः कुटीभूः कुम्भिकैव च ॥ कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश । तान्यथावत्प्रवक्ष्यामि सर्वानेवानुपूर्वशः" इति । तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं संकरस्वेद इति विद्यात् । शूकशमीधान्यपुलाकानां वेसवाराऽऽयसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चांगुलोरुबकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेद इति विद्यात् । स्वेदनद्रव्याणां पुनर्मूलफलपत्रभङ्गादीनां मृगशकुनपिशितशिरःपदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणं स्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वाष्पमनुद्वमन्त्यामुत्क्वाथितानां नाड्या शरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घया व्यामार्द्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्वतोवातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विनामितया वातहरसिद्धस्नेहाभ्यक्तगात्रो वाष्पमुपहरेत् । बाष्पो ह्यनूर्ध्वगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः । वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वार्षुलिकाः प्रनाडीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेदिति परिषेकः ।

वातहरोत्क्वाथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः ॥

अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत—तत्र पूर्वस्यां दिश्युत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वाऽरत्नीरुपक्रम्योदकात्प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कूटागारं कारयेत् । उत्सेधविस्तारतः परमरत्नीः षोडश, समन्तात् सुवृत्तं मृत्कर्मसम्पन्नमनेकवातायनम्, अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोत्सेधां पिंडिकां कारयेदाकपाटात् मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रपुरुषप्रमाणं मृन्मयं कुन्दसंस्थानं बहुसूक्ष्मच्छिद्रमंगारकोष्ठकस्तम्भं सपिधानं कारयेत् । तं च खादिराणामाश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत् । स यदा जानीयाः साधुदग्धा

जीर्णान्नश्च येन ह्यस्तनमन्नं जीर्णम् । आमाजीर्णाद्याक्रांतं नरं वर्जयित्वा तेन स्वेदार्हेण नरेण स्वेद आचरणीयः ।

आमाजीर्णाद्याक्रांतेन तु पुरुषेणाऽजीर्णेऽन्ने च स्वेद आचरणीयः ॥ ९ ॥

प०—निवाते प्रदेशेऽन्तर्बहिः स्निग्धः पुम जीर्णान्नः परिणतभोजनः सन् स्वेदमाचरे कुर्यात् ॥ ९ ॥

हे०—स्वेदविधिमाह—निवाते इति ॥ ९ ॥

कीदृशं स्वेदमाचरेदित्याह—

**व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥ १०**

स०—व्याध्यपेक्षया व्याधितापेक्षया देशापेक्ष ऋत्वपेक्षया धात्वपेक्षया च यथाविध एव मध्य मुत्कृष्टं हीनं वा स्वेदमाचरेत् ॥ १० ॥

प०—तं च स्वेदं व्याध्यादिवशान्मध्यवराव व्याधिवशात्तावत् । व्याधिः पुनर्मध्योऽतिमात्र मृदुश्चेति भवति । व्याधित आतुरस्तस्यापि म ध्योत्कृष्टावरबलादिकं सम्भाव्यते । देशश्चानूप जाङ्गलः साधारणश्च । ततो देशश्च शिरःस्कन्ध दरजङ्घादिकः । ऋतुश्चोष्णशीतसाधारणभेदभिन्नः तद्वशात्तदनुरोधेन ॥ १० ॥

हे०—व्याध्यादिवशान्मध्यमात्रमुत्तममात्रमधममात्रम् १

**कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ११**

स०—कफार्तः कफग्रस्तो रूक्षः सन्नंतर्बहिरस्निग्धं रूक्षणं न च स्निग्धं स्वेदमाचरेत् । अथ श्लेष्मवा रूक्षस्निग्धं केनचिदंगेन रूक्षं केनचिदंगे स्निग्धमेवंविध स्वेदमाचरेत् ॥ ११ ॥

प०—कफार्तः कफग्रस्तः पुरुषो रूक्षस्वेदमाच रेत् न स्निग्धम् । तथा रूक्षः पुनर्न पुनरन्यस्वेद वत्पूर्वं स्नेहनः । स्निग्धकफानिले रूक्षस्निग्धं सा धारणरूपं स्वेदमाचरेत् ॥ ११ ॥

हे०—कफस्वेदविशेषमाह—कफार्त—इति । कफानिले विशेषमाह—रूक्षः पुरुषः, स्निग्धं स्वेदनम् ॥ ११ ॥

**आमाशयगते वायौ कफे पक्वाशयाश्रिते ॥**
**रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ॥ १२ ॥**

स०—आमाशयगते वात आदौ रूक्षः स्वेदः कार्यः पश्चात्स्निग्धः । तथा पक्वाशयगते कफ आदौ स्निग्धः स्वेदः पश्चाद्रूक्ष इत्यर्थः । कुत एवं नियम इत्याह ।

---

काष्ठानि गतधूमानि अवतप्तं च केवलमग्निना तदाग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत्, प्रवेशयंश्चैनमनुशिष्यात्—सौम्य ! प्रविश कल्याणायारोग्याय चेति, प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वाऽपरपार्श्वाभ्यां यथासुखं शयीथाः, न च त्वया स्वेदमूर्च्छापरीतेनाऽपि सता पिण्डिकैषा विमोक्तव्याऽऽप्राणोच्छ्वासात् भ्रश्यमानो ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः, तस्मात् पिण्डिकामेनां न कथंचन मुंचेथाः, त्वं यदा जानीयाः विगताभिष्यन्दमात्मानं सम्यक्प्रसृतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनमिति, ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः, निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः, अपगतसन्तापक्लमस्तु मुहूर्तात्सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयाः, इति जेन्ताकः स्वेदः ।

" शयानस्य प्रमाणेन घनामश्ममयीं शिलाम् । तापयित्वा मारुतघ्नैर्दारुभिः संप्रदीपितैः ॥ व्यपोज्झ्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा । तां शिलामथ कुर्वीत कौशेयाविकसंस्तराम् ॥ तस्यां स्वभ्यक्तसर्वांगः स्वपन् स्विद्यति ना सुखम् । कौरवाजिनकौशेयप्रावाराद्यैः सुसंवृतः ॥ इत्युक्तोऽश्मघनस्वेदः कर्षूस्थानविभागवित् । दीप्तैरधूमैरंगारैस्तां कर्षूं पूरयेत्तत ॥ तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् । अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम् ॥ घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः संप्रलेपयेत् । कुटीमध्ये भिषक् शय्यां स्वास्तीर्णां चोपकल्पयेत् ॥ प्रावाराजिनकौशेयकुथकम्बलगोलकैः । हसन्तिकाभिरंगारपूर्णाभिस्तां च सर्वशः । परिवार्य तामारोहेदभ्यक्तः स्विद्यते सुखम् । य एवाश्मघनस्वेदविधिर्भूमौ स एव तु ॥ प्रशस्तायां निवातायां समायामुपदिश्यते । कुम्भीं वातहरक्वाथपूर्णां भूमौ निखानयेत् । अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि । स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम् ॥ अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो गुडान् । पाषाणांश्चोष्मणा तेन तत्स्थः स्विद्यति ना सुखम् ॥ सुसंवृतांगः स्वभ्यंगः स्नेहैरनिलनाशनैः । कूपं शयनविस्तारं द्विगुणं चापि वेध्यतः ॥ देशे निवाते शस्ते च कुर्यादन्तः सुमार्जितम् । हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते ॥ स्ववच्छन्नः सुसंस्तीर्णोऽभ्यक्तः स्विद्यति ना सुखम् । धीतीकां तु करीषाणां यथोक्तानां प्रदीपयेत् ॥ शयनान्तःप्रमाणेन शय्यामुपरि तत्र च । सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ॥ स्ववच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम् । होलाकस्वेद इत्येव सुखप्रोक्तो महर्षिणा । इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः ॥" इति **चरकः** ।

स्थानानुरोधतः स्थानवशात् । वायुर्यतः आमाशय आगंतुः स्थानं च तत् श्लेष्मणस्तद्वशात्तत्रादौ रूक्ष एव स्वेदो योज्यः पश्चात् स्निग्ध इति । कफश्च पक्वाशय आगंतुः । स्थानं च तद्वायोरतः पूर्वं स्निग्धः स्वेदः पश्चाद्रूक्ष इति पूर्वोक्त एव न्यायो न्याय्यः । तथा चोक्तम् । तत्राऽन्यस्थानसंस्थेषु तदीयामिति । तथा। आगंतुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वेति तस्मात्पूर्वं रूक्षेण स्थानिनं कफं प्रतिकृत्य पश्चादागंतुकस्य वायोः शमनं स्निग्धस्वेदाख्यं प्रयोज्यमिति। ननु वायोरामाशये कोपोऽनुपपन्नः । यतो मरुल्लघ्वादिगुणयुक्तः । आमाशयस्तु गुरुमृदुत्वादियुक्तः । अतः शम एवोपपन्न इति चेत् । एतच्चायुक्तम् । बलिनो ह्यन्याश्रयस्थस्याऽपि कोपो युक्तः । मार्गरोधाच्च वायोरामाशयेऽपि प्रकोपः संभवतीति । तथाच वक्ष्यति । प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये गत इति । तथा चोक्तम् । ते कालादिबलं लब्ध्वा कुप्यंत्यन्याश्रयेष्वपीति ॥ १२ ॥

प०-तथा कफे पक्वाशयस्थिते स्नेहपूर्वं स्वेदमाचरेत् ॥ १२ ॥

हे०-स्थानभेदेन विशेषमाह-रूक्षपूर्वं प्रथमं रूक्षं ततः स्निग्धं, स्नेहपूर्वं प्रथमं स्निग्धं ततो रूक्षं, स्थानानुरोधतः स्थानिप्रतीकारपूर्वकमागन्तुप्रतीकारस्योक्तत्वात् ॥ १२ ॥

**अल्पं वंक्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा१३**

स०-वंक्षणयोरल्पमेवेति योज्यम् । दृशोर्मुष्कयोर्हृदि चाऽत्यल्पम् । न वेति । अथवा दृगादिषु स्वेदं नाचरेदेव ॥ १३ ॥

प०-वङ्क्षणयोः शरीरैकदेशयोः रूक्षमूलाश्रययोरल्पं स्तोकं स्वेदमाचरेत् । दृङ्मुष्कहृदये चक्षुर्वृषणहृदये स्वल्पमत्यन्ताल्पतरं स्वेदमाचरेत् । न वा नैव तस्मिन् स्थाने स्वेदं योजयेत् ॥ १३ ॥

हे०-अवयवभेदेन विशेषमाह-वंक्षणयोरल्पं स्वेदमाचरेत् । दृगादिष्वल्पत्वं नैव वा । संग्रहे तु-"पद्मोत्पलादिभिः सक्तुपिण्ड्यावाऽऽच्छाद्य चक्षुषी । शीतैर्मुक्तावलीपद्मकुमुदोत्पलभाजनैः ॥ मुहुः करैश्च सजलैः स्विद्यतो हृदयं स्पृशेत्" इति ॥ १३ ॥

**शीतशूलक्षये स्विन्नो जातेऽगानां च मार्दवे । स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत्१४**

स०-शीतशूलयोः क्षये संजाते सर्वांगानां पाणिपादादीनां च मृदुत्वे जाते स्विन्नो नरः स्यात् । स च स्विन्नः शनैर्मृदितो मंदमर्दितांगः स्नात उष्णोदकेनानंतरं स्नेहोक्तविधिमुष्णोदकोपचारी स्यादित्यादिकं भजेदिति ॥ १४ ॥

प०-सम्यक् स्विन्नो नरः स्यात् । शीतशूलयोः क्षये विनाशे सति तथाङ्गानां शरीरावयवानां मार्दवे मृदुत्वे समुत्पन्ने जाते सति शनैर्मृदितः स्नातः आदौ मृदितः पश्चात् स्नातः । शनैर्मन्दं कृत्वा मृदितो मर्दिताङ्गः मुहूर्तमेकं स्नातोऽनन्तरं स्नेहोक्तमाचाराहारविधिं विधानं शीलयेत् परिहरेच्च । स्निग्धद्रवोष्णधन्वाम्बुरसभुक् स्वेदमाचरेदिति शीलयेत् । तथोष्णोदकोपचारी स्यादित्यादिकं परिहार्यं परिहरेत् ॥ १४ ॥

हे०-सम्यक्स्विन्नलक्षणमाह-शीतशूलेति । शीतशूलयोर्निवृत्तावंगमार्दवे च स्विन्नः स्यात् । स्विन्नस्य कृत्यमाह-शनैर्मृदितो यथासुखं कृतमर्दनः । स्नेहविधिं स्नेहोक्ताहारविहारनियमम् ॥ १४ ॥

स्वेदस्य सम्यग्लक्षणमुक्त्वाऽतियोगलक्षणमाह-

**पित्तास्रकोपतृण्मूर्छास्वरांगसदनभ्रमाः । संधिपीडाज्वरश्यावरक्तमंडलदर्शनम् ॥ स्वेदाऽतियोगाच्छर्दिश्च तत्र स्तंभनमौषधम् । विषक्षाराऽग्न्यतीसारच्छर्दिमोहातुरेषु च॥१५॥**

स०-स्वेदस्याऽतियोगाद्रक्तपित्तकोपादयो भवंति छर्दिश्च । मूर्छा मोहः । स्वरांगयोः सदनेन संबंधः । भ्रमोऽज्ञानम् । श्यावानि च रक्तानि च श्यावरक्तानि । तत्र तेषु स्तंभनमौषधं कार्यम् । तथा विषाद्यातुरेष्वपि स्तंभनमेवौषधं न्याय्यमित्यर्थः ॥ १५ ॥

प०-स्वेदस्यातियोगात् अतिसेवनात् पित्तास्रकोपादयो जायन्ते । मूर्छा मोहः । स्वरस्याङ्गस्य च सदनमवसादः । भ्रमोऽनवस्थानम् । सन्धीनां पीडा सन्धिपीडा । पर्वरुजा । श्यावरक्तानां च मण्डलानां च दर्शनमुद्गमः । छर्दिर्वमिः तत्र स्वेदातियोगजानितेषु रक्तपित्तप्रकोपादिषु स्तम्भननि-

र्वापणमौषधं चिकित्सितं योज्यम् । प्रासङ्गिकीं तत्र युक्तिमाश्रित्य विषादिषु स्तम्भनमौषधं यथास्वं विषे विषस्तम्भनं ज्वरे ज्वरस्तम्भनमग्नावग्निदाहनिर्वापणमतीसारे पक्षस्तम्भनं छर्द्यां छर्दिघ्नं मोहे संज्ञाप्रदम् ॥ १५ ॥

हे०–अतिस्विन्नलक्षणमाह–पित्तास्रेति । आतीस्विन्नस्यौषधमाह–तत्र स्तम्भनमिति । प्रसंगाद्विषादिष्वपि स्तम्भनमौषधमाह—विषेति । क्षाराख्यातुरः क्षाराग्निदग्धः मोहातुरो मूर्छावान् ॥ १५ ॥

**स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तंभनमन्यथा १६**

स०–गुरु यद्द्रव्यं तीक्ष्णमुष्णं च तद्बाहुल्येन स्वेदनं भवति । प्रायोग्रहणात् भयशोकादिकमगुर्वपि गृह्यते । अन्यथाऽतो वैपरीत्येन स्तंभनं भवति ॥ १६॥

प०–स्वेदनस्तम्भनयोः स्वेदान्येन लक्षणं करोति । यद्गुरु तीक्ष्णमुष्णं च तत्सर्वं स्वेदनद्रवम् । प्रायोग्रहणं कचिद्व्यभिचारदर्शनार्थम् । अतोऽन्यथा विपर्ययेण लघु मन्दं शीतं च स्तम्भनम् ॥ १६ ॥

हे०–स्वेदनं द्रव्यमाह स्वेदनमिति । स्तम्भनमाह–स्तंभनमिति ॥ १६ ॥

**द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम् ।**
**स्वेदनं स्तंभनं श्लक्ष्णं रूक्षसूक्ष्मसरद्रवम्॥१७॥**

स०–द्रवादिगुणयुक्तं यत्तद् द्रव्यं स्वेदनं भवति । तथा श्लक्ष्णादियुक्तं तत् स्तंभनं भवति ॥ १७ ॥

प०–तथा द्रवादियुक्तं भेषजं स्वेदनसूक्ष्मतादियुक्तं च स्तम्भनम् ॥ १७ ॥

अधुना रसतः स्तंभनं निर्दिशन्नाह–

**प्रायस्तिक्तं कषायं च मधुरं च समासतः॥१८॥**

स०–प्रायः समासतः संक्षेपेण तिक्तं कषायं च मधुरं च स्तंभनं भवति ॥ १८ ॥

प०–यत्किञ्चिन्मधुरं तिक्तं कषायं तत्तत्स्तम्भनं समासतः । चरकाचार्येणानयोर्लक्षणं कृतम् । "स्तम्भगौरवशीतघ्नं स्तम्भनं स्वेदकारकम् । स्तम्भनं स्तम्भयति यद्गतिमन्तं चलं द्रवम्"॥ १८ ॥

हे०–अन्यथा लघुमन्दशीतं तिक्तादिरसं च ॥ १८॥

स्तंभितस्य लक्षणमाह–

**स्तंभितः स्याद्बले लब्धे यथोक्तामयसंक्षयात् ।**

स०–बले लब्धे जाते सति यथोक्तानां रोगाणां च संक्षयात्स्तंभितो नरः स्यात् ॥ १९ ॥

प०–स्नायुसङ्कोचादिभिरति स्तम्भितं नरमादिशेत् ॥ १९ ॥

हे०–स्तम्भितलक्षणमाह—स्तम्भित इति । यथोक्ताः पित्तास्रकोपादयो विषादयश्च ॥ १९ ॥

अतिस्तंभितं लक्षयति–

**स्तंभत्वक्स्नायुसंकोचकंपहृद्वाग्घनुग्रहैः ।**
**पादोष्ठत्वक्करैः श्यावैरतिस्तंभितमादिशेत् २० ॥**

स०–त्वक् च स्नायुश्च तयोः संकोचः । हृदयादीनां ग्रहेण संबंधः । ततः स्तंभादीनां द्वंद्वः । स्तंभादिभिस्तथा श्यावैः पादादिभिरतिस्तंभितं कथयेत् ॥२०॥

प०–स्तम्भोऽस्य त्वक्स्नायूनां सङ्कोचः संक्षेपः । त्वक्कम्पो वेपथुः । हृद्वाग्घनूनां स्रोतोविष्टम्भः । पादौष्ठत्वक्करेषु श्यावता श्यामवर्णता । एतैर्लिङ्गैरतिस्तम्भितं जानीयात् ॥ २० ॥

हे०–अतिस्तंभितलक्षणमाह–स्तम्भत्वगिति–हृदयवचोहनूनां ग्रहः ॥ २० ॥

**न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्छितान् ।**
**स्तंभनीयक्षतक्षीणक्षाममद्यविकारिणः ॥**
**तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ।**
**पीतदुग्धदधिस्नेहमधून्कृतविरेचनान् ॥**
**भ्रष्टदग्धगुदग्लानिक्रोधशोकभयान्वितान् ।**
**क्षुत्तृष्णाकामलापांडुमेहिनः पित्तपीडितान् ।**
**गर्भिणीं पुष्पितां सूतां मृदु चाऽत्ययिके गदे२१**

स०–अतिस्थूलादीन्न स्वेदयेत् । अतिस्थूलस्य स्वेदेन मेदोविलयनादत्यंतं शरीरक्षोभः स्यात् । रूक्षादीनां च कार्श्यमिति । आढ्यरोगो वातरक्तम् । भ्रष्टदग्धगुदोऽतीसारक्षाराग्न्यादिभिः । ग्लान्यादीनामन्वितेन संबंधः । क्षुदादीनां मेहांतानां द्वंद्वः । क्षुद्वतः स्वेदादत्यंतं देहग्लानिः । कामलापाण्डुमतोः स्वेदेन

पित्तवृद्धया रोगवृद्धिः। पित्तप्रधानस्य स्वेदाद्रोगवृद्धिः । गर्भिण्याः स्वेदेन गर्भव्यापत्। पुष्पिताया रक्तातिप्रवृत्तिः। सूतायाः कार्श्यम् । मृदु चेति । यदैषामतिस्थूलादीनामात्यंतिको व्याधिर्विसूचिकादिः स्यात्तदैते मृदु स्वेदयितव्याः ॥ २१ ॥

प०—स्थूलरूक्षादीन् सूतिकापर्यन्तान् न स्वेदयेत् । दुर्बलाः अबलाः । मूर्छिता मोहिताः । स्तम्भनीयाः स्तम्भनार्हाः । ये स्तम्भनीयत्वेनोक्ता मद्यविकारिणो मदात्ययव्याध्यातुराः आढयरोगिणो वातशोणितिनः । पीतानि दुग्धादीनि यैस्ते न स्वेद्याः । मधुमाक्षिकं च प्रविज्ञेयं तस्य पृथक्वचनात् । कृतं विरेचनं यैस्तथा भ्रष्टगुदाः पतितगुदा दग्धगुदाश्च क्षाराग्निना । ग्लान्यर्दिताः क्रोधार्दिताः शोकार्दिताः यावद्भयार्दितास्तावन्न स्वेदयेत् । आत्ययिके गदे पुनर्विषूचिकादौ मृदु कृत्वा स्वल्पं कृत्वाऽतिस्थूलादीन् सूतिकान्तान्न स्वेदयेत् ॥ २१ ॥

हे०—स्थूलादीनां स्वेदनं निषेधाति—न स्वेदयेदिति । स्तम्भनीया विषादयः । क्षत उरःक्षती, क्षीणः—क्षयरोगी, क्षामः—कृशः, शोषो—मुखशोषादिः, आढ्यरोगो—वातरक्तं, भ्रष्टगुदो-दग्धगुदश्च । पुष्पिता-ऋतुमती, गदे अस्वेद्यानपि मृदु स्वेदयेत्तथाप्यनुपशमे तीव्रं वा स्वेदयेदित्याह—मृद्विति ॥ २१ ॥

**श्वासकासप्रतिश्यायहिध्माध्मानविबंधिषु ।**
**स्वरभेदाऽनिलव्याधिश्लेष्मामस्तंभगौरवे ॥**
**अंगमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ।**
**महत्त्वे मुष्कयोः खल्यामायामे वातकंटके ॥**
**मूत्रकृच्छ्रार्बुदग्रंथिशुक्राघाताढ्यमारुते ।**
**स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥२२॥**

स०—श्वासादिमत्सु यथास्वं स्वेदं कुर्यात्। क्वचित्तापं क्वचिदुपनाहं क्वचिदूष्माणं क्वचिद्द्रवमिति । कथम् । तेष्वौषधानि तदौषधानि तेषां विभागो यथास्वमुपयोगस्तेन तदौषधविभागेन स्वेदं कुर्यात्। खल्ली तीव्ररुजान्वितेति वातव्याधौ वक्ष्यते। आयामवातकंटकौ च। आढ्यमारुत ऊरुस्तंभः ॥ २२ ॥

प०—श्वासकासादिष्वाढयमारुतपर्यन्तेषु यथायथं यथास्वं स्वेदं कुर्यात् । क्वचित्तापं क्वचिदुपनाहं क्वचिदूष्माख्यं क्वचिद्द्रवमिति यथायथमुक्तेष्वध्यायेषु वक्ष्यमाणेषु तदौषधविभागतः तेषामौषधानि तदौषधानि तद्विभागेनैतदुक्तं भवति । यदा श्वासे स्वेदो युज्यते तदा श्वासोक्तैरेवौषधैः स्वेदो योज्यः । एवं कासादीनामपि स्वैरेवौषधैर्वाच्यम् । मुष्कयोर्वृषणयोर्महत्त्वे स्थूलत्वे खल्ल्यामत्यामे वातकण्टके । क इति वातव्याधिनिदाने च वक्ष्यमाणः । शुक्राघातः शुक्ररोधः । आढयमारुतो मेदसावृतो मारुतः ॥ २२ ॥

हे०—स्वेदसाध्यान् रोगानाह—श्वासकासेति। मुष्कयोर्महत्त्वे वृद्धिरोगे खल्यां हस्तपादावमोटने आयामे बाह्यायामादौ । संग्रहे तु " स्वरभेदानिलव्याधिपक्षाघातापतानके । वेपथुश्वयथुस्वापस्तंभजृंभामगौरवे ॥ कर्णमन्याशिरःकोष्ठजंघापादोरुरुक्षु च " इति । स्विन्नस्य कृत्यमुक्तं संग्रहे " स्विन्नोऽन्नं पथ्यमश्नीयाद्दोषरागानुरोधतः । तदहः स्विन्नसर्वांगो व्यायामं सुतरां त्यजेत् " इति ॥ २२ ॥

**स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते २३ ॥**

स०—मेदःकफाभ्यां पवन आवृते सत्यनाग्नेयः स्वेदो हितः ॥ २३ ॥

प०—मेदःकफावृते वातेऽनाग्नेयः स्वेदो हितः२३॥

हे०—अनाग्नेयस्वेदस्य विषयमाह—स्वेद इति ॥ २३॥

कोऽसावनाग्नेय इत्याह—

**निवातं गृहमायासो गुरुप्रावरणं भयम् ।**
**उपनाहाहवक्रोधभूरिपानं क्षुधातपः ॥ २४ ॥**

स०—निवातगृहादयोऽनाग्नेयाः स्वेदाः । आयासो व्यायामः। गुरुप्रावरणं रल्लकादि । भयं खड्गहस्तराजपुरुषदर्शनादिना । उपनाहोऽप्यनाग्नेयः स्वेदः । उपनाहस्य द्वैविध्यात्। तत्रोपनाहो वचाकिण्वेत्यादिराग्नेयः। तत्र तापोऽग्नितप्तवसनेत्यनुवृत्तेः । अनाग्नेयस्तु स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरित्यादिकः । आहवः समरः । भूरिपानं बहुमद्यपानम् ॥ २४ ॥

प०—निवातं गृहं मन्दिरम् । आयासः शरीरस्य । गुरुप्रावरणं बहुभारिकं वस्त्रं तथा भर

तथोपनाहः प्राक् वर्णितः । आहवो बाहुयुद्धादिकम् । क्रोधोऽमर्षः । भूरिपानं बहुपयःपानम् । क्षुत् क्षुभिग्रहः । आतपोऽर्करश्मीनां सम्बन्धी॥२४॥

हे०—अनग्नियस्वेदस्य भेदानाह—निवातमिति । निवातगृहादयो दशभेदाः॥ उपनाहो वचादिभिरनग्नितप्तैः कृतः । आहवः संग्रामः, भूरिपानं बहुमद्यपानं, स्वेदस्य फलं संग्रहे—"अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं भक्तश्रद्धां स्रोतसां निर्मलत्वम्। कुर्यात्स्वेदो जाड्यतन्द्रापहारं स्तब्धान् सन्धींश्चेष्टयत्याशु चाऽस्य" इति ॥ २४ ॥

**स्नेहक्लिन्नाः कोष्ठगा धातुगा वा**
**स्रोतोलीना ये च शाखाऽस्थिसंस्थाः ।**
**दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं**
**नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ २५ ॥**

स०—ते दोषाः सम्यक् सुष्ठु शुद्धिभिर्वमनविरेचनलक्षणाभिर्निर्ह्रियन्ते निष्कास्यन्ते । के दोषा इत्याह । स्नेहक्लिन्ना ये तथा कोष्ठगा धातुस्थाश्च स्रोतोलीनास्तथा शाखास्वस्थिषु च स्थिताः। किंभूताः । स्वेदैर्द्रवीकृत्य कोष्ठं नीता उदरं प्रापिता इति ॥ २५ ॥

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुन्दराख्यायां सप्तदशोऽध्यायः ॥ १७ ॥

प०—ये दोषा वातादयः कोष्ठे महास्रोतसि स्थिताः धातुषु वातरक्तादिषु गतास्तेभ्यः स्थाने तथा ये स्रोतःसु लीनास्तथा ये शाखास्थिषु शाखादिनलकासु स्थितास्ते सर्वेऽनन्तरोक्तप्रकारविहितेन स्नेहेन क्लिन्नाः शुद्धियोग्यत्वमापादितास्ततो यथोक्तैः स्वेदैश्चतुर्भिर्यथायथं द्रवीकृत्य शाखादिभ्यः कोष्ठं नीताः ततः कोष्ठाद्वक्ष्यमाणाभिः शुद्धिभिर्निर्ह्रियन्ते बहिर्निष्कास्यन्ते । शाखास्थिग्रहणं स्थिषु दोषेषु त्यक्त्वा स्वेदयोग्यताप्रतिपत्त्यर्थम् । अथवा धातुगा ये च वृद्धाः कोष्ठाद्धातुषु गताः शाखास्थिगाः धातुष्ववस्थिताः कोपं याताः । अत्रास्थिग्रहणं प्राधान्यार्थम् । तस्मादन्येन स्वेदस्य दोषाणां द्रवीकृत्य कोष्ठानयनं प्रयोजनमिति भद्रम् ॥ २५ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने सप्तदशोऽध्यायः ॥ १७ ॥

हे०—स्वेदनस्य शोधनांगत्वमाह—अस्थिशब्देन मध्यभागो लक्ष्यते। धातुगानां स्रोतोलीनानां पुनरुपादानं स्वेदैकसाध्यज्ञापनार्थं, मार्गत्रयकथनेन हितेऽप्युक्ताः २५॥

इति हेमाद्रिटीकायामायुर्वेदरसायने स्वेदप्रकरणं नाम सामस्त्येन निरूपितम् ॥ १७ ॥

# अष्टादशोऽध्यायः ।



शुद्धिभिर्निर्ह्रियंत इत्युक्तं कास्ताः शुद्धय इति शुद्ध्यर्थं वमनविरेचनाधिकारः—

**अथाऽतो वमनविरेचनविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

स०—अथाऽत इत्यादि । वमनं च विरेचनं च तयोर्विधिः । शेषं पूर्ववत् ॥ १ ॥

प०—स्वेदविध्यध्यायादनन्तरं वमनविरेचनविधिरध्याय आरभ्यते । उक्तमिदमनन्तरं स्नेहक्लिन्नाः स्वेदैर्द्रवीकृत्य दोषाः सम्यक्शुद्धिभिर्निर्ह्रियन्ते इति शुद्धस्वरूपं दर्शयन्नाह—वमनमूर्ध्वदोषहरणम्। विरेचनमधोदोषहरणम् । तयोर्विधिर्विधानं यस्मिन् स्मर्यते ब्रह्माद्यैः स वमनविरेचनविधिस्तं व्याख्यास्यामः ॥ १ ॥

हे०—अथेति क्रमप्राप्तं वमनविरेचनविधिमध्यायं व्याख्यातुं प्रतिजानीते—वमनविरेचनयोर्लक्षणमुक्तं संग्रहे—दोषहरणमूर्ध्वभागं वमनाख्यम्, अधोभागं विरेचनाख्यम् उभयं वा मलविरेचनाद्विरेचनमित्युच्यते । तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाशीन्यौषधानि स्ववीर्येण हृदयमुपेत्य सौक्ष्म्याद्व्यवायित्वाच्च धमनीरनुसृत्य स्नेहेन मृदूकृतेऽतःशरीरे स्वेदोष्मणार्द्रदारुवद्वाष्पेण स्थूलाणुस्रोतोभ्यः सकलमपि दोषसंघातमौष्ण्यात्पुनर्विष्यंदयति । तैक्ष्ण्याद्विकाशित्वाच्च विच्छिन्दन्ति । स विष्यन्दविच्छिन्नो दोषसंघातः परिप्लुतस्नेहाक्तभाजनस्थ इवोदकांजालिरसजन्ननुश्रवणभावादामाशयमागम्योदानप्रणुन्नोऽग्निवाय्वात्मकत्वादूर्ध्वभागप्रभावाच्चौषधस्योर्ध्वं प्रवर्तते। सलिलपृथिव्यात्मकत्वादधोभागप्रभावाच्चौषधस्याधः उभयतश्चोभयगुणत्वादुभयभागप्रभावाच्चेति ॥ १ ॥

तत्र वमनविधिमाह—

**कफे विदध्याद्वमनं संयोगे वा कफोल्वणे ।**
**तद्वद्विरेचनं पित्ते ॥ २ ॥**

स०—श्लेष्मणि वमनं कुर्यात् । अत्र पूर्वं वमनकथनं विरेच्यते मंदकफस्तु सम्यगिति प्रतिपादनार्थम् । संयोगे च कफादिके वमनं कुर्यात् । पित्ते विरेचनं तद्वत् यथा कफे कफाधिकेऽऽके वा संयोगे च वमनं तथैव पित्ते पित्ताऽधिके वा संयोगे विरेचनं कुर्यादिति तद्वच्छब्दस्यार्थः ॥ २ ॥

प०—केवले कफे वमनं विदध्यात् कुर्यात् । अथवा संयोगे संसर्गे कफोल्बणे कफप्रधाने श्लेष्मपित्ताख्ये च वमनं विदध्यात् । तद्वत् विरेचनं पित्त इति । तेन तुल्यं तद्वत् । तेन कफेन तुल्यम् । यथा केवले कफे वमनं कफोल्बणे संयोगे वा वमनं तथैव केवले पित्ते विरेचनं विदध्यात् । संयोगे च पित्तोल्बणेऽपि पित्तश्लेष्माख्ये पित्तमारुताख्ये विरेचनं विदध्यात् ॥ २ ॥

हे०—वमनविरेचनयोः सामान्यतो विषयमाह—कफे इति । तद्वत्पित्तोल्बणे वा संयोगे ॥ २ ॥

**विशेषेण तु वामयेत् ।**
**नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः ।**
**कुष्ठमेहाऽपचीग्रंथिश्लीपदोन्मादकासिनः ।**
**श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः ॥ ३ ॥**

स०—विशेषेण पुनर्नवज्वराऽतिसारादीनूर्ध्वरोगपर्यन्तान्वामयेत् ॥ ३ ॥

प०—नवज्वरादीन् ऊर्ध्वरोगपर्यन्तान् विशेषेणातिशयेन वामयेत् । तेन हि परमेते क्षयमुपयान्ति । सलिलापगमेन निष्पन्नशाल्यादिवत् । तत्र नवज्वरः प्रथमोत्पन्नज्वरः । अधः पित्तासृगधोरक्तपित्तम् । अपची गण्डमाला । श्लीपदः पादरोगः । नवज्वरादयो विद्यन्ते येषां ते तथोक्ताः ॥ ३ ॥

हे०—वमनस्य विशेषतो विषयमाह—विशेषेणेति । ऊर्ध्वरोगा जत्रूर्ध्वरोगाः । संग्रहे तु विषपीतदष्टादिग्धविद्धविरुद्धाजीर्णान्नविषूचिकालसकाविपाकारोचकार्बुदमेदोगदापस्मारपाण्डुरोगा दोषभेदीयोक्ताश्च श्लेष्मव्याधय इत्यधिका युक्तिश्च एते हि परं वमनेन नाशमुपयांति सलिलोपगमादनिष्पन्नशाल्यादिवदिति ॥ ३ ॥

**अवम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः**
**बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः ॥**
**प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ।**
**ऊर्ध्वप्रवृत्तवाय्वस्रदत्तबस्तिहतस्वराः ॥**
**मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ।**
**उदावर्तभ्रमाऽष्ठीलापार्श्वरुग्वातरोगिणः ॥ ४ ॥**

स०—गर्भिण्यादयो वातरोगान्ता अवम्याः । अर्शांसि विद्यंते यस्य सोऽर्शसः । [illegible]त्यच् । त्र गर्भिण्या वमनाद्गर्भ[illegible] । क्षुधितस्य च वायुना क्षपितशरीर[illegible] स्यात् । बालादीनामौषधबलाक्षमत्वाद्[illegible] स्यात् । हृद्रोगादीनां हृदयोपरोधः । प्रसक्त[illegible] वायुरुत्क्षिप्य प्राणानपि हिंस्यात् । [illegible]रोगोद्भवश्चित्यः ॥ ४ ॥

प०—गर्भिण्यादयोऽवम्या न [illegible] । [illegible]त्वेषां हेतव उक्ताः । तत्र गर्भिण्या [illegible]गर्भभ्रंशश्च दारुणरोगप्राप्तिः स्यात् । [illegible] हृदयविकर्षणादूर्ध्वमधो वा [illegible] प्रवृत्तिः । अन्यकार्यव्यग्रस्योपधं न प्रवर्तेत [illegible] वा प्रवर्तनमयोगदोषान् कुर्यात् । [illegible] वायुप्रकोपः, रूक्षाशनप्रियस्य वायुना कुपितेनोपरतात् बलक्षयः स्यात् । तथातिदीप्ताग्नेर[illegible] नित्यानामायासेन वा मुक्तान्नस्य [illegible] भूयः क्षपणाद्रूक्षातिप्रवृत्तिः । क्षीणादीनां [illegible]हृल्लोपरोधः स्यात् । अन्तः [illegible] च । प्रसक्तच्छर्दिरूर्ध्वरक्तपित्तयोर्[illegible] प्राणान् हरेत् । रक्तं [illegible]तिप्रवर्तेत । [illegible]स्थापितानुवासितानामूर्ध्वं [illegible]प्रवृत्तिः । [illegible] कोष्ठस्य दुश्छर्दनस्यातिमात्रप्रवाहणे [illegible] कोष्ठ समुत्कटैर्दोषैर्विसर्पस्तम्भजाड्यवै[illegible] मरणं वा हृद्रोगिणां हृदयोपरोधः । [illegible]भिरार्तानां मर्दिताभिश्च यथास्वमामयवृद्धिर्मरणं वा । क्रिमिकोष्ठस्यापानेनाधःपूर्ववमनविनिर्गतैः क्रिमिभिरतिबहुत्वादशेषानिःसारेण हृदयमतिकर्षद्भिः छर्दिषोऽतिप्रवृत्तिः स्यात् ॥ ४ ॥

हे०—अवम्यानाह—अवम्या इति । प्रसक्तवमथुश्छर्धनुबन्धनात् । क्रमिकोष्ठी क्रमिबहुलकोष्ठः, उर्ध्वप्रवृत्तो वायुरस्रं च यस्य । विषादिभ्य ऋते विषपानादौ तु गर्भिण्यादयोऽपि वम्याः।विरुद्धाभ्यवहार आनूपमामिषं माषेत्याद्युक्तः।संग्रहे तु तत्र गर्भिण्या गर्भव्यापदामगर्भभ्रंशाच्च दारुणरोगप्राप्तिः स्यात्। सुकुमारस्य हृदयविकर्षणादूर्ध्वमधो वा रुधिरप्रवृत्तिः । अन्यकार्यव्यग्रस्यौषधं न प्रवर्तते कृच्छ्रेण वा प्रवर्तमानमयोगाद्दोषान् कुर्यात् । रूक्षस्य वायुरंगग्रहणं रूक्षाशनप्रायस्य वायुना क्षपितदोषत्वाद्बलक्षयः स्यात् । तथातिदीप्ताग्नेरग्निबलेन भाराध्वकर्मनित्यपानक्रान्तानां प्रयासेन क्षतस्य भूयः क्षपणाद्रक्तातिप्रवृत्तिः । क्षीणादीनामौषधबलाक्षमत्वाद्देहबलोपरोधोऽतः क्षतभयं च । प्रसक्तच्छर्द्यूर्ध्वरक्तपित्तयोरुदानमुत्क्षिप्य प्राणान् हरेत् । रक्तं चाति प्रवर्तयेत् । ऊर्ध्ववातास्थापितानुवासितानामूर्ध्ववातादिप्रवृत्तिः । संवृतकोष्ठस्य दुश्छर्दस्य चातिमात्रप्रवाहणादन्तः कोष्ठे समुत्क्लिष्टैर्दोषैर्विसर्पस्तम्भजाड्यवैचित्यानि मरणं वा । हृद्रोगिणो हृदयोपरोधः उदावर्तादिभिरार्तानां मर्दितादिभिश्च यथास्वमामयवृद्धिर्मरणं वा क्रमिकोष्ठस्यास्थापनेनाधः पूर्वमनिर्हृतैः क्रमिभिरिति बहुत्वादशेषानिःसरणेन हृदयमतिकर्षद्भिश्छर्दिषोऽतिप्रवृत्तिः स्यादिति । उदावर्तादयोऽनु हतस्वरादयः ॥ ४ ॥

किं सर्वदैव गार्भिण्यादयोऽवम्या उत कस्यांचिदवस्थायां वम्या इत्याह—

**ऋते विषगराऽजीर्णविरुद्धाऽभ्यवहारतः ॥ ५ ॥**

स०—विषाद्यभ्यवहारमंतरेण । विषाद्यभ्यवहारे तु वम्यात एवं ॥ ५ ॥

प०—किं सर्वदैव गर्भिण्यादयो वम्या उत कस्यांचिदवस्थायां वम्या इत्याह—ऋतेऽन्यत्रविषगराजीर्णविरुद्धाभ्यवहारेभ्यः शीघ्रतरकारित्वादेषाम् । तेन विषगराजीर्णविरुद्धभक्षणं वर्जयित्वाऽन्यत्र नियमो गर्भिण्यादीनाम् । तेन मृदुवमनं तत्र प्रयोज्यमिति ॥ ५ ॥

**प्रसक्तवमथोः पूर्वं प्रायेणामज्वरोऽपि च ।**
**धूमांतैः कर्मभिर्वर्ज्याः सर्वैरेव त्वजीर्णिनः ॥६॥**

स०—प्रसक्तवमथोः पूर्वस्थिता एकादशातुरा दुर्बलांतास्तथाऽऽमज्वरिणश्च ते सर्वे धूमांतैः कर्मभिर्वर्ज्या न केवलं वमनेनैव । धूमग्रहणं गंडूषादिकर्मणोऽपि परिहारार्थम् । प्रायोग्रहणमष्टमासाया गार्भिण्या निरूहा न वर्ज्या इति सूचनार्थं तथा सद्योभुक्तस्य ज्वरितस्य सतो वमनानुज्ञानार्थम् । तु पुनरजीर्णिनः पुरुषा वमनादिभिर्गंडूषादिभिश्च वर्ज्याः । सद्योऽजीर्णिनां हि वमनमनुज्ञातमेव ॥ ६ ॥

**प०—अत्र प्रसक्तवमथोः प्रसक्तच्छर्दिषः पुंसो ये पूर्वे आतुरा अवम्यत्वेन निर्दिष्टाः गर्भिण्यादयो दुर्बलपर्यन्तास्ते सर्वकर्मभिर्धूमान्तैर्वक्ष्यमाणैर्वर्ज्याः परिहर्तव्याः । न केवलमेतैर्धूमान्तैर्वर्ज्याः यावत् ज्वरोऽपि च धूमान्तैः कर्मभिः वर्ज्यः । नवज्वरस्यामदोषः स्तम्भभयादिति । अजीर्णिनः पुनः सर्वैरेव कर्मभिर्विरेकबस्तिनस्यधूमगण्डूषाश्चोतनाञ्जनतर्पणपुटपाकान्तैर्वमनवर्गैर्वर्ज्या आमदोषभयात् ॥ ६ ॥**

हे०—प्रसंगाद्गर्भिण्यादिष्वेकादशसु नवज्वरे च विरेचनबस्तिनस्यधूमान्निषेधति—प्रसक्तवमथोरिति । अजीर्णिनां सर्वाणि कर्माणि निषेधति—सर्वैर्विरेचनाद्यैर्गंडूषांतैश्च वमनं तु विशेषतो विधानात्कर्तव्यं, संग्रहे तु अजीर्णी तु सर्वैरेव वमनवर्ज्यैरामदोषभयान्नवज्वरश्च दोषस्तम्भभयादिति ॥ ६ ॥

**विरेकसाध्या गुल्मार्शोविस्फोटव्यंगकामलाः ।**
**जीर्णज्वरोदरगरच्छर्दिप्लीहहलीमकाः ॥**
**विद्रधिस्तिमिरं काचः स्यंदः पक्वाशयव्यथा ।**
**योनिशुक्राशया रोगाः कोष्ठगाःक्रमयो व्रणाः ॥**
**वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ।**
**वम्याश्च कुष्ठमेहाद्याः ॥ ७ ॥**

स०—विरेकेण साध्या उपक्रम्या गुल्मादयः शकृद्ग्रहपर्यंताः । पक्वाशये व्यथा पक्वाशयव्यथा । वम्याश्चेति चः समुच्चये । ये च कुष्ठाद्या ऊर्ध्वरोगपर्यंता वमनार्हा उक्तास्ते च विरेच्याः ॥ ७ ॥

प०—गुल्मादयः शकृद्ग्रहपर्यन्ता विरेकसाध्याः विरेचनसाध्यास्तथा वम्या वमनार्हाः । कुष्ठमेहाद्या ऊर्ध्वरोगपर्यन्ता विरेकसाध्या विरेचनसाध्याः। तेन तत्र हलीमकः पाण्डुरोगे वक्ष्यमाणः। एते हि परं विरेचनेन नाशमुपयान्ति । अग्न्यपनयेनाग्निगृहतापवत् ॥ ७ ॥

हे०—विरेचने विशेषतो भयमाह—विरेकसाध्या इति । संग्रहे तु भगन्दराक्षिपाकक्षारामिदग्धशिरःशूलोदावर्ता दोषभेदीयोक्ताश्च पित्तव्याधय इत्यधिकं युक्तिश्च । एते हि परं विरेचनेन नाशमुपयान्त्यग्न्यपनयनेनाग्निगृहतापवदिति ॥ ७ ॥

न तु रेच्यो नवज्वरी ।
अल्पाऽग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः ।
सशल्यास्थापितक्रूरकोष्ठाऽतिस्निग्धशोषिणः ८

स०—न तु रेच्य इति । तुरवधारणे । नवज्वरी नैव रेच्यः तस्य हि विरेचनमपक्वान् दोषान् निर्हरद्वातकोपायैव स्यात् । यक्ष्मादीनां त्ववस्थावशान्मृदुविरेच्यत्वमनुज्ञातमेव तथाऽपि चाऽऽध्मानगुरुताशूलस्तैमित्यकारिणीत्यादिनाऽतीसारस्याऽपि मृदुविरेचनमनुज्ञातं नैवं नवज्वरस्य स्वल्पविरेच्यत्वं कदाऽपि । अल्पाऽग्न्यादयः शोष्यन्ता न विरेच्याः । तत्राऽल्पाग्निरबलत्वाद्भेषजवेगं न सहते । अधोगरक्तपित्ताऽतिसारिणावतिप्रवृत्त्या हन्यात् । क्षतपायोः प्राणापहारकारिणी रुक् स्यात् । सशल्यस्य क्षते वायुराश्रितो जीवितं हन्यात् । आस्थापितस्य भेषजवेगासहनाद्बलोपरोधः स्यात् । क्रूरकोष्ठस्यौषधाद्धेतो दोषा ह्यप्रवर्तमाना हृदयशूलपर्वभेदाऽऽनाहच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः अतिस्निग्धस्याऽतियोगाय स्यात् । शोषिणः क्षीणधातुतया मलबलत्वं तदभावाद्देहविनाशनं स्यादिति ॥८॥

प०—नवज्वरादयः शोषपर्यन्ता अविरेच्याः । शोषोऽत्र राजयक्ष्मा । तत्र नवज्वरस्यापक्वान् दोषान् निर्हरेत् वातमेव प्रकोपयेत् । अतीसार्यधोगरक्तपित्तानतिप्रवृत्त्या हन्यात् । क्षतगुदस्य गुदेऽपानोपरोधकरीं रुजं जनयेत् । लङ्घितादयो भेषजवेगं न सहेरन् । राजयक्ष्मार्तस्य क्षीणधातुतया स्वल्पबलत्वेन तदभावाद्देहनाशः स्यात् । मदात्ययार्तस्य मद्यक्षीणे देहे वायुप्राणोपरोधो य आत्मा तस्य पुरीषाशये निचितो वायुः विसर्पन् सहसाऽतिप्रतरसाध्मानं मरणं वा जनयेत् । सशल्याभिहतयोः क्षते वायुराश्रितः जीवितं हिंस्यात् । अतिस्निग्धस्यातियोगो भवेत् । क्रूरकोष्ठस्यौषधोद्धता दोषा ह्यप्रवर्तमानादाहशूलपर्वभेदानाहच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणाग्निहन्युः । गर्भिण्यादीनां पूर्वोक्तो दोषः स्यात् ॥ ८ ॥

हे०—अविरेच्यानाह—न तु रेच्य इति । क्षतपायुः क्षतगुदः, सशल्योऽनुद्धृतशल्यः, आस्थापितः कृतनिरूहः, शोषी राजयक्ष्मी । संग्रहे तु तत्र नवज्वरस्य विपक्वान् दोषान् न निर्हरेत् वातमेव च कोपयेत् । अतिसार्यधोगरक्तपित्तानतिप्रवृत्त्या हन्यात् । क्षतगुदस्य गुदे प्राणोपरोधकरीं रुजं जनयेत् । लङ्घितादयो भेषजवेगं न सहेरन् । राजयक्ष्मार्तस्य क्षीणधातुतया मलबलत्वात्तदभावाद्देहनाशः स्यात् । मदात्ययार्तस्य मद्यक्षीणे देहे वायुः प्राणोपरोधाय । आध्मातस्य पुरीषाशये निचितो वायुर्विसर्पन् सहसा तीव्रतरमाध्मानं मरणं वा जनयेत् । सशल्याभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात् । अतिस्निग्धस्यातियोगो भवेत् । क्रूरकोष्ठस्यौषधोद्धता दोषा ह्यप्रवर्तमाना हृदयशूलपर्वभेदानाह—छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः । गर्भिण्यादीनां पूर्वोक्तो दोषः स्यादिति पूर्वोक्तो वमनोक्तः ॥ ८ ॥

अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ।
श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः ॥
निशां सुप्तं सुजीर्णान्नं पूर्वाह्णे कृतमंगलम् ।
निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥
वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः ।
आकंठं पायितान्मद्यं क्षीरमिक्षुरसं रसम् ॥
यथाविकारविहितां मधुसैंधवसंयुताम् ।
कोष्ठं विभज्य भैषज्यमात्रां मंत्राभिमंत्रिताम् ॥
ब्रह्मदक्षाश्विरुद्रेंद्रभूचंद्रार्काऽनिलाऽनलाः ।
ऋषयः सौषधिग्रामा भूतसंघाश्च पांतु वः ॥
रसायनमिवर्षीणाममरगणामिवाऽमृतम् ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥
ॐनमो भगवते भैषज्यगुरवे वैदूर्यप्रभराजाय ।
तथागतायाऽर्हते सम्यक्संबुद्धाय । तद्यथा ।
ॐभैषज्ये भैषज्ये महाभैषज्ये समुद्गते स्वाहा ।
प्राङ्मुखं पाययेत् ॥ ९ ॥

स०—एतत् पूर्वोक्तं तस्मात्तस्मात्साधारणेऽनन्तरं साधारणे श्रावणादौ काले यथाविधि स्नेहस्वेदाध्यायोदितेन क्रमेण स्निग्धस्विन्नमातुरं भैषज्यमात्रां प्राङ्मु

खं पाययेदिति वक्ष्यमाणेन संबंधः । श्वोवम्यं प्रातर्वमनार्हम् । वम्यमित्यर्हे कृत्यतृचश्चेत्यर्हार्थे पोरदुपधादिति यत् । उत्क्लिष्टः स्थानाच्चलितः कफो यस्य तमुत्क्लिष्टकफम् । कैः । मत्स्यादिभिः । अंतर्भावितण्यर्थोऽत्र । उत्क्लेशितकफमित्यर्थः । तथा रात्रिं सुप्तम् । कालाध्वनोरिति द्वितीया । अत एव सकलनिशास्वापोऽत्र लक्ष्यते । सुष्ठु जीर्णमन्नमाहारो यस्य तम् । कदा पाययेत् । प्रातः काले । किंभूतम् । कृतं मंगलं स्वस्त्ययनादि यस्य तम् । कृतमंगलमित्युपलक्षणार्थम् । कृतदेवद्विजाग्निगुरुवृद्धार्चनमपीति द्रष्टव्यम् । तथा निरन्नमकृताहारमातुरवशात् किंचित्स्निग्धम् । कथमित्याह । पेयया पीतसर्पिषम् । वृद्धेत्यादि । अथ असौ वृद्धो वा बालो वा दुर्बलो वा क्लीबः खेदासहिष्णुर्वा भवति भीरुर्वा कातरो भवति । तदा रोगानुरोधादाकंठमतिमात्रं मद्यक्षीरादिकं पाययेत्तदनंतरं भैषज्यमात्रां पाययेत् । संग्रहेऽप्युक्तम् । भीरुकृशबालसुकुमारत्वाद्दोषानुरोधेनाऽऽकंठं पीतयूषेक्षुरसक्षीरमांसरसमद्यतुषोदकयवागूमंडान्यतममिति किंभूतां मात्राम् । यथाविकारविहितां रोगानुसारेण साधितां तथा मधुसैंधवाभ्यां युताम् । किं कृत्वा । कोष्ठं मृदुमध्यक्रूरलक्षणं विभज्य विचार्य । श्लेष्माधिक्येन मृदुत्वं श्लेष्ममध्यत्वेन मध्यत्वं श्लेष्महीनत्वेन क्रूरत्वमिति मानं कोष्ठस्य बोध्यम् । तथा चोक्तम् । श्लेष्मोत्तरं छर्दयते ह्यदुःखमिति । भैषज्यमात्रां किंभूताम् । मंत्राभिमंत्रिताम् । तानेव मंत्रानाह । ब्रह्मेत्यादिग्रंथेन ॥ ९ ॥

प०—अथेति मङ्गलार्थे । साधारणे काले श्रावणे कार्तिके चैत्रे मासि सम्यक्स्निग्धस्विन्नं पुरुषं यथाविध्यनतिक्रमेण श्वोऽन्यस्मिन्नहनि अवश्यं छर्दयितव्यमेकरात्रस्नेहादुपरतं भैषज्यमात्रां प्राङ्मुखमातुरमुदङ्मुखं वा वैद्य इत्येवमभिमन्त्र्य पाययेदित्यक्षरयोजना । कीदृशं श्वोवम्यमुत्क्लिष्टकफम् । उत्क्लिष्टः कफो यस्य । स्वस्थानात् प्रच्यावितश्लेष्मा । कैः मांसमाषतिलादिभिः । आदिग्रहणात् क्षीरदधितिलपललशालिभिर्भोज्यविशेषैः । निशासुप्तं रात्रौ सुखसुप्तं सुजीर्णान्नं सुष्ठुपरिणताहारम् । पूर्वाह्णे अह्नः पूर्वे भागे कृतमङ्गलं कृतमनुष्ठितं मङ्गलं शुभसूचकं यस्य । यथा निरन्नमकृताहार स्निग्धं वा किञ्चित्स्नेहितं पेयया वा पिषं घृतमात्रां पीतवन्तं तथाच बालादीन् नुरोधेन कण्ठं यावत् सौहित्यं कृत्वा म पायितान् । तथा विकारविहितां यथा लिपतां मधुसैन्धवाभ्यां मिश्रितां संयुतां विभज्य मृदुमध्यक्रूरभेदेन मृदुकोष्ठे मृद्वीं भै मात्रां मध्ये मध्यां क्रूरे तीक्ष्णां महतीं मन्त्र रक्षितां ब्राह्मणप्रयुक्ताशीर्भिर्मन्त्रितां तथा क्षाश्विन्यादिभिर्मन्त्रैः । ब्रह्मा च दक्षश्चा च रुद्रश्चेन्द्रश्च भूश्चन्द्रश्चार्कश्चानिलश्चानलश्च ब्रह्माद्यनिलान्ताः पान्तु रक्षन्तु । तथा न केव यावदृषयो मुनयः सौषधग्रामाः सहौषधिभि वर्तन्ते ये तथाभूतसङ्घाः असुरगन्धर्वकिन्नरप्रभृ इदं च भैषज्यमस्तु भवतु ते तव किंच यनमिव ऋषीणां यथर्षीणां च्यवनप्रभृतीनां यनम् । तथाऽमराणां देवानां यथामृतम् । माश्च नागानामनन्तवासुकिकुलिकप्रभृतयः । सर्वेषां नागानां सुधा सुलभा । सुधा अमृ प्राङ्मुखमातुरं पाययेत् ॥ ९ ॥

हे०—वमनविधिमाह—अथेति । कृतस्नेहनादिव प्राङ्मुखं भैषज्यमात्रां पाययेदित्यन्वयः । श्वोवम्या वमनदिनात्पूर्वदिने उत्क्लिष्टकफम् । सम्यक्स्निग्ध रन्नम्, ईषत्स्नेहश्चेत् पेयया पीतसर्पिषम् । वृद्धादि तमश्चेद्रोगानुसारेण मद्यादिष्वन्यतममाकंठं पायितान् । त्यादिस्वाहांतेन मंत्रेणाभिमंत्रितमयं चौषधपानवि शेषपरिहारेण सर्वेष्वौषधेषु ज्ञेयः । संग्रहे तु स्न लिप्तं स्रग्विणमहतवाससं देवताग्निद्विजगुरुवृद्धवैद्याना कृतहोमबलिमंगलप्रायश्चित्तस्वस्तिवाचनं जानुसमसं सोपधानापाश्रयासनोपविष्टं पीततक्रयूषतुषोदकयव डान्यतमं नक्षत्रतिथिकरणमुहूर्तोदये प्रशस्ते इति ॥

पीतं मुहूर्तमनुपालयेत् ।
तन्मनाः ॥ १० ॥

स०—भैषज्यमात्रां पीतं संतमातुरं मुहूर्तं त वमिगतचित्तोऽनुपालयेत् प्रतीक्षेत ॥ १० ॥

प०—पीते सत्यौषधे तन्मनाः तद्गतमानसो नाडिकाद्वयमनुपालयेत् अपेक्षेत ॥ १० ॥

हे०-पानानंतरं विधिमाह-पीत इति । तन्मना वमनैकचित्तः ॥ १० ॥

जातहृल्लासप्रसेकश्छर्दयेत्ततः ।
अंगुलिभ्यामनायस्तो नालेन मृदुनाऽथवा ॥
गलताल्वरुजन्वेगानप्रवृत्तान् प्रवर्तयन् ।
प्रवर्तयन् प्रवृत्तांश्च जानुतुल्यासने स्थितः ११ ॥

स०--ततोऽनंतरं संजातहृल्लासप्रसेकः सन् छर्दयेत् । हृल्लासो हृदुपरोधः । प्रसेको निष्ठीवनम् । कथं वमेत् । अंगुलिभ्यां द्वाभ्याम् । यद्वा कोमलेन सुवर्चलैरंडादिजेन नालेन मृदुना वमेत् । कीदृशः अनायस्तोऽनायासेनेत्यर्थः । अपरं गलताल्वपीडयन् तथाऽप्रवृत्तान् वेगान् प्रेरयन् प्रवृत्तांश्च प्रवर्तयन् । जानुप्रमाणे पीठे स्थितः ॥११॥

प०-जातहृल्लासः सन् स्वेदप्रादुर्भावेन दोषप्रविलयमापाद्यमानं रोमहर्षणेन यतः स्थानेभ्यः प्रविचलितेभ्यः प्रविचलितं कुक्ष्याध्मानेन कुक्षिमनुवृत्तं क्रमाद् हृदयोपरोधं हृल्लासप्रसेकेनोर्ध्वमभिमुखीकृतं बुद्ध्वा ततो मुहूर्तमनुपालनादूर्ध्वं छर्दयेत् । जातौ हृल्लासप्रसेकौ यस्य स प्रसक्तं निष्ठीवनं प्रसेककथनं छर्दयेत् । अङ्गुलिभ्यां द्वाभ्यामनायस्तो नातिसततव्यायामो नालेन नीलोत्पलादिप्रभवेन गलताल्वरुजन् अविमृद्यन्न बाधयेत् । तथा वेगान्नाप्रवृत्ताननागतानुदीरयन् प्रवृत्तानागतान् प्रवर्तयन् पुरुषो जानुतुल्यासने स्थितः सन् वमेत् ॥ ११ ॥

हे०-प्रवृत्तवमनस्य कृत्यमाह-जातहृल्लासेति । अंगुलीभ्यां संहताभ्यां मृदुना नालेन प्रवृत्तान् सविबंधान् प्रवर्तयन् नत्वतिप्रवृत्तान् प्रवर्तयन् छर्दयेदित्यन्वयः । अनायास्त आयासरहितः पृष्ठे च प्रतिलोमतास्त्रिकादारभ्योर्ध्वं प्रपीडयेत् । संग्रहे तु स यदा जानीयात्स्वेदप्रादुर्भावेन दोषं प्रविलयमापद्यमानं रोमहर्षेण च स्थानेभ्यो विचलितं कुक्ष्याध्मानेन कुक्षिमनुसृतं क्रमात् । हृदयोपमर्दहृल्लासास्यसंस्रवणैश्चोर्ध्वमभिमुखीभूतम् । अथ समुपस्थापितानेकप्रतिग्राहो विवृतोष्ठतालुकंठो नातिमहता व्यायामेन वेगानुदीरयन्वमेत् ॥ ११ ॥

उभे पार्श्वे ललाटं च वमतश्चाऽस्य धारयेत् ।
प्रपीडयेत्तथा नाभिं पृष्ठं च प्रतिलोमतः १२ ॥

स०--अपरमस्य नरस्य वमनं कुर्वतो द्वे पार्श्वे ललाटं च धारयेत् । परिचारक इति शेषः । प्रतिलोमतोऽसन्मार्गेण ॥ १२ ॥

प०-अस्यातुरस्य वमत उभे पार्श्वे ललाटं धारयेत् । तथा नाभिं प्रपीडयेत् प्रतिलोमत्वाच्च पृष्ठमनुमर्दयेत् । ऊर्ध्वमुखैः करैः ॥ १२ ॥

हे०-नात्युन्नतो नात्यवनतः पार्श्वावृतो वा तत्राप्युन्नतस्य पृष्ठहृदयपीडा भवति । अत्यवनतस्य शिरःकोष्ठपीडा, पार्श्वावृतस्य पार्श्वकोष्ठहृदयोर्ध्वजत्रुपीडेति १२॥

कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ।
वमेत् स्निग्धाम्ललवणैः संसृष्टे मरुता कफे ।
पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत्१३

स०-कफे तीक्ष्णोष्णकटुकैर्द्रव्यैर्वमेत्।पित्ते स्वादुशीतैर्द्रव्यैर्वमेत् । स्निग्धाम्ललवणैर्वायुयुक्ते कफे वमेत् । कियंतं कालं वमेदित्याह । यावत् पित्तस्य दर्शनं कफांतो वा तावद्वमेत् ॥ १३ ॥

प०-इत्येवं कफे तीक्ष्णोष्णकटुकैरौषधैर्वमेत छर्दयेत् । तथा पित्ते पित्तयुक्ते कफे स्वादुहिमैर्मधुरैः शीतवीर्यैर्द्रव्यैर्वमेत् । मरुता संसृष्टे वायुना संसृष्टे कफे स्निग्धाम्ललवणैर्द्रव्यैर्वमेत् । तावद्वमेद् यावत् पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणः कफस्य वा छेदः ॥ १३ ॥

हे०-दोषभेदेन वमनद्रव्यभेदमाह-कफे इति । इति उक्तेन प्रकारेण । वमनावधिमाह-पित्तस्येति ॥ १३ ॥

हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ॥
वमेत्पुनः पुनः ॥ १४ ॥

स०-हीनवेगो नरः कणाधात्रीसिद्धार्थलवणोदकैरसकृद्वमेत् ॥ १४ ॥

प०-हीनवेगोऽल्पवेगः पुमान् पिप्पल्यामलकसर्षपकल्कलवणोदकैः पुनः पुनर्भूयो भूयो वमेत छर्दयेत् ॥ १४ ॥

हे०-हीनवेगस्यौषधांतरमाह-हीनवेग इति । पिप्पल्यादिमिश्रमुदकं पुनः पुनः पीत्वा वमेत् । संग्रहे तु

प्रकृतिवमनासहिष्णुर्दुर्बलं स्वयं वा विश्रम्यासात्म्यवीभत्सदुर्दर्शादुर्गंधानि वमनानि विदध्यात् । विपरीतानि विरेचनानीति ॥ १४ ॥

तत्र वेगानामप्रवर्तनम् ।

**प्रवृत्तिः सविबंधा वा केवलस्यौषधस्य वा ॥ अयोगस्तेन निष्ठीवकंडूकोठज्वरादयः ॥ १५ ॥**

स०—तत्र तेषु सम्यग्योगाऽतियोगायोगेषु मध्या-द्वेगानामप्रवर्तनमसावयोगः । सविबंधा च या प्रवृत्तिः सोऽप्ययोगः । केवलस्य दोषादिरहितस्यौषधस्य या प्रवृत्तिः सोऽप्ययोगः । तेनाऽयोगेन निष्ठीवनादयः स्युः ॥ १५ ॥

प०—तत्र वमनं वेगानामप्रवर्तनम् । वेगजातं किञ्चिन्न प्रत्यागच्छति । अथवा सविबन्धा प्रवृत्तिः। केवलस्य शुद्धस्य भेषजस्यौषधस्य प्रवृत्तिर्दोषेण विना केवलमौषधं प्रत्यागच्छति । अयमयोगो वमनस्य । तेनायोगेन निष्ठीवनादयो जायन्ते । निष्ठीवः श्लेष्मप्रसेकः । आदिग्रहणादरोचकगौरवानाहस्फोटालस्यशूलप्रतिश्यायरोमहर्षादयोऽपि भवन्ति ॥ १५ ॥

हे०—हीनयोगलक्षणमाह--तत्रेति । हीनयोगजात्रोगानाह—तेनेति । आदिशब्दादरोचकगौरवाध्मानस्फोटालस्यशूलप्रतिश्यायरोमहर्षशोफादयः ॥ १५ ॥

**निर्विबंधं प्रवर्तंते कफपित्ताऽनिलाः क्रमात् । सम्यग्योगे ॥ १६ ॥**

स०—सम्यग्योगे कफपित्ताऽनिलाः क्रमेण निर्विबंधं निःसंगं प्रवर्तंते ॥ १६ ॥

प०—सम्यग्योगलक्षणं पुनर्निर्विबन्धं निःसङ्गं कृत्वा प्रवर्तन्ते कफादयः । क्रमात् पूर्वकफो निर्विबन्धेन प्रवर्तते । ततः पित्तं ततो वायुः क्रमेण । तथा नातिमहती व्यथा मनःप्रसादादयो जायन्ते १६

हे०—सम्यग्योगलक्षणमाह—निर्विबंधमिति । नातिमहती व्यथा स्वयं चावस्थानं ततश्च स्वस्थता मनःप्रसादः स्वरविशुद्धिररोचकादिवैपरीत्यं चेति ॥ १६ ॥

**अतियोगे तु फेनचंद्रकरक्तवत् । वमितं क्षामता दाहः कंठशोषस्तमो भ्रमः । घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात्॥**

स०—अतियोगे पुनः फेनचंद्रकरक्तवद्वमितं भव[ति ।] फेनश्च चंद्रकश्च रक्तं च तानि विद्यंते यस्य व[मितस्य] तस्य तदेवम् । तथा क्षामतादयो भवंति । [त]स्तिमिरदर्शनं दारुणाश्च वातरोगास्तथा मृत्युर्भवे[त्] जीवाख्यस्य शोणितस्य निर्गमान्निष्कासात् ॥ १[७]

प०—अतियोगे पुनर्वमितस्य वमितं छर्दितं फेन[च]न्द्रकरक्तवद्भवति । फेनचन्द्रकरक्तानि विद्[यन्ते] यस्य वमितस्य तत्फेनचन्द्रकरक्तवद्वमितम् । त[था] क्षामता क्षामत्वं भवति । तथा दाहः सर्वाङ्गिण[ः] कण्ठशोषः तमोमोहः । घोरा वाय्वामयाः अ[...]तकर्णशूलवाक्सङ्गजिह्वाप्रवेशनिर्गमाक्षिव्यावृत्तहनु[...] संहननविसंज्ञतानिद्रालस्यादयः । अथवा जीवशो[णि]तप्रवृत्त्या मरणम् । जीवाख्यस्य रक्तस्य लक्ष[ण]ं वक्ष्यमाणं वमनव्यापदि ॥ १७ ॥

हे०—अतियोगलक्षणमाह--अतियोग इति । फेनायुक्तं वमितं, चंद्रिकामयूरपिञ्छेष्विव तमः अज्ञान भ्रमश्चक्राधिरूढस्येव । जीवशोणितम् ओजः । संग्रहे स्वरक्षयमोहोन्मादमूर्छाशिरःशून्यताहृदयधूमायनगात्रसुप्तितृष्णोर्ध्वानिलप्रकोपकर्णशूलार्दितवाक्संगहनुसंहनन जिह्वाप्रवेशनिर्गमाक्षिव्यावृत्तिविसंज्ञतानिद्राबलाग्निहानयो भवंतीति ॥ १७ ॥

**सम्यग्योगेन वमितं क्षणमाश्वास्य पाययेत् । धूमत्रयस्यान्यतमं स्नेहाचारमथाऽऽदिशेत् १८**

स०—सम्यग्योगेन वमिते सति मुहूर्तमाश्व[ास्य] शीतवातादिना धूमत्रयस्य स्निग्धमध्यतीक्ष्णाख्यस्[य]ऽन्यतममेकं पाययेद्वैद्यः । अथाऽनंतरं स्नेहाचारमुष्[णो]दकोपचारी स्यादित्यादिक्रमादिशेत् ॥ १८ ॥

प०—सम्यग्योगेन वमिते सति पुंसि सुधौतपा[णि]पादमुखे क्षणं मुहूर्तमाश्वास्य विश्रम्य व्यञ्जनादि[ना] सप्राणं कृत्वाऽनन्तरं धूमत्रयस्य धूमविधौ वक्ष्यमा[ण]स्य तीक्ष्णमृदुमध्यभेदभिन्नस्यान्यतमं सामर्थ्[यं] यथायोग्यं तीक्ष्णमृदुमध्यं पाययेत् । अथानन्[तरं] स्नेहाचारः सुखोष्णोदकोपचारी स्यादित्यादिकमा[दि]शेत् कथयेत् ॥ १८ ॥

हे०—सम्यग्वांतस्योपचारमाह—सम्यग्योगेनेति । धू[म]त्रयस्य स्निग्धमध्यतीक्ष्णभेदात् । संग्रहे तु सुवि[...]

क्षितपाणिपादमुखं धूमं पीत्वा पुनरुपस्पृष्टोदकं संमानित-सुरभितांबूलं निर्वातागारशय्यास्थितमिति ॥ १८ ॥

**ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखांबुना।**
**भुंजानो रक्तशाल्यन्नं भजेत्पेयादिकं क्रमम् १९॥**
**( पुराणरक्तशालीनामस्नेहलवणोषणम्।**
**भुञ्जानोऽन्नमुपेक्षेत पेयादिकमिमं क्रमात् ॥ )**

स०--तदूर्ध्वं सायमपराह्णे प्रभाते पूर्वाह्णे वा बुभुक्षित उष्णोदकेन स्नातो रक्तशाल्यन्नं भुंजानः पेयादिकं क्रमं भजेत् ॥ १९ ॥

प०-ततोऽनन्तरं कृतवमनः सन् सायंदिवसपरिणामेऽथवा द्वितीयेऽहनि प्रभाते प्रत्युषसि वमनेन स्वस्थानप्रच्युतदोषस्य स्वस्थानस्थापनार्थं क्षुद्वान् उत्पन्नबुभुक्षः स्नातः सुखोदकपरिषिक्तो रक्तशाल्यन्नं भुञ्जानः पेयादिकं क्रममेवं वक्ष्यमाणं भजेत् सेवेत । न केवलं पेयादिवृत्तिरेव सौख्याय यावत्पुराणानां रक्तशालितन्दुलानां सुस्निग्धमन्नमस्नेहलवणकटुकं वा द्रवप्रायमुष्णोदकानुपानं सायं प्रातरुपयुञ्ज्यादग्निबलमपेक्ष्य क्षुधं च विधिममुमनुसरेत् ॥ १९ ॥

हे०--सम्यग्वांतः पेयादिक्रमेण भुंजीतेत्याह--तत इति। दीप्ताग्निश्चेत्सायं, मंदाग्निश्चेत्परदिने, प्रातः पेयादिकं क्रमं भजेत्। पेयादिक्रमेण रक्तशाल्यन्नं भुंजीत ॥ १९ ॥

तमेव पेयादिकं क्रममाह--

**पेयां विलेपीमकृतं कृतं च**
**यूषं रसं त्रीनुभयं तथैकम्।**
**क्रमेण सेवेत नरोऽन्नकालान्**
**प्रधानमध्यावरशुद्धिशुद्धः ॥ २० ॥**

स०--प्रधाना च मध्या चाऽवरा च प्रधानमध्यावराः। प्रधानमध्यावराश्च ताः शुद्धयश्च ताभिः शुद्धो नरः क्रमेण यथासंख्यं पेयां त्रीनन्नकालान् द्वावन्नकालावेकमन्नकालं भजेदिति। विलेप्यादिष्वप्येवं योज्यम्। एतदेव स्पष्टीकृत्योच्यते। यथा। प्रधानशुद्ध्या शुद्धो नरो द्वावन्नकालावेकस्मिन् दिने द्वितीयेऽहन्येककाले च पेयां भजेदिति। द्वितीयेऽहन्येकमन्नकाले विलेपीं तृतीये चाऽहनि द्वावन्नकालौ विलेपीमेव। चतुर्थे दिवसे अकृतं मुद्गयूषमसंस्कृतमन्नं कृतं शुण्ठ्यादिसंस्कृतं यूषं च द्वावन्नकालौ भजेत्। एवं पञ्चमेऽह्नि प्रथमेऽन्नकाले च। चः समुच्चये। ततः त्रिभिः कालैर्द्रष्टव्यते। एवं कालत्रयं कृतं रसं त्रिभिः भोजयेत्। सप्तमे दिने प्रकृतिभोजनं क्रमेण सेवेत। एवं यथाक्रमं मध्यशुद्धिशुद्धस्याऽवरशुद्धिशुद्धस्य च योजना कार्या। मुनिस्त्वाह। अथैनं सायाह्नेऽपरे वाऽह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितंडुलानां स्वविक्लिन्नां मंडपूर्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य। एवं द्वितीये तृतीये चान्नकाले। चतुर्थे तु तथाविधानामेव शालितंडुलानां सुस्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत्। एवं पंचमे षष्ठे चाऽन्नकाले। सप्तमे त्वन्नकाले तथाविधानामेव शालीनां त्रिःप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत्। एवमष्टमे नवमे चाऽन्नकाले। दशमे त्वन्नकाले लावकपिंजलादीनामन्यतमस्य मांसस्य रसेनोदकलावणिकेन नाऽतिसारवता भोजयेदुष्णोदकानुपानम्। एवमेकादशे द्वादशे चाऽन्नकाले। अत ऊर्ध्वमन्नगुणान् क्रमेणोपयुंजानः सप्ताहात्प्रभृति भोजनमागच्छेदिति। त्रीनिति कालाध्वनोरत्यंतसंयोगे द्वितीया ॥ २० ॥

प०--मण्डतः किञ्चित् घना पेया ततो विलेपी घनसिक्था। अकृतो यूषः शुण्ठिपिप्पलिदाडिमाजाजिहिङ्ग्वादिभिर्विना कृतः केवलमुद्गादिक्वाथः शुण्ठ्यादियुक्तः स एव मुद्गादिक्वाथः कृतो यूषः रसो मांसरसः। वचनं चात्र "सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता। घनसिक्था विलेपी स्याद्यवागूर्विरलद्रवा॥ पिष्टितेन रसस्तत्र यूषो धान्यैः समन्वितः। मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः॥ ज्ञेयाः कृताः कृतास्ते तु स्नेहादियुतवर्जिताः।" तान् पेयादीनां च प्रकारान् क्रमे

१ अत्र कोष्ठान्तर्गतः पाठ उपलभ्यते।

णोद्देशानुद्देशिनां यथासंख्यमनतिक्रम्य त्रीनुभयं तथैकमेव कृतान्नकालादीन् प्रधानमध्यावरशुद्धि-शुद्धः पुमान् सेवेत । प्रधाना च मध्या चावरा च प्रधानमध्यावराः । ताश्च ताः सिद्धयस्तथाभूता-भिः शुद्धिभिः शुद्धः पुरुषस्त्रीन् अन्नकालान् प्रत्येकं पेयादिकं रसायनं सेवेत । पेयादीन् त्रीण्येव रसादीन् मध्यशुद्धया शुद्ध उभयं द्वौ द्वावन्नकालं प्रत्येकं पेयादिप्रकारं रसायनं सेवेत । तथावर-शुद्धया शुद्ध एकमेकमन्नकालं प्रत्येकं रसपर्यन्तं सेवेत । तत्र प्रथमेऽहनि सायं पुनर्विलेपीं दिनान्ते पेयामुपयुञ्जीत । द्वितीयदिवसे द्वावन्नकालौ पेया-मुपसेवेत । एवं त्रीनन्नकालान् विलेप्युपयुक्ता भवति । चतुर्थेऽहनि सायमेकमन्नकालमकृतयूषं सेवेत । पञ्चमेऽह्नि द्वावन्नकालावकृतयूषमेव । स एवमकृतो यूषस्त्रीन् अन्नकालानुपयुक्तो भवति । षष्ठे दिवसे द्वावन्नकालौ कृतयूषं सेवेत । सप्तमे प्रा-तरेकान्नकालकृतेन यूषेण स्यात् । एवं कृतयूषस्त्री-नन्नकालानुपयुक्तो भवति । सप्तमे सायमेकमन्न-कालं मांसरसमुपयुञ्जीत । अष्टमे द्वावन्नकालौ मांस-रसं सेवेत । एवं मांसरसं त्रीनन्नकालानुपयु-ञ्जीत । तथा मध्यशुद्धया शुद्धावन्नकालौ पेयादिकं सेवेत । प्रथमेऽहनि सायं पेया द्वितीयेऽह्नि प्रातः पेया एवं तृतीयेऽहनि प्रातर्विलेपी सायमकृतो यूषः। चतुर्थेऽहनि प्रातरकृतो यूषः सायं कृतयूषः । तृतीये-ऽहनि प्रातः कृतो यूषः सायं मांसरसस्ततोऽनन्तरं सर्वान् त्रीन् प्रकृतिभोजनः स्यात् ॥ २० ॥

हे०—पेयादिक्रममाह—पेयामिति । उत्तमशुद्धया शुद्धः पेयादिकांस्त्रींस्त्रीनन्नकालान् भुंजीत । मध्यशुद्धया शुद्धो द्वौ द्वौ, अवरशुद्धया शुद्ध एकैकम्, अकृतः स्नेहादिभिरसंस्कृतो यूषः कृतः संस्कृतः ॥ २० ॥

अधुना पेयादिक्रमस्य फलं वक्ति—

यथाऽणुरग्निस्तृणगोमयाद्यैः
संधुक्ष्यमाणो भवति क्रमेण ।
महान् स्थिरः सर्वपचस्तथैव
शुद्धस्य पेयादिभिरंतराग्निः ॥ २१ ॥

स०—यथा बाह्योऽग्निरणुरल्पस्तृणगोमयकाष्ठदला-दिभिः संधुक्ष्यमाण उद्दीप्यमानो महान् स्थिरः सर्व-पचो भवति । सर्वपच इति पचेरजंतस्य सर्वशब्देन सह षष्ठीसमासः । तेनैव प्रकारेण पेयादिभिः शु[द्ध]स्योदर्योऽग्निर्महान् स्थिरः सर्वपचश्च भवति । ख[...]नादेऽप्युक्तम् । विरेके वमने श्रेष्ठे पेयादि त्रिकक्रमः । त्रिशो द्विशो मध्यमे स्यादेकशस्तु कन[ी]यसीति ॥ २१ ॥

प०—शुद्धत्वं पेयादिभिः किं क्रमेणोत्पद्यते त[द]र्थमाह—बाह्योऽग्निर्निरन्धनः अणुः सूक्ष्मः स्वल्पः स[न्] तृणगोमयाद्यैः सन्धुक्ष्यमाणः उद्दीप्यमानः क्रमे[ण] न सहसा महान् भवति । तथा स्थिरः स्थाणुः सम्[प]द्यते । तथा सर्व एव सर्वं च गुर्वाद्यन्नजातं प[क्तुं] शक्नोति । तथा शुद्धस्यान्तरजाठराग्निः शोधन[ा]नाणुः सम्पन्नः क्रमेण पेयादिभिः सन्धुक्ष्यमाण[ः] महान् पचः स्थिरश्च सम्पद्यते ॥ २१ ॥

हे०—पेयादिक्रमस्य फलमाह—यथाणुरिति ॥ २१

जघन्यमध्यप्रवरे तु वेगा-
श्चत्वार इष्टा वमने षडष्टौ ।
दशैव ते द्वित्रिगुणा विरेके
प्रस्थस्तथा स्याद्द्विचतुर्गुणश्च ॥ २२

स०—जघन्यं च मध्यं च प्रवरं च तस्मिन्वम[ने] क्रमेण वेगाश्चत्वारः षडष्टेष्टास्तंत्रकृतामिति शेषः । वेगा दशैव द्वित्रिगुणा जघन्यमध्यप्रवरे द्विरेके क्रमे[ण] भवंति । तथेति समुच्चये । न केवलं वेगानां मा[नं] प्रस्थश्च द्विचतुर्गुणो मानं स्यादिति तथाशब्दस्याऽर्थः त्रीण्येतान्युपजातिवृत्तानि ॥ २२ ॥

प०—तत्र न ज्ञायते कास्तास्तिस्रः शुद्धयस्तदर्थमाह—जघन्यमध्यप्रवरे वमने यथाक्रमं वेगाश्चत्वार षडष्टाविष्टाः । आयुर्वेदस्मर्तॄणामभिप्रेताः । सम्पन्न इति यावत् । तत्र जघन्ये वमने चत्वारो वेगा इष्टाः । मध्यवमने षड् वेगाः । प्रवरे वमनेऽष्टौ वेगाः । त एव वेगा दशद्वित्रिगुणा विरेके जघन्य मध्यप्रवरे यथाक्रमं तेषामेव मुनीनामिष्टाः । तत्र विरेके जघन्ये वेगा दशेष्टाः । मध्यविरेके क्रमा-द्द्विगुणा दशविंशतिवेगाः । प्रवरे तु त्रिगुणा दशत्रिंशद्वेगाः इष्टा इति वमनविरेचनयोर्वेगसं-

न्यथा प्रवरमध्यावरत्वं प्रस्थादिमानपरिच्छेदेन प्रवरावरमध्यत्वमाह-जघन्यमध्यप्रवरे विरेके यथाक्रमं प्रस्थः स एव द्विगुणः स एव चतुर्गुणः स्यादिति सम्बन्धः । प्रस्थो जघन्ये विरेके मध्ये द्वौ प्रवरे चत्वारः प्रस्थाः ॥ २२ ॥

हे०--त्रिविधस्य वमनस्य वेगमानमाह—जघन्येति । त्रिविधस्य विरेकस्य वेगमानमाह—दशैवेति । द्विगुणा विंशतिः, त्रिगुणास्त्रिंशत् । त्रिविधस्य विरेकस्य तुलामानमाह—प्रस्थ इति । प्रस्थोऽत्र न द्वात्रिंशत्पलः । " वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः " इति वचनात् । एकः प्रस्थः, द्वौ प्रस्थौ, चत्वारः प्रस्था इति त्रीणि मानानि ॥ २२ ॥

**पित्तावसानं वमनं विरेका-**
**दर्धं कफांतं च विरेकमाहुः ॥ २३ ॥**

स०—पित्तांतं वमनं वदंति । विरेकादर्धं वमनं कथयंति विरेचनं कफांतमाहुः ॥ २३ ॥

प०--अन्ये पुनराचार्याः पित्तावसानमुत्कृष्टं वमनमाहुः । पित्तं वमनान्ते यस्य तत् पित्तावसानं वमनं विरेकात् प्रस्थादुत्पन्नपरिच्छिन्नाद्वमनमर्धमाहुः । तेन जघन्ये वमने प्रस्थस्यार्धं मध्ये प्रस्थः प्रवरे द्वौ प्रस्थाविति । तथा कफान्तविरेकमाहुः कफपर्यन्तं प्रधानं विरेकमाहुराचार्याः ॥ २३ ॥

हे०--त्रिविधस्यापि वमनस्य पित्तावसानत्वमेव सम्यक्त्वमित्याह—पित्तावसानमिति । त्रिविधस्य वमनस्य तुलामानमाह—विरेकादर्धमिति । अर्द्धम् अर्धप्रस्थः, प्रस्थः, प्रस्थद्वयं चेति त्रिविधस्यापि विरेकस्य कफावसानत्वमेव सम्यक्त्वमाह—कफान्तमिति ॥ २३ ॥

**द्वित्रान् सविट्कानपनीय वेगान्**
**मेयं विरेके वमने तु पीतम् ॥ २४ ॥**

स०--द्वे वा त्रयो वा द्वित्राः । संख्ययाऽव्ययेति बहुव्रीहिः । बहुव्रीहौ संख्येये डजिति वा समासांतः । सह विशा पुरीषेण वर्तत इति सविट्को विड्वान् वेगान् सविट्कानपनीय गणनयाऽनया रुद्ध्वा विरेके मेयं मातव्यम् । वमने पुनः पीतं यदौषधं तदपनीय मेयम् । इंद्रवज्रावृत्तम् ॥ २४ ॥

प०—द्वौ वा त्रयो वा द्वित्राः । के ते वेगाः । सह विशा पुरीषेण वर्तन्ते इति सविट्काः । तान् वेगानपनीय त्यक्त्वा मेयं मातव्यं प्रमाणीकर्तव्यम् । विरेके विरेकविषये या विरेकसंख्या निर्दिष्टास्ततः संख्यायास्तानपास्य गणनायामपारूढं कृत्वा यदन्यद्वस्तुजातं तद्व्यतिरिक्ता वेगवशादुदमार्गतः प्रवर्तन्ते तदेवानन्तरं मेयं प्रस्थादिमानेन च तथा वमने च वमनविषये वमनार्थमौषधं द्रवेण पानीयादिनाऽऽलोड्य यत्पीतं मुखतो वेगैरपि प्रवर्तमानं तद्यथानिर्दिष्टाया वमनवेगसंख्याया अपनीय वमनगणनायामनुपारूढं कृत्वा यद्यद्वस्तुजातं वेगवशान्मुखतः प्रवर्तते । तदेवानन्तरं मेयं मातव्यं परिच्छेत्तव्यम् ॥ २४ ॥

हे०—वेगमानं तुलामानं च वाह्यमानमाह—द्वित्रानिति । वमने तु वमनार्थं यत्पीतं तदपनीयमेयम् ॥ २४ ॥

**अथैनं वामितं भूयः स्नेहस्वेदोपपादितम् ।**
**श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत् २५**

स०—एनं नरं वामितं भूयः पुनरपि स्नेहस्वेदाभ्यामुपपादितमनंतरं सम्यग्विरेचयेत् । कदा । श्लेष्मणः कालः संविभागप्रहरस्तस्मिन् गते सति । किं कृत्वा । कोष्ठं मृदुमध्यक्रूरलक्षणं ज्ञात्वाऽवगम्य ॥ २५ ॥

प०—अथेति मङ्गलार्थमानन्तर्यार्थे वा । अथानन्तरमेनं पुरुषं वामितं वमितवन्तं भूयः पुनरेव स्नेहस्वेदाभ्यामुपपादितं संस्कृतं सुखोषितं पूर्वोक्तेन विधिना गते पीते श्लेष्मकाले निरग्नं कोष्ठं ज्ञात्वा भोज्यमस्याप्यवाहियावन्मात्रां वमयित्वा विरेचयत् ॥ २५ ॥

हे०—विरेचनविधिमाह—अथेति । स्नेहस्वेदाभ्यां पुनरप्युपपादितं शोधनयोग्यतां नीतं विरेचयेद्विरेचनौषधं दद्यात् । संग्रहे तु नत्वकृतवमनमन्यत्रातिक्रूरकोष्ठात् । अकृतवमनस्य हि श्लेष्मणोपहतमौषधम् ऊर्ध्वं प्रवर्तते । उरसि चावरुद्धमवतिष्ठते ततो नालं विरेचनाय । सम्यग्विरिक्तस्यापि चाधःस्रस्तः श्लेष्मा ग्रहणीं छादयित्वा गौरवमापादयति प्रवाहिकां वा। नत्वेष दोषोऽतिक्रूरकोष्ठस्य वाय्वात्मकत्वात् । श्लेष्मकालेऽप्यकृतवमनोक्तो दोषः शूलाध्मानगौरवाणि च कृत्वा क्षीणे श्लेष्मण्यपराह्णे रात्रौ वा विरे

नवेत् तेनाशयसमपि दुष्टं छर्दिं च पुनस्तज्जनयति । अविरिक्तस्य श्लेष्मकाले च वमनं योज्यं तथोर्ध्वं सुखेन निर्हरणादिति ॥ २५ ॥

**बहुपित्तो मृदुः कोष्ठः क्षीरेणाऽपि विरिच्यते२६**

स०— यो बहुपित्तः कोष्ठः स मृदुर्भवति । स च क्षीरेणाऽपि विरिच्यते । अपिशब्दादारग्वधादिभिरपि ॥ २६ ॥

प०—अत्र बहुपित्तो मृदुकोष्ठः स विरिच्यते क्षीरेणापि । क्षीरं चात्रोपलक्षणमात्रम् । तेनेक्षुरसतक्रमस्तुगुडकृशरासर्पिर्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिर्विरिच्यते ॥ २६ ॥

हे०—मृदुकोष्ठस्य लक्षणमाह—बहुपित्त इति । संग्रहे तु इक्षुरसाम्लातकमस्तुगुडकृशरासर्पिर्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिरिति ॥ २६ ॥

**प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि२७**

स०—प्रभूतमारुतः क्रूरः कोष्ठो भवति । स कृच्छ्रेण कथंचिदपि श्यामादिकैर्विरिच्यते । आदिशब्देन द्रवंतिसुधादीनां ग्रहणम् । अपिशब्दादारग्वधादिना विरिच्यते ॥ २७ ॥

प०—प्रभूतमारुतः बहुवातः क्रूरकोष्ठः स दुर्विरेच्यः । सत्रिवृत्त्रिफलातिल्वकनीलिनीफलादिभिरापि कृच्छ्राद्दुःखेन विरिच्यते ॥ २७ ॥

हे०—क्रूरकोष्ठस्य लक्षणमाह—प्रभूतमारुतेति । आदिशब्दात्त्रिफलातिल्वकनीलिनीफलादयः । संग्रहे तु बहुश्लेष्मा समदोषश्च कोष्ठः स साधारणः । ये च स्निग्धास्यच्छपानेन प्रावर्तन्त्रिवज्रनराभिरिति ॥ २७ ॥

**कषायमधुरैः पित्ते विरेकः कटुकैः कफे । स्निग्धोष्णलवणैर्वायौ ॥ २८ ॥**

स०—कषायमधुरैरारग्वधादिभिः पित्ते विरेकः । कटुकैः कफे विरेकः । स्निग्धाम्ललवणैरेरंडतैलादिभिर्वायौ विरेकः कार्यः ॥ २८ ॥

प०—तत्र कषायमधुरैर्द्रव्यैः पित्ते पित्तविषये विरेको विरेचनं शस्यते इति वाक्यशेषः । कटुकैर्द्रव्यैः कफे पित्तसंसृष्टे विरेकः शस्यते । स्निग्धोष्णलवणद्रव्यैर्वाते पित्तसंसृष्टे विरेकः शस्यते॥२८

हे०—दोषभेदेन विरेचनमाह—कषायमधुरैरिति संग्रहे तु पीतमात्र एव चौषधे छर्दिविघाताय शीतबुना मुखमस्य सहसा सिंचेत् । ततश्चोष्णोदकेन सोऽन्नमुखं विशोध्यार्द्रसुरभिमृन्मातुलुंगजंबीरसुमनःसौगन्धिकादीनि हृद्यगन्धान्युपाजिघ्रेत् । निवातसुखशय्यास्थितश्चाबन्धार्थमल्पाल्पमुष्णोदकमनुकण्ठयंस्तन्मना वेगान् धायन्नीरयमाणश्चासाद्यासनेषु प्रतिग्राह्येष्वशीतस्पृग्विरिच्यते यथा च वमने स्वेदप्रसेकौषधकफपित्तानिलाः क्रमेप्रवर्तन्ते । तथा विरेचने वातमूत्रपुरीषपित्तकफाः । पुनश्चान्ते वायुः दोषाणां हि देहे तथा सन्निवेशान्मार्गवैपरीत्याच्च शोधनयोरिति ॥ २८ ॥

**अप्रवृत्तौ तु पाययेत् उष्णांबु स्वेदयेदस्य पाणितापेन चोदरम् २९**

स०—विरेकाप्रवृत्तावुष्णांबु पाययेद्वैद्यः । अस्य चाऽऽतुरस्य पाणितापेन जठरं स्वेदयेत् ॥ २९ ॥

प०—शोधनयोरप्रवृत्तौ सत्यां भेषजोत्तेजनार्थमुष्णोदकं पाययेत् । तथास्य पुंसः पाणितापैश्चोदरं जठरं स्वेदयेत् ॥ २९ ॥

हे०—विरेचनाप्रवृत्तौ प्रवर्तनोपायमाह—अप्रवृत्ताविति ॥ २९ ॥

**उत्थानेऽल्पे दिने तस्मिन्भुक्त्वाऽन्येद्युः पुनः पिबेत् ॥ ३० ॥**

स०—तस्मिन् विरेकस्य दिनेऽल्प उत्थाने स्तोकायां प्रवृत्तौ सत्यां भुक्त्वाऽन्नमन्येद्युरन्यस्मिन् दिने पुनर्विरेचनौषधं पिबेदातुरः ॥ ३० ॥

प०—उत्थानमवस्करभूमौ मलविसर्गार्थमवतारणम् । उत्थानेऽल्पदोषेऽस्य प्रवृत्तावल्पायां तदहर्भुक्त्वा तस्मिन् दिने भोजनं कृत्वाऽन्येद्युरन्यस्मिन्नहनि पुनरौषधं विरेकार्थं पिबेत् ॥ ३० ॥

हे०—उपायेनाप्रवृत्तौ किं कृत्यमित्यत आह—उत्थान इति । उत्थाने वर्तने अल्पे सति तस्मिन् दिने भुक्त्वा द्वितीयदिने पुनर्विरेचनम् ॥ ३० ॥

अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः।
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम्॥
यौगिकं सम्यगालोच्य स्मरन्पूर्वमतिक्रमम्॥३१॥

स०—दृढस्नेहः कोष्ठो यस्य स दृढस्नेहकोष्ठः। न दृढस्नेहकोष्ठोऽदृढस्नेहकोष्ठः स भूयोऽपि स्नेहस्वेदैः संस्कृतशरीरो दशाहादूर्ध्वं यौगिकं विरेचनं पिबेत्। यथावन्निरूप्य पूर्वमनुक्रमं भैषज्यमात्रां मंत्राभिमंत्रितामित्यादिकं तथाऽप्रवृत्तौ तु पाययेत्। उष्णांबु स्वेदयेदस्य पाणितापेनेत्यादिकं च तथापि अतिक्रमं स्मरन् पिबेदिति॥३१॥

प०—यौगिकं योगार्हं दृष्ट्यादिकमालोच्यादृढस्नेहकोष्ठो यः स दशाहादूर्ध्वं भूयोऽपि स्नेहनस्वेदैः संस्कृतदेहः सन् तथा पूर्वमतिक्रमं स्मरन् पूर्वायोगकारणं चिन्तयन् अवहितो विरेचनं पिबेत् ३१

हे०—यस्तु निवृत्तस्नेहत्वान्न विरिच्यते स पुनः स्निग्धः स्विन्नो दशाहादूर्ध्वं विरेचनं पिबेत्। पूर्वमतिक्रमं प्रथमे विरेचने सामग्रीवैकल्यं स्मरन्सम्यगालोच्य यद्योग्यं स्यात्तत्पुनर्देयं न प्रथममेव। संग्रहे तु ह्रीभयलोभैश्च वेगाघातशीलाः प्रायशस्त्रियो राजसमीपस्था वणिजश्च भवंति। तस्मादेते वेगधारणात्प्रवृद्धवातत्वात्सदातुरा दुर्विरेच्याश्च। तान् सुस्निग्धान् शोधयेदन्यानपि चाकालनिर्हारविहारानतश्चैषां सदातुरत्वादल्पोऽप्यामयो दुःसाध्यो भवतीति३१॥

हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः॥
कंडूर्विदाहः पिटिका पीनसो वातविड्ग्रहः।
अयोगलक्षणम्॥३२॥

स०—अयोगलक्षणं हृत्कुक्ष्यशुद्धिरित्यादिकम् ३२॥

प०—विरेचनस्यायोगलक्षणमसम्यग्योगलक्षणं हृदयस्य तथा कुक्षेरशुद्धिरनिर्मलत्वम्। अरुचिरन्नाश्रद्धा। तथा श्लेष्मपित्तयोरुत्क्लेशः प्रच्यावः। विदाहो विविधसन्तापः। पिटिका अङ्गावयवेषु। पीनसः प्रतिश्यायः। तथा वातनिग्रहो वातपुरीषयोः सङ्गः॥३२॥

हे०—विरेचने हीनयोगलक्षणमाह—हृत्कुक्षीति। संग्रहे तु आध्मानप्रसेकच्छर्दिभ्रमगौरवाग्निसादतन्द्रास्तैमित्यमूत्रसंगा इति॥३२॥

योगो वैपरीत्ये यथोदितात्॥३३॥

स०—यथोक्ताद्वैपरीत्ये हृत्कुक्षिशुद्धिरित्यादिको योगो योगलक्षणम्॥३३॥

प०—योगः सम्यग्योगः। विरेकस्य वैपरीत्ये विपर्यासे सति यथोदिताद्यथोक्तलक्षणात् हृत्कुक्ष्यशुद्ध्यादिकाद्वैपरीत्ये हृत्कुक्षिशुद्धिरित्यादि भवति॥३३॥

हे०—सम्यग्योगलक्षणमाह—योग इति। वैपरीत्ये हृत्कुक्षिशुद्धिरुच्यादौ॥३३॥

विट्पित्तकफवातेषु निःसृतेषु क्रमात्स्रवेत्।
निःश्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम्।
मांसधावनतुल्यं वा मेदःखंडाभमेव वा।
गुदनिःसरणं तृष्णा भ्रमो नेत्रप्रवेशनम्।
भवंत्यतिविरिक्तस्य तथाऽतिवमनामयाः॥३४॥

स०—अतिविरिक्तस्य विट्पित्तकफवातेषु क्रमान्निःसृतेषु जलं स्रवेत्। किंभूतम्। निःश्लेष्मपित्तं तथा श्वेतं कृष्णं सलोहितं पीतरक्तमथवा मांसधावनसदृशमथवा मेदःशकलाभं स्रवेत्। तथा गुदनिःसरणादयोऽतिवमनामयाश्च क्षामतादयो भवंति॥३४॥

प०—अतिविरिक्तस्य पुरुषस्य एते उपद्रवा भवन्ति। विडादिषु निःसृतेषु निर्गतेषु सत्सु क्रमात् क्रमेण सर्वं निर्गच्छेत्। उदकं पानीयरूपम्। मलं केवलम्। निःश्लेष्मपित्तं दोषरहितम्। तथा श्वेतं शुक्लं कृष्णं मषीवर्णं सलोहितं सरक्तं मांसधावनोपमम्। तथा मेदःखण्डाभं मेदःशकलवर्णम्। तदा गुदनिःसरणं पायुनिर्गमनं तथा तृष्णा पिपासा। नेत्रप्रवेशनं नयनयोरन्तर्गमनमेतेऽतिविरिक्तस्य भवन्ति। पूर्वोक्तक्षामतादाहकण्ठरोगतमोभ्रमाः मृत्युपर्यन्ताः ३४

हे०—अतियोगलक्षणमाह—विट्पित्तेति। अतिवमनादयः क्षामतादय इति। संग्रहे तु परिकर्तिका हृदयोद्वेष्टनं पिपीलिकासञ्चार इवांग इति॥३४॥

सम्यग्विरिक्तमेनं च वमनोक्तेन योजयेत्।
धूमवर्ज्येन विधिना॥३५॥

स०—एनं च नरं सम्यग्विरिक्तं वमनविहितेन विधिना विधूमेनोपपादयेत्॥३५॥

प०—एवं पुरुषं विरिक्तं सम्यग्योगेन यथोक्तलक्षणेन विरिक्तं वमनोक्तेन विधिना विधानेन धूमवर्ज्येन धूमरहितेन योजयेदुपपादयेत् । अत्रेयान् विशेषः । धूमपानवर्जनीयमन्यत्पूर्वोक्तं सर्वमेव कार्यम् ॥ ३५ ॥

हे०—सम्यग्विरिक्तस्य सम्यग्वांतविधिमतिदिशति—सम्यगिति ॥ ३५ ॥

**ततो वमितवानिव ।**
**क्रमेणाऽन्नानि भुंजानो भजेत्प्रकृतिभोजनम् ३६**

स०—ततोऽनंतरं क्रमेण पूर्वोक्तेन रक्तशाल्यन्नसहितपेयादीन्यन्नान्यश्नन् प्रकृतिभोजनं भजेत् ॥ ३६ ॥

प०—ततोऽनन्तरं वमितवानिव यथा चान्तस्तद्वत्तेनैव क्रमेण परिपाटयाऽन्नानि भुञ्जानः पश्चात् प्रकृतिभोजनं स्वस्थाधिकारविहितं भोजयेत् ॥ ३६ ॥

हे०—पेयादिक्रमानंतरं प्रकृतिभोजनमपि क्रमेण कुर्यादित्याह—तत इति । क्रमेण पादेनापथ्यमित्याद्युक्तेन वामितवानिवेति दृष्टांतबलेन वमितेऽप्ययं क्रमो ज्ञेयः ॥ ३६ ॥

**मंदवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ।**
**अदृष्टजीर्णलिंगं च लंघयेत्पीतभेषजम् ॥ ३७ ॥**

स०—पीतभेषजं मंदवह्न्यादीन् पंच लंघयेत् । अदृष्टजीर्णलिंगं पीतभेषजस्य यस्येति योज्यम् ॥ ३७ ॥

प०—पीतभेषजं नरं पीतौषधं मन्दवह्निं मन्दाग्निमनिर्हृतदोषमनुत्पन्नसम्यग्विशुद्धिलक्षणमक्षामं दोषदुष्टेहतबलमदृष्टजीर्णलिङ्गं न दृष्टं जीर्णमौषधलक्षणोत्पत्तेः ॥ ३७ ॥

हे०—मन्दवह्न्यादिभिः शोधनादिने उपवासः कार्य इत्याह—मन्दवह्निमिति । असंशुद्धं हीनयोगिनम् अक्षामं शुद्धिकृतकार्श्यरहितं दोषदुर्बलं दोषवृद्ध्या क्षीणबलम्, अदृष्टजीर्णलिंगं जीर्णौषधलक्षणरहितं तानि च "अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णासुमनस्कता । लघुत्वमिंद्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ क्लमो दाहोऽङ्गसदनं भ्रमो मूर्छा शिरोरुजा । अरतिर्बलहानिश्च सावशेषौषधाकृतिः" इत्यतो ज्ञेयानि ॥ ३७ ॥

एवं लंघिते यो गुणो भवति तमाह—

**स्नेहस्वेदौषधोत्क्लेशसंगैरिति न बाध्यते ३८ ॥**

स०—उत्क्लेशाश्च संगाश्चोत्क्लेशसंगाः । स्नेहश्च स्वेदश्चौषधं च तानि तेषामुत्क्लेशसंगाः स्नेहस्वेदौषधोत्क्लेशसंगास्तैः इत्येवं लंघिते सति मंदाग्न्यादिर्न बाध्यते ॥ ३८ ॥

प०—एतावता हि स्नेहादिभिरुत्क्लेशैः प्रच्युतिर्दोषाणां तथा स्वेदनोत्क्लेशस्तदौषधैरुत्क्लेशः । एषामुत्क्लेशानां सङ्गेन प्रवृत्तिभिस्तैः संगैर्न बाध्यते। लङ्घने कृते सति ॥ ३८ ॥

हे०—लंघनस्य फलमाह—स्नेहस्वेदेति । स्नेहस्वेदौषधैर्जाता ये दोषोत्क्लेशास्तेषां निर्हृतशेषाणां संयोगाः स्रोतसां स्युस्तैः ॥ ३८ ॥

**संशोधनाऽस्रविस्रावस्नेहयोजनलंघनैः ।**
**यात्यग्निर्मंदतां तस्मात्क्रमं पेयादिमाचरेत् ३९ ।**

स०—संशोधनादिभिर्यतोऽग्निर्मन्दतां यात्यतो हेतोः पेयादिं क्रममाचरेत् । संशोधनं सम्यक्शुद्धिः । अस्रविस्रावो रक्तस्रुतिः । स्नेहयोजनं स्नेहयोगः । ननु शुद्ध्याग्निमांद्यमिहोच्यते । वक्ष्यति च । बुद्धिप्रसादमित्यादिना ज्वलनस्य दीप्तिं संशोधनं करोतीति । तदिमे वचसी परस्परं व्याहतः । अत्रोच्यते । कालभेदाद् दोषसंशोधने क्रियमाणेऽग्निमांद्यं भवति । कृते च संशोधने पेयादिक्रममासेवमानस्याग्निदीप्तिरिति न कश्चिदत्र व्याघातः ॥ ३९ ॥

प०—संशोधनादिभिर्मन्दतां मांद्यमग्निर्याति । तस्मात् पेयादिकं क्रममाचरेत् सेवेत । संशोधने वमनविरेचने । अस्रस्य विस्रावो रक्तनिर्हरणम् । स्नेहयोजना स्नेहप्रयुक्तिः । लङ्घनमुपवासः । तथा चागमे "लङ्घनस्य विशेषोक्तावुपवासो विधीयते" इति ॥ ३९ ॥

हे०—पेयादिक्रमे युक्तिमाह—संशोधनेति । स्नेहयोजनं शमनस्नेहप्रयोगः, लंघनमुपवासः ॥ ३९ ॥

**स्रुतालपपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ।**
**पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः ४० ॥**

स०—स्रुतालपपित्तश्लेष्माणमिति । स्रुतौ पतितावल्पौ पित्तश्लेष्माणौ यस्य तं तथा मद्यपो यो नरस्तं

मद्यपं तथा वातपैत्तिकमेतांस्त्रीन्पेयां न पाययेत् । तर्ह्येषां किं कार्यमित्याह । प्रथमेऽन्नकाले लाजसक्तवो द्वितीयेऽन्नकाले जीर्णशाल्योदनं तृतीये मांसरसौदनमित्येष तर्पणादिक्रमस्तेषां हितः ॥ ४० ॥

प०—पित्तं च श्लेष्मा च पित्तश्लेष्माणौ । श्रुतौ निर्गतावल्पौ पित्तश्लेष्माणौ यस्य तम् स्रुताल्पपित्तश्लेष्माणम् । तथा मद्यं पिबति योऽतिशयेन तं मद्यपम् । तथा वातपित्तं प्रत्याकृत्या तान् पेयां न पाययेत् । तेषां त्रयाणां तर्पणादिक्रमो हितः । प्रथममन्नकाले तर्पणं लाजसक्तुभिः कृतं योज्यम् । पेयास्थाने तर्पणा इत्यर्थः॥४०॥

हे०—स्रुतादिषु पेयां निषेधति—स्रुताल्पपित्तेति । नेषिद्धपेयानां पेयास्थाने मन्थो योज्य इत्याह—तेषामेति ॥ ४० ॥

ननु विरेचनस्येव वमनस्य कस्मात्पाको न प्रतीक्ष्यत इत्याह—

**अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ।**
**निर्हरेद्वमनस्याऽतः पाकं न प्रतिपालयेत् ॥४१॥**

स०—वमनमपक्वं सद्दोषान्निर्हरेत् । विरेचनं तु पच्यमानं दोषान्निर्हरेत् । अतो वमनस्य पाको न प्रतिपाल्यते ॥ ४१ ॥

प०—वमनं प्रयुक्तमपक्वं सत् दोषान्निर्हरेदिति सम्बन्धः । विरेचनं पुनर्दत्तं पच्यमानं पाकादीन् गच्छन् दोषान् निर्हरेत् । अतः कारणाद्वमनस्य कालं न प्रतीक्षेत । मुहूर्तमात्रे यदि नागच्छेत्तदा क्षिप्रतरमानयेत् । ऊर्ध्वाधोरेचनं प्रयुक्तं विपरीत्येन जायते । "यदा तदा छर्दयतः सिञ्चेदुष्णेन वारिणा । पादौ शीतेन चोर्ध्वाङ्गं विपरीतं विपर्यये" ऊर्ध्वरेचनं वमनप्रयुक्तं यदा कदाचित् कारणेन वैपरीत्येन विरेचनतया जायते यदाऽधोविरेचनं यदा कुतश्चिन्निमित्ताद्वैपरीत्येन वमनत्वेन जायते तदा विरेचनवैपरीत्याच्छर्दयत उष्णेन वारिणा पादौ सिञ्चेत् । शीतेन चोर्ध्वाङ्गं सिञ्चेत् । यदा वमनविपरीत्यविरेकस्तदा विरिच्यते । अतः पूर्वविपरीतं कार्यम् । पादौ शीतोदकेन सिञ्चेदुष्णोदकेनोर्ध्वाङ्गमित्यर्थ इति सङ्ग्रहक्रमत्रानीतं कैश्चित् ॥ ४१ ॥

हे०—वमनविरेचनयोः स्वकार्यप्रतीक्षावधिमाह-अपक्वमिति । अर्थात् विरेचनस्य पाकं प्रतिपालयेत् ॥ ४१ ॥

**दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम् ।**
**विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत् ॥४२॥**

स०—दुर्बलो बहुदोषश्च दोषपाकेन हेतुना स्वयमौषधमंतरेण यो विरिच्यते भिद्यते तं नरं भेदनीयैर्भोज्यैर्भक्ष्यैर्योजयेत् ॥ ४२ ॥

प०—दौर्बल्यादियुक्तो दोषपाकेन यः स्वयं विरिच्यते न तस्मै विरेचनमौषधं देयम् ॥ ४२ ॥

हे०—दुर्बलत्वादिविशिष्टस्त्वाहारैरेव शोध्य इत्याह—दुर्बल इति । भेदनीयैर्यवक्षारादिभिः, संग्रहे तु "ऊर्ध्वाधोरेचनं युक्तं वैपरीत्येन जायते । यदा तदा छर्दयतः सिञ्चेदुष्णेन वारिणा ॥ पादौ शीतेन चोर्ध्वाङ्गं विपरीतं विरेचने" इति ॥ ४२ ॥

**दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ।**
**अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम् ॥**
**वरं तदसकृत्पीतमन्यथा संशयावहम् ।**
**हरेद्बहूंश्चलान्दोषानल्पानल्पान् पुनः पुनः॥४३॥**

स०—दुर्बलादयः पिबेयुः । किमित्याह मृद्वल्पमिति। यस्माद्विरेचनौषधं पुनः पुनः पीतं वरम् । अन्यथा बहु तीक्ष्णं चौषधं पीतं संशयावहं प्राणसंदेहाकारि । तथा पुनः पुनः प्रयुक्तमौषधं बहूंश्चलान् दोषानल्पानल्पान् हरेत् एवं बलहानिं विना दोषनिर्हारः कृतः स्यात् ॥ ४३ ॥

प०—दुर्बलः सन् पूर्वं शोधितः तथाऽल्पदोषस्तथा कृशस्तथा मृद्वादिभेदेनापरिज्ञातकोष्ठः स मृद्वल्पमौषधं प्रयोजयेत् । नापेक्षया नैकवारं पीतं नत्वन्यथा सकृत्संशयावहं पीतं वरमतियोगभयात् । दुर्बलस्य च तान् दोषान् बहून् प्रभूतान् अल्पमल्पं स्तोकं स्तोकं कृत्वा मृदुद्रव्यैर्हरेत् ॥ ४३ ॥

हे०—दुर्बलादीनां पञ्चानां मृद्वल्पं चौषधं देयमित्याह—दुर्बल इति । यद्यपि मृद्वल्पं न शोधयेत् तथापि तदेवासकृत्पेयं न तु बहुतीक्ष्णं जीवितसंशयात् । बहुप्रचलितदोषस्यापि दुर्बलस्य मृद्वल्पमेव शोधनमित्याह—हरेदिति । अल्पप्रचलितदोषस्य दुर्बलस्य शमनमेवेत्यत आह-अल्पानिति ॥ ४३ ॥

**दुर्बलस्य मृदुद्रव्यैरल्पान् संशमयेत्तु तान् ।**
**क्लेशयंति चिरं ते हि हन्युर्वैनमनिर्हृताः ॥४४॥**

स०—पुनश्चधारणे । दुर्बलस्य नरस्य मृदुद्रव्यै-र्निर्हरेदल्पानेव तान् दोषान् सम्यक् शमयेत् । ते तु दोषा अनिर्हृताश्चिरमेतमातुरं क्लेशयंति हन्युर्वा मारयेयुः ॥ ४४ ॥

प०—पुनः पुनः भूयः तांस्तु दुर्बलस्य चलान् दोषान् अल्पान् सतो निर्हृतानेव शमनैः शमयेत् । येन ते दोषा बहुप्रचलिता एवमातुर एवमनि-र्हृताः सन्तश्चैनं व्याधितं क्लेशयन्ति हन्युरेव॥४४॥

हे०—बहुप्रचलितदोषस्य शमने बाधकमाह-क्लेशयंतीति। संग्रहे तु मृदुतीक्ष्णयोर्लक्षणमुक्तं, " सुखं क्षिप्रं महावेगम-सक्तं यत्प्रवर्तते । नातिग्लानिकरं नाति हृदि पायौ च रुक्करम् ॥ अंतराशयगं क्लिन्नं कृत्स्नं दोषं निरस्यति । विरेचनं निरूहो वा तत्तीक्ष्णमिति निर्दिशेत् ॥ जटाग्निकी-टेरस्पृष्टं देशकालगुणान्वितम् ॥ नवं मात्राधिकं किंचित् तुल्यवीर्यैः सुभावितम् । स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम् । अतो विपर्यये मंदं मंदतां च प्रपद्यते ॥ तीव्रो मध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः । बलापेक्षं हितं तेषु तीक्ष्णमध्यमृदुक्रमात् ॥ अप्रवर्त्य मलान् द्रव्यं सात्मी-भूतं हि जीर्यति । वमनं वा विरेकं वा तस्मात्साम्यं न योजयेत् ॥ विभ्रंशो विपत्त्सम्यग्योगो यस्यामृतोपमः । कालेऽवश्यं प्रयोक्तव्यं तस्माद्यत्नेन तत्पिबेत्॥" इति ४४

**मंदाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ।**
**संधुक्षिताग्निं विजितकफवातं च शोधयेत् ४५ ॥**

स०—मंदाग्निं क्रूरकोष्ठं च नरं सह क्षारलवणाभ्यां वर्तंते यानि घृतानि तैर्यथासंख्यमुद्दीपितानलं विजित-कफवातं च शोधयेत् ॥ ४५ ॥

प०—तथा मन्दाग्निं मन्दवह्निं नरं शोधनप्रसङ्गे सति क्षारैर्घृतैर्यथोक्तैः सन्धुक्षिताग्निं शोधयेत् । तथा क्रूरकोष्ठं सक्षारलवणैर्घृतैर्वर्जितकफवातं शोधयेत् ॥ ४५ ॥

हे०—मंदाग्निक्रूरकोष्ठयोः शोधने पूर्वांगमाह—मंदाग्नि-मिति ॥ ४५ ॥

**रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम् ।**
**दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति ॥**
**तेभ्यो बस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ।**
**शकृन्निर्हृत्य वा किंचित्तीक्ष्णाभिः फलवर्तिभिः॥**

स०—रूक्षादीनां भैषज्यमविरेच्यैव विरेचनमकृ-त्वैव परिणतिमेति । तेभ्यो रूक्षादिभ्यः पूर्वं बस्तिं दद्यादनंतरमेरंडतैलबिंदुघृतादिकं विरेचनं योजयेत् । अथवा फलवर्तिभिस्तीक्ष्णाभिः पुरीषं किंचिदल्पं निर्हृत्य निःसार्य स्निग्धं विरेचनं दद्यात् ॥ ४६ ॥

प०—रूक्षादियुक्तानां पुंसां तथा दीप्ताग्नीनां भेषजं विरेचनमौषधमविरिच्यैव विरेचनमकृत्वैव अतस्तेभ्यो नरेभ्यः पुरा वस्तिं दत्त्वा ततोऽनन्तरं नीलिनीघृतादिकं दद्यात् । अथवा तीक्ष्णाभिः फलवर्तिभिः शकृत् पुरीषं स्तोकं निर्हृत्य विरेचनं दद्यात् । यस्मात् फलवर्तिभिर्विरेचयेत् ॥ ४६ ॥

हे०—रूक्षाणां पंचानां विरेचयंतीत्याह—रूक्षेति । कथं विरेच्या इत्यत आह—तेभ्य इति । बस्तिं निरू-हम् ॥ ४६ ॥

किमिति बस्तिनाऽथवा तीक्ष्णाभिः फलवर्तिभिश्च किंचिच्छकृन्निर्हारः क्रियत इत्याह—

**प्रवृत्तं हि मलं स्निग्धं विरेको निर्हरेत्सुखम्४७**

स०—यस्मान्मलं प्रवृत्तं संतं किंचित्पतितं स्निग्धो विरेकः सुखं मलप्रेरणेन निर्हरेत् ॥ ४७ ॥

प०—बस्तिना वा प्रवृत्तं निर्गतं मलं पुरीषादिकं स्निग्धो विरेकः सुखं विहरेत् ॥ ४७ ॥

**विषाभिघातपिटिकाकुष्ठशोथविसर्पिणः ।**
**कामलापांडुमेहार्तान्नातिस्निग्धान्विरेचयेत्४८।**

स०—नातिशब्दोऽत्रेषदर्थे । नातिशीतगुप्तमित्यत्र यथा । विषाद्यार्तानीषत्स्निग्धान् विरेचयेत् ॥ ४८ ॥

प०—विषाभिघातादिभिर्महान्तैरार्तानातुरान् ना-तिस्निग्धान् सामर्थ्यादीषत्स्निग्धान् कृत्वा यथा-यथं योग्यैर्विरेचनौषधैः प्रायेण रूक्षैर्विशो-धयेत् ॥ ४८ ॥

हे०—विषादिषु नवसु ईषत्स्निग्धस्य शोधनमित्याह—विषाभिघातेति । अभिघातः शस्त्रघातादिः ॥ ४८ ॥

**सर्वान्स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान् ४९**

स०—सर्वानीषत्स्निग्धान् विषाद्यार्तादीन् स्नेहविरेकैः शोधयेत् । स्नेहभावितांश्च पुरुषान् रूक्षैर्विरेकैः शोधयेत् ॥ ४९ ॥

प०—सर्वान् विषाभिधान् पिटिकाभ्यो वातिरिक्तान् अन्यान् स्नेहविरेकैः स्नेहविरेकौषधैरेरण्डतैलप्रभृतिभिः अथवा स्नेहमिश्रैर्विरेकौषधैरथवा स्नेहसाधितैर्विरेकौषधैः साधयेत् । किंभूतान् स्नेहविरेकैः शोधयेत् । अनन्तरस्नेहभावितान् दोषान् रूक्षभावितान् चिरकालं रूक्षसंवर्धितं देहमिति यावत् । रूक्षैः पुनर्विरेकौषधैस्त्रिवृत्प्रभृतिभिरथवा स्नेहभावितान् नरांश्चिरकालं स्नेहनद्रव्यसंवर्धितदेहानिति ॥ ४९ ॥

हे०—सर्वेषां विरेच्यानां स्नेहविरेचनं देयमित्याह—सर्वानिति । स्नेहभावितानां रूक्षं विरेचनमित्याह—रूक्षैरिति ॥ ४९ ॥

**कर्मणां वमनादीनां पुनरप्यंतरेंऽतरे ।**
**स्नेहस्वेदौ प्रयुंजीत स्नेहमंते बलाय च ॥ ५० ॥**

स०—वमनादीनां कर्मणामंतरेंऽतरे मध्ये मध्ये पुनरपि भूयः स्नेहस्वेदौ प्रयुंजीत । अंते च कर्मणां बलाय शरीरस्य बलाधानार्थं स्नेहं प्रयुञ्जीत । तदेषोऽर्थो बोद्धव्यः । आदौ स्नेहस्वेदौ ततो वमनं पुनः स्नेहस्वेदौ ततो विरेचनं पुनः स्नेहस्वेदौ ततोऽनुवासनं पुनः स्नेहस्वेदौ ततो निरूहबस्तिरिति ॥ ५० ॥

प०—वमनादीनां कर्मणां क्रियमाणानामन्तरे मध्ये स्नेहस्वेदौ प्रयुञ्जीत । वमनं कृत्वा स्नेहस्वेदौ प्रयुञ्जीत । ततोऽनन्तरं विरेचनं कुर्यात् । विरेचनादनन्तरं स्नेहस्वेदौ प्रयुञ्जीत । ततोऽनन्तरं स्नेहस्वेदौ ततोऽनुवासनं प्रयुञ्जीत । ततोऽनन्तरं निरूहं कुर्यात् । ततः स्नेहस्वेदौ ततोऽनन्तरमनुवासनं प्रयुञ्जीत । ततः स्नेहस्वेदौ आशिरोविरेचनं ततः शिरोविरेचनान्ते स्नेहमेव केवलं प्रयुञ्जीत । बलाय वमनादिभिर्यद्बलं हानिं तस्योत्पादनार्थम् ॥ ५० ॥

हे०—प्रतिकर्म स्नेहस्वेदौ कार्यौ इत्याह—कर्मणामिति । सर्वकर्मांते पुनः स्नेहनं कार्यमित्याह—स्नेहमिति ॥ ५० ॥

किमित्येवं विधीयत इत्याह—

**मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा ।**
**स्नेहस्वेदैस्तथोत्क्लेश्य ह्रियते शोधनैर्मलः ॥५१॥**

स०—मलो हि देहादुत्क्लेश्य पतनोन्मुखीकृत्य शोधनैर्विरेचनादिभिर्ह्रियते । कथमिव वाससो वस्त्राद्यथा स्नेहस्वेदैः ॥ ५१ ॥

प०—यस्मात्समलाद्देहान्मलानेकलोलीभूतानुत्क्लेश्य प्रवृद्धेर्हानादनन्तरं स मलो देहाद्धह्रियेथा शोधने ह्रियते निःसार्यते एवं देहो रक्षितो भवति । हुत इव मलो ह्रियते । वाससो वस्त्रात् समलाद्यथा तथा स्नेहैस्तदा स्वेदैर्मलोत्क्लेशनोपायैर्मलमुक्तिः स्यादनन्तरं मलोऽद्भिर्ह्रियते ॥ ५१ ॥

हे०—स्नेहनस्वेदाभ्यासे युक्तिमाह—मल इति । स्निग्धस्विन्नान् वस्त्रादिवदुत्क्लिष्टो मलो ह्रियते ॥ ५१ ॥

स्नेहस्वेदानभ्यासे दोषमाह—

**स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः ।**
**दारु शुष्कमिवाऽऽनामे शरीरं तस्य दीर्यते ५२ ।**

स०—यो नरः स्नेहस्वेदावनभ्यस्याऽशीलयित्वा शोधनं कुर्यात्तस्य शरीरं दीर्यते । कथमिव । आनामे आनमने काष्ठं शुष्कं यथा दीर्यते ॥ ५२ ॥

प०—यः स्नेहस्वेदौ प्रथममनभ्यस्याकृत्वा संशोधनं वमनविरेकादिकं कुर्यात् तस्य जन्तोः शरीरं दीर्यते । यथा शुष्कं दारुकाष्ठमानामे कुब्जताभावकरणे भज्यते ॥ ५२ ॥

हे०—स्नेहस्वेदानभ्यासे युक्तिमाह—स्नेहस्वेदाविति ५२

सांप्रतं संशुद्धेः फलमाह—

**बुद्धिप्रसादं बलमिंद्रियाणां**
**धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।**
**चिराच्च पाकं वयसः करोति**
**संशोधनं सम्यगुपास्यमानम् ॥ ५३ ॥**

स०—यौवनादेः पाकः परिणाम इति । उपजातिवृत्तम् ॥ ५३ ॥

इति श्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामष्टादशोऽध्यायः ॥ १८ ॥

प०—संशोधनं शिरोविरेचनपर्यन्तं सम्यग्यथाविधि साधु कृत्वोपास्यमानं बुद्धेः प्रज्ञायाः प्रसादं स्फुटत्वं तथैवेन्द्रियाणां चक्षुरादीनां बलं स्वे स्वे विषये सामर्थ्यं तथा धातूनां रसादीनां स्थिरत्वं दार्ढ्यं तथा ज्वलनस्य पावकस्य दीप्तिसमिद्धत्वं तथा वयसः शरीरपरिणामस्य चिराद्बहुकाले वृद्धत्वं करोतीति सर्वत्र संशोधनीयमिति भद्रम् ॥ ५३ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थानेऽष्टादशोऽध्यायः ॥ १८ ॥

हे०—स्वस्थशोधनस्य फलमाह—बुद्धिप्रसादमिति । वयसः पाकं जराम् ॥ ५३ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने वांतिरेकप्रकरणं सामस्त्येन निरूपितम् ॥ १८ ॥

# एकोनविंशोऽध्यायः ।



मलहरणार्थं पूर्वाध्याय उक्तः । बस्तिनाऽपि मला निर्ह्रियंत इति वमनविरेचनविधेरनंतरं बस्तिविधेरुपदेशो युक्त इत्याह—

**अथाऽतो बस्तिविधिमध्यायं व्याख्यास्यामः॥१॥**

स०—अथाऽत इति। बस्तिना दीयत इति बस्तिस्तस्य विधिः शेषं पूर्ववद्व्याख्येयम् ॥ १ ॥

प०—अस्यारम्भे प्रयोजनं वमनं कफजयायोपदिष्टं विरेचनं पित्तजयाय। प्रकृतत्वाद्वायुः प्रसक्तः। अतस्तत्परिजयार्थमध्यायारम्भः । बस्तेर्विधिर्बस्तिविधिः । विधानमितिकर्तव्यरूपस्तमध्यायं व्याख्यास्यामः वर्णयिष्यामः ॥ १ ॥

हे०—क्रमप्राप्तं बस्तिविधिमध्यायं व्याख्यातुं प्रतिजानीते अथेति ॥ १ ॥

**वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यते।**
**उपक्रमाणां सर्वेषां सोऽग्रणीस्त्रिविधश्च सः।**
**निरूहोऽन्वासनो बस्तिरुत्तरः ॥ २ ॥**

स०—वात उल्बणोऽधिको येषां दोषाणां तेषु बस्तिरिष्यते । आचार्यैरिति शेषः । तत्र वातपित्ते वातश्लेष्मण्यथवा केवले वायौ बस्तिरिष्यते। उप चिकित्सानां सर्वेषां स बस्तिरग्रणीः प्रधानतमः । त्रिप्रकारः । तदेव त्रैविध्यमाह । निरूहोऽन बस्तिरुत्तर इति यदा तूत्तरेण मार्गेण मेढ्रादिना इत्युत्तरबस्तिः ॥ २ ॥

प०—बस्तिना दीयते बस्तिर्वा पूर्वमन्वे बस्तिः सर्वदोषेषु वातोल्बणेषु वातप्रधानेषु बस्तिरिष्यते । केवले वाते प्रकुपिते स एव तथाच स्नेहबस्तिरनुवासनपर्यायोऽपीष्यते चोपक्रमाणां वातचिकित्सानां सर्वेषां समग्राग्रणीः प्रधानतमः। शीघ्रं सुखस्य बृंहणादिकारित स तु बस्तिस्त्रिविधः । आस्थापनमन्वासन रबस्तिश्च निरूहणम् । निरूहणे निःशेषेण दोषाणां निर्हरणो निरूहः । अनेकार्थत्वाद्ध नाम् । निरूहोक्लिष्टाः स्वस्थानप्रच्युता येनानुपश्चात् क्रियन्ते तद्वदन्वासनम् । अप मार्गादिरुत्तरो मार्गो मेढ्राख्यस्तेन तस्मिन् वा प्रणीयते स उत्तरबस्तिः । तथाचार्येणोक्त तद्वयःस्थापनाद्दोषस्थापनाद्वाऽऽस्थापनमित्युच्यते शरीररोहणाद्दोषनिर्हरणादचिन्त्यप्रभावतयाऽस्मि हासम्भवान्निरूह इति । अत्रास्थापनादोप स्निग्धबस्तिर्भवति । तेषां नामभिरेवस्व मेवाख्यातम् । अनुवासनं यथार्हौषधिसि स्नेहनार्थे स्नेहः । यतश्चानुवसन्नपि न दुष्यति अनुवासनमपि वा दीयत इत्यनुवासनम्। उ रबस्तिरपि स्नेहान्वासनवच्छोधनः निरूहवदपि केचिदाहुः। स निरूहादुत्तरमुत्तरेण वा मार्गे दीयते इत्युत्तरबस्तिः ॥ २ ॥

हे०—बस्तेर्विषयमाह—बस्तिना दीयते बस्तिं वा पू मन्वेत्यतो बस्तिरित्युक्तं संग्रहे । बस्तेः सर्वोपक्रमश्रेष्ठ माह—उपक्रमाणामिति। संग्रहे तु शीघ्रं सुखबृंहणा कारित्वाद्विकृतानिलोच्छेदित्वाच्च सुखत्वादेव च बस्तिर्वा वृद्धकृशस्थूलक्षीणधात्विंद्रियेषु स्त्रीषु चानिलोपसर्गादि जासु कृच्छ्रप्रजासु चोपदिश्यते । तथा अग्निबलवर्णमेध स्वरायुःसुखप्रदो वयःस्थापनः पंगुरुग्णभग्नस्तब्धसंकुचि तानिलाध्मातशूलारोचकोदावर्तपरिकर्तिकादिषु हित इति बस्तिभेदानाह—त्रिविध इति। संग्रहे तु तत्रास्थाप दोषदूष्याद्यनुसारेण नानाद्रव्यसंयोगादिनिर्वृतम् । तद

भेदाः। उत्क्लेशनं शोधनं शमनं लेखनं बृंहणं वाजीकरणं पिच्छाबस्तिर्माधुतैलिकमित्यादयः। माधुतैलिकस्य पर्यायाः यापनो युक्तरथो दोषहरः सिद्धबस्तिरिति। तेषां नामभिरेव च स्वरूपमाख्यातं तद्वयःस्थापनाद्दोषास्थापनाद्वा आस्थापनमित्युच्यते। शरीररोहणाद्दोषनिर्हरणादचिंत्यप्रभावतया वा अस्मिन्नूहासंभवान्निरूह इति। अनुवासनं यथाहौंषधसिद्धः स्नेहनार्थे स्नेहः। स्नेहविधौ स चतुर्द्धाऽभिहितः। तस्य भेदो मात्राबस्तिः। स पेयस्नेहह्रस्वमात्रातुल्यः सेव्यः सदात्र माधुतैलिकवत्। बालवृद्धाध्वभारयानव्यायामचिंताश्रीनित्यस्त्रीनृपेश्वरसुकुमारदुर्बलानिलभग्नाल्पाग्निभिर्निष्परिहारतया सुखो बल्यो वर्ण्यः सृष्टमलो दोषघ्नश्च। तथापि तौ नाजीर्णयोज्यौ। न च दिवास्वप्नस्तयोः सेव्यः। यतश्चासौ अनुवसन्नपि न दुष्यत्यनुवासनमपि वा दीयते इत्यनुवासनम्। वासनं भोजनम्। उत्तरबस्तिरपि स्नेहोऽनुवासनवच्छोधनो निरूहवदपि च केचिदाहुः। स निरूहादुत्तरमुत्तरेण वा मार्गेण दीयत इत्युत्तरबस्तिरिति॥ २॥

**तेन साधयेत्।**
**गुल्माऽऽनाहखुडप्लीहशुद्धातीसारशूलिनः।**
**जीर्णज्वरप्रतिश्यायशुक्राऽनिलमलग्रहान्।**
**वध्माऽश्मरीरजोनाशान्दारुणांश्चाऽनिलामयान्**

स०-तेनेत्यनेन निरूहः परामृश्यते। कथमितिचेत्। ब्रूमः। अनास्थाप्याश्चेत्यधीयते। तत्र के निरूह्या इत्यपि। ते संत्यत्राऽनिरूह्याः पुनरिमे प्रतिवक्तुं युज्यंते। अपि च। आस्थाप्या एव चान्वास्या इति पठति के आस्थाप्या इति न गम्येत यदीह निरूहो न परामृश्येत। तस्मात्तेनेत्यनेन निरूहस्य ग्रहणं न्याय्यम्। तेन निरूहेण गुल्मादींस्तथा जीर्णज्वरादीन् कृच्छ्रान् वातरोगांश्चोपक्रमेत्। गुल्मादीनां शूलांतानां द्वंद्व इनिः कार्यः। शुक्रादीनां ग्रहेण संबंधः। शुक्रग्रहो रेतोविबंधः। अनिलग्रहो वायोरसंचारः। रजोनाशः स्त्रियाः पुष्पनाशः॥ ३॥

प०-तेन निरूहेण गुल्मादीननिलपर्यन्तान् साधयेत् चिकित्सेत्। आनाहः कोष्ठापूरः। खुडं वातशोणितम्। शुद्धातीसार आमातीसारः। जीर्णज्वरः पुराणज्वरः। प्रतिश्यायः पीनसः। शुक्रानिलमलानां ग्रहः सङ्गः। रजोनाशः आर्तवादर्शनम्। दारुणाश्च कृच्छ्रसाध्या अनिलामया वातव्याधयः॥ ३॥

हे०-निरूहस्य विशेषतो विषयमाह--तेनेति। निरूहादिषु त्रिष्वपि प्रकृतेषु प्रधानत्वान्निरूहस्य परामर्शः। आस्थाप्या एव चेत्यनुवादाच्च। खुडं वातरक्तं, शुद्धातीसारो निरामातीसारः रजोनाशस्त्रीणां पुष्पनाशः, संग्रहे तु हृदयकुक्षिपार्श्वग्रहपर्वाभितापपार्श्वयोनिशूलांगसुप्तिशोषकंपगौरवातिलाघवांत्रकूजनशर्कराशुक्रार्तवस्तन्यनाशरजःक्षयोन्मादतोषक्रमिलकोष्ठविषमाग्निसशब्दानल्पोग्रगंधोत्थानादय इति॥ ३॥

**अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः**
**आमातिसारी वमिमान् संशुद्धो दत्तनावनः॥**
**कासश्वासप्रमेहार्शोहिध्माऽऽध्मानाल्पवर्चसः।**
**शूनपायुः कृताहारो बद्धच्छिद्रो दकोदरी।**
**कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ४**

स०-अतिस्निग्धादयः सप्तममासगर्भिण्यंता अनास्थाप्या अनिरूह्याः। वमिमान् प्रसक्तच्छर्दिः। बद्धादेरुदरेण संबंधः। तत इनिर्मत्वर्थीयः। यद्वाऽतिसारिण आस्थाप्या इत्यनेनाऽऽमातिसारिणोऽनास्थाप्यत्वे लब्धे पुनर्वचनमतिप्रमाथित्वेनाऽऽमातिसारिणः कथंचिदप्यनास्थाप्या इति। तत्राऽतिस्निग्धस्य दोषानुत्क्लेश्य निरूहः श्वयथुमुदरं च जनयेत्। क्षतोरस्ककृशयोः क्षोभव्यापन्नं शरीरमाशु पीडयेत्। आमातिसारिणो दोषस्य सम्यगनिर्बर्हणाद्देहस्य शामत्वादतिपीडां कुर्यात्। प्रसक्तच्छर्दिषो दोषोत्क्लेशो निरूहमूर्ध्वं नयेत्। कृतवमनविरेकयोः सुरिक्तं देहं क्षतं क्षार इव दहेत्। कृतनस्यस्य विवृतोर्ध्वस्रोतस्तया विभ्रंशं कुर्यात्। कासश्वासादीनामुत्क्लिष्टदोषत्वान्निरूह ऊर्ध्वं व्रजेत्। अर्शःप्रभृतीनां भृशतरमाध्मानान्मृत्युर्वा स्यात्। अल्पवर्चस्कादीनां स्तंभजाड्यादीनावहेत्। गर्भिण्याः पूर्वोक्ता एव दोषाः॥ ४॥

प०-अनास्थाप्या अतिस्निग्धादयः। गर्भिणी चाप्रवृत्ताष्टमासपर्यन्ता। भृशं कृशोऽतिकृशः। आमातिसारेण युक्तः। वमिवान् छर्दियुक्तः। संशुद्धः कृतवमनविरेकः। दत्तनस्यः प्रसक्तनावनः। शून-

पायुर्गुदशोफयुक्तः । कृताहारो भुक्तभोजनः । अथ बद्धोदरी छिद्रोदकोदरी । मधुमेही मधुमेहार्त्तः । तत्रातिस्निग्धः उत्क्लिष्टदोषः यो दोषोऽनुत्क्लेश्योदरं मूर्छां श्वयथुं वा निरूहो जनयति । क्षतोरस्कस्यातिकृशस्य क्षोभव्यापन्नं शरीरमाशु पीडयेत्। कृतवमनविरेकयोः सुरिक्तदेहं क्षतं क्षार इव दहेत् । कृतनस्यस्य विभ्रंशं भृशं विवृतोर्ध्वस्रोतस्तया कुर्यात् । प्रसक्तच्छर्द्यादीनां वायुर्निरूहमूर्ध्वं नयेत् । अर्शःस्वावृतमार्गत्वादनागच्छन् बस्तिः प्राणान्निहिंस्यात् । बद्धोदराद्याध्मातानां भृशतरमाध्मानान्मृत्युः । अलसकार्तादीनां चामदोषः । अरोचकार्तादीनां यथास्वमामयवृद्धिः । गर्भिण्याः पूर्वोक्तदोषः ॥ ४ ॥

हे०—निरूहं निषेधति—अनास्थाप्या इति । बद्धोदरादय उदरविशेषाः । संग्रहे तु तथातिस्निग्धोत्क्लिष्टदोषयोर्दोषानुत्क्लेश्योदरं मूर्छां श्वयथुं वा निरूहो जनयेत् । क्षतोरस्कस्यापि कृशस्य च क्षोभव्यापन्नं शरीरमाशु पीडयेत् । अनिरन्नस्य वक्ष्यते । कृतवमनविरेकयोस्तु रिक्तं देहक्षतं क्षार इव दहेत् । स्नेहबस्तिस्तु सद्योऽग्निमवसाद श्लेष्मामयाय स्यात् । कृतनस्यस्यास्य विभ्रंशं भृशविवृतोर्ध्वस्रोतस्तया कुर्यात् । अनुवासनं तु दोषोत्क्लेशनं प्रसक्तच्छर्दिनिष्ठीविकाकासश्वासहिध्मातानां वायुर्निरूहमूर्ध्वं नयेत् । अर्शस्यावृतमार्गत्वादनागच्छन् बस्तिः प्राणान् हिंस्यात् । स्नेहः पुनरर्शस्यभिष्यंद्याध्मानाय स्यात् । बद्धोदराद्याध्मानानां भृशतरमाध्मानान्मृत्युः अलसकविषूचिकामातिसारार्तानां चामदोषात् । अरोचकात्पाण्डिगुदशोफकुष्ठमधुमेहार्तानां यथास्वमामयवृद्धिः । गर्भिण्याः पूर्वोक्तो दोष इति पूर्वोक्तो वमनोक्तः ॥ ४ ॥

**आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः । रूक्षाः केवलवातार्ताः ॥ ५ ॥**

स०—य एवाऽऽस्थाप्यास्त एवानुवास्याः । आङ्पूर्वात्तिष्ठतेर्णिजंतादनुपूर्वाच्च वसतेरर्हार्थे ण्यत् । विशेषेणातिवह्न्यादयोऽनुवास्याः ॥ ५ ॥

प०—य एवास्थाप्यास्त एवानुवास्याः । तथा रूक्षा अतिदीप्ताग्नयः । केवलवातार्ताश्च । विशेषेण एते हि परमनुवासनेनाप्यायन्ते । मूलसेकेन वृक्षवत् ॥ ५ ॥

हे०—अनुवासनस्य विशेषतो नियममाह—आ इति । आस्थाप्या गुल्मादयः । अतिवह्न्यादि निरूहानुवासनयोः सामान्यमाह—विशेषादिति ॥

**नाऽनुवास्यास्त ए येऽनास्थाप्यास्तथा पांडुकामलामेहपीनस निरन्नप्लीहविड्भेदिगुरुकोष्ठकफोदराः । अभिष्यंदिकृशस्थूलकृमिकोष्ठाढ्यमारुता पीते विषे गरेऽपच्यां श्लीपदी गलगंडवा**

स०—त एवेति । य एवाऽनास्थाप्या [illegible] ह्यास्ते चाऽपि नानुवास्याः। तथा पांड्वादयो ना नार्हाः । एतेषां हि दोषानुत्क्लेश्य स्नेहबस्तिरुद येत् । निरन्नस्याऽनुवासनात् स्नेहविपत्तिः । तथा खरनादेन । अभुक्तवतश्च तथा स्नेहबस्तिः इति । प्लीहादीनां स्तंभजाड्यादीनावहेत् । कृमि स्याऽनुवासनात्पूर्वमनिर्हृतैः कृमिभिरति बहुल निःसरणेन हृदयमतिकर्षद्भिश्छर्दयेयुः । आढ तस्य सम्यग्दोषनिर्हरणादामवृद्धिः । पीते वि च नाऽनुवास्या इति योज्यम् । अपच्यां न का श्लीपदीतीनिर्गलगंडवानिति मतुप् । अपच नाऽनुवास्या इति । संग्रहे चोक्तम् । अभुक्ते वि ष्टस्य प्रयुक्तमनुवासनम् । सन्दद्यासूक्ष्मत्वैः स्नि प्रपद्यते । तेन वायोर्जयो न स्याद्वातवामन्यति कायाग्नेराशु नाशश्च विशेषादनिलातिना । स्नेहः ऽशिताहाररुद्धं स्वामाशयेऽनिलम् । पक्वस्थं हंति स्थश्च्यवते चाल्पपाकतः । निरूहश्च समीरश्च वेगावुभावपि । तावन्नमूर्च्छितौ तीक्ष्णावयोऽन्नेन गतौ । ऊर्ध्वं वा शकृता सार्धं संस्थितौ कोष्ठ समलाहारविष्टब्धौ हरेतामाशु जीवितम् । एवानुवास्योऽस्मान्न निरूहोऽत्र भुक्तवानिति ॥

प०—त एव नानुवास्या ये नास्थाप्याः रूक्षा ये । तथा पाण्डुरोग्यादयः कामलावन्त पीनसश्च प्रतिश्यायः । निरन्नोऽभुक्तभक्तः । स्थूलोऽतिस्थूलः । आढ्यमारुतो मेदसावृतो अपची गण्डमाला । गलगण्डवान् गलगण्डरोग

हे०—अनास्थाप्यादीनां पांड्वादीनां चानुवासन निषेधति—नानुवास्या इति। अनास्थाप्या अतिस्निग्धादयः। निरन्नोऽकृताहारः, विड्भेदी शिथिलमलः, गुरुकोष्ठ आहारं विनाप्याहारपूर्ण इव कोष्ठो यस्य, अभिष्यंदी नेत्रकोपी। संग्रहे तु तत्रातिस्निग्धादीनां यथास्वमुक्ताः पृथग्दोषाः। अपि च "अनुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम्। सरदूरंगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते॥ तेन वायोर्जयो न स्याद्गातधामन्यातिष्ठता। कार्याग्नेराशु नाशस्तु विशेषादतिवर्तिना॥ स्नेहः सद्योऽशिताहाररुद्धे त्वामाशयेऽनिलम्। पक्वस्थं हंति पक्वस्थश्च्यवने चान्नपाकतः॥ निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि। तावन्न मूर्छितौ तीक्ष्णावधोऽन्नेन सहागतौ॥ ऊर्ध्वं वा शकृता सार्द्धं संस्थितौ कोष्ठ एव वा। समलाहारविष्टब्धौ हरेतामाशु जीवितम्॥ भुक्तवान्नानु वास्योऽस्मान्न निरूह्योऽत्र भुक्तवान्" पाण्डुरोगार्तादीनां दोषानुत्क्लेश्य स्नेहबस्तिरुदरं जनयेत्। प्रतिश्यायादिमतां भूय एव दोषं विवर्तयेत्। इति॥ ६॥

निरूहान्वासनयोर्यंत्रस्य लक्षणमाह—

**तयोस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम्।**
**गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जु गुलिकामुखम् ७**

स०—तयोर्निरूहान्वासनयोर्नेत्रं भवति। नीयते प्राप्यते स्नेहकल्काद्यपानमिति नेत्रम्। नेत्रेति नेः ष्ट्रन्प्रत्ययः। किंभूतं नेत्रम्। हेमादीति। आदिशब्दः प्रकारे। तेन रूप्यरीतिकायस्कांस्यत्रपुसीसादयो गृह्यंते। दारु शिंशपादिकाष्ठम्। अस्थि गजादेः। वेणुर्वंशः। एतेषां द्वंद्वः। एभ्यो जातं तयोर्निरूहान्वासनयोर्नेत्रं भवति। किंभूतम्। गोपुच्छाकारम्। गोपुच्छ इवाऽकारो यस्य तत्। तथाऽच्छिद्रं निर्विवरम्। तथा श्लक्ष्णं कोमलं तथाऽप्यृज्ववक्रम्। गुलिकासदृशमतीक्ष्णं मुखं यस्य तदेवम्॥ ७॥

प०—तयोरास्थापनानुवासनयोर्नेत्रमेवंविधं कर्तव्यम्। तच्च हेमादिजम्। हेमादिधातवः सुवर्णरूप्यत्रपुसीसताम्राणि। तथा गोपुच्छाकृति। अच्छिद्रमव्रणम्। श्लक्ष्णमपरुषम्। ऋजु अवक्रम्। अङ्गुलिकामुखमतीक्ष्णाग्रम्॥ ७॥

हे०—निरूहान्वासनयन्त्रस्य लक्षणमाह—तयोरिति। गोपुच्छाकारं गोपुच्छवत् क्रमकृशं वृत्तं च। गुलिकामुखं गुलिकावदास्रहितं मुखं यस्य। संग्रहे तु मणिशंखशृंगदंतनलखदिरकदरातिनिशतिन्दुकादिदारुसारमयमृजुकर्कशमिति॥ ७॥

अथाऽस्य प्रमाणमाह—

**ऊनेऽब्दे पंच पूर्णेऽस्मिन्नासप्तभ्योऽगुलानि षट्।**
**सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव।**
**द्वादशैव परं विंशात्॥ ८॥**

स०—अपूर्णे वर्षे नेत्रस्य पंचांगुलानि। आतुरांगुलप्रमाणमिति गम्यते। दैर्घ्येण चैत्येतदप्युक्तं गम्यते। वक्ष्यति हि। स्वांगुष्ठेन समं मूले स्थौल्येनेति। आसप्तभ्यः सप्तवर्षाणि मर्यादीकृत्य षडंगुलानि प्रमाणम्। आङत्र मर्यादायां नाभिविधौ। तेन षड्वर्षे बाले षडंगुलानि नेत्रम्। अन्यथा सप्तवर्षस्याऽपि षडेवेति प्राप्नोति। वक्ष्यति तु सप्तमे सप्तेति। एवं च पूर्वापरं व्याहतं स्यात्। तस्मान्मर्यादायामाङित्यवेहि। सप्तमे वर्षे सप्तांगुलानि द्वादशे वत्सरे तान्यंगुलान्यष्टौ नेत्रम्। द्वादशानां पूरण इति तस्य पूरणे डडिति डट्। एवं षोडश इत्यत्र। षोडशसंवत्सरे नवांगुलानि नेत्रम्। विंशाद्वत्सरात् तस्मादूर्ध्वमेकविंशप्रभृतिवर्षेषु द्वादशांगुलानि नेत्रम्। नातोऽप्यधिकानीत्येवशब्दार्थः। विंशतिशब्दात्पूरणे डटि तिर्विंशतेर्डितीति तिलोपाद्विंशशब्दः॥ ८॥

प०—हीनसंवत्सरे बाले पञ्चाङ्गुलं नेत्रं कुर्यात्। पूर्णेऽस्मिन्नब्दे द्वितृतीयादिके वर्ष इति यावत्। सप्तभ्योऽब्देभ्यस्तावत् षडङ्गुलानि नेत्रम्। आङ् मर्यादायां नाभिविधौ। तेन षट्चाङ्गुलिना षडङ्गुलिना नेत्रं सप्तमेऽब्दे पूर्णसप्ताङ्गुलानि नेत्रं तान्यष्टावङ्गुलानि द्वादशेऽब्दे पूर्णे नेत्रं विंशत्यब्दात्परमनन्तरं द्वादशैवाङ्गुलानि नेत्रं कुर्यात्॥ ८॥

हे०—यन्त्रप्रमाणमाह—ऊन इति। प्रथमे वर्षे पंचांगुलं यन्त्रं, द्वितीयादिषु पञ्चसु षडंगुलं, सप्तमे सप्तांगुलं, द्वादशेऽष्टांगुलं, षोडशे नवांगुलं, विंशादिषु द्वादशांगुलम्॥ ८॥

**वीक्ष्य वर्षांतरेषु च।**
**वयोबलशरीराणि प्रमाणमभिवर्धयेत्॥ ९॥**

स०–वर्षांतरेष्वंतरालावच्छिन्नेषु वर्षेषु नवमदशमादिषु वीक्ष्य पर्यालोच्य नेत्रस्य प्रमाणमभिवर्धयेत् । चशब्दो भिन्नक्रमः । न केवलं वर्षांतरेषु प्रमाणमभिवर्धयेत् । यावद्वयोबलादीनि निरूप्य प्रमाणं चाऽभिवर्धयेत् ॥ ९ ॥

प०–वर्षान्तरेषु संवत्सरमध्येषु वयोबलशरीराणि ज्ञात्वा नेत्रस्य प्रमाणमभिवर्धयेत् । वृद्धिं नयेत् । षोडशेऽब्दे वा पूर्णे नवाङ्गुलानि नेत्रम् । यावदेकोनविंशोऽब्दः । विंशेऽब्दे द्वादशाङ्गुलानि नेत्रम् विंशतोऽब्दात्परमनन्तरं द्वादशैवाङ्गुलानि नेत्रं कुर्यात् । ऊनेऽब्दे पञ्चाङ्गुलानि नेत्रप्रमाणम् । पूर्णेऽस्मिन्नब्दे यावद्वर्षाणि तावत् षडङ्गुलं नेत्रप्रमाणमुक्तम् । अत्रान्तरे मध्ये तद्वयो वीक्ष्य बुद्ध्वा तथा शरीरं वीक्ष्य ततो यत्किञ्चिदन्तराले वयस्तथाबलं शरीरमेवं नेत्रमपि वर्धयेत् । एवमन्येषु वर्षान्तरेषु व्याख्येयम् ॥ ९ ॥

हे०–वर्षान्तरेषु वयःप्रभृतीन्वीक्ष्य युक्त्या प्रमाणं वर्द्धयेत् । अष्टमे सपादसप्तांगुलं, नवमे सार्धसप्तांगुलमित्यादि ॥ ९ ॥

**स्वांगुष्ठेन समं मूले स्थौल्येनाऽग्रे कनिष्ठया १०॥**

स०–स्थौल्येन परिणाहेन स्वांगुष्ठेन तुल्यं मूले नेत्रं तथाऽग्रे प्रांतस्तस्मिन् कनिष्ठयांऽगुल्या समं नेत्रं स्यात् । खरनादेऽप्युक्तम् । वस्तिनेत्रमृजु श्लक्ष्णं सद्वृत्तं गुलिकामुखम् । भवेद्गोपुच्छसंस्थानं सुप्रवाहं त्रिकर्णिकम् । या त्रिभागप्रणयने मर्यादा कर्णिका भवेत् । द्वे कर्णिके चोपरिष्टाद्वस्त्याधारेऽथवान्तरे । स्वांगुष्ठकपरीणाहं मूलं नेत्रस्य शस्यते । मध्यं त्वनामिकातुल्यमग्रं तुल्यकनिष्ठिकम् । स्वेनांगुलिप्रमाणेन दैर्घ्यं स्याद्वादशांगुलम् । कर्कंधु प्रवहच्छिद्रं श्रेष्ठमन्यद्यथावयः । विंशद्वादशषड्वर्षे द्वादशाष्टषडंगुलम् । कर्कंधुकसतीनाग्रमुखं छिद्रवहमित्यादि । मुनिरप्यवोचत् । षड्द्वादशाष्टांगुलसंमितानि षड्विंशतिद्वादशवर्षजानाम् । स्युर्महत्कर्कंधुसतीनवाहिच्छिद्राण्यपिहितानि चैव । यथा वयोंऽगुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्यात् परिणाह इति ॥ १० ॥

प०–मूले मूलविषये नेत्रं स्वाङ्गुष्ठेन समभा: राङ्गुष्ठप्रमाणतुल्यं कार्यम् । अग्रे अग्रविषये मु नेत्रमातुरकनिष्ठया समं कार्यम् ॥ १० ॥

हे०–यन्त्रस्थौल्यमाह–स्वांगुष्ठेनेति । स्वांगुष्ठेन य दिश्य यन्त्रप्रमाणं तस्यांगुष्ठेन तस्यैव कनिष्ठिकया । म अग्रे इत्युभयत्र योज्यम् । अंगुष्ठमूलवद्यंत्रमूलं कनिष्ठाग्रवत् त्राग्रं स्थूलमित्यर्थः । मध्यं त्वानुपूर्व्या स्थूलम् ॥ १०

अधुना बिंदुद्वारेण नेत्रस्थौल्यप्रमाणमधिकं दर्शयन्नाह

**पूर्णेऽब्देऽङ्गुलमादाय तदर्धाऽर्धप्रवर्धितम् ।**
**त्र्यंगुलं परमं छिद्रं मूलेऽग्रे वहते तु यत् ।**
**मुद्गं माषं कलायं च क्लिन्नं कर्कंधुकं क्रमात्१**

स०–वर्षे पूर्णे सत्यंगुलमादाय स्वांगुलात्प्रभृ क्रमेण त्र्यंगुलं छिद्रं मूले नेत्रस्य भवति । किंभृ छिद्रम् । अर्धस्याऽर्धमर्धार्धम् । तस्यांऽगुलस्यार्ध तेन प्रवर्धितम् । तत्र प्रथमे वर्षेऽगुलमात्रं छिद्रं या द्वर्षाणि षट् । सप्तमे वर्षे सपादमंगुलं यावदेकाद वर्षाणि । द्वादशे वर्षे सार्धमंगुलं यावत्षोडशवर्षाणि षोडशे वर्षे पादोनमंगुलद्वयम् । सप्तदशे वर्षेऽगुलद्वय अष्टादशे वर्षे सपादमंगुलद्वयम् । एकोनविंशतिव सार्धमंगुलद्वयम् । विंशतिवर्षस्य पादोनमंगुलत्रयम् एकविंशतिवर्षस्य त्र्यंगुलं छिद्रमिति क्रमो वेद्यः । पर मित्यनेनैतद्गमयति । परममुत्कर्षमाश्रित्येदं मूलच्छिद्रम मध्यमं तु यत्तच्छिद्रं स्वांगुष्ठेनेत्यनेनोक्तम् । ऊनवर्षस त्वर्धांगुलं छिद्रमेतदपेक्षया कल्प्यम् । अग्रे तु छि तद्वद्भवति यन्मुद्गादि वहति । तत्र वार्षिकस्य मुद्गवा यावत्षड्वर्षम् । सप्तवर्षस्य माषवाहि यावदेकादशोऽब्दः द्वादशवर्षस्य कलायवाहि षोडशवर्षस्य क्लिन्नकलायवा एकविंशतिवर्षस्य कर्कंधुवाहीति क्रमाद्वयःप्रमाणम् ऊनवर्षस्य च न मुद्गादिवाहि कल्प्यम् । अग्रच्छिद्रप्र माणं चैतदग्रे कनिष्ठयेत्यत्राऽपि संगच्छत एव । दैर्घ्य प्रमाणं चाऽत्र पक्षे पूर्वमेव योज्यम् । स्वांगुष्ठेन स मूले स्थौल्येनेत्यनेन छिद्रप्रमाणं स्वमत्या भिषजा प्रक ल्प्यम् । तथा त्र्यंगुलं परमं छिद्रमित्यत्र स्थौल्यप्रमा स्वधियैव निरूप्यम् । तंत्रकृता तु ग्रंथगौरवभयादुत्त प्रायत्वाच्चेह नोक्तम् ॥ ११ ॥

प०—क्रमेण च यवा देया उद्दिष्टनेत्रप्रमाणपरिपाटीमतिक्रम्येति यावत् । पूर्णाब्दे नतु हीने संवत्सरे संवत्सरेऽङ्गुलमादाय गृहीत्वा तदर्धार्धप्रवर्धितं तावच्छिद्रं कार्यमिति यावत् । अङ्गुलं छिद्रं सम्पद्यते तच्च परमं प्रकृष्टं छिद्रं न ततोऽभ्यधिकं कार्यम् । वर्षादूनेऽब्देऽङ्गुलादप्यूनं छिद्रमूले कार्यम् । अन्यन्मुद्गादिच्छिद्रादपि किञ्चिदूनं छिद्रं कार्यमिति । अर्धं चार्धं चार्धार्धं तस्यार्धार्धं तदित्येनाङ्गुलं परामृशति । तेनाङ्गुलस्यार्धेनार्धेन प्रवर्धितं वृद्धिं प्राप्तं वा तद्यावत् त्र्यङ्गुलं परमं छिद्रं मूलेन सम्पद्यते । अग्रमुखं यथाक्रमं पूर्णेऽब्दे मुद्गमादाय यथावद्यथाछिद्रं कर्कन्धुसिध्वितकाफलं वहते तावत्तद्वर्धनीयम् । परशब्दोऽत्रापि वर्तयति न यत्कर्कन्धुवाहि क्रमादस्य तत्परमं न ततोऽभ्यधिकं कार्यम् । एवं पूर्णेऽब्दे मुद्गच्छिद्रं मुद्गवाहि यावत् षष्ठोऽब्दः । सप्तमे माषवाहि यावदेकादशोऽब्दः । द्वादशे कलायवाहि यावत्पञ्चदशाब्दः । षोडशे तु क्लिन्नकलायवाहि यावदेकोनविंशोऽब्दः । विंशतेरूर्ध्वं कर्कन्धुवाहि यावत्पूर्णप्रमाणम् ॥ ११ ॥

हे०—यन्त्रच्छिद्रप्रमाणमाह—पूर्णेऽब्दे इति । षडंगुलस्य यन्त्रस्य मूलच्छिद्रमंगुलप्रमाणं, सप्तांगुलस्य सार्द्धांगुलम्, अष्टांगुलस्य द्व्यंगुलं, नवांगुलस्य सार्द्धद्व्यंगुलं, द्वादशांगुलस्य त्र्यंगुलं, षडंगुलस्याग्रच्छिद्रं मुद्गवाहि, सप्तांगुलस्य माषवाहि, अष्टांगुलस्य कलायवाहि, नवांगुलस्य क्लिन्नकलायवाहि, द्वादशांगुलस्य ह्रस्वबदरवाहि । अंगुलमानं तु छिद्रस्य वृत्तपरिधौ ज्ञेयं, पञ्चांगुलस्य मूले अर्द्धांगुलम्, अग्रे घनमुद्गवाहीति संग्रहोक्तं ज्ञेयम् ॥ ११ ॥

**मूलच्छिद्रप्रमाणेन प्रांते घटितकर्णिकम् ।**
**वर्त्याऽग्रे पिहितं मूले यथास्वं द्व्यंगुलांतरम् ।**
**कर्णिकाद्वितयं नेत्रे कुर्यात् ॥ १२ ॥**

स०—मूले यच्छिद्रमुक्तं तत्प्रमाणेन प्रांते घटिता सम्पादिता कर्णिका छत्राकारा गुदाधिकांतःप्रवेशरोधिनी यस्मिंस्तदेवम् । तथा वर्त्या दशादिकृतया प्रांते पिहितं स्थगितम् । मूले यथास्वमूनवर्षादिकस्य तदंगुलप्रमाणेन द्व्यंगुलांतरं कर्णिकायुगलं मूलप्रदेशे नेत्रे दधीत बस्तिपुटयोजनार्थम् ॥ १२ ॥

प०—प्रान्तेऽग्रे यथायथं पूर्णच्छिद्रप्रमाणेन घटिता निष्पादिता कर्णिका यस्य । वर्त्याग्रेपिहितम् इति । तच्च नेत्रं वर्त्याग्रे पिहितं कुर्यात् । कार्पासमय्या वर्त्या पिहितं स्थगितं वातागन्तःप्रवेशपरिहारार्थं मूले यथास्वं द्व्यङ्गुलान्तरं कर्णिकाद्वितयं नेत्रे कुर्यात् ॥ १२ ॥

हे०—यन्त्रस्य प्रांतकर्णिकास्थानमाह—मूलच्छिद्रप्रमाणेनेति । मूलच्छिद्रप्रमाणेन प्रान्ते परिकल्प्य सली-मारूपां कर्णिकां घटयेत् । यन्त्राग्रच्छिद्रं वर्त्या पिधेयमित्याह—वर्त्येति । संग्रहे तु कर्णिकान्तप्रतिबद्धगुदानुप्रवेशगुप्तीताग्रपिधानघनचैलवर्तीत्युक्तं, यन्त्रमूलस्थकर्णिकाद्वयमध्ये अंगुलमन्तरं कार्यमित्याह—मूल इति । यथास्वं यथोद्दिष्ट यन्त्रं तदंगुलैः ॥ १२ ॥

अत एवाह—

**तत्र च योजयेत् ।**
**अजाविमहिषादीनां बस्तिं सुमृदितं दृढम् ॥**
**कषायरक्तं निश्छिद्रग्रंथिगंधशिरं तनुम् ।**
**ग्रंथितं साधु सूत्रेण सुखसंस्थाप्यभेषजम् १३ ॥**

स०—तत्रेत्यादि । तस्मिंश्च कर्णिकाद्वितयेऽजादीनां बस्तिं योजयेत् । आदिशब्देन गोहरिणवराहमहिषाणां ग्रहणम् । अजादीनामित्येवं निर्देशेऽप्यविमहिषग्रहणे लब्धे साक्षादेतयोर्ग्रहणमन्यजेभ्यो बस्तिभ्य एतद्बस्त्योर्योग्यतरत्वप्रतिपादनार्थम् । किंभूतं बस्तिम् । सुमृदितं सस्नेहं मुहुः सुष्ठु मर्दितं तथा दृढं तथा कषायेण हरीतक्यादिना रक्तं तथा छिद्रं च ग्रंथिश्च गंधश्च शिराश्च ताः निर्गता न संति यस्य तन्निश्छिद्रग्रंथिगंधशिरम् । तथा तनुं न स्थूलं तथा साधु सम्यक् सूत्रेण ग्रंथितं बद्धं तथा सुखेनाऽकृच्छ्रेण संस्थाप्यमौषधं यत्र तदेवम् ॥ १३ ॥

प०—बस्तियोजनार्थं तत्र च योजयेत् । तत्र कर्णिकाद्वितयमध्येऽजादीनां बस्तिं सुमृदितं तथा दृढमपरिस्फुटनशीलं कषायरक्तं नान्यद्वर्णान्तरं निश्छिद्रं छिद्ररहितं निर्गन्धं गन्धरहितं निर्ग्रन्थि ग्रन्थिरहितं तथा शिरारहितं स्थूलतया साधु सम्यक् सूत्रेण ग्रथितं बद्धं तथा सुखेन संस्थाप्यं भेषजमौषधं यस्मिन् तत्तथाविधं प्राप्य प्रयोजयेत् ॥ १३ ॥

हे०—कर्णिकाद्वये बस्तिबन्धनमाह—तत्रेति । आदिश-ब्देन गोहरिणवराहादयः । बस्तिर्मूत्राधारचर्मपेशी, सुमृदितं स्नेहमुद्राभ्यां, कषायरक्तं कषायरसैर्द्रव्यैर्दत्तरागं, निश्छिद्रग्रन्थिगन्धशिरं छिद्रादिचतुष्टयरहितं, तनुं सूक्ष्मं साधु ग्रथितं बद्ध्वा परिवर्त्य पुनर्बद्धं सुखं संस्थाप्यं यथोक्तप्रमाणमौषधमसंकोचने यथा माति तथा प्रमाणम् १३

**बस्त्यभावेऽङ्कपादं वा न्यसेद्वासोऽथवा घनम् ॥**

स०—बस्तेरभावे सत्यंकपादं छागैणाद्यवयवविशेषं वा न्यसेन्नेत्रे योजयेत् । अथवा वस्त्रं घनं न्यसेत् ॥ १४ ॥

प०—बस्त्यभावे बस्त्यलाभेऽङ्कपादं वस्त्रपादं वा तत्र नेत्रे न्यसेद्योजयेत् । अथवा वासो वस्त्रं वा घनं निच्छिद्रं योजयेत् ॥ १४ ॥

हे०—अंकपादम् ऊरुचर्म, वासो घनं स्वतो मधूच्छिष्टेन च । संग्रहे तु न्युब्जं विवृताननं निवेश्य बस्तिं कर्णिकयोर्दृढेन सूत्रेण घनं समं च बद्ध्वा परिवर्त्य पुनश्चान्यद्बस्तिं मुखबंधनार्थं सूत्रमुपनिधायानुगुतं निधापयेदिति ॥ १४ ॥

**निरूहमात्रा प्रथमे प्रकुंचो वत्सरात्परम् ।**
**प्रकुंचवृद्धिः प्रत्यब्दं यावत्षट्प्रसृतास्ततः ॥**
**प्रसृतं वर्धयेदूर्ध्वं द्वादशाऽष्टादशस्य च ।**
**आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥१५॥**

स०—निरूहस्य मात्रा प्रथमे वर्षे कषायस्नेहसहितस्य प्रकुंचः पलप्रमाणम् । षण्मासादौ त्वेतदनुसारेणार्धपलादि कल्प्यम् । वर्षात्परं प्रकुञ्चवृद्धिः प्रतिसंवत्सरं कार्या यावत्षट् प्रसृता द्वादश पलानि । तत ऊर्ध्वं प्रसृतं वर्धयेत् । प्रत्यब्दमित्यनुवर्तते । ततो द्वादशवर्षस्यैव द्वादश पलानि । अनंतरं त्रयोदशवर्षादिषु प्रतिवर्षं पलद्वयं निरूहमात्रायां वर्धयितव्यं क्रमेणैव यावत्सप्तदशवर्षाणि । अष्टादशवर्षस्य तु द्वादश प्रसृताश्चतुर्विंशतिपलानि । इदं मानं प्रमाणं सप्ततिवर्षाणि यावत् । परं सप्ततेरूर्ध्वं दशैव प्रसृता मानं नाऽधिकम् ॥ १५ ॥

प०—प्रथमे वत्सरेऽब्दे निरूहप्रमाणं प्रकुञ्चपर्यायः । एवं प्रधानमात्रानिरूहस्योने संवत्सरे प्रकुञ्चादूनं निरूहप्रमाणम् । अनन्तरं प्रत्य प्रकुञ्चस्य वृद्धिः प्रतिवत्सरं यावत् षट् प्रसृ द्वादशपलानि द्वादशवर्षस्य ततः षट्सप्तमपारि णान्निरूहादूर्ध्वमनन्तरं प्रतिवर्षं प्रसृतं वर्ध पलद्वयं यावत्सप्तदशोऽब्दः । अष्टादशवर्षस्य द्वादशप्रसृताश्चतुर्विंशतिपलानि एतस्मिन्निरूहम मासप्ततेः सप्ततिवर्षाणि यावत् । परं सप्तते न्तरं दशैव प्रसृताः विंशतिः पलानि । द्वे प्रसृतिं विदुरिति । एवकारोऽवधारणार्थ सप्ततेः परं दशैव प्रसृताः न ततोऽधिकाः ॥१५

हे०—निरूहौषधमात्रामाह—निरूहमात्रेति । वर्षे पलं, ततः आद्वादशात्पलवृद्धिः, ततः आअष्टाद द्विपलवृद्धिः । एवमष्टादशे वर्षे चतुर्विंशतिपलानि स्यु तान्येवासप्ततितमात्, ततो विंशतिपलानि । संग्र अन्ये पुनर्द्वादशप्रसृतस्याप्यष्टाविच्छंतीति ॥ १५ ॥

एवं सांवत्सरिकादारभ्य यावद्वर्षशतिकस्ता रूहमात्राममभिधायाऽनुवासनमात्रामधिकृत्याह—

**यथायथं निरूहस्य पादो मात्राऽनुवासने १**

स०—यथायथं यथास्वं वार्षिकस्यैकविंशति रादेर्वा निरूहस्य पादश्चतुर्भागो मात्राऽनुवासनेऽनु नविषये मात्रा यस्य पलं निरूहस्तस्य कर्षप्रमाण वासनमित्यर्थः । एवं सर्वत्र कल्प्यम् ॥ १६ ॥

प०—अनुवासने स्नेहबस्तौ यथायथं य निरूहपादः चतुर्थभागः । तस्मिन् मात्रा वत्सरे निरूहमात्रापलम् । तथा मात्रातः चतुर्थांशः कर्षः स्नेहबस्तौ मात्रा द्वाद द्वादशपलानि मात्रा । तत्र चतुर्थांशः पलानि । तथाष्टादशेऽब्दे चतुर्विंशतिपलानि तत्र चतुर्थांशः पलानि षट् । एवं योज्यम् ॥ १६ ॥

हे०—अनुवासनौषधमात्रामाह—यथायथमिति यथायथं पले कर्षः पलद्वये कर्षद्वयमित्यादि । तु यथास्वमास्थापनमात्रा पादहीना माधुतैलिके ज्येति ॥ १६ ॥

**आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं ।**
**अन्वासनार्हं विज्ञाय पूर्वमेवाऽनुवासयेत् ।**

**शीते वसंते च दिवा रात्रौ केचित्ततोऽन्यदा ।**
**अभ्यक्तस्नातमुचितात्पादहीनं हितं लघु ॥**
**अस्निग्धरूक्षमशितं सानुपानं द्रवादि च ।**
**कृतचंक्रमणं मुक्तविण्मूत्रं शयने सुखे ॥**
**नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः ।**
**संकोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम् १७**

स०—आस्थाप्यं निरूहणार्हं स्निग्धं तथा स्विन्नं तथा शुद्धमूर्ध्वाधस्तथा भूयोऽपि लब्धबलं तथाऽनुवासनयोग्यं विदित्वा पूर्वमेव निरूहादनुवासयेत् । शीते हेमंतशिशिरयोर्ऋत्वोस्तथा वसंते दिवाऽनुवासयेत् । केचिदाचार्या अन्यदा शीताद्वसंताच्चाऽन्यस्मिन् ग्रीष्मप्रावृट्शरदाख्ये ऋतौ रात्रावनुवासयेत् । केचिदिति भिन्नक्रमस्ततोऽन्यदेत्यतोऽनंतरं द्रष्टव्यः । इति केचिदाहुरिति वाक्यशेषः। धान्वंतरास्तु सर्वथैव रात्रावनुवासनं नेच्छंति । धन्वंतरिमतमविकृत्य संग्रहेऽभिजगे । न रात्रौ प्रणयेद्बस्तिं दोषोत्क्लेशो हि रात्रिजः । स्नेहो वीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरमिति । तदेवं तद्देशांतरादिवशात् प्रमाणयितव्यम् । किंभूतं नरम् । अभ्यक्तस्नातं पूर्वमभ्यक्तः पश्चात्स्नातः । पूर्वकालेति समासः । उचितायदन्नेन भोजनमभ्यस्तं तस्माच्चतुर्थभागहीनमशितं तथा हितं लघुगुणयुक्तं तथा किंचिदस्निग्धरूक्षं तथा सानुपानं द्रवादि च । आदिशब्देन द्रवोष्णमनभिष्यंदीत्यादि विशिष्टं भुक्तवंतमिति गमयति । उक्तं च संग्रहे । अतिस्निग्धाशिनो ह्युभयमार्गात् स्नेहो मदमूर्च्छाऽग्निसादहृल्लासादीन् जनयति । रूक्षाशिनो विष्टंभं बलवर्णहानिं च । अल्पमात्रद्रवाशिनोऽविसृष्टविण्मूत्रस्य चान्नावृतेन तदावरणाद्व्यापदमिति । किंभूतम् । कृतचंक्रमणं तथा त्यक्तमूत्रपुरीषं तथा शयने सुखावहे संविष्टं स्थितम् । किंभूते। नाऽत्युच्छ्रिते नाऽत्युन्नते न चोच्छीर्षे त्यक्तोच्छीर्षे । कथं संविष्टम् । वामपार्श्वतो वामपार्श्वेन । संकोच्य दक्षिणं सक्थि वामसक्थ्न उपरीति वृद्धवैद्याः । ततो दक्षिणसक्थ्नोऽपरं वामं सक्थि प्रसार्य । संग्रहे चोक्तम् । शयने नात्युच्छ्रिते स्वास्तृत ईषदुन्नतपाददेशे वामपार्श्वेन प्राक्शिरसं संवेशयेदिति ॥ १७ ॥

प०—आस्थापनीय आस्थाप्यः आस्थापनयोग्यः। तमास्थाप्यं स्नेहितं स्विन्नमादौ स्नेहितं पश्चात्स्नेहितं पश्चात्तथा शुद्धं वमनविरेचनाभ्यां लब्धबलं प्राप्तबलमन्वासनयोग्यं पुरुषं विज्ञाय ततः पूर्वमेव कृतास्थापनमनुवासयेत् । शीते काले शीतसामान्याद्धेमन्ते शिशिरे तयोस्तथा वसन्ते दिवाऽनुवासयेत् । ततोऽन्यदाऽन्यस्मिन् काले वर्षाशरद्ग्रीष्माख्ये रात्रावनुवासयेत् । इति केचिदाचार्याः । आदावभ्यक्तं पश्चात् स्नातमातुरमुचितादभ्यस्तात्पादहीनं चतुर्भागन्यूनमस्निग्धरूक्षसाधारणम् । अशितं भुक्तवन्तं सानुपानं तथा द्रवादि द्रवपूर्वं तथा कृतचङ्क्रमणं मुक्तविण्मूत्रमुत्सृष्टशकृन्मलं निवाते वेश्मनि शयने नात्युच्छ्रिते नचोच्छीर्षे ईषदुन्नतपादशेषे वा वामपार्श्वेन संनिविष्टं मुक्तप्राक्शिरसं दक्षिणं सक्थि सङ्कोच्य परं वामं सक्थि प्रसार्यैवंविधं संस्थाप्यास्थाप्य ॥ १७ ॥

हे०—निरूहस्यानुवासनमाह—आस्थाप्यमिति । कृतस्नेहादिकमास्थाप्यमनुवासनयोग्यत्वे सति पूर्वमनुवासयेत् । अनुवासनकालमाह—शीत इति । शीते वसंते ततोऽन्यदा च दिवा अनुवासयेत् । केचित्ततोऽन्यदा रात्राविति वदंति । संग्रहे तु अवेक्ष्य वा दोषादीन् अन्यथा स्नेहोत्क्लामयप्रादुर्भावः । धान्वंतरीयाः पुनः प्राहुः—" न रात्रौ प्रणयेद्बस्तिं दोषोत्क्लेशो हि रात्रिजः । स्नेहवीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम् ॥ अह्नि स्थानास्थिते दोषे वह्नौ चान्नरसान्विते । स्फुटस्रोतोमुखं देहं स्नेहो यः परिसर्पति ॥ अल्पपित्तकफं रूक्षं भृशं वातरुजार्दितम् । भुक्तं जीर्णाशनं कामं रात्रावप्यनुवासयेत् ॥ " केवलानिलातिपीडितं त्वशुद्धमप्यनिरूपितवेलमप्यनुवासयेदात्ययिकत्वादिति । अनुवासनीयस्य पूर्वकर्तव्यमाह—अभ्यक्तेति । उचितान्नित्यभोजनात्पादहीनमशितं द्रवादिद्रवपूर्वं न चोच्छीर्षे उच्छीर्षकं विना ॥ १७ ॥

**अथाऽस्य नेत्रं प्रणयेत्स्निग्धे स्निग्धमुखं गुदे ।**
**उच्छ्वास्य बस्तेर्वदने बद्धे हस्तमकंपयन् ॥**
**पृष्ठवंशं प्रति ततो नाऽतिद्रुतविलंबितम् ।**
**नाऽतिवेगं न वा मंदं सकृदेव प्रपीडयेत् १८॥**

स०—अस्यैवंभूतावस्थस्यातुरस्य गुदे स्निग्धे कृते बस्तेर्वदन उच्छ्वासवातं निःसार्य बद्धे सति नाऽति-

शीघ्रं नाऽविलंबितं नाऽतिवेगं न वा मंदं तथा पृष्ठवंशाभिमुखमेकवारमेव नेत्रं स्निग्धप्रांतं प्रपीडयेत् । कथं प्रपीडयेत् हस्तमकंपयन् । अतिद्रुतादिपीडनदोषा बस्तिव्यापदि वक्ष्यमाणाः ॥ १८ ॥

प०—अथानन्तरमस्य पुंसो नेत्रं प्रणयेद्विदध्यात् । स्नेहाभ्यक्तमुखं कृत्वा गुदे पायौ स्निग्धे स्नेहाभ्यक्ते तत उच्छ्वास्य वायुं निःसार्य तस्य बस्तेर्वदने मुखे बद्धे सूत्रेण ग्रथिते सति हस्तमकम्पयन् अचालयन् पृष्ठवंशं प्रति तदभिमुखं प्रक्षिपेत् । ततोऽनन्तरं नातिवेगं कृत्वा न वा मन्दं कृत्वा शनैःशनैरिति यावत् सकृदेकवारं तु पुनः ॥ १८ ॥

हे०—अनुवासने वैद्यकृत्यमाह-अथेति । अस्यातुरस्य गुदे बस्तिमुच्छ्वास्य मृदुकरस्पर्शेन विगतमारुतं कृत्वा पृष्ठवंशं प्रति पृष्ठवंशाश्रयेण प्रणयेत् । ततोऽनंतरमौषधं प्रणयेत् । नातिद्रुतविलंबितमिति । पीडनारंभविषयं नातिवेगं न वा मंदमिति पीडनाविषयम् ॥ १८ ॥

**सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति १९॥**

स०—सावशेषं च स्नेहं कुर्वीत । कुतो हेतोरित्याह । यस्मात् शेषे स्नेहे वायुस्तिष्ठति ॥ १९ ॥

प०—सावशेषं बस्तिं कुर्वीत न सर्वसर्वकया पीडयेत् । यस्मादौषधशेषे वायुस्तिष्ठति ॥ १९ ॥

हे०—शेषे औषधशेषे ॥ १९ ॥

**दत्ते तूत्तानदेहस्य पाणिना ताडयेत्स्फिजौ । तत्पार्ष्णिभ्यांतथा शय्यां पादतश्च त्रिरुत्क्षिपेत्॥**

स०—दत्ते च स्नेहे सत्युत्तानगात्रस्य तु तस्य स्फिजौ हस्तेनाहन्यात् । तथा तेनैव प्रकारेण तत्पार्ष्णिभ्यां स्फिजौ ताडयेत् । शय्यां खट्वां पादतश्चरणदेशात्त्रीन्वारानुत्क्षिपेन्न तु मूर्धतः ॥ २० ॥

प०—दत्ते बस्तौ तस्योत्तानदेहस्य सतो दत्तनिरूहणस्य पाणिना हस्तेन स्फिजौ ताडयेत् । तत्पार्ष्णिभ्यां स्फिजावाघातयेत् । तथा शय्यां शयनपादप्रदेशात् त्रींस्त्रीन् वारानुत्क्षिपेत् ऊर्ध्वं नयेत् ॥ २० ॥

हे०—दत्ते औषधशेषे नेत्रः स्वपाणिना स्फिजौ ताड... तत आतुरपार्ष्णिभ्यां ततः पादतः शय्यामुत्क्षिपेत् । पार्ष्णी स्वमुष्टिना आहन्यात्त्रिरिति । पाणिताडनादिषु ...पि योज्यम् ॥ २० ॥

**ततः प्रसारितांगस्य सोपधानस्य पार्ष्णिके आहन्यान्मुष्टिनांगं च स्नेहनाभ्यज्य मर्दयेत वेदनार्तमिति स्नेहो नहि शीघ्रं निवर्तते । योज्यःशीघ्रं निवृत्तेऽन्यःस्नेहोऽतिष्ठन्नकार्यकृ**

स०—ततः शय्योत्क्षेपादनंतरं प्रसारितशरीदत्तगेंदुकस्य पार्ष्णिके पार्ष्ण्यौ मुष्ट्या हन्यात् । शरीरं च स्नेहेन तैलादिनाऽभ्यज्य मर्दयेत् । कि क्रियत इत्याह । अंगं वेदनार्तं पीडातुरमिति हेत स्मादाशु स्नेहो न निवर्तते । शीघ्रमपयाति च सत्यपरः स्नेहो देयः । कस्मादेवं विधीयत इत्या स्नेहश्च शरीराभ्यंतरेऽतिष्ठन्नैव कार्यकृत स्नेहने स इत्यर्थः ॥ २१ ॥

प०—ततोऽनन्तरमातुरस्य प्रसारिताङ्गस्य स स्तथा सोपधानस्य सतः मुष्टिना पार्ष्णी आहन्य ताडयेत् । तथाङ्गं शरीरावयवं वेदनार्तं रुजार्त स्नेहेन तैलादिनाऽभ्यज्य म्रक्षयित्वा मर्दयेत् इत्यनेन प्रकारेण यस्मात् स्नेहबस्तिरनुवासनाख्यो न शीघ्रं त्वरितं निवर्तते निर्याति । शीघ्रं निर्ग तस्मिन् बस्तौ अन्यो द्वितीयो बस्तिर्योजयि प्रदेयः । यस्मात् स्नेहोऽनिष्ठन्नातुरस्य वातजय दिकार्यकृन्न भवति ॥ २१ ॥

हे०—ततो वेदनार्तमंगं मर्दयेत् । संमर्दे तु वमनाधिकतरं कृतमंगलमशनार्द्रहस्तमशंकनीयपरिवारं निवा वेश्मनि प्रतले शयने । स्वास्तृते ईषदुन्नतपाददेशे प्राक् शिरसं निवेशयेत् । अतिस्निग्धाशिनो ह्युभयमार्गसंसर्गा स्नेहो मदमूर्छाभिसादहृल्लासान् जनयति । रूक्षाशिन विष्टंभं बलवर्णहानिं च । अल्पमात्रद्रवाशिनो विशुद्धविष्ण् त्रस्य व्यावर्तो न तदावरणाद्यापदम् । चिरमशिन वतो विदाहाभिमुखभक्तस्य ज्वरं कुर्यात्, यतश्च वामपा र्श्वाश्रयाणि वह्निग्रहणीगुदवलीमुखानि तानि तत्पार्श्वाशा यिनो निम्नानि भवन्ति । अतस्तदौषधमस्खलितं प्राप्नोति प्रवेशनिर्गमाविति । संविष्टं चैनमुत्क्षिप्तदेहं स्वबाहूपधान

प्रसारितवामसक्थिमाकुंचितेतरं तस्योपरि प्रसारितदक्षिणबाहुं कारयेत् । पूर्वमेव तु वैद्यो वर्त्या तु पिहिताग्रच्छिद्रं नेत्रं भाजनस्योपरि कृत्वा दक्षिणपादांगुष्ठांगुलिभ्यां कर्णिकायामुपरिष्टान्निष्पीड्याविबन्धाय शताह्वासैन्धवचूर्णावचूर्णितं प्रागेव नेत्रस्य स्पर्शात्पूर्ववदभिमंत्रितं यथार्हं यथार्हौषधाविपक्वं सुखोष्णं बस्तौ स्नेहमासिच्यावलीकोच्छ्वासं निःसारितवातबुद्बुदमौषधान्ते सूत्रेण द्विस्त्रिर्वा बस्तिमुखमावेष्ट्य दक्षिणपाणौ नेत्रमुपधाय तिष्ठेत् । ततो वामहस्तप्रदेशिन्याऽभ्यक्तप्रवेशप्रदेशमपनीतवलिमुत्तानवामहस्तांगुष्ठोदरपिहिताग्रं मध्यमाप्रदेशिन्युपगृहीतकर्णिकमृज्वनुसुखमेकमना लाघवेन नेत्रमाकर्णिकं प्रवेशयेत्। आतुरोऽपि तदनुलोममवलम्बते । ततश्च वैद्यो बस्तिमुखं दक्षिणहस्तांगुष्ठप्रदेशिनीभ्याममुंचन्नेत्रमचालयन् हस्तद्वयेनोत्तानेनैकग्रहणेनैव प्रपीडयेत् । अन्यथा हि व्यापदो भवंति । अन्ये तु त्रिंशन्मात्रापीडनकालमाहुः। न च बस्तौ दीयमाने क्षवकासहासजृंभास्पंदनान्याचरेत्। विण्मूत्रानिलवेगे तु नेत्रमाकृष्य वेगान्ते शेषं प्रणयेत् । तथा पार्ष्ण्यंगुलिपादतलपिंडिकाः सरुजं चांगं स्नेहेन प्रतिलोमवाक्छतमात्रं शनैर्मृद्नीयादिति । वैद्यकृत्यस्य फलमाह—इति स्नेह इति । समनुगच्छति च समन्तात्सिरा इत्यधिकं संग्रहे । प्रमादाच्छीघ्रनिवृत्तौ पुनस्तदेवानुवासनं कार्यमित्याह—योज्य इति । शीघ्रनिवृत्तिर्विना मलेन चेत् ॥ २१ ॥

**दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु २२ ॥**

स०—दीप्ताग्निं तु पुरुषं निवृत्तस्नेहं संतं लघुमात्रया स्वभावतश्चाशयेत् ॥ २२ ॥

प०—दीप्ताग्निं नरमागतस्नेहं निर्गतस्नेहं सायाह्ने दिवसान्ते लघ्वन्नं भोजयेत् ॥ २२ ॥

हे०—मन्दाग्निमनागतस्नेहं च सायं न भोजयेदितीतरनियमेनाह—दीप्ताग्निमिति । संग्रहे तु नैव चानागतस्नेहमपि द्वितीये अहनि नच तमनुवासयेदिति ॥ २२ ॥

**निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ।**
**अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।**
**तीक्ष्णैर्वा बस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये२३॥**

स०—स्नेहस्य त्रयः प्रहराः परो निवृत्तिकालः । ततः प्रहरत्रयात् परतो रात्रिंदिवमुपेक्षेत । न तदाकृष्टये यत्नं कुर्यात् । परतोऽहोरात्रात्फलवर्तिभिरर्शश्चिकित्सितोक्ताभिरथवा तीक्ष्णैर्बस्तिकल्पोक्तैर्बस्तिभि स्नेहागमनार्थं यतेत ॥ २३ ॥

प०—निवृत्तिकालः बस्तेरागमनकालः परमः प्रकृष्टस्त्रयो यामाः प्रहरत्रयं यावत् । ततः पर ततोऽनन्तरमनागच्छन्तं स्नेहमहोरात्रमहर्निशमुपेक्षेत तत्रोपेक्षां कुर्यात् । ततस्तदूर्ध्वमनिवर्तमाने सर्वतः फलवर्तिभिः स्नेहस्य निर्गमनाय यत्नं कुर्यात् वैद्यः तीक्ष्णैर्वा बस्तिभिर्वमनशालेन ॥ २३ ॥

हे०—अनुवासनस्य निवृत्तिकालमाह—निवृत्तिकाल इति । निवृत्तिकालेऽप्यनिवृत्तौ [illegible]—तत इति । उपेक्षाकालेऽप्यनिवृत्तौ प्रतीकारमाह—परत इति । तीक्ष्णैर्लवणारनालप्रायैः ॥ २३ ॥

**अतिरौक्ष्यादनागच्छन्न चेज्जाड्यादिदोषकृत् ।**
**उपेक्ष्यैव हि ततोऽभ्युषितश्च निशां पिबेत् ।**
**प्रातर्नागरधान्यांभः कोष्णं केवलमेव वा २४॥**

स०—अतिरौक्ष्यादनागच्छन् स्नेहो यदि जाड्याग्निसादादिदोषान्न विधत्ते तदोपेक्षेतैव न निष्कासने यतेतेत्यर्थः । ततो निशां रात्रिमभ्युषितः प्रातः प्रभाते शुंठीधान्यांबु कदुष्णं पिबेत् । केवलमेव वा नागरधान्याकरहितं कोष्णं जलं पिबेत्॥२४॥

प०—ततोऽनन्तरमभ्युषितः सुखोषितो निशां रात्रिं प्रातः प्रभाते नागरधान्याम्भः शुण्ठीधान्यक्वथितं तोयं कोष्णं किंचिदुष्णं पिबेत् । केवलमेव वा तोयं क्वथितं स्नेहशेषजरणाय वातकफोपशान्तये च ॥ २४ ॥

हे०—प्रतीकारस्यापवादमाह—अतिरौक्ष्यादिति । निवृत्तस्नेहस्यानिवृत्तस्नेहस्य च स्नेहशेषपाकार्थमौषधमाह—अभ्युषित इति । केवलमेव कोष्णमम्भ इति । संग्रहे तु सुखोष्णोषितं चैनं तथा कृतविरेचनास्थापनान्नतरं प्रातः शुण्ठीधान्यक्वाथमितरद्वोष्णमुदकं स्नेहशेषजरणाय वातकफोपशांतये च पाययेत् । ततोऽन्नकाले यथोक्तमन्नमश्नीयात् । न चानुवासितं पेयां पाययेत् । सा हि सस्नेहकोष्ठमेनमभिष्यन्दयतीति ॥ २४ ॥

**अन्वासयेत्तृतीयेऽह्नि पंचमे वा पुनश्च तम् ।**
**यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान्।**
**व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम्**

स०-तमातुरं भूयस्तृतीये दिवसे पंचमे वाऽनुवासयेत् । अथवा यथा स्नेहपाको भवेदित्यन्यपेक्षया सप्तरात्रेऽधिके न्यूने वा त्रिरात्रे वा यथायोग्यमनुवासयेत्। अतोऽस्मादेव हेतोरधिकपवनान्व्यायामशीलानत्यग्निदीप्तान् रूक्षांश्च पुरुषान् प्रत्यहमनुवासयेत् ॥२५॥

प०-पुनश्च तृतीयेऽह्नि अनुवासयेत् । यथा स्नेहस्य यथापक्तिः यावता कालेन स्नेहपाकः स्यात् । तेनैतदुक्तं भवति । प्रत्यहमनुवासयेत् । अतएव कारणादुल्वणमारुतान् प्रखरवातविकारार्तांस्तथा व्यायामनित्यान् व्यायामं कुर्वतः तथा दीप्ताग्नीन् रूक्षांश्च नरान् प्रत्यहमन्वासयेत् ॥२५॥

हे०-पुनरनुवासनस्य कालमाह—अन्वासयेदिति । स्नेहपाकानुसारेण सप्तमादिदिनेषु वा उल्बणवातादीन् प्रतिदिनमनुवासयेदित्याह-अत इति ॥ २५ ॥

**इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।**
**निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः २६**

स०-इति पूर्वोक्तेन प्रकारेण स्नेहैस्त्रिचतुरैर्वा स्निग्धे सति स्रोतोविशोधनार्थं निरूहं शोधनं प्रयोजयेत् । अस्निग्धे सति तनोः शरीरस्य स्नेहनं प्रयोजयेत् । त्रयो वा चत्वारो वा त्रिचतुराः । संख्ययाऽव्ययेति समासः। चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानमित्यच् समासांतः ॥ २६ ॥

प०-इत्येवममुना क्रमेण दोषाद्यनुसारतः त्रिचतुरैः स्निग्धैः स्नेहबस्तिभिरुपस्निग्धैः पश्चात्स्रोतोविशुद्धये तासां विशुद्ध्यर्थं निरूहमास्थापनं शोधनं शमनं दद्यात् योजयेत् । वाताधिक्यात् । अस्निग्धे नरे स्नेहनमास्थापनमनन्तरं ततः शरीरस्य दद्यात् ॥ २६ ॥

हे०-अनुवासनानन्तरं निरूहमाह—इति स्नेहैरिति । स्नेहैरनुवासनैः निषिद्धानुवासनस्यानुवासनं विनैव निरूहमाह—अस्निग्ध इति । स्नेहनः सन् यः शोधनो निरूहस्तं युंज्यात् ॥ २६ ॥

**पंचमेऽथ तृतीये वा दिवसे साधके शुभे ।**
**मध्याह्ने किंचिदावृत्ते प्रयुक्ते बलिमंगले ॥**
**अभ्यक्तस्वेदितोत्सृष्टमलं नाऽतिबुभुक्षितम् ।**
**अवेक्ष्य[1] पुरुषं दोषभेषजादीनि चादरात् ।**
**बस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह ॥२७**

स०-अथानुवासनादनंतरं तृतीये पंचमे वा वा मध्याह्ने किंचिदावृत्तेऽतिक्रांते तथा बलिमंगले वि सति पुरुषं कृताभ्यक्तस्वेदितं त्यक्तमलं किंचिद् बुभुक्षि तथा प्रकृत्यादिभिर्ज्ञात्वा दोषादीन् विदित्वा । आ शब्देन सात्म्यबलादिपरिग्रहः । इत्येवं सर्वमधिग वैद्यो बस्तिं प्रकल्पयेत् । ननु दूष्यं देशमित्यादि सर्वमुक्तमेवैतत्तत्किमनेनेति । ब्रूमः । निरूहम सापायं पश्यताचार्येणैतदुक्तम् । दूष्यदेशादि म यत्नेनाऽऽलोचनीयमिति प्रतिपादनार्थं निरूहम प्रथममित्यादि सर्वमालोच्यम् । कथं प्रकल्पयेदित्य तद्विद्यैर्वैद्यकशास्त्रज्ञैर्बहुभिः सह सार्धम् ॥ २७ ॥

प०-अथ स्नेहबस्तेरनन्तरं पञ्चमे दिवसे तृ वा दिवसे साधके प्रशस्ततिथिकरणमुहूर्तन शुभे पुण्येऽहनि किञ्चिदावृत्ते सपरिवृत्ते मध् दिनमध्यमे भागे प्रयुक्ते कृतबलिमङ्गले उपह माङ्गल्ये स्वस्त्ययनादिके सति निरूहबस्तिं प्र ल्पयेत् । तद्विद्यैर्बस्तिविधानाविद्भिः बहुभिः प्र तैः सहालोच्य तथा पुरुषमवेक्ष्य ज्ञात्वा । किं तम् । अभ्यक्तस्वेदितोत्सृष्टमलपमभ्यक्तस्वेदितं शकृन्मूत्रम् । नातिबुभुक्षितं नातिक्षुधाक्रान्तम नातिदोषभेषजादीनि चादरात् अतिशयात् प्रथ नाद्यबस्तिं प्रकल्पयेत् ॥ २७ ॥

हे०-निरूहविधिमाह—पञ्चम इति । अन्त्यानुवा दिनात्तृतीये पंचमे वा साधके ज्योतिःशास्त्रोक्ते अशौचादिरहिते अवेक्ष्य ज्ञात्वा तद्विद्यैर्बस्तिकुशलैः। स तु आर्यावलोकितं नाथमार्या तारामात्मभुवं धातारम नाविंद्रमात्रेयं सप्तर्षीन् काश्यपविदेहप्रभृतीनाग्निवेशा तन्त्रकारान् दीपगन्धपुष्पफलबलिधूपैर्यज इव प्रकहि भागान् कृत्वा ओषधीर्वृद्धवैद्यान् द्विजातींश्च सं तद्विधसहितो दोषौषधादिबलेन यथार्हमुपकल्पयेद्ब मिति ॥ २७ ॥

---

१ "अवेत्य" इति पा० ।

अथ निरूहकल्पनामाह—

**क्काथयेद्विंशतिपलं द्रव्यस्याऽष्टौ फलानि च ।**

स०—द्रव्यस्य बस्तिकल्पोक्तस्य निरूहकल्पनार्थं विंशतिपलानि तथाऽष्टौ फलानि मदनफलानि सामान्यपरिभाषया षोडशगुणं जलं दत्वा क्काथयेत् । चतुर्भागावशेषश्च ग्राह्यः ॥ २८ ॥

प०—विंशतिपलानि क्वाथयेत् श्रपयेत् द्रव्यस्य दशमूलादेर्बस्तिकल्पनाय वक्ष्यमाणस्य तथाष्टौ मदनफलानि क्काथयेत् । अष्टौ मदनफलानि पलमात्रं भवन्त्येवमेकविंशतिपलानि द्रव्यस्य षोडशगुणेनाम्भसाऽभ्यासिच्य तावत्क्काथयेत् । यावच्चतुर्भागावशिष्टतया स क्काथः पलानां चतुरशीतिः सम्पद्यते ॥ २८ ॥

हे०—निरूहद्रव्याणां मात्रामाह—क्वाथयेदिति । यत्र क्काथ्यस्य विंशतिपलानि तत्राष्टौ मदनानि इत्येवंपरम्, एतन्न क्काथमानपरं प्रकुंच्यादिनिरूहेष्वसम्भवात् ॥२८ ॥

**ततः क्काथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।**
**पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफाधिके २९॥**

स०—तस्मादेवंकृतात् क्काथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् । द्वादशप्रसृतो हि निरूहः । तत्र स्नेहं षट्पलिकं कल्पयेदित्यर्थः । पित्तेऽधिके स्वस्थे च पुरुषे षष्ठांशं स्नेहं चतुष्पलिकं प्रकल्पयेदिति प्रकृतम् । कफेऽधिके स्नेहमष्टमांशं त्रिपलिकं प्रकल्पयेत् । सर्वत्र च वातपित्तकफेष्वधिकेषु स्वस्थवृत्तेश्चाष्टमं भागं त्रीणि पलानि कल्कस्य प्रयोजयेदिति प्रकृतम् । ननु स्वस्थस्य दोषचालनं प्रतिषिद्धं तन्त्रांतरीयैः । तद्ग्रंथो हि । यो हि संचालयेत्सुप्तं वने सिंहं करादिभिः । स दोषांश्चालयेत् स्वस्थान् प्रच्छर्दनविरेचनैरिति । तस्मात् स्वस्थे निरूहस्य कल्पना न युक्तेति । तदेतदसत् । यस्मात् प्रागभिहितम् । शीतोद्भवं दोषचयं वसंते विशोधयन् ग्रीष्मजमभ्रकाले । घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जात्विति । तस्मादाचार्यवचनाज्ज्ञायते स्वस्थवृत्तेरपि शुद्धिविधानं संमतमिति तंत्रकृतस्तंत्रांतरीयं मतं त्वसदेव शिष्टव्यवहारविरुद्धत्वात् ॥ २९ ॥

प०—ततस्तस्मात्क्काथात् स्नेहचतुर्थांशेन वातविषयेऽनु पश्चात्कल्पयेत् । पित्ते पित्तविषये ततः क्वाथात् प्राङ्निर्दिष्टपरिमाणात् षष्ठांशस्नेहं चतुर्दशपलानि कल्पयेत् । तथा स्वस्थे स्वस्थविषये षष्ठांशमेव कल्पयेत् । कफे कफविषये ततः क्वाथादष्टांशं स्नेहसार्धानि दशपलानि कल्पयेत् २९

हे०—क्काथात्मकान्निरूहात् द्वादशप्रसृतात् चतुर्थांशं प्रसृतत्रयसंमितं स्नेहं कल्पयेत् । ततः क्काथात् [illegible] पनीय "ल्यब्लोपे" पंचमी ॥ २९ ॥

**सर्वत्र चाऽष्टमं भागं कल्काद्भवति वा यथा ।**
**नाऽत्यच्छसांद्रता बस्तेः ॥ ३० ॥**

स०—सर्वत्र वाते पित्ते कफे च कल्कात् पिष्टद्रव्यादष्टमं भागं त्रीणि पलानि कल्पयेत् । भवति वेत्यादि । यथा नाऽत्यच्छसांद्रता बस्तेः । यथा वा बस्तिरत्यच्छोऽतिसांद्रो वा घनो न भवति तथा कल्कः कल्पयितव्यः ॥ ३० ॥

प०—सर्वत्र चाष्टमांशं कल्काद्भवति । यथा सर्वत्र वाते तथा पित्ते स्वस्थवृत्ते कफे च गणः क्वाथादष्टमांशः कल्कस्य देयः । सार्धानि दशपलानि भवन्ति वा यथात्यच्छसान्द्रता बस्तेरिति । अतो न सर्वत्राष्टमो भागः क्वाथाद्देयः । किंतर्हि यावता कल्कभागेन बस्तेर्नात्यच्छता नातितनुत्वं नातिसान्द्रता नातिघनत्वं भवति तावत्कल्पभागो देयः ॥ ३० ॥

हे०—एवं कल्कादष्टमं सार्धप्रसृतम् ॥ ३० ॥

**पलमात्रं गुडस्य च ।**
**मधुपट्वादिशेषं च युक्त्या ॥ ३१ ॥**

स०—पलमात्रं गुडस्य चेति पित्ते तदधिकं नेति ज्ञापनार्थं मात्रग्रहणम् । मधुपट्वादिशेषं च युक्त्या प्रकल्पयेत् । तत्रेयं युक्तिः । माक्षिकस्य पलचतुष्कं सैंधवस्य च कर्षः । तथा कश्चिद्यवक्षारस्य कर्षः । आदिग्रहणान्मांसरससुरासवमूत्रक्षीरकांजिकानां ग्रहणम् ३१॥

प०—सर्वत्र वाते पित्ते स्वस्थे कफे च गुडस्य पलमात्रं नातोऽधिकम् । नूनमात्रं वा । युक्त्या कल्पयेदित्यत्राप्यनुवर्तनीयम् । तथा सर्वत्र चेति युक्तियोग इति कर्तव्यतोपायः । तथा युक्त्या

मधुपट्वादिमाक्षिकलवणादि यथेच्छमनिर्दिष्टपरिमाणं निरूहाङ्गात्तत्सर्वं सर्वत्र कल्पयेत्। आदिग्रहणाद्यदन्यन्मस्त्वारनालक्षीरगोमूत्रप्रभृतिभिः निरूहाङ्गं तद्गृह्यते ॥ ३१ ॥

हे०—गुडस्य पलमात्रं, युक्त्या मधुप्रसृतद्वयसंयुतं, पटुसैंधवमक्षसंमितम्, आदिशब्दान्मांसरसक्षीरगोमूत्रकांजिकमदनफलानि । उक्तं हि सुश्रुतेन—"क्षौद्रं मूत्रं फलं क्षीरमम्लं मांसरसं तथा । युक्त्या प्रदापयेद्धीमान् निरूहे कल्पना त्वियम्" इति । तत्र चतुर्णां द्रवाणां प्रसृतद्वयं, मदनं त्वेकं, पारिशेष्यात्क्वाथस्य प्रसृतचतुष्टयम्, एवं द्वादशप्रसृतत्वम्। उक्तं हि सुश्रुतेन "दत्त्वादौ सैंधवस्याक्षं मधुनः प्रसृतद्वयम् । विनिर्मथ्य ततो दद्यात्स्नेहस्य प्रसृतत्रयम् ॥ एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत् । संमूर्छिते कषायं तु चतुःप्रसृतसंमितम् ॥ वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम् । एवं प्रकल्पितो बस्तिर्द्वादशप्रसृतो भवेत्" इति । यत्र कल्कस्य प्रसृतमानं तद्भवति वा यथा नात्यच्छसान्द्रताबस्तेरित्यभिप्रायेण । यच्चावापस्य प्रसृतद्वयमानं तद्गुडपलकल्कपलयोगात् इति। वाताधिके पित्ते तु स्नेहशून्यता मधुदुग्धाभ्यां पूरणीया । कफे तु मधुनैव। उक्तं हि वृन्देन " मधुस्नेहनकल्काख्यकषायावापतः क्रमात् । त्रीणि षट्के दश त्रीणि कफे च्चापि निरूहणम्" इति ॥ ३१ ॥

**सर्वं तदेकतः ।**
**उष्णांबुकुंभीबाष्पेण तप्तं खजसमाहतम् ।**
**प्रक्षिप्य बस्तौ प्रणयेत्पायौ नात्युष्णशीतलम्।**
**नाऽतिस्निग्धं नवा रूक्षं नाऽतितीक्ष्णं नवा मृदु।**
**नात्यच्छसांद्रं नोनाऽतिमात्रं नाऽपटु नाऽति च।**
**लवणं तद्वदम्लं च ॥ ३२ ॥**

स०—तदेतत्सर्वमौषधमेकत एकस्मिन् कृत्वा भेषजपाकातिक्रांतिपरिहारार्थमुष्णांबु कुंभीबाष्पेण तप्तं खजेन दर्व्या हननकाष्ठेन समाहतमालोडितं तथा ब्रह्मदक्षेत्यादिना चाऽभिमंत्रितं बस्तौ प्रक्षिप्य पायौ गुदे प्रणयेत् । नाऽत्युष्णं नाऽतिशीतलं नाऽतिस्निग्धं न वा रूक्षं नाऽतितीक्ष्णं न वा मृदु नाऽत्यच्छं नातिसांद्रं नाऽतिघनं नोनमात्रं न चाऽतिमात्रं नाऽपटु नातिलवणं तद्वदम्लं चेत्यादिना नाऽत्यम्लम् । अतिशब्दप्रयोगादत्र मध्यम नुगमः ॥ ३२ ॥

प०—एतत्सर्वं समग्रमुष्णाम्बुकुम्भीबाष्पे कृत्वा तथा खजेन मन्थनाकृतिना म कृत्वा विलोड्य बस्तौ प्रक्षिप्य मतिमा न्धिनि पायौ गुदे प्रणयेत् प्रणिदध्यात् । त जातं बस्त्यर्थं परिकल्पितम् । नात्युष्णं नाति तथा नातिस्निग्धं नातिरूक्षं नातितीक्ष्णं स मूत्रादिदानेन । नातिमृदु भूरिक्षीरा नात्यच्छं नातितनु नातिसान्द्र। तथा नाति तथा नोनमात्रं नातिमात्रं नातिदीर्घमात्रं पटु लवणरहितमीषल्लवणं वा तद्वदम्लं च कप्रभृतिनाम्लेन रहितं तथा नात्युष्णं च

हे०—मिलितानां निरूहद्रव्याणां संस्कारमा मिति । खजो मन्थनदण्डः, तद्वदानम्लं न संग्रहे तु तत्र बाष्पानुमात्रतापादौषधस्य विद भवति । खजप्रमथनात्क्वाथस्नेहादयः सम्यक् सम्यगेव योगमारभन्ते । अन्यथा पुनः नामुल्बणोऽन्यतमोऽन्यतमं यथास्वं दोषमीर अत्युष्णादीनां तु पृथक्कृत्यापदः साधना सिद्धिपुत्तरकालमुपदेक्ष्यते । अपि च " प्रणीते नहि याति धारा गुदे व्रणः स्याच्छिते तु दत्तः शनैर्नाशनमेति बस्तिः कण्ठं प्रधावेदतिपीडित स्तंभं विघत्तेऽतिमृदुर्हिमश्च तप्तोऽम्लतीक्ष्णो भ्रमदाह स्निग्धोऽतिजाड्यं पवनं तु रूक्षस्तत्त्वल्पमात्राल्लवण गम्॥ करोति मात्राभ्यधिकातियोगं क्षामं तु सांद्रः ण चोति । दाहातिसारी लवणोऽतिकुर्यात्तस्मात्सुयुक्तं दद्यात् " इति ॥ ३२ ॥

सांप्रतमन्यमतमभिधत्ते—

**पठंत्यन्ये[1] तु तद्विद**
**मात्रां त्रिपलिकां कुर्यात्स्नेहमाक्षिकयोः पृ**
**कर्षार्धं माणिमंथस्य स्वस्थे कल्कपलद्वयम्**
**सर्वद्रवाणां शेषाणां पलानि दश कल्पये**
**माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रम**
**आवपेत निरूहाणामेष संयोजने विधिः॥**

---

१ "वदन्त्यन्ये" इति पा० ।

स०—पठंतीत्यादि । तद्विदो बस्तिविद एवं पठंति । यथा । मात्रां त्रिपलिकां कुर्यादित्यादि । संप्रति निरूहावयवानां माक्षिकादीनां संयोजनविधिमाह । माक्षिकमित्यादि । माक्षिकादि क्रमादावपेत् । कुंडके माक्षिकं प्रथमं प्रक्षिप्य मर्दयेत् । ततस्तत्रैव लवणं क्षिप्त्वा मेलयेत् । ततो लवणं मर्दयित्वा मिश्रयेत् । एवं स्नेहं ततोऽनु कल्कं ततः क्राथमित्यनेन क्रमेण मिश्रयेदित्यर्थः । एवं योजितानि द्रव्याणि समरसतां यांति । समरसभावेन निरूहस्य सम्यग्योगो भवति । निरूहाणां संयोजने मिश्रण एष विधिरेतद्विधानम् ॥ ३३ ॥

प०—अन्ये पुनराचार्याः बस्तिविधानविदः अन्यथा बस्तिकल्पनां विचिन्त्याचक्षते । स्नेहस्य तैलादेस्तथा माक्षिकस्य त्रीणि माणिमन्थस्य सैन्धवलवणस्य कर्षार्धं शाणद्वयं स्वस्थे स्वस्थविषये आहुः । तथा कल्कपलद्वयं कल्कस्य द्वे पले सर्वद्रवाणां क्वाथादीनां दश पलानि कल्पयेत् । एते ह्यष्टादशैव पलानि बस्तेर्मानमिच्छन्ति । माक्षिकादिद्रव्यं क्रमात् क्रमेण वा यत्संयोजयेत् । प्रथमं माक्षिकमावपेत् । ततो लवणं ततः कल्कं ततः स्नेहं तथा क्वाथमावपेत्॥ तस्मादेष निरूहाणां संयोजने एकत्रकरणे विधिरुक्तो मुनिभिः ॥ ३३ ॥

हे०—मतांतरेण स्वस्थविषयं मानमाह—वदंतीति । अयं नवप्रसृतो निरूहः । निरूहद्रव्याणां मेलनक्रममाह-माक्षिकमिति । अर्थात्क्वाथानंतरं क्षीराद्यावापाः ॥३३॥

**उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत् ।**
**कृतोपधानः संजातवेगश्चोत्कटकः सृजेत् ३४ ॥**

स०—निरूहे दत्तमात्रे तूत्तानः संस्तन्मना निरूहवेगे दत्तावधानस्तथा कृतोपधानः संतिष्ठेत् । समुद्भूतवेगश्चोत्कटकः संस्त्यजेद्वेगमिति शेषः ॥ ३४ ॥

प०—उत्तानः सकृत्कृतोपधानः दत्तमात्रे निरूहे सति न किंचिदतिक्रान्तकाले निरूहवीर्येण देहव्याप्तये तन्मना निरूहमना भवेत् । निरूह एष यो मे प्रणीतः स इयता कालेन प्रत्यागच्छतीत्येवं मनसि कृत्वेति यावत् । तस्मादनन्तरं जात एष प्रत्यागमाभिमुखो निरूह उत्कटको भूत्वा निरूहवेगमुत्सृजेन्मुञ्चेत् ॥ ३४ ॥

हे०—दत्ते निरूहे रोगिणः कृत्यमाह—उत्तान इति । उत्तानत्वं निरूहवीर्येण देहव्याप्तये ॥ ३४ ॥

**आगतौ परमः कालो मुहूर्तो मृत्यवे परम् ।**
**तत्राऽनुलोमिकं स्नेहक्षारमूत्राऽम्लकल्पितम् ॥**
**त्वरितं स्निग्धतीक्ष्णोष्णं बस्तिमन्यं प्रपीडयेत् ।**
**विदध्यात्फलवर्तिं वा स्वेदनोत्रासनादि च ३५ ॥**

स०—आगतौ प्रत्यागमने कालः परमो मुहूर्तः । अपरस्तस्मान्मुहूर्तादन्यो विदध्यादागमनकालो मृत्यवे मरणाय । तत्र तस्मान्मुहूर्तात्परमनागतनिरूहस्य त्वरितमपरं बस्तिं निरूहं प्रपीडयेदिति संबंधः । किंभूतं निरूहम् । आनुलोमिकमनुलोमकरम् । स्नेहस्तथा क्षारो यवक्षारादिस्तथा मूत्रं गोमूत्रमम्लं तक्रकांजिकादि तैः कल्पितं निरूहितम् । तथा स्निग्धं च तीक्ष्णमुष्णं च । स्नेहयोगादेव स्निग्धत्वे सिद्धे स्निग्धग्रहणं निरूहाणामस्निग्धतरत्वप्रतिपादनार्थम् । आनुलोमिकमित्यव्यामादित्याद्यम् । अथवा फलवर्तिं विदध्यात् । फलेन मदनफलेन युक्ता वर्तिः सा चार्शश्चिकित्सिते वक्ष्यमाणा । स्वेदनोत्रासनादि च । स्वेदनं स्वेदः । उत्त्रासनं खड्गहस्तयोधदर्शनादिना । कुपितनृपखड्गव्यग्रोग्रबाहुदर्शनादिनाऽऽकुलं कुर्यात् ॥ ३५ ॥

प०—तस्य निरूहस्यागतौ प्रत्यागमने परमः कालः उत्कृष्टो मुहूर्तो द्विनालिकालक्षणः । परं मुहूर्तादनन्तरमनागच्छन्निरूहो मृत्यवे मरणाय सम्पद्यते । तत्रागतबस्तौ त्वरितमेवाऽस्वेवान्यं बस्तिं स्निग्धतीक्ष्णोष्णं तथानुलोमिकं स्नेहक्षारमूत्राम्लकल्कितं त्वरितं स्निग्धतीक्ष्णोष्णं बस्तिमन्यं प्रपीडयेत् प्रणिदध्यात् । प्रत्यागमनोक्ते फलवर्तिं वा प्रणयेत् त्वरितं कृत्वाशु यथा मदनफलेन निष्पादिता वर्तिः फलवर्तिः ॥ ३५ ॥

हे०—निरूहनिवृत्तिकालमाह—आगताविति । मुहूर्तो घटिकाद्वयम् । अनिवृत्तौ प्रतीकारमाह—तत्रानुलोमिकं स्नेहेति । आनुलोमिकः स्नेह एरण्डतैलादिः श्यामादिसिद्धो वा ॥ ३५ ॥

**स्वयमेव निवृत्ते तु द्वितीयो बस्तिरिष्यते ।**
**तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता ३६ ॥**

स०–फलवर्त्याद्यायासं विनापि निवृत्ते निरूहे सति द्वितीयो निरूह इष्यते। यत्नविशेषेण तु निरूहे निवृत्ते सति नाऽन्यं बस्तिं प्रपीडयेदित्युक्तं भवति। तृतीयोऽपीत्यपिः समुच्चये। एवं चतुर्थोऽपीति। यावद्वेति। पंचमादयोऽपि बस्तयो देया यावत्सम्यङ्निरूढत्वं स्यात्॥ ३६॥

प०–स्वयमेव निवृत्ते तस्मिन् एकस्मिन् बस्तौ प्रणीते प्रत्यागते द्वितीयो बस्तिर्दातुमिष्यते। तृतीयोऽपि चतुर्थोऽपि दातुमिष्यते। अथवा सुनिरूढता यावत्स्यान्नात्र संख्यानियमः। एतावन्त एव बस्तयो दातुमिष्यन्ते किं तर्हि बह्वोऽपि बस्तयो देया इति सम्यङ्निरूहलक्षणोत्पादनार्थम्॥ ३६॥

हे०–स्वयं निवृत्तावसम्यग्योगात्पुनः पुनर्दानमाह–स्वयमेवेति॥ ३६॥

कानि पुनः सम्यङ्निरूढलिंगानीत्याह–

**विरिक्तवच्च योगादीन्विद्यात्॥ ३७॥**

स०–निरूहे विरिक्त इव योगादीन् विद्यात्। तत्र चोक्तम्। हृत्कुक्षिशुद्धिरित्यारभ्य यावद्वर्वत्यतिविरिक्तस्य तथाऽतिवमनामया इति॥ ३७॥

प०–अत्र निरूहे विरिक्तवत्। तद्यथा विरिक्तस्य योगातियोगा भवन्ति तथा तद्वदत्रापि निरूढस्य यथोक्तं हृत्कुक्षिशुद्धिररुचिरित्याद्ययोगलक्षणम्॥ ३७॥

हे०–सम्यग्योगादिलक्षणमाह–विरिक्तवादिति॥ ३७॥

**योगे तु भोजयेत्।**
**कोष्णेन वारिणा स्नातं तनु धन्वरसौदनम्॥ ३८॥**

स०–योगे तु निरूहस्य सम्यग्योगे सति सुखोष्णजलस्नातं संतं भोजयेत्। किम्। धन्वरसो जांगलरसश्चौदनश्च तद्धन्वरसौदनम्। किंभूतं धन्वरसौदनम्। तनु अघनम्। ननु यूषक्षीररसैः क्रमादिति वक्ष्यति तत्कथमिहेदमभ्युपपद्यते। ब्रूमः। वातविकारशमनार्थो हि निरूहः प्रायेणेष्यते। तस्मिंश्च रसकौदनमेव पथ्यं श्रेयः। अग्रे च दोषाऽपेक्षया पथ्यं विशेषेणैवोपदेक्ष्यतेऽतो नाऽत्र किंचिदनुपपन्नम्। ननु दोषनिर्हरणं वमनविरेकाभ्यां द्रवादेव क्रियते। पेयादिक्रमो युक्तस्तथेहाऽपि युक्तः स्यात्। नैः विरेकवमनाभ्यां हि वह्निस्थानमाच्छाद्यते तेनाऽग्नि भवति। निरूहस्तु नाभेरूर्ध्वमगच्छन्नेव दोषनि करोति। तेन नाऽत्राग्निमांद्यापत्तिः। तस्मा पेयादिक्रमः। अपि च वातविकारविषयत्वाच्च रस नप्रायमेव पथ्यं युक्तम्॥ ३८॥

प०–योगे सम्यग्योगे समुत्पन्ने नरं किंचि ष्णेन पानीयेन स्नानम्। तनुना स्वल्पेन जा रसेनौदनं भोजयेत्॥ ३८॥

हे०–सम्यग्योगे स्नानं भोजनं चाह–योग इ तनुना अच्छेन धन्वरसेन जांगलरसेन मिश्रमोदनम्॥ ३

**विकारा ये निरूहस्य भवंति प्रचलैर्मलैः।**
**ते सुखोष्णांबुसिक्तस्य यांति भुक्तवतः शम**

स०–प्रकर्षेण चलैर्दोषैर्ये विकारा भवंति कोष्णसलिलस्नातस्य कृतभोजनस्य सतः शमं गच्छं अत एव तत्कार्यमिति भावः॥ ३९॥

प०–विकारा व्याधयो ये निरूढस्य पुंसः प्रच मलैः स्वस्थानात्प्रच्युतैः वातादिभिर्भवन्ति जा विकाराः सुखोष्णाम्बुजातस्य स्नानस्य तथा भु वतः कृतभोजनस्य शमं यान्ति॥ ३९॥

हे०–स्नानभोजनयोः फलमाह–विकारा इति॥ ३

**अथ वातार्दितं भूयः सद्य एवाऽनुवासयेत्॥ ४**

स०–अथ निरूहादनंतरं वातपीडितं पुरुषं एव तस्मिन्नेव दिनेऽनुवासयेत्॥ ४०॥

प०–अथाशितमनन्तरं वातार्दितं वातातमा भूयः पुनः सद्य एव तत्काल एवानुवासयेत् यथ सञ्चितस्नेहेन॥ ४०॥

हे०–वातार्दितस्य निरूहदिन एवानुवासनमा अथेति। संग्रहे तु ततः पुनर्वातार्तमातुरं बृंहणीयः वा तद्विधमाशितानंतरं सायं वा पुनरल्पलघ्वशितं यथा मनिलादिषु दशमूलादिसाधितेन तैलेनानुवासयेदिति ४

**सम्यग्धीनाऽतियोगाश्च तस्य स्युः स्नेहपीतव**

स०–तस्याऽनुवासनस्य स्नेहपानस्येव सम्यग गादयः स्युः। स्नेहपीतस्येव स्नेहपीतवत्। षष्ठ ताद्वतिः॥ ४१॥

प०—तस्यानुवासनस्य सम्यग्योगस्तथा हीनयोगस्तथाऽतियोगः स्नेहपीतवत्स्यात् । "वातानुलोम्यं दीप्तोऽग्निर्वर्चःस्निग्धमसंहतम् । स्नेहोद्वेगः क्लमः सम्यक्स्निग्धे रूक्षे विपर्ययः ॥ अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ।" तस्य ते सम्यग्घीनातियोगा भवेयुः ॥ ४१ ॥

हे०—अनुवासनस्य सम्यग्योगादिलक्षणमाह—सम्यग्घीना इति ॥ ४१ ॥

तत्र वातानुलोम्यमित्यादि घ्राणवक्त्रगुदस्रवा इत्युक्तं स्नेहपानसम्यग्योगातियोगलक्षणम् । अन्यदनुवासनस्य सम्यग्योगलक्षणमाह—

**किंचित्कालं स्थितो यश्च सपुरीषो निवर्तते । साऽनुलोमाऽनिलः स्नेहस्तत्सिद्धमनुवासनम् ४२**

स०—चशब्दः पूर्वोक्तं सम्यग्योगलक्षणं समुच्चिनोति । किंचिदल्पमात्रं कालं कोष्ठाभ्यंतरे स्थितः सन् सविट्कः सानुगुणपवनो निवर्तते निःसरति यः स एवंभूतः स्नेहस्तत्सिद्धमभिमतकार्यमनुवासनम् । उक्तं च व्यस्तं समस्तं चेदं सिद्धानुवासनलक्षणम् ॥ ४२ ॥

प०—स्निग्धं सम्यग्योगमुक्तम् ॥ ४२ ॥

हे०—प्रयोगावृत्तिजन्यसम्यग्योगलक्षणमुक्त्वा प्रतियोगमाह—किंचित्कालमिति॥ ४२ ॥

**एकं त्रीन् वा बलासे तु स्नेहबस्तीन् प्रकल्पयेत् । पंच वा सप्त वा पित्ते नवैकादश वाऽनिले । पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ४३॥**

स०—स्नेहबस्तीननुवासनानि एकं त्रीन्वा श्लेष्मविकारे प्रकल्पयेत् । कार्ये कारणोपचारादेवमुक्तम् । एवमग्रेऽपि चिंत्यम् । पित्ते पंच स्नेहबस्तीनथवा सप्त दद्यात् । नव एकादश वा वायौ दद्यात् । ततः पुनरयुग्मान् स्नेहबस्तीन् दद्यात् । ततः पुनरप्यास्थापनं दद्यात् । अयुग्मवचनं स्नेहबाहुल्येनाऽयं व्यवहारो युक्त इति प्रतिपादयितुम् । वातार्तस्य तु युग्मा अपि देया एव । तथाचाऽमुनैवाऽभ्यधायि व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरमिति ॥ ४३ ॥

प०—बलासके एकं स्नेहबस्तिं त्रीन वा स्नेहबस्तीन् प्रकल्पयेत् प्रयोजयेत् । पित्ते पित्तविषये पञ्च वा सप्त वा स्नेहबस्तीन् प्रकल्पयेत् । अयुग्मानिति सर्वत्र सम्बध्यते । पित्ते वाते च यथोक्तादधिकानप्येकमेव तत्र द्वितीयचतुर्थषष्ठाष्टमादयो युग्माः । एकतृतीयपञ्चमसप्तनवमैकादशादयोऽयुग्माः । अनुवासनादनन्तरं सम्यग्योगे जाते पुनरास्थापनं प्रकल्पयेत् ॥ ४३ ॥

हे०—अनुवासनावृत्तौ दोषभेदेन संख्यानियममाह—एकमिति । पुनः पुनरावृत्तावयमेव संख्यानियम इत्याह—पुनरिति । अयुग्मान् विषमसंख्यान् तत्रावृत्तिपूतो मध्ये मध्ये निरूहः कार्य इत्याह—पुनरास्थापनमिति ॥ ४३ ॥

**कफपित्ताऽनिलेष्वन्नं यूपक्षीररसैः क्रमात् ४४॥**

स०—कृतास्थापनस्य च पथ्यं श्लेष्मपित्तपवनेषु यथासंख्यं यूषादिभिः सहान्नमुपभोक्तव्यम् ॥ ४४ ॥

प०—कफे कफविषयेऽन्नं भोजनं यूषेण सह प्रकल्पयेत् । पित्ते पित्तविषयेऽन्नं क्षीरेण सह प्रयोजयेत् । ततो वातविषयेऽन्नं मांसरसेन सह प्रयोजयेत् ॥ ४४ ॥

हे०—आवृत्तौ क्रियमाणायां दोषभेदेन प्रत्यहं भोजनमाह—कफपित्तेति ॥ ४४ ॥

**वातघ्नौषधनिःक्वाथस्त्रिवृतासैंधवैर्युतः । बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णरसान्वितः**

स०—बस्तिर्निरूहोऽनिले वातविषये वातघ्नौषधानि दशमूलादीनि तेषां निःक्वाथो यवकादिसिद्ध त्रिवृतासैंधवैर्युतस्तथा स्निग्धो मधुराम्लोष्णरसयुक्त पवने हितः ॥ ४५ ॥

प०—अनिले वातविषये एको बस्तिः स्मृतः । वातघ्नौषधानि दशमूलादीनि तेषां क्वाथः त्रिवृतासैन्धवैर्युतः । तथा स्निग्धः स्वाद्वम्लश्च ॥ ४५ ॥

हे०—वाते निरूहं प्रति विशेषमाह—वातघ्नेति । वातघ्नौषधं भद्रदार्वादि एक इति पुटापेक्षया न तु प्रयोगापेक्षया ॥ ४५ ॥

**न्यग्रोधादिगणक्वाथौ पद्मकादिसितायुतौ ।**
**पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ४६॥**

स०—पित्ते मधुरशिशिरौ सघृतदुग्धेक्षुरसमधू द्वौ बस्ती हितौ ॥ ४६ ॥

प०—पित्ते पित्तविषये द्वौ बस्ती स्मृतौ न्यग्रोधादिवर्गस्य क्वाथेन पद्मकादिगणशर्करया कल्केन युतौ तथा मधुरशीतौ तथा घृतक्षीरेक्षुरसमाक्षिकैर्युक्तौ ॥ ४६ ॥

हे०—पित्ते निरूहं प्रति विशेषमाह—न्यग्रोधादीति । द्वित्वं पूर्ववत् ॥ ४६ ॥

**आरग्वधादिनिःक्वाथवत्सकादियुतास्त्रयः ।**
**रूक्षाःसक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे४७**

स०—तथाऽऽरग्वधेंद्रयवेत्यादिकषायवत्सकमूर्वेत्यादिकषायाभ्यां युक्ता रूक्षा माक्षिकगोमूत्राभ्यां सहितास्तीक्ष्णादिगुणयुक्तास्त्रयो बस्तयः कफे हिताः॥४७॥

प०—कफविषये बस्तयः स्मृताः आरग्वधादिवर्गस्य क्वाथेन वत्सकादिगणस्य कल्केन युक्ता माक्षिकगोमूत्राभ्यां संयुताः तीक्ष्णा उष्णाः कटुकाश्च ४७

हे०—कफे निरूहं प्रति विशेषमाह—आरग्वधादीति । त्रित्वं पूर्ववत् ॥ ४७ ॥

**त्रयश्च सन्निपातेऽपि दोषान्घ्नंति यतः क्रमात्४८**

स०—सन्निपाते त्रय एव बस्तयो हिताः । यस्मादेते त्रीन् दोषान् क्रमेण पराकुर्वंति ॥ ४८ ॥

प०—संनिपाते संनिपातविषयेऽपि त्रय एव बस्तयः पूर्वोक्ताः वातपित्तकफनिर्दिष्टाः स्मृताः । यतो यस्मात्ते बस्तयः क्रमात् क्रमेण वातपित्तकफान् दोषान् घ्नन्ति विनाशयन्ति । तत्रैको बस्तिर्दत्तो वातं हन्ति । तत्रैको बस्तिर्दत्तो पित्तं हन्ति । द्वितीयः पित्तं तृतीयः कफम् ॥ ४८ ॥

हे०—संसर्गे संनिपाते त्रीण्येव पुटानीत्यत आह—त्रयश्चेति । वातपित्ते तु उक्तन्यायादेव द्वौ ॥ ४८ ॥

**त्रिभ्यः परं बस्तिमतो नेच्छंत्यन्ये चिकित्सकाः ।**
**नहि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ४९॥**

स०—अत एव हेतोस्त्रिभ्यो बस्तिभ्यः परमपरे भिषजो निरूहं नेच्छंति । यतस्त्रयो दोषास्त्रिभिर्बस्तिभिर्निर्वार्तता इति चतुर्थो दोषो न विद्यते यं [illegible] भूयश्चतुर्थः पुटको दीयते ॥ ४९ ॥

प०—त्रय एव बस्तयो यथासंख्येन तेषां [illegible] स्त्रयश्चतुर्थो दोषो नास्ति यं प्रति दीयते बस्ति [illegible]

हे०—उक्तनियमस्य मतांतरत्वमाह—त्रिभ्य [illegible] अतः यतः क्रमाद्दोषान्घ्नंति । ननु रक्तं चतुर्थो दोषोऽ[illegible] आह—नहीति । रक्तस्य दूष्यत्वान्न दोषत्वं त्रिभ्यो न्यू[illegible] न कार्येति ॥ ४९ ॥

**उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात्**
**त्रिधैवं कल्पयेद्बस्तिमित्यन्येऽपि प्रचक्षते॥५०**

स०—अन्ये वैद्यास्तु त्रिधा बस्तिर्दोषाणाम् उत्[illegible] शुद्धिकरं शमनं क्रमादित्यनया युक्त्या ब[illegible] कल्पयेदिति जगदुः ॥ ५० ॥

प०—अन्ये आचार्यास्त्रिधैव त्रिविधमपि [illegible] प्रकल्पयेदित्येवमाहुः । एकं बस्तिमुत्क्ले[illegible] दोषाणां कल्पयेत् द्वितीयं बस्तिं दोषाणां शु[illegible] करं तृतीयं दोषाणां शमनं क्रमात् परिपाट[illegible] तत्र दोषानुत्क्लेशयतीत्युत्क्लेशनः । दोष[illegible] शुद्धिं करोतीति शुद्धिकरः । दोषान् श[illegible] तीति शमनः ॥ ५० ॥

हे०—मतांतरमाह-उत्क्लेशनमिति ॥ ५० ॥

तत्र किं क्रियतामित्याह—

**दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत् ॥५[illegible]**

स०—तदत्र दोषभेषजसात्म्यादिवशात्सर्वमे[illegible]त्प्रमाणीकार्यम् ॥ ५१ ॥

प०—एतदाचार्योक्तमन्यथा बस्तिदानं प्रति य[illegible]त्सर्वं प्रमाणयेत् । प्रमाणं कार्यं न तु केषां[illegible]दाचार्याणां केषांचिन्नेति । किं तर्हि सर्वमे[illegible]त्प्रमाणम् । कथम् । दोषौषधादिबलतः दोषौ[illegible]धादिबलादिग्रहणात् । देशकालबलशरीराहारस[illegible]त्म्यसत्त्वप्रकृतिबलात्तद्वशात् सामर्थ्यात् ॥ ५१

हे०—मतयोर्विषयव्यवस्थामाह—दोषौषधादीति । दो[illegible]धिक्ये औषधमृदुत्वे बलाधिक्ये च पुटाधिक्यं विपर्यये न्यू[illegible]त्वमित्यर्थः ॥ ५१ ॥

अथ पूर्वमतानुग्राहि स्वमतमाह—

**सम्यङ्निरूढलिंगं तु नाऽसंभाव्य निवर्तयेत्५[illegible]**

स०–सम्यङ्निरूढलिंग त्वसंभाव्याऽसंपाद्य न निवर्तयेत् । बस्तिदानं कारयेदेवेति ॥ ५२ ॥

प०–सर्वत्राशये षट्कृतो ग्रन्थो बोद्धव्यो येऽप्याचार्या अन्यथा बस्तिदानं व्याचक्षते येऽप्यन्यथा तेषां सर्वेषां वर्तयेत् । तेन तावन्निरूहादयो यावत्सम्यङ्निरूहलिङ्गोत्पत्तिर्जायते इत्येतदुपलक्षणार्थम् । सम्यक्त्वासितलिङ्गमप्यसम्भाव्यानुवासनादपि न निवर्तयेत् । तावदनुवासनं देयम् यावत्सम्यगनुवासितलिङ्गोत्पत्तिर्जायते । यदेतदुपलक्षणम् । सम्यगनुवासितस्यापि यतोऽनन्तरमिदमाह–सङ्ग्रहे तन्त्रकारः ॥ ५२ ॥

हे०–स्वमतमाह–सम्यगिति । यावद्भिः सम्यग्योगस्तावंति पुटानि कुर्यादित्यर्थः ॥ ५२ ॥

इदानीं कर्मकालयोगाख्यान् बस्तिविशेषानाह–

**प्राक्स्नेह एकः पंचांते द्वादशाऽऽस्थापनानि च । सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ ५३ ॥**

स०–प्राक् पूर्वमेकः स्नेहबस्तिः । अंतेऽवसाने पंच स्नेहाः तथा निरूहा द्वादश सहानुवासनाः । एवं त्रिंशद्बस्तयः कर्मेति गदिताः ॥ ५३ ॥

प०–द्वितीयचतुर्थषष्ठयष्टमदशमद्वादशचतुर्दशषोडशाष्टादशविंशद्वाविंशचतुर्विंशसंज्ञकानि दशद्वादशैवास्थापनानि तृतीयपञ्चमसप्तमनवमैकादशैकोनविंशैकविंशत्रयोविंशपञ्चविंशाख्यानीत्येतेन विधानेन त्रिंशद्बस्तयः कर्म ॥ ५३ ॥

हे०–कर्मबस्त्याख्यं प्रयोगमाह–प्राक्स्नेह इति ५३

**कालः पंचदशैकोऽत्रप्राक् स्नेहोऽते त्रयस्तथा । षट् पंचबस्त्यंतरिताः ॥ ५४ ॥**

स०–पंचदश बस्तयः काल उच्यते । कथमुच्यते एकः पूर्वस्नेहस्तथांऽते त्रयः स्नेहास्तथा षट् स्नेहाः पंचभिर्बस्तिभिरंतरिता इति ॥ ५४ ॥

प०–इति कालः पंचदशबस्तयः । कथं स प्राक् प्रथम एकः स्नेहोऽन्ते च त्रयः स्नेहाः त्रयोदशचतुर्दशपञ्चदशाख्याः । तथाच षट् स्नेहाः । द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशाख्याः । किंभूताः । पञ्चभिः स्नेहबस्तिभिः तृतीयपञ्चमसप्तमनवमैकादशाख्यैरन्तरितास्त्या आस्थाप इति पञ्चदशबस्तयः कालः ॥ ५४ ॥

हे०–कालबस्त्याख्यं प्रयोगमाह–काल इति । पंचबस्त्यंतरिताः षट् स्नेहाः ॥ ५४ ॥

**योगोऽष्टौ बस्तयोऽत्र तु । त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यंतयोरुभौ ५५**

स०–योगोऽत्राष्टौ बस्तयः । कथमित्याह । त्र निरूहास्त्रीणि चानुवासनानि तथाऽद्यंतयोर्द्वौ स्नेहबस्ती इति ॥ ५५ ॥

प०–योगोऽष्टौ बस्तयः । कथं तत्र च यो आदावन्ते चोभौ प्रथमाष्टमाख्यौ । स्नेह त्रयः निरूहाः द्वितीयचतुर्थषष्ठाख्या [illegible] नान्तर योज्याः ॥ ५५ ॥

हे०–योगबस्त्याख्यं प्रयोगमाह–योगोऽष्टाविति ५

**स्नेहबस्तिं निरूहं वा नैकमेवाऽतिशीलयेत् । उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ५६**

स०–स्नेहबस्तिमथवा निरूहमेकमेव केवलमतिशयेन न शीलयेत् । यतः स्नेहादतिसेवितादुत्क्लेशाऽग्निमांद्ये जायेते । निरूहादतिसेवितात्पवनात् जायते ॥ ५६ ॥

प०–एवं निरूहात्पूर्वमनुवासनम् । ततोऽनुवासनमिति निरन्तरं कृत्वा निरूहमेकमेवाभिशीलयेत् । नचानुवासनमेकमेवाभिशीलयेत् । अत्यन्तमभ्यसेत् । यस्मात् स्नेहबस्तेरनुवासनादतिशीलितादुत्क्लेशो दोषाणामविद्यमानः प्रकोपाभ सस्तथाऽग्निवधोऽग्निमान्द्यं जायते । तथा निरूहादतिशीलितान्मरुतो वाताद्भयं जायते । प्रकोपो जायत इत्यर्थः ॥ ५६ ॥

हे०–प्रयोगनियमे युक्तिमाह–स्नेहबस्तिमिति प्रयोगातिक्रमे दोषमाह–उत्क्लेशाग्निवधाविति ॥ ५६

**तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चाऽनुवासित**

स०–तस्मात्कारणान्निरूढो नरः स्नेहनार्हः स्या अनुवासितश्च पुरुषो निरूहणार्हो भवेत् ॥ ५७ ॥

प०–तस्मान्निरूढो यः पुमान् स स्नेह्यो भवेत् तस्य स्नेहबस्तिर्देयः । यस्यानुवासनं दत्तं त

निरूहः प्रदातव्यो दोषोत्क्लेशाग्निवधपरिहारार्थम् । एवमनया युक्त्याऽनेनोपक्रमेण स्नेहबस्तिमनुवासनं दत्त्वा ॥ ५७ ॥

हे०—प्रयोगांतरकल्पनार्थं नियमतात्पर्यमाह—तस्मादिति ॥ ५७ ॥

**स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ५८**

स०—एवं पूर्वोक्तया स्नेहशोधनयुक्त्या बस्तिकर्म सेवितं त्रीन् दोषान् जयति ॥ ५८ ॥

प०—स्नेहनार्थं ततोऽनन्तरं निरूहो दीयते शोधनार्थं तदेतद्बस्तिकर्म त्रिदोषजिद्भवति नान्यथेति५८

हे०—प्रयोगनियमस्य फलमाह—स्नेहशोधनेति । स्निग्धस्य शोधनं, शुद्धस्य स्नेहनं, स्निग्धस्य पुनः शोधनमित्यादियुक्तिः । संग्रहे तु "अष्टादशाष्टादशकान् बस्तीनां यो निषेवते । विधिना वा यथोक्तेन स भवेदजरोऽरुजः ॥ सहस्रायुः श्रुतधरो वीतपाप्माऽमरप्रभः । वाजिस्पर्धो नागबलः स्थिरबुद्धीन्द्रियानलः" इति ॥ ५८ ॥

अधुना मात्राबस्तिं लक्षयति—

**ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ।**
**मात्राबस्तिः स्मृतः स्नेहः ॥ ५९ ॥**

स०—ह्रस्वया यामद्वयजरणलक्षणया स्नेहमात्रया समस्तुल्यो योजितः स्नेहो मात्राबस्तिसंज्ञः स्मृतः सद्वैद्यैरिति शेषः । अन्यैश्चान्यथा स्नेहमात्रोक्ता । यथा । षट्पला तु भवेज्ज्येष्ठा त्रिपला मध्यमा भवेत् । कनीयस्यध्यर्धपला त्रिधा मात्रानुवासना इति ॥ ५९ ॥

प०—मात्राबस्तिमाह—स्नेहस्याच्छस्य या ह्रस्वा मात्रा निर्दिष्टा यामद्वयजरणलक्षणा तया मात्रया समस्तुल्यो यः स्नेहबस्तिर्योजितो दत्तः स मात्राबस्तिरल्पो बस्तिरुच्यते ॥ ५९ ॥

हे०—मात्राबस्त्याख्यमनुवासनमाह—ह्रस्वया यामद्वयपरिणामिन्या ॥ ५९ ॥

**शीलनीयः सदा च सः ।**
**बालवृद्धाध्वभारस्त्रीव्यायामासक्तचिंतकैः ॥**
**वातभग्नबलाऽल्पाग्निनृपेश्वरसुखात्मभिः ।**
**दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ६० ॥**

स०—स च मात्राबस्तिर्बालादिभिः सतत शीलयितव्यः । स च शीलितो दोषापहस्तथा निष्परीहारोऽनियंत्रणो बलाय हितो निर्गतपुरीषादि सुखकारी स्यात् ॥ ६० ॥

प०—स च मात्राबस्तिः सदा सर्वकालं निरन्तरं कृत्वा शीलनीयोऽभ्यसनीयो बालवृद्धादिभिः च शीलितः सुखहेतुत्वादारोग्यं कुर्यादथवा बालादीनामपि दातुं युज्यते । ततोऽसौ सुखस्तथा दोषघ्नो वातशमनो वाताधिकौ पित्तश्लेष्माणाव हन्ति विनाशयतीति दोषघ्नः । तथासौ निष्परीहारः उष्णोदकोपचारी स्यादित्यादिग्रन्थनिर्दिष्ट यन्त्रणया रहितोऽतएव बालादीनां सुखस्तथा बल्यः बलाय हितः । तथा सृष्टमलः सृष्टो मलः पुरीषाख्यो येन प्रणीतेन सम्पद्यते इत्यसौ सृष्टमलः ॥ ६०

हे०—मात्रबस्तेर्विषयमाह—शीलनीय इति । अध्वादिष्वासक्तः, चिंतकः चिंतावान् । मात्राबस्तेः फलमाह—दोष इति । सुखो व्यापद्रहितः ॥ ६० ॥

**बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।**
**द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ६**

स०—बस्तिस्थाने रोगेषु नराणामित्यर्थाल्लभ्यते नारीणां योनिगर्भाशयेषु च द्वाभ्यां त्रिभिर्वाऽऽस्थापनैः शुद्धेभ्यस्तेभ्यो नरेभ्यः स्त्रीभ्यश्चोत्तरबस्तिं दद्यात् । वा त्रीणि वा द्वित्राणि च तान्यास्थापनानि च द्वित्रास्थापनानि तैः शुद्धा द्वित्रास्थापनशुद्धाः । पुमान्स्त्रियेत्येकशेषः । गुदादुत्तरेण मार्गेण दीयत इत्युत्तरबस्तिः ॥ ६१ ॥

प०—उत्तरबस्तिमाह--बस्तिर्मूत्राधारः शरीरावयवस्तत्र ये रोगा मूत्रकृच्छ्रप्रभृतयस्तेषु सत्सु सर्वेष स्त्रीपुंनपुंसकानामुत्तरबस्तिं विदध्यात् प्रणयेत् नारीणां पुनर्न केवलं बस्तावेव रोगेपूत्तरबस्तिं विदध्यात् । यच्छब्दाद्यावद्योनिगर्भाशयस्तेषु विकारेषूत्तरबस्तिं विदध्यात् ॥ ६१ ॥

हे०—उत्तरबस्तेर्विशेषतो विषयमाह—बस्ताविति बस्तौ मूत्राशये नराणां, नारीणां तु बस्तौ योनौ गर्भाशये च ॥ ६१ ॥

अथ नेत्रस्य परिमाणमाह—

**आतुरांगुलमानेन तन्नेत्रं द्वादशांगुलम्। वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम्॥ सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसंभवम्। कुंदाश्वमारसुमनःपुष्पवृंतोपमं दृढम्॥ ६२॥**

स०—तन्नेत्रमुत्तरबस्तियंत्रकमातुरांगुलप्रमाणेन द्वादशांगुलं दैर्घ्येणेत्यर्थादेव प्रतीयते। पुरुषाणामेवैतदिति वेद्यम्। स्त्रीणां हि वक्ष्यति। नेत्रं दशांगुलं मुद्रप्रवेशमिति। तच्च वृत्तं वर्तुलं गोपुच्छाकृति तथा मूले मध्ये चोत्पादितकर्णिकं तथा सिद्धार्थकः प्रविशत्यस्मिन्निति सिद्धार्थकप्रवेशं तादृशमग्रं प्रांतो यस्य नेत्रस्य तत् सिद्धार्थकप्रवेशाग्रं तथा श्लक्ष्णमतिकोमलं तथा हेमादिजम्। आदिशब्देन धात्वादयः प्रागुक्ता गृह्यंते। कुंदकरवीरजातीपुष्पवृंतसदृशं दृढं च। अश्वमारः करवीरः॥ ६२॥

प०—तस्य नेत्रम्। तदित्यनेन बस्तिः परामृश्यते आतुराङ्गुलमानेन द्वादशङ्गुलप्रमाणम्। तथा वर्तुलं वृत्तं गोपुच्छवत् क्रमेणाग्रे सूक्ष्मं तथा मूले मध्ये च कृता कर्णिका यत्र मध्ये या सातिमात्रातः प्रवेशरोधिनी द्वितीये मूले बस्तिनिबन्धना स्यात्। सिद्धार्थकप्रवेशोऽग्रे मुखे यस्य तेन सर्षपप्रमाणं बहिःस्रोतः छिद्रं कार्यम्। श्लक्ष्णमपरुषम्। हेमादिधातुसम्भवं बस्तिनेत्रवत् तथा कुन्दादीनां पुष्पाणि तत्तेन तुल्यम्। अश्वमारवृन्तं करवीरवृन्तं पुष्पफलादयो ये वानस्पत्यादिषु निबन्धाश्चावतिष्ठन्ते तथा तेभ्योऽप्यानीयन्ते तद्वन्तमतएव तन्नेत्रं पुष्पनेत्रमित्युच्यते॥ ६२॥

हे०—उत्तरबस्तेर्नेत्रमाह—आतुरांगुलेति॥ ६२॥

**तस्य बस्तिर्मृदुर्लघुर्मात्रा शुक्तिर्विकल्प्य वा॥ ६३॥**

स०—तथा तस्य नेत्रस्य बस्तिर्मृदुर्लघुर्योज्य इति शेषः। मात्रा शुक्तिः कर्षद्वयम्। शुक्तिः स्नेहस्येति शेषः। विकल्प्य वा बलवयः सत्त्वदेहसात्म्यादि निरूप्य वा मात्रा कार्येत्यर्थः॥ ६३॥

प०—तस्योत्तरबस्तेर्बस्तिरजादीनां सम्बन्धी बस्तिर्मृदुर्लघुर्योजनीयः। मृदुरकठिनः। लघुः स्वल्पः। तस्य मात्रास्नेहनाय प्रमाणं परं शुक्तिरर्धपलं विकल्प्य वा कल्पयित्वा वा दोषादीन् तेन शुक्तेरप्यल्पा मात्रा कल्पनीया मात्रा विकाराय॥ ६३॥

हे०—उत्तरबस्तौ बस्तिमाह—तस्येति। उत्तरबस्तेर्मात्रामाह—मात्रा शुक्तिरिति। शुक्तिरर्धपलं विकल्प्य दोषाद्यपेक्षया न्यूनमधिकं वा॥ ६३॥

**अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः। ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ॥ हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये। सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनीम्॥ आमेहनांतं नेत्रं च निष्कंपं गुदवत्ततः। पीडितेंऽतर्गते स्नेहे स्नेहबस्तिक्रमो हितः॥ ६४॥**

स०—अथेति मंगले। अस्य रोगिणो निरूहवत्कृतमङ्गलस्य तथा पूर्वं स्नातस्य पश्चादशितस्य। कथमशितस्य। स्नेहबस्तिविधानतः। तृतीयार्थे तसिः। स्नेहबस्तौ यादृश आहारो विहितस्तेन कृतभोजनस्येत्यर्थः। तथर्जोः स्पष्टं स्थितस्य तथा सुखेनाऽसीनस्य। क। पीठ आसने। किंभूते। जानुतुल्ये। तथा मृदावकठिने च। प्रहृष्टे स्तब्धे तथा ऋजौ स्पष्टे कृत्वा स्थिते सति शनैर्न त्वरया सूक्ष्मां शलाकां प्रणयेत्। स्थूलायां तत्र क्षतकरणात्। तया शलाकया शुद्धे मेढ्रे सत्यनुसेवनीं सेवनीमनुलक्षीकृत्य आमेढ्रांतं नेत्रं प्रणयेत्। षडंगुलं प्रायेण प्रवेशयेदित्यर्थः। कथम्। गुद इव निष्कंपम्। ततो निष्कंपं स्थापनादनंतरं पीडिते पुटके स्नेहे चांऽतःप्रविष्टे सत्यनुवासनक्रमो हितः। पाणिना ताडयेत् स्फिजौ तस्य पार्ष्णिभ्यामित्यादिकः॥ ६४॥

प०—अथानन्तरं स्नानाशितस्य पुंसो मेढ्रे लिङ्गे पूर्वं सूक्ष्मशलाकां प्रणयेत् तदनन्तरं नेत्रं पूर्वं स्नातस्य पश्चादशितस्य। भोजितस्य कथं स्नेहबस्तिविधानेन पूर्वनिर्दिष्टेनाभ्यक्तस्नातमित्यादिना ग्रन्थविहितेन तथा ऋजोः स्पष्टस्य सुखोपविष्टस्य सतः सुखेनासीनस्य पीठ आसने जानुसमे जानुतुल्ये मृदावकठिने स्थितस्य हृष्टे मेहने स्तब्धेऽभ्युत्थिते कृते सति तथा ऋजुं कृत्वा स्पष्टं कृत्वा सूक्ष्मां शलाकां शनैर्मन्दं मन्दं कृत्वा न झटित्येव प्रणयेत् विदध्यात्। मूत्रविशुद्धये मूत्रस्रोतोनिर्म-

त्स्वकरणाय तथा शलाकया शुद्धे मेढ्रे स्रोतसि नेत्रं प्रणयेत् । अनुसेवनी सेवनीसमीपे तदनु-वासनेनेति यावत् । आमेहनान्तं यावन्मेहनपर्यन्तं निष्कम्पं कृत्वा हस्तमकम्पयन्गुदवत् यथा गुदे नेत्रं प्रणयेत्तथेहापि च तत्पूर्वं पीडिते प्रक्षिप्ते क्षेपा-दन्तर्गतस्नेहे प्रवर्तिते स्नेहबस्तेर्यः क्रमः उपचारः स तत्र हितः।बस्तेरयं क्रमः। पार्ष्णिके आहन्यान्मुष्टिना तथाङ्गं चेदं तं स्नेहेनाभ्यज्य मर्दयेत् । आगते स्नेहे दीप्ताग्निं सायाह्ने भोजयेत् । उच्यतेऽथ क्रमः ॥६४॥

हे०—उत्तरबस्तेर्विधिमाह—अथेति । यया शलाकया शुद्धस्रोतसि मेढ्रे सेवन्यनुसारेण नेत्रं प्रणयेत् । ततः स्नेहे पीडिते तु गते निवृत्ते च अनुवासनोक्तः क्रमः कार्यः। संग्रहे तु—"मालतीपुष्पवृन्ताग्रपरिणाहां घनामृजुम्" इत्यधिकम् ॥ ६४ ॥

**बस्तीननेन विधिना दद्यात्त्रींश्चतुरोऽपि वा ।**
**अनुवासनवच्छेषं सर्वमेवाऽस्य चिन्तयेत् ६५ ॥**

स०—त्रींश्चतुरो वा बस्तीननेन विधानेन दद्यात् । शेषं विधिपरिहारादि सम्यग्दत्तव्यापदादिकमस्योत्तरबस्ते-रनुवासनस्येव दापयेत् । यदुक्तं खरनादेन । यथाशेषं प्रवेश्याऽथ स्नेहस्यार्धपलं नयेत् । प्रत्यागते द्वितीयं वा तृतीयं वा प्रदापयेत् । स चेदनुवसेत्तत्र स्यात्क्रियेयं विशेषतः। पिप्पल्यारग्वधांगारधूमवत्सकसैंधवैः। मूत्राऽ-म्लपिष्टैर्गुलिकाः सर्षपा माषसन्निभाः । छायासु शुष्कास्ताः शिश्ने दद्यात्सर्षपसन्निभाः । पूर्वं माषोपमाः पश्चात्ताभिः स्नेहं समानयेत् । स्नेहे प्रत्यागते च स्यादानुवासनिको विधिरिति ॥ ६५ ॥

प०—अनेन यथोद्दिष्टेन विधिनोत्तरबस्तींस्त्रीं-श्चतुरो वा दद्यात् योजयेत् । अनुवासनेन तुल्यं सर्वमेव सम्यग्योगहानातियोगादि तथान्यदपि यत्किञ्चिन्मेध्यामेध्यं तद्व्यापदौषधं चास्य चिन्त-येल्लक्षयेत् । जानीयात् ॥ ६५ ॥

हे०—उत्तरबस्त्यावृत्तौ संख्यामाह—बस्तीनिति । उत्त-रबस्तावनुक्तमौषधकल्पनाधिकममुवासनवत्कार्यमित्याह— अनुवासनवदिति ॥ ६५ ॥

एवं पुरुषाणामुत्तरबस्तिविधानमुक्त्वा स्त्रीणां वक्ति—

**स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतेः ।**
**विदधीत तदा तस्मादनृतावपि चात्यये**
**योनिविभ्रंशशूलेषु योनिव्यापदसृग्दरे ॥**

स०—ललनानामृतुकाल एवाऽर्तवकाल द्वादशनिशा इत्यादिनोक्तस्तत्र ऋतौ योनिः कर्त्री बस्तिस्वभावं स्नेहं गृह्णाति । कुतः अपावृतेरपा कारणात् । अन्यदा तु संवृतत्वान्न स्नेहमादत्ते ग तस्माद्धेतोस्तदा ऋतुकाले विदधीत । प्रकृतत्वा बस्तिम् । आत्ययिके व्याधावनृतावपि विद तमेवात्ययं दर्शयति । योनीत्यादि । योनि उत्तरे वक्ष्यमाणः । योनिशूलो योनिरुजा तेषु योनिव्यापत्तौ तथाऽसृग्दरं रक्तपित्तं योनिमुखेना स्त्रीणामसृग्दरमुच्यते । एतेषु रोगेषूत्तरबस्तिमात्य त्वादनृतावपि दद्यात् ॥ ६६ ॥

प०—स्त्रीणामार्तवकाले उत्तरबस्तिं विदध प्रायेणार्तवदर्शनात् प्रभृति यावत् द्वादशा स्तावदृतुकालः । तत्कालमध्ये तासां बस्तिं येत् कुर्यात् । ततस्तस्मिन् काले स्त्रीणां स्नेह उत्तरबस्तिना दीयते तं योनिर्गृह्णात्याव कुतोऽपावृतेर्हेतोः । यस्मात्तस्मिन् काले यो सा शुक्रं नान्तः प्रयच्छति । अनृतावपि चा तत्साध्यामये चानृतौ विकारप्रादुर्भावे सति तावनार्तवे काले बस्तिमुत्तरं विदधीत । यो विभ्रंशादिके योनिविभ्रंशः स्थानात्पतनं तस्मि तथा योनेः स्थूले तथा योनिव्यापदि यो व्यापत्तस्यामनेकविधायां योनिव्यापदि तथा ग्दरे योनिरोगे योनितो नानाप्रकारस्रुतिः । दी कालानुपङ्गवतीनां स्त्रीणां प्रवर्तते स असृग्दरः॥६

हे०—स्त्रीणामुत्तरबस्तिकालमाह—स्त्रीणामिति । गृ स्यौषधमिति शेषः । अपावृतेर्विवृतत्वात् । आत्ययिके व्याधावनृतावपि विदधीत । स्त्रीणां रोगभेदेन यन्त्र मार्गभेदं चाह—योनिविभ्रंशेति । योनिविभ्रंशादिषु

अथाऽत्र नेत्रस्य प्रमाणमाह—

**नेत्रं दशांगुलं मुद्गप्रवेशं चतुरंगुलम् ।**
**अपत्यमार्गे योज्यं स्याद् द्व्यंगुलं मूत्रवर्त्मनि**
**मूत्रकृच्छ्रविकारेषु बालानां त्वेकमंगुलम् ६७**

स०—दशांगुलप्रमाणं दैर्घ्येण तत्तथा मुद्गः प्रवि शत्यस्मिन्निति मुद्गप्रवेशं तदिवाग्रं प्रवेशाप्रमि

वेद्यमंतलोपाख्यया तंत्रयुक्त्या । वृत्तगोपुच्छाकारादि शेषं पूर्वोक्तमत्र वेद्यम् । पुष्पवृंतोपमत्वं त्वत्र न युज्यते । यतो मूत्रस्रोतःपरिणाहं यत्तद्विधातव्यं पुरुषे स्त्रियां चैवंप्रकारम् । यदुक्तं मुनिना । पुष्पनेत्रप्रमाणं तु प्रमदानां दशांगुलम् । मूत्रस्रोतःपरीणाहमिति । तत्र चतुरंगुलं यावत् प्रवेश्यम् । चतुरंगुला चोर्ध्वकर्णिका कार्या। अधिकप्रवेशनिवारणार्थं नतु मेहननेत्र इव मध्यमकर्णिकेति । अयमर्थोऽत्र साक्षान्नोपात्तो गम्यमानत्वात् । अत एतत्प्रवेशप्रमाणमाह । चतुरंगुलमपत्यमार्गे योज्यं स्यादिति । अपत्यमार्ग इत्यनेन स्त्री गर्भग्रहणप्रसवादिसमर्था सूच्यते । एवंविधायाः स्त्रियाश्चतुरंगुलं प्रवेशयितव्यमिति । मूत्रवर्त्मनि द्व्यंगुलं योज्यम् । या स्त्री सुरतव्यवहारगर्भग्रहणायोग्या अथवा बाला या अप्रौढा तस्या योनिर्मूत्रस्यैव केवलं मार्गस्तस्या नेत्रं द्व्यंगुलं प्रवेश्यम् । अत ऊर्ध्वं तु प्रवेशात्तासां मांसक्षतिः स्यात् । केषु रोगेषु । मूत्रकृच्छ्रविकारेषु । बालानां तु स्त्रीणामेकमंगुलं प्रवेश्यम् ॥६७॥

प०—सर्वासां स्त्रीणां गर्भग्रहणयोग्यानां बालानां च नेत्रं सामान्येन दशाङ्गुलं कार्यमित्यध्याहार्यम् । यथा मुद्गः प्रविशति वहत्यनुप्रत्यग्रस्रोतसि यस्य तन्मुद्गप्रवेशं तच्च नेत्रं चतुरङ्गुलम् । अपत्यमार्गे गर्भनिष्क्रमणवर्त्मनि प्रयोज्यं स्यात् । मूत्रस्रोतस्यतो नाधिकः । तथा द्व्यङ्गुलं मूत्रवर्त्मनि मूत्रमार्गे प्रयोज्यं स्यात् इत्यत्राप्यनुवर्तनीयम् । क प्रयोज्यम् । मूत्रकृच्छ्रव्याधिष्व- बलानां स्त्रीणामतिसूक्ष्माणाम् । ततो नेत्राद्दशाङ्गुलं मूत्रकृच्छ्रविकारेषु मूत्रवर्त्मनि प्रयोज्यं स्यात् । तत्र स्रोतसि तत्प्रवेशयेत् ॥ ६७ ॥

हे०—दशांगुलं मुद्गवाहि छिद्रं नेत्रं कृत्वाऽपत्यमार्गे चतुरंगुलं प्रवेशयेत् । मूत्रकृच्छ्रेषु तु मूत्रमार्गे द्व्यंगुलं प्रवेशयेत् । बालानां तु स्त्रीणामेकांगुलं मूत्रमार्गे प्रवेशयेत् । प्रवेशावधौ कर्णिका कार्येत्यर्थसिद्धम् ॥ ६७ ॥

**प्रकुंचो मध्यमा मात्रा बालानां शुक्तिरेव तु ।**

स०—स्त्रीणामुत्तरबस्तौ स्नेहस्य प्रकुंचो मध्यमा मात्रा नोत्तमा कनिष्ठा वा। बालानां तु शुक्तिरेव मध्यमा मात्रा स्नेहस्य ॥ ६८ ॥

प०—स्त्रीणामुत्तरबस्तेर्मध्यमा मात्रा पञ्चपली । बालानां सूक्ष्माणां स्त्रीणां मध्यमा मात्रा शुक्तिरर्धपलम् । अप्राप्तव्यवहारा कन्या बालाभिप्रेता ॥ ६८ ॥

हे०—स्त्रीणामुत्तरबस्तौ मात्रामाह—प्रकुञ्च इति॥६८॥

अधुनोत्तरबस्त्यवस्थानं त्रिविधाया अपि स्त्रिया वदति—

**उत्तानायाःशयानायाः सम्यक्संकोच्यसक्थिनी ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् । बस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत्६९ ॥**

स०—उत्तानाया न त्ववाङ्मुखायाःपार्श्वस्थिताया वा । शयानाया न त्वासीनायास्तथोर्ध्वजान्वा बस्तीस्त्रिचतुरानहोरात्रेण योजयेत् । किं कृत्वा । सक्थिनी संकोच्य । अनुवासने त्वेक एवाहोरात्रेण योज्य इत्यस्य भेदः । बस्तिदानं कार्यं न त्वत्राऽनुवासनवत्त्र्यहे पंचमे वाऽहनीति । किं कुर्वन् । स्नेहमात्रां यथास्वमर्धकर्षकर्षादिक्रमेण वर्धयेत् ॥ ६९ ॥

प०—तस्याः स्त्रिया उत्तानाया उत्तानं कृत्वा स्थितायास्तथा सम्यक् कृत्वा सक्थिनी सङ्कोच्याधस्तस्या अहोरात्रेण त्रिचतुरावृत्तः उत्तरबस्तीन् योजयेत् दद्यात् । एवं द्वितीयतृतीययोः क्रमेण यथार्हं प्रत्यहमेव मात्रां विवर्धयेत् ॥ ६९ ॥

हे०—स्त्रीणामुत्तरबस्तिविधिमाह—उत्तानाया इति । स्त्रीणामुत्तरबस्तावावृत्तिक्रममाह—त्रिरात्रमिति । एवं प्रथमदिनवत् बस्तीन्योजयेत् । स्नेहमात्रां च दिने दिने च वर्धयेत् ॥ ६९ ॥

**त्र्यहमेव च विश्रम्य प्रणिदध्यात्पुनस्त्र्यहम् ७०**

स०—त्र्यहमेव च विश्रम्य त्रीणि दिनानि विलंब्य च पुनः पूर्वोक्तेनैव प्रकारेण प्रणिदध्यात् प्रकुर्यात् । एष एव च न्यायो मेढ्रेऽपि योज्यः । तज्जातीयत्वादस्यार्थस्य । अत एवांतेऽयमुपदिष्ट उभयसंबंधार्थम् ॥७०॥

प०—ततस्त्र्यहं विश्रम्य पुनरनेन विधानेन त्र्यहं दद्यात् ॥ ७० ॥

हे०—ततस्त्रिदिनं विश्रम्य पुनस्त्रिदिनं योजयेत् ॥७०॥

युक्त्योक्तमेवाऽमुमर्थं संक्षेपेण संग्राह्य पुनराह—

**पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् । सद्यो निरूढश्चाऽन्वास्यः सप्तरात्राद्विरेचितः ७१**

स०—उत्तमशुद्ध्या शुद्धे वमिते पक्षादनंतरं विरेकः कार्यः । यस्मात्प्रवरया शुद्ध्या शुद्धे तु वमिते पेयादिक्रमेण सप्ताहात् प्रकृतिभोजनापत्तिः । सप्ताहेनैकांतराऽनुवासनदानेन स्निग्धस्य विरेक इति पक्षेणैव युज्यते। ततोऽनंतरं पक्षात्परतो निरूहो यतः कृतविरेकस्य सप्ताहात् प्रकृतिभोजनापत्तौ स्नेहनार्थमनुवासनेनैकांतरितेन स्निग्धस्य निरूहो युज्यत इति पक्षेणैव युक्तः । निरूहश्च सद्य एवाऽनुवास्यः । तथा च प्रागभ्यधायि । अथ वातार्दितं भूयः सद्य एवानुवासयेदिति। विरेचितः सप्तरात्राद्रूर्ध्वमनुवास्यो यतः सप्ताहेन प्रकृतिभोजनापत्तिस्ततः स्नेहार्थमनुवासनं युक्तम् ॥ ७१ ॥

प०—वमिते पुंसि सति पक्षादनन्तरं विरेकः कार्यः । ततो विरेकादूर्ध्वं पक्षान्निरूहः कार्यः । निरूढश्च पुमान् सद्य एवानुवास्यो भवेत् । विरेचितः सन् सप्तरात्रादनुवास्यः स्यात् । विरेकनिरूहयोर्मध्येऽनुवास्य इत्यर्थः ॥ ७१ ॥

हे०—वमनादीनामन्तरमाह—पक्षादिति । निरूहानुवासनयोर्भोजनमेवान्तरम् अनुवासनानिरूहयोस्तु पञ्चमेऽथ तृतीये वा दिवस इति प्रागुक्तं शुद्धाशुद्धसंपर्केऽप्यशुद्धमेव ॥ ७१ ॥

ननु दोषाणां धातूनां च स्नेहस्वेदाभ्यामेकलोलीभावात् कथं वस्तिर्दोषानेव निर्हरेन्न धातूनित्येतच्चोद्यं दृष्टांतद्वारेण परिजिहीर्षुरिदमाह—

**यथा कुसुंभादियुतात्तोयाद्रागं हरेत्पटः ।**
**तथा द्रवीकृताद्देहाद्वस्तिर्निर्हरते मलान् ॥७२॥**

स०—कुसुंभकुंकुमादियुक्ताज्जलाद्यथा पटो वासो रागं हरेद् गृह्णीयान्न कुसुंभादिकं तथैव द्रवीकृतात्कायादोषधातूनामेकलोलीभावेऽपि बस्तिर्दोषान्निर्हरेन्न धातून्॥

प०—यथा कुसुम्भादिना प्रयुक्तात्तोयात्पटो रागं गृह्णाति मलं त्यजति तथा देहाद्वस्तिः स्नेहादिद्रवीकृतान् दोषान् हरत्यदुष्टान् देह एव योजयति ७२॥

हे०—वस्तिर्निर्हरेदित्याह—यथा कुसुम्भादिति । द्रवीकृतात् स्नेहादिद्रावितदोषधातुमलात् ॥ ७२ ॥

अधुना वायोः स्वरूपं प्रथयन् बस्तिं श्लाघयन्नाह—

**शाखागताः कोष्ठगताश्च रोगा**
**मर्मोर्ध्वसर्वावयवांगजाश्च ।**
**ये संति तेषां नतु कश्चिदन्यो**
**वायोः परं जन्मनि हेतुरस्ति ॥ ७३**

स०—सक्थिनी द्वे द्वौ बाहू इति शाखास्तासु गत स्तत उत्पन्नाः । एवं कोष्ठो महास्रोतस्तत्र गताः को गताः। तथा मर्माणि च ऊर्ध्वं च सर्वे चाऽवयवाश्च म ध्वसर्वावयवास्तेषामंगं तत्र जाता मर्मोर्ध्वसर्वाव वांगजाः । तत्र मर्माणि मर्मविभागे वक्ष्यंते ऊर्ध्वशब्देनोर्ध्वजत्रु गृह्यते । तत्र जाता ऊर्ध्वांग मुखरोगादयः । सर्वांगजा ज्वरादयः । अवयवज श्वित्रादयश्च ये रोगा विद्यंते तेषां जन्मन्युत्प वायोरपरः कश्चिदपि हेतुर्नास्ति । कथम् परमतिशयेन । किंचिन्मात्रेणाऽनुबलभावेन पित्तश्लेष्म णावपि हेतू भवत एव । यथा पामादद्रादीनाम अथाऽवयवग्रहणेनैवोर्ध्वग्रहणे लब्ध ऊर्ध्वग्रहणं प्राधा न्यख्यापनार्थम् । यथा ब्राह्मणा आयाताः वसिष्ठो प्यायात इति । तदेवाधिकृत्य वक्ष्यमाणाः पं विषयः सकलमेवोत्तरे च तंत्रे प्रधानं तस्मात्प्रधा ऊर्ध्वांगजाः ॥ ७३ ॥

प०—शाखारक्तादयो धातवस्त्वक्पर्यन्ताः । तथ बाह्वादयः शरीरावयवाः । ऊर्ध्वं च सर्वावयव ऊर्ध्वसर्वावयवाः । ऊर्ध्वसर्वावयवाश्चाङ्गानि ऊर्ध्वसर्वावयवाङ्गानि मर्माणि चोर्ध्वसर्वावयवाङ्ग नि तेषु जाता मर्मोर्ध्वसर्वावयवाङ्गजा ये रोगा सन्ति तेषां सर्वेषां रोगाणां समुत्पत्तौ वायोरप वर्जयित्वा द्वितीयो नान्योऽपि तेषां हेतुरस्ति नान्यत्कारणं विद्यते इत्यर्थः ॥ ७३ ॥

हे०—बस्तेः सर्वोत्तमत्वे युक्तिमाह—शाखागत इति ॥ ७३ ॥

ननु कुतो हेतोर्मरुत एतेषु कारणत्वमित्याह—

**विट्श्लेष्मपित्तादिमलाचयानां**
**विक्षेपसंहारकरः स यस्मात् ।**
**तस्याऽतिवृद्धस्य शमाय नान्य-**
**द्वस्तेर्विना भेषजमस्ति किंचित् ॥७४॥**

स०—विट् च श्लेष्मा च पित्तं च विट्श्लेष्म पित्तानि तान्यादिर्येषाम् । आदिशब्देन मूत्रस्वेदादि

परिग्रहः । त एव शरीरमलिनीकरणान्मलास्तेषामाचयाः संचयास्तेषां स वायुर्यस्माद्विक्षेपसंहारकरः । विक्षेपश्च संहारश्च विक्षेपसंहारौ तौ करोतीति कृञो हेतुताच्छील्येत्यादिना हेतौ टः । विक्षेपसंहारकरणहेतुरित्यर्थः । तस्य क्रियावत्त्वात् । वायुश्च शेषदोषाभ्यां न कदाचिद्विक्षिप्यते संह्रियते वा । तयोर्निष्क्रियत्वात् । तस्य च वायोः प्रवृद्धस्य शमनार्थं बस्तिमंतरेणाऽपरं भेषजं नास्ति । स्नेहस्वेदादिकं तु विद्यमानमपि न तथा समर्थमित्यगण्यत्वात्तदविद्यमानमुच्यते ॥ ७४ ॥

प०—कुत एतत्तदर्थमाह—विट् च श्लेष्मा च पित्तं च तान्यादिर्येषां ते विडादयः । शरीरगता भागा रसादयः । त एव शरीरमलिनीकरणान्मलाः तेषां मूत्रदूषिकाप्रभृतीनामुच्चयाः ये सञ्चयाः तेषां विक्षेपकरः संहारकरश्च । विविधं क्षेपणं विक्षेपः प्रेरणम् । राशिस्थितानामितश्चेतश्च करणं संहारः । इतश्चेतश्च गतानामेकत्र राशीकरणं करोतीति विक्षेपसंहारकरः स यस्माद्वायुस्तस्य तेषां विक्षेपकरो वायुरिति वृद्धस्यात्यर्थं कुपितस्य शमाय शान्तये वस्तेर्विना भेषजमौषधमपरं न किञ्चिद्विद्यते । स्नेहस्वेदादिकमन्यद्विद्यमानमसमर्थं स्यात् ॥ ७४ ॥

हे०—सर्वेषां रोगाणां वायुरेव कारणं यस्मात्पित्तश्लेष्मणोरपि इतरमलवत्स एव क्षोभकः ॥ ७४ ॥

**तस्माच्चिकित्सार्ध इति प्रदिष्टः**
**कृत्स्ना चिकित्साऽपि च बस्तिरेकैः ।**
**तथा निजागंतुविकारकारि-**
**रक्तौषधत्वेन शिराव्यधोऽपि ॥ ७५ ॥**

स०—तस्माद्दोषप्रधानस्य पवनस्य शमनार्थात्कारणाद्बस्तिश्चिकित्सार्ध इति कथितः । एकैश्चाऽचार्यैर्निरवशेषाऽपि चिकित्सा बस्तिः प्रदिष्टः । ननु चतुर्णां भिषजादीनामित्यादिलक्षणा चिकित्सा तत्कथं तस्या भागकल्पना कर्तुं युज्यते । नच सर्वा चिकित्सा बस्तिरिति वक्तुं शक्यते । शेषचिकित्साशास्त्रविस्तरस्यानर्थक्यप्रसंगात् । तस्मादेतदयुक्तमिवाऽऽभाति । अत्रोच्यते । तथाऽपि वायुविकारा अशीतिरुक्ताः । पित्तश्लेष्मविकाराश्च षष्टिरुक्ताः । तत्र वातविकाराणां प्रधानोपक्रमो बस्तिस्तस्माच्चिकित्सार्धो बस्तिः कार्यद्वारेणोक्तः । अथवा मारुतं पित्तश्लेष्मविड्वहितं बस्तिः समूलमेवापकर्षतीत्युक्त्वा सर्वा चिकित्सा कार्यद्वारैरुपदिष्टः। अन्यत्राऽपि चैवं प्रायो निदर्शित आचार्यैः । तथाच मुनिः । यानीह कर्माण्युक्तानि विकारविनिवृत्तये । एकतस्तानि सर्वाणि रक्तमोक्षणमेकत इति । चिकित्सार्धमित्ययं तु पाठो न युक्त एव । अर्धशब्दस्य हि समविभाग एव नपुंसकत्वम् । नचाऽत्र समप्रविभागो गम्यते तस्मान्नपुंसकत्वमत्राऽन्याय्यम् । तथेत्यादि । न केवलं बस्तिर्यावच्छिराव्यधोऽपि चिकित्सार्धः सर्वा वा चिकित्सेत्युपदिष्टः । कुतः । निजेत्यादिना । निजा वातादिसमुत्था आगंतवो विषवह्न्यादिसमुत्थाः । निजाश्चाऽऽगंतवश्च ते च ते विकाराश्च निजागंतुविकारास्तान्कर्तुं शीलमस्य तन्निजागंतुविकारकारि तच्च तद्रक्तं च निजागंतुविकारकारिरक्तं तस्यौषधत्वेन । तत्र विसर्पविद्रधिप्रभृतिरोगविशेषोपशमकरणाच्चिकित्सार्धः शिराव्यध उपदिष्टः । तथाऽपरेऽपि ये रोगाः शीतोष्णस्निग्धरूक्षाद्यैरुपक्रमैरनुपशांतास्तेऽपि शिराव्यधसाध्याः । अत एव सर्वाऽपि चिकित्सा शिराव्यध उक्त इति ॥ ७५ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामेकोनविंशोऽध्यायः १९ ।

प०—यत एवंगुणो बस्तिस्तस्मात्तेन प्रकारेण बस्तिश्चिकित्सार्धं साधनमिति प्रदिष्टमित्युक्तम् । कृत्स्ना चिकित्साऽपि च बस्तिरेके । यतः स पित्तकफमूत्रादिकं सर्वमेव विकृतं मूलादुद्धरति तस्मात्तमधिकृत्य कृत्स्नाऽपि चिकित्सा बस्तिना साध्यत इत्यर्थः । अतोऽपरे आचार्या आयुर्वेदविदः कृत्स्ना सकलाऽपि चिकित्सा बस्तिना साध्यत इत्यर्थः। तथा बस्तिश्चिकित्सार्धमिति केचित्। प्रतिपन्नाः निजाश्चागन्तवश्चेति विकारा निजागन्तुविकारास्तान्करोतीति तच्छीलं रक्तं निजागन्तुविकारकारिरक्तं तस्यौषधत्वेन प्रशमनं तस्य भावो निजागन्तुविकारकारिरक्तौषधत्वेन शिराव्यधश्च चिकित्सार्धं कृत्स्ना वा चिकित्सा ।

अपिशब्दः समुच्चयार्थः। न केवलं बस्तिश्चिकित्सार्धमथवा सकलापि चिकित्सेति भद्रम् ॥ ७५ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने एकोनविंशोऽध्यायः॥१९॥

हे०—तस्य चातिवृद्धस्य बस्तिरेवौषधं तस्मादसौ चिकित्सार्धमुक्तः । अप्रधानस्यापि इत्युक्तं पित्तादेः पृथक् चिकित्सां मत्वा तैः। एके तु तदामयानां कृत्स्नापि चिकित्सा बस्तिरित्याहुः । शिराव्यधोऽपि बस्तितुल्य इत्याह—तथेति । निजानामागन्तूनां च यत्कारणं रक्तं तदौषधत्वात्सिराव्यधोऽपि बस्तिवत् ॥ ७५ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने बस्तिकर्मप्रकरणं सामस्त्येन निरूपितम् ॥ १९ ॥

## विंशोऽध्यायः ।



पंचकर्मोक्तिप्रस्तावे वमनविरेकान्वासननिरूहानुक्त्वा नस्यविधिमाह—

**अथाऽतो नस्यविधिमध्यायं व्याख्यास्यामः ।**
**ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ॥ १ ॥**

स०—जत्रु वक्षोंऽसयोः संधिः। जत्रुण ऊर्ध्वमूर्ध्वजत्रु। मयूरव्यंसकादित्वात्समासः । तत्र विकारा ऊर्ध्वजत्रुविकारास्तेषूर्ध्वजत्रुविकारेषु शिरोरोगादिषु विषये वमनशिराव्यधादयोऽपीष्यंत एव । विशेषेण तु नस्यमिष्यते । नासायां भवं नस्यम् । तत्र भव इति यत् । नासिकायाः पद्दन्न इति नसादेशः ॥ १ ॥

प०—अस्यारम्भेऽयं सम्बन्धः । यस्माद्वमनादयः कायतोऽन्तःस्थितान मलान् यथा निर्हरन्ति तथापनयन्नस्यं नासायां प्रणीतमौषधं तथैव मलानन्तः शरीराद्बहिर्निर्हरति । दोषनिर्हरणानि वमनादीनि चत्वारि कर्माणि नस्याख्यं पञ्चमं कर्म शुद्धस्य कार्यकरमुत वा कायचिकित्सासूत्रं पूर्वमुक्तं सर्वाङ्गव्यापित्वात् शालाक्यतन्त्रमिदानीं सूचयत्यध्यायैः॥ १ ॥

हे०—अथेति । नस्यविधिमध्यायं व्याख्यातुं प्रतिजानीते । नस्यविषयमाह—ऊर्ध्वजत्रिवति । विशेषादिति-वचनादितरेष्वपि संग्रहे तु नासया प्रणीयमा नस्यं नावनं नस्यकर्मेति च संज्ञां लभते ॥ १ ।

ननु किमिति नस्यमेतेषु रोगेषु विशेषेणेष्टमि

**नासा हि शिरसो द्वारं तेन तद्व्याप्य हंति**

स०—यस्माद् घ्राणं शिरोद्वारं तेन द्वारेण गाटकप्राप्तमूर्ध्वं नेत्रकंठादिशिरामुखानुप्रवेशेन व्याप्य तान्विकारान् हंति ॥ २ ॥

प०—नासया प्रणीतमौषधं श्रोत्रशृ प्राप्य मूर्धानं नेत्रश्रोत्रकण्ठादिशिरामुखा मुञ्जादिषीकामिवासक्तामूर्ध्वजत्रुगतां वैकारि षामाशुदोषसंहतिमुत्तमाङ्गस्यापकर्षति । त्रुगतान् विकारान् विशेषान्नस्यमुत्तमाङ्ग षेति । जत्रुवक्षोंऽसयोः सन्धिः॥ २ ॥

हे०—नासा हि शिरसो द्वारं तत्र निषि स्रोतःशृंगाटकं प्राप्य व्याप्य मूर्धानं नेत्रश्रोत्रकण्ठा मुखानि च, मुंजादिषीकामिवासक्तामूर्ध्वजत्रुगतां कीमशेषामाशुदोषसंहतिमत्तमांगादपकर्षतीति ॥ २

**विरेचनं बृंहणं च शमनं च त्रिधाऽपि त**

स०—तत्र नस्यं विरेचनबृंहणशमनादिभेदेन स्यात् ॥ ३ ॥

प०—तत् त्रिधा । विरेचनं बृंहणं शमनं चे

हे०—विरेचनं बृंहणं शमनं चेति । नस्यम् ॥ ३ ॥

तत्र पूर्वं विरेचनाख्यस्योपयोगमाह—

**विरेचनं शिरःशूलजाड्यस्यंदगलामये ।**
**शोफगंडकृमिग्रंथिकुष्ठाऽपस्मारपीनसे ॥**

स०-शिरःशूलादिषु विरेचनं नस्यमिष्यते । स्मारो यद्यप्यूर्ध्वजत्रुस्थितो न भवति तथाऽपि नस्येन शाम्यतीति तदुपादानम् । उपलक्षणं चे कफप्रकोपास्यवैरस्यगंधाज्ञानादिष्वपि विरे हितम् ॥ ४ ॥

प०—विरेचनं नस्यं शिरःशूलादिषु यो विरेचनं शिरोविरेचनम् । जाड्यमपटु स्यन्दो नेत्रविकारः । कृमयो मूर्धाङ्ग पीनसः प्रतिश्यायः ॥ ४ ॥

हे०—तत्र विरेचननस्य विषयमाह—विरेचनमिति । जाड्यं शिरसः, स्पन्दो नेत्रकोपः, संग्रहे तु उपदेहकण्डू-स्तम्भखावप्रसेकवैरस्यारोचकस्वरभेदगन्धाज्ञानार्बुदकण्डूव-कोठादिषु श्लेष्मजेष्विति ॥ ४ ॥

**बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ।**
**नासाऽस्यशोषे वाक्संगे कृच्छ्रबोधेऽवबाहुके ५॥**

स०—वातोद्भवशूलादिषु बृंहणं नस्यं हितम् । सूर्यावर्तः शिरोरोगविशेषः । कृच्छ्रबोधः कृच्छ्रोन्मीलनम् । अवबाहुको वातव्याधिविशेषः ॥ ५ ॥

प०—बृंहणं नस्यं वातजे शूले तथा सूर्यावर्ते तथा स्वरक्षये तथा नासायामास्ये च शोषे वाक्सङ्गे वाक्प्रवृत्तौ कृच्छ्रबोधे चक्षूरोगेऽपबाहुके वातव्याधौ योज्यम् ॥ ५ ॥

हे०—बृंहणनस्यस्य विषयमाह—बृंहणमिति । संग्रहे तु अर्धावभेदकक्रिमिशिरोरोगाक्षिसंकोचस्पन्दनस्तिमिरदन्तकर्णशूलनादमन्यारोगापतानकनिद्रानाशादिष्वनिलोत्थेष्विति ॥ ५ ॥

**शमनं नीलिकाव्यंगकेशदोषाक्षिराजिषु ॥ ६॥**

स०—नीलिकादिषु शमनं नस्यं हितम् । नीलिकाव्यंगौ क्षुद्ररोगेषु वक्ष्यमाणौ । केशदोषः केशशातः ॥ ६ ॥

प०—शमनं नस्यं तन्नीलिकादिषूत्तरतन्त्रे वक्ष्यमाणेषु विकारेषु योज्यमिति ॥ ६ ॥

हे०—शमननस्यस्य विषयमाह—शमनमिति । अक्षिराजयश्चक्षुषि रेखाकाराः शिराः । संग्रहे तु अकालवलीपलितखलतिदारुणकरक्तपित्तादिष्विति ॥ ६ ॥

**यथास्वं यौगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ।**
**कल्कक्काथादिभिश्चाद्यं मधुपट्वासवैरपि ॥७॥**

स०—ये ये स्नेहा यथास्वं तैः । किंभूतैः । यौगिकैर्योगार्हैः सर्षपतैलादिभिर्न तु घृतादिभिः।तथा यथास्वं मरीचशुंठ्यादिभिः प्रसाधितैः संस्कृतैः । तथा कल्कक्काथस्वरसादिभिश्च यथास्वं कफघ्नैर्गिरिकर्णिकादिजैराद्यं विरेचनाख्यं नस्यं भवति । न केवलमेतैर्याव-न्माक्षिकादिभिश्च । पटुः सैंधवादिः । आसवो मद्यविशेषः ॥ ७ ॥

प०—आद्यं विरेचननस्यं प्रथमनिर्दिष्टत्वाद्यथास्वं यथात्मीयं योगिकैर्योगार्हैस्तीक्ष्णैः सर्षपतैलप्रभृतिभिस्तथा यथायथं प्रसाधितैः शिरोविरेचनद्रव्यैस्तथा कल्कक्काथादिभिः शिरोविरेचनद्रव्याणां सम्बन्धिभिः ॥ ७ ॥

हे०—विरेचननस्यद्रव्याण्याह—यथास्वमिति । यथास्वं यो यस्योचितः स्नेहस्तेन यथास्वं [illegible]मौषधं तेन साधितैः स्नेहैः कल्कैः [illegible] आद्यं विरेचनं, पटु सैंधवादि । संग्रहे तु [illegible] कृशसुकुमारेषु स्नेहः [illegible] विकारक्रिमिशिरोरोगाक्षिस्पन्दनतिमिर[illegible] ष्यन्दसर्पदष्टविसंज्ञेषु शेषाः [illegible] कारिणि च चूर्णः । स हि [illegible] तीति ॥ ७ ॥

**बृंहणं धन्वमांसोत्थरसासृक्खपुरैरपि ।**
**शमनं योजयेत्पूर्वैः क्षीरेण च जलेन च ॥८॥**

स०—बृंहणं नस्यं धन्वोत्थमांसोद्भवरसैः स्यात् । तथाऽसृजा रक्तेन धन्वोत्थेनैव । तथा खपुरैर्नियासविशेषैः । अपिशब्दादन्यैरपि पूर्वोक्तैः स्नेहैरतीक्ष्णैर्बृंहणं भवति । शमनं नस्यं पूर्वोक्तैरतीक्ष्णैः स्नेहैर्घृतादिभिस्तथ मांसरसादिभिर्योजयेत्। तथा क्षीरेण जलेन चेति । सुश्रुतस्तु स्पष्टतरमुवाच । तत्तु नस्यं देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघातनासारोगास्यशोषापबाहुकाऽकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु चान्येषु मुखरोगेषु वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति । शिरोविरेचनं श्लेष्मणाऽभिव्याप्ततालुकंठशिरसामरोचकशिरोगौरवशूलपीनसाऽर्धावभेदकक्रिमिप्रतिश्यायाऽपस्माराघ्राणनाशेष्वन्येषु चोर्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तैस्सिद्धेन वा स्नेहेनेति । तथा सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं विरेचयेत् । अवपीडस्तु शिरोविरेचनवदभिष्यंदसर्पदष्टविसंज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतममवपीड्याऽवपिष्य चेतोविकारक्रिमिविषाभिपन्नानां चूर्णं प्रधमेत् । शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विदध्यात् ।

कृशदुर्बलभीरूणां सुकुमारस्य योषिताम् । श्रुताः स्नेहाः शिरःशुद्धे कल्कस्तेभ्यो यथा हित इति ॥ ८ ॥

प०—तथा मांसरसेन तथासृजा रक्तेन खपुरैर्नि-र्यासैर्योजयेत् । अपिशब्दाद्यथास्वं यौगिकैरपि स्नेहैः स्निग्धैर्मधुरद्रव्यैर्नस्यं योजयेत् । शमनं नस्यं पूर्वैः पूर्वनिर्दिष्टैर्यथास्वं यौगिकैः स्नेहैः तथा भेषजस्वरसादिभिर्योजयेत् । तथा क्षीरेण सलिलेन वा योजयेत् ॥ ८ ॥

हे०—बृंहणनस्यस्य द्रव्याण्याह—बृंहणमिति । असृग्रुधिरं, खपुरो निर्यासो मोचरसादिः, अपि-शब्दाद् बृंहणद्रव्यसाधितः स्नेहादिभिश्च । शमने नस्यस्य द्रव्याण्याह—शमनमिति । पूर्वैर्धन्वमांसरसादिभिः शम-नौषधसाधितस्नेहादिभिश्च ॥ ८ ॥

अधुनाऽन्यानपि नस्यविशेषानाह—

**मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ।**
**कल्काद्यैरवपीडस्तु तीक्ष्णैर्मूर्धविरेचनः ॥ ९ ॥**

स०—एषु नस्यभेदेषु मध्ये मर्शाख्यः प्रति-मर्शाख्यश्चेति स्नेहो द्विधा भेदद्वयेन भवति । कथम् । मात्रया मात्राभेदेन नतु वस्तुभेदेन । तुरवधारणे भिन्नक्रमः । कल्काद्यैरेवाऽवपीडो न स्नेहेन । स चाऽवपीडस्तीक्ष्णैः शुंठ्यादिभिः कल्कक्काथ-रसाद्यैर्न मृदुभिः । मूर्धविरेचनाख्यं नामांतरमस्य । अतीक्ष्णैस्तु शमनसंज्ञमेव ॥ ९ ॥

प०—अत्र नस्यविधौ त्रिविधः स्नेहोऽस्य विधौ स्नेहोऽत्र द्विप्रकारो मात्राभेदात् । मर्शस्तथा प्रतिम-र्शश्च । कल्कक्काथस्वरसादिभिर्निष्पादितो यो नि-ष्पीड्य पिचुना दीयते सोऽवपीडसंज्ञकः । कल्की-कृतादौषधादर्धपीडितः द्रुतो रसोऽर्धपीडित इत्यप-देशो सोऽवपीडः । तीक्ष्णैः कल्कक्काथादिभिर्दत्तो मूर्धविरेचनसंज्ञो भवति ॥ ९ ॥

हे०—मर्शादीन्पंच नस्यभेदानाह—मर्शश्चेति । मर्शप्र-तिमर्शौ स्नेहस्य बहुत्वाल्पकृतौ भेदौ । अवपीडशिरोविरे-चनौ कल्कादिनस्यस्य मृदुत्वतीक्ष्णत्वकृतौ भेदौ ॥ ९ ॥

विरेचनस्य प्रकारांतरमाह—

**ध्मानं विरेचनश्चूर्णो ॥ १० ॥**

स०—चूर्णो मरीचादिभिः कृतो विरेचदो बा[illegible] निरसनो ध्मानं प्रध्मानाख्यं नस्यं स्यात् । कथं प्रणीयमानः ॥ १० ॥

प०—विरेचनद्रव्यैर्निष्पादितश्चूर्णो ध्मानं पनसंज्ञं भवति ॥ १० ॥

हे०—विरेचनचूर्णकृतं नस्यं ध्मानं प्रधमनाख्[illegible] पंच ॥ १० ॥

कथं पुनरसौ नासायां ध्मापयितव्य इत्याह—

**युंज्यात्तं मुखवायुना**
**षडंगुलद्विमुखया नाड्या भेषजगर्भया ।**
**स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥**

स०—युंज्यात्तं चूर्णं मुखवायुना फूत्का[illegible] प्रवेशयेत् । कथम् । नाड्या कारणभूतया । किंभ[illegible] षडंगुलानि यस्याः सा षडंगुला । द्वे मुखे यस्[illegible] द्विमुखा । षडंगुला चाऽसौ द्विमुखा च ष[illegible] द्विमुखा तया । तथा भेषजगर्भया त्रिकट्वादिचू[illegible] तया । स हि चूर्णो भूरितरं बहुतरं दोषं चूर्[illegible] पकर्षति निर्हरति । यथा कल्कक्काथादयः । [illegible] स्माद्विरेचनाख्योऽयमित्यर्थः ॥ ११ ॥

प०—तं चूर्णं मुखवायुना फूत्कृत्य नासायां प्र[illegible] नाड्या द्विमुखया षडङ्गुलया तथा भेषजग[illegible] द्वे मुखे यस्याः सा द्विमुखा । भेषजं गर्भे[illegible] यस्याः सा भेषजगर्भा तया भेषजगर्भया। स [illegible] द् ध्मानाख्यो नस्यविशेषश्चूर्णाद्भूरितरं दोषं [illegible] ख्यमपकर्षति च अपसारयति ॥ ११ ॥

हे०—प्रधमनविधिमाह—युंज्यादिति । प्रधमनस्[illegible] दोषहरत्वे युक्तिमाह—स हीति । चूर्णं हि द्रवग्राहित[illegible] दोषापकर्षणं मर्शादिमानज्ञानार्थम् ॥ ११ ॥

अधुना मर्शस्नेहस्य परिमाणमधिकृत्याह—

**प्रदेशिन्यंगुलीपर्वद्वयान्मग्नसमुद्धृतात् ।**
**यावत्पतत्यसौ बिंदुर्दशाष्टौ षट् क्रमेण ते**
**मर्शस्योत्कृष्टमध्योनामात्रास्ता एव च क्र[illegible]**
**बिंदुद्वयोनाः कल्कादेः ॥ १२ ॥**

स०—प्रदेशिन्यंगुष्ठसमीपजांगुली तस्याः तस्मात् । किंभूतात् । पूर्वं मग्नं पश्चात्स[illegible]

तस्मान्मग्नसमुद्धृतात् तर्जनीपर्वद्वयाद्यावत्परिमाणं पतत्यसौ बिंदुरुच्यत इति शेषः । ते बिंदवो यथासंख्यं मर्शस्य दशोत्कृष्टा मात्रा । अष्टौ मध्यमा मात्रा । षट् कनिष्ठा मात्रा । ता एव क्रमान्मात्रा बिंदुद्वयेनोनाः कल्कस्वरसादेः । तेनाष्टौ बिंदव उत्तमा मात्रा षण्मध्यमा चत्वारः कनिष्ठेत्यवतिष्ठते । यावदिति यत्परिमाणमस्येति यत्तदेतेभ्यः परिमाणे वतुप् । आ सर्वनाम्न इत्याकारादेशः ॥ १२ ॥

**प०—प्रदेशिन्यङ्गुष्ठसमीपे या अङ्गुली तस्याः पर्वद्वये तस्मात् प्रदेशिन्यङ्गुलीपर्वद्वयादादौ मग्नात् पश्चात्समुद्धृतात् स्नेहादिद्रवद्रव्यबुडितौ क्षिप्राद्यावत्पतति । असौ बिन्दुरित्युच्यते । ये बिन्दवो यथाक्रमं दशप्रधाना मात्रा मध्यमा । अष्टौ बिन्दवः षट्बिन्दवः ऊना मात्रा । एतावन्मात्रयोरुत्कृष्टमध्योनक्रमेण बिन्दुद्वयेनोना बिन्दुद्वयहीनास्सद्यःकल्कादेः क्वाथसरसनादेर्नस्यं बोद्धव्यम् । तेनाष्टौ बिन्दव उत्कृष्टा मात्रा, षट् बिन्दवो मध्यमा मात्रा, चत्वारो बिन्दवो हीनाः कल्कादेः१२**

हे०—बिंदुमानमाह—प्रदेशिनीति । यावत्पतति तावद्बिंदुः न प्रथमपतितमेव । मर्शस्य मात्रात्रयमाह— दशाष्टाविति । ते बिंदवः । अवपीडशिरोविरेचनयोर्मात्रात्रयमाह—ता एवेति । बिंदुद्वयोना अष्टषट्चतुर्बिंदुकाः ॥ १२ ॥

अधुना येषां नस्यमयुक्तं तानाह—

**योजयेन्न तु नावनम् ।**
**तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ॥**
**भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम् ।**
**नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ॥**
**शुद्धानां दत्तबस्तीनां तथाऽनार्तवदुर्दिने ।**
**अन्यत्राऽत्ययिकाद्व्याधेः ॥ १३ ॥**

स०—तोयादि पीतं यैस्तेषाम् । आहिताग्न्यादित्वात्परनिपातः । तथा पातुमिच्छतां नावनं नस्यं नैव योजयेत् । तोयादिपीतानां पातुमिच्छतां च प्रयोजितं नस्यं नासास्यदोषदेहतिमिरशिरोरोगान् कुर्यात् । भुक्तभक्तस्य च दोषा ऊर्ध्वस्रोतांस्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेयुः । शिरःस्नातस्य शिरोऽक्षिकर्णशूलकंठरोगपीनसहनुमन्यास्तंभार्दितशिरःकंपान् । स्नातुकामस्य च मूर्ध्नि स्तिमितो दोषो जाड्यारुचिपीनसान् । स्रुतरक्तस्य च क्षामतामरुचिमग्निसदनं च । नवप्रतिश्यायस्य स्रोतोरोधाद् दुष्टप्रतिश्यायक्रिमिकंडूविचर्चिकारोगान् । मलिनोद्गारितादिवेगार्तानां भृशतरं वेगविधारणजान् विकारान् । सूतिकायाः स्रुतरक्तदोषान् । श्वासकासिनोर्व्याधिविवृद्धिम् । शुद्धानां कृतवमनविरेचनानां श्वासकासरुचिक्षयहानिशिरोगौरवक्रिमिकंडूदोषान् । दत्तबस्तीनां विवृतस्रोतस्तयाऽतिव्याप्त्या श्वासकासादीन् । तथाऽनार्तवदुर्दिनेऽपि सहसैव शैत्याच्छिरोरुक्वेपथुस्तैमित्यतान्द्रा-कंडूपाकमन्यास्तंभकंठरोगप्रतिश्यायारोचकाः । एषु च नस्यदोषेषु जातेषु यथास्वमायतनं दोषोद्रेकं चाऽवेक्ष्य स्नेहस्वेदशिरोविरेकवक्त्रलेपसेकतीक्ष्णाञ्जनधूमगंडूषादीनि यथास्वं कुर्यात् । संग्रहे चोक्तम् । गर्भिण्या भक्तद्वेषज्वरमूर्च्छाऽर्दितभेदकाः स्युः । अपत्यं च व्यंगं विकलेंद्रियमुन्मादापस्मारयुक्तं वा स्यात् । विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छुभिः शृतं पयः पिबेत् । बलाविदारीकुमुदमेदाभिर्वैभिरेव च शृतं हविर्वातहरसिद्धश्च स्नेहः शिरोबस्तौ कर्णपूरणे च योज्यः । सर्वं च बृंहणमन्नपानमिति । तोयपीतादिषु सदैव किं न योज्यमित्याह । अन्यत्रेत्यादि । आत्ययिके व्याधौ नस्यं योज्यमेव ॥ १३ ॥

**प०—नावनं नस्यं न योजयेत् न दद्यात् तोयमद्यगरस्नेहपीतानां दत्तबस्तिपर्यन्तानामनार्तवदुर्दिने वर्षाकालं विमुच्य योऽन्यकालस्तस्मिन् दुर्दिनं शीतवातवर्षान्तरालदिनम् । तदनार्तवदुर्दिनं किमेषां सर्वथा तत्प्रयोजयेदित्याशंक्येदमाह—आत्ययिकाद्व्याधेरन्यत्रात्ययिकव्याधिं वर्जयित्वा न योजयेदिति बोद्धव्यम् । आत्ययिके पुनर्व्याधौ तोयमद्यगरपीतानामपि योजयेदेव नस्यम् ॥ १३ ॥**

हे०—पीततोयादीनां नस्यं निषेधति—योजयेदिति पातुमिच्छतां तोयादीन्येव । भुक्तभक्तो भुक्तवान्, नवपीनसः अपक्वपीनसः, वेगार्त उत्पन्नविण्मूत्रादिवेगः, अना

र्तवदुर्दिने अवार्षिकाभ्रे, आत्ययिकाद्व्याधेरन्यत्र निषेधः । संग्रहे तु तत्र भुक्तभक्तस्य नस्येनेरितो दोषः ऊर्ध्वानि स्रोतांस्यावर्त्य छर्दिश्वासकासप्रतिश्यायान् जनयेत् । स्नेहादिपीतपातुकामानामक्षिनासास्यस्पंदोपदेहतिमिरशिरोगदान्, शिरःस्नातस्य शिरोऽक्षिकर्णशूलकंठरोगपीनसहनुमन्यास्तंभार्दितशिरःकंपान्, स्नातुकामस्य मूर्द्धस्तैमित्यजाड्यारुचिपीनसान्, स्रुतरक्तस्य क्षामतामरुचिमग्निसादं च, मूत्रितोच्चारितयोर्मूर्द्धगतरं वेगधारणजान् विकारान्, अभिहतस्य तीव्रतरां रुजं, कृतवमनादीनां श्वासकासस्वरेंद्रियहानिशिरोरोगगौरवकंडूक्रमिदोषान्, गर्भिण्या भक्तद्वेषज्वरमूर्च्छार्धावभेदकाः स्युः । अपत्यं च व्यंगविकलेंद्रियमुन्मादापस्मारयुक्तं वा । सूतिकायाः स्रुतरक्तोक्तान् दोषान्, नवप्रतिश्यायस्य स्रोतोरोधाद् दुष्टप्रतिश्यायकेशशातक्रिमिकंडूविचर्चिकाः, श्वासकासिनोर्वातवृद्धिः । अकालदुर्दिने सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रकंडूपाकमन्यास्तंभकंठरोगप्रतिश्यायारूंषिकाः । तेषु यथास्वमायतनं दोषोद्रेकं चापेक्ष्य स्नेहस्वेदशिरोवक्त्रलेपसेकतीक्ष्णावपीडधूमगंडूषादीनाचरेत् । विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छूभिः शृतं पयः पिबेत् । बलाविदार्यंशुमतीमेदाभिर्वा । एभिरेव च शृतं हविर्वातहरं सिद्धश्च स्नेहः शिरोवस्तौ कर्णपूरणे च योज्यः। सर्वं च बृंहणमन्नपानं भुक्तभक्तादिष्वपि चात्ययिकव्याध्यातुरमपेक्षेतेति ॥ १३ ॥

सांप्रतं यत्र काले यत्र च दोषे नस्यं प्रयोज्यं तद्दर्शनार्थमाह—

**अथ नस्यं प्रयोजयेत् ।**
**प्रातः श्लेष्मणि मध्याह्ने पित्ते सायंनिशोश्चले ॥**

स०—श्लेष्मरोगे प्रातर्नस्यं प्रयोजयेत् । पित्तरोगेषु मध्याह्ने । वातेऽपराह्ने रात्रौ च । कारणे कार्योपचारात्कफरोगः श्लेष्मशब्देनोक्तः । तेन श्लेष्मरोगादिषु प्रातर्नस्यं योज्यम् । संग्रहे विशेषः। लालास्रावसुप्तिप्रलापदंतकटकटायनक्रथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्राविति ॥ १४ ॥

प०—अथशब्दोऽत्र मङ्गलाभिधायी बोद्धव्यः । प्रातः श्लेष्मणि कफजाते विकारे प्रत्यूषसि श्लेष्मकाले नस्यं योजयेत् । पित्ते कुपिते वातादुत्थे वा विकारे मध्याह्ने पित्तवेलायां नस्यं योजयेत् । सायमपराह्ने निशि च रात्रौ वायौ कुपिते तदुत्थे विकारे नस्यं योजयेत् ॥ १४ ॥

हे०—विरेचननस्यस्य कालमाह-अथेति । चले वायौ संग्रहे तु लालास्रावसुप्तप्रलापदंतकटकटायनक्रथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासोन्निद्रेषु रात्राविति ॥ १४ ॥

**स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसंतयोः ।**
**शीते मध्यंदिने ग्रीष्मे सायं वर्षासु सातपे ॥**

स०—तुरवधारणे । स्वस्थवृत्ते शरदि वसंते च पूर्वाह्णे एव नस्यं योज्यम् । शीते हेमंतशिशिरलक्षणे मध्याह्ने । ग्रीष्मे सायमपराह्णे । वर्षासु सातपे दृश्यमाने रवौ वासरे प्रयोजयेत् ॥ १५ ॥

प०—स्वस्थवृत्ते स्वस्थवृत्ताधिके विकारे नस्यं योजयेत् पूर्वाह्णे अह्नः पूर्वभागे । कदा शरत्काले वसन्ते च । स्वस्थवृत्ते शीतकाले शीतसामान्याच्छिशिरे हेमन्ते च मध्यन्दिने नस्यं योजयेत् । तथा ग्रीष्मे काले सायमपराह्णे स्वस्थवृत्ते नस्यं योजयेत् । केषाम् । वर्षासु सातपे दिवसे नस्यं योजयेत् । स्वस्थवृत्त एव ॥ १५ ॥

हे०—स्वस्थं चतुर्भेदेन पूर्वाह्णादिषु सातप इति वर्षासु यदैवातपस्तदैव । संग्रहे तु पञ्चकर्माण्याचरतो बस्तिकर्मोत्तरकालमेवेति ॥ १५ ॥

अधुना दोषापेक्षया नस्यकालनियममाह—

**वाताभिभूते शिरसि हिध्मायामपतानके ।**
**मन्यास्तंभे स्वरभ्रंशे सायंप्रातर्दिनेदिने ।**
**एकाहांतरमन्यत्र सप्ताहं च तदाचरेत् ॥ १६ ॥**

स०—वाताभिभूतमूर्धादिषु स्वरभ्रंशांतेषु सायंप्रातः पूर्वाह्णाऽपराह्णयोः प्रतिदिनं च नैकाहांतरितम् । अन्यत्र वाताभिभूतमूर्धादिभ्योऽन्यस्मिन् रोगे एकाहांतरं सप्ताहं च नस्यमाचरेत् । सप्ताहादूर्ध्वं नस्यं न विदध्यादित्यर्थः ॥ १६ ॥

प०—वाताभिभूते वाताक्रान्ते शिरसि मस्तके तथा हिध्मायां रोगे तथाऽपतानकाख्ये वातव्याधौ तथा मन्यास्तम्भे स्वरभ्रंशे स्वरविकृतौ सायं प्रातः

पूर्वाह्णापराह्णयोर्दिनेदिने प्रतिदिनं नस्यं योजयेत्। अन्यत्र वातादिभूतशिरसीत्यादिवर्जं न प्रतिदिनं नस्यं योजयेत् ॥ १६ ॥

हे०—वाताभिभूतशिरस्कादिषु पञ्चसु प्रत्यहं प्रातः सायं च। अन्येषु तु रोगेष्वेकाहांतरं स्वे स्वे दोषकाले। नस्यावृत्तेरवधिमाह—सप्ताहमिति । तन्नस्यं संग्रहे तु पञ्च सप्त नव वा दिनानि दद्यादासम्यग्योगादिति ॥१६॥

इदानीं यादृशस्य पुरुषस्य यथास्थितस्य नस्यं देयं तदाह—

**स्निग्धस्विन्नोत्तमांगस्य प्राक्कृतावश्यकस्य च।**
**निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः १७॥**

स०—पूर्वं स्निग्धं पश्चात्स्विन्नमुत्तमांगं शिरो यस्य तस्य तथा प्राक् पूर्वं कृतमावश्यकमवश्यकरणीयमुच्चारमूत्रोत्सर्गदंतधावनादिकं येन स प्राक्कृतावश्यकस्तस्य तथा निवातस्थाने शयनं यत्तत्र स्थितस्य सतो भूयो जत्रूर्ध्वं स्वेदयेत् ॥ १७ ॥

प०—अथ नस्यार्हस्य पुंसः पूर्वं स्निग्धं पश्चात् स्विन्नमुत्तमाङ्गं शिरो यस्य तस्य। तथा नस्ययोजनात्पूर्वं कृतमावश्यकं पुरीषाद्युत्सर्गलक्षणं येन तस्य तथा स्वास्तीर्णनिवातशयनस्थस्य जत्रुण ऊर्ध्वं तस्य स्वेदयेत् ॥ १७ ॥

हे०—नस्यविधिमाह—स्निग्धस्विन्नेति ॥ १७ ॥

**अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते।**
**किंचिदुन्नतपादस्य किंचिन्मूर्धनि नामिते॥**
**नासापुटं पिधायैकं पर्यायेण निषेचयेत्।**
**उष्णांबुतप्तं भैषज्यं प्रनाड्या पिचुनाऽथवा१८**

स०—अथाऽनंतरमुत्तानस्पष्टस्थितशरीरस्य सतो हस्तचरणे प्रसारिते तथा किंचिदुन्नतचरणस्य किंचिच्छिरसि नामिते सति नासापुटमेकं पिधाय स्थगयित्वा पर्यायेण नतु युगपद्भैषज्यं निषेचयेत्। कीदृशमुष्णांबुतप्तमुष्णोदकोष्णीकृतम्। केन परिषेचयेत्। प्रनाड्याऽथवा पिचुना कार्पासादिमयेन ॥ १८ ॥

प०—अथ स्वेदानन्तरमुत्तानर्जुदेहस्य स्पष्टं कृत्वा स्थितस्याकुटिलशरीरस्य पाणिपादे प्रसारिते सति। पाणी च पादौ च पाणिपादम्। तस्मिन् प्रसारिते सति नस्यं योजयेत्। तथा किञ्चिदीषदुन्नतपादस्य न परं खट्वादिकं तथा कर्तव्यं येनोन्नतौ पादौ सम्पद्येते। एवं किञ्चिन्मूर्धनि नामिते सति नासापुटमेकं पिधाय स्थगयित्वा द्वितीये पुटे नस्यप्रवृत्ते नासापुटे स्थिते तस्मिन्नस्यं योजयेत्। पुनर्निपिकं नस्यं निषेचयेत्। नासापुटं निधाय निपक्वनस्यं नासापुटे नस्यं निषेचयेत्। एवं पर्यायेण नस्यं निषेचयेत्। प्रणाल्या नाडीयन्त्रणाथवा पिचुना कार्पासादिमयेन ॥ १८ ॥

हे०—आवश्यकदन्तधावनादि पर्यायेण न युगपन्नासापुटद्वये प्रनाड्या प्रणालिकया ॥ १८ ॥

**दत्ते पादतलस्कंधहस्तकर्णादि मर्दयेत् १९ ॥**

स०—दत्ते नस्ये सति पादतलस्कंधहस्तकर्णादि मर्दयेत्। आदिशब्देन ग्रीवाललाटादिपरिग्रहः। सुश्रुते चाऽभ्यधायि। वस्त्रावच्छादितनेत्राय वामहस्तप्रदेशिन्योन्नामितनासिकाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णांबुप्रतप्तं रजतादिशुक्तीनामन्यतमस्थमनवच्छिन्नधारमासिंचेदिति ॥ १९ ॥

प०—भैषज्ये दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत्। पादतलादौ संवाहनं कुर्यात् ॥ १९ ॥

**शनैरुच्छिद्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः।**

स०—ततो मर्दनानंतरं शनैरुच्छिद्य पार्श्वयोरुभयोर्निष्ठीवेत् अनभ्यवहरन्। कफसहितमभ्यवहरन्नग्निमवसादयेद्दोषं च संवर्धयेत्। एकपार्श्वनिष्ठीवने न सर्वाः शिरा भेषजेन सम्यग्व्याप्यंते ॥ २० ॥

प०—अनन्तरं शनैः शनैरुच्छिद्योर्ध्वं भैषज्यं नीत्वा निष्ठीवेत्। श्लेष्मसिंहानकं युग्यादुभयोः पार्श्वयोरनन्तरं दक्षिणनासापुटप्रणालीपर्धा वामपार्श्वे निष्ठीवेत् ॥ २० ॥

हे०—उच्छिद्य नासायां श्वासम् ऊर्ध्वं नीत्वा उभयोः पार्श्वयोर्निष्ठीवेत् यावद्भेषजक्षयः ॥ २० ॥

**आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् २१ ॥**

स०-एवमनेन क्रमेणाऽऽभेषजक्षयाद् द्विस्त्रिर्वा नस्यं कुर्यात्। नतु नस्यमात्रा सकृदेव प्रक्षेप्तव्या हीनमात्र

चौषधं न देयम्। तद्धि दोषानुत्क्लेश्यानिर्हरद्गौरवारुचिकासप्रसेकपीनसच्छर्दिकंठरोगान् कुर्यात्। अधिकमतियोगाद्दोषान् कुर्यात्। सकृदेव सर्वं दत्तमुच्छिद्यमानं शिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोधं च कुर्यात्। अत्युष्णं दाहपाकज्वररक्तांगमूर्च्छाश्रमान्। अतिशीतं हीनदोषानेव। अत्युन्नतशिरसोऽसम्यक्प्रतिपद्यमानं तानेव हीनदोषान्। अत्यवनतशिरसो दूरगमनान्मूर्छाजाड्यज्वरान्। संकुचितगात्रस्य सम्यग्धमनीरप्राप्नुवद्दोषोत्क्लेशं कुर्यात् ॥ २१ ॥

प०—एवमनया रीत्या द्वौ वारौ त्रीन् वारान् अधोनस्यमाचरेत् ॥ २१ ॥

हे०—नस्ये पुटसंख्यामाह—एवमिति ॥ २१ ॥

यदि च नस्ये दीयमाने भेषजवेगादसात्म्येन संजातमूर्छायां प्रतीकारमाह—

**मूर्छायां शीततोयेन सिंचेत्परिहरन् शिरः २२।**

स०—मूर्छायां सत्यां शीतजलेन मूर्धवर्जं सिंचेत्। संग्रहेऽप्युक्तम्। नच नस्ये निषिच्यमाने कोपहासव्याहारस्यंदनोच्छिदनान्याचरेत्। तथाहि शिरोरुक्प्रतिश्यायकासतिमिरखलितपलितव्यंगतिलकालकमुखदूषकानां संभव इति ॥ २२ ॥

प०—नस्ये दीयमाने मूर्च्छायामुपजातायां भेषजवेगादशाम्यतया वा शिरः परिहरन् शिरो वर्जयन् शीततोयेन शीताम्भसा सिञ्चेत् परिषेचयेत् ॥ २२ ॥

हे०—नस्यमूर्च्छायां प्रतीकारमाह—मूर्च्छायामिति॥ २२ ॥

**स्नेहं विरेचनस्यांते दद्याद्दोषाद्यपेक्षया ॥ २३ ॥**

स०—विरेचनस्यावसाने देशदोषसात्म्याद्यपेक्षया स्नेहमनुसंन्यसेत्। तंत्रांतरे चोक्तम्। अथ नस्यार्हं नरमव्याहतवेगं धौतांतर्बहिर्मुखमवस्थितशिरसं प्रायोगिकधूमपानविशुद्धस्रोतसं स्वास्तीर्णनिवातशयनस्थमुत्तानशीर्षमीषदुन्नतपादं प्रसारितचरणं च जत्रूर्ध्वं पाणितापेन पुनः पुनः स्वेदयेदिति ॥ २३ ॥

प०—वैरेचनिके नस्यस्यान्ते च सति स्नेहं न दद्यात् न रूक्षम्। तच्च दोषाद्यपेक्षया ज्ञात्वा दो दीन् यौगिकं तैलाद्यन्यतमं योजयेत् ॥ २३ ॥

हे०—विरेचनस्यानन्तरं तीक्ष्णत्वदोषप रिहारार्थं स्ने नस्यमंगत्वेनाह—स्नेहमिति ॥ २३ ॥

**नस्यांते वाक्शतं तिष्ठेदुत्तानः ॥ २४ ॥**

स०—नस्यावसाने वाक्शतं मात्राशतमुत्तानो नि मासेवमानस्तिष्ठेत् ॥ २४ ॥

प०—प्रपातनस्ये पुमान् उत्तानो वाक् मात्राशतं तिष्ठेत् ॥ २४ ॥

हे०—निवृत्तनस्यस्योत्तानशयनमाह—नस्यान्त इ वाक्शतं गुर्वक्षरोच्चारणपर्याप्तं कालम् ॥ २४ ॥

**धारयेत्ततः**
**धूमं पीत्वा कवोष्णांबुकवलान् कंठशुद्धये २**

स०—ततो वाक्शतावस्थानादनंतरमीषदुष्णज कवलान् धारयेत्। किमर्थम्। कंठशुद्धये उक्ति ष्टदोषशांतये। किं कृत्वा। धूमं विरेचनाद्यन्य यथायोगं पीत्वा ततोऽस्य स्नेहोक्तविधिमाचार दिशेत् ॥ २५ ॥

प०—ततोऽनन्तरं गैरिकधूमं पीत्वा किञ्चि ष्णमम्बुकवलान् कण्ठशुद्ध्यर्थं धारयेत् ॥ २५

हे०—उत्तानशयनानन्तरं धूमगण्डूषावाह—धारयेदि संग्रहे तु अथ नस्यार्हं नरमव्याहतवेगं धौतांतर्बहि नातिक्षुधितं प्रायोगिकधूमपानविशुद्धस्रोतसं ततः क रजतताम्राद्यन्यतमशुक्तिस्थितं प्रदेयौषधत्रिभागं वामहर गुष्ठकनिष्ठिकाग्रमाकृष्य नयनप्रच्छादनं चतुर्गुणं मध्यमया नासाग्रमुन्नमय्य प्रदेशिन्यनामिकाभ्यां चै नासापुटं पर्यायेण पिधायेतरस्मिन्नपि दक्षिणहस्तेन प्र डया पिचुना वा अनवच्छिन्नधारमासिञ्चेत्। न च हं धिकं सकृदेव सर्वमत्युष्णशीतमत्युन्नतावनताशिरासि चितगात्रीयं वा देशं, तत्र हीनं दोषमुत्क्लेश्यानिर्ह रवारुचिकासप्रसेकपीनसच्छर्दिकण्ठरोगान् कुर्यात्। अ कमतियोगदोषान्, सकृदेव सर्वमुत्क्लेहनाशिरोरोगप्रति यघ्राणक्लेदानुच्छ्वासोपरोधं च। अत्युष्णं-दाहपाकज्वरर गमशिरोरुग्दृष्टिदौर्बल्यमूर्च्छाभ्रमान्। अतिशीतं—हीन

षान्, अत्युन्नतशिरसोऽपि सम्यक्छिरोऽप्रतिपद्यमानं तानेव। अत्यवनतशिरसोऽतिदूरगमनान्मूर्च्छाजाड्यकण्डूदाहज्वरान्, संकुचितगात्रस्य सम्यक्धमनीव्याप्नुवद्दोषोत्क्लेशं वेदनां स्तम्भं वा। न च नस्ये निषिच्यमाने कोपहाराव्याहारस्पन्दनोच्छिन्दनान्याचरेत्। तथाहि शिरोरुक्प्रतिश्यायकासतिमिरखलतिपलितव्यंगतिलकालकमुखदूषकाणां सम्भवः। अनभ्यवहरंश्च वामदक्षिणपार्श्वयोरौषधं निष्ठीवेत्। सकफं हि तदभ्यवहृतमग्निमवसादयेद्दोषं च संवर्द्धयेत्। एकपार्श्वनिष्ठीवनेन सर्वाः शिराः भेषजेन सम्यग्व्याप्यन्ते। पुनःपुनश्चैनं स्वेदयेत्। अथास्य स्नेहोक्तमाचारमादिशेदतिद्रवपानं च वर्जयेदिति ॥ २५ ॥

**सम्यक्स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षपाटवम्।**

स०—सम्यक्स्निग्धे शिरसि सुखोच्छ्वासादयः स्युः। संग्रहे चोक्तम्। सम्यक्स्निग्धे मूर्ध्नि विरिक्ते वा सुखोच्छ्वासनिःश्वाससुखसुप्तबोधाक्षिपाटवानि स्युः ॥ २६ ॥

प०—तत्र सम्यक्स्निग्धे मूर्धनि सुखेनोच्छ्वासनपूर्वं श्वासप्रवृत्तिः। तथा सुखेन स्वप्नतया प्रबोधो निद्राया निवृत्तिः सुखेन वा। अक्षपाटवमिन्द्रियाणां विशुद्धिः ॥ २६ ॥

हे०—स्नेहनस्यस्य सम्यग्योगमाह—सम्यक्स्निग्ध इति। स्वप्नबोधौ सुखेन स्नेहनस्यस्य ॥ २६ ॥

**रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्धशून्यता।**

स०—रूक्षे तु शिरस्यक्षिस्तब्धता तथा नासायामास्ये च शोषो मूर्धशून्यता च स्यात् ॥ २७ ॥

प०—रूक्षे शिरसि स्नेहनस्यायोगे सति अक्ष्णोः स्तब्धता स्तब्धत्वं जायते। नासायां तथास्ये मुखे शोषः। मूर्धनि शून्यता रिक्तत्वम् ॥ २७ ॥

हे०—हीनयोगमाह—रूक्ष इति ॥ २७ ॥

**स्निग्धेऽतिकंडूर्गुरुता प्रसेकारुचिपीनसाः २८।**

स०—अतिस्निग्धे कंड्वादयः स्युः ॥ २८ ॥

प०—अतिस्निग्धे मूर्धनि स्नेहनस्यातियोगे अत्यर्थं कण्डूर्जायते। तथा गुरुता गुरुत्वं शिरसि तथा प्रसेकः श्लेष्मणो निरसनम्। अरुचिरन्नानभिनन्दिता। पीनसः प्रतिश्यायः ॥ २८ ॥

हे०--स्नेहननस्यस्यातियोगमाह-स्निग्ध इति ॥ २८ ॥

**सुविरिक्तेऽक्षिलघुता स्वरवक्त्रविशुद्धयः ॥ २९॥**

स०—सुविरिक्ते सम्यग्विरिक्तेऽक्षिलघुतादयः स्युः २९

प०—सुविरिक्ते सम्यग्विरिक्ते मूर्धन्यक्षिलघुता लाघवम्। वक्त्रस्वरयोर्विशुद्धिः स्फुटत्वम् ॥ २९ ॥

हे०--विरेचननस्यस्य सम्यग्योगमाह--सुविरिक्त इति ॥ २९ ॥

**दुर्विरिक्ते गदोद्रेकः क्षामताऽतिविरेचिते ३० ॥**

स०—दुर्विरिक्ते गदोद्रेको रोगस्याऽधिक्यमतिविरेचिते क्षामता कृशता स्यात् ॥ ३० ॥

प०—दुर्विरिक्ते तस्मिन् शिरसि गदस्योद्रेकः व्याधिविवृद्धिरयोगे सति जायते। अतिविरेचिते सति क्षामता शिरसो जायते। विरेचनस्य नस्यस्यातियोगे सति ॥ ३० ॥

हे०--विरेचननस्यस्य हीनयोगमाह--दुर्विरिक्त इति। विरेचननस्यस्यातियोगमाह--क्षामतेति ॥ ३० ॥

अधुना प्रतिमर्शस्य विषयं सूचयितुमाह—

**प्रतिमर्शः क्षतक्षामबालवृद्धसुखात्मसु।**
**प्रयोज्योऽकालवर्षेऽपि ॥ ३१ ॥**

स०—प्रतिमर्शः क्षतादिषु प्रयोज्यः। अकालवर्षेऽपि कार्यः ॥ ३१ ॥

प०—प्रतिमर्शो नस्यविशेषः क्षतक्षामादिषु प्रयोज्यः। तथाऽकालवर्षेऽकालदुर्दिनेऽपि क्षत उरःक्षतप्रभृतिक्षामो रूक्षान्नप्रायो रिक्तः। बाल आषोडशवर्षात्। वृद्धः सप्ततेरूर्ध्वम्। सुखात्मा सुमनाः ॥ ३१ ॥

हे०--प्रतिमर्शस्य विषयमाह--प्रतिमर्श इति। अकालवर्षेऽपि अनार्तवदुर्दिनेऽपि संग्रहे तु सुखात्मस्वदोषस्वपि भीरुष्विति ॥ ३१ ॥

**न त्विष्टो दुष्टपीनसे**
**मद्यपीतेऽबलश्रोत्रे कृमिदूषितमूर्धनि ॥**
**उत्क्लिष्टोत्क्लिष्टदोषे च ॥ ३२ ॥**

स०-दुष्टपीनसे तु न प्रयोज्यः। दुष्टपीनसो नासरोगेषु वक्ष्यमाणः। तथा मद्यपीते तथाऽबलश्रो

रुद्धश्रवणमार्गे तथा कृमिभिर्दूषितो मूर्धा यस्य तस्मिन् कृमिपीडितशिरसि तथोत्क्लिष्टो वृद्धिं गतस्तथोत्क्लिष्टः प्रचलो दोषो यस्य तस्मिंश्च प्रतिमर्शो न योज्यः ३२॥

प०—नत्विष्टो नाभिप्रेतः । दुष्टपीनसे दुष्टप्रतिश्याये मद्यपीते तस्मिन्नेव काले घनकाले पीतं येन तथाऽबले श्रोत्रे हीनं बलं श्रोत्रविषये यस्य तथा कृमिभिर्दूषितो मूर्धा यस्य तस्मिन्नेष्टः । तथोत्क्रुष्टदोषे उत्क्लिष्टदोषे बहुदोषे, उत्क्लिष्टदोषे प्रच्युतदोषे नेष्टः ॥ ३२ ॥

हे०—अधिदुष्टपीनसादीनां प्रतिमर्शं निषेधति—न त्विष्ट इति । अबलश्रोत्रे शब्दश्रवणासमर्थे उत्क्रुष्टदोषे उत्क्लिष्टदोषे च ॥ ३२ ॥

केन प्रकारेण न योज्य इत्याह—

**हीनमात्रतया हि सः ॥ ३३ ॥**

स०—हि यस्मात् हीनमात्रतया हीना मात्रा यस्य स हीनमात्रस्तस्य भावो हीनमात्रता तया यस्मादसौ प्रयुज्यते । एषां चोदीर्णदोषत्वात् तावता दोषोत्क्लेश एव भवति न शमः ॥ ३३ ॥

प०—तस्माद्धीनमात्रतया हीनमात्रत्वाद्यतोऽसौ मन्दात् प्रभृति मन्दो हीनमात्रो न प्रयोज्यः । तद्विषये तस्यासामर्थ्यात् ॥ ३३ ॥

हे०—हीनमानतया युक्तः स दोषनिर्हरणासमर्थत्वादेतेषु न योज्य इत्यर्थः ॥ ३३ ॥

**निशाहर्भुक्तवांताहःस्वप्नाध्वश्रमरेतसाम् ।**
**शिरोऽभ्यंजनगंडूषप्रस्रवांजनवर्चसाम् ।**
**दंतकाष्ठस्य हासस्य योज्योऽतेऽसौ द्विबिंदुकः ।**

स०—असौ प्रतिमर्शो द्विबिंदुको निशादीनां पंचदशानां कालानामंते प्रयोज्यः ॥ ३४ ॥

प०—प्रतिमर्शस्यैते पञ्चदश कालाः । स प्रतिमर्शो निशाभुक्तादीनामन्ते योज्यः । अस्य प्रतिमर्शो द्विबिन्दुकः बिन्दुद्वयप्रमाणः ॥ ३४ ॥

हे०—प्रतिमर्शस्य पञ्चदशकालानाह-निशाहरिति । अहःस्वप्नो दिवास्वप्नः, श्रमो व्यायामः, प्रस्रावो मूत्रं, द्विबिंदुको बिंदुद्वयमात्रः बिंदुर्वा येन चोत्क्लेशो नानुत्क्लिष्टस्य जायते "निष्ठ्युते यत्र वा स्नेहो न साक्षादुपलक्ष्यते" इति ॥ ३४ ॥

**पंचसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमा**
**दृग्बलं पंचसु ततो दंतदार्ढ्यं मरुच्छमः ३**

स०—तत्र निशाहर्भुक्तवांताहःस्वप्नाख्येषु कालेषु प्रतिमर्शे प्रयुक्ते स्रोतसां शुद्धिर्भवति । क्रमेणैव पठितेष्वध्वश्रममैथुनानां त्रयाणामंते प्र दत्ते सति श्रमनाशः स्यात् । उपलक्षणं चेदम् । प्रसादशिरोलाघवे अपि भवतः । एवं शिरोऽभ्यंजन पंचस्वंते प्रतिमर्शे योजिते सति दृष्टेर्बलं स्यात् । त नंतरं दंतकाष्ठहासयोरंते यथासंख्येन द्विजदृढत्वं शमश्च स्यात् ॥ ३५ ॥

प०—स पञ्चस्वाद्येष्वन्ते प्रयुक्तः स्रोतसां करोति । निशान्ते दिवसान्ते भुक्तान्ते वान्तान्ते स्वप्नान्ते स्रोतोविशुद्धिर्जायते । अध्वनः श्र शुक्रत्यागान्ते क्लमनाशः स्यात् । दृग्बलं पञ्चरि अभ्यङ्गान्तेऽञ्जनान्ते विडन्ते मूत्रान्ते गण्डू दृग्बलं दृष्टिप्रसादः । दन्तधावनान्ते दन्तदार्ढ्य हास्यान्ते मरुच्छमो वातशान्तिः ॥ ३५ ॥

हे०—उक्तकालानां फलमाह—पंचस्विति । पंचसु शांतादिषु स्रोतःशुद्धिः। त्रिषु अध्वश्रमरेतोऽन्तेषु क्लमन पञ्चसु शिरोऽभ्यंजनादिषु दृग्बलं, दंतधावनांतेषु दंतद हास्यांते वातोपशमः ॥ ३५ ॥

अधुनांऽजनस्य धूमादीनां च पुरुषविशेषे f करोति—

**न नस्यमूनसप्ताब्दे नाऽतीताऽशीतिवत्सरे ।**
**न चोनाऽष्टादशे धूमः कवलो नोनपंचमे ।**
**न शुद्धिरूनदशमे न चातिक्रांतसप्ततौ ॥३**

स०—ऊनसप्तवर्षे नस्यं न योज्यम् । तथाऽति ताशीतिवर्षे च नस्यं न प्रयोज्यम् । अपूर्णाऽष्ट वर्षे धूमो न प्रयोज्यः । कवलोऽपूर्णपंचवत्सरे प्रयोज्यः। ऊनदशमवर्षे शुद्धिर्वमनविरेकादिका न प्र ज्या । तथा अतीतसप्ततिवर्षे शुद्धिर्न योज्या ॥३

प०—न नस्यमूनसप्ताब्दे हीनसप्तवर्षेमन्त योज्यम् । तथातीताशीतिवत्सरे नस्यं न योज्य अतीताक्रान्तवत्सराणां वर्षाणामशीतिर्यस्य ता न्नरे नस्यं न शस्तम् । न चोनाष्टादशे नरे

शस्तः। ऊनपञ्चके कवलो न शस्तः । न शुद्धिरूनदशम इति। ऊनदशमे वर्षे न शुद्धिः शस्ता । इत्येष प्रतिषेधो विरेकविषय एव बोद्धव्यो न वमनविषयः। प्रायः क्षीरघृताशित्वात् बालानां श्लेष्मजा गदाः। सर्वव्याधिषु शस्यन्त इति वचनात्३६॥

हे०-वयोविशेषेण नस्यधूमकवलशोधनानि निषेधति-न नस्येति ॥ ३६ ॥

**आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत्।**
**मर्शवच्च गुणान् कुर्यात्स हि नित्योपसेवनात्।**
**न चाऽत्र यंत्रणा नाऽपि व्यापद्भ्यो मर्शवद्भयम्।**

स०-प्रतिमर्शः पुनर्बस्तिरिव शस्तो हितः। कथम्। आजन्ममरणं जन्ममरणे चावधिं कृत्वा प्रतिमर्शो हित इत्यर्थः। स च प्रतिमर्शो नित्योपसेवनात् संततमभ्यस्यमानो मर्श इव गुणान् सुखोच्छ्वासादीन् कुर्यात्। अत्र च प्रतिमर्शे यंत्रणोष्णोदकोपचारी स्यादित्यादिका नास्ति। न च व्यापद्भ्योऽक्षिस्तब्धता शोष इत्यादिभ्यो भयं मर्श इव अस्तीति। मर्शे इव मर्शवत्। सप्तम्यंताद्वतिः॥ ३७॥

प०-आजन्मप्रभृत्यूनवर्षे बाले यावज्जन्मावसानं तावत्प्रतिमर्शः शस्तो हितः। बस्तिवत्। यथा बस्तिराजन्ममरणं हितः तद्वत्प्रतिमर्शोऽपि। अत्र च प्रतिमर्शाख्ये नस्ये मर्शवन्न यन्त्रणा स्नेहविधानोक्ता आचारसेवा नापि मर्शवत्। प्रतिमर्शदाने व्यापद्भ्यो भयम्। यथा मर्शदानाद्व्यापद्भ्यो भयं नैव तथा न प्रतिमर्शात्॥ ३७॥

हे०-प्रतिमर्शस्य सुखसेव्यत्वमाह-आजन्मेति॥३७॥

**तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते।**
**शिरसः श्लेष्मधामत्वात्स्नेहाः स्वस्थस्य नेतरे॥**

स०-तैलमेव नित्याभ्यासेन प्रतिमर्शन्यायेन नस्यार्थे श्रेष्ठं भवति। कुतो हेतोर्मूर्ध्नः कफस्थानत्वात् न चापरे स्नेहास्तेषां श्लेष्मलत्वादिति भावः॥ ३८॥

प०-स्वस्थवृत्ते तैलमेव नस्यार्हस्य शस्यते। ननु स्वस्थस्येतरे स्नेहा घृतादयः॥ ३८॥

हे०-नस्ये तैलमेवोचितमित्याह-तैलमेवेति॥ ३८॥

**आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता।**
**मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि॥**
**को मर्शं सपरीहारं सापदं च भजेत्ततः।**
**अच्छपानविकाराख्यौ कुटीवातातपस्थिती।**
**अन्वासमात्राबस्ती च तद्वदेव च निर्दिशेत्॥४०॥**

स०-आशुकारी मर्शश्चिरकारी तु प्रतिमर्शः। गुणोत्कर्षत्वयुक्तो मर्शो गुणाप्रकृष्टता[illegible] प्रतिमर्श इत्यनयोर्भेदः। यदि च मर्शे प्रतिमर्शे न विशेषो [illegible] स्यात्तदा मर्शं सपरीहारं सव्यापदं [illegible] न कश्चिद्भजेदित्यर्थः। प्रतिमर्श[illegible]ख्यौ स्नेहौ शीघ्रकारित्वादिना विशेषेण निर्दिशेत्। तथा कुटीप्रवेशस्थित्या यद्रसायनमुपयुज्यते [illegible] तपाद्यपरिहारस्थित्या रसायनं क्रियते [illegible] तथैव विशेषेण निर्दिशेत्। [illegible] तावप्येवं चिरकारिशीघ्रकारित्वादिगुणैर्निर्दिशेत्॥ ३९॥

प०-इत्युक्तं सङ्ग्रहे। [illegible] दानीतामिति तस्याप्यत्र व्याख्या क्रियते। [illegible] मर्शयोर्यदि विशेषोऽयं न स्यात् [illegible] सापदं च मर्शमातुरस्य वदेत् न प्रतिमर्शम्। [illegible] विशेषोऽनयोरित्याह-आशुकृत्त्वं तथा चिरकारि[illegible] गुणानामुत्कर्षापकर्षता यथासंख्येन मर्शप्रतिम[illegible]योर्यस्मादस्ति। तत्र मर्शः स्नेहादिकार्यमाकरोति। तथा गुणानामुत्कर्षोऽस्यैव। प्रतिम[illegible] पुनः स्नेहादिकार्यं चिरेण सम्पादयति। [illegible] गुणानां चास्य न्यूनता। एवं विशेषमाश्रित्य म[illegible] सपरिहारोऽपि तथा व्यापद्युक्तोऽपि निर्दिष्टः एवं प्रसङ्गेनान्यत्राप्युच्यते। अच्छपानः स्ने[illegible] व्यापद्युक्तः। तथा सपरिहारो विचारणाख्यः पुनः स्नेहो निष्परिहारो निर्व्यापन्नः। नचात्र[illegible] पायः पुनरुक्तः। आशु कार्यकरणात् तथा गुणानामुत्कर्षात् तथा कुटीस्थित्या कुटीप्रवेशेन रसायनस्योपसेवा तथा वातातपस्थितिः। वातात[illegible] विधानेन रसायनस्य सेवा एवं तयोर्यदि विशेषो स्यात् को वदेत् कुटीस्थितं सापदं सपरिहारम् यावता कुटीस्थितेराशुकारित्वं गुणोत्कर्षश्च वात[illegible] तपस्थितेश्चिरकारित्वम्। तथा गुणानामपकृष्ट[illegible] इत्येवं विशेषो अन्वासमात्राबस्ती तेन तुल्यं [illegible]

ादिशेत् कथयेत् । येनान्वासनबस्तेर्गुणोत्कर्षोऽस्ति थाशुकारित्वम् । मात्राबस्तेर्गुणानामपकर्षश्चिर- रिता च। एवमनयोर्विशेषमन्विष्यान्वासनबस्तिः रिहारः सापत्कोऽप्युक्तो न मात्राबस्तिः । एवं ाफलत्वादनयोरिति ॥ ३९ ॥

इदानीमणुतैलं निर्दिदिक्षुराह—

**वंतीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं**
**र्वीत्वङ्मधुकप्लवागुरुवरापुंड्राह्वबिल्वोत्पलम् ।**
**वन्यौ सुरभिः स्थिरे कृमिहरं पत्रं त्रुटिं रेणुकं**
**जल्कं कमलाह्वयं शतगुणे दिव्येऽम्भसि क्वाथ-**
**[ ॥**

**तैलाद्रसं दशगुणं परिशेष्य तेन**
**तैलं पचेच्च सलिलेन दशैव वारान् ।**
**पाके क्षिपेच्च दशमे सममाजदुग्धं**
**नस्यं महागुणमुशंत्यणुतैलमेतत् ४० ॥**

स०—जीवंतीत्यादि । जीवंत्यादीनि द्रव्याणि ये जले क्वाथयेत् । गोपी सारिवा । प्लवं गोपाल- नाख्यम् । पुंड्राह्वं पौण्डरीकम् । धावन्यौ कंटकारि- महोटिकाख्ये । सुरभिः सल्लकी । स्थिरे शालिपर्णी- श्निपर्ण्यौ । कृमिहरं विडंगम् । अत्र तैलसमानि याणि ग्राह्याणीति वैद्यव्यवहारः। आकाशादेः पटा- भिर्गृहीतं जलं दिव्यमुच्यते । तत्तैलाच्छतगुणं ीत्वा तावत्क्वाथयेत् । यावद्दशगुणो रसस्तैला- ात् । तेन क्वाथेन च तैलं दशवारान्पचेत् । मे च पाके तैलसममजाक्षीरं क्षिपेत् । ततः ः पचेत् । इति तत्तैलं महागुणमणुतैलसंज्ञं कथयंति। गुषु तैलमणुतैलम् । अणूनींद्रियस्रोतांसि प्रविशा- त्यर्थः ॥ ४० ॥

प०—अणुतैलं निर्दिदिक्षुराह—जलदं मुस्ता, सेव्य- ीरं, गोपी सारिवा, हिमं चन्दनम् । दार्वी- क् दारुहरिद्रात्वक् । मधुकं मधुयष्टी । प्लवं ैपेलवम् । वरा शतावरी । पुण्ड्राह्वं पुण्डरी- म् । उत्पलं नीलोत्पलम् । धावन्यौ द्वे कण्ट- ारी बृहती च । सुरभिः गन्धसुरा । स्थिरे शालिपर्णी, पृश्निपर्णी च । कृमिहरं विडङ्गम्। त्रं गन्धपत्रम् । त्रुटिः सूक्ष्मैला । हरेणुरेणुका किञ्जल्कं कमलात्पद्मकेसरम् । एतानि द्रव्याणि शतगुणे दिव्येऽम्भसि अंतरिक्षसलिले क्वाथयेत तावत् । यावत्तैलाद्रसः क्वाथो दशगुणः परि- शिष्टः सम्पद्यते । एवं तैलतो रसं क्वाथं दश- गुणं परिशेष्यानन्तरं तेन सलिलेन क्वाथेन तैलतो दशगुणेनावशिष्टेन तैलं पचेत् । दशवारान् । दशपर्यायान् न्यूनाधिकान् । तत एवकारोऽत्राव- धारणार्थः कृतः । तैलपाकनिवृत्तिस्तथा कर्तव्या यथा तेन क्वाथेन दशपाकं तत्तैलं सम्पद्यते क्वाथः सलिलपाकैर्दशभिः पृथक् पृथक् तैलं विप- चेदिति । यावद्दशमे पाके सममाजदुग्धं क्षिपे- त्तेन समं तुल्यभागः । जीवंतीत्यादीनां द्रव्याण सभागानां पलानि द्वात्रिंशत् । पानीयपलाना द्वात्रिंशच्छतानां क्वाथावशिष्टपलानां त्रीणि शतानि विंशत्यधिकानि । तस्य क्वाथस्य दश- मांशेन द्वात्रिंशत्पलपरिमाणेन तिलतैलस्य द्वात्रिं- शत्पलानि साधयेत् । दशमे जातपाके तैलतुल्य द्वात्रिंशत्पलानि अजाक्षीरस्य दद्यात् । एतच्च नस्यं तैलं महागुणं भूरिबलावहं मुनय उशन्ति कथयन्ति । अणूनां स्रोतसां शिरोभागानामन्तः प्रवेशसामर्थ्यात् । एतत्तैलमणुतैलं सिद्धार्थं नाम ४०

हे०—नस्यतैलेषु श्रेष्ठत्वादणुतैलमाह—जीवंतीति । जी- त्यादीनि शतगुणे जले निःक्वाथ्य जीवंत्याद्यपेक्षयैव दश- गुणं रसं परिशेष्य तैलात्तेनेति तैलाद्दशगुणेन सलिलेन दशवारं तैलं पचेत् । अर्थात्प्रतिवारं तैलसमः क्वाथः दशमे तु पाके तैलसममाजदुग्धे क्वाथं चावशिष्टं क्षिपेत् सेव्यमुशीरं,प्लवं क्षुद्रमुस्तं,धावन्यौ बृहतीद्वयं,सुरभिः रास्ना स्थिरे शालिपर्णीपृश्निपर्ण्यौ, कमलात्किंजल्कं पद्मकेसरम् अत्र जीवंत्यादीनामेव कल्कः । "यतः क्वाथस्ततः कल्कः केवलक्वाथभावितः " इति वचनात् । कल्कं विनैव पाक इत्यपरे । संग्रहे तु अणुतैलविधानं मंजिष्ठामधुकप्रपौंड- रीकजीवकर्षभकाकोलीद्वयपयस्यासारिवानंतानीलोत्पलांज- नरास्नाविडंगतंडुलमधुपर्णीश्रावणीमेदकाकनासासरलश्री- भद्रदारुचंदनैः सुपिष्टैरष्टगुणं षड्गुणेन पयसा तैलं विपचे- त् । घृतं वा पित्तोल्बणेषु दोषेषु।अथवा चंदनागुरुपद्मदार्वी त्वङ्मधुकबलैलाद्वयपद्मोत्पलपद्मकेशरप्रपौंडरीकविडंगोशी- रह्रीबेरबलात्वङ्मुस्तसारिवाबृहतीद्वयांशुमतीद्वयजीवन्तीदे- वदारुसुरभिशतावरीः शतगुणे दिव्येऽम्भसि दशभागाव- शिष्टं क्वाथयेत् । ततस्तस्य क्वाथस्य दशमांशेन समांश

तैलं साधयेत् । दशमे चात्र पाके तैलतुल्यमाजमपि पयो दद्यात् । एतदप्यणुतैलं पूर्वस्माद्विशेषेणेंद्रियदार्ढ्यकरं केश्यं त्वच्यं कण्ठ्यं प्रीणनं बृंहणं दोषत्रयघ्नं चेति तन्त्रांतरात् । " नस्यं विदध्याद्गुडनागरं वा ससैंधवां मागधिकामथोवा । घ्राणास्यमन्याहनुबाहुपार्श्वशिरोक्षिकण्ठश्रवणामयेषु " इति ॥ ४० ॥

**घनोन्नतप्रसन्नत्वक्स्कंधग्रीवाऽऽस्यवक्षसः ।**
**दृढेंद्रियास्त्व(स्त)पलिता भवेयुर्नस्यशीलिनः॥४१**

स०—नस्यशीलिनो निबिडोच्चतररमणीयत्वगादयः स्युः । त्वक् च स्कंधश्च ग्रीवा चाऽऽस्यं च वक्षश्च एतेषां समाहारः त्वक्स्कंधग्रीवास्यवक्षः । घनोन्नतप्रसन्नं त्वक्स्कंधग्रीवास्यवक्षो येषां ते घनोन्नतप्रसन्नत्वक्स्कंधग्रीवास्यवक्षसः । तथा पुष्टेंद्रियाः पलितवार्जेताश्च भवेयुः ॥ ४१ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुन्दराख्यायां विंशोऽध्यायः ॥२०॥

प०—त्वक्च स्कन्धश्च ग्रीवा चास्यं च वक्षश्च त्वक्स्कन्धग्रीवास्यवक्षः, प्राण्यङ्गत्वादेकवद्भावः । घनं चोन्नतं च घनोन्नतम् । घनोन्नतप्रसन्नं त्वक्स्कन्धग्रीवास्यवक्षो येषां ते तथाविधाः । दृढानीन्द्रियाणि विषयसामर्थ्यानि चक्षुरादीनि येषां ते दृढेन्द्रियाः । अस्तानि पलितानि येषां तेऽस्तपलिताः नस्यशीलिनो नरा भवेयुः भवन्तीति भद्रम् ॥ ४१ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने विंशोऽध्यायः ॥ २० ॥

हे०—नस्यशीलनस्य फलमाह—घनोन्नतेति । घनत्वच उन्नतस्कन्धग्रीवास्यवक्षसः इति यथायोगं सम्बन्धः ॥ ४१ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने नस्यकर्मप्रकरणं सामस्त्येन निरूपितम् ॥ २० ॥

## एकविंशतितमोऽध्यायः ।



ऊर्ध्वांगचिकित्साप्रसंगाद्धूमपानविधिं निर्दिदिक्षुराह-

**अथाऽतो धूमपानविधिमध्यायं व्याख्यास्यामः।**
**जत्रूर्ध्वं कफवातोत्थविकाराणामजन्मने ।**
**उच्छेदाय च जातानां पिबेद्धूमं सदात्मवान् १**

स०—आत्मवान् सुमतिर्हिताहारविहारो जत्रुण ऊर्ध्वं श्लेष्मवातोद्भवानां विकाराणां रोगाणामजन्मनेऽनुत्पत्त्यै तथोत्पन्नानामुच्छेदाय विनाशाय सदा धूमं पिबेत् ॥ १ ॥

प०—अस्यारम्भेऽयं सम्बन्धः । अस्मादनन्तरं धूमं पीत्वा कवलान् धारयेदित्युक्तं प्राक्। धूमस्य विधिर्विधानमितिकर्तव्यतारूपोऽध्यायस्तं व्याख्यास्यामः । जत्रूर्ध्वं कफोत्थानां विकाराणां वातोत्थानां च तथा कफवातोत्थानामजन्मनेऽनुत्पत्तये तथा जातानामुत्पन्नानां छेदाय विघाताय सदा सर्वकालमात्मवान् पुरुषो धूमं पिबेत् ॥ १ ॥

हे०—अथेति । धूमपानविधिमध्यायं व्याख्यातुं प्रतिजानीते । तत्र धूमस्य सामान्यतो विषयमाह—जत्रूर्ध्वमिति ॥ १ ॥

**स्निग्धो मध्यः स तीक्ष्णश्च वाते वातकफे कफे योज्यः ॥ २ ॥**

स०—स च धूमः स्निग्धमध्यतीक्ष्णभेदेन त्रिधा यथाक्रमं वाते स्निग्धो वातकफे मध्यः कफे तीक्ष्णो योज्यः ॥ २ ॥

प०—स धूमस्त्रिविधः । स्निग्धमध्यमतीक्ष्णभेदेन । तत्र स्निग्ध ईषत्कफसहिते वाते योज्यः । मध्यो वातकफे । तीक्ष्णः कफे योज्य इति सर्वत्रानुवर्तनीयम् । तत्र स्निग्धो बृंहणो मृदुरिति पर्यायः। मध्यमः शमनं प्रायोगिक इति पर्यायः । तीक्ष्णः शोधनविरेचन इति पर्यायः ॥ २ ॥

हे०—धूमभेदानाह—स्निग्धो मध्य इति । संज्ञां तु तत्र शमनः प्रायोगिको मध्यम इति पर्यायाः । बृंहणः स्नेहनो मृदुरिति । शोधनो विरेचनस्तीक्ष्ण इति चोक्ते तथा कासघ्नो वामनो व्रणधूपनश्चेत्यन्येऽदिवतम्

४९

स्निग्धादनीं विषयमाह—वाते वातकफ इति । योज्य इति क्रमेणेति शेषः ॥ २ ॥

**न रक्तपित्तार्तिविरिक्तोदरमेहिषु ।**
**तिमिरोर्ध्वाऽनिलाऽऽध्मानरोहिणीदत्तबस्तिषु ॥**
**मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ।**
**शिरस्यभिहते पांडुरोगे जागरिते निशि ॥३ ॥**

स०—रक्तपित्तार्त्यादिषु धूमो नावचारणीयः । ननु वाते वातकफे कफे च धूमस्योक्तत्वात्पित्तार्तौ प्राप्तिरेव नास्ति तत्किं प्रतिषेधेन । ब्रूमः । वातप्रकृतेर्वातपित्तार्तौ सत्यां कश्चिद्भिषक्पाशो भ्रांत्या प्रकृत्यनुरूपोपक्रमचिकीर्षया धूमं योजयेत्तन्निषेधार्थमिदमुक्तम् । अथवा पित्तार्तप्रकृतेर्वातश्लेष्मव्याध्युत्पत्तौ धूमो न योज्य इति प्रतिपादनार्थमिदं गदितम् । अशिशब्दो मत्स्यादिषु विषांतेषु प्रत्येकं योज्यः । अत्र च यथासंभवं पानं मद्यादेरशनं च मत्स्यादेरशनशब्देनेहोच्यते । चतुर्विधेष्वाहारेष्वशनशब्देनास्यैव व्यवहारः । यथा मात्राशी सर्वकालं स्यादिति । केचित्तु यवागूपायिन्यपि धूमपानं नेच्छंति ॥ ३ ॥

प०—स धूमः पित्तरक्तार्तिविरिक्तादिषु न योज्यः । पित्तरक्ताभ्यामार्तिः पीडा यस्य । विरिक्तः कृतविरेचनः । ऊर्ध्वानिल ऊर्ध्ववातरोगी । रोहिणी गलरोगः । मत्स्यादीन्यशितानि येन । तथा शिरस्यभिहते तथा पाण्डुरोगे तथा निशि रात्रौ जागरिते सति धूमो न योज्यः ॥ ३ ॥

हे०—पित्तार्तादीनां धूमं निषेधति-न रक्तपित्तार्त्तीति ३

**रक्तपित्तांध्यबाधिर्यतृण्मूर्छामदमोहकृत् ।**
**धूमोऽकालेऽतिपीतो वा ॥ ४ ॥**

स०—मूर्च्छा संज्ञानाशः । मोहश्चित्तनाशः । मुहवैचित्त्य इति पाठात् । आंध्यबाधिर्यग्रहणमुत्तमांगरोगोपलक्षणार्थम् । तेन संग्रहोक्तमर्दितमपि गृह्यते । धूमोऽकाले पूर्वोक्ते रक्तपित्तार्त्यादौ पीतो रक्तं पित्तादीन् कुर्यात् । अप्रतिषिद्धेऽपि काले क्षुतादावतिशयेन पीतो रक्तादिकृत् ॥ ४ ॥

प०—धूमस्त्रिविधो विपरीतोऽतिमात्रश्च पीतो रक्तपित्तं, तथान्ध्यं, बाधिर्यं—श्रोत्रेन्द्रियस्य श्रुतिविघातरूपं, पिपासां तथा मूर्छां मदं मो करोति ॥ ४ ॥

हे०—धूमस्याकालपाने अतिपाने दोषमाह—र क्तांध्येति ॥ ४ ॥

**तत्र शीतो विधिर्हितः ॥**

स०—तत्र रक्तपित्ताद्यार्तौ विधिरुपक्रमो सर्पिःपाननस्यालेपपरिषेकादिः शीतो विधिर्हितः

प०—तत्र रक्तपित्तादिषु समुपजातेषु विधिः कषायनस्यमुखलेपाञ्जनं परिषेक दिको हितः ॥ ५ ॥

हे०—उक्तदोषस्य प्रतीकारमाह—तत्र शीत संग्रहे तु एषां विभ्रमज्वरशिरोऽभितापेंद्रियोपघात पपाकक्षयायनछर्दिमूर्छारक्तपित्तार्दितानि मृत्युं व जनयेदतिमात्रश्चान्येषामपि । तत्र वातकफान्य पित्तमुपलक्ष्य यथास्वं सार्पिष्कषायपाननस्यास्यले रिषेकानस्निग्धरूक्षशीतान् प्रयुंजीत । एतेन सर्व घातप्रतीकारा व्याख्याताः । विशेषस्तु सर्वस्रोतो धूमे तीव्रतरा वेदना भवत्यूपाध्माननेत्ररागश्वास नसांगस्वरसादाम्लकाः । तत्र घृतक्षीरेक्षुरसद्राक्ष पयोगस्तद्विधैरेव वमनं कटुतिक्तैरपि च नस इति ॥ ५ ॥

इदानीं त्रयाणां धूमानां पृथक्कालं दर्शयन्ना

**क्षुतजृंभितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ।**
**हासस्य दंतकाष्ठस्य धूममंते पिबेन्मृदुम्**
**कालेष्वेषु निशाऽऽहारनावनांते च मध्य**
**निद्रानस्यांजनस्नानच्छर्दितांते विरेचनम्**

स०—क्षुतादीनामष्टानामंते मृदुं स्नेहना पिबेत् । एषु क्षुतादिषु कालेषु निशाहारनावनां मध्यमं धूमं पिबेत् । मध्यममिति मध्यान्म इ विरेचनाख्यं धूमं निद्रादीनामंते पिबेत् । ना योरेकार्थयोरिहोपादानान्नस्यक्रमेण धूमं पिबेदि कृता प्रतिपादितम् । तेन स्निग्धनस्यांते स्निग रपर्यायं धूमं पिबेत् । आचार्योपदेशाच्च क्षुता स्निग्धं धूमं पिबेत् । मध्याह्नस्यांते मध्यमं धूमं कालेष्विति बहुवचनाच्च क्षुदादीनामष्टानामंता

मध्यमं धूमं पिबेत्। एवं निद्रान्तस्यांते विरेचनं धूमं पिबेत्। कालेष्विति वचनान्निशाशब्दोऽत्र विरेचनपर्यायः॥ ६॥

प०—क्षुतादीनामन्ते मृदुं स्निग्धं धूमं पिबेत्। अन्तशब्दः प्रत्येकमभिसम्बध्यते। एषु कालेषु प्रागुक्तेषु क्षुतादिषु शस्त्रकर्मावसानेषु मृदुधूमपाननिर्दिष्टेषु मध्यमं धूमं पिबेत्। तथा निशान्ते आहारान्ते नावनान्ते च मध्यमं धूमं पिबेत्। निद्रादिकानां पञ्चानामन्ते विरेचनं तीक्ष्णं धूमं पिबेत्॥ ६॥

हे०—स्निग्धधूमस्याष्टौ कालानाह—क्षुतजृंभितेति। मध्यधूमस्यैकादशकालानाह—कालेष्विति। तीक्ष्णधूमस्य पञ्चकालानाह—निद्रेति॥ ६॥

सांप्रतमत्र नेत्रस्वरूपमाह—

**बस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजु।**
**मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम्॥ ७॥**

स०—बस्तौ नेत्रं बस्तिनेत्रं बस्तिनेत्रेण समं बस्तिनेत्रतुल्यं द्रव्यं धातुदार्वस्थिवेणुजं यस्य धूमनेत्रस्य तद्बस्तिनेत्रसमद्रव्यं धूमनेत्रं शिल्पिना कारयेद्भिषक्। किंभूतं नेत्रम्। त्रयः कोशाः पर्वाणि यस्य तत्त्रिकोशम्। ऋजु न वक्रम्। तथा मूलं चाऽग्रं च तस्मिन्यथासंख्यमंगुष्ठबदरास्थिप्रवेशम्। अंगुष्ठश्च कोलास्थि चेति समाहारद्वंद्वः। तत्प्रविशत्यस्मिन्निति पदरुजविशेति घञ्॥ ७॥

प०—मूलं चाग्रं च मूलाग्रं तस्मिन् मूलाग्रे यथाक्रममङ्गुष्ठसंशुष्ककोलास्थिप्रवेशो यस्य तत्तथाविधम्। मूले स्वाङ्गुष्ठं प्रविशति। अग्रे मुखे कोलास्थिबदरास्थि प्रविशति यस्य॥ ७॥

हे०—धूमनेत्रमाह—बस्तिनेत्रेति। बस्तिनेत्रसमद्रव्यं हेमादिघटितं त्रिकोशं यथापूर्व्यानुप्रविभज्य त्रिकांडं तीक्ष्णादिभेदेन॥ ७॥

दैर्घ्येण प्रमाणमिदानीं तीक्ष्णादिकत्रिविधधूमनेत्रस्याऽऽह—

**तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पंच च।**
**अंगुलानां क्रमात्पातुः प्रमाणेनाऽष्टकानि तत्॥**

स०—यथासंख्यं दैर्घ्येण तीक्ष्णस्य त्रीण्यष्टकानि चतुर्विंशतिरंगुलानि स्युः। स्नेहने च धूमे चत्वार्यष्टकानि द्वात्रिंशदंगुलानि स्युः। मध्यमे च धूमे पंचाष्टकानि चत्वारिंशदंगुलानि स्युः। पर्वनियमो सूक्ष्मत्वे दैर्घ्यं च नेत्रस्येह कृतम्। एवं हि नयनकर्मादीनां न बाधको धूमः स्यात्। तथा च मुनिः। दूरविनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः। नेन्द्रिय बाधते धूम इति॥ ८॥

प०—परं तद्धूमनेत्रं पातुः पुरुषस्याङ्गुलप्रमाणेन तीक्ष्णस्नेहनमध्येषु धूमेषु क्रमात् त्रीणि चत्वारि पञ्च चाङ्गुलानामष्टकानि कुर्यात्। तेन तीक्ष्णधूमे पातुरङ्गुलप्रमाणेन त्रीण्यष्टकानि चतुर्विंशदङ्गुलानि नेत्रं कुर्यात्। तथा स्नेहनधूमे चत्वारि अष्टकानि द्वात्रिंशदङ्गुलानि नेत्रं कुर्यात्। मध्ये धूमे पञ्चाष्टकानि चत्वारिंशदङ्गुलानि धूमनेत्रं कुर्यात्॥ ८॥

हे०—धूमनेत्रस्य प्रमाणमाह—तीक्ष्णस्नेहनेति। धूमपाङ्गुलानि चतुर्विंशतितीक्ष्णनेत्रं, द्वात्रिंशत्स्नेहनेत्रं, चत्वारिंशन्मध्यनेत्रम्. संग्रहे तु एवं हि धूमो कुटिलपर्वनेत्रस्य पर्वच्छेदादूर्ध्वं तनुतया च शनैः [illegible] भवतीति। तथा कासघ्ने वमने च दशांगुलं, व्रणधूमनार्थमष्टांगुलं, कलायपरिमण्डलं कुलत्थस्रोत इति। कासघ्नादिषु नेत्राभावे नलवंशैरण्डादीनामन्यतमां नाडीं योजयेदिति॥ ८॥

कीदृशः सन् धूमं पिबेदित्याह—

**ऋजूपविष्टस्तच्चेता विवृतास्यस्त्रिपर्ययम्।**
**पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत्॥ ९॥**

स०—ऋजु स्पष्टमुपविष्ट आसीनः। तथा तच्चेता धूमपानगतचित्तः तथा प्रसारितमुखः तथा नेत्रगतदृष्टिरित्यादि द्रष्टव्यम्। कथं पिबेत्। त्रिपर्ययमाक्षेपविसर्गावपनैस्त्रिपर्ययैः। तथा छिद्रमेकैकं पिधाय प्रकृतत्वान्नासिकाया एव। तदेवंविसन्नासिकया पिबेत्। एकैकमित्येकं बहुव्रीहिवद्विद्वित्वसुब्लोपौ। तेनाऽयमर्थः। एकं नासापुटं पिधायाऽपरेण नासापुटेनाऽऽकृष्य धूमं पिबेत्। अपरं नासापुटं विधाय तदपरेणाऽऽकृष्य तथैव पिबेदित्यर्थः॥ ९॥

प०—ऋजुः स्पष्टं कृत्वोपविष्टस्तच्चेतास्तन्मनाः, विवृतास्यः प्रसारितमुखः पुमान् तथा त्रयः पर्याया वारा यस्यासौ त्रिपर्यायस्तं त्रिपर्यायं पिधाय स्थगयित्वा नासायाः सम्बन्धि छिद्रमेकैकं पर्यायेण धूमं नासिकया पिबेत् । एवं पर्यायतया एकैकेन नासापुटेन त्रीन् वारान धूमं पिबेत् ॥ ९ ॥

हे०—धूमपानविधिमाह—ऋजूपविष्ट इति । त्रिपर्ययं त्रिपरिवर्तं वामं पिधाय दक्षिणेन पिबेत् । दक्षिणं पिधाय वामेनं पिबेदित्येकः परिवर्तः । संग्रहे तु प्राक्कृतोच्छ्वासनिःश्वासो नेत्राग्रनिविष्टदृष्टिरिति ॥ ९ ॥

**प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ।**
**उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कंठगे ॥ १० ॥**

स०—नासागते शिरोगते वा दोष उत्क्लिष्टे स्वस्थानाच्चलिते सति प्राक् पूर्वं नासया पिबेत् । अनुत्क्लिष्टे दोष उत्क्लेशनार्थं वक्त्रेण प्राक् पिबेत् पश्चान्नासिकया । कंठरोधदोषोत्क्लेशनार्थं प्राङ्नासिकया पिबेत् पश्चाद्वक्त्रेणेति विपरीतम् ॥ १० ॥

प०—दोषे धूमसाध्ये घ्राणशिरोगते नासाशिरःस्थिते उत्क्लिष्टे स्वयं प्रच्युते प्राक् पूर्वं नासिकया धूमं पिबेत् । पश्चाद्वक्त्रेण पिबेत् । अनुत्क्लिष्टे पुनर्दोषे घ्राणशिरोगते तदुत्क्लेशनार्थं प्राक् वक्त्रेण पिबेत् । पश्चान्नासिकया । कण्ठगे दोषे विपरीतं कृत्वा धूमं पिबेत् । कण्ठगे दोषे उत्क्लिष्टे स्वयं प्रच्युते प्राक् पूर्वं मुखेन धूमं पिबेत् । पश्चान्नासया । अनुत्क्लिष्टे पुनः कण्ठगे दोषे उत्क्लेशनार्थं प्राक् नासया धूमं पिबेत् । पश्चाद्वक्त्रेण॥१०॥

हे०—दोषस्थानावस्थाभेदेन धूमपाने विशेषमाह—प्राक् पिबेदिति । घ्राणशिरोगते दोषे स्वयमुत्क्लिष्टे शोधनार्थं यो धूमस्तं पूर्वं नासिकया पिबेत् । पश्चाद्वक्त्रेण तस्मिन्नेवानुत्क्लिष्टे उत्क्लेशनार्थं यो धूमः तं पूर्वं वक्त्रेण पिबेत् । पश्चान्नासिकया । कण्ठगे तूत्क्लिष्टे प्राग्वक्त्रेण पश्चान्नासिकया । अनुत्क्लिष्टे प्राङ्नासिकया पश्चाद्वक्त्रेण ॥ १० ॥

**मुखेनैव वमेद् धूमं नासया दृग्विघातकृत् ॥ ११ ॥**

स०—नासयाऽऽस्येन वा पीतं धूमं वक्त्रेणैवोत्सृजेत् । ननु घ्राणेनैव कस्मान्न मुच्येतेत्याह । नासयेत्यादि । घ्राणेनोत्सृज्यमानो धूमो दृष्टिविघाततिमिरादीन् करोति । तस्मान्मुखेनैवोत्सृजेत् ॥ ११ ॥

प०—नासया पीतं धूमं तथा मुखेन पीतः यमपि मुखेनैवोद्वमेत्, न नासया दृग्वि तभयात् ॥ ११ ॥

हे०—धूमोद्वमने नियममाह—मुखेनैवेति । नासोद दोषमाह—नासयेति ॥ ११ ॥

**आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रि**

स०—आक्षेपमोक्षैरादानविसर्गैस्त्रिभिस्त्रिभिस्त्री रान् धूमः पातव्यः । त्रिरिति द्विस्त्रिचतुर्भ्यः सुच्

प०—त्रीन् वारान् कृत्वा त्रिभिस्त्रिभिराक्षेपम सम्पद्यते इति ॥ १२ ॥

हे०—धूमपानावधिमाह—आक्षेपमोक्षैरिति । त्रि स्त्रिभिरिति । त्रिषु पानेषु प्रत्येकं त्रय आक्षेपमोक्षा

**अह्नः पिबेत्सकृत् स्निग्धं द्विर्मध्यं शोधनं पर त्रिश्चतुर्वा ॥ १३ ॥**

स०—अह्नः सकृदेकवारं स्निग्धं धूमं पिबे मध्यमं धूमं द्वौ वारौ पिबेत् । अह्न इत्यत्राऽप्यनुवर्त तीक्ष्णं धूमं त्रीन् वारांश्चतुरो वा दिवसस्य पिबे अह्न इति कृत्वोऽर्थप्रयोगे कालेऽधिकरण इति षष्ठी

प०—स्निग्धं धूममह्नः सकलस्य दिवसस्य स्वोक्तविषये सकृदेकवारं पिबेत् । तथा मध्यं सकलस्य दिवसस्य तथा स्वोक्तविषये द्विः वारौ पिबेत् । तथा तीक्ष्णं धूमं यथास्वे विषयेऽह्नः सकलस्य त्रीन् वारान् चतुरो वारान् पिबेत् ॥ १३ ॥

हे०—स्निग्धादिभेदेनावृत्तिमाह—अह्न इति । सकृत् अहोरात्रमध्ये एकवारं स्निग्धं पिबेत् । द्वि मध्यम् ॥ १३ ॥

**मृदौ तत्र द्रव्याण्यगुरुगुग्गुलु**
**मुस्तस्थौणेयशैलेयनलदोशीरवालकम् ॥**
**वरांगकौंतीमधुकाबिल्वमज्जैलवालुकम् ।**
**श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम् ॥**
**शल्लकी कुंकुमं माषा यवाः कुंदुरकं तिलाः**
**स्नेहः फलानां साराणां मेदोमज्जावसाघृतम्**

स०—तत्र तेषु त्रिषु धूमेषु मध्यान्मृदौ प्रायोगिक धूमे द्रव्याण्यगुरुप्रभृतीनि । प्लवो गोपालमदनकः ।

इति । फलानामक्षोडनालिकेरादीनां स्नेहः तथा साराणां खदिरासनादीनां च स्नेहः । मधुकमदनयोरेकयोनित्वादुक्तस्योपयोगो मदनस्याऽत्र विरुद्ध इति केचित् । तच्चाऽयुक्तम् । द्रव्यांतरत्वान्मदनस्य पिण्याकादिवत्तिलादेः । घृतं चाऽत्र गव्यमेव ग्राह्यं मुख्यत्वात् । उक्तं हि । गव्ये क्षीरघृते श्रेष्ठ इति ॥ १४ ॥

प०–तत्र तेषु धूमेषु मध्ये मृदोर्धूमनस्यासनादिद्रव्याणि अगुर्वादीनि घृतपर्यन्तानि । स्थौणेयं तिलपीलकम् । शैलेयं शिलाहृदस्थभवं तथा नलदं गन्धमांसी च । वराङ्गं त्वक् । कौन्ती हरेणुः । मधुकं मधुयष्टिका । बिल्वमज्जा बिल्वपेशिका । एलवालुकं हरिवालकम् । श्रीवेष्टकः श्रीवासकः । पीडाश्रावः सर्जरसो देवधूपोऽपरपर्यायः । ध्यामकं देवदग्धकम् । मदनमिच्छकं, पूवं बल्यं, शल्लकी सुरभी, कुंकुमं काश्मीरम् । माषाः शिम्बीधान्यम् । स्नेहफलानामक्षोडोरुमाणप्रभृतीनां तथा सरलागुरुदेवदारुशिंशपादीनां साराणां स्नेहः । तथा मेदो मज्जा वसा घृतं च ॥ १४ ॥

हे०–त्रिवारं चतुर्वारं वा तीक्ष्णं स्निग्धधूमस्य द्रव्याण्याह–मृदाविति । नलदं मांसी, वरांगं त्वचं, ध्यामकं कट्तृणं, मदनं मधूच्छिष्टं, कुन्दुरकः शल्लकीनिर्यासः, फलानां स्नेह एरंडतैलादिसाराणां स्नेहः, देवदारुतैलादिः ॥ १४ ॥

**शमने शलकी लाक्षा पृथ्वीका कमलोत्पलम् ।**
**न्यग्रोधोदुंबराश्वत्थप्लक्षरोध्रत्वचः सिता ॥**
**यष्टीमधुः सुवर्णत्वक् पद्मकं रक्तयष्टिका ।**
**गंधाश्चाकुष्ठतगराः ॥ १५ ॥**

स०--शमने धूमे शल्लक्यादीनि गंधद्रव्याणि कुष्ठतगरवर्ज्यानि ॥ १५ ॥

प०–शमने धूपने शल्लकीलाक्षादीनि द्रव्याणि । शल्लकी सुरभी, कमलमुत्पलं नलिनोत्पलम् । न्यग्रोधादीनां पञ्चानां वृक्षाणां त्वक् । सिता शर्करा । यष्टी मधुयष्टी । सुवर्णं नागकेसरम् । पद्मकं हेमपद्मकम् । रक्तयष्टिका मञ्जिष्ठा । कुष्ठतगरवर्जिता गन्धाः न विद्यन्ते कुष्ठतगरा येषां गन्धानां तेऽकुष्ठतगरास्तद्रहिताः सर्वे गन्धाः ॥ १५ ॥

हे०–मध्यमधूमस्य द्रव्याण्याह–शमन [illegible] । सिता शर्करा, सुवर्णत्वक् आरग्वधः, रक्तयष्टिका मञ्जिष्ठा ॥ १५ ॥

**तीक्ष्णे ज्योतिष्मती निशा ।**
**दशमूलमनोह्वालं लाक्षाश्वेताफलत्रयम् ।**
**गंधद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ १६ ॥**

स०–तीक्ष्णे विरेचनाख्ये धूमे ज्योतिष्मत्यादीनि गंधद्रव्याणि च तीक्ष्णानि कुष्ठतगरादीनि [illegible] शोधनादिगणसंग्रहोक्तो वेल्लापामार्गेत्यादिको मूर्धविरेचनः ॥ १६ ॥

प०–तीक्ष्णे धूमे द्रव्याणि ज्योतिष्मतीप्रभृतीनि । ज्योतिष्मती कङ्गुनिका परापता [illegible] । निशा पिण्डहरिद्रा । दशमूलं पञ्चमूले द्वे । मनोह्वा मनःशिला । अलं हरितालम् । श्वेता [illegible] फलत्रयं त्रिफला । सर्वाणि गन्धद्रव्याणि तीक्ष्णानि कुष्ठादीनि । तथा गणो मूर्धविरेचनो वेल्लापामार्गव्योषादिगणः संग्रहोक्तः ॥ १६ ॥

हे०–तीक्ष्णधूमस्य द्रव्याण्याह—तीक्ष्ण [illegible] हरितालं, श्वेता किणिही, तीक्ष्णानि [illegible] लादीनि । मूर्धविरेचनो गणः वेल्लापामार्गेत्यादि ॥ १६ ॥

संप्रति धूमवर्तिविधान माह–

**जले स्थितामहोरात्रमिषीकां द्वादशांगुलाम् ।**
**पिष्टैर्धूमौषधैरेवं पंचकृत्वः प्रलेपयेत् ।**
**वर्तिरंगुष्ठवत्स्थूला यवमध्या यथा भवेत् ।**
**छायाशुष्कां विगर्भां तां स्नेहाभ्यक्तां यथायथ**
**धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत् ॥ १७**

स०–रात्रिंदिवं सलिले उषितां दैर्घ्येण द्वादशांगुलामिषीकां दर्भमूलतृणं पंचकृत्वः पंचवारान् धूमौषधैः पिष्टैः प्रकर्षेण लेपयेत् । यथांगुष्ठवत्स्थूला यवमध्या वर्तिः स्यात् । एतदाकृतिविधानं च [illegible] धेऽपि नेत्रके वर्तेः सुखप्रवेशार्थम् । तामिषीकां छाया विशुष्कां विगतगर्भामपनीतेषीकां तथा स्नेहेन घृता दिना यथास्वमभ्यक्तां तथा धूमनेत्रस्य यदंगुष्ठसम छिद्रं तत्रार्पितां तथाग्निप्लुष्टामंगारप्रदीप्तां [illegible] पानार्थे प्रयोजयेत् ॥ १७ ॥

प०—इषीकां दर्भमूलं जलेऽहोरात्रं स्थितं कृत्वा द्वादशाङ्गुलां द्वादशाङ्गुलदीर्घा पिष्टैर्धूमौषधैः पूर्वोक्तैः पञ्चकृत्वः अक्षमात्रेण कल्केन पिष्टां छायाशुष्कां कृत्वा प्रलेपयेत् । वर्तिरङ्गुष्ठकस्थूला यवमध्या भवेत् । यथा यवमध्या यवाकारमध्या यथा स्यात् । एवंभूतां पातुं पानाय प्रयोजयेत् ॥ १७ ॥

हे०—धूमपानार्थं धूमवर्तिमाह-जले स्थितामिति । ईषीकां काष्ठशलाकां, धूमौषधैर्यथोक्तैरगुर्वादिभिः पञ्चभिर्लेपैरंगुष्ठस्थूला यवमध्या यथा भवेत्तथा विशोष्य विशोष्य प्रलेपयेत् । धूमवर्त्या धूमपानप्रकारमाह—छायाशुष्कामिति । विगर्भामपनीतेषीकां यथायथं मृदुमध्यतीक्ष्णैः स्नेहैरभ्यक्तां संग्रहे त्विषीकामध्यं नवांगुलं क्षपयेत् । प्रतिक्षेपं चाक्षमात्रं लेपद्रव्यमित्युक्तम् ॥ १७ ॥

अधुनाऽपरमपि धूमप्रकारमाह—

**शरावसंपुटच्छिद्रे नाडीं न्यस्य दशांगुलाम् ।**
**अष्टांगुलां वा वक्त्रेण कासवान् धूममापिबेत् ॥**

स०—शरावयोः संपुटं युग्मं तस्य छिद्रे नाडीं दशांगुलामष्टांगुलप्रमाणां वा निक्षिप्य कासी धूममापिबेत् । तदयमत्राऽर्थः । अपगतधूमखदिरबदिरादिदारुस्थिरांगारप्रखरपूर्णशरावे कासहरचूर्णं सस्नेहं गुलिकां वा न्यस्य मध्यकृतच्छिद्रशरावेण पिधाय नाडीमष्टांगुलां दशांगुलं वा निवेश्य कासवान् कासी वक्त्रेण मुखेन धूमं पिबेदिति ॥ १८ ॥

प०—शरावयोः सम्पुटं संश्लेषेणावनद्धं शरावद्वयं तस्य छिद्रं शरावसम्पुटच्छिद्रं तस्मिन् छिद्रे नाडीं न्यस्य दशाङ्गुलामष्टाङ्गुलां वा वेण्वादिमयीं वक्त्रेण मुखेन कासवान् नरो धूममापिबेत् । तेन कासघ्नं चूर्णं कङ्गुणिकाद्यानि धूमद्रव्याणि तेषां चूर्णं प्रस्थिराङ्गारपूर्णे सुसंस्थिते शरावे प्रक्षिप्यान्येन तु प्रवृत्तच्छिद्रेण शरावेण पिधाय च उरसि नेत्रमुखेनैव धूमं पिबेत् । उदरप्राप्तं तं च मुखेनैवोद्वमेत् । प्रशान्ते च धूमे पुनः क्षिपेत् पिबेद्वा । दोषशुद्धेश्चाङ्गलाघवाच्च ॥ १८ ॥

हे०—कासिनां धूमपाने विशेषमाह—शरावसंपुटेति । शरावसंपुटः संग्रहोक्तः । चूर्णं गुलिकां वा निर्धूमदीप्तस्थिरांगारपूर्णे सुस्थिते शरावे प्रक्षिप्यानेन बुध्नवृत्तच्छिद्रेण शरावेण पिधायेति ॥ १८ ॥

**कासः श्वासः पीनसो विस्वरत्वं**
**पूतिर्गंधः पांडुता केशदोषः ।**
**कर्णास्याक्षिस्रावकंड्वर्तिजाड्यं**
**तंद्रा हिध्मा धूमपं न स्पृशंति ॥**

स० कासादयो धूमपं न स्पृशंति । धूमं पा[…] संभवंतीति भावः । तत्र पूतिर्गंध आस्यनासयोः । मुखस्य । केशस्य दोषाः सितपिंजरत्वादयः । चाऽस्यं चाऽक्षिणी च कर्णाऽऽस्याक्षि । स्रावक[…] श्चाऽर्तिश्च जाड्यं च स्रावकंड्वर्तिजाड्यम् । [...]दिषु प्रत्येकं स्रावादिचतुष्टयं योज्यमिति । श[…]वृतम् ॥ १९ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचिताय[…] गहृदयटीकायां सर्वांगसुंदराख्यायामेकविंश[…] तितमोऽध्यायः ॥ २१ ॥

प०—कासश्वासादयो धूमपानानन्तरं न[…]न्ति । पीनसः प्रतिश्यायः । विस्वरत्वं[…]र्यम् । पूतिर्घ्राणादिदौर्गन्ध्यम् । आस्ये प[…] पाण्डुत्वम् । मुखस्य केशानां दोषाः पालित[…] रत्वपतनादि । कर्णादीनां स्रावादिभिः सम्ब[…] तन्द्रा निद्रार्तस्येव विषयाग्रहणमिति भद्रम्[…]

इति श्रीचन्द्रनन्दनविरचितायां पदार्थ[…] चन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने एकविंशोऽध्यायः ॥ २१ ॥

हे०—धूमशीलनस्य फलमाह-कास इति । सं[…] धूमो हि शिरोऽक्षिकर्णशूलाभिष्यंदगौरवार्धावभे[…] वैरस्यप्रसेकपूतिघ्राणमुखरोगदंतशूलदौर्बल्यारुचिहनु[…] हक्रिमिपक्षवधक्षवथुनाशबाहुल्यातिनिद्राक्रथनादिज[…] वातकफव्याधिषु प्रशमनाय प्रयुज्यते। तथा शिरःक[…] मनोबृंहणप्रसादनाय च शीतद्रव्यनिवृत्तोऽपि त्वक्षि[…] दुष्णतया पित्तरक्तविरुद्ध इति ॥ १९ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने धूमपानप्र[…] सामस्त्येन निरूपितम् ॥ २१ ॥

# द्वाविंशतितमोऽध्यायः ।



इदानीं द्वाविंशाध्यायारंभणप्रस्तावो गंडूषादिविधाप्रदर्शनार्थमित्याह—

**अथाऽतो गंडूषादिविधिमध्यायं व्याख्यास्यामः**

स०—गंडूषादयो विधीयंते यस्मिन्निति गंडूषादिविधिः । आदिशब्देन कवलादिपरिग्रहः ॥ १ ॥

प०—अस्यारम्भे प्रयोजनमुक्तम् । नस्यान्ते प्राग्धूमः पातव्यः । अनन्तरं धारयेत् गण्डूषोष्णाम्बुकवलान् इति। गण्डूषो मुखापूरः स आदिर्येषान्ते गण्डूषादयः । तेषां विधिर्विधानमितिकर्तव्यतारूपोऽध्यायस्तं व्याख्यास्यामः । आदिग्रहणात् प्रतिसारणमुखालेपमूर्धतैलकर्णपूरणानि गृह्यन्ते ॥ १ ॥

हे०—अथेति । गंडूषादिविधिमध्यायं व्याख्यातुं प्रतिजानीते । गंडूषादीनि गंडूषकवलप्रतिसारणमुखालेपमूर्धतैलकर्णपूरणानि ॥ १ ॥

**चतुष्प्रकारो गंडूषः स्निग्धः शमनशोधनौ ।**
**रोपणश्च ॥ २ ॥**

स०—चत्वारः प्रकारा भेदा यस्य स चतुष्प्रकारो गंडूषः स्निग्धादिभेदेन ॥ २ ॥

प०—गण्डूषश्चतुर्विधो भवति । स्निग्धः, शमनः, शोधनो, रोपणश्च । शमनः स्तम्भनः प्रसादनो निर्वापण इति पर्यायाः ॥ २ ॥

हे०—गंडूषभेदानाह—चतुष्प्रकारेति ॥ २ ॥

**त्रयस्तत्र त्रिषु योज्याश्चलादिषु ।**
**अंत्यो व्रणघ्नः ॥ ३ ॥**

स०—तत्र तेषु गंडूषेषु मध्याद्यथासंख्यं पवनपित्तश्लेष्मसु त्रयः स्निग्धादयो गंडूषा योज्याः । तत्र वाते स्निग्धो गंडूषः । पित्ते शमनः । कफे शोधन इत्यर्थः । अंत्यो रोपणाख्यो व्रणघ्नो व्रणसाधन उपयुज्यते ॥ ३ ॥

प०—तत्र तेषु चतुर्षु गण्डूषेषु मध्यात् त्रय आद्या गण्डूषाः वातपित्तकफामयेषु क्रमेण योज्याः । स्निग्धो गण्डूषो वाते शमनः पित्ते शोधनः कफे । अन्ते पठितत्वादन्त्यः चतुर्थो रोपणाख्यो गण्डूषो व्रणघ्नः व्रणसाधनः मुखस्थान् व्रणान् हन्ति ॥ ३ ॥

हे०—गंडूषाणां भेदेन विषयमाह—त्रय इति । अंत्यो व्रणघ्न इति । अंत्यो रोपणः,व्रणघ्नो मुखरोगघ्नः॥३॥

इदानीमेषां लक्षणं निर्वक्ति—

**स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ।**
**स्नेहैः ॥ ४ ॥**

स०—अत्रैषु गंडूषेषु मध्ये स्निग्धो मधुरादिसाधितैः स्नेहैर्भवति ॥ ४ ॥

प०—स्नेहैः क्वथितैः कल्कितैर्वा साधितो योज्यः ॥ ४ ॥

हे०—स्निग्धस्य द्रव्याण्याह—स्निग्धोऽत्रेति ॥ ४ ॥

**संशमनस्तिक्तकषायमधुरौषधैः ॥ ५ ॥**

स०—शमनस्तिक्तादिभिरौषधैः । पटोलाऽरिष्टजंब्वाम्रमधुककाथशर्करोदकक्षौद्रादिभिः स्यात् ॥ ५ ॥

प०—संशमनो गण्डूषस्तिक्तकषायमधुरौषधैः कथितैः कल्कितैर्वा योज्यः ॥ ५ ॥

हे०—शमनस्य द्रव्याण्याह ॥ ५ ॥

**शोधनस्तिक्तकट्वम्लपटूष्णैः ॥ ६ ॥**

स०—शोधनो गंडूषस्तिक्तकट्वम्लादिभिरौषधैर्भवति ॥ ६ ॥

प०—शोधनो गण्डूषस्तिक्तकट्वम्ललवणोष्णैरौषधैः कल्कितैः क्वाथीकृतैर्वा योज्यः ॥ ६ ॥

हे०—संशमने शोधनस्य द्रव्याण्याह-शोधन इति ॥६॥

**रोपणः पुनः ।**
**कषायतिक्तकैः ॥ ७ ॥**

स०—रोपणस्तु गंडूषः कषायतिक्तकैः स्यात्॥७॥

प०—रोपणो गण्डूषः कषायतिक्तैरौषधैः कल्कितैर्वा योज्यः ॥ ७ ॥

हे०—रोपणस्य द्रव्याण्याह—रोपण इति ॥ ७ ॥

ननु द्रव्याणां शुष्कत्वाद्गण्डूषानुपपत्तिरिति चेत्तत्राह—

**तत्र स्नेहः क्षीरं मधूदकम्।**
**शुक्तं मद्यं रसो मूत्रं धान्याम्लं च यथायथम्।**
**कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ८।**

स०—तत्र तेषु पूर्वोक्तेषु गंडूषेषु मध्ये स्नेहादिकं कल्कैर्यथायथं युक्तं विपक्वं वा यथास्पर्शं शीतमुष्णं वा प्रयोजयेत् ॥ ८ ॥

प०—चतुर्विधत्वं गण्डूषस्यैतत् सामान्येनोक्तम्। तत्र स्नेहः रसो मांसरसः क्षीरं च स्नेहने गण्डूषे। मधूदकं क्षीरं घृतं च शमनगण्डूषे। शुक्तं मद्यं धान्याम्लं मूत्रं च शोधने गण्डूषे। धान्याम्लं मूत्रं च रोपणे गण्डूषे यथायथं यथास्वं पूर्वोक्तैरौषधैः कल्कैः कल्कितैर्युक्तम्। अथवा क्वाथकल्केन विपक्वं यथास्पर्शं स्पर्शानतिक्रमेण योजयेत्। तत्रोष्णं वाते शीतं पित्ते अत्युष्णं कफे योजयेत् ॥ ८ ॥

हे०—गंडूषार्थं द्रव्याण्याह—तत्रेति। स्नेहादीनि नव योग्यतानुसारेण यथास्वं कल्कैः संयोज्य विपाच्य वा शीतान्युष्णानि वा प्रयोजयेत्। उक्तं च संग्रहे तत्र स्वाद्वम्ललवणोष्णैरौषधैः सिद्धो युक्तो वा नात्युष्णः स्नेहो मांसरसस्तिलकल्कोदकं क्षीरं वा स्नैहिकः, तिक्तकषायमधुरशीतैः पटोलारिष्टजंब्वाम्रपल्लवोत्पलमधुकक्वाथसितोदकक्षौद्रक्षीरेक्षुरसघृतादिभिः शमनः। कट्वम्ललवणोष्णैः शिरोविरेचनादिद्रव्यैः शुक्तमद्यधान्याम्लमूत्रान्यतमकल्कतालोडितैः शोधन इति ॥ ८ ॥

**दंतहर्षे दंतचाले मुखरोगे च वातिके।**
**सुखोष्णमथवा शीतं तिलकल्कोदकं हितम् ९॥**

स०—दंतहर्षादौ कवोष्णमथवा शीतं दोषवशात् तिलकल्कोदकं हितम् ॥ ९ ॥

प०—तिलकल्केन मिश्रितमुदकं तिलकल्कोदकम्। तच्च यथास्पर्शं सुखोष्णमथवा शीतं हिमं दन्तहर्षे दन्तचाले दन्तरोगे वक्ष्यमाणे हितम्। तथा मुखरोगे वक्त्ररोगे वातिके वातोद्भवे हितम् ॥ ९ ॥

हे०—दन्तहर्षादौ गंडूषमाह—दंतहर्ष इति ॥ ९ ॥

**गंडूषधारणे नित्यं तैलं मांसरसोऽथवा॥ १०**

स०—गंडूषधारणे नित्यं तैलं मांसरसो हितः ॥ १० ॥

प०—सङ्ग्रहोक्तिः। नित्यं सर्वदा स्वस्थ गण्डूषधारणे गण्डूषार्थं हितं तैलं मांसर ऽथवा हितः ॥ १० ॥

हे०—स्वस्थे गंडूषमाह—नित्यमिति ॥ १० ॥

**ऊषादाहान्विते पाके क्षते वाऽऽगंतुसंभवे।**
**विषक्षाराऽग्निदग्धे च सर्पिर्धार्यं पयोऽथवा ११**

स०—ऊषादियुक्ते पाके क्षते वाऽऽगंतुजे विषे क्षाराग्निभ्यां दग्धे च सर्पिर्गंडूषे हितं क्षीरं वा

प०—पाके मुखस्योषदाहान्विते ताभ्यां युक्ते क्षते मुखव्रणे आगन्तुसम्भवे तथा विषे विष मुखे तथा क्षाराग्निभ्यां दग्धे गण्डूषार्थं सर्पिः वा धार्यम् ॥ ११ ॥

हे०—ऊषादाहमुखपाकादौ गंडूषमाह—ऊषाद न्वित इति। ऊषाक्षारेणेव दाहोऽग्निनेव पाकादयो एव ॥ ११ ॥

**वैशद्यं जनयत्यास्ये संदधाति मुखव्रणान्**
**दाहतृष्णाप्रशमनं मधुगंडूषधारणम् ॥ १**

स०—माक्षिकगंडूषधारणं मुखे वैशद्यं जनय पैच्छिल्यम्। मुखव्रणांश्च संदधाति तथा दाहं तृ शमयति ॥ १२ ॥

प०—मधु माक्षिकं गण्डूषधारणादास्ये मुखे नैर्मल्यं जनयति। तथा मुखे स्थितान् व्र सन्दधाति संश्लेषं जनयति तथा मुखे दाहं च नाशयतीति दाहतृष्णाप्रशमनम् ॥ १२ ॥

हे०—मुखपैच्छिल्यादौ गंडूषमाह—वैशद्यमिति ॥

**धान्याम्लमास्यवैरस्यमलदौर्गंध्यनाशनम्**

धान्याम्लं गंडूष उपयुक्तं वदनवैरस्यं तथा दौर्गंध्यं चाऽपनयति ॥ १३ ॥

प०—धान्याम्लं काञ्जिकं गण्डूषधारणा मुखवैरस्यं विरसास्यतां मलं मलोपदेहं दौ दुर्गन्धतां च नाशयति ॥ १३ ॥

हे०-मुखवैरस्यादौ गण्डूषमाह-धान्याम्लेति ॥१३॥

**तदेवाऽलवणं शीतं मुखशोषहरं परम् ॥ १४ ॥**

**स०**-तदेव कांजिकमलवणं शीतं परमतिशयेनास्यशोषहरम् ॥ १४ ॥

**प०**-तदेव धान्याम्लमलवणं किञ्चिल्लवणं शीतं नोष्णं परमतिशयेन मुखशोषहरमास्यशोषं नाशयेत् ॥ १४ ॥

हे०-मुखशोषे गंडूषमाह-तदेवेति । तद्धान्याम्लम् अर्थात्पूर्वं च लवणोष्णम् ॥ १४ ॥

**आशु क्षारांबुगंडूषो भिनत्ति श्लेष्मणश्चयम् १५**

**स०**-क्षारेण स्वर्जिकादिना युक्तं जलं कफस्य चयमाशु भिनत्ति ॥ १५ ॥

**प०**-क्षाराम्बु क्षारनिश्चोतनं ततः गण्डूषधारणात् श्लेष्मणः कफस्य चयं सञ्चयमाशु शीघ्रं भिनत्ति विदारयति ॥ १५ ॥

हे०-श्लेष्मसंचये गंडूषमाह-आशु क्षारांब्विति । क्षारांबु क्षारगालनोदकम् ॥ १५ ॥

**सुखोष्णोदकगंडूषैर्जायते वक्त्रलाघवम् ॥ १६ ॥**

**स०**-कोष्णपानीयगंडूषैर्वदनलाघवं संपद्यते १६॥

**प०**-सुखोष्णोदकेन ये गण्डूषास्तैर्धारितैर्वक्त्रस्यास्यस्य लाघवं लघुत्वं वातश्लेष्मत्वाज्जायते॥१६॥

हे०-मुखगौरवे गंडूषमाह-सुखोष्णोदकेति ॥१६॥

**निवाते सातपे स्विन्नमृदितस्कंधकंधरः ।**
**गंडूषमपिबन् किंचिदुन्नतास्यो विधारयेत् १७॥**

**स०**-वातरहिते रव्यालोके स्थाने। स्कंधौ च कंधरा च स्कंधकंधरम्। पूर्वं स्विन्नं पश्चान्मृदितं स्कंधकंधरं यस्य स एवम्। तथा गंडूषमपिबंस्तथा किंचिदुन्नतं मुखं यस्य स एवंविधः सन् गंडूषं धारयेत्१७॥

**प०**-निवाते विगलितमारुते सातपेऽग्न्यार्कातपसंयुक्ते पुमान् स्विन्नमृदितस्कन्धकन्धरः किञ्चिदुन्नतास्योऽपिबन्ननभ्यवहरन् गण्डूषं धारयेत्॥१७॥

हे०-गंडूषविधिमाह-निवात इति । संग्रहे तु सुखोपविष्टस्तन्मनाः स्विन्नमृदितगलकपोलललाटदेशो वरमध्यावरां क्रमाद्वक्त्रार्धभागत्रि[illegible] [illegible] कल्कं वा कोलप्रमाणं, [illegible] तु [illegible] कंठं च संचारयेत् । अयमेव [illegible] । पुनश्चास्य स्वेदमर्दनान्याचरेत् । [illegible] प्रतिपद्यत इति ॥ १७ ॥

कियंतं कालमित्याह-

**कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताऽथवा ।**
**असंचार्यो मुखे पूर्णं गंडूषः कवलोऽन्यथा॥१८॥**

**स०**-कफेन पूर्णं कफपूर्णमास्यं यस्य स कफपूर्णास्यस्तस्य भावः कफपूर्णास्यता यावद्भवेत् । अथवा स्रवत् घ्राणाक्षि यस्य स स्रवद्घ्राणाक्षः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । तस्य भावः स्रवद्घ्राणाक्षता यावत्स्यात्तावद्गंडूषान् धारयेत् । [illegible] गंडूषाः पंच सप्त धारयितव्या यावत्स्वास्थ्यं स्यात् । मुखे पूर्णे सति यः संचारयितुमशक्यः स्यात् स गंडूष उच्यते । अन्यथा च संचारयितुं शक्यते मुखेऽपूर्णे [illegible] स कवल उच्यते ॥ १८ ॥

**प०**-यावत्कफपूर्णास्यता स्रवद्घ्राणाक्षता । अथवा स्कन्धश्च कन्धरा च स्कन्धकन्धरं यस्य कन्धरा ग्रीवा, प्रथमं स्विन्नं पश्चान्मृदितं स्कन्धकन्धरं यस्य । किञ्चिदुन्नमितमास्यं मुखं येन स तथाविधः । कफेन पूर्णमास्यं यस्य तस्य भावः कफपूर्णास्यता श्लेष्मपरिपूर्णकपोलता । स्रवद्घ्राणाक्षि यस्य तस्य भावः स्रवद्घ्राणा क्षतास्रवन्नासिकानेत्रत्वम । एवं पञ्चसप्तवारान् गण्डूषान् धारयेत् । यावद्वा सम्यक् धूमपीतलिङ्गोत्पत्तिस्तस्य स्वास्थ्येन योगमुपलक्षयेत्। गण्डूषधारणमिति सङ्ग्रहोक्तिस्तेषां यथास्वं प्रतिकुर्वते मुखे वक्त्रे क्वाथः स्नेहक्षीरादिभिः पूर्णे सत्यसञ्चार्यो गण्डूष उच्यते । अन्यथा पुनः कवलक्वाथादिभिः किञ्चित्पूर्णे मुखे गलकपोले पर्यायेण सञ्चार्यः कवल इति । अयमेव कवलगण्डूषयोर्विशेषः ॥१८॥

हे०-गंडूषधारणविधिमाह-कफपूर्णास्यतेति । संग्रहे भेषजस्यानुपहतिः कफेन एवं त्रीन् पंच सप्त वा गंडूषान् धारयेत् । यावद्वा सम्यक् धूमपीतलिंगोत्पत्तिः तस्य स्वास्थ्येन योगं, जाड्यरसाज्ञानारुचिप्रसेकोपलेपैरयोगः, मुखशोषपाकक्लमारुचिहृदय[illegible]रसादकर्णनादैरिति योग

मुपलक्षयेत् । तेषां यथास्वं प्रतिकुर्वीतेति । गंडूपकवलयोर्भेदमाह—असंचार्य इति । अपूर्णे किंचिदूने संग्रहे तथैवोक्तत्वात् कवलोऽन्यथा कंठे च संचार्यः ॥ १८ ॥

**मन्याशिरःकर्णमुखाक्षिरोगाः**
**प्रसेककंठामयवक्त्रशोषाः ।**
**हृल्लासतंद्रारुचिपीनसाश्च**
**साध्या विशेषात्कवलग्रहेण ॥ १९ ॥**

स०—मन्यादीनां रोगेण संबंधः । प्रसेकादीनां द्वंद्वः । आमयशब्दस्य कंठेण संबंधो विविधकंठरोगसूचनार्थः । मन्यारोगादयो विशेषेण कवलधारणेन साध्याश्चिकित्स्याः ॥ १९ ॥

प०—कवलग्रहणं गण्डूषभेदेन मन्याशिरःकर्णादिरोगविशेषादत्यर्थं साध्याः । तेन साधयितुं शक्यन्ते । मन्ये द्वे मर्मणी स्मृते । प्रसेकः श्लेष्मानिरसनम् । कण्ठामया गलरोगाः । वक्त्रशोषः आस्यशोषः ॥ १९ ॥

हे०—कवलस्य विषयमाह—मन्याशिर इति ॥ १९ ॥

**कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् २०**

स०—कल्कादिभेदेन प्रतिसारणं त्रिधा स्यात् । कल्को जलादिपिष्टः । माक्षिकादिना यद्द्रवीक्रियते द्रव्यं सा रसक्रिया । चूर्णं प्रथितमेव ॥ २० ॥

प०—त्रिविधं त्रिप्रकारं प्रतिसारणं प्रयुञ्ज्यात् । कफरोगे गण्डूषविहितौषधैस्त्रिविधं त्रिप्रकारं प्रतिसारणं कल्करसक्रियाचूर्णभेदेन । कल्को द्रवद्रव्यैः पिष्टचूर्णैर्भण्यते । तथा चागमः । कल्कः पिष्टो द्रवाप्लुत इति । रसक्रियायाः क्वाथकल्केन कथितैरौषधैः सान्द्रीभूतैर्लेहेन रसक्रियोच्यते । चूर्णः शुष्क एव पिष्टः ॥ २० ॥

हे०—प्रतिसारणमाह—कल्को रसेति । रसक्रिया अवलेहः ॥ २० ॥

**युंज्यात्तत् कफरोगेषु गंडूषविहितौषधैः ॥ २१ ॥**

स०—तत्प्रतिसारणं श्लेष्मरोगेषु गंडूपोक्तैरौषधैर्योज्यम् । सामान्योक्तावपि कफरोगविषयत्वात् शोधनगंडूषोक्तैरिति बोध्यम् ॥ २१ ॥

प०—तत् त्रिविधमपि कफरोगेष्वभिष्यन्न्थगलशुण्डादिषु युंज्यात् । गण्डूषविहि गण्डूषोदितैर्द्रव्यैः ॥ २१ ॥

हे०—अथ प्रतिसारणविषयद्रव्याणि चाह—युंज गंडूषविहितैः शोधनगंडूषोक्तैः प्रतिसारणमंगुल्या संग्रहे तु तदभिष्यंदाधिमंथगलशुंडिकादिषु प्रयोज्यम् । अतिप्रसारणाद्रूपाशोषदाहक्लेदशोफाद तीति ॥ २१ ॥

**मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च सः ।**

स०—मुखालेपस्त्रिप्रकारो दोषघ्नो विषघ्न करश्च ॥ २२ ॥

प०—मुखालेपस्त्रिधा त्रिप्रकारः । दोषह पित्तश्लेष्मघ्नः । विषहा विषघ्नः । वर्णकृद्वर्ण्यः नसारी सः ॥ २२ ॥

हे०—मुखालेपभेदानाह—मुखालेप इति।दोषघ्नो, वर्ण्यश्चेति त्रिधा ॥ २२ ॥

**उष्णो वातकफे शस्तः शेषेष्वत्यर्थशीतलः**

स०— स च मुखालेपो वातश्लेष्मण्युष्णो शेषेषु पित्ते वातपित्ते विषे च शिशिरो हितः । त्रिप्रमाणः ॥ २३ ॥

प०—स मुखालेपः उष्णो वातकफे तद्विषये वातकफ इति व्यस्ते समस्ते चेति विज्ञेयः वातकफे चोष्णः वाते कफे संसृष्टेऽप्युष्ण शेषेषु पित्तघ्नविषघ्नकरणेष्वत्यर्थशीतलो मुख शस्तः ॥ २३ ॥

हे०—वातघ्नकफघ्नावुष्णौ कार्यावित्याह—उष्णो वा इति । पित्तघ्नविषघ्नवर्ण्याः शीताः कार्या इत्याह—शेषे हीनमध्योत्तमभेदेन ॥ २३ ॥

कथमित्याह—

**त्रिप्रमाणश्चतुर्भागत्रिभागार्धांगुलोन्नतिः ॥**

स०—चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः । उ रुत्सेधः ॥ २४ ॥

प०—स मुखालेपस्त्रिप्रमाणः।त्रिविधं प्रमाणं च चतुर्भागश्च त्रिभागश्चार्धं च तान्यङ्गुलस्य णोन्नतिरुत्सेधो यस्य स तथाविधः । एवमङ्गुल

ाङ्गोत्सेधः कनीयान् । मुखालेपोऽङ्गुलत्रिभागो-त्सेधो मध्यमः । अर्धाङ्गुलोत्सेधः प्रकृष्टो मुखा-लेपः ॥ २४ ॥

हे०—मुखालेपप्रमाणमाह—त्रिप्रमाण इति ॥ २४ ॥

**अशुष्कस्य स्थितिस्तस्य शुष्को दूषयति च्छविम् ।**
**तमार्द्रयित्वाऽपनयेत्तदंतेऽभ्यंगमाचरेत् ॥२५ ॥**

स०—तस्य मुखालेपस्याऽशुष्कस्य स्थितिः। शुष्कस्तु मुखालेपश्छविं त्वचं दूषयति । मुखालेपमार्द्रयित्वाऽपसारयेत्। तस्यांते तस्मिन्नपनीतेऽभ्यंगं कुर्यात् २५

प०—तस्य मुखालेपस्य सतः स्थितिः स्थानम् । न च शुष्यन्नुपेक्षितव्य इत्यर्थः । यस्माच्छुष्कः सन् त्वचं दूषयति । तं शुष्कं मुखालेपमार्द्रयित्वाऽपनयेत् । आर्द्रं कृत्वा पश्चादपनयेत् निवारयेत् । तदन्ते मुखालेपान्तेऽभ्यङ्गं घृतादिभिराचरेत् कुर्यात् ॥२५॥

हे०—मुखालेपावधिमाह—अशुष्कस्येति । मुखालेपापनयनमाह—तमार्द्रयित्वेति ॥ २५ ॥

**विवर्जयेद्दिवास्वप्नभाष्याऽग्न्यातपशुक्क्रुधः२६।**

स०--मुखालेपी दिवास्वप्नादीन् वर्जयेत् । अहःस्वप्नादिसेवनात् कंडूत्वक्शोफपीनसदृष्ट्युपघातादिभयं स्यात् ॥ २६ ॥

प०—मुखालेपे दिवास्वप्नं तथा भाष्यमध्ययनादिकमग्न्यातपं वह्निसन्तापं शुचं शोकं क्रोधं कोपं च विवर्जयेत् त्यजेत् ॥ २६ ॥

हे०—मुखालेपवर्ज्यान्याह—विवर्जयेदिति । शुक् शोकः ॥ २६ ॥

**न योज्यः पीनसेऽजीर्णे दत्तनस्ये हनुग्रहे ।**
**अरोचके जागरिते ॥ २७ ॥**

स०—पीनसादौ मुखालेपो न योज्यः ॥ २७ ॥

प०—स मुखालेपः पीनसादिषु न योज्यो न दातव्यः । पीनसे प्रतिश्याये अजीर्णेऽपरिणते ह्यस्तनान्ने दत्तनस्ये दत्तं नस्यं यस्य तस्मिन् । हनुग्रहे वातव्याधौ अरोचके अरुचौ जागरिते रात्रावसुप्ते न योज्यः ॥ २७ ॥

हे०—पीनसादौ मुखालेपं निषेधति—न योज्य इति ॥ २७ ॥

**स च हंति सुयोजितः ।**
**अकालपलितव्यंगवलीतिमिरनीलिकाः ॥२८॥**

स०—स च मुखालेपः सुयोजितो विधिना नियोजितोऽकालपलितादीन् पराकरोति ॥ २८ ॥

प०—स मुखालेपः सुयोजितः सम्यक्प्रयुक्तोऽकालपलितादीन् व्याधीन् हन्ति । अकालपलितं वयस्थस्य या जरा । अकाले वल्यः अकाले त्वक्सङ्कोचाः । तिमिरं नेत्ररोगः । नीलिका नीलच्छाया ॥ २८ ॥

हे०—मुखालेपस्य फलमाह--स चेति । नीलिका लिङ्गनाशोपद्रवः॥ २८ ॥

**कोलमज्जा वृषान्मूलं शावरं गौरसर्षपाः ।**
**सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ्निस्तुषा यवाः**
**दर्भमूलहिमोशीरशिरीषमिशितंडुलाः ।**
**कुमुदोत्पलकह्लारदूर्वामधुकचंदनम् ॥**
**कालीयकतिलोशीरमांसीतगरपद्मकम् ।**
**तालीसगुंद्रापुंड्राह्वयष्टीकाशनतागुरुः ।**
**इत्यर्धार्धोदिता लेपा हेमंतादिषु षट् स्मृताः२९**

स०—कोलमज्जादयोऽर्धश्लोकोक्ताः षण्मुखालेपा इत्येवं षट्सु हेमंतादिषु ऋतुषु स्मृताः । मुनीन्द्रैरिति शेषः । तत्र बदरमज्जादयो हेमंते । व्याघ्रयादयः शिशिरे । दर्भमूलादयो वसंते । कुमुदादयो ग्रीष्मे । कालीयकादयः प्रावृषि । तालीसादयः शरदि ॥२९॥

प०—कोलमज्जेत्यादि । पश्चाल्लिखितं तदर्थमाह-इत्यनेनानन्तरोक्तेन प्रकारेणार्धचोदिता अर्धश्लोकेन समापिता अर्धश्लोकविहिता । मुखालेपा हेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाख्येषु ऋतुषु षट्संख्याः क्रमाद्यथासङ्ख्येन स्मृता उक्ता मुनिना । कोलमज्जा बदरमज्जा । वृषान्मूलं वासामूलम् । शावरं श्वेतरोध्रः । गौरसर्षपाः श्वेतसर्षपाः । सिंहीमूलं बृहतीमूलम् । तिलाः कृष्णतिला नतु श्वेताः । अरुणा वा । दार्वीत्वक् दारुहरिद्रात्वक् । निस्तुषा विगततुषा यवाः । दर्भमूलं कुशमूलम् । हिमं

१ "न योज्य" इति पाठा० ।

श्वेतचन्दनम् । मिशिः सितपुष्पा । तन्दुलाः शालितन्दुलाः । उत्पलं नीलोत्पलम् । कल्हारो गन्धसोमकः । दूर्वा शाद्वला । मधुकं मधुयष्टी । तालीसं तालीसपत्रम् । गुन्द्रा गुच्छमूलिका । पुण्ड्रकं पुण्डरीकम् । यष्टी मधुयष्टिका । सा श्वेतचामरपर्याया । नतं तगरम् । अगुरुः जोङ्गकापरपर्यायः ॥ २९ ॥

हे०—वर्ण्यमुखालेपस्य तु भेदेन द्रव्याण्याह—कोलमज्जेति । शाबरं लोध्रं, तन्दुलाः शालीनां, कालीयकं पीतचन्दनम् ॥ २९ ॥

**मुखालेपनशीलानां दृढं भवति दर्शनम् ।**
**वदनं चाऽपरिम्लानं श्लक्ष्णं तामरसोपमम् ३०॥**

स०—मुखालेपाभ्यासवतां नराणां दर्शनं दृष्टिर्दृढं स्यात् । मुखं च विकसितमिव तथा कोमलं पद्मतुल्यं च जायते ॥ ३० ॥

प०—मुखालेपनशीलानां नराणां दृढं स्थिरदर्शनं दृष्टिर्भवति । वदनं मुखमपरिम्लानमनष्टकान्तिश्लक्ष्णमपरुषम् । तामरसोपमं पद्मकान्तितुल्यम्॥३०॥

हे०—वर्ण्यमुखालेपशीलनस्य फलमाह—मुखालेपनमिति ॥ ३० ॥

**अभ्यंगसेकपिचवो बस्तिश्चेति चतुर्विधम् ।**
**मूर्धतैलम् ॥ ३१ ॥**

स०—अभ्यंगादिभेदात् चतुर्धा शिरसि तैलं स्यात् ॥ ३१ ॥

प०—मूर्धतैलं तच्चतुष्प्रकारमभ्यङ्गादिभेदेन । तत्राभ्यङ्गादयः प्रसिद्धाः लोके । अभ्यङ्गोऽत्र म्रक्षणम् । सेकः परिषेकः । पिचुः कार्पासकृतो वटकाकृतिः । स्नेहयुक्तो मूर्धनि धृतो बस्तिः शिरोबस्तिरिहैव वक्ष्यमाणः ॥ ३१ ॥

हे०—मूर्धतैलभेदानाह—अभ्यंगेति ॥ ३१ ॥

**बहुगुणं तद्विद्यादुत्तरोत्तरम् ॥ ३२ ॥**

स०—तच्चोत्तरोत्तरं बहुगुणं विद्यात् । अभ्यंगात् सेको बहुगुणस्ततोऽपि पिचुस्तस्मादपि बस्तिरिति क्रमेण ॥ ३२ ॥

प०—तच्च मूर्धतैलमुत्तरोत्तरं बहुगुणं विद्यात् । तत्राभ्यङ्गो गुणवान् । तस्मादपि परिषेको बहुगुणः । तस्मात् पिचुर्गुणवत्तरः । सर्वेषां बस्तिर्गुणवत्तमः । मूर्धतैलमित्युपलक्षणमात्रं मूर्धघृतमपि बहुगुणमुत्तरोत्तरं विद्यात् ॥ ३२

हे०—अभ्यङ्गादीनां तारतम्यमाह—बहुगुणमि

**तत्राऽभ्यंगः प्रयोक्तव्यो रौक्ष्यकंडूमलादिषु**

स०—तत्र तेषु मध्ये रौक्ष्यादिष्वभ्यंगः कार्यः

प०—तत्र तेष्वभ्यङ्गादिषु मध्यादभ्यङ्गः रौ दिषु प्रयोक्तव्यः ॥ ३३ ॥

हे०—अभ्यङ्गस्य विषयमाह—तत्राभ्यंग इति ॥

**अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ॥**
**परिषेकः ॥ ३४ ॥**

स०—अरूंषिकादिषु परिषेकः ॥ ३४ ॥

प०—परिषेकः स्नेहोऽरूंषिकादिषु प्रयोक्त अरूंषिका शिरोरोगः ॥ ३४ ॥

हे०—सेकस्य विषयमाह—अरूंषिकेति ॥ ३

**पिचुः केशशातस्फुटनधू**
**नेत्रस्तंभे च ॥ ३५ ॥**

स०—केशशातादिषु पिचुः प्रयोक्तव्यः ॥

प०—पिच्छादिपिचुः केशशातादिषु प्रयो तथा नेत्रस्तम्भे अर्दितायां च ॥ ३५ ॥

हे०—पिचोर्विषयमाह—पिचुरिति । शातः धूपनं धूमोद्गम इव पिचुः स्नेहार्द्रपिचुधारणम् ॥ ३

**बस्तिस्तु प्रसुप्त्यर्दितजाग**
**नासाऽऽस्यशोषे तिमिरे शिरोरोगे च दारु**

स०—बस्तिः पुनः प्रसुप्त्यादौ योज्यः ॥

हे०—बस्तेर्विषयमाह—बस्तिरिति । प्रसुप्तिः स्पर्श जागरो निद्रानाशः ॥ ३६ ॥

**विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदुं**
**शुद्धाक्तस्विन्नदेहस्य दिनांते गव्यमाहिषम्**
**द्वादशांगुलविस्तीर्णं चर्मपट्टं शिरःसमम् ।**
**आकर्णबंधनस्थानं ललाटे वस्त्रवेष्टिते ।**
**चैलवेणिकया बद्ध्वा माषकल्केन लेपयेत्**

स०—तस्य शिरोबस्तेर्विधानमुच्यते । नि स्योपविष्टस्य नरस्य । क्व । पीठे जानुतुल्ये तथा

न कठिने। किंभूतस्य । शुद्धो वमनादिनाऽक्त-स्तैलादिना स्विन्नः स्वेदेन देहो यस्य तस्य शुद्धाक्त-स्विन्नदेहस्य। कदा। दिनांतेऽपराह्णे विभावर्यां वा। चर्मपट्टं गव्यं माहिषं वा तथा द्वादशांगुलविस्तीर्णं तथा शिरस्तुल्यं तथाऽकर्णं कर्णं यावद्बंधनस्थानं यस्य तदेवंविधं चर्मपट्टं चैलवेणिकया संयम्य माष-कल्केन लेपयेत्। कथम् । ललाटे वस्त्रवेष्टिते। संग्रहे तूक्तम्। अथ शुद्धतनोः सायं रात्रौ वा निवातस्थस्य स्वभ्यक्तस्विन्नस्य सोपाश्रयासनोपविष्टस्य केशांते श्लक्ष्णं त्र्यंगुलं माषपिष्टेन सूक्ष्मेण सद्यः सुखांबुना मृदितेनोभयतः प्रदिग्धं वस्त्रपट्टं बध्नीयात्। तत-स्तस्योपरि संधाय बस्तिं बस्तिमूलं च दृढमवलीकं समं चैलवेणिकया बद्ध्वा पुनर्माषपिष्टेनापरिस्रावि कृत्वा यथाव्याधिदोषदूष्यहितं सिद्धमन्यतमं स्नेहं सुखोष्णमा-सेचयेदिति ॥ ३७ ॥

प०—तस्य शिरोबस्तेर्विधिर्विधानमितिकर्तव्यता निषण्णस्य पुंसः शिरोबस्तिर्देयः । स चाश्रयस्य पीठे आसने जानुसमे जानुतुल्ये तथा मृदावक-ठिने पूर्वं शुद्धः पश्चादभ्यक्तः स्विन्नश्च देहो यस्या-सौ शुद्धाक्तस्विन्नदेहः तस्य दिनान्ते अह्नः पारि-णामे सायं गव्यं माहिषं वा चर्मपट्टं द्वादशाङ्गु-लविस्तीर्णं द्वादशाङ्गुलप्रमाणविस्तारं शिरःसमं शिरःप्रमाणं कर्णसमीपबन्धनस्थानं यस्य तत्तथा-भूतं ललाटे बद्ध्वा वस्त्रवेष्टिते वस्त्रेण वेष्टितं यस्य तस्मिन् तथाभूते सति चर्मपट्टं चैलवेणिकया बद्ध्वा पुनर्माषकल्केन माषपिष्टेन लेपयेदपरिस्रावं कुर्यात् ॥ ३७ ॥

हे०—दारुणे तीक्ष्णे शिरोबस्तिविधिमाह-विधिस्तस्येति। ललाटशब्देन केशरहितः प्रदेशः तस्मिन् वस्त्रवेष्टिते आक-र्णं कर्णादधो न वेष्टयेदित्यर्थः। आबन्धनस्थानं यावति प्रदेशे बस्तेर्बन्धनं तावन्तं प्रदेशं तस्मिन् वस्त्रवेष्टिते आकर्णं कर्णादधो न वेष्टयेदित्यर्थः । आबन्धनस्थानं यावति प्रदेशे बस्तेर्बंधनं तावन्तं प्रदेशं वेष्टयेत् ॥ ३७ ॥

**ततो यथाव्याधि शृतं स्नेहं कोष्णं निषेचयेत्। ऊर्ध्वं केशभुवो यावद् द्व्यंगुलम् ॥ ३८ ॥**

स०—तत एवं कृते सति व्याधिवशेन पक्वं स्नेहं कोष्णमपरिच्छिद्रेणाऽवसेचयेत् । केशभूमेरूर्ध्वमितः [illegible] द्व्यंगुलं यावत् ॥ ३८ ॥

प०—ततोऽनन्तरं शिरसि चर्मपट्टे बद्धे यथा-व्याधि व्याध्यनतिक्रमेण शृतं पक्वं स्नेहं चतुर्वि-धमपि निषेचयेत् । कोष्णं किंचिदुष्णं केशभूमेरूर्ध्वं यावदङ्गुलं भवेत् तावत्स्नेहं निषेचयेत् ॥ ३८ ॥

हे०—ऊर्ध्वं शिरःसमं शिरःपरिमितमित्यर्थः । [illegible] नवस्त्रमप्युभयतो माषकल्केन लेपयेत् । उक्तं च संग्रहे केशान्ते श्लक्ष्णं त्र्यंगुलं सुसूक्ष्मेण माषपिष्टेन [illegible] मृदितेनोभयतः प्रदिग्धं वस्त्रपट्टं बध्नीयादिति ॥ ३८ ॥

स च स्नेहः कियत्कालं धार्य इत्याह—

**धारयेत्तं [illegible] ।**

**आवक्त्रनासिकोत्क्लेदात् ॥ ३९ ॥**

स०—तं च स्नेहं यावद्वक्त्रनासिकास्रुतिः [illegible] द्धारयेत् ॥ ३९ ॥

प०—तं च स्नेहं तावद्धारयेत् । आवक्त्रनासिको-त्क्लेदा यावन्मुखनासिकास्रुतिर्जायते ॥ ३९ ॥

हे०—बस्तिधारणावधिमाह—धारयेदिति ॥ ३९ ॥

**दशाऽष्टौ षट् चलादिषु ।**

**मात्रासहस्राणि ॥ ४० ॥**

स०—चल आदिर्येषां ते चलादयस्तेषु यथासंख्यं दशाष्टौ षट् मात्रासहस्राणि यावत्स्नेहं धारयेत् । वाते दशमात्रासहस्राणि पित्तेऽष्टौ मात्रासहस्राणि कफे ष-ण्मात्रासहस्राणीत्यर्थः ॥ ४० ॥

प०—तं च स्नेहं वातजेषु विकारेषु दशमात्रा-सहस्राणि धारयेत् । पित्तजेष्वष्टौ सहस्राणि कफजेषु रोगेषु षट्सहस्राणि ॥ ४० ॥

**अरुजे त्वेकम् ॥ ४१ ॥**

स०—अरुजे तु स्वस्थवृत्त एकं मात्रासहस्रं धा-रयेत् ॥ ४१ ॥

प०—अरुजे स्वस्थकर्मणि सहस्रं मात्राणां धारयेत् ॥ ४१ ॥

हे०—अरुजे त्वेकं मात्रासहस्रकं मात्रामानं क्लेदासंभवे क्लेदे स्वर्वागपि निवर्तते ॥ ४१ ॥

स्कंधादि मर्दयेत् ।

मुक्तस्नेहस्य ॥ ४२ ॥

स०—मुक्तस्नेहस्याऽपनीतशिरोबस्तेः स्कंधशिरोग्रीवादि मर्दयेत् । स्नेहबस्तिर्हि स्नेहशब्देनाऽत्र गृह्यते। तत उष्णोदकोपचारी स्यादित्यादिकमाचरेत् तत्र ह्यवोचत् । सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रम इति ॥ ४२ ॥

प०—ततोऽनन्तरं मुक्तस्नेहस्यापनीतस्नेहस्य४२॥

हे०—बस्त्यन्ते कृत्यमाह—स्कन्धादीति ॥ ४२ ॥

परमं सप्ताहं तस्य सेवनम् ॥ ४३ ॥

स०—तस्य च स्नेहबस्तेः परमं सेवनं सप्त दिनानि। तस्मात्त्रिपंचसप्त वाऽहानि कार्यः शिरोबस्तिरित्यवतिष्ठते ॥ ४३ ॥

प०—सप्ताहं सप्त दिनानि सेवनं धारणम् ॥४३॥

हे०—बस्त्यावृत्त्यवधिमाह—परममिति । संग्रहे तु उष्णांबुना स्नानं च यथार्हं भोजयेत् । स्नेहोक्तं चास्याचारमादिशेत् । एवं त्रीणि पञ्च सप्त वा दिनानि योजयेत् । इति । तथा सापाश्रयं पीठं सायं रात्रिर्वा पीठकालः वेदनोपशमो वाऽवधिरिति ॥ ४३ ॥

धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ।
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥४४॥

स०—कर्णपूरणं धारयेत् । किं कुर्वन् । कर्णमूलं विमर्दयन् । कियत्कालं यावत्पीडाया मार्दवं भवेत् । स्वस्थचित्ते तु मात्राशतं यावद्भिर्भूयात् ॥ ४४ ॥

प०—कर्णे सरुजे पूरणं स्नेहं धारयेत् । कर्णमूलं विमर्दयेत् । कर्णे निकटं परिमर्दयेत् । यावद्रुजः पीडाया मार्दवं मृदुता स्यात् भवेत् । अवेदने स्वस्थवृत्ते कर्णे मात्राशतं धारयेत् ॥ ४४ ॥

हे०—कर्णपूरणे विधिं मानं चाह-धारयेदिति ॥ ४४॥

अथ मात्रायाः किं प्रमाणमित्याह—

यावत्पर्येति हस्ताग्रं दक्षिणं जानुमंडलम् ।
निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ४५

स०—दक्षिणं हस्ताग्रं कर्तृ जानुमंडलं दक्षिणं पर्येति परिवर्तते । दक्षिणशब्दोऽत्र काकाक्षिगोलकन्यायेन द्वयेनाऽपि युज्यते । कियत्कालेनेत्याह निमेषोन्मेषकालेन समं न तु विश्रम्य सा मात्रा स्मृत मुनिभिरिति शेषः ॥ ४५ ॥

प०—यावता कालेन हस्ताग्रं करप्रापितं दक्षिण मण्डलं जानुनः पर्येति परितः समन्तादेति आगच्छति । अक्ष्णोर्निमेषोन्मेषकालेन समं तुल्य निमेषोन्मेषणे नेत्रयोर्विकाससङ्कोचने तेन काले समा तुल्या मात्रा मुनिभिः स्मृता ॥ ४५ ॥

हे०—मात्रालक्षणमाह—यावदिति ॥ ४५ ॥

कचसदनसितत्वपिंजरत्वं
परिफुटनं शिरसः समीररोगान् ।
जयति जनयतींद्रियप्रसादं
स्वरहनुमूर्धबलं च मूर्धतैलम् ॥४६ ॥

स०—कचानां सदनादिभिः संबंधः । परिफुट कचानामेव प्रकृतत्वात् । शिरसो मरुदामयांश्च हंति इंद्रियाणां चक्षुरादीनां प्रसादं जनयति । तथा स्वरादिबलं च मूर्धतैलं जनयति ॥ ४६ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचिताया-
मष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां
द्वाविंशतितमोध्यायः ॥ २२ ॥

प०—कचसदनं तथा सितत्वं केशानां तथ पिञ्जरत्वं कपिशत्वं तथा परिपुटनं शिरसः मूर्ध्नः समीररोगान् वातव्याधीन् जयत्युपशमयति तथेन्द्रियाणां चक्षुरादीनां प्रसादं स्वविषयग्रहण सामर्थ्यं तथा स्वरस्य हन्वोः शिरसो बलमुपजन यतीति भद्रम् ॥ ४६ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने
गण्डूषविध्यध्यायो द्वाविंशः ॥ २२ ॥

हे०—मूर्द्धतैलशीलनस्य फलमाह—कचसदनेति॥४६॥

इति हेमाद्रिटीकायामायुर्वेदरसायने गण्डूषादिप्रकरणं सामस्त्येन निरूपितम् ॥ २२ ॥

# त्रयोविंशोऽध्यायः।

त्रयोविंशाध्यायारंभो जत्रूर्ध्वरोगप्रस्तावाल्लोचने आश्च्योतनविधानप्रदर्शनार्थमित्याह—

**अथाऽत आश्च्योतनांजनविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

स०—आश्च्योतनं चांऽजनं च तयोर्विधिर्यस्मिन्नध्याये स एवम् । शेषं पूर्ववत् ॥ १ ॥

प०—अस्यारम्भेऽयं सम्बन्धः । यस्मादनन्तरमुक्तं जनयतीन्द्रियप्रसादमूर्धतैलमिति सर्वेषां चेन्द्रियाणां प्रधानमिन्द्रियं चक्षुरतश्चक्षुषः परिरक्षार्थमध्यायस्यारम्भः आश्च्योत्यते तत्समन्तात् सार्यते येनाक्षि तथाऽञ्जयेत्सेचयेत्।तदाश्च्योतनमञ्जनं तस्य विधिर्विधानमितिकर्तव्यतारूपोऽध्यायस्तं व्याख्यास्यामः॥ १ ॥

हे०—अथेत्याश्च्योतनांजनविधिमध्यायं व्याख्यातुं प्रतिजानीते ॥ १ ॥

**सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम् ।**
**रुक्तोदकंडूघर्षाश्रुदाहरोगनिबर्हणम् ॥ २ ॥**

स०—सकलानामपि नयनामयानां प्रथममाश्च्योतनं परिषेको हितम् । यतस्तदाश्च्योतनमुपयुक्तं रुजादिघ्नं स्यात् । संग्रहे चोक्तम् । अव्यक्तेष्वेवंगुणमेव पक्ष्मपरिहारेणाऽक्षिकोशालेपनं तच्च बिडालकसंज्ञकमिति २

प०—सर्वेषां समग्राणामक्षिरोगाणामादौ प्रथमत एवाश्च्योतनं हितम् । तच्च रुक्तोदादिनिबर्हणं रुगव्युच्छिन्नं शूलं तोदो व्यथा नानारूपा । कण्डूः कण्डूयनम् । अक्षिपुटयोः परस्परं रुक्करः श्लेषो घर्षः अश्रुदाहाख्यः । रागो लोहितत्वम् । एतेषामाश्च्योतनं निबर्हणं प्रशमनम् ॥ २ ॥

हे०—आश्च्योतनस्य विषयमाह—सर्वेषामिति । संग्रहे तु नानाद्रव्यकल्पनया च रागाश्रुघर्षरुग्दाहतोदभेदशोफकंडूघ्नम् । अव्यक्तेष्वेवंगुणमेव पक्ष्मपरिहारेणाक्षिकोशालेपनं तच्च पुनर्बिडालसंज्ञं तयोरकालो रात्रिः कालस्तु सर्वमहर्दिनोत्पात्तिरिति ॥ २ ॥

**उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः।**

स०—तदाश्च्योतनं मरुत्युष्णम् । कफे किंचिदुष्णम् । रक्ते पित्ते च शीतं हितम् ॥ ३ ॥

प०—तदाश्च्योतनम् उष्णं वाते वातविषये शस्तम् । कफे कफविषये कोष्णं किंचिदुष्णमाश्च्योतनं [illegible] तथा पित्ते तद्विषये शीतमाश्च्योतनं हितम् ॥ ३ ॥

हे०—आश्च्योतनस्य दोषभेदेनोष्णत्वादि [illegible] ॥ ३ ॥

संप्रत्याश्च्योतनस्य विधिमाह

**निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ।**
**शुक्त्या प्रलंबयाऽन्येन पिचुवर्त्या कनीनिके ।**
**दश द्वादश वा बिन्दून् द्व्यंगुलादवसेचयेत् ।**
**ततः प्रमृज्य मृदुना चैलेन कफवातयोः ।**
**अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ ४ ॥**

स०—निवातस्थानस्थितस्याऽऽतुरस्य [illegible] पाणिनोन्मील्य लोचनमपाङ्गदेशे [illegible] दक्षिणकरेण पिचुवर्त्या शुक्त्या [illegible] वा बिंदून् द्व्यंगुलान्नातिनिकटान्नातिदूरात् [illegible] ऽवसेचयेत् । तत इति । [illegible] प्रमृज्य शोधयित्वाऽन्येन शोधनाद्भिन्नेन [illegible] नाऽक्षि मृदु स्वेदयेन्नातिशयेन । कयोर्विषयोः । वात कफयोः । न तु पित्तरक्तयोरित्यर्थः ॥ ४ ॥

प०—निवातस्थपुंसः कनीनिके नासासन्ने [illegible] वयवे दश द्वादश वा बिन्दूनवसेचयेत् [illegible] वामेन सव्येन पाणिना हस्तेनोन्मील्य विवृतं कृत्वा लोचनं चक्षुर्विकारस्यान्येन दक्षिणेन पाणिना पिचुवर्त्या प्रलम्बया शुक्त्या भाजनविशेषेण [illegible] द्व्यङ्गुलादूर्ध्वं सेचयेत् । अन्यथा बिन्दुपातेन रागादयो जायन्ते ततोऽक्षिसेचनानन्तरं मृदुना चैलेन वस्त्रेणाक्षि प्रमृज्य [illegible] मृदुना चैलेन कोष्णपानीयप्लुतेनाक्षि मृदु [illegible] स्वेदयेत् । कफवातविषये न पित्तविषये [illegible] रक्ते तयोः परिशोधनमात्रं कार्यं न स्वेदः ॥ ४

हे०—आश्च्योतनविधिमाह—निवातस्थस्येति । [illegible] दक्षिणेन हस्तेन । शुक्त्या प्रलम्बया [illegible] या कनीनके नासासंलग्ननेत्रान्ते [illegible] द्व्यंगुलमन्तरं कृत्वा संग्रहे तु [illegible] ताडनाद्रागादयो जायन्ते इति । आश्च्योतनानन्तरं [illegible]

माह–तत इति । प्रमार्जनं सर्वत्र कफवातयोस्त्वन्येन चैलेन स्वेदनम् ॥ ४ ॥

**अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाऽक्षिसेचनम् ।**
**अतिशीतं तु कुरुते निस्तोदस्तंभवेदनाः ॥**
**कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।**
**विकारवृद्धिमत्यल्पं संरंभमपरिस्रुतम् ॥ ५ ॥**

स०–अत्यर्थमुष्णमतितीक्ष्णं चाऽऽश्चोतनं रुजे रागाय दृग्विनाशाय च स्यात् । अतिशीतं त्वक्षिसेचनं निस्तोदादीन् विधत्ते । निस्तोदः सूच्येव व्यधः । स्तंभोऽक्ष्णः स्तंभनमिव । वेदना शूलम् । कषायवर्त्मत्वं कुरुते । घर्षो वर्त्मनः परस्परं संश्लेषः । बह्वतिमात्रमाश्चोतनं कृच्छ्रेणोन्मेषणं विधत्ते । अत्यल्पमक्षिसेचनं विकारवृद्धिं कुरुते अपरिस्रुतमक्षिसेचनं संरंभं नेत्रक्षोभं विधत्ते ॥ ५ ॥

प०–अत्युष्णतीक्ष्णमक्षिसेचनमाश्चोतनं कृतं रुजे रुगर्थं सम्पद्यते रागार्थं च । तथा दृङ्नाशाय दृष्टिविघातार्थं च । तथाऽतिशीतमक्षिसेचनं निस्तोदादीन् । निस्तोदो रुग्विशेषः । निःशेषं कृत्वा रुजा तोदनम् । विकारस्य व्याधेर्वृद्धिमाधिक्यं कुरुते न विकारशान्तिः । अपरिस्रुतमपरिप्लुतमक्षिसेचनम् ॥ ५ ॥

हे०–अत्युष्णतीक्ष्णस्याश्चोतनस्य दोषमाह–अत्युष्णेति । अतिशीतस्य दोषमाह–अतिशीतमिति । अतिमात्रस्य दोषमाह–कषायवर्त्मतामिति । कषायवर्त्मतां रूक्षवर्त्मत्वम् । अत्यल्पस्य दोषमाह–विकारवृद्धिमिति । नेत्रादनरिश्रुतस्य दोषमाह–संरम्भमिति । संरंभं शोफादिप्रादुर्भावम् ॥ ५ ॥

कया रीत्या नेत्रे प्रयुक्तमौषधं दोषानपनयतीत्याह–

**गत्वा संधिशिरोघ्राणमुखस्रोतांसि भेषजम् ।**
**ऊर्ध्वगान्नयने न्यस्तमपवर्तयते मलान् ॥ ६ ॥**

स०–संध्यादीनां द्वंद्वः । ततः स्रोतःशब्देन षष्ठीसमासः । संधिशब्देनेहाक्षिकोशसंबंधिनः संधयो गृह्यंते । तेनाक्षिकोशसंबंधिस्रोतांसि शिरोघ्राणमुखस्रोतांसि गत्वा नयने क्षिप्तमौषधमूर्ध्वगान्मलानपवर्तयते ॥ ६ ॥

प०–सन्ध्यादीनां द्वन्द्वः । सन्धिशिरोघ्राणमुखं तस्य स्रोतांसि सन्धिशिरोघ्राणमुखस्रोतांसि तानि गत्वा अथ नयने नेत्रे न्यस्तं प्रणीतं भेषजमौषधमाश्चोतनमूर्ध्वगान् ऊर्ध्वप्रसृतान् मलान् अपवर्तयते । प्रत्यावृत्तरूपान् विहितस्मरणाक्षमान् सम्पादयति ॥ ६ ॥

हे०–आश्चोतनस्य फलमाह-गत्वेति । नेत्रे न्यस्तमौषधं सन्ध्यादीन् गत्वा जत्रूर्ध्वगान् रोगान् हंति ॥ ६ ॥

**अथाऽञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले ।**
**पक्वलिंगेऽल्पशोफातिकंडूपैच्छिल्यलक्षिते ॥**
**मंदघर्षाश्रुरोगेऽक्ष्णि प्रयोज्यं घनदूषिके ।**
**आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः ॥ ७ ॥**

स०–अथाश्चोतनादन्यदंजनं प्रयोक्तव्यम् । कीदृशस्याऽऽतुरस्य । शुद्धा तनुर्यस्य स तस्य । मले नेत्रमात्राश्रये न त्वधिकशरीरव्यापिनि । तथा पक्वलिंगे । पक्वलिंगता कथं वेद्येति विशेषणद्वारेणाऽऽह । अल्पशोफेनातिकंड्वा पैच्छिल्येन च लक्षितेऽवगते पक्वलिंगे सति । कीदृशेऽक्ष्णि । मंदा अल्पा घर्षा अश्रुरोगा यस्य तस्मिन् । तथा घना दूषिका नेत्रमलो यस्मिन्नयने तस्मिन् । एतदपि पक्वलिंगमेव । पित्तेन कफेन रक्तेन चाऽऽतुरे । मारुतेन चाऽऽतुरे विशेषेणांजनं प्रयोज्यम् ॥ ७ ॥

प०–अथाश्चोतनानन्तरं शुद्धतनोः शुद्धशरीरस्य नेत्रमात्राश्रयो निकेतो यस्य मलस्य तस्मिन् तथाभूते पक्वलिङ्गे समुत्पन्ने नेत्राञ्जनं प्रयोज्यम् । तस्मिन् पक्वलिङ्गे नाल्पेन शोफेन तथाऽतिकण्ड्वा तथाऽतिपैच्छिल्येन लक्षिते ज्ञाते निश्चयीकृते सति तथा मन्दघर्षाश्रुरोगे सति मन्दा अल्पा घर्षादयो यस्मिन्नक्ष्णि । तथा घना दूषिकाऽक्षिमलो यस्मिन् अक्ष्णि तस्मिन् तथाविधाञ्जनं प्रयोज्यम् । आर्ते आतुरे पीडितेऽक्ष्णि पित्तेन कफेनासृजा रक्तेन तथा मारुतेन वायुना विशेषतः आर्तेन नेत्रे प्रयोज्यम् ॥ ७ ॥

हे०–अञ्जनस्य विषयमाह–अथेति । शोफाद्यल्पत्वलक्षिते पक्वलक्षणे सति तथा घर्षाद्यल्पत्वे दूषिकाघनत्वे च ॥ ७ ॥

**लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा ।**
**अंजनम् ॥ ८ ॥**

स०—अंजनं च लेखनादिभेदेन त्रिभेदम् । लिख्यते शस्त्रेणेव शुक्रार्मादीति लेखनम् । रोप्यते संरोह्यतेऽनेनाऽभिष्यंदादीति रोपणम् । प्रसाद्यते निर्मलीक्रियतेऽनेनेति प्रसादनम् । दृष्टेः प्रसादनं दृष्टिप्रसादनम् । संग्रहोक्तस्य स्नेहनस्य अंजनस्य रोपणदृष्टिप्रसादनयोरेवांतर्भूतत्वात् तदिह पृथङ् नोक्तम् ॥ ८ ॥

प०—तत् त्रिधा त्रिप्रकारमञ्जनम् । एकं लेखनं द्वितीयं रोपणं तृतीयं दृष्टिप्रसादनम् । दृष्टेः प्रसादनं दृष्टिप्रसादनम् । लिख्यतेऽनेन शस्त्रेण चर्मादिरोगजातमिति लेखनम् । 'विलिखत्यतितैक्ष्ण्याद्यद्वात्तूंस्तल्लेखनं मतम्' । संरोप्यते संरोह्यते तद्रोपणम् । प्रसाद्यते निर्मलीक्रियते येन तत्प्रसादनम् ॥ ८ ॥

हे०—अञ्जनस्य भेदानाह—लेखनमिति । संग्रहे तु न दोषवेगोदयेन चानिहते दोषे तत्र हि दोषोत्क्लेशेन रागादिवृद्धिशुक्रपाकतिमिरोत्पत्तिश्चेति ॥ ८ ॥

**लेखनं तत्र कषायाम्लपटूषणैः ॥ ९ ॥**

स०—तत्र तेषु त्रिष्वंजनेषु मध्याल्लेखनमंजनं कषायादिभिर्द्रव्यैः शुक्रार्मादिषु प्रयोज्यम् ॥ ९ ॥

प०—तत्र तेषु लेखनादिषु मध्याल्लेखनमञ्जनं कषायादिभिश्चतुर्भी रसैः शुक्रार्मादिषु योज्यम् । पटु लवणमूषणं कटुद्रव्यम् ॥ ९ ॥

हे०—लेखनस्य द्रव्याण्याह—लेखनमिति ॥ ९ ॥

**रोपणं तिक्तकैर्द्रव्यैः ॥ १० ॥**

स०—रोपणमंजनं तिक्तकैर्द्रव्यैः स्यात् । तिक्तग्रहणमुपलक्षणार्थं संग्रहोक्तस्य । तेन कषायद्रव्यैः संस्नेहै रोपणमंजनं वेद्यम् ॥ १० ॥

प०—रोपणमञ्जनं तिक्तद्रव्यैरभिष्यन्दादिषु योज्यम् ॥ १० ॥

हे०—रोपणद्रव्याण्याह—रोपणमिति ॥ १० ॥

**स्वादुशीतैः प्रसादनम् ॥ ११ ॥**

स०—स्वादुशीतैर्द्रव्यैः प्रसादनमेव प्रसादनांजनम् । स्वादुशीतद्रव्यैश्चूर्णं श्लक्ष्णांजनं संततं चक्षुषि प्रयुज्यमानं प्रत्यंजनसंज्ञां लभते ॥ ११ ॥

प०—प्रसादनमञ्जनं स्वादुशीतैरुपहतायां दृष्टौ स्वस्थवृत्तेश्च योज्यम् ॥ ११ ॥

हे०—दृष्टिप्रसादनस्य द्रव्याण्याह—स्वादुशीतैरिति ॥ ११ ॥

**दशांगुला तनुर्मध्ये शलाका मुकुलानना ।**
**प्रशस्ता लेखने ताम्री रोपणे काललोहजा ।**
**अंगुली च सुवर्णोत्था रूप्यजा च प्रसादने ॥ १२ ॥**

स०—दशांगुला राजमाषस्थूला शलाका प्रशस्यते । मध्ये तनुस्तथा मुकुलाकारे आनने मुखे द्वे अपि यस्याः सा मुकुलानना । लेखनेऽजने ताम्री शलाका प्रशस्यते । रोपणे काललोहोत्था कृष्णशस्त्रोद्भवा । अंगुली च हस्तावयवविशेषो रोपण एव शस्तः । एवं प्रसादनेऽजने सुवर्णोत्था कनकोद्भवा रजतोद्भवा च शलाका प्रशस्ता ॥ १२ ॥

प०—शलाका दशाङ्गुलपरिमाणा तथा तनुर्मध्ये मध्यप्रदेशात् सूक्ष्मा मुकुलानना द्वयोर्मुकुलयोर्मुकुलाकारा । सा शलाका लेखनेऽञ्जने ताम्रा ताम्रोद्भवा शस्ता । रोपणेऽञ्जने काललोहजा कृष्णलोहोद्भवा शलाका तथाऽङ्गुलीकरशाखा रोपणाञ्जनेन च शस्ता । प्रसादनेऽञ्जने च सुवर्णोत्था कनकमयी तथा रूप्यजा रजतकृता शलाका प्रशस्ता ॥ १२ ॥

हे०—शलाकामाह—दशांगुलेति । लेखनशलाकामाह—लेखने ताम्रीति । रोपणशलाकामाह—रोपण इति । प्रसादने शलाकामाह—सुवर्णोत्थेति ॥ १२ ॥

अंजनकल्पना त्रिप्रकारा स्यात् कथमित्याह—

**पिंडो रसक्रिया चूर्णस्त्रिधैवांजनकल्पना ।**
**गुरौ मध्ये लघौ दोषे ताः क्रमेण प्रयोजयेत् ॥**

स०—पिंडादिभेदेन त्रिप्रकाराऽजनकल्पना स्यात् । पिंडादयो बहुदोषादिषु क्रमेण प्रयोज्याः । गुरौ दोषे पिंडः प्रयोज्यो मध्ये दोषे रसक्रिया लघुदोषे चूर्ण इत्यर्थः ॥ १३ ॥

प०—अञ्जनकल्पना त्रिधैव त्रिप्रकारैव । पिण्डस्तथा रसक्रिया चूर्णश्च । तत्र द्रवालुलितचूर्णो वर्तिनः पिण्डशब्दवाच्यः । रसक्रिया द्रव्यक्वाथाद्घनीभूताद्या क्रियते । शुष्कपिष्टं द्रव्यं चूर्णशब्दवाच्यम् । यथा पूर्वं तेन बलिनस्तस्मात् गुरौ प्रबले व्याधौ पिण्डमञ्जनं प्रयोजयेत् । मध्यबले व्याधौ रसक्रियां प्रयोजयेत् । लघावबले व्याधौ चूर्णं प्रयोजयेत् ॥ १३ ॥

हे०—अंजनकल्पनाभेदानाह-पिंड इति। पिण्डो गुटिका, रसक्रिया अवलेहः। कल्पनात्रयस्य विषयत्रयमाह—गुरौ मध्ये इति ॥ १३ ॥

**हरेणुमात्रं पिंडस्य वेल्लमात्रा रसक्रिया ।**
**तीक्ष्णस्य द्विगुणं तस्य मृदुनः ॥ १४ ॥**

स०—तीक्ष्णद्रव्यकृतस्य पिंडस्य हरेणुमात्रं प्रमाणं कथयंति । मृदुद्रव्यकृतस्य पिंडस्य तद् द्विगुणं द्विहरेणुमात्रं वदंति । रसक्रियाया विडंगं प्रमाणमाहुः ॥ १४ ॥

हे०—तीक्ष्णयोः पिंडरसक्रिययोर्मात्रामाह—द्विगुणमिति। तस्य हरेणुद्वयं रसक्रियाया वल्लद्वयम् ॥ १४ ॥

**चूर्णितस्य च ।**
**द्वे शलाके तु तीक्ष्णस्य तिस्रः स्युरितरस्य च १५**

स०—चूर्णे तीक्ष्णे द्विगुणां शलाकां मृदौ त्रिगुणां शलाकामभिदधुः । तंत्रांतरे चोक्तम् । लेखनमंजनं ताम्ररजतकांस्याद्यन्यतमेषु धार्यम् । रोपणं सुवर्णवटशंखान्यतमेषु । प्रसादनं स्फटिकप्रक्षाचंदनान्यतमेषु धार्यम् । एवं ह्यंजनमव्यापन्नगुणं भवति । वर्तिघर्षणार्थं शिला निम्नमध्याऽनुद्वारिणी पंचांगुलायता त्र्यंगुलविस्तारेति ॥ १५ ॥

हे०—तीक्ष्णस्य चूर्णस्य मात्रामाह—चूर्णितस्येति। मृदोश्चूर्णस्य मात्रामाह—तिस्र इति ॥ १५ ॥

**निशि स्वप्ने न मध्याह्ने म्लाने नोष्णगभस्तिभिः।**
**अक्षिरोगाय दोषाः स्युर्वर्धितोत्पीडितद्रुताः ।**
**प्रातः सायं च तच्छांत्यै व्यभ्रेऽर्केऽतोऽजयेत्सदा ।**

स०—निशि रात्रावंजनं न प्रयोज्यम् । तथा स्वप्ने स्वप्नकालेऽजनं न प्रयोज्यम् । तथा मध्यंदिनेऽजनं न प्रयोज्यम् । न च म्लाने लोचनेऽ[illegible]ज्यम् । केन म्लाने । उष्णाभिर्दीधितिभिः[illegible] कालेष्वंजनेन प्रयुक्तेन दोषा वृद्धिं नीतास्त[illegible] नगतत्वादुत्पीडितास्तथा द्रुताः कालस्यो[illegible] गता अक्षिरोगाय स्युस्तस्मादेषु कालेष्वंजनं[illegible] ज्यम् । यतः पूर्वोक्तेषु कालेषु पूर्वोक्ता दो[illegible] त्पूर्वाह्णे अपराह्णे च तच्छांत्यै तस्मादक्षिरोगा[illegible] गताभ्रे रवौ सदैव नेत्रमंजयेत् ॥ १६ ॥

प०—निशि रात्रौ स्वप्नेन निद्र[illegible] वर्धिता वृद्धिं नीतास्तथा मध्याह्ने पाने[illegible] नोत्पीडिता ऊर्ध्वं प्रेरितास्तथा मध्ये [illegible] स्तिभिरादित्यरश्मिभिर्द्रुताः क्षुभिता दोषा अक्षिरोगाय स्युर्भवेयुः । अतोऽस्मात्कार[illegible] प्रत्यूषसि तच्छान्त्यै निशि संवर्धितानां दो[illegible] मनाया[illegible]जयेत् । तथा सायं दिनान्ते पा[illegible] गभस्तिभिरुत्पीडितद्रुतानां दोषाणां प्र[illegible] ञ्जयेत् ॥ १६ ॥

हे०—अंजनस्य कालमाह—निशीति । रा[illegible] र्धिता दोषा अक्षिरोगाय स्युः अतः प्रातः[illegible] मध्याह्ने पानाद्यामुत्पीडिताः सूर्यरश्मि[illegible] अक्षिरोगाय स्युः । अतः सायमंजयेत् ॥ १६

**वदंत्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णम[illegible]**
**विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति**

स०—अन्ये त्वाचार्या एवं मन्यंते । [illegible] दिवा न प्रयोज्यम् । कस्मादित्याह । यस्मा[illegible] प्राप्य सीदति । किंभूतम् । विरेकदुर्बलम् । [illegible] जनेन विरेचितत्वात् । तस्माद्दिवसे तीक्ष्[illegible] प्रयोज्यम् ॥ १७ ॥

प०—अन्ये पुनराचार्या एवमाहुः । ती[illegible] दिवा न प्रयोज्यम् । यस्माद्विरेकेण तीव्रा[illegible] निवर्तते । हीनबलं चक्षुर्नेत्रमादित्यं रविं प्र[illegible] सीदति । हीनशक्ति सम्पद्यते ॥ १७ ॥

हे०—तीक्ष्णांजनस्य दिवा निषेधमाह—वदंत्य[illegible] निषेधे युक्तिमाह—विरेकदुर्बलमिति ॥ १७ ॥

अत एवाऽऽह—

**स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च [illegible]**
**शीतसात्म्या दृगाग्नेयी स्थिरतां लभते[illegible]**

स०—यस्मात्स्वप्नेन रात्रौ तर्पिता: तथा कालस्य ाल्यस्य सौम्यत्वेन तर्पिता दृष्टिः पुनः स्थैर्यं ोति तीक्ष्णांजनक्षोभितापि। कीदृग्दृष्टिः। आग्ने- न्युत्कटभूतसंभवा। तथा शीतसात्म्या। तस्माद्रा- जनं प्रयोज्यम्। आग्नेयीति सर्वत्राग्निकलिभ्यां क्तव्य इति ढक्। शीतं सात्म्यं यस्याः। पैत्तिक- स्येव ॥ १८ ॥

प०—त एव आचार्या रात्रौ तीक्ष्णमञ्जनं प्रयो- मेत्याहुः। यतः स्वप्नेन निद्रया सौम्यस्वभाव- तथा कालस्य सौम्यत्वेनाप्यायकत्वेन तर्पिता न्यायिता तृप्तिं नीता शीतसात्म्यात् हिमस्व- त्वात् दृग् दृष्टिराग्नेयी अग्न्युत्कटभूतसम्भवा : स्थिरतां लभते दृढतां प्राप्नोति ॥ १८ ॥

हे०—तीक्ष्णस्य रात्रिप्रयोगे युक्तिमाह—स्वप्नेनेति। स्तावदाग्नेयत्वात्संतापपीडिता। अतएव शीतसात्म्या च तीक्ष्णांजनेनातिसंतप्ता रात्रौ स्वप्नेन सौम्येन कालेन ातसंतापा पुनः स्थिरतां लभते कफोद्रेके लेखनसाध्ये ोगे ॥ १८ ॥

तदन्यमतमव्यापकमिति दूषयन्नाह—

**युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे।**
**ममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत्॥**

स०—अत्युत्कृष्टे कफेऽथवा लेखनार्हे शुक्रार्मादौ ा दिनेऽपि नात्युष्णे तीक्ष्णमंजनं प्रयोजयेत्। काम- ागतमेतत्। कालस्यात्यौष्ण्यादंजनस्य तैक्ष्ण्याच्चा- योगेन दृष्ट्युपघातः स्यात् ॥ १९ ॥

प०—किमेतत्सर्वदैव निशि भेषजं प्रयोज्यं न दिवा त आह—कदाचिदत्युद्रिक्ते प्रबले बलासे श्लेष्माख्ये ये तथा लेखनीये परासनीये वा गदे शुक्रा- र्मादौ काममभ्यनुगमङ्गीकृतमह्न्यपि तीक्ष्णम- नं तत्साध्यदोषविषये प्रयोजयेत् ॥ १९ ॥

हे०—दिवापि तीक्ष्णं योज्यमित्याह—अत्युद्रिक्त े ॥ १९ ॥

अत एवाह—

**श्मनो जन्म लोहस्य तत एव च तीक्ष्णता।**
**घातोऽपि तेनैव तथा नेत्रस्य तेजसः २० ॥**

स०—पाषाणाच्छस्त्रस्योत्पत्तिस्तस्मादेव चाऽश्मनः श्लक्ष्णतादियोगात्तीक्ष्णता। उपघातोऽपि कुंठत्वादिकस्ते- नैव पाषाणेन न केवलं तैक्ष्ण्यम्। तथा तेनैवाश्मशस्त्र- न्यायेन नेत्रस्य तेजसोऽग्नेरश्मस्थानीयाज्जन्म रविसंज्ञा- त्तेजसः सकाशात्तीक्ष्णता दर्शनपटुत्वमत्युष्णेन तु तेन तस्योपघातः। तस्माद्यदन्ये गदंति सामान्येनैव दिवां- ऽजनं न प्रयोज्यमिति तदसदेव ॥ २० ॥

प०—तच्च नात्युष्णे दिने आग्नेयत्वाच्चक्षुष- स्तथा तीक्ष्णाञ्जनमप्याग्नेयं तस्योष्णे दिने समान- त्वोक्तो विरोधस्तदर्थमाह—अश्मनः पाषाणाल्लो- हस्य शस्त्रस्य जन्मोद्भवनम्। साध्यस्य तीक्ष्णता धारातीक्ष्णत्वम्। साध्यस्य तत एवाश्मन एव तस्य जायते योऽपि तस्य लोहस्योपघातो विनाशः। अथ सर्वसर्धिकया भङ्गस्तत एव नान्यथा। तद्व- त्तस्य नेत्रस्य चक्षुषो दृष्टेर्दर्शनस्य तेजस एव जन्यः। तत एव तीक्ष्णत्वम्। दूरे दर्शनश- क्तित एवोपघातः किञ्चिद्दर्शनं सर्वसर्विकया- ऽदर्शनम् ॥ २० ॥

हे०—तैजसस्य तेजःसहकृतस्य च नेत्रस्य कथं तेजसो- पघात इत्यत आह—अश्मन इति ॥ २० ॥

**न रात्रावपि शीतेति नेत्रे तीक्ष्णांजनं हितम्।**
**दोषमस्त्रावयत्स्तंभकंडूजाड्यादिकारि तत् २१॥**

स०—अपि च रात्रावपि नेत्रे कफाधिक्येनातिशीते कंडूपैच्छिल्याद्यनुमिते तीक्ष्णमंजनं न प्रयोज्यम्। यतो निशि तीक्ष्णमंजनमुपयुक्तं कालस्य सौम्यत्वाद्दोषस्रवणे- ऽयोग्यमस्रावयदंजनं कंडूजाड्यादिकृत् स्यान्न तु शम- कारि। तस्माच्छीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनरित्येतदप्यसत्। तस्मात्पूर्वोक्तमेवाऽनवद्यम् ॥२१॥

प०—रात्रावप्यतिशीते काले तीक्ष्णमञ्जनं न हितम्। यस्मिन् काले तीक्ष्णमञ्जनं तीक्ष्णमपि प्रयुक्तं कण्डूजाड्यादिकारि सम्पद्यते। आदिग्रहणा- च्छोषपैच्छिल्यरुक् तोदनादिकारि तद्भवति ॥२१॥

हे०—रात्रावप्यतिशीते तीक्ष्णांजनं निषेधति—न रात्रा- विति। शीतप्रयोगे दोषमाह—दोषमिति ॥ २१ ॥

नांजयेद्भीतवमितविरिक्ताऽशितवेगिते ।
क्रुद्धज्वरिततांताक्षिशिरोरुक्शोकजागरे ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ।
अजीर्णेऽग्न्यर्कसंतप्ते दिवा सुप्ते पिपासिते २२

स०—भीतादीनामक्षिणी वैद्यो नांजयेत् । अशितोऽत्र सद्योभुक्तो वेद्यः । सद्योभुक्तस्य नरस्य नयने नांजयेदित्यर्थः । तांते सूक्ष्मभापुरादिदर्शनादभिघातत्वाच्च ग्लानेऽक्षिणी यस्य स एवं तस्मिन् । अदृष्टेऽर्के जलदच्छन्नत्वात् । तथा शिरःस्नातादिषु॥२२॥

प०—भीते सति पुंसि नाञ्जयेत् । तथा वमिते कृतवमने कृतविरेचने तथा स्नाते तथा पीतयोर्धूममद्ययोस्तथा जीर्णे परिणतान्ने अग्न्यर्कसन्तप्ते अग्निना तापिते तथाऽऽदित्यतापिते दिवासुप्ते अह्नि निद्रां भजति पिपासिते तृषिते च नाञ्जयेदिति प्रत्येकं योज्यम् ॥ २२ ॥

हे०—भीतादीनामंजनं निषेधति—नाञ्जयेदिति। संग्रहे तु एष्वंजनाद्रूपोर्ध्वगः संरंभाश्रुवेदनाविलत्वोपारागदृषिकानिस्तोदकृच्छ्रोन्मीलनश्वयथुशुक्रतिमिरादीन् जनयेत् । तांतम् । उष्णादिना ग्लानमक्षि ॥ २२ ॥

सांप्रतं यादृशमंजनं न योज्यं तद्दर्शयति—

अतितीक्ष्णमृदुस्तोकबहुच्छघनकर्कशम् ।
अत्यर्थशीतलं तप्तमंजनं नावचारयेत् ॥ २३ ॥

स०—अतिशब्दस्य तीक्ष्णादिभिर्धनांतैः संबंधः । अत्यर्थशीतलमित्येतस्मादत्यर्थशब्दस्तप्तमित्यत्राऽनुवृत्तिकृतेन संबंधेन योज्यः । अतितीक्ष्णादिगुणमंजनं न प्रयोजयेत् । तंत्रांतरे चांऽजनविधिरुक्तः । सुखोपविष्टस्याऽऽतुरस्य सूपविष्टो वैद्यो वामांगुष्ठेनोत्तरं वर्त्मोत्क्षिप्य कृष्णभागस्याधः कनीनिकादपांगं यावदंजनं नयेदिति ॥ २३ ॥

प०—अतितीक्ष्णादिकमञ्जनं नावचारयेत् न प्रयोजयेदिति । तीक्ष्णं कट्वम्ललवणैः कृतमतिमृदु मधुरैरेव कृतं स्तोकमल्पमात्रं बहु प्रभूतमच्छं तनु घनं सान्द्रं कर्कशं परुषं तथात्यर्थशीतलं तप्तमुष्णं चाञ्जनं नावचारयेत् न योजयेत् ॥ २३ ॥

हे०—अतितीक्ष्णादिकमनवचिमंजनं निषेधति—अ तीक्ष्णेति ॥ २३ ॥

अथाऽनुन्मीलयन् दृष्टिमंतः संचारयेच्छनैः ।
अंजिते वर्त्मनी किंचिच्चालयेच्चैवमंजनम् ।
तीक्ष्णं व्याप्नोति सहसा न चोन्मेषनिमेषणम्
निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत्

स०—अक्ष्यमंजनस्वरूपमवेत्य नेत्रेऽञ्जिते स दृष्टिगोलकमनुन्मीलयन्मध्ये शनैः शनैः संचारयेत कथम् । वर्त्मनी चालयेत् । एवमंजनं नेत्रं व्याप्नोत्य प्रविशति । न च सहसा निर्व्यतिक्रमेणोन्मेषनिमे कुर्यात् । चशब्दोऽवधारणे । नैव समाचरेदित्यर्थः वर्त्मभ्यां च निष्पीडनं न समाचरेत् । वाशब्दोऽवधा क्षालनं च नैव कुर्यात् ॥ २४ ॥

प०—अथानन्तरम् अञ्जनप्रवेशार्थं दृष्टिं तारक न्तरभ्यन्तरे शनैः शनैः सञ्चारयेत् । मन्दं म कृत्वेति यावत् । उन्मीलयन्नेवमनुद्घाटयंश्चक्षु अञ्जिते सति नेत्रवर्त्मनि किञ्चिदीषच्चालयेत् एवं सति तीक्ष्णमञ्जनं व्याप्नोति । नच सह झटित्यञ्जनदानात् । अनन्तरमुन्मेषनिमेषौ कर्त नच सहसा वर्त्मभ्यां निपीडनं न सहसाक्ष क्षालनं कारयेत् ॥ २४ ॥

हे०—अंजनानंतरं कृत्यमाह—अथेति । अंजिते दृष्टिमनुन्मीलयन् अंतरेऽन्तःसंचारयेत् । वर्त्मनी च किं चालयेत् । उक्तकृत्यस्य फलमाह—एवमंजनं ती व्याप्नोति सहसेति मृदुरंजनं व्याप्नोतीत्यर्थलभ्यम् । अ नेत्रस्योन्मेषादि निषेधति—न चेति ॥ २४ ॥

अपेतौषधसंरंभं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा॥२५

स०—अपेतोऽपगत औषधसंरंभो भेषजक्षो यस्मान्नेत्रात्तदेवमपेतौषधसंरंभम् । अत एव निर्वृता तदुःखानुबंधि यदा लोचनं स्यात्तदा व्याध्यादियो जलैः प्रक्षालयेत् । तत्र व्याधिरभिष्यंदादिः । दं वातादिः । ऋतुर्वसंतादिः ॥ २५ ॥

प०—प्रयुक्तादनन्तरमस्यामवस्थायां क्षालनं समाचरेत् । औषधस्य संरम्भः औषधसंर

अपेतोऽपगतः प्रयुक्तभेषजोऽपहितः येन यस्मिन् वेति तदपेतौषधसंरम्भं नयनमत एव निर्वृतं स्वस्थं यदा सम्पन्नं तदा तस्मिन् काले व्याधियोग्याभिर्दोषयोग्याभिर्ऋतुयोग्याभिरद्भिः पानीयैः शीतोष्णमध्यमस्वभावादिभिरद्भिः प्रक्षालयेत् ॥ २५ ॥

हे०--क्षालनकालमाह—अपेतौषधेति ॥ २५ ॥

**दक्षिणांगुष्ठकेनाऽक्षि ततो वामं सवाससा ।**
**ऊर्ध्ववर्त्मनि संगृह्य शोध्यं वामेन चेतरत्२६॥**

स०—ततो नयनप्रक्षालनादनंतरं दक्षिणांगुष्ठेन सवस्त्रेण वामं नयनमूर्ध्ववर्त्मनि सम्यगादाय शोधनीयम् । वामेनांऽगुष्ठेन सवाससेतरत् दक्षिणमूर्ध्ववर्त्मनि संगृह्य शोध्यम् ॥ २६ ॥

प०—ततः प्रक्षालनादनन्तरं दक्षिणाङ्गुष्ठकेन सवस्त्रेण वामं चक्षुरूर्ध्ववर्त्मनि गृहीत्वा सङ्गृह्यावष्टभ्य तद्विषयग्रहणं कृत्वा शोध्यं परिमार्जनीयम् । वामाङ्गुष्ठकेन सवस्त्रेणेतरत् दक्षिणमक्षि ऊर्ध्ववर्त्मनि गृहीत्वा शोध्यं परिमार्जनीयम् ॥ २६ ॥

हे०--क्षालनानंतरं शोधनमाह--सवस्त्रेण दक्षिणांगुष्ठेन वर्त्म संशोध्यम्, वामेन दक्षिणम् ॥ २६ ॥

किमिति शोध्यमित्याह—

**वर्त्मप्राप्तांजनाद्दोषो रोगान्कुर्यादतोऽन्यथा२७॥**

स०—अतोऽन्यथाऽशोध्यमाने वर्त्मनि प्राप्तं च तदंजनं वर्त्मप्राप्तांजनं तस्माद्दोषो रोगान् कुर्यात् । तस्मात्तच्छोध्यं नयनम् ॥ २७ ॥

प०—वर्त्मनोरञ्जनदानानन्तरं संशोधनाकरणाद्दोषो वर्त्मनि प्रसृतो रोगान् कुर्यात् । तस्मादञ्जनादनन्तरं वर्त्मनोः शोधनं क्षालनं च कार्यम् ॥ २७ ॥

हे०--क्षालनशोधनाकरणे दोषमाह--वर्त्मप्राप्त इति२७

**कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ।**

स०—कंडूश्च जाड्यं चेति समाहारद्वंद्वः । तस्मिन् सति तीक्ष्णमंजनं योजयेत् । अथवा तीक्ष्णं धूमं योजयेत् ॥ २८ ॥

प०—अञ्जिते सति कण्डूजाड्ये समुत्पन्ने तीक्ष्णमञ्जनं धूमं वा योजयेत् ॥ २८ ॥

हे०--अंजनासम्यग्योगजयोः कंडूजाड्ययोः प्रतीकारमाह—कण्डूजाड्य इति ॥ २८ ॥

**तीक्ष्णांजनाऽभितप्ते तु चूर्णं प्रत्यंजनं हितम्**

स०—पुनस्तीक्ष्णेनांजनेनाऽभितप्ते [illegible] प्रत्यंजनं चोक्तं हितमिति ॥ २९ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचिताया-
यामष्टांगहृदयटीकायां सर्वांगसुन्दरा-
ख्यायां त्रयोविंशोऽध्यायः॥२३॥

प०—तीक्ष्णाञ्जनाभितप्ते दूषिते नेत्रे तच्छमनार्थं हिमं तच्छीतलं चूर्णाञ्जनं प्रयोज्यं तच्च प्रत्यञ्जनसंज्ञां लभते इति शेषः ॥ २९ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायामाश्चोतना-
ञ्जनविध्यध्यायस्त्रयोविंशः ॥२३॥

हे०--तीक्ष्णांजनातियोगे प्रतीकारमाह--तीक्ष्णेति प्रत्यंजनमित्यस्यांजनसंज्ञा ॥ २९ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने सर्वांजनप्रकारः सामस्त्येन निरूपितम् ॥ २३ ॥

---

## चतुर्विंशतितमोऽध्यायः ।

अस्मादनंतरं चतुर्विंशाऽध्यायारंभ आश्चोतनाञ्जनाभ्यां हि नयनस्य प्रायो दौर्बल्यमतस्तर्पणादिरुपयोगो युक्त इत्याह—

**अथाऽतस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

स०—तर्पणं च पुटपाकश्च तर्पणपुटपाकौ विधिस्तम् । शेषं पूर्ववत् ॥ १ ॥

प०—अस्यारम्भेऽयं सम्बन्धः । उक्तं तीक्ष्णाञ्जनाभितप्ते हिमं प्रत्यञ्जनं योजयेदिति तर्पणमपि यत् क्रियते तत्प्रायेण तथाविधेऽक्षिण विधीयते तर्पणं च पुटपाकश्च तर्पणपुटपाकौ तयोर्विधिरस्मिन्नध्याये विधीयते तमध्यायं व्याख्यास्याम

हे०--अथातस्तर्पणपुटपाकविधिमध्यायं व्याख्यातुं प्रतिजानीते ॥ १ ॥

**नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते ।**
**वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलेक्षणे ॥**
**कृच्छ्रोन्मीलशिराहर्षशिरोत्पाततमोऽर्जुनैः ।**
**स्यंदमंथान्यतोवातवातपर्यायशुक्रकैः ॥**
**आतुरे शांतरागाश्रुशूलसंरंभदूषिके ।**
**निवाते तर्पणं योज्यं शुद्धयोर्मूर्धकाययोः ।**
**काले साधारणे प्रातः सायं चोत्तानशायिनः २॥**

स०--चक्षुषि ग्लायति सति तथा स्तब्धादिगुणे तर्पणं कार्यम् । तथा शीर्णे पक्ष्मणी यस्य तदेवम् । आविलमस्पष्टमीक्षणं दर्शनं यस्य तदेवम् । शीर्णपक्ष्म च तदाविलेक्षणं च तस्मिन् । तथा कृच्छ्रोन्मीलादयोऽक्षिरोगेषु वक्ष्यंते । कृच्छ्रोन्मीलश्च शिराहर्षश्च शिरोत्पातश्च तमश्चाऽर्जुनश्च तैरातुरे । तथा स्यंदश्च मंथश्चान्यतोवातश्च वातपर्यायश्च शुक्रकं च तैरातुरे । तथा नस्याऽनर्हे । यतो वक्ष्यति । तर्पणं पुटपाकं च नस्यानर्हे न योजयेत् । तथा शांताः शमं गता रागाश्रुशूलसंरंभदूषिका यस्मिन्नयये तस्मिन् । कीदृशि स्थाने । निवाते विगताऽनिले । उपलक्षणं चेदम् । विगतातपरजोधूमादिका इत्यपि द्रष्टव्यम् । कीदृशयोर्मस्तकदेहयोः । शुद्धयोर्यथायोगं वमनविरेचननस्यैः कृतशुद्धयोरित्यर्थः । कीदृशे काले । साधारणे वसंतादिके । कदा । सायं प्रातर्वा दोषदूष्याद्यपेक्षया । कीदृशस्याऽऽतुरस्य । उत्तानशायिन इति । शयनस्थस्योत्तानस्येत्यर्थः ॥ २ ॥

प०--ताम्यति नयनेऽक्षिण तर्पणं योज्यम् । स्तब्धे निश्चले शुष्के रूक्षे स्नेहगुणरहिते अभिघातिते सञ्जाताभिघाते वातपित्ताभ्यामातुरे पीडिते जिह्मे वातवशात् कुटिलतां प्राप्ते शीर्णानि पक्ष्माणि वर्त्मलोमानि यस्मिन् तथाविधलक्षणे अभ्रसञ्छादितमिवेक्षणं दर्शनमालोको यस्य तदाविलेक्षणं तस्मिन्नाविलेक्षणे नयने तथा कृछ्रोन्मीलितादिभिरातुरे व्याधिते तथा शान्ता रागादयो यस्मिन् काले साधारणे उष्णे शीते शरद्वसन्तमध्ये तस्मिन्नपि काले प्रातः प्रत्युपसि सायं दिना वा । उत्तानशायिनः सतः पुंसस्त[illegible] योज्यम् ॥ २ ॥

हे०--तर्पणस्य विषयं देशं कालं चाह--नयने [illegible] ताम्यति अवलोकनासमर्थे जिह्मे वक्रे आविलेक्षणे अस्[illegible] ष्टदर्शने । कृच्छ्रोन्मीलादिभिर्दशभिर्व्याधिभिरातुरे नि[illegible] रागादिपंचके नेत्रे तर्पणं योज्यं, तच्च निवाते [illegible] नस्यादौ कृते । प्रातः सायं वा योज्यं तर्पणविधिमाह-उत्तानशायिन इति ॥ २ ॥

**यवमाषमयीं पालीं नेत्रकोशाद्बहिः समाम**
**द्व्यंगुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत्**
**सर्पिर्निमीलिते नेत्रे तप्तांबुप्रविलापितम् ।**
**नक्तांध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ।**
**आपक्ष्माग्रात् ॥ ३ ॥**

स०--यवैर्मिश्रा माषा यवमाषास्ते प्रकृ[illegible] यस्यां सा यवमाषमयी ताम् । तादृशीं पा[illegible] नेत्रकोशाद्बाह्यत उभयपार्श्वयोः समामनिम्नोन्न[illegible] कृत्वा यथायोगं दोषदूष्याद्यनुरोधात्पक्वं घृतं निमी[illegible] लितेऽनुन्मीलिते लोचने क्षिपेत् । अथ पा[illegible] उच्छ्रायमाह । द्व्यंगुलोच्चां द्व्यंगुलोच्छ्रायवतीम् । त[illegible] दृढां निबिडाम् । यथा स्नेहो न प्रस्रवेदित्यर्थः कीदृशं सर्पिः । तप्तेन जलेन प्रकर्षेण विलापि[illegible] द्रवीकृतम् । रात्र्यांध्यादिषु वसां यथास्वौषधसि[illegible] तथैव विलापितामावपेत् । कथम् । आपक्ष्माग्रा[illegible] पक्ष्माग्राणि यावन्निमग्नानि तावत्सर्पिरादिरा[illegible] पेदिति ॥ ३ ॥

प०--यवमयीं माषमयीं वा पालीं स्नेहाधा[illegible] कृत्वा सर्पिरावपेत् इति सम्बन्धः । तां च पा[illegible] नेत्रकोशान्नेत्राधाराद्बहिः कृत्वा समां नेत्रसम[illegible] तावद्द्व्यङ्गुलोच्चां द्व्यङ्गुलोच्छ्रायां तथा दृढ[illegible] स्थिरापरपर्यायरूपां कृत्वाऽनन्तरं तस्यां पाल्[illegible] यथास्वं यथाव्याध्यौषधसिद्धं पक्वं मीलिते नेत्रेऽनुद्घाटितेऽक्षिण तप्तेनाम्बुनात्र विलापितं विली[illegible] सर्पिरावपेत् निषिञ्चेत् । नक्तान्ध्यादिभिरातु[illegible] नेत्रे यथास्वमौषधसिद्धां वसामवसेचयेत् । तप्ताम्बु

प्रविलापितामापक्ष्माग्राद्यावन्निमग्नानि अक्षिपक्ष्माणि भ्रूलोमानि च तावन्निषेचयेत् ॥ ३ ॥

हे०—तप्तांबुप्रविलापितम्,उष्णांबुकुम्भीबाष्पेण द्रवीकृतं, नक्तांध्यादिषु तु सर्पिःस्थाने वसामावपेत् । आपक्ष्माग्रात् पक्ष्माग्रमज्जनं यावत् । संग्रहे तु अथ दिवसस्याष्टमे भागे गते शेषे वा निर्वातातपरजोधूमे कृतनीलपीतान्यतरजवनिके वेश्मनि जीर्णभक्तस्य सुखशयनगतस्योत्तानस्य सुमृदितमाषपिष्टकल्केन नेत्रकोशाद्बहिर्द्व्यंगुलोच्छ्रायावाधारौ परिमंडलावसंबाधौ समावपरिस्राविणौ कृत्वा तत्रोष्णोदकप्रविलीनं निमीलिते नेत्रे यथार्हौषधविपक्वं क्षीरं सर्पिर्मंडं वा संचयेत् । यावन्निमग्नान्यक्षिपक्ष्माणि भ्रूरोमाणि चेति ॥ ३ ॥

**अथोन्मेषं शनकैस्तस्य कुर्वतः ।**
**मात्रां विगणयेत्तत्र वर्त्मसंधिसितासिते ॥**
**दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पंच च ।**
**शतानि सप्त चाऽष्टौ च दश मंथे दशाऽनिले ।**
**पित्ते षट् स्वस्थवृत्ते च बलासे पंच धारयेत् ॥ ४ ॥**

स०—अथ घृताद्यावपनादनंतरं शनैःशनैरुन्मीलनं विदधतस्तस्याऽऽतुरस्य मात्राः पूर्वोक्ता विगणयेत् । तत्र तेषु वर्त्मादिके व्याधौ सर्पिषि क्षिप्ते शतसंख्यादीर्मात्रा विगणयेत् क्रमेण । तत्र वर्त्मरोगे मात्राशतम् । संधिरोगे त्रीणि शतानि । सितरोगे पंच शतानि । असितरोगे सप्त शतानि । दृष्टिरोगेऽष्टौ शतानि धारयेदिति । क्रमशो यथासंख्येन । मंथाख्ये रोगे दश शतानि । वातरोगे दशैव शतानि । पित्तरोगे षट् शतानि । स्वस्थवृत्ते च षट् शतानि । कफे पंच शतानि धारयेत् ॥ ४ ॥

प०—अथ निषेकादनन्तरमुन्मेषं नेत्रविकाशं शनकैः शनैः शनैः मन्दं मन्दं कृत्वा कुर्वत आचरतस्तस्य पुंसो मात्रां विगणयेत् मात्राणां संख्यानं कुर्यात् । तत्र वर्त्मव्याधौ शतं मात्राणां धारयेत् । सन्धिव्याधौ त्रीणि शतानि । सितभागजे व्याधौ शुक्लजे पञ्च शतानि । कृष्णभागजे व्याधौ सप्त शतानि । दृष्टिजे व्याधौ अष्ट शतानि । मन्थे व्याधौ दश शतानि । वाते वातविषये दशैव शतानि । पित्ते पित्तविषये षट् शतानि । स्वस्थवृत्ते षडेव मात्राशतानि बलासे कफे च पञ्चमात्राशतानि धारयेदिति सर्वत्र सम्बन्ध[illegible] ॥ ४ ॥

हे०—तर्पणधारणावधिमाह—अथेति । [illegible] संधिरोगे त्रीणि शतानि, [illegible] पंच, [illegible] सप्त, दृष्टिरोगेऽष्टौ ॥ ४ ॥

**कृत्वाऽपांगे ततो द्वारं स्नेहं पात्रे तु गालयेत् ।**
**पिबेच्च धूमं नेक्षेत व्योम रूपं च भास्वरम् ॥ ५ ॥**

स०—यथोक्तमात्राधारणादनंतरमपांग[illegible] पाल्या द्वारं कृत्वा स्नेहं भाजने निक्षिपेत् । ततः [illegible] क्षिकोशं प्रमृज्य स्नेहेरितकफोपशांतये । धूमं च पिबेत् केवलं तर्पणं कुर्यात् । [illegible] मात्रया भोजयेत् । न दिवसे तथा [illegible] न [illegible] स्वरं रूपं च । उपलक्षणं चेदम् । [illegible] न पश्येत् ॥ ५ ॥

प०—[illegible] निषिक्तं तन्निर्गालयेत् । [illegible] पाला- कया द्वारं कृत्वा छिद्रं कृत्वा [illegible] निर्गालयेत् । ततोऽनन्तरं [illegible] धूमं पिबेत् । तथा सहसा व्योम [illegible] नेक्षेत तथा रूपमपि [illegible] ॥ ५ ॥

हे०—तर्पणानन्तरं कृत्यमाह—कृत्वेति ॥ ५ ॥

**इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ।**
**स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ ६**

स०—इत्थमनेन क्रमेण पवने प्रत्यहं तर्पणं दद्यात् पित्ते पुनरेकांतरं तर्पणं दद्यात् । कफे स्वस्थे च द्विदिनांतरं योजयेत् । इत्येवं यावन्नयनस्य तृप्तिः स्यात्तावत्तर्पणं योज्यम् ॥ ६ ॥

प०—इत्थमनेन प्राङ्निर्दिष्टेन प्रकारेण प्रतिदिनं प्रतिदिवसं वायौ वायुविषये आतृप्तेरभिपर्यन्तं तर्पणं दद्यात् । अनेनैव प्रकारेण पित्ते पित्तविषये त्वेकान्तरमेकदिनमन्तरीकृत्य तर्पणं योजयेत् कफे कफविषये तथा स्वस्थे स्वस्थवृत्तविषये द्व्यन्तरं द्वौ दिवसावन्तराकृत्य तर्पणं दद्यात् । आतृप्तेरिति सर्वत्र योजनीयम् ॥ ६ ॥

हे०—वातादिभेदेन तर्पणावृत्तिमाह—इत्थमिति । आ[illegible] तावधिमाह—आतृप्तेरिति ॥ ६ ॥

तृप्तस्य किं लक्षणमित्याह—

**प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।**
**तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ७ ॥**

स०—प्रकाशक्षमत्वादिकं तृप्तस्य सम्यक्तर्पितस्य लक्षणम् । प्रकाशक्षमता प्रभाभास्वरादिरूपसहत्वम् । अतृप्ते वैपरीत्यं पूर्वनिर्दिष्टम् । अतितृप्ते सति कफोद्भवाः कंडूपैच्छिल्यादिका रुजः स्युः ॥ ७ ॥

प०—सम्यक् तृप्तेऽक्षिण प्रकाशक्षमता आलोकसहिष्णुता नेत्रस्य जायते तथा स्वास्थ्यमदूषितत्वं तथा सम्यक्तर्पणात् स्वमेव लोचनं विशदं निर्मलं स्तैमित्यादिदोषवर्जितं तथा लघु च अतृप्ते पुनर्हीनतृप्ते नेत्रे । अतः सम्यक् तर्पणलक्षणाद्विपर्यासो भवेत् । प्रकाशक्षमता नेत्रस्यं न स्यात् । तथा स्वास्थ्यं यावल्लघुत्वमपि न भवेत् । अतितृप्ते पुनश्चक्षुषि श्लेष्मजाः श्लेष्मोत्था रुजः पीडा जायन्ते ॥ ७ ॥

हे०—तृप्तलक्षणमाह—प्रकाशक्षमतेति । अतृप्तलक्षणमाह—विपर्यय इति । अतितृप्तलक्षणमाह—तृप्त इति ७॥

**स्नेहपीता तनुरिव क्लांता दृष्टिर्हि सीदति ।**
**तर्पणानंतरं तस्माद्दृग्बलाधानकारिणम् ।**
**पुटपाकं प्रयुंजीत पूर्वोक्तेष्वेव यक्ष्मसु ॥ ८ ॥**

स०—स्नेहपीता दृष्टिः क्लांता तनुरिव यतोऽवसीदति तस्मात्कारणात्तर्पणानंतरं पुटपाकं प्रयुंजीत । कीदृशम् । दृशोर्बलं दृग्बलं तस्याऽऽधानं प्रबंधेन वृत्तिस्तत्करोति तं दृग्बलाधानकारिणम् । हेतोर्द्वितीया । दृग्बलाधानकारित्वात् प्रयुंजीतेत्यर्थः । पूर्वोक्तेष्वेव तर्पणोक्तेष्वामयेषु ॥ ८ ॥

प०—तर्पणे प्रयुक्तेऽक्षि सीदति अवसादं याति । यथा तनुः स्नेहपीता क्लान्ता सीदति अल्पबला सम्पद्यते तथा तर्पणेन दृष्टिः । तस्मात् कारणात्तर्पणदानादुत्तरकालं पुटपाकमक्ष्णोर्विदध्यात् । दृग्बलाधानकारिणम् । दृशोर्बलं तस्याधानं प्रबन्धेन वृत्तिस्तत्करोतीति दृग्बलाधानकारिणं यक्ष्मसु व्याधिषु पूर्वोक्तेष्वेव कृच्छ्रोन्मीलनादिषु पुटपाकं प्रयुञ्जीत दद्यात् ॥ ८ ॥

हे०—पुटपाकस्य विषयमाह—स्नेहपीतेति । स्नेहपीतस्नेहा, पूर्वोक्तेषु यक्ष्मसु रोगेषु ॥ ८ ॥

**स वाते स्नेहनः श्लेष्मसहिते लेखनो हितः ।**
**दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ९**

स०—स च पुटपाको वाते स्नेहनो हितः । कफसहिते मारुते लेखनो हितः । दृष्टिदौर्बल्यादिषु प्रसादनो हितः ॥ ९ ॥

प०—स च वाते प्रकुपिते स्नेहनः प्रयोज्यः तथा श्लेष्मसहिते वाते लेखनो हितः । दृग्दौर्बल्ये हीनायां दृशि अनिले तथा पित्ते तथा रक्ते स्वस्थविषये च प्रसादनः पुटपाकः प्रयोज्यः

हे०—पुटपाकस्य त्रैविध्यं सविषयमाह—स वा इति ॥ ९ ॥

इदानीमेषां पुटपाकानां कल्पनामाह—

**भूशयप्रसहानूपमेदोमज्जावसामिषैः ।**
**स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ॥१०**

स०—भूशया बिलेशया भेकगोधाद्याःप्रसहा गोखराद्य अनूपा महामृगवारिचरवारिशयाः तेषां मेदोमज्जावसामिषाणि तैस्तथा जीवनीयैर्जीवंतीकाकोल्यादिभिः क्षीरपिष्टैः स्नेहनं पुटपाकं कल्पयेद्वैद्यः ॥ १० ॥

प०—अत्र भूशया बिलेशया भेकगोधादयः प्रसहा गोखरादयः । आनूपा हंससारसादय एषां मेदस्तथा मज्जा तथा वसा तथामिषं मांसं तैः पयसा क्षीरेण पिष्टैः तथा जीवनीयैर्जीवन्त्यादिभिः क्षीरपिष्टैरेव स्नेहनं पुटपाकं कल्पयेत् ॥ १० ॥

हे०—स्नेहनस्य द्रव्याण्याह—भूशयेति । भूशया बिलेशयाः ॥ १० ॥

**मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैंधवैः ।**
**स्रोतोजशंखफेनालैर्लेखनं मस्तुकल्पितैः ११ ।**

स०—मृगा हारिणाद्याः पक्षिणो विष्किरप्रतुदा स्तेषां यकृन्मांसानि तैः । तथा मुक्तादिभिर्मस्तुकल्पितैर्लेखनं पुटपाकं कल्पयेद्वैद्यः । प्रसहानां मृगपक्षिण

स्नेहने पुटपाक उपयुक्तत्वाज्जांगला एव मृगपक्षिणोऽत्र ग्राह्याः ॥ ११ ॥

प०—मृगा हरिणादयः । पक्षिणो लावादयः । एषां यकृत् कालीयकं मांसमामिषं तथा मुक्ताफलानि अयःशस्त्रचूर्णं तथा ताम्रं सैन्धवं लवणं स्रोतोजमञ्जनं तथा शंखं फेनं समुद्रफेनम् । अलं हरितालम् । एतैर्मस्तुकल्कितैर्मस्तुप्रविष्टैर्लेखनं पुटपाकं प्रकल्पयेत् ॥ ११ ॥

हे०—लेखनस्य द्रव्याण्याह—मृगपक्षीति । पक्षिणो विष्किरप्रतुदाः ॥ ११ ॥

**मृगपक्षियकृन्मजावसाऽन्त्रहृदयामिषैः ।**
**मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ॥ १२ ॥**

स०—मृगपक्ष्यादीनां यकृन्मजावसांत्रहृदयामिषाणि तैः । तथा मधुरैर्मधुरवर्गोक्तैर्घृतान्वितैः स्तन्यक्षीरपिष्टैः प्रसादनं पुटपाकं कल्पयेद्वैद्यः । अत्र स्तन्यं स्त्रिया एव ॥ १२ ॥

प०—मृगाः पक्षिणश्च प्रागुक्ताः । तेषां यकृदादिकं ग्राह्यम् । तैस्तथा मधुरैर्भेषजैर्जीवनीयैः सघृतैः स्तन्यक्षीरेण स्त्रीस्तन्यपयसा पिष्टैः कल्कीकृतैः प्रसादनं पुटपाकं प्रकल्पयेत् ॥ १२ ॥

हे०—प्रसादनस्य द्रव्याण्याह—मृगपक्षियकृदिति । मधुरैर्जीवनीयैः ॥ १२ ॥

अधुना पुटपाकस्य कल्पनामाह—

**बिल्वमात्रं पृथक्पिण्डं मांसभेषजकल्कयोः ।**
**उरुबूकवटाऽम्भोजपत्रैः स्नेहादिषु क्रमात् ॥**
**वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ।**
**पचेत्प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम् ।**
**नेत्रे तर्पणवद्युञ्ज्यात् ॥ १३ ॥**

स०—मांसं च भेषजकल्कश्च तयोः पृथक् । बिल्वफलमात्रं पिंडमेरंडादिपत्रैर्वेष्टयित्वा कृष्णमृत्तिकालिप्तं वृद्धवैद्यव्यवहारात् द्व्यंगुलोत्सेधं मृत्तिकालेपं कृत्वा क्रमेण धवादीन्धनैः प्रदीप्तैः पचेत् । तत्र स्नेहने पुटपाके एरंडपत्रैर्वेष्टनं धवकाष्ठैः प्रदीपनम् । लेखने वटपत्रैर्वेष्टनं धन्वनकाष्ठैः प्रदीपनम् । प्रसादने जलजपत्रैर्वेष्टनं गोमयेंधनेन प्रदीपनमिति क्रमार्थः । अग्न्याभमिति । अग्निवर्णं सत् पक्वं ज्ञात्वाऽपनीतपत्रं विधाय वाससा निष्पीड्य तद्रसं नयने तर्पणमिव युंज्यात् ॥ १३ ॥

प०—बिल्वमात्रं पलप्रमाणं पृथग्व्यस्तं मांसस्य वेसवारीकृतस्य पिण्डं तथा तन्मात्रस्यैव भेषजकल्कस्य पिण्डं तदेकत्र संमृज्य मिश्रयित्वा एकत्र कृत्वा तं पिण्डं पचेदुरुबूकपत्रैः स्नेहनपुटपाकं वेष्टयित्वा तथा लेखनपुटपाकपिण्डं वटपत्रैस्तथा प्रसादनपुटपाकपिण्डं पद्मपत्रैर्वेष्टयित्वाऽनन्तरं मृदा लिप्तं कृत्वा ततो धवधन्वनगोमयैः यथाकालं प्रकर्षेज्वलितैः पिण्डं पचेत् । यावदग्न्याभं सम्पद्यते । एवं पक्वं ज्ञात्वा तद्रसं निष्पीड्य नेत्रे युञ्ज्यात् । तर्पणेन तुल्यं तर्पणवत् । यथा तर्पणं नेत्रे युञ्जीत यवमाषमयीं पालीं कृत्वा तद्वत्पुटपाकपिण्डाद्रसं निषिञ्चेत् । पक्ष्माग्रतर्पणवदुन्मेषं मन्दं मन्दं कृत्वा ॥ १३ ॥

हे०—पुटपाकसाधनमाह—बिल्वमात्रमिति । मांसपिंडमौषधपिंडं च पृथक् बिल्वमात्रमेकीकृतं स्नेहनादिष्वेरंडादिपत्रैः क्रमाद्वेष्टितं कुशमुञ्जमूत्राण्यतमेन बद्धं ततो द्व्यंगुलोत्सेधेन मृल्लिप्तं धवादीन्धनैः पचेत् । संग्रहे तु धवधन्वनमधूकन्यग्रोधकाश्मर्यराजादनार्जुननक्तमालपाटलीनामन्यतमैः काष्ठैः शकृता वा गोमहिषयोः पचेदिति । पुटपाकविधिमाह—अग्न्याभमिति । तं पिण्डमग्निवर्णत्वेन पक्वं ज्ञात्वा निष्पीड्य रसं तर्पणवद्युञ्ज्यात् ॥ १३ ॥

**शतं द्वे त्रीणि धारयेत् ।**
**लेखनस्नेहनान्त्येषु ॥ १४ ॥**

स०—लेखनादिषु शतादीनि धारयेत् । तत्र लेखने शतं मात्राणां धारयेत् । स्नेहने द्वे शते । अन्त्ये प्रसादने त्रीणि शतानि धारयेत् ॥ १४ ॥

प०—लेखनपुटपाके मात्राशतं धारयेत् । स्नेहने द्वे शते धारयेत् । अन्त्ये प्रसादने त्रीणि शतानि मात्राया धारयेत् ॥ १४ ॥

हे०—पुटपाकधारणावधिमाह—शतमिति । अन्त्यः प्रसादनः ॥ १४ ॥

**पूर्वौ कोष्णौ हिमोऽपरः ॥ १५ ॥**

स०—पूर्वौ स्नेहनलेखनौ कोष्णौ योज्यौ । हिमोऽपरः प्रसादनाख्यः ॥ १५ ॥

प०—पूर्वौ पूर्वनिर्दिष्टौ लेखनस्नेहौ कोष्णौ किञ्चिदुष्णौ नेत्रे प्रयोज्यौ । अपरोऽन्त्यस्तृतीयः प्रसादनः सहिमः शीतो योज्यः ॥ १५ ॥

हे०—पुटपाकानामुष्णशीतभेदमाह—कोष्णाविति १५॥

**धूमपोऽन्ते तयोरेव ॥ १६ ॥**

स०—तयोराद्ययोः पुटपाकयोरंते धूमपः स्यात् । स्नेहेरितकफोपशांत्यै न तु प्रसादनांत इत्येव-शब्दार्थः ॥ १६ ॥

प०—तयोरेव लेखनस्नेहनयोरन्तेऽवसाने धूमपो नरः स्यात् ॥ १६ ॥

हे०—लेखनस्नेहनयोरनन्तरकृत्यमाह—धूमप इति १६॥

**योगास्तत्र च तृप्तिवत् ॥ १७ ॥**

स०—तत्र तेषु च पुटपाकेषु योगास्तर्पण इव स्युः । तृप्तिवदिति सप्तम्यंताद्वतिः । योगा इति बहु-वचननिर्देशात् सम्यग्योगायोगातियोगा गृह्यंते॥ १७॥

प०—तृतीये प्रसादनाख्ये तत्र च पुटपाके योगाः सम्यग्योगहीनातियोगास्तृप्तिवद्बोद्धव्याः । तृप्त्यातुल्यास्तृप्तिवत् । तर्पणेन समा इति यावत् । प्रकाशक्षमतादिना लक्षणेन समाना विज्ञेयाः श्लेष्मजा रुज इत्येवंपर्यन्ताः ॥ १७ ॥

हे०—पुटपाकस्य सम्यग्योगादिलक्षणमाह—योगा इति ॥ १७ ॥

**तर्पणं पुटपाकं च नस्यानर्हे न योजयेत्॥१८॥**

स०—तर्पणपुटपाकौ नस्यायोग्ये न योजयेत् । नस्यानर्हाः योजयेन्नतु नावनमित्याद्युक्ताः ॥ १८ ॥

प०—उभयमप्येतत्तर्पणं तथा पुटपाकं नस्या-नर्हे नस्यदानायोग्ये पुंसि न योजयेत् ॥ १८ ॥

हे०—निषिद्धनस्यानां तर्पणपुटपाकौ निषेधति—तर्प-णमिति ॥ १८ ॥

**यावंत्यहानि युंजीत द्विस्ततो हितभाग्भवेत्१९॥**

स०—यावन्मात्राणि दिनानि तर्पणपुटपाकौ कुर्वीत तावंत्यहानि ततो द्विगुणानि च दिनानि हितसेवी स्यात् ॥ १९ ॥

प०—उभयमप्येतत्तर्पणं पुटपाकं यावन्त्यहानि यत्संख्यातानि दिनानि युञ्जीत तेभ्यो दिनेभ्यो द्विर्द्विगुणं कालं हितभाक् भवेत् पथ्यसेवी स्यात् ॥ १९ ॥

हे०—तर्पणपुटपाकयोराचारमाह—य
तु तथा पक्वातिसारेऽपि पुटपाकस्यायमे
भवतित्यत्र " सेकेंऽजने तर्पणे च पुटपा
जायन्ते विधिविभ्रंशाद्यथास्वं तान् प्रभाषे

**मालतीमल्लिकापुष्पैर्बद्धाक्षो निव**

स०—कृततर्पणपुटपाको मालत
सन् विभावरीं वसेत् । मालती सुमना
वार्षिका ॥ २० ॥

प०—मालतीसुमनोमल्लिकाद्विपुटा
द्धाक्षः पुमान् निशां रात्रिं निवसे

**सर्वात्मना नेत्रबलाय यत्नं**
**कुर्वीत नस्यांजनतर्पणाद्यैः**
**दृष्टिश्च नष्टा विविधं जग**
**तमोमयं जायत एकरूपम्**

स०—सर्वेण प्रकारेण नेत्रबलाय
नस्यादिभिर्यत्नं कुर्यात् । दृष्टिश्चेति
यतो दृष्टिर्यदि न स्यात्ततो जगद्विविध
मंधकाररूपमेकलक्षणं संपद्यत इति । उप

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्त
मष्टांगहृदयटीकायां सर्वांगसुंदरा
चतुर्विंशोऽध्यायः ॥ २४

प०—सर्वात्मना सर्वप्रकारं यत्न
लाय चक्षुषो रक्षणार्थं यत्नमुद्योगं
कैर्नस्यादिभिः । नस्याञ्जनपुटपाक
रादिभिः । यस्माद्दृष्टिर्नष्टा दर्श
विविधं नानारूपं जगदिदं तमोमयं
जायते सम्पद्यते एकरूपं पृथग्भाव
रान्धकाररूपं प्रकाशरहितं संजायत इ

इति श्रीचन्द्रनन्दनविरचितायां प
कायामष्टाङ्गहृदयटीकायां सू
तर्पणपुटपाकाध्यायश्चतु
विंशतितमः ॥२४॥

हे०—नेत्ररक्षणे यत्नः कार्य इत्याह—
दृष्टिश्चेति । चशब्दश्चेदर्थे ॥ २१ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने
रणं सामस्त्येन निरूपितम् ॥

# पंचविंशतितमोऽध्यायः ।

अथेदानीं पंचविंशाऽध्यायारंभो यंत्रप्रविधानप्रदर्शनार्थः । यतो बस्तिनस्यांजनक्षारादीनि यंत्राश्रयाण्येवेत्याह–

**अथाऽतो यंत्रविधिमध्यायं व्याख्यास्यामः॥१॥**

स०–यंत्रस्य विधिर्यंत्रविधिः । शेषं पूर्ववत् । अर्शोभगंदरादिषु निरुजेंऽगे यम्यते नियम्यते शस्त्रक्षाराग्निकर्मेति यंत्रम् ॥ १ ॥

प०–अस्यारम्भे त्विदं प्रयोजनम् । बस्त्यादीनामञ्जनपर्यन्तानां यन्त्रमुक्तम् ॥ १ ॥

हे०–अथातो यन्त्रविधिमध्यायं व्याख्यातुं प्रतिजानीते ॥ १ ॥

एतदेव स्पष्टयन्नाह–

**नानाविधानां शल्यानां नानादेशप्रबाधिनाम् ।**
**आहर्तुमभ्युपायो यस्तद्यंत्रं यच्च दर्शने ।**
**अर्शोभगंदरादीनां शस्त्रक्षाराऽग्नियोजने ।**
**शेषांगपरिरक्षायां तथा बस्त्यादिकर्मणि ।**
**घटिकालाबुशृंगं च जांबवौष्ठादिकानि च॥२॥**

स०–अनेकप्रकाराणि यानि शल्यानि शल्यवेणुपाषाणादिरूपाणि विविधेषु शरीरप्रदेशेषु निविशंते तेषामाहरण आक्रष्टुं योऽभ्युपायस्तद्यंत्रमुच्यत इति शेषः । तथाऽर्शोभगंदरनाडीव्रणादीनां शस्त्रादियोजने सति शेषस्य विरुजांगस्य परिरक्षायां रक्षानिमित्तम् । स्वस्थस्यांऽगस्य शल्यबाधा निवृत्त्यर्थमित्यर्थः । तथा बस्तिनस्यादिकर्मणि य उपायस्तच्च यंत्रम् । तथा घटिकादि च यंत्रं पिचुना रक्ताद्याकर्षणाय च । जांबवोष्ठसंदंशादीनि च यंत्राणि ॥ २ ॥

प०–आहरणार्थं च यदुपयुज्यते तन्नानाविधमध्याये व्याख्यातुकाम इदमाह–अतः शरीरबाधकानि शल्यानि चैषां नानाविधानामनेकप्रकाराणां शल्यानां नानासंस्थानां तथा नानादेहप्रदेशेषु व्याधीनां विनिर्दिष्टानामनेकप्रकाराणां देहदोषोपघातकारिणां य आहर्तुमाक्रष्टुं देहदेशान्तःस्थितानां बाह्यनिष्क्रमणोपायस्तद्यन्त्रमुच्यते । न केवलमेतद्यावच्छल्यस्य दर्शनेऽवलोकने चार्शोभगन्दरप्रभृतीनां विकाराणाम् । तथा शस्त्रक्षाराग्नियोजने शस्त्रादिकर्मणि तथा शेषाङ्गपरिरक्षायामर्शोभगन्दरप्रभृतिविकाराणां क्रान्तं शस्त्रक्षारादिकर्म योज्यं वर्जयित्वा यदन्यदङ्गं विकारैर्जुष्टं तस्य रक्षार्थं तथा बस्तिदानादौ कर्मणि यत् साधनं तथा घटिकालाबुशृङ्गं तथा जाम्बवौष्ठकादिकानि च वस्तुजातानि तत्सर्वं यन्त्रं जाम्बवोष्ठक्षुरे द्रवकः यम्यते बध्यतेऽवष्टभ्यते आहर्तुं शल्यादि तेन यद्यन्त्रम् ॥ २ ॥

हे०–यन्त्रलक्षणमाह–नानाविधानामिति । शल्याहरणे य उपायः, यश्चार्शःप्रभृतिदर्शने यश्च शस्त्रादिच्छेद्यसमीपांगरक्षणे यश्च वस्त्यादिप्रणयने यश्च घटिकादिराचूषणादौ तद्यन्त्रम् । एवंविध उपायविशेषो यन्त्रमित्यर्थः ॥ २ ॥

यंत्राणां किं रूपं किं कार्यमित्याह–

**अनेकरूपकार्याणि यंत्राणि विविधान्यतः ।**
**विकल्प्य कल्पयेद् बुद्ध्या ॥ ३ ॥**

स०–रूपाणि च कार्याणि च रूपकार्याणि । अनेकानि विचित्राणि रूपकार्याणि येषां तानि नानाप्रकाराणि । तत्र रूपं कंकमुखस्वस्तिकाद्याकारत्वम् । कार्यमस्थ्यादिलग्नशल्यहरणादिकम् । यतश्चैवं नानाविधत्वं यंत्राणामतस्तानि बुद्ध्या विकल्प्य कार्यानुरोधात्कल्पयेत् ॥ ३ ॥

प०–अनेकानि रूपकार्याणि येषां तानि नानाकृतीनि तानि कर्माणि च स्वस्थातुरोपकरणानि तथा विविधान्यनेकप्रकाराणि कर्मवशात्तद्बुद्ध्या विकल्प्य स्वबुद्ध्योत्प्रेक्ष्य निरूपितानि कल्पयेत् कुर्यात् ॥ ३ ॥

हे०–यन्त्रविशेषाणामनन्तत्वाद्बुद्ध्या कल्प्यत्वमाह–अनेकरूपकार्याणीति । निदर्शनार्थं कांश्चिद्यन्त्रविशेषान्वक्तुमाह—यथास्थूलमिति । स्वस्तिकसंदंशतालनाडीशलाकानुयन्त्रभेदात्षोढा यंत्राणि ॥ ३ ॥

ननु यंत्राणां दिङ्मात्रेऽप्यनभिज्ञः कथमिव कल्पनां कर्तुं पारयेदित्याह—

**यथास्थूलं तु वक्ष्यते ॥ ४ ॥**

स०—यानि यानि स्थूलानि यथास्थूलम् । यथाऽसादृश्ये इत्यव्ययीभावः । यथास्थूलयंत्रकरणेन व्युत्पन्नमतिः शेषाणामपि यंत्राणामुत्पादने विकल्पं कर्तुं समर्थो भवत्येवेति भावः ॥ ४ ॥

प०—यथास्थूलं स्थूलानतिक्रमेण वक्ष्यते । तेषामामयानामियत्तयाऽवधारणाशक्यत्वात् ॥ ४ ॥

अथ यंत्राण्याह—

**तुल्यानि कंकसिंहर्क्षकाकादिमृगपक्षिणाम् ।**
**मुखैर्मुखानि यंत्राणां कुर्यात्तत्संज्ञकानि च ॥**
**अष्टादशांगुलायामान्यायसानि च भूरिशः ।**
**मसूराकारपर्यंतैः कंठे बद्धानि कीलकैः ॥**
**विद्यात्स्वस्तिकयंत्राणि मूलेऽङ्कुशनतानि च ।**
**तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ॥ ५ ॥**

स०—येन पार्श्वेन शल्यमुद्ध्रियते तद्यंत्राणां मुखं वेद्यम् । कंकादीनां पक्षिमृगादीनां मुखैस्तुल्यानि यंत्राणां मुखानि कुर्यात् । आदिशब्देन गृध्रहरिणादिपरिग्रहः । तानि तत्संज्ञकानि । च एवार्थे । तानि यंत्राणि तन्नामान्येव । यथा कंकमुखं सिंहमुखमित्यादि । स्वस्तिकाख्यानि यंत्राणि विद्यात् । कीदृशानि । अष्टादशांगुलदैर्घ्याणि भूरिशो बाहुल्येनायसानि शस्त्रमयानि । दंतादिमयानामपि क्वचिद्दर्शनाद् भूरिश इत्युक्तम् । तथा कंठप्रदेशे कीलकैर्बद्धानि । कीदृशैः कीलकैः मसूराकाराः पर्यंता येषां तैः । यत्र प्रदेशे यंत्राणां हस्तग्रहस्तत्र तन्मूलम् । तत्रांऽकुशवन्नतानि परिणतानि । तैः कंकमुखादिभिरस्थिसंलग्नशल्यस्य काण्डफलादेराहरणमाकर्षणमिष्यते ॥ ५ ॥

प०—काकसिंहादीनां मृगपक्षिणां सम्बन्धिभिर्मुखैर्वक्त्रैर्मुखानि तुल्यानि सदृशानि यन्त्राणां कुर्यात् । तानि तत्संज्ञकानि तन्नामधेयानि विज्ञेयानि यादृङ्मुखं संज्ञया भवति । तथा कङ्कमुखं काकमुखम् । तानि चाष्टादशाङ्गुलदीर्घाणि भूयसा बाहुल्येनायसानि शस्त्रमयानि । मसूराकारा मसूरसदृशाः पर्यन्ताः येषां तैस्तथाभूतैः कीलकैः कण्ठे मुखादधःप्रदेशे बद्धानि तानि स्वस्तिकसंज्ञानि यन्त्राणि विद्यात् जानीयात् । तथा मूले मूलविषये हस्तग्रहणप्रदेशेऽङ्कुशवन्नतानि कुटिलानि कुर्यात् तैः स्वस्तिकाख्यैर्दृढैर्यन्त्रैः अभङ्गुरैरस्थिसंलग्नं स्थिसंलग्नं यच्छल्यं तस्याहरणमिष्यते ॥ ५ ॥

हे०—तत्र स्वस्तिकानाह—तुल्यानीति तत्संज्ञकानि कंकमुखसिंहमुखादिनामानि आयदैर्घ्यं, भूरिश इति वचनादार्वादिकृतान्यपि कंठे मुखाकारसम्पादकशकलद्वयसन्धानस्थाने धारणस्थाने । स्वस्तिकानां कार्यमाह—तैर्दृढैरिति संदंशाश्चत्वारः । तत्र कीलबद्धाग्रकीलमुक्ताग्रौ ॥ ५ ॥

**कीलबद्धविमुक्ताग्रौ संदंशौ षोडशांगुलौ ।**
**त्वक्शिरास्नायुपिशितलग्नशल्यापकर्षणौ ॥ ६**

स०—कीलेन मसूराकारांतेन बद्धं विमुक्तमग्रं ययोस्तौ कीलबद्धविमुक्ताग्रौ संदंशौ भवतः । कीदृशौ षोडशांगुलप्रमाणौ । क उपयोग एतयोः स्यादित्या त्वगित्यादि । त्वगादीनां द्वंद्वः । त्वक्शिरास्नायुपिशितलग्नं च तच्छल्यं च तस्याऽपकर्षण आहरणे तावुयुज्येते ॥ ६ ॥

प०—द्वौ संदंशौ कार्यौ । तयोरेकः कीलबद्धाग्रदेशः संनिबन्धनद्वितीयो विमुक्ताग्रदेशः कीलकेनाबन्धमुखान्निबन्धनः तौ षोडशाङ्गुलौ भवतः । द्वौ द्वौ च त्वगादिषु लग्नं गतं शल्यं यत्स्यात्तथापकर्षणायोद्धरणार्थमुपदिश्यते ॥ ६ ॥

हे०—सन्दंशानाह—कीलबद्धेति ॥ ६ ॥

**षडंगुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम् ७**

स०—षोडशांगुलसंदंशादन्यः संदंशः सूक्ष्मशल्यानां नासारोमादीनां हरण आकर्षणे तथोपपक्ष्मणां वर्त्मोद्भवानामाहरणे युज्यते ॥ ७ ॥

प०—अन्योऽपरः संदंशः षडङ्गुलं दीर्घः विमुक्ताग्र एव । स च सूक्ष्मशल्यानामक्षिप्रणयगतान तथोपपक्ष्मणां हरण आहर्तुमिष्यते । पक्ष्मसमीपे जन्मोत्तरजातानि रोमाण्युपपक्ष्मशब्देनोच्यन्ते ॥ ७ ॥

हे०—षडंगुलं सन्दंशमाह—षडंगुल इति । उपपक्ष्मणां नेत्रेष्ववांतरपक्ष्मणाम् ॥ ७ ॥

**मुचुण्डी सूक्ष्मदंतर्जुमूले रुचकभूषणा ।**
**गंभीरव्रणमांसानाममर्मणः शेषितस्य च ॥ ८ ॥**

स०–स च मुचुंडीसंज्ञः । किंभूता मुचुंडी । सूक्ष्मा दंता यस्याः सा सूक्ष्मदंता तथर्जुरवक्रा न च संदंशवद्वक्रा बद्धा द्विबाहुरित्यर्थः । तथा मूले हस्तग्रहणस्थाने रुचकमंगुलीयकरूपं भूषणं यस्याः सा रुचकभूषणा । रुचकपीडनेन सा कर्म करोतीत्यर्थः । गंभीरश्चासौ व्रणश्च गंभीरव्रणस्तस्मिन् मांसानि तस्याधिमांसमेतद्विषय आहरणे । अर्मणश्च शेषितस्य च्छिन्नशेषस्याऽऽहरणे मुचुंडी ॥ ८ ॥

प०–सूक्ष्मा दन्ता यस्याः सा सूक्ष्मदन्ता । ऋजुर कुटिला द्विजमुक्ता सा च षडङ्गुला आनिर्दिष्टप्रमाणत्वात् । सा च मूले हस्तग्रहणप्रदेशे रुचकभूषणा रुचकभूषणनद्धारुचकोवलयवलपीडनार्थे कृतो वलयो यस्याः सा मुद्रीनामतः । सा गम्भीरव्रणाधिकारमांसान्ताहरणे तथाक्षिण वर्त्मनः शेषितस्याहरणे योज्या । इति संदंशयन्त्राणि व्याख्यातानि ॥ ८ ॥

हे०–मुचुण्ड्याख्यं सन्दंशमाह—मुचुण्डीति । सूक्ष्मदन्ता सूक्ष्माग्रा, ऋजुरवक्रा, रुचकभूषणा मूले मुद्रिकाबद्धा, गम्भीरेषु व्रणेषु यानि मांसानि यानि च नेत्रेषु छिन्नशेषाण्यर्माणि तेषां हरणे ॥ ८ ॥

**द्वे द्वादशांगुले मत्स्यतालवद् द्व्येकतालके ।**
**तालयंत्रे स्मृते कर्णनाडीशल्यापहारिणी ॥९॥**

स०–द्वे तालयंत्रे भवतः । किंप्रमाणे द्वादशांगुले। संस्थानमाह । मत्स्यतालवन्मीनगलतालवत् द्वितालके द्वयोः पार्श्वयोर्मत्स्यमुखसदृशमपरमेकतालकमेकपार्श्वे मत्स्यमुखाकारमेवं द्वितीये । ते द्वे तालयंत्रे स्याताम् । कर्णेत्यादि । कर्णनाडीशल्यमपहरतः कर्णनाडीशल्यापहारिणी ॥ ९ ॥

प०–द्वे तालुयन्त्रे मुनिना स्मृते । द्वादशाङ्गुले परिमाणे । मत्स्यतालेन तुल्यं मत्स्यतालवत् । मत्स्यगलतालसदृशे इति यावत् । मत्स्यतालवद्द्वे चैकं च तालकं मत्स्यगलद्वितालतुल्यं द्वितीयं मत्स्यगलताल्वेकतुल्यम् । ते च द्वे कर्णनाड्योः स्थितस्य शल्यस्यापहारिणी ॥ ९ ॥

हे०–तालयन्त्रद्वयमाह–द्वे द्वादशांगुल इति । मत्स्यतालो मत्स्यगलतालः ॥ ९ ॥

**नाडीयंत्राणि सुषिराण्येकानेकमुखानि च ।**
**स्रोतोगतानां शल्यानामामयानां च दर्शने ॥**
**क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च ।**
**तद्विस्तारपरीणाहदैर्घ्यं स्रोतोऽनुरोधतः ॥ १० ॥**

स०–नाडीयंत्राणि बस्तिनेत्रादिवत् सुषिराणि स्युः। एकं चाऽनेकं चैकानेकं मुखं येषां तानि च कानिचिदेकमुखान्येकद्वाराणि कानिचिदनेकमुखान्यनेकद्वाराणि । एतत्कर्माचष्टे । स्रोत इत्यादि। तानि च कर्णादिस्रोतोगतानां शल्यानां दर्शननिमित्तं विदधीत । तथा कंठादिस्रोतोगतानां रोगाणां दर्शने दर्शननिमित्तं विदधीत । तथा क्रियाणां शस्त्रक्षाराग्निप्रक्षालनौषधप्रणिधानादीनां सुकरत्वार्थम् । तथा विषदिग्धांगादीनामाचूषणाय विदधीत । तद्विस्तारेत्यादि । तेषां नाडीयंत्राणां विस्तारश्च परीणाहश्च दैर्घ्यं च तानि स्रोतोवशाद्भवंति । यथाऽनुवासनोत्तरबस्तिनस्यनाडिकादिषु निर्दिष्टम् ॥ १० ॥

प०–तत्रस्थं शल्यं ताभ्यां नाडीयन्त्राण्याह–एकं चानेकं च एकानेकम्।एकानेकं मुखं येषां तानि नाडीयन्त्राणि शुषिराण्यन्तःशून्यानि अनेकप्रयोजनानि । स्रोतोगतानां कण्ठप्रभृतिस्रोतःस्थितानामामयानां व्याधीनां च दर्शने दर्शनार्थं तथाहरणार्थं च । तथा क्रियाणां शल्याहरणशस्त्रक्षाराग्न्यादीनां सुकरत्वाय सौकर्यार्थं तथा दुष्टवक्त्राणामाकर्षणार्थं च । विस्तारश्च परीणाहश्च दैर्घ्यं च तेषां समाहारः विस्तारपरिणाहदैर्घ्यं स्रोतोऽनुरोधवशात् । स्रोतोऽनुरोधेन यथायोगं कुर्यात् । पार्श्वापरपार्श्वाभ्यां परिमाणेन विस्तारो ज्ञेयः । परिनिष्ठप्रमाणपरिच्छेदः परिणाहः पूर्वोक्तान् यद्दैर्घ्यमुच्चैस्त्वम् ॥ १० ॥

हे०–नाडीयन्त्राण्याह—नाडीयन्त्राणीति । विस्तारो विवरस्य, परीणाहः स्थौल्यं तद्यन्त्रस्य ॥ १० ॥

**दशांगुलार्धनाहांतः कंठशल्यावलोकने ।**
**नाडी ॥ ११ ॥**

---

१ "मुचुटी" इति पाठः ।

स०—कंठे शल्यं कंठशल्यम्। कंठाभ्यंतरशल्यावलोकनार्थं दशांगुला नाड्यर्धनाहा पंचांगुलपरिणाहा ॥ ११ ॥

प०—नाडी कार्येति सम्बन्धः। दशाङ्गुलदीर्घा नाडी। अतोऽर्धनाहा पञ्चाङ्गुलपरिणाहा अवलोक्यतेऽनयेत्यवलोकिनी। कण्ठप्रतिप्रशल्यदर्शनार्थम् ॥ ११ ॥

हे०—कण्ठान्तः शल्यावलोकिनीं नाडीमाह—दशांगुलेति। अर्द्धनाहा पञ्चांगुलस्थौल्या, चतुष्कर्णवारंगसंग्रहणीं नाडीमाह—नाडीति ॥ ११ ॥

**पंचमुखच्छिद्रा चतुष्कर्णस्य संग्रहे।**
**वारंगस्य द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः १२॥**

स०—पंचमुखानि छिद्राणि यस्याः सा चतुष्कर्णस्य वारंगस्य संग्रहे संग्रहणनिमित्तमिदं यंत्रम्। चत्वारः कर्णा यस्य वारंगस्येति समासः। तत्र शरादिदंडप्रवेशः शिखाकारः कीलको वारंग उच्यते। द्विकर्णवारंगस्य संग्रहार्थे त्रिच्छिद्रा नाडी स्यात्। त्रीणि छिद्राणि यस्याः सा त्रिच्छिद्रा। छिद्रशब्दस्योपलक्षणार्थत्वात्रिमुखेत्येतदपि द्रष्टव्यम्। तस्य वारंगस्य प्रमाणं तत्प्रमाणं तस्माद्वारंगप्रमाणस्तदनुसारेण नाडीप्रमाणं ज्ञेयम् ॥ १२ ॥

प०—अन्या नाडी पञ्चमुखे छिद्राणि यस्याः सा तथाविधा कार्या। चतुष्कर्णस्य वारङ्गस्य सङ्ग्रहनिमित्तं कण्ठादीनां दण्डादावन्तःप्रवेशार्थम्। कीलकशिखाकारो वारङ्गः। तथा द्विकर्णस्य वारङ्गस्य सङ्ग्रहार्थं त्रिच्छिद्रमुखा नाडी कर्तव्या। तत्प्रमाणतो वारङ्गकर्णप्रमाणेन ॥ १२ ॥

हे०—पञ्चमुखच्छिद्रा मुखे छिद्रपञ्चकयुता। द्विकर्णसंग्रहणीं नाडीमाह—द्विकर्णस्येति। तत्प्रमाणतः संग्राह्यप्रमाणेन एतच्च नाडीद्वये छिद्रमानम् ॥ १२ ॥

**वारंगकर्णसंस्थानाऽऽनाहदैर्घ्यानुरोधतः।**
**नाडीरेवंविधाश्चाऽन्या द्रष्टुं शल्यानि कारयेत् ॥**

स०—वारंगकर्णस्य संस्थानं चाऽऽनाहश्च दैर्घ्यं च तान्येव वारंगकर्णसंस्थानानाहदैर्घ्याणि तेषामनुरोधस्तस्मादेवंप्रकारा अन्या अपि नाडीः शल्यानि शरीरांतर्गतानि द्रष्टुं कारयेत् ॥ १३ ॥

प०—वारङ्गस्य कर्णस्थानमाह—विस्तारप दैर्घ्याणि तेषामनुरोधाद्वशायोगत्वेन तुल्य नाडी कार्या। अन्या नाडीरन्तःशल्यास मुखाश्च शल्यानि द्रष्टुं शल्यदर्शनार्थं कारयेत्

हे०—अन्यान्यपि नाडीयन्त्राण्याह—वारंग संस्थानमाकृतिः, आनाहः स्थौल्यम् ॥ १३ ॥

**पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशांगुला**
**चतुर्थसुषिरा नाडी शल्यनिर्घातिनी मत**

स०—मूर्ध्नि मूर्धभागे पद्मकर्णिकया जल कया सदृशी। कियत्प्रमाणा। द्वादशांग तथा चतुर्थश्चतुर्भागः सुषिरो यस्याः। अंगु रेति यावत्। सा नाडी शल्यनिर्घातिनी मुनीनामिति शेषः ॥ १४ ॥

प०—निश्चलशल्यस्याहरणार्थं पद्मकर्णिकय कर्णिकाकारत्वेन मूर्ध्नि शीर्षे सदृशी तुल्या शाङ्गुलप्रमाणा चतुर्थसुषिरा दीर्घा चतुर्थो सुषिरो यस्याश्चयङ्गुलसुषिरेति यावत्। सा श निर्घातिनी मता ॥ १४ ॥

हे०—शल्यनिर्घातिनीं नाडीमाह—पद्मकर्णिक चतुर्थसुषिरा त्र्यंगुलदीर्घविवरा ॥ १४ ॥

अर्शोयंत्रं दर्शयितुमाह—

**अर्शसां गोस्तनाकारं यंत्रकं चतुरंगुलम्।**
**नाहे पंचांगुलं पुंसां प्रमदानां षडंगुलम्**
**द्विच्छिद्रं दर्शने व्याधेरकच्छिद्रं तु कर्मणि**
**मध्येऽस्य त्र्यंगुलं छिद्रमंगुष्ठोदरविस्तृतम्**
**अर्धांगुलोच्छ्रितोद्वृत्तकर्णिकं तु तदूर्ध्वतः**

स०—अर्शसां संबंधि यंत्रकं गोस्तनाकृति रंगुलं मानतो दैर्घ्येण स्यात्। यंत्रकमित्याव स्यात्। नाहे परिणाहे च पंचांगुलम्। चांगुलदैर्घ्येण सत्रेण नेष्यते तत्प्रमाणं स्थौल त्यर्थः। पुंसामेव पंचांगुलं नाहे स्यात्। परिणाहे तु षडंगुलं यंत्रकं स्यात्। वत एव तासां गुदस्य महत्त्वात्। व्याधे द्विच्छिद्रमुभयपार्श्वे द्विच्छिद्रं यंत्रम्। कर्मणि क्षाराद्यवचारणे एकच्छिद्रं यंत्रकम्। अस्य ये

मध्ये त्र्यंगुलं छिद्रमंगुष्ठमध्यतुल्यविस्तारं तथा तदूर्ध्वतोऽर्धांगुलोच्छ्रिता उद्धृता कर्णिका यस्य तदेवम् ॥ १५ ॥

प०—गोस्तनाकारं गोस्तनसदृशं संस्थानं यत्तदर्शसां कार्यम् । तच्च यन्त्रकं चतुरङ्गुलं चतुरङ्गुलायतं तच्च पञ्चाङ्गुलानाहम् पुंसाम् । तथा षडङ्गुलपरिणाहं प्रमदानां स्त्रीणां द्विच्छिद्रं दर्शने दर्शनार्थमर्शोव्याधौ तथैकच्छिद्रं तदेवैकपार्श्वान्वितम् । अर्शोव्याधौ कर्मणि शस्त्रक्षाराग्न्यादियोजने तथा द्विमुखे दर्शनं छिद्रेण शस्त्रक्षाराग्न्यनतिक्रमश्चैकच्छिद्रेण । अस्य यन्त्रस्य मध्ये छिद्रं त्र्यङ्गुलायतमङ्गुष्ठोदरविस्तारं दैर्घ्याच्च त्र्यङ्गुलं विस्तरतोऽङ्गुष्ठोदरविस्तृतं तस्य छिद्रस्योर्ध्वं तदूर्ध्वं तस्मादूर्ध्वात्तदुपरिष्टात्तद्यन्त्रमर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकं कार्यम् । तथाङ्गुलमवशिष्टं तस्यादावर्धांगुलं वर्ज्यमुपरि तथार्धाङ्गुलमेवं चावस्थितः अर्धाङ्गुलोच्छ्रितोन्नतोद्वृत्ता परिवर्तुला कर्णिका कार्या ॥ १५ ॥

हे०—अर्शोयन्त्राख्यां नाडीमाह—अर्शसामिति । चतुरंगुलं दैर्घ्ये परिणाहे तु पुंसां पञ्चांगुलं व्याधेर्दर्शने द्विच्छिद्रं, क्षारादियोजने तु शेषांगपरिरक्षायामेकच्छिद्रम् । द्विच्छिद्रस्य तु द्वयोः पार्श्वयोः छिद्रम्, एकच्छिद्रस्यैकस्मिन् पार्श्वम् । तच्च त्र्यंगुलदैर्घ्यमंगुष्ठोदरविस्तारं मध्ये कार्यम् । छिद्रादूर्ध्वभागे मूले अर्धांगुलोच्छ्राया बहिः कुञ्चिताग्रा कर्णिका कार्या ॥ १५ ॥

**शम्याख्यं तादृगच्छिद्रं यंत्रमर्शःप्रपीडनम् १६॥**

स०—शमाख्यं शमीसंज्ञं तृतीयं यंत्रकं तादृग् गोस्तनाकारमित्यादिलक्षणलक्षितयंत्रसदृशं स्यात् । अत्र विशेषमाह । अच्छिद्रमित्यादि । अत्र यंत्रे छिद्रं न विधेयमित्यर्थः । इदं च यंत्रमर्शःप्रपीडनं स्यात् ॥ १६ ॥

प०—शम्याख्यं यन्त्रं तादृगर्शो यन्त्रवत् तत्समानाकृति तच्चाच्छिद्रं पार्श्वच्छिद्ररहितम् । अर्शोव्याधिपीडनार्थम् ॥ १६ ॥

हे०—तृतीयमर्शःपीडनं शम्याख्यं यन्त्रमाह--शम्याख्यमिति । तादृक् गोस्तनाकारादिलक्षणम्, अच्छिद्रं पार्श्वच्छिद्ररहितम् ॥ १६ ॥

**सर्वथाऽपनयेदोष्ठं छिद्रादूर्ध्वं भगंदरे ॥ १७ ॥**

स०—सर्वथा भगंदरे भगंदरयंत्रे ओष्ठमपनयेत् । कुतःप्रभृति । छिद्रादूर्ध्वम् । उपरिष्टादर्धांगुलमपकर्षेदित्यर्थः । कर्णिका तु कार्यैव ॥ १७ ॥

प०—सर्वथा सर्वप्रकारेण छिद्रादूर्ध्वमोष्ठं कार्णिकामुपनयेत् । तथा विना तद्यन्त्रं कुर्यात् । भगन्दरे भगन्दरनिमित्ते तत्कर्मणि एतावान् विशेषोऽर्शोयन्त्रकाद्भगन्दरयन्त्रके . तत्कर्णिकापनयनम् ॥ १७ ॥

हे०--भगन्दरयन्त्राख्यां नाडीमाह—सर्वथेति । अर्शोयन्त्रमेवापनीतौष्ठं भगन्दरयन्त्रम्, मुखच्छिद्रस्य पार्श्वभाग ओष्ठः ॥ १७ ॥

**घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यंगुलद्वया । प्रदेशिनीपरीणाहा स्याद्भगंदरयंत्रवत् ॥ १८ ॥**

स०—घ्राणार्बुदे घ्राणार्शसि चैकच्छिद्रा नाडी दैर्घ्येणांगुलद्वयप्रमाणा तथा प्रदेशिनीतुल्यः परीणाहो यस्याः सैवम् । सा च भगंदरयंत्रतुल्या स्यात् । अपनीतौष्ठेत्यर्थः ॥ १८ ॥

प०—अन्या नाडी एकच्छिद्रा तथाङ्गुलद्वयप्रमाणा तथा प्रदेशिनी तर्जनी तत्समानपरीणाहा घ्राणार्बुदानां घ्राणार्शसां विषये कार्या । भगन्दरयन्त्रवत् ॥ १८ ॥

हे०--घ्राणार्शोऽर्बुदयंत्राख्यां नाडीमाह—घ्राणार्बुदेति ॥ १८ ॥

**अंगुलित्राणकं दांतं वार्क्षं वा चतुरंगुलम् । द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम् १९**

स०—अंगुलित्राणकाख्यं यंत्रं दंतमयं काष्ठमयं वा चतुरंगुलप्रमाणमर्शसां यंत्रसदृशं द्विच्छिद्रं गोस्तनाकृति स्यात् । तच्च वक्त्रस्य विवृतौ प्रसारणे । अंगुलैर्दंतेभ्यो रक्षणार्थत्वादंगुलित्राणमिति नाम ॥ १९ ॥

प०—अङ्गुल्यास्त्राणकं रक्षकं दान्तं दशनादिभ्योऽङ्गुलित्राणकम् । दन्तस्येदं दान्तं दन्तमयम् वृक्षस्येदं वार्क्षम् । तच्चतुरङ्गुलदैर्घ्यं द्विच्छिद्रमूर्ध्वाधश्छिद्रयुक्तम् । तथा गोस्तनाकृति तद्वक्त्रविवृतौ मुखविकासे सुखं दृढेन सूत्रेण मणिबन्धं प्रतिबन्धं युञ्ज्यात् ॥ १९ ॥

हे०—अंगुलीत्राणाख्यं नाडीयन्त्रमाह—अंगुलित्राणकमिति । वक्त्रविकाशनार्थं प्रवेशितामंगुलीं रक्षतीत्यंगुलित्राणकम् ॥ १९ ॥

**योनिव्रणेक्षणं मध्ये सुषिरं षोडशांगुलम् ।**
**मुद्राबद्धं चतुर्भित्तमंभोजमुकुलाननम् ।**
**चतुःशलाकमाक्रांतं मूले तद्विकसेन्मुखे ॥ २० ॥**

स०—योनिव्रणमीक्षतेऽनेन तद्योनिव्रणेक्षणं यंत्रकम् । मध्ये मध्यभागे सुषिरम् । तथा दैर्घ्येण षोडशांगुलम् । तथा मुद्रिकयोर्मिकया संचारिण्या बद्धं युक्तम् । तथा चत्वारो भित्ताः पत्राणि यस्य तच्चतुर्भित्तम् । मूले शलाकाक्रमणान्मुखे विकसेत् प्रसरेत् ॥ २० ॥

प०—योनेर्व्रणः योनिव्रणस्तस्येक्षणं योनिव्रणदर्शनं यन्त्रम् । ईक्ष्यते दृश्यतेऽनेनेतीक्षणम् । मध्ये सुषिरं शून्यं तथा षोडशाङ्गुलदीर्घं मुद्रया बद्धं चतुर्भित्तं चतुष्कोणं चतुःशलाकं चतुष्काण्डं सञ्चारिण्या मुद्रयोर्ध्वं बद्धं तथाम्भोजमुकुलवद्विकासितमाननं मुखं यस्य । तथा चतस्रः शलाका यस्य । अम्भोजमुत्पलकुमुदपद्मानि मूले हस्तग्रहणप्रदेशे तद्वदाक्रान्तं पीडितं मुखे मुखप्रदेशे तथा विकासं गच्छेत् ॥ २० ॥

हे०—योनिव्रणे क्षणाख्यां नाडीमाह—योनिव्रणेक्षणमिति चतुर्भित्तं चतुःशलाकम् ॥ २० ॥

**यंत्रे नाडीव्रणाभ्यंगक्षालनाय षडंगुले ।**
**बस्तियंत्राकृती मूले मुखेंऽगुष्ठकलायखे ।**
**अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी २१ ॥**

स०—यंत्रे द्वे षडंगुले भवतः । किमर्थंम् । अभ्यंगश्च क्षालनं चाऽभ्यंगक्षालने तदर्थमुपयुज्येते । आकरणमाकृत् । संपदादित्वात् क्विप् । बस्तियंत्रस्य आकृती आकारौ ययोस्ते बस्तियंत्राकृती वृत्तगोपुच्छाकारे । तथा यथासंख्यं मूले मुखेंऽगुष्ठकलायखे मूलेंऽगुष्ठतुल्यच्छिद्रे मुखे कलायसमच्छिद्रे । अग्रतोऽकर्णिके कर्णिकारहित इति बस्तियंत्राद्विशेषः । मूले तु कर्णिके द्वेऽपि पुटकयोजनार्हे कार्ये एवेत्यग्रग्रहणम् । मूले मूलदेशे निबद्धं योजितं मृदु चर्म बस्तिपुटकाकारं ययोस्ते निबद्धमृदुचर्मणी ॥ २१ ॥

प०—द्वे यन्त्रे कार्ये षडङ्गुलायते नाडी
अभ्यङ्गार्थे तदा क्षालनार्थं च । बस्तियन्त्र
संस्थाने ययोस्ते बस्तियन्त्राकारे । मूले
च तस्मिन् मूलमुखे । यथासंख्यमङ्गुष्ठ
परिमाणे । खे छिद्रे ययोर्मूलेऽङ्गुष्ठप्रवेशः
मुखे तस्मिन् अङ्गुष्ठकलायखे । अग्रतो मुख
र्णिके कर्णिकारहिते । मूले मूलविषये निबद्धे
र्मणी बस्तिपुटके स्नेहक्षालनौषधाधारे
तथाभूते द्वे यन्त्रे ॥ २१ ॥

हे०—नाडीव्रणाभ्यंजननाडीव्रणक्षालनाख्ये न
माह—यन्त्रे इति । मूलेऽङ्गुष्ठप्रवेशच्छिद्रे अंगकला
च्छिद्रे अग्रतोऽकर्णिकेऽग्रकर्णिकारहिते । बस्ति
कृती इति नाडीविशेषणं, यन्त्रविशेषणत्वे तु नुम्प्रस

**द्विद्वारा नलिका पिच्छनलिका वोदकोदरे**

स०—उदकोदरे जलस्रावणार्थं नलिका
रोभयमुखी स्यात् । अथवा पिच्छनलिका मयूर
जेत्यर्थः ॥ २२ ॥

प०—नाडी द्विद्वारोभयद्वारा नलिका, ।
नलिका वा मयूरादिपिच्छनलिका वा
कोदरे जलविद्रावणार्थं द्वे द्वारे मुखे यस्याः
मुखेति यावत् ॥ २२ ॥

हे०—जलोदरयंत्राख्यां नाडीमाह—द्विद्वारा
नलिका [illegible]नाडी पिच्छनलिका पक्षिपिच्छनाडी

**धूमबस्त्यादियंत्राणि निर्दिष्टानि यथायथम्**

स०—धूमादियंत्राणि यथायथं यथास्वं धूम
ध्यायेषूक्तानि ॥ २३ ॥

प०—यथायथं यथास्वं धूमविधौ धूमयन्त्रं ब
विधौ बस्तियन्त्रम् । आदिग्रहणात् प्रथमनस्
च्छिरुद्धमणिप्रभृतीनां ग्रहणम् । तानि नाडीयन्त्र
स्वे स्वेऽध्याये निर्दिष्टानि ॥ २३ ॥

हे०—धूमयन्त्राद्या नाड्य उक्ता इत्याह—धूमब
दीति ॥ २३ ॥

**त्र्यंगुलास्यं भवेच्छृंगं चूषणेऽष्टादशांगुलम्**
**अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति**

स०—शृंगं त्र्यंगुलमुखं दुष्टवातविषरक्ताम्बुदुष्ट
न्यादेश्चूषणे चूषणनिमित्तमष्टादशांगुलं स्यात् । अ

ऽशेति ध्यप्न इत्यादिनाऽऽकारादेशः । तथाऽग्रे प्रांते षिपप्रमाणच्छिद्रम् । यः प्रदेशश्चूषणाय शरीरे योज्यते दग्रम् । तथा सुष्ठु नद्धं सम्यग्बद्धम् । चूचुकस्य स्त्रीकुचाग्रस्याऽऽकृतिराकारो यस्य तदेवम् ॥ २४ ॥

प०—त्र्यङ्गुलास्यं त्र्यङ्गुलप्रवेशमुखं तच्च चूषणे दुष्टवातविषरक्ताम्बुदुष्टस्तन्यादीनामाचूषणार्थम् । तथाष्टाङ्गुलायतम् । अथवा दशाङ्गुलायतम् । अग्रे प्रान्ते चूषणीयप्रदेशे सिद्धार्थकच्छिद्रं सर्षपादिच्छिद्रम् । तथा सुबद्धं शोभनं कृत्वा तनुना चर्मणा बद्धं तथा चूचुकाकृति चूचुकसदृशं स्त्रीकुचाग्रसदृशमिति यावत् ॥ २४ ॥

हे०—शृङ्गाख्यां नाडीमाह—त्र्यंगुलास्यमिति । चूषणे रक्ताद्याकर्षणे अष्टादशांगुलं दशांगुलं वा । संग्रहे तु द्वादशांगुलमप्युक्तं शृंगं तु मध्यदीर्घमष्टादशद्वादशांगुलायतमिति ॥ २४ ॥

**स्याद्द्वादशांगुलोऽलाबुर्नाहे त्वष्टादशांगुलः ।**
**चतुस्त्र्यंगुलवृत्तास्यो दीप्तोंऽतःश्लेष्मरक्तहृत्२५**

स०—अलाबुस्तुंबं द्वादशांगुलो दैर्घ्येण स्यात् । परिणाहेऽष्टादशांगुलः । चत्वारि वा त्रीणि वांगुलानि यस्य तच्चतुस्त्र्यंगुलं तत्तादृशं वृत्तं वर्तुलं मुखं यस्य स एवम् । तथांऽतर्मध्ये दीप्तो ज्वलितः पिचुभूर्जादिगर्भ इत्यर्थः । स इदृशो दुष्टकफरक्तहरः स्यात् २५

प०—अलाबुः द्वादशाङ्गुलदीर्घो भवेत् । नाहे परीणाहेऽष्टादशाङ्गुलप्रमाणः । चत्वारि वा त्रीण्यङ्गुलानि वृत्तं वर्तुलमास्यं मुखं यस्य । एवं त्र्यङ्गुलवृत्तमुच्छ्रितं मुखं कार्यं चतुरङ्गुलमुच्छ्रितवृत्तमुखं वा । तथा दीप्तोऽन्तः प्रज्वलितः परिवेष्टितकुशधन्वपिचुगर्भे श्लेष्मरक्तहृत् श्लेष्मणो दुष्टरक्तस्य चूषणार्थम् । तेन श्लेष्मरक्तं ह्रियते॥२५॥

हे०—तुम्बाख्यां नाडीमाह—स्याद्द्वादशेति । चतुरंगुलास्यस्त्र्यंगुलास्यो वा अन्तर्दीप्तः प्रदीप्ततृणसूत्रपिचुना ॥ २५ ॥

**तद्वद् घटी हिता गुल्मविलयोन्नमने च सा२६**

स०—तद्वत्तेनाऽलाबुना तुल्यदैर्घ्यानाहादिस्तुल्यकार्याकारा च घटी स्यात् । सा च गुल्मस्य विलय उन्नमने च हिता न केवलं कफरक्तहृदिति चार्थः॥२६॥

प०—तेनालाबुना तुल्या तद्वद्घटी द्वादशाङ्गुलदीर्घा दशाङ्गुलपरिणाहा परिवेष्टितप्रदीप्तकुशभूर्जादिगर्भा त्र्यङ्गुलास्या चतुरङ्गुला वा सा च हिता योग्या गुल्मविलयोन्नमने विलापने विलय उन्नाम उन्नमनं तत्र हिता । चशब्दात् पूर्वोक्तालाबुकर्मणि श्लेष्मरक्ते हिता ॥ २६ ॥

हे०—घटिकाख्यां नाडीमाह—तद्वद्घटीति । तद्वदलाबुसदृशी गुल्मविलयने गुल्मोन्नमने चकारात् श्लेष्मरक्तावचूषणे च ॥ २६ ॥

**शलाकाख्यानि यंत्राणि नानाकर्माकृतीनि च ।**
**यथायोगप्रमाणानि ॥ २७ ॥**

स०—शलाकासंज्ञानि यंत्राणि विविधकर्माणि विविधाकाराणि यथायोगप्रमाणानि स्युः ॥ २७ ॥

प०—शलाकासंज्ञकानि यन्त्राणि नानाकर्माणि तथा नानाकृतीनि च विविधक्रियाणि विविधसंस्थानानि च योगो नातिक्रमेण स्वस्वविषये योग्यतावशेन प्रमाणानि दैर्घ्यपरीणाहादीनि येषां तानि तथाभूतानि ॥ २७ ॥

हे०—शलाकायन्त्राण्याह—शलाकाख्यानीति २७॥

**तेषामेषणकर्मणी ।**
**उभे गंडूपदमुखे ॥ २८ ॥**

स०—तेषां मध्य उभे गंडूपदतुल्यास्य एषणकर्मणी ॥ २८ ॥

प०—तेषां शलाकायन्त्राणां मध्ये उभे द्वे शलाके गण्डूपदमुखे गण्डूपदमिव मुखं ययोस्ते । एषणकर्मणि व्रणनाडीमार्गान्वेषणे कर्म ययोः । वृष्टिशमनानन्तरमेव दीर्घाकृतयः कीटविशेषाः गण्डूपदाः भूमिलतापरपर्यायाः । अलसाश्च ॥ २८ ॥

हे०—एषिण्यौ शलाके आह—तेषामिति । एषणमवलोकनम् ॥ २८ ॥

**स्रोतोभ्यः शल्यहारिणी ।**
**मसूरदलवक्त्रे द्वे स्यातामष्टनवांगुले ॥ २९ ॥**

स०—तथा स्रोतोभ्यः शल्यहारिणी शलाकायंत्रे भवतः । किंभूते । मसूरेत्यादि । मसूरदलमिव वक्त्रं ययोस्ते मसूरदलमुखे द्वे शलाकेऽष्टांगुले नवांगुले वा स्याताम् ॥ २९ ॥

प०—तथान्ये द्वे शलाकायन्त्रे मसूरदलवक्त्रे। मसूरार्धमिव मुखं ययोस्ते स्यातां भवेताम्। चतुःस्रोतोगतशल्याहरणार्थे। शल्यं हरत इति शल्यहारिणी। प्रमाणतोऽष्टनवाङ्गुले। एकाऽष्टाङ्गुला द्वितीया नवाङ्गुला ॥ २९ ॥

हे०—शल्यहारिण्यौ शलाके आह—स्रोतोभ्य इति ॥ २९ ॥

**शंकवः षट् ॥ ३० ॥**

स०—शंकवः षट् स्युः ॥ ३० ॥

प०—शङ्कवः षडिति। षट् शङ्कवो भवन्तीति वाक्यशेषः ॥ ३० ॥

हे०—शङ्क्वाख्याः शलाका गणयति—शंकव इति ३०

**उभौ तेषां षोडशद्वादशांगुलौ।**
**व्यूहनेऽहिफणावक्त्रौ ॥ ३१ ॥**

स०—तेषां मध्ये द्वौ षोडशांगुलौ द्वादशांगुलौ वा भवतः। व्यूहने व्यूहनकर्मणि सर्पफणामुखौ॥ ३१॥

प०—तथा शङ्कूनामुभौ द्वौ षोडशद्वादशाङ्गुलप्रमाणौ। एकः षोडशाङ्गुलो द्वितीयो द्वादशाङ्गुलः। व्यूहने क्षारादिरचनायामहिफणावक्त्रौ। सर्पफणाकारं वक्त्रं मुखं ययोः सर्पफणामुखाविति यावत् ॥ ३१ ॥

हे०—व्यूहनौ शंकू आह—उभाविति। व्यूहनं यथास्थानं विन्यासः ॥ ३१ ॥

**द्वौ दशद्वादशांगुलौ।**
**चालने शरपुंखास्यौ ॥ ३२ ॥**

स०—द्वौ शंकू दशांगुलौ द्वादशांगुलौ वा भवतः। चालने कांडवाज इव मुखं ययोस्तौ शरपुंखास्यौ भवतः ॥ ३२ ॥

प०—अन्यौ द्वौ शङ्कू चालने शल्यचालननिमित्तौ स्याताम्। एको द्वादशाङ्गुलः। द्वितीयो दशाङ्गुलः। तौ च शरपुङ्खाकारमुखौ ॥ ३२ ॥

हे०—चालनौ शंकू आह—द्वाविति ॥ ३२ ॥

**आहार्ये बडिशाकृती ॥ ३३ ॥**

स०—आहार्ये आकर्षणे बडिशाकारौ ॥ ३३ ॥

प०—अन्यौ द्वौ शङ्कू आहार्ये आहार्यकर्मा शल्यस्याहरणनिमित्तम् ॥ ३३ ॥

हे०—आहारणौ शंकू आह—आहार्ये बडिशाकृती। बडिशं मत्स्यवेधनम् ॥ ३३ ॥

षट्शंकूनाख्याय गर्भशंकुमाह—

**नतोऽग्रे शंकुना तुल्यो गर्भशंकुरिति स्मृतः।**
**अष्टांगुलायतस्तेन मूढगर्भं हरेत् स्त्रियाः ॥ ३४**

स०—नतोऽग्रेऽग्रतोभागे तथा शंकुना सम कीलकाकारोऽष्टांगुलदीर्घः स गर्भशंकुरिति स्मृतः मुनिभिरिति शेषः। तेन शंकुना मूढगर्भमनिःसरं हरेत् ॥ ३४ ॥

प०—नतोऽग्रे अग्रप्रदेशे नतः अवनतः कुटिल शङ्कुना तुल्यः सदृशः गर्भशङ्कुरितिसंज्ञितः स चाष्टाङ्गुलायतोऽष्टाङ्गुलप्रमाणः। तेन शङ्कुन मूढगर्भं काष्ठकुड्यतुल्यं मृतशरीरगर्भं गर्भिण्य स्त्रियो हरेत् ॥ ३४ ॥

हे०—सप्तमं गर्भशंकुमाह—नतोऽग्र इति। नतो वक्र शंकुना तुल्यः कीलकाकारः ॥ ३४ ॥

**अश्मर्याहरणे सर्पफणावद्वक्रमग्रतः ॥ ३५ ॥**

स०—अश्मर्याकर्षणे सर्पफणावदग्रे वक्रं स्यात् सर्पफणाख्यमेधितयन्त्रम् ॥ ३५ ॥

प०—अश्मर्याहरणार्थं सर्पफणावत् सर्पफणातुल्यमग्रतो मुखतो वक्रं कुटिलम् ॥ ३५ ॥

हे०—अश्मर्याहरणे शलाकायन्त्रमाह—अश्मर्याहरण इति ॥ ३५ ॥

**शरपुंखमुखं दंतपातनं चतुरंगुलम् ॥ ३६ ॥**

स०—शरपुंखमुखाख्यं चतुरंगुलं दंतपातनं स्यात्। अनेन हि दंताश्चलंतः पात्यंते कृम्यादिभक्षिता वा ॥ ३६ ॥

प०—शरपुंखमिव मुखं यस्य तच्छरपुङ्खमुखं तथा दन्तपातनं दन्तनिर्घातनं चतुरङ्गुलदीर्घं मुखं स्थूलवृत्तप्रान्तम ॥ ३६ ॥

हे०—दन्तपातनशलाकायन्त्रमाह-शरपुंखमुखमिति ३६

**कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने।**

स०—प्रमार्जने क्षालने क्षारक्लेदादेः षट् शलाकाः युः । किंभूताः । कार्पासेन विहितमुष्णीषं शिरोवेष्टनमिव यासां तास्तथोक्ताः ॥ ३७ ॥

प०—षट् शलाकाः कार्याः कार्पासेन विहिताः कृतः उष्णीषः शीर्षाच्छादनं यासां तास्तथा-वेधप्रमाणेन व्रणक्लेदनक्षारादिषु शोभनक्रियायाम् ॥ ३७ ॥

हे०—प्रमार्जनीः शलाका गणयति--कार्पासविहितेति। उष्णीषं शिरोवेष्टनम् ॥ ३७ ॥

**पायावासन्नदूरार्थे द्वे दशद्वादशांगुले ॥ ३८ ॥**

स०—पायावासन्नदूरार्थे दशद्वादशांगुले द्वे भवतः। द्वादशांगुला दूरार्थे आसन्नार्थे दशांगुला इत्यर्थः ॥३८॥

प०—पायौ गुदे क्लेशादि परिमार्ष्टुमासन्नदूरार्थे आसन्नार्थे निकटवर्तिनि प्रमार्जने तथा दूरार्थे विप्रकृष्टपरिमार्जने यथासंख्यं च दशद्वादशाङ्गुले च शलाके कार्ये ॥ ३८ ॥

हे०--पायुप्रमार्जन्यौ शलाके आह--पायाविति ३८॥

**द्वे षट्सप्तांगुले घ्राणे द्वे कर्णेऽष्टनवांगुले ॥३९॥**

स०—घ्राणे षट्सप्तांगुले द्वे भवतः । आसन्नदूरार्थेऽत्राप्यनुवर्तते । तथैव कर्णेऽष्टनवांगुले भवतः ॥ ३९ ॥

प०—तथा घ्राणे नासिकायां प्रमार्जननिमित्तमासन्नदूरार्थे षट् सप्ताङ्गुले द्वे कार्ये । तथा द्वे कर्णे कर्णव्रणे क्लेदक्षारादिपरिमार्जननिमित्तमासन्नदूरार्थे अष्टनवाङ्गुले कार्ये इत्युक्तं षण्णां शलाकानां प्रविभागानाम् ॥ ३९ ॥

हे०--घ्राणप्रमार्जन्यौ शलाके आह--द्वे षडिति । कर्णप्रमार्जन्यौ शलाके आह--द्वे कर्णे इति ॥ ३९ ॥

**कर्णशोधनमश्वत्थपत्रप्रांतं स्रुवाननम् ॥ ४० ॥**

स०—कर्णशोधनाख्यं यंत्रमश्वत्थपत्रस्येव प्रांतो यस्य तत्तथा । तथा स्रुवस्येवाननं यस्य तदेवम् ॥४०॥

प०—कर्णमलापहमश्वत्थवृक्षपत्राग्रं तथा स्रुवाननं स्रुवमुखं यन्त्रं कार्यम् ॥ ४० ॥

हे०--कर्णशोधनं शलाकायन्त्रमाह--कर्णशोधनमिति। द्रव्यस्य पलस्यापनयनं, मार्जनं कठिनस्य शोधनम् ॥४०॥

**शलाकाजांबवोष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् । युंज्यात् स्थूलाणुदीर्घाणाम् ॥ ४१ ॥**

स०—शलाकाश्च जांबवोष्ठानि च तेषां पृथक् त्रयं क्षारे क्षारपातनेऽग्निदाहकरणे च युंज्यात् । किंभूतानां शलाकाजांबवोष्ठानाम् । स्थूलाश्चाऽणवश्च दीर्घाश्च तेषाम् । तत्र शलाकास्तिस्रो जांबवोष्ठानि च त्रीणि क्षारे तथा दाहने एवं द्वादशैतानि शलाकाख्यानि यंत्राणीति ॥ ४१ ॥

प०—शलाकाश्च जाम्बवोष्ठाश्च शलाकाजाम्बवोष्ठाः । जाम्बवोष्ठक्षारो रोदवीक्षारो येन गृह्यते तेषां शलाकाजाम्बवोष्ठानां स्थूलसूक्ष्मदीर्घाणां द्वादशदशाङ्गुलप्रमाणानां क्रमात् द्व्यङ्गुलार्धाङ्गुलप्रमाणानां पृथक् त्रयं कार्यम् । एवं क्षारकर्मणि शलाकानां त्रयं तथा जाम्बवोष्ठानां त्रयं तदग्निकर्मणि पृथक् त्रयं स्थूलसूक्ष्मभेदभिन्नं प्रयुञ्ज्यात् ॥ ४१ ॥

हे०--क्षाराग्निप्रयोगार्थं तिस्रः शलाकास्त्रीणि च जांबवौष्ठान्याह--शलाके इति । स्थूलं च अणु च स्थूलाणु च दीर्घं च स्थूलाणुदीर्घाणीत्येकशेषेण निर्देशः । अणु सूक्ष्मं ह्रस्वं च, तेन स्थूलदीर्घं सूक्ष्मह्रस्वं मध्यं चेति त्रिविधं शलाकायन्त्रं जांबवौष्ठं च जम्बूफलवदोष्ठो यस्य तज्जांबवौष्ठं शलाकाविशेष एव । संग्रहेऽप्युक्तं क्षाराग्निकर्मार्थं जांबवौष्ठानि द्वादशाष्टांगुलानि क्रमाद् द्व्यंगुलार्द्धांगुलफलानि । शलाकाश्च स्थूलसूक्ष्मदीर्घह्रस्वमध्या इति ४१॥

**शलाकामंत्रवर्ध्मनि । मध्योर्ध्ववृत्तदंडां च मूले चार्धेंदुसंनिभाम् ॥४२॥**

स०—अंत्रवर्ध्मन्यंत्रवृद्धौ शलाकां युंज्यात् । कीदृशीम् । मध्यादूर्ध्वं वृत्तो दंडो यस्यास्ताम् । तथा मूले मूलभागेऽर्धेंदुसन्निभामर्धचंद्राकाराम् ॥ ४२ ॥

प०—शलाकामन्त्रवर्ध्मन्यन्त्रवृद्धौ व्याधिविशेषे युञ्ज्यात् । तन्मूले मूलविषये अर्धेन्दुसन्निभमर्धचन्द्रवक्त्रं मध्ये मध्यस्थाने ऊर्ध्वनिर्गतो वर्तुलो दण्डो यस्यास्तां शलाकां मध्योर्ध्ववृत्तदण्डां युञ्ज्यात् ॥ ४२ ॥

हे०--अन्त्रवृद्धौ दाहार्थं शलाकामाह--शलाकामिति। मूले ग्रहणस्थाने मध्योर्ध्ववृत्तदंडम्, अर्धचन्द्राकृतिं शलाकां विधाय तन्मध्ये ऊर्ध्वो वृत्तो दंडः कार्यः ॥ ४२ ॥

**कौलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ।**

स०—बदरास्थिखंडसमं मुखं यस्याः सा कोलास्थिदलतुल्यास्या । सा नासार्शःसु नासार्बुदेषु च दाहं करोति ॥ ४३ ॥

प०—बदरास्थ्यर्धसदृशवक्त्रा शलाका सा नासायां यान्यर्शोऽर्बुदानि तेषां दाहं करोति ॥ ४३ ॥

हे०—नासार्शोऽर्बुददाहार्थं शलाकामाह—कोलास्थिदलेति ॥ ४३ ॥

**अष्टांगुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ।**
**कनीनीमध्यमानामीनखमानसमैर्मुखैः ॥ ४४ ॥**

स०—क्षारौषधक्रमे तिस्रः शलाका निम्नमुखा अष्टांगुलाः स्युः। कीदृश्यः। कनीनी च मध्यमा चाऽनामी च तासां नखास्तेषां प्रमाणं तेन मानेन समैस्तुल्यैर्मुखैरुपलक्षिताः स्युः ॥ ४४ ॥

प०—तिस्रः शलाका अष्टाङ्गुलदीर्घा निम्नमुख्यो दर्व्याकारा अवनतवक्त्राः क्षारक्रमे क्षारयोजने तथौषधक्रमे विषादिलेपयोजने कनीनिकामध्यमानामिकाङ्गुलीनखानां मानेन समैर्मुखैर्निम्नमुखास्ताः कार्याः ॥ ४४ ॥

हे०—दर्व्याख्यास्तिस्रः शलाका आह—अष्टांगुला इति ॥ ४४ ॥

**स्वंस्वमुक्तानि यंत्राणि मेढ्रशुद्ध्यंजनादिषु॥४५**

स०—मेढ्रादिषु विषय उत्तरबस्त्यादिषु स्वंस्वं यथास्वं यंत्राणि गदितानि । आदिशब्देन नावनादिपरिग्रहः ॥ ४५ ॥

प०—स्वं स्वमात्मीयं प्रकरणमुद्दिश्य मेढ्रशुद्ध्यादिषु शलाकायन्त्राण्युक्तानि उपदिष्टानि ॥ ४५ ॥

हे०—मेढ्रशोधनाद्याः शलाकास्तत्र तत्रोक्ता इत्याह—स्वं स्वमुक्तानीति ॥ ४५ ॥

**अनुयंत्राण्ययस्कांतरज्जुवस्त्राश्ममुद्गराः ।**
**वध्रांत्रजिह्वाबालाश्च शाखानखमुखद्विजाः ॥**
**कालः पाकः करः पादौ भयं हर्षश्च तत्क्रियाः।**
**उपायवित्प्रविभजेदालोच्य निपुणं धिया॥४६॥**

स०—अयस्कांतादीन्येकोनविंशत्यनुयंत्राणि कल्पयेत् । स्वल्पयंत्रकार्यकरणात् । तेषां क्रियास्तत्क्रिया निर्घातनादिका बुद्ध्या निपुणमालोच्य प्रविभजे[illegible] निर्घातनादिकर्माणि प्रविभज्य युंज्यादित्यर्थः ॥[illegible]

प०—यन्त्रसदृशकार्यसम्पादनात् अयन्त्रा[illegible]न्यपि तानि अयस्कान्तप्रभृतीनि अनुयन्त्राण[illegible]च्यन्ते । अयस्कान्तो मणिविशेषः । रज्जुः मु[illegible] कृता । वस्त्रं वासः । अश्मा पाषाणः । [illegible] स्थूलह्रस्वं काष्ठम् । वध्रश्चर्ममयम् । अ[illegible] प्राणिनां सम्बन्धीनि । जिह्वा रसना । ब[illegible] केशाः। अश्वस्तुरङ्गः। शाखा वृक्षस्य । नखः न[illegible] मुखमास्यम् । द्विजा दन्ताः । कालो मुहूर्ता[illegible]क्षितः । पाकः पक्वत्वम् । करः हस्तः । प[illegible]रणः । भयं साध्वसम् । हर्षो मनस्तुष्टिः तत्क्रियाः तेषां क्रियाकर्माणि व्यापारविधि[illegible]स्तास्तत्क्रिया भजेदिति सम्बन्धः । यन्त्रक[illegible] सम्पादयत्युपायविद् वैद्यः । विभजेत् [illegible]नयेत् । तान्यनुयन्त्राणि यस्य यत्र योग्यता तत्र योजयेत् । धिया बुद्ध्या निपुणं क्रि[illegible]लोक्य वीक्ष्य विमृश्य योजयेत् । तथा च स[illegible]ऽप्युक्तमाचार्येण । "एतानि देहे सर्वस्मिन्दे[illegible]वयवेऽपि वा । सन्धौ कोष्ठे धमन्यां च यथ[illegible] प्रयोजयेत्" ॥ ४६ ॥

हे०—अनुयन्त्राण्याह—अनुयन्त्राणीति । अ[illegible]तादीन्येकोनविंशतिरनुयन्त्राणि संग्रहे तु—"एता[illegible] सर्वस्मिन् देहस्यावयवेऽपि वा । सन्धौ कोष्ठे धम[illegible] यथायोगं प्रयोजयेत्" इति । अनुयन्त्रकर्माणि [illegible] ख्यानीयत आह—तत्क्रिया इति ॥ ४६ ॥

तान्येव यंत्राणां कर्माण्याह—

**निर्घातनोन्मथनपूरणमार्गशुद्धि-**
**संव्यूहनाहरणबंधनपीडनानि ।**
**आचूषणोन्नमननामनचालभंग-**
**व्यावर्तनर्जुकरणानि च यंत्रकर्म ॥**

स०—निर्घातनादि यंत्रस्य कर्म । निर्घातनं परिपातनम् । उन्मथनमुन्मूलनम् एवमन्यदपि [illegible] चः समुच्चये । तेन प्रक्षालनादीनि समुच्चीयते॥

प०—निर्घातनं निर्घातः आहननम् । [illegible]यत्यनेनेति निर्घातनम् । उन्मथ्यतेऽनेने[illegible]नम् । पूर्यतेऽनेनेति पूरणम् । मार्गाणां [illegible]

तथा नाडीनां पूयाद्यशुद्धानां शुद्धिः मार्गशुद्धिः। व्यूहनं रचनाविशेषः। क्षारादीनामाहरणमाकर्षणं शल्यादीनाम्। बध्यते भग्नाद्यनेनेति बन्धनं पीड्यतेऽनेनेति पीडनम्। आचूष्यतेऽनेनेत्याचूषणं विषरक्तादीनाम्। उन्नम्यते उत्क्षिप्यतेऽनेनेत्युन्नमनम्। नाम्यते वराङ्गाद्यनेनेति नामनम्। चलनं चालः निश्चलश्च कम्पोत्पादः। भङ्ग एकस्य वस्तुनोऽपरस्य वस्तुन उत्पादनं तदृजुकरणमिति ॥ ४७ ॥

हे०—यन्त्रकर्माणि गणयति--निर्घातनेति। संग्रहे तु विवरणाविकरणाविच्छिन्नेक्षणदारणप्रक्षालनप्रधमनांजनप्रमार्जनानि नवाधिकानीति ॥ ४७ ॥

निवर्तते साध्ववगाहते च
ग्राह्यं गृहीत्वोद्धरते च यस्मात्।
यंत्रेष्वतः कंकमुखं प्रधानं
स्थानेषु सर्वेष्वधिकारि यच्च ॥ ४८ ॥

स०—निवर्तनादिभिश्चतुर्भिः कारणैर्यंत्रेषु मध्ये कंकमुखं श्रेष्ठमिति यस्माच्च सर्वेषु प्रदेशेष्वधिकार्यधिक्रियते इति। वसंततिलकोपजाती वृत्ते ॥ ४८ ॥

इतिश्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां यंत्रविध्यध्यायः पंचविंशः ॥ २५ ॥

प०—सर्वयन्त्राणां कर्म यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानं स्थानेषु सर्वेष्वधिकारि तच्च यस्मात्तद्विवर्तते परिभ्रमति तथा ग्राह्यम्। शल्यं साधु कृत्वाऽवगाहते गृह्णाति गृहीत्वा च तच्छल्यमुद्धरति। उत्पाटयति स्थानेषु सर्वेषु सर्वशरीराग्रेषु शरीरावयवेषु शल्याहरणादिव्यापारेष्वधिकारि शल्याहरणविषये सुखकारि। अतः कारणात् एतेषु पूर्वोक्तेषु मध्ये कङ्कमुखं नाम यद्यन्त्रं श्रेष्ठतमम्। अन्यानि यन्त्राण्येकदेशविषयाणि स्वल्पकर्मकराणि असुखकराणि ॥ ४८ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने पञ्चविंशोऽध्यायः ॥ २५ ॥

हे०--यन्त्रेषु कंकमुखस्य प्राधान्यमाह--निवर्तत इति। संग्रहे तु ह्रस्वदीर्घमूलतनुवक्त्रविषमग्राह्यग्राहिशिथिलतेत्यष्टौ यंत्रदोषा इति ॥ ४८ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने यन्त्रप्रकरणं नाम सामस्त्येन निरूपितम् ॥ २५ ॥

## षड्विंशोऽध्यायः।



अथेदानीं षड्विंशाऽध्यायारंभः शस्त्रस्वरूपविज्ञानार्थः।

अथाऽतः शस्त्रविधिमध्यायं व्याख्यास्यामः।
षड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ॥
शस्त्राणि रोमवाहीनि बाहुल्येनांगुलानि षट्।
सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ॥
अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयसि।
समाहितमुखाग्राणि नीलांभोजच्छवीनि च ॥
नामानुगतरूपाणि सदा सन्निहितानि च।
स्वोन्मानार्धचतुर्थांशफलान्येकैकशोऽपि च।
प्रायो द्वित्राणि युंजीत तानि स्थानविशेषतः १

स०—बाहुल्येन शस्त्राणि षडंगुलानि भवंति। तथा षड्विंशतिसंख्यानि। तथा सुकर्मारैः कर्मकुशलैर्नरैर्यथाविधि सम्यङ्निष्पादितानि तथा रोमवाहीनि लोमशातनसमर्थानि तथा सुरूपाणि शोभनाकाराणि। तथा सुधाराणि शोभनधाराणि। तथा सुखेन गृह्यंते सुखग्रहाणि च कारयेत्। क्व अयसि। कीदृशे सुष्ठु ध्मातं सुतीक्ष्णं तथाऽऽवर्तितं च यदयः तीक्ष्णं तस्मिन्। कीदृशानि च शस्त्राणि। अकरालानि सुदर्शनानि। समाहितं सुष्ठु कृतं मुखाग्रं फलं येष तानि समाहितमुखाग्राणि। तथा नीलोत्पलच्छु तीनि। तथा नामानुग तं रूप येषां तान्यन्वर्थ नामानीत्यर्थः। तथा सर्वकालं संनिहितानि समीप स्थानि। स्वं च तदुन्मानं च स्वोन्मानमात्मीयं प्रमा[ण] तस्मात्सकाशादर्धं तस्य चतुर्थांशोऽष्टभागोऽगुलषट्कस सप्तमांशद्वयसहितं यवदशकं तत्परिमाणं फलं ये[षां] तान्येवम्। अपि चेति समुच्चये। एवंविधानि शस्त्र ण्येकैकशः स्थानविशेषाद्द्वित्राणि प्रयुंजीत। एकैक इत्येकं बहुव्रीहिवदिति द्वित्वसुब्लोपौ। ततः शस त्ययः ॥ १ ॥

प०—अस्यारम्भे प्रयोजनं यन्त्राणि प्रायः शस मयानि कार्याणि तद्वच्छस्त्राण्यप्यतोऽस्यारम्भः षड्विंशतिः शस्त्राणि कारयेदिति सम्बन्धः

सुकर्मारैः क्रियानिपुणैरभिज्ञैरयस्कारैर्घटितानि निष्पादितानि । यथाविधि विध्यनतिक्रमेण रोमवाहीनि । रोमाणि वहन्तीति रोमवाहनं रोमकल्पनं छेदनं कर्म कर्तुं येषां तानि । तथा बाहुल्येन भूयसा षडङ्गुलदीर्घाणि । सुरूपाणि स्वाकृतीनि तथा सुधाराणि शोभनधाराणि तथा शोभनग्रहणप्रदेशानि तथाऽकरालान्यदन्तुराणि अविषमधाराणि । सुध्मातं च सुतीक्ष्णं चातिवर्तितं यच्छस्त्रं तस्मिन् तथाभूतेऽयसि तीक्ष्णलोहे घटितानि । आवर्तितमयोघनेनाहत्य पिण्डीकृतं सम्यगाहितं कृतं मुखाग्रं येषां तानि नामानुगतरूपाणि व्रीह्याकारवक्त्रत्वात् व्रीहिवक्त्रं शस्त्रं ज्ञेयम् । सर्वदा सर्वकालं संनिहितानि विद्यमानानि । तथा स्वोन्मानादात्मीयादूर्ध्वमानादैर्घ्यादर्धांशफलानि चतुर्थांशफलानि । अन्यानि प्रायः एकैकं कृत्वा तानि शस्त्राणि द्वित्राणि कार्याणि तानि च शस्त्राणि स्थानविशेषात् प्रयोक्तव्यानि व्याधिवशात् प्रयोज्यानीत्यर्थः ॥ १ ॥

हे०--शस्त्रविधिमध्यायं व्याख्यातुं प्रतिजानीते-अथेति। शस्त्राणां सामान्यलक्षणमाह--षड्विंशतिरिति । सुकर्मारैः उत्तमलोहकारैः, रोमवाहीनि रोमच्छेदीनि, अकरालानि आर्जववन्ति, अयसि लोहे घटितानि । तृतीयार्थे सप्तमी । समाहितं सम्यक् घटितं मुखाग्रं फलं येषां तानि । स्वोन्मानस्यांगुलषट्कस्यार्धचतुर्थोऽशः अष्टमो भागः। सप्तमांशद्वयसहितं यवदशकं तत्परिमाणं फलं येषां तानि, एकैकशो द्वित्राणि प्रत्येकं द्वे त्रीणि वा कारयेत् । षड्विंशतिरुपयोगमाह--युंजीतेति ॥ १ ॥

**मंडलाग्रं फले तेषां तर्जन्यंतर्नखाकृति ।**
**लेखने छेदने योज्यं पोथकीशुंडिकादिषु ॥ २ ॥**

स०--तेषां शस्त्राणां मध्ये मंडलाग्रं नाम शस्त्रम् । कीदृशम् । फलोद्देशे तर्जन्या अंतर्नखस्तर्जन्यंतर्नखस्तस्येवाकृतिर्यस्य तदेवम् । क्वैतद्योज्यमित्याह । लेखने छेदने पोथक्यादिषु योज्यम् । आदिशब्देन वर्त्मरोगादयो गृह्यन्ते ॥ २ ॥

प०--तेषां शस्त्राणां मध्ये मंडलाग्रं शस्त्रं फले फलविषये तर्जन्यन्तर्नखेन तुल्याकृति कार्यम् । तच्च पोथक्यादिषु लेखने लेखननिमित्तं तथा छेदने छेदननिमित्तं योज्यम् ॥ २ ॥

हे०--मण्डलाग्रं शस्त्रमाह--मण्डलाग्रमिति । शुण्डकी गलशुण्डिका ॥ २ ॥

**वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।**
**ऋज्वग्रमुन्नते शोफे गंभीरे च तदन्यथा ।**
**नताग्रं पृष्ठतो ॥ ३ ॥**

स०--वृद्धिपत्रं नाम शस्त्रं क्षुराकारं स्यात् । तच्च छेदनादिषु योज्यमिति प्रकृतम् । फलपरिमाणं तूक्तमेव । कीदृक् । ऋजु स्पष्टमग्रं यस्य तदृज्वग्रं तदुन्नते शोफे स्यात् । गंभीरे तु शोफे तद्वृद्धिपत्रमन्यथा कथमन्यथेत्याह । नतेत्यादि । पृष्ठदेशे नतमग्रं यस्य तन्नताग्रं भवतीति ॥ ३ ॥

प०--वृद्धिपत्रं शस्त्रं क्षुराकारं क्षुरसदृशं तच्च छेदने द्विधाकरणे भेदने विदारणे तथा पाटने मेदोग्रन्थीनामुत्पाटने तच्च ऋज्वग्रं स्पष्टप्रान्तमुन्नते च शोफे गम्भीरे च तदेव ऋज्वग्रमन्यथान्येन प्रकारेण वैपरीत्ये सति पृष्ठतो दीर्घं तथा नताग्रम् अनवधारम् ॥ ३ ॥

हे०--वृद्धिपत्रमाह--वृद्धिपत्रमिति । उन्नते गम्भीरे च शोफे ऋज्वग्रम्, अन्यथाभूते शोफे पृष्ठतो नताग्रम् ३

**दीर्घह्रस्ववक्त्रे यथाशयम् ।**
**उत्पलाध्यर्धधाराख्ये छेदने भेदने ॥ ४ ॥**

स०--उत्पलं चाऽध्यर्धधारं च ते आख्ये ययोस्ते उत्पलाध्यर्धधाराख्ये शस्त्रे यथाक्रमं दीर्घह्रस्ववक्त्रे भवतः । उत्पलपत्रं दीर्घमुखमध्यर्धधारं तु ह्रस्ववक्त्रमित्यर्थः । तच्छेदने तथा भेदने च योज्यम् ॥४॥

प०--ह्रस्ववक्त्रं लघुमुखं समे शोफेनोन्नतेनापि गम्भीरे कार्यम् । यथाशयमाशयानतिक्रमेण शरीरस्थानानुरोधेनेति यावत् । उत्पलं शस्त्रं तथाऽध्यर्धधारं शस्त्रं ते द्वे शस्त्रे भेदने विदारणे छेदने द्विधाकरणे योज्ये ॥ ४ ॥

हे०--स्थानवशेन दीर्घमुखं ह्रस्वमुखं च । उत्पलपत्रमध्यर्द्धधारं चेति शस्त्रद्वयमाह--उत्पलेति । एते नामानुगतरूपे ॥ ४ ॥

**तथा ।**
**सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धांगुलं फले ॥५॥**

स०—सर्पवक्त्रं नाम शस्त्रं नामानुगताकारं घ्राणार्शश्छेदने कर्णार्शश्छेदने च योज्यम् । तथेति समुच्चये । भेदनेऽपि योज्यम् । तच्च फलेऽर्धांगुलं भवति ॥ ५ ॥

प०—सर्पास्यं शस्त्रं फले फलविषयेऽर्धाङ्गुलप्रमाणम् । तच्च घ्राणे कर्णयोरर्शःसु छेदने योज्यम् ॥ ५ ॥

हे०—सर्पवक्त्रमाह—सर्पास्यमिति ॥ ५ ॥

**गतेरन्वेषणे श्लक्ष्णा गंडूपदमुखैषणी ॥ ६ ॥**

स०—एषणी नाम शस्त्रं गतेर्व्रणानामन्वेषणे योज्यम् । कीदृशी । श्लक्ष्णा कोमलस्पर्शा । तथा गंडूपदमुखमिव मुखं यस्याः सा गंडूपदमुखा ॥ ६ ॥

प०—एष्यते समन्ततो गतेर्मार्गं ज्ञातुं यया सैषिणी । गतेर्दूरगमनाय नाड्या अन्वेषणे च गतौ विज्ञाने तद्विषये योज्यम् । सा च श्लक्ष्णा अपरुषा गण्डूपदमुखा भूमिलतावक्त्रा ॥ ६ ॥

हे०—अन्वेषणार्थमेषणीमाह—गतेरिति । गतेर्नाडीव्रणस्य ॥ ६ ॥

द्वितीयामेषणीमाह—

**भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ।**
**वेतसं व्यधने ॥ ७ ॥**

स०—अपरैषणी भेदनार्थे सूचीमुखा स्यात् । मूले निविष्टं कृतं खं छिद्रं यस्याः सा मूलनिविष्टखा । वेतसं वेतसपत्राकारं शस्त्रं षडंगुलं पूर्वोक्तफलं तच्च व्यधने योज्यम् ॥ ७ ॥

प०—अन्याऽपरा द्वितीयैषणी भेदनार्था भेदननिमित्तं सूचीमुखा तीक्ष्णमुखा तथा मूले निविष्टं छिद्रं यस्याः सा तथाविधा । वेतसं वेतसपत्राकारं शस्त्रं व्यधने कार्यम् ॥ ७ ॥

हे०—भेदनार्थामेषणीमाह—भेदनार्थे इति । भेदनत्वं क्षारात्तसूत्रप्रवेशनेन वेतसशस्त्रमाह—वेतसमिति ॥ ७ ॥

**स्राव्ये शरार्यास्यं त्रिकूर्चकं ॥ ८ ॥**

स०—शरारिराटिः पक्षिविशेषः । शरार्यास्यं नाम शस्त्रं त्रिकूर्चके च स्राव्ये योज्यम् ॥ ८ ॥

प०—स्राव्ये व्याधौ अस्रस्रुतिसाध्ये व्याधौ शरार्यास्यं तथा त्रिकूर्चकमिति शस्त्रे द्वे कार्ये ॥८॥

हे०—शरारिमुखं त्रिकूर्चकं चेति शस्त्रद्वयमाह—स्राव्य इति । स्राव्ये स्थाने शरारिः पक्षिविशेषः ॥ ८ ॥

**कुशाटा वदने स्राव्ये द्व्यंगुलं स्यात्तयोः फलम् ९**

स०—कुशाटा नाम शस्त्रं वदने स्राव्ये योज्यम् । तयोः शरारिकुशाटयोः फलं द्व्यंगुलप्रमाणं स्यात् ९॥

प०—वदने स्राव्ये तयोः फलम् । कुशवदनं तथा आटावदनं ते द्वे स्राव्ये रोगे कार्ये तेनैकं शस्त्रं कुशवदनं द्वितीयमाटावदनं तयोर्द्व्यङ्गुलपरिमाणं फलं स्यात् ॥ ९ ॥

हे०—कुशपत्रमाटामुखं चेति शस्त्रद्वयमाह—कुशाटेति । आटा पक्षिविशेषः ॥ ९ ॥

**तद्वदंतर्मुखं तस्य फलमध्यर्धमंगुलम् ॥ १० ॥**

स०—अंतर्मुखं नाम शस्त्रं तद्वत्कुशाटातुल्यम् । तस्यांऽतर्मुखस्य फलमध्यर्धमंगुलं स्यात् ॥ १० ॥

प०—ताभ्यां तुल्यं तद्वत् । अन्तर्मुखं नाम शस्त्रं पूर्ववत् स्राव्ये कर्मणि योज्यम् । तस्यान्तर्मुखस्य फलमध्यर्धमङ्गुलमधिकमर्धं यस्याङ्गुलस्य ॥ १० ॥

हे०—अन्तर्मुखमाह—तद्वदिति । तद्वत्स्राव्ये ॥१०॥

**अर्धचंद्राननं चैतत्तथाऽध्यर्धांगुलं फले ।**
**व्रीहिवक्त्रं प्रयोज्यं च तच्छिरोदरयोर्व्यधे॥११॥**

स०—तथा कुशाटातुल्यं तदप्यर्धचंद्रास्यसंज्ञं शस्त्रम् । चः समुच्चये भिन्नक्रमे । व्रीहिवक्त्रमप्यध्यर्धांगुलफलं स्यात् । तच्च शिराव्यधे उदरव्यधे च योज्यम् ॥ ११ ॥

प०—एतच्चार्धचन्द्राननमर्धचन्द्रमुखम् । व्रीहिमुखं शस्त्रं फले फलविषये तथैवाध्यर्धमङ्गुलं व्रीह्याकारमुखं तच्च शिराव्यधे तथोदरव्यधे तन्निमित्तं प्रयोज्यम् ॥ ११ ॥

हे०—व्रीहिमुखमाह—तथेति ॥ ११ ॥

**पृथुः कुठारी गोदंतसदृशार्धांगुलानना ।**
**तयोर्ध्वदंडया विध्येदुपर्यस्थ्नां स्थितां शिराम्।**

स०–कुठारी नाम शस्त्रं पृथुर्विस्तीर्णसंस्थानदंडा तथा गोदंतसदृशमर्धांगुलमाननं यस्याः सैवम् । तया कुठारिकयोर्ध्वदंड्या सत्या शिरामस्थ्नामुपरि स्थितां विध्येत् ॥ १२ ॥

प०–कुठारी पृथुविस्तीर्णा पृथुदण्डा गोदन्ताकारा तथाऽर्द्धाङ्गुलाननाऽर्धाङ्गुलफला तथा कुठार्याऽस्थ्नामुपरि पृष्ठे स्थितां शिरां विध्येत् । ऊर्ध्वः दण्डो यस्यास्तथाविधा । अधोमुखया शिरां विध्येत् ॥ १२ ॥

हे०–कुठारीमाह—पृथुरिति । कुठार्याः फलमाह—तथेति ॥ १२ ॥

**ताम्री शलाका द्विमुखी मुखे कुरुबकाकृतिः । लिंगनाशं तया विध्येत् ॥ १३ ॥**

स०–ताम्रमयी शलाका द्विमुखा स्यात् । स च मुखे कुरुबकाकृतिः रक्तसहचरपुष्पमुकुलाकारा । तया शलाकया लिंगनाशं कफोत्थपटलसंज्ञं विध्येत् ॥ १३ ॥

प०–लिङ्गनाशव्यधार्थं ताम्री ताम्रमयी शलाका द्विमुखोभयतोमुखा कुरुबकाकृतिः कुरुबकमुकुलाग्रा तया लिङ्गनाशं पटलं विध्येत् ॥ १३ ॥

हे०–शलाकामाह–ताम्रीति । कुरुबकं कुरंटकमुकुलम् ॥ १३ ॥

**कुर्यादंगुलिशस्त्रकम् ।**
**मुद्रिकानिर्गतमुखं फले त्वर्धांगुलायतम् ॥**
**योगतो वृद्धिपत्रेण मंडलाग्रेण वा समम् ।**
**तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् ।**
**सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १४ ॥**

स०–अंगुलिशस्त्रकं कुर्यात् । कीदृशम् । मुद्रिकाया ऊर्मिकाया निर्गतं निष्क्रांतं मुखं यस्य तन्मुद्रिकानिर्गतमुखम् । फले तु तस्मिन्मुखेऽर्धांगुलदीर्घं योगतः संस्थानेन वृद्धिपत्रेण मंडलाग्रेण वा तुल्यम् । कियत्प्रमाणाऽस्य मुद्रिका कार्येत्याह । तत्प्रदेशिन्यग्रेत्यादि । तस्य वैद्यस्य या प्रदेशिनी तस्या यदग्रं पर्व तस्य यत्प्रमाणं तेनार्प्यत इति तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणी मुद्रिका यस्मिंस्तद्भिषक्र न्यग्रपर्वप्रमाणार्पणमुद्रिकम् । तथा सूत्रेण बद्धं १ बद्धम् । सूत्रेण बद्ध्वा मणिबंधे योज्यमित्यर्थ गलस्रोतोरोगाणां छेदने च तद्योज्यम् ॥ १४ ॥

प०–अङ्गुलिशस्त्रमेवंलक्षणं कुर्यात् । मुद्रिव आस्यसम्बन्धिन्या निर्गतं निष्क्रान्तं मुखं यस्य । तथा फले मुखविषयेऽर्धाङ्गुलायतम ङ्गुलदीर्घम् । योगतः शस्त्रकर्मयोग्यतया आकृ वृद्धिपत्रेण समं तुल्यम् । मण्डलाग्रेण वा तुल्य तच्च प्रदेशिनीप्रथमपर्वपरिमाणा प्रवेशार्हमुद्रि यस्मिंस्तत् । अर्प्यते अस्यतेऽन्विष्यतेऽङ्गुः यच्छस्त्रं तत्तथाविधं कुर्यात् । तच्च दृढं स् ध्यङ्गुलिबद्धं मणिबन्धस्थाने बन्धनीयम् । तद्र स्रोतोरोगाणां छेदने द्विधाकरणे तथा भेदने वि रणे योज्यम् ॥ १४ ॥

हे०–अंगुलीशस्त्रकमाह—कुर्यादिति । मुद्रिकानि तमुखं कंठस्थमुद्रिकं योगतः स्थानरोगयोग्यतानुस विकल्पः ॥ १४ ॥

**ग्रहणे शुंडिकार्मादेर्बडिशं सुनताननम् ॥ १५**

स०–बडिशं नाम शस्त्रं शुंडिकार्मादेर्ग्रहणे योज्य आदिशब्देन पतिजिह्वादेर्ग्रहणम् । कीदृशं तत् सुनतमंकुशवदानतमाननं मुखं यस्य तदेवम् ॥१५

प०–शुण्डिकार्मादीनां ग्रहणे ग्रहणनिमि बडिशं कार्यम् । सुनताननमतिशयेनानतमुखम्१५

हे०–बडिशमाह—ग्रहण इति ॥ १५ ॥

**छेदेऽस्थ्नां करपत्रं तु खरधारं दशांगुलम् । विस्तारे द्व्यंगुलं सूक्ष्मदंतं सुत्सरुबंधनम्॥१६**

स०–करपत्रं नाम शस्त्रं खरधारं तथा दश गुलं दैर्घ्येण । द्व्यंगुलं विस्तारेण । सूक्ष्मा दं यस्य तत्सूक्ष्मदंतम् । तथा । त्सरुर्मुष्टिर्बंधनं ग्र णम् । शोभने त्सरुबंधने यस्य तत्सरुबंधनम् अभिधानकोशे यद्यपि त्सरुरसिमुष्टिरित्यभ्यधा तथाऽपि मुष्टिमात्रस्येहोपलक्षणार्थत्वान्मुष्टावप्युपपन्न मेव ॥ १६ ॥

प०--अस्थ्नां छेदे छेदनार्थं करपत्रं नाम शस्त्रं कार्यम् । तच्च खरधारं दशाङ्गुलदीर्घं द्व्यङ्गुलविस्तारं सूक्ष्मदन्तं सुत्सरुबन्धनं शोभनः त्सरुर्हस्तग्रहणप्रदेशो यस्य तत् । शोभनमुष्टिबन्धनमिति यावत् ॥ १६ ॥

हे०--करपत्रमाह--छेदेऽस्थ्नामिति । सुष्ठु त्सरुबंधनं ग्रहणार्थं यस्य ॥ १६ ॥

**स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा॥ १७ ॥**

कर्तरी नाम शस्त्रं कर्तरीसदृशं स्नाय्वादिच्छेदे योज्यम् ॥ १७ ॥

प०--कर्तरी नाम शस्त्रं व्रणस्नायुसूत्रकेशानां छेदने छेदनार्थम् । सा च कर्तरीतुल्या त्रिभागपाशा परिशिष्टधारा ॥ १७ ॥

हे०--कर्तरीमाह--स्नायुसूत्रेति ॥ १७ ॥

**वक्रर्जुधारं द्विमुखं नखशस्त्रं नवांगुलम् ।**
**सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छन्नलेखने ॥ १८॥**

स०--नखशस्त्रं नखच्छेदकं प्रसिद्धम् । तच्च वक्रा ऋजुश्च धारा यस्य तदेवम् । तस्यैकं मुखं वक्रमन्यदृजु स्पष्टम् । तथा नवांगुलं नवांगुलप्रमाणं नतु षडंगुलम् । एतच्च सूक्ष्मशल्यस्य कंटकादेरुद्धरणादौ नखच्छेदने भेदने च योज्यम् ॥ १८॥

प०--शस्त्रं नखशस्त्रं वक्रर्जुधारे द्वे मुखे यस्यैवमेकमुखं वक्रधारमस्पष्टधारं द्वितीयमृजुधारमकुटिलधारम् तच्च नवाङ्गुलदीर्घं तच्च सूक्ष्माणां शल्यानामुद्धृतौ तथा छेदे भेदे प्रच्छन्नलेखने च योज्यम् ॥ १८ ॥

हे०--नखशस्त्रमाह--वक्रर्जुधारमिति । नवांगुलं नतु षडंगुलं, नखच्छेदनकं प्रसिद्धं वक्रर्जुधारम्, एकस्मिन्मुखे वक्रा धारा अन्यस्मिन् ऋजुः ॥ १८ ॥

अधुना दंतलेखनशस्त्रमाह--

**एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः ।**
**दंतलेखनकं तेन शोधयेद्दंतशर्कराम् ॥ १९ ॥**

स०--एकधारमेकस्मिन् प्रदेशे तथा चतुष्कोणं तथा एकत एकस्मिन्देशे प्रबद्धा आकृतिर्यस्य तद्दंतलेखनकम् । तेन दंतशर्करां शोधयेत् ॥ १९ ॥

प०--दन्तलेखनकं नाम शस्त्रमेकधारम् । एकरूपा धारा यस्य दन्तशर्कराशोधने । अन्ये त्रयः कोणा नाम तथा चतुष्कोणं चतुरस्रं तथा प्रबद्धा आकृतिः संस्थानं यस्य । एकतः एकस्मात्प्रदेशात् हस्तग्रहणप्रदेशात् । तेन शस्त्रेण दन्तशर्कराः शोधयेत् लेखयेत् ॥ १९ ॥

हे०--दन्तलेखनमाह--एकधारमिति । प्रबद्धवद्वेष्टितवदाकृतिर्यस्य तत्प्रबद्धाकृति ॥ १९ ॥

अधुना सूचीशस्त्रमाह--

**वृत्ता गूढदृढाः पाशे तिस्रः सूच्योऽत्र सीवने ।**
**मांसलानां प्रदेशानां त्र्यस्रा त्र्यंगुलमायता ॥**
**अल्पमांसाऽस्थिसंधिस्थव्रणानां द्व्यंगुलायता ।**
**व्रीहिवक्त्रा धनुर्वक्त्रा पक्वामाशयमर्मसु ।**
**सा सार्धद्व्यंगुला ॥ २० ॥**

स०--अत्र एषु शस्त्रेषु मध्ये सीवने सीवनविषये तिस्रः सूच्यः स्युः । किंभूताः । वृत्ता वर्तुलाः पाशे गूढास्तथा दृढाः सारत्वात् । आसां च प्रत्येकं संस्थानविशेषेण विशेषोपयोगमाह । मांसलानां बहुमांसानां शरीरदेशानां त्र्यस्रा मुखे सूची स्यात् । संग्रहेऽप्यबोचत् । त्र्यस्राग्रेति । त्र्यस्रेति चिंत्यम् । तथा त्र्यंगुलमायता त्र्यंगुलदीर्घेत्यर्थः । वृत्तत्वं दृढपाशत्वं चोक्तमेव सामान्यलक्षणेन । अल्पमांसानां व्रणानां संध्यस्थिसंश्रितानां च द्व्यंगुलमायता दीर्घा । वृत्तमुखत्वं चाऽस्याः सामान्योक्तम् । तृतीयामाह व्रीहीत्यादि । व्रीहिमुखा चापवत् कुटिला । दैर्घ्येण द्वे अंगुले सार्धे स्यात् । सा च पक्वाशय आमाशये मर्मसु च व्रणानां सीवने योज्या ॥ २० ॥

प०--वृत्ता वर्तुला तथा पाशे सूत्रप्रवेशप्रदेशे गूढदृढास्तिस्रः सूच्यः कार्याः । अत्र सीवने आसां मध्यात् मांसलानामवकाशानां व्रणानां सीवने त्र्यस्रा त्रिकोणा त्र्यङ्गुलमायता त्र्यङ्गुलदीर्घा । द्वितीया सूची व्रणानामस्थिसन्धिगतानां तथाऽस्थिस्थानामल्पमांसानां च सीवने द्व्यङ्गुलायता द्व्यङ्गुलदीर्घा कार्या । सा सार्धद्व्यङ्गुला तृतीया सूची । व्रीहिवक्त्रा व्रीह्याकारमुखा तथा धनुर्वक्त्रा धनुरिव कुटिला तथा सार्धद्व्यङ्गुलदीर्घा सा

च सीवने पक्वाशयस्थानां व्रणानामामाशयस्थानां मर्मसु स्थितानां च योज्या ॥ २० ॥

हे०—सूचीत्रयमाह—वृत्ता इति । पाशे छिद्रस्थाने गूढा दृढाश्च तत्र त्र्यंगुलां सूचीमाह—मांसलानामिति। द्व्यंगुलां सूचीमाह—अल्पमांसेति । सार्द्धद्व्यंगुलां सूचीमाह--व्रीहिवक्त्रेति ॥ २० ॥

अधुना कूर्चं लिलक्षयिषुराह—

**सर्ववृत्तास्ताश्चतुरंगुलाः ।**
**कूर्चो वृत्तैकपीठस्थाः सप्ताऽष्टौ वा सुबंधनाः ।**
**संयोज्यो नीलिकाव्यंगकेशशातनकुट्टने॥२१ ॥**

स०—ताः सूचयः सर्वतो वर्तुला दैर्घ्येण चतुरंगुलाः कूर्च इत्युच्यते । किंभूताः वृत्त एकस्मिन् पीठे संस्थिताः । तथा सप्तसंख्या अष्टौ वा । तथा शोभनं बंधनं यासां ताः । सुबंधनाः । अत एवेदं शस्त्रं सूचीकूर्चसंज्ञमिति । तथा चाऽर्शश्चिकित्सिते जगाद । अर्शोभ्यो जलजाशस्त्रसूचीकूर्चैरित्यादि । स च बद्धसप्ताष्टसूचिकः कूर्चो नीलिकादिषु लेपे कुट्टनविषये च योज्यः । उपलक्षणत्वाच्चाऽस्य श्वित्रेंद्रलुप्तादिष्वपि योज्यः ॥ २१ ॥

प०—सर्वतो वृत्ता वर्तुलाः सर्ववृत्तास्तथा चतुरङ्गुलायताः । तथा वृत्ते तु एकस्मिन् पीठे स्थिताः तत्र प्रतिष्ठिताः सम्यक् सप्ताष्टौ वा तथा शोभनबन्धनाः सुष्ठु निबद्धा इत्यर्थः । एतच्छस्त्रं सूचीनां कूर्च उच्यते । स च योज्यो नीलिकादिषु रोगेषु तथा कुट्टने कुट्टनविषये योजनीयः ॥ २१ ॥

हे०—कूर्चमाह—सर्ववृत्ता इति । सर्ववृत्ताः पाशरहितास्ताः सूच्यः वृत्ते एकस्मिन् पीठे निखाताः ॥ २१॥

**अर्धांगुलमुखैर्वृत्तैरष्टाभिः कंटकैः खजः ।**
**पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक्॥२२॥**

स०—अष्टाभिः कंटकैः खज उच्यते । कीदृशैः । अर्धांगुलप्रमाणं मुखं येषां तैरर्धांगुलमुखैः । तथा वर्तुलैः । तेन खजेन हस्ताभ्यां विलोड्यमानेन नासिकातोऽस्रं हरेत् ॥ २२ ॥

प०—पाणिभ्यां हस्ताभ्यां मथ्यमानेन तेन घ्राणान्नासिकाया असृक् रक्तं हरेन्निर्हरेत् ॥ २२ ॥

हे०—खजमाह—अर्द्धांगुलेति ॥ २२ ॥

**व्यधने कर्णपालीनां यूथिका मुकुलानना २३ ॥**

स०—कर्णपालीनां व्यधने यूथिका नाम शस्त्रं स्यात् । कीदृशी । मुकुलानना ॥ २३ ॥

प०—व्यधनं भेदनं कर्णपालीनां यूथिका नाम शस्त्रम् । यूथिका कीदृशी मुकुलस्येव आननं मुखं यस्याः सा मुकुलानना ॥ २३ ॥

हे०—कर्णव्यधनमाह—व्यधनमिति ॥ २३ ॥

**आराऽर्धांगुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः ।**
**चतुरस्रा तया विध्येच्छोफं पक्वामसंशये ॥**
**कर्णपालीं च बहुलाम् ॥ २४ ॥**

स०—अर्धांगुलप्रमाणं वृत्तं मुखं यस्याः साऽर्धांगुलवृत्तास्या । तथा स एवार्धांगुलप्रमाणः प्रवेशो यस्याः सा तत्प्रवेशा । तथोर्ध्वत इति । वृत्तार्धांगुलादुपरिष्टात्तथैव चार्धांगुलप्रमाणैव चतुरस्रा स्यात् । सा आरानाम शस्त्रम् । तया आरया शोफं विध्येत् । कदा पक्वामसंशये किमयं पक्वः शोफ उताम इति संदेहे । बहुलां च कर्णपालीं तया विध्येत् ॥ २४ ॥

प०—आरानाम शस्त्रमर्धाङ्गुलप्रमाणं वृत्तं परिवर्तुलमास्यं मुखं यस्याः सा तथाभूता । तत्प्रवेशा तावत्प्रवेशा तत्परिमाणप्रवेशेति यावत् । तथोर्ध्वतश्चतुरस्रा अर्धाङ्गुलादूर्ध्वं चतुरस्रा न वृत्ता । तयाऽऽरया शोफं विध्येत् । पक्वामसंशये सति किमयं शोफः पक्वो नवेत्यस्यां संशितौ संशये सति आरया शोफं विध्येत् ॥ २४ ॥

हे०—आरामाह—आरेति । तत्प्रवेशादर्द्धांगुलप्रवेशात्, ऊर्ध्वतः वृत्तान्मुखादूर्ध्वं चतुरस्रा, पक्वामसंशयं पक्वाऽपक्वासन्देहे, बहुलां घनाम् ॥ २४ ॥

**बहुलायाश्च शस्यते ।**
**सूची त्रिभागसुषिरा त्र्यंगुला कर्णवेधनी २५॥**

स०—बहुलाया अतिमांसलायाः कर्णपाल्याश्च सूची शस्यते न केवलमारा । कीदृशी सूची । त्रिभागः प्रांतभागात्सुषिरो यस्याः सैवम् । तथा त्र्यंगुलादैर्घ्येण । सा च कर्णवेधनी स्यात् ॥ २५ ॥

प०—अतिमांसलयाः कर्णपाल्याश्च सूची शस्यते। सा च त्रिभागसुषिरा त्रिभागप्रमाणा कृतच्छिद्रा त्र्यङ्गुलदीर्घा त्र्यङ्गुलप्रमाणा कर्णवेधिनी कर्णवेधनं मुक्त्वा नासौ सीवने प्रयोज्या ॥ २५ ॥

हे०—बहुलकर्णपालीव्यधनार्थं सूचीमाह—बहुलायाश्च शस्यत इति ॥ २५ ॥

**जलौकःक्षारदहनकाचोपलनखादयः।**
**अलौहान्यनुशस्त्राणि तान्येवं च विकल्पयेत्।**
**अपराण्यपि यंत्रादीन्युपयोगं च यौगिकम् २६**

स०—जलौकःप्रभृतीन्यनुशस्त्राणि रक्तस्रावादिकार्यकरणात्। तानि चाऽलौहानि लोहवर्जितानि। आदिशब्देनायस्कांतशाकशेफालिकापत्रादीनां ग्रहणम्। एवंचोक्तेन न्यायेनाऽन्यान्यपि यंत्रादीनि विकल्पयेत्। आदिशब्देन शस्त्राणां ग्रहणम्। उपयोगं च यौगिकं साधुतरं बुद्ध्या निरूपयेत् ॥ २६ ॥

प०—जलौकःक्षारादयोऽनुशस्त्राणि। आदिग्रहणात् कुरुविन्दशाकशेफालिकादिखरपत्रसमुद्रफलशुष्कगोमयादीनि। तान्यलोहानि स्वबुद्ध्या चैवं विकल्पयेत्। वक्ष्यमाणयाऽनया रीत्या तथाऽपराण्यन्यानि विविधानि यन्त्रादीनि तत्कार्याणि चोपकल्पयेत्। तथोपयोगं च यौगिकं च परिकल्पयेत् ॥ २६ ॥

हे०—अनुशस्त्राण्याह—जलौक इति। उक्तेभ्यः शस्त्रयन्त्रेभ्योऽन्यान्यपि स्वबुद्ध्या कल्प्यानीत्याह—तान्येवमिति। तानि शस्त्रानुशस्त्राणि यन्त्रादीनि यन्त्रानुयन्त्राणि तेषां योग्यमुपयोगं विकल्पयेत् ॥ २६ ॥

**उत्पाट्यपाट्यसीव्यैष्यलेख्यप्रच्छन्नकुट्टनम्।**
**छेद्यं भेद्यं व्यधो मंथो ग्रहो दाहश्च तत्क्रियाः॥**

स०—उत्पाट्यादीनि तत्क्रियास्तेषां षड्विंशतिशस्त्राणां क्रियाः कर्माणि तत्क्रियाः। तानि षड्विंशतिशस्त्राणि संग्रहोक्तानि। तद्यथा। दंतलेखनमंडलाग्रवृद्धिपत्रोखरशरारिमुखत्रिकूर्चकुठारिकाव्रीहिमुखशलाकावेतसपत्रारार्कर्णव्यधनसूचीकूर्चखजैषणीबडिशनखशस्त्राणीति। उत्पाट्यमूर्ध्वनयनं तत्र नखशस्त्रं योज्यम्। पाटने वृद्धिपत्रादि। सेवने सूच्यः। लेखने मंडलाग्रादिः। कुट्टने कूर्चः। छेदने करपत्रादि। भेदने एषणी सूर्चीमुखा। व्यधने वेतसादि। मंथने खजः। ग्रहे संदंशः। दाहे शलाकादिरिति ॥ २७ ॥

प०—उत्पाटयपाटयेत्यादि यद्येकं निर्दिष्टं दाहपर्यन्तं तत्क्रियाः शस्त्राणां कर्माणि ॥ २७ ॥

हे०—शस्त्रकर्माणि गणयति—उत्पाट्येति। उत्पाट्यमुत्पाटनं भावे यत्प्रत्ययः। एवं पाट्यादिषु सेव्यं सेवनम् ॥ २७ ॥

शस्त्रदोषानाह—

**कुंठखंडतनुस्थूलह्रस्वदीर्घत्ववक्रताः।**
**शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्तिताः॥२८॥**

स०—स्पष्टम् ॥ २८ ॥

हे०—शस्त्रदोषानाह—कुण्ठखण्डेति। ते च दोषा अन्यत्र करयन्त्रात् ॥ २८ ॥

अधुना शस्त्राणां ग्रहणविधिं दर्शयति—

**छेदभेदनलेख्यार्थं शस्त्रं वृंतफलांतरे।**
**तर्जनीमध्यमांगुष्ठैर्गृह्णीयात्सुसमाहितः॥ २९ ॥**

स०—छेदभेदनलेख्यार्थं तर्जनीमध्यमांगुष्ठैर्मीलितैः शस्त्रं वृंतफलांतरे वृंतफलमध्यभागे गृह्णीयात्। कीदृक्। सुसमाहितस्तद्गतमनाः ॥ २९ ॥

प०—छेदनार्थं शस्त्रं तथा भेदनार्थं तथा लेखनार्थं च यत् प्रयोजनं च। तद्वृन्तफलान्तरे गृह्णीयात्। वृन्तं च फलं च वृन्तफले तयोरन्तरं तस्मिंस्तन्मध्ये छेदाद्यर्थं शस्त्रं गृह्णीयात्। तच्च प्रदेशिनीमध्यमाङ्गुष्ठैर्न समस्तेन हस्तेन सुसमाहितं कृत्वा ॥ २९ ॥

हे०—शस्त्रधारणविधिमाह-छेदभेदनेति। छेदनादिकर्माणि वृन्तफलयोर्मध्ये तर्जन्यादिभिर्मीलितैः शस्त्रं गृह्णीयात् ॥ २९ ॥

**विस्रावणानि वृंताग्रे तर्जन्यंगुष्ठकेन च ॥ ३० ॥**

स०—विस्रावणकार्याणि शरार्यास्यादीनि शस्त्राणि वृंताग्रे तर्जन्यंगुष्ठाभ्यां गृह्णीयात् ॥ ३० ॥

प०—विस्रावणानि विस्रावणप्रयोजनानि शस्त्राणि वृन्ताग्रे वृन्तपर्यन्ते प्रदेशिन्यङ्गुष्ठकाभ्यां गृह्णीयात् ॥ ३० ॥

हे०--विस्रावणे तु तर्जन्यंगुष्ठाभ्यां वृन्ताग्रे गृह्णीयात् ३०

**तलप्रच्छन्नवृंताग्रं ग्राह्यं व्रीहिमुखं मुखे ३१ ॥**

स०--गृह्णीयादित्यनुवर्तते। तलशब्देन पाणितलमुच्यते। आदिलोपाख्यया तंत्रयुक्त्या। तलेन प्रच्छन्नं वृंत्तमग्रं यस्य तद्व्रीहिमुखं मुखे गृह्णीयात् ३१

प०--व्रीहिमुखं शस्त्रं मुखे मुखप्रदेशे ग्राह्यम्। तलेन हस्ततलेन प्रच्छन्नं प्रच्छादितं वृन्ताग्रं हस्तग्रहणस्थानं यस्य तत्तथाविधम् ॥ ३१ ॥

हे०--व्रीहिमुखं तु पाणितलेन वृंताग्रं प्रच्छाद्य मुखे ग्राह्यम् ॥ ३१ ॥

**मूलेष्वाहरणार्थं तु क्रियासौकर्यतोऽपरम् ३२ ॥**

स०--शेषं शस्त्रं क्रियासौकर्यतो गृह्णीयात्। सुकरस्य भावः सौकर्यम्। यथा सुकरा पाटनादिका क्रिया स्यात्तथा गृह्णीतेत्यर्थः ॥ ३२ ॥

प०--मूलेषु मूलप्रदेशेषु आहरणार्थानि शस्त्राणि ग्राह्याणि तथा यन्त्राण्यपि। अपरमन्यं शस्त्रं शेषं यथायोगं क्रियासौकर्येण ग्रहीतव्यम्। तथा तदीयाः क्रियाः सुखेन साधयितुं सम्पद्यन्ते ॥३२॥

हे०--आहरणे तु शस्त्रं मूले ग्राह्यं, पाशस्योपरि मध्ये लघुसन्दंशः कर्तरी च। शेषेषु तु कर्मसु यत्र गृहीते क्रियासौकर्यं तत्र ग्राह्यम् ॥ ३२ ॥

शस्त्रकोशमाचष्टे--

**स्यान्नवांगुलविस्तारः सुघनो द्वादशांगुलः।**
**क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥**
**विन्यस्तपाशः सुस्यूतः सांतरोर्णास्थशस्त्रकः।**
**शलाकापिहितास्यश्च शस्त्रकोशः सुसंचयः ३३**

स०--नवांगुलविस्तारः शस्त्रकोशः स्यात्। तथा सुष्ठु घनो निबिडः। तथा द्वादशांगुलप्रमाणो दैर्घ्येण। तथा क्षौमादिजः। तथा विन्यस्तः कृतः पाशो यस्य स विन्यस्तपाशः। तथा सुष्ठु स्यूतः। तथा सांतराणि सव्यवधानान्यूर्णास्थानि शस्त्राणि यस्मिन् स सांतरोर्णास्थशस्त्रकः। तथा शलाकया पिहितं स्थगितमास्यं यस्य स एवम्। तथा शोभनः संचयो यस्य शस्त्रकोशस्य स सुसंचयः। नापितभांडिकावत्। तंत्रांतरे चोक्तम्। निशानी तु शस्त्राणां सक्ता शिलैका माषमुद्गप्रभेत्यादि ॥ ३३ ॥

प०--शस्त्रकोशः स्याद्भवेत्। नवाङ्गुलविस्तारः पार्श्वापरपार्श्वाभ्यां तथा सुष्ठु कृत्वा घनस्तथा दैर्घ्याद्द्वादशाङ्गुलः। पत्रोर्णः पट्टविशेषो धौतकौशेयापरपर्यायः। कौशेयः कोशात्संभूतः पट्टविशेष एव दुकूलः क्षौमादिभ्यो जातः। तथा मृदुचर्मभिर्विहितस्तदा विन्यस्तपाशः विविधं कृत्वा अतिशयेन न्यस्ता क्षिप्ता पाशा यस्य तथा सुस्यूतस्तथा सान्तराणि व्यवहितानि पृथगवस्थितानि ऊर्णास्थानि शस्त्राणि यस्मिन् स तथाविधः। तथा शलाकया सूच्या पिहितं संवृतमास्यं मुखं यस्य। शस्त्राणां कोशः शस्त्रस्थानं स च सुसञ्चयः शोभनः सञ्चयो यः शस्त्राणाम् ॥३३॥

हे०-शस्त्रस्य स्थापनार्थं शस्त्रकोशमाह-स्यादिति। संग्रहे तु हस्त एव चात्र प्रधानतमस्तदधीनत्वाद्यंत्रशस्त्राणाम्। तत्र क्षारेण पायितं शरशल्यास्थिच्छेदनेषु, उदकेन मांसछेदनं, तैलेन पाटनभेदेषु शिराव्यधस्नायुच्छेदनेषु प्रयुंजीत। धारा पुनश्छेदनानामासुरी, व्यधनानां विस्रावणानां च कैशिकी, निशानी तु तेषां श्लक्ष्णा शिलिका-माषमुद्गप्रभा, धारा संस्थापनं च शाल्मलीफलकम्। अथ योग्याः। नवाधिकृतशास्त्रेऽप्यकृतयोग्याऽभ्यासः सुबहुशो वाप्यदृष्टकर्मा शस्त्रकर्मणि प्रवर्तेत। शिरास्नायुमर्मादिव्याप्तत्वाद्देहस्य। तस्मात्सरोमचर्मपुष्पफलाम्बुत्रपुसोदकपंकपूर्णदृतिबस्तिबध्नमांसपेशिकोत्पलनालादिषु यथार्हमाहरणादियोग्यां कुर्यात्। तथा घटपार्श्वस्रोतस्यंभोभिः परिपूर्णेन नेत्रेण बास्तिपीडनयोग्याम्। अपि च युक्तकारी भिषक् बुभूषुः पुरुषं सम्पूर्णगात्रसविषहतमदीर्घव्याधिपीडितं निष्क्रांत्रमवहंत्यामापगायां मुंजबल्वजवेष्टितं पंजरस्थमप्रकाशे देशे कोथयेत्। सम्यक् प्रकुथितं चोद्धृत्यायतदेहं कृत्वोशीरवेणुकूर्चादीनामन्यतमेन शनैः शनैरवघृष्य त्वगादीन् सर्वानेव बाह्याभ्यन्तरानङ्गसिरास्नाय्वादीनवयवानाचार्योपदर्शितेनागमेन चक्षुषा च लक्षयेत्। " इति शास्त्रेण यद्दृष्टं दृष्टं प्रत्यक्षतश्च यत्। समागतं तदुभयं भूयो ज्ञानं विवर्धयेत् " इति ॥ ३३ ॥

सुकुमारबालानामस्रविस्रावणार्थं जलौकसो निर्दिदिक्षुराह--

**जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ३४॥**

(१) जलमासां आयुरिति जलायुकाः, जलमासामोक इति जलौकसः। तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि, तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना-

स०—सुखिनां सुखोचितानां रक्तस्रावणार्थं जलौकसो योजयेत्। ताश्च द्विप्रकाराः। सविषा निर्विषाश्च। तत्र सविषाणां सापायत्वात्ता एव तावल्लक्षयति ॥ ३४ ॥

प०—जले ओको निवासो यासां ता जलौकसः सुखिनां नृणां रक्तस्रावार्थं योजयेत्। सुखिनामित्युपलक्षणमात्रम्। तेन बालस्थविरनारीभीरूणामपि योजयेत् ॥ ३४ ॥

हे०—जलौकसां विषयमाह—जलौकस इति ॥३४॥

**दुष्टांबुमत्स्यभेकाहिशवकोथमलोद्भवाः।**
**रक्ताः श्वेता भृशं कृष्णाश्चपलाःस्थूलपिच्छिलाः**
**इंद्रायुधविचित्रोर्ध्वराजयो रोमशाश्च ताः।**
**सविषा वर्जयेत् ॥ ३५ ॥**

स०—दुष्टांबूद्भवाश्च जलौकसः सविषा इति वर्जयेत्। तथा मत्स्यभेकसर्पादिशवकोथोद्भवास्तथा तेषामेव मत्स्यादीनां ये मलमूत्रपुरीषादयस्तदुद्भवाश्च सविषा इति वर्जयेत्। सविषाणां लक्षणमाह। रक्ता इत्यादि। यावद्रोमशांतास्ताः सविषा यतस्ता वर्जयेत्ता न योजयेत् ॥ ३५ ॥

प०—दुष्टाम्बूद्भवाः मत्स्यादीनां मृतशरीरक्लेदमलोद्भवा यास्ता रक्ता लोहिताकाराः। श्वेताः शुक्लाः। कृष्णाः भृशमत्यर्थं कृष्णाः कृष्णवर्णाः। चपलागमनशीलास्तथा स्थूला बृहत्कायाः। पिच्छिला अविशदास्तथा इन्द्रायुधवद्विचित्रा नानाजातयो नीललोहितमाञ्जिष्ठभेदभिन्नाः। ऊर्ध्वमुपरिष्टाद्राजयो लेखा यासां तास्तथाविधाः। रोमशाः रोमयुक्ताश्च ताः सर्वाः सविषा वर्जयेत् रक्तस्रुत्यर्थं न पातयेत् ॥ ३५ ॥

हे०—वर्ज्या जलौकस आह—दुष्टांबिवति। दुष्टांबुमत्स्यादिशवकोथमलेषु च जाताः ॥ ३५ ॥

—निर्विषाश्च विशेषेण भवन्ति। अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात्। भक्ष्यार्थे चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य, शय्यार्थं तृणमौदकानि च पत्राणि त्र्यहात्त्र्यहाच्चाभ्योऽन्यज्जलं भक्ष्यं च दद्यात्, सप्तरात्रात् सप्तरात्राच्च घटमन्यं संक्रामयेत् ॥

**ताभिः कंडूपाकज्वरभ्रमाः।**
**विषपित्तास्रनुत्कार्यं तत्र ॥ ३६ ॥**

स०—ताभिर्हि योजिताभिः कंड्वादयः स्युः। उपलक्षणं चेदम्। दाहशोषमूर्च्छादयोऽपि स्युः। तासु मोहाद्योजितासु विषादिजित् कार्यम् ॥ ३६ ॥

प०—यतस्ताभिः कण्ड्वादयो जायन्ते। तत्र तेषु कण्डवादिषूत्पन्नेषु विषपित्तास्रनुत् साधनं कार्यम्। विषं च पित्तं चास्रं च तन्नुदति प्रेरयति नाशयति यत्तद्विषपित्तास्रनुत् ॥ ३६ ॥

हे०—वर्ज्याप्रयोगे दोषमाह—ताभिरिति। वर्ज्यादोषे चिकित्सामाह—विषपित्तास्रजिदिति ॥ ३६ ॥

**शुद्धांबुजाः पुनः।**
**निर्विषाः शैवलश्यावा वृत्ता नीलोर्ध्वराजयः॥**
**कषायपृष्ठास्तन्वंग्यः किंचित्पीतोदराश्च याः ३७**

स०—जलौकस इति वर्तते। शुद्धजलोद्भवाः सौगंधिकोत्पलकमलविपुलसलिलशैवालजा जलौकसो निर्विषाः स्युः। आसां च लक्षणमाह। शैवलेत्यादि। शैवलमिव श्यावास्तथा वृत्तास्तथा नीलोर्ध्वराजयस्तथा कषायं न्यग्रोधादिवल्कलसदृशवर्णं पृष्ठं यासां ता एवम्। तथा तनुशरीराः किंचित्पीतवर्णजठराश्च निर्विषा ज्ञेयाः ॥ ३७ ॥

प०—शुद्धाम्बुसम्भवाः पद्मोत्पलसौगन्धिकादिसुगन्धिविपुलविमलसलिलसम्भूताः। शैवलवत् श्यावा शैवलवर्णाः। तथा वृत्ता वर्तुला नीला नीलवर्णाः। ऊर्ध्वमुपरि राजयो रेखा यासां ताः। तथा कषायपृष्ठाः कषायवर्णपृष्ठाः। तनून्यङ्गानि यासां तास्तन्वङ्ग्यः। किञ्चिदीषत्पीतं पीतवर्णमुदरं यासां ताः सर्वा निर्विषाः ३७॥

हे०—ग्राह्या जलौकस आह—शुद्धाम्बुजा इति॥३७॥

**ता अप्यसम्यग्वमनात्प्रततं च निपातनात्।**
**सीदंतीः सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ॥**

स०—सुनिर्विषा अपि जलौकसो रक्तमत्ता इति त्यजेत्। न केवलं सविषा इति प्रतिपादनार्थोऽपि शब्दः। रक्तमत्तत्वे हेतुद्वयमाह। असम्यग्वमनात्। दुष्टरक्तस्येति शेषः। प्रततं च लागनाद् दुष्टरक्तापायित्वेन रक्तमत्ताश्च ताः स्युः। ताश्च कथं लक्ष्यंत

इत्याह । सीदंतीरित्यादि । जलं प्राप्य तोयप्रसभांगमानाय सीदंतीमित्थाऽचेष्टमाना इति ज्ञात्वा त्यजेत् ॥ ३८ ॥

प०—ता अपि निर्विषा अपि दुष्टशोणिताः असम्यग्वमनात् तथा प्रततं संततं कृत्वा निपातनात् पातनात् सलिलं आप्यासाद्य सलिलमध्ये पतिताः सीदन्ति निमज्जन्ति रक्तपानमत्ता ज्ञात्वा त्यजेत् ॥ ३८ ॥

हे०—आद्यास्वपि मत्ता वर्ज्या इत्याह ता इति । प्रततं निपातनात् अविश्रमस्य प्रयोगात् सीदन्तीः श्रममत्यजन्ती रक्तमत्ता इति रक्तमत्तत्वाद्धेतोः ॥ ३८ ॥

**अथेतरानिशाकल्कयुक्तेऽम्भसि परिप्लुताः ।**
**अवंतिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥**
**लागयेद्‌ घृतमृत्सांगशस्त्ररक्तानिपातनैः ।**
**पिबंतीरुन्नतस्कंधाश्छादयेन्मृदुवाससा ॥ ३९ ॥**

स०—अथ परीक्षातोऽनंतरमितरा लागयेत् । किंभूताः । हरिद्राकल्कयुक्तजले परिप्लुताः कांजिके तक्रे वा परिप्लुताः पुनश्च जले समाश्वासिताः सात्म्यभूते जले प्लवनार्हाः सोत्साहाः सतीर्योजयेत् । अलगंतीः कथं लागयेदित्याह । घृतेत्यादि घृतादिपातनैस्ता योजयेत् । पातनशब्दः प्रत्येकं योज्यः। शस्त्रेणांऽगे रक्तं मोक्षयित्वा वा ता योजयेत् । ताश्च पिबंतीः सूक्ष्मवाससाऽऽच्छादयेत् । एवं हि तासां मक्षिकाद्यनुपद्रवात् सम्यग्योजना स्यात् । अथ किमेताः पिबंत्युत नेति कथं ज्ञायत इत्यत्र विशेषणद्वारेण हेतुमाह । उन्नतस्कंधा इति । उन्नतः स्कंधो यासां ता एवम् । उन्नतस्कंधत्वेन तासां पानं ज्ञायत इत्यर्थः ॥ ३९ ॥

प०—ता जलौकसः उन्नतस्कन्धाः अत्युन्नतस्कन्धप्रदेशाः पिबन्तीः पानं कुर्वतीः मृदुना अकठिनेन वाससा वस्त्रेण छादयेत् आवृणुयात् ॥ ३९ ॥

हे०—जलौकसां प्रयोगमाह—अथेतरेति । इतरा अवर्ज्याः। अवंतिसोमे कांजिके । घृताद्यन्यतमेन प्रदेशमभ्यज्य शस्त्रेण वा प्रच्छाय लागयेत् ॥ ३९ ॥

ननु शुद्धरक्तदुष्टरक्तयोरेकलोलीभूतत्वाच्छुद्धरक्तस्याप्याकर्षणाज्जलौका दोषाय स्यादित्यत आह—

**संपृक्ताद्‌दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् ।**
**आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ४० ॥**

स०—दुष्टशुद्धास्रान्मिलितादपि दुष्टरक्तं जलौकाः पूर्वमादत्ते न शुद्धं देहधातुस्थमिति दृष्टांतेन दर्शयति । हंस इत्यादि । हंसो यथा क्षीरजलान्मिश्रितात्प्राग्दुग्धमादत्ते न तु जलं तथा जलौकाः प्रागशुद्धं रक्तमादत्ते पश्चादितरदिति न्याय्यमेतत् ॥ ४० ॥

प०—सम्पृक्तान्मिश्रितादेकीभूताद्‌दुष्टाद्‌दुष्टास्रात् शुद्धात् शुद्धरक्ताद्यदशुद्धं रक्तं तज्जलौकाः प्रथममादत्ते गृह्णाति पिबति । क इव । यथा हंसो मिश्रीभूतात् क्षीरोदकात् क्षीरमादत्ते नतु तोयं तद्वत् ॥ ४० ॥

हे०—दुष्टशुद्धसम्पर्के जलौकाः प्रथमं दुष्टं पिबतीत्याह—सम्पृक्तादिति ॥ ४० ॥

**दंशस्य तोदे कंड्वां वा मोक्षयेद्वामयेच्च ताम् ।**

स०—दंशस्य तोदे सति कंड्वां वा सत्यां मोक्षयेत् । शुद्धरक्तरक्षार्थमतियोगभयाच्च । तामित्येकवचननिर्देशादेकैकां मोक्षयेन्न तु सर्वाः सकृदेवेति गमयति । अथ पानलौल्याद्दंशं न त्यजेत्ततो हरिद्राचूर्णं लवणचूर्णं वा आनने दत्त्वा मोक्षयेत् । मोक्षितां च जलौकसं वामयेत् ॥ ४१ ॥

प०—जलौका दंशस्य तोदे व्यथायां सत्यामथवा कण्ड्वां समुपजातायां शुद्धरक्तरक्षार्थं ता जलौकसो मोक्षयेत् अपनयेत् । ततो मोक्षयित्वा पीतरक्तां तां वामयेत् ॥ ४१ ॥

हे०—जलौकसां मोक्षणकालमाह—दंशस्येति । मोक्षितानां कृत्यमाह—वामयेदिति ॥ ४१ ॥

वमनविधानमाह—

**पटुतैलाक्तवदनां श्लक्ष्णकंडनरूक्षिताम् ॥ ४२ ॥**

स०—सैंधवयुतेन तैलेन रूक्षितास्यां तथा सूक्ष्मेण तंडुलकंडनेन रूक्षितामवकीर्णां वामयेत् । तंडुलशब्दस्याऽत्र लोपो ज्ञेयस्तंत्रयुक्त्या ॥ ४२ ॥

प०—लवणतैलाभ्यामाक्तवदनां रूक्षितमुखां तथा श्लक्ष्णेनापरुषेण कण्डनेन तन्दुलकण्डनेन रूक्षिताभुपदिग्धगात्रां पुच्छादामुखमनुलोमं शनैः पीडयेत् सम्यग्वामयेत् ॥ ४२ ॥

हे०—कण्डनं तुषाः ॥ ४२ ॥

**रक्षन् रक्तमदाद्भूयः सप्ताहं ता न पातयेत् ४३॥**

स०—ताः कृतवमना जलौकसो रक्तमदाद्रक्षन् पुनः सप्ताहं न योजयेत् ॥ ४३ ॥

प०—रक्तमदाद्रक्षयन् पालयन् वैद्यो भूयः पुनः सप्ताहं सप्तरात्रं तां जलौकसं न पातयेत् न लागयेत् ॥ ४३ ॥

हे०—सप्ताहादर्वाग् जलौकसां पुनः प्रयोगं निषेधति—रक्षन्निति ॥ ४३ ॥

**पूर्ववत् पटुता दार्ढ्यं सम्यग्वांते जलौकसाम् ४४।**

स०—जलौकसां सम्यग्वांते सति पूर्ववदलगितानामिव पटुतादि भवति ॥ ४४ ॥

प०—पूर्ववत् पटुता चतुरता स्वास्थ्यं तथा दार्ढ्यं दृढता जलौकसां सम्यग्वान्ते सति जायते ॥ ४४ ॥

हे०—जलौकसां सम्यग्वमनलक्षणमाह—पूर्ववदिति४४

**क्लमोऽतियोगान्मृत्युर्वा ॥ ४५ ॥**

स०—अतियोगाद्वमनस्य क्लमो मृत्युर्वा स्यात् ४५॥

प०—अतियोगात् रक्तस्यातिवमनात्तासां क्लमो ग्लानिरथवा मरणं जायते ॥ ४५ ॥

हे०—अतिवांते लक्षणमाह—क्लम इति ॥ ४५ ॥

**दुर्वांते स्तब्धता मदः ॥ ४६ ॥**

स०—दुर्वांते सति स्तब्धता मदश्च स्यात् ॥ ४६ ॥

प०—दुर्वान्ते योगे तासां स्तब्धता निश्चलत्वं तथा मदः सलिलं प्राप्यावसदनं भवति ॥ ४६ ॥

हे०—दुर्वांते लक्षणमाह—दुर्वांत इति ॥ ४६ ॥

**अन्यत्राऽन्यत्र ताःस्थाप्या घटे मृत्स्नांबुगर्भिणि। लालादिकोथनाशार्थं सविषाःस्युस्तदन्वयात् ४७**

स०—ताश्चाऽन्यस्मिन्नन्यस्मिन्घटे त्र्यहात्पंचाहाद्वा स्थाप्याः। किंभूते। मृत्स्नापृक्तेन जलेन गर्भिणि तद्युक्त इत्यर्थः। प्रशस्ता मृन्मृत्स्ना। सस्नौ प्रशंसायामिति स्नप्रत्ययः। अनेकभाजनस्थापने कोऽर्थ इत्याह। लालादिकोथनाशार्थम्। आदिशब्देन मूत्रपुरीषादिपरिग्रहः। लालादीनां जलौकसा संबंधः। कोथः कुथितत्वं क्लिन्नता तन्नाशाय। तदन्वयाल्लालादियोगात्ताः सविषाः स्युः ॥ ४७ ॥

प०—प्रशस्ता शुभा योग्या मृन्मृत्स्ना मृत्स्नायाअम्बु च मृत्साम्बु तद्गर्भे वर्तते यस्य घटस्य स मृत्स्नाम्बुगर्भो घटः। तस्मिंस्तथाभूतेऽन्यत्रान्यत्र घटे ता जलौकसः स्थाप्याः स्थापनीयाः। लालादीनां कोथः क्लिन्नता तन्नाशार्थं तन्निमित्तमन्यत्रान्यत्र स्थाप्याः। यस्मात्तदन्वयाल्लालादियोगात्ता जलौकसः सविषाः स्युर्भवेयुः। अतोऽन्यत्र घटे ताः स्थाप्याः ॥ ४७ ॥

हे०—जलौकसां पालनविधिमाह—अन्यत्रेति ॥ ४७ ॥

**अशुद्धौ स्रावयेद्दंशान् हरिद्रागुडमाक्षिकैः ४८॥**

स०—अशुद्धावशुद्धलिंगानुमिते रक्ते सति दंशान् हरिद्रादिभिः स्रावयेत् ॥ ४८ ॥

प०—रक्ताशुद्धौ सत्यां जलौकोदंशान् व्रणान् किञ्चित् घटयेत् हरिद्रागुडमाक्षिकैः स्रावयेन्निर्वाहयेत् ॥ ४८ ॥

हे०—दंशापरिस्रावे स्रावणौषधमाह—अशुद्धाविति ४८

**शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः ४९॥**

स०—अनंतरं शतधौतघृतसंपृक्ताः पिचवो योज्या इति शेषः। शतशब्दोऽनेकपर्यायो बहुकृत्वो धौतेत्यर्थः। तथा शिशिरा लेपा यष्टीचंदनोशीरादयो योज्याः। दंशस्थितचलितरक्तप्रसादनायेति भावः ॥ ४९ ॥

प०—स्रुते रक्ते शतधौतघृतयुक्ता दंशदेशे पिचवस्तथा लेपाः शीताश्च हिताः ॥ ४९ ॥

हे०—दंशस्रावानन्तरं कृत्यमाह—शतधौतेति ॥ ४९ ॥

**दुष्टरक्तापगमनात्सद्यो रागरुजां शमः ॥५०॥**

स०—दुष्टरक्तस्याऽपगमान्निःसरणात्सद्यो रागरुजादिशमः स्यात्। उपलक्षणं चैतत्। श्वयथुशैथिल्यदाहशमोऽपि भवत्येव ॥ ५० ॥

प०-दुष्टस्य रक्तस्यापगमान्निर्वाहणात् सद्य-स्तत्क्षणादेव रागरुजोपशम उपजायते। रागो लोहि-तत्वं रुजा पीडा तयोरुपशमो निष्पद्यते ॥ ५० ॥

हे०-स्रावफलमाह--दुष्टरक्तेति ॥ ५०॥

**अशुद्धं चलितं स्थानात्स्थितं रक्तं व्रणाशये।**
**अम्लीभावात्पर्युषितं तस्मात्तत्स्रावयेत्पुनः॥५१॥**

स०-अशुद्धं रक्तं स्वाशयाच्चलितं व्रणस्थाने स्थितं पर्युषितं तद्व्यम्लीभवेद्यतस्तस्मात्तद्रक्तं भूयः स्रावयेत् ५१

प०-अशुद्धं रक्तस्थानात् प्रच्युतं व्रणाशये देशस्थाने स्थितं व्यम्लीभावाद् दुष्टतां गच्छेत्। पर्युषितं रात्रिमध्युषितं तस्मात्तद्रक्तं पुनः स्रावयेत् निर्हरेत् ॥ ५१ ॥

हे०-द्वितीयेऽह्नि पुनः स्रावमाह-अशुद्धमिति।अम्ली-भवेत् पाकोन्मुखं भवेत् ॥ ५१ ॥

**युंज्यान्नालाबुघटिका रक्ते पित्तेन दूषिते।**
**तासामनलसंयोगात् ॥ ५२ ॥**

स०-रक्ते पित्तेन दूषिते सत्यलाबुघटिका न लाग-येत्। तासामलाबूनां घटिकानां चाऽग्निसंयोगात्पित्तरक्त-कोपोत्पत्तेरिति भावः ॥ ५२ ॥

प०-रक्तपित्तेन दूषिते दुष्टेऽलाबुघटिकाश्च रक्त-पित्तनिर्हरणार्थं न युञ्ज्यान्न योजयेत्। यतस्ता-सामलाबुघटिकानामग्निसंयोगोऽग्निना संश्लेषः। तस्मादग्निसंयोगात् कारणात् रक्तयोनेः पित्तस्य समानगुणत्वाद्विरोधः ॥ ५२ ॥

हे०-अलाबुघटिकयोरविषयमाह-युञ्ज्यादिति॥५२॥

**युंज्याच्च कफवायुना ॥ ५३ ॥**

स०-तास्तु कफवायुना दुष्टेऽसृजि युंज्यात् ५३॥

प०-कफवाताभ्यां दुष्टे रुधिरे अलाबुघटिकां युञ्ज्यात्। एवं नत्वत्र विरोधः कश्चित्। तयोः प्रतिपक्षतयाऽग्निसंयोगश्च ॥ ५३ ॥

हे०-अलाबुघटिकयोर्विषयमाह-युञ्ज्यादिति ॥५३॥

**कफेन दुष्टं रुधिरं न शृंगेण विनिर्हरेत्।**
**स्कन्नत्वाद् ॥ ५४ ॥**

स०-कफेन दुष्टं रक्तं सत् शृंगैर्नाकर्षेत्। स्कन्नत्वा-त्स्त्यानत्वाद्धेतोः। शृंगस्य चाऽग्निसंयोगाभावेन कफवि-लयने सामर्थ्याभावात् ॥ ५४ ॥

प०-रुधिरं शोणितं कफेन श्लेष्मणा दुष्टं दूषितं शृङ्गेण न निर्हरेत् नोत्कर्षेत्। स्कन्नत्वात् स्त्यानीभूतत्वात् कफदुष्टरक्तस्य ॥ ५४ ॥

हे०-शृङ्गस्याविषयमाह-कफेनेति ॥ ५४॥

**वातपित्ताभ्यां दुष्टं शृंगेण निर्हरेत् ॥५५॥**

स०-वातपित्ताभ्यां तु दुष्टं रुधिरं शृंगेण निर्ह-रेत्॥ ५५ ॥

प०-यत्पुनः शोणितं वातपित्ताभ्यां दुष्टं दूषितं तन्निर्हरेत् शृङ्गेण ॥ ५५ ॥

हे०-शृङ्गस्य विषयमाह-वातपित्ताभ्यामिति॥५५॥

**गात्रं बद्ध्वोपरि दृढं रज्ज्वा पट्टेन वा समम्।**
**स्नायुसंध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत्॥**
**अधोदेशप्रविसृतैः पदैरुपरिगामिभिः।**
**न गाढघनतिर्यग्भिर्न पदे पदमाचरन् ॥**
**प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः।**
**हरेच्छृंगादिभिः सुप्तमसृग्व्यापि शिराव्यधैः ५६**

स०--गात्रं रज्ज्वा पट्टेन वा दृढं बद्ध्वोपरि प्रच्छनी-यप्रदेशस्य तथा स्नाय्वादि परिहरन् प्रच्छानं कुर्यात्। कथम्। अधोदेशात्प्रवृत्तैः पदैरुपरिगामिभिरूर्ध्वं प्रसा-रिभिः। किंभूतैः पदैः। न गाढैर्न खरैर्न निरंतरैर्न च तिर्यग्भिस्तिरश्चीनैः तथा पदे पदं नाचरन् पदस्यो-परि पदमकुर्वन्नित्यर्थः। एकदेशस्थितं रक्तं प्रच्छानेना-कर्षेत्। ग्रंथितं जलजन्मभिर्हरेत्। ग्रंथितं ग्रंथ्यर्बुदा-दिषु रक्तं जलौकाभिर्हरेत्। शृंगादिभिः सुप्तं निश्चेत-नसंस्थानं प्रसुप्त्यादिविकारि शृंगादिभिर्हरेत्। व्यापि शिराव्यधैः। व्यापि सर्वशरीरस्य लोहितं शिराव्यधेना-ऽऽकर्षेत् ॥ ५६ ॥

प०-गात्रं शरीरावयवं बद्ध्वा बद्धं कृत्वा प्रच्छानप्रदेशे उपर्यूर्ध्वं समं कृत्वा तथा दृढं न श्लथं रज्ज्वा पट्टेन वा अनन्तरं प्रच्छानमाचरेत्। स्नाय्वादि परिवर्जयन् क्रमात् पदैः शस्त्रपदैरधो-देशगतैः तथोर्ध्वगामिभिः प्रसरणशीलैस्तथा न गाढैर्नान्तर्निगूढैर्न घनैर्ननिरन्तरपतितैर्न तिर्यग्भिर्न तिर्यग्गतैः। तथा न पदे शस्त्राभिघाते पदं द्वितीयं शस्त्राभिघातं तस्मिन्नेव पदे आचरन् शस्त्रपातं

कुर्वन् प्रच्छानमाचरेत् । एकदेशस्थं रक्तं प्रच्छानेन निर्हरेत् । तथा ग्रन्थितं रक्तं ग्रन्थिरूपं जलजन्माभिः जलौकोभिर्निर्हरेत् । तथा सुप्तमसृग् रक्तं शृङ्गादिभिः शृङ्गालाबुघटिकाभिर्यथादोषं हरेत् । सुप्तमिव सुप्तमचेतनकारि व्यापि यद्रक्तं सकलं शरीरं व्याप्नोति तच्छीलं तत् शिराव्यधैर्हरेदिति सम्बन्धः ॥ ५६ ॥

हे०--प्रच्छानविधिमाह--गात्रमिति । पदैः शस्त्रकृतैः अधोदेशप्रविसृतैरधस्तादाकृष्टशस्त्रैः अधोदेशमारभ्य ऊर्ध्वमूर्ध्वं क्रियमाणैः । प्रच्छानस्य विषयमाह--प्रच्छानेनेति । जलौकसां विषयमाह--ग्रंथितमिति । ग्रंथितं ग्रन्थीभूतम् । शृङ्गालाबुघटिकानां विषयमाह--शृंगादिभिरिति । सुप्तमज्ञातस्पर्शम् । शिराव्यधस्य विषयमाह--व्यापीति । व्यापि सर्वदेहस्थम् ॥ ५६ ॥

**प्रच्छानं पिंडिते वा स्यात् ॥ ५७ ॥**

स०--पिंडिते रक्ते प्रच्छानं वा स्यात् ॥ ५७ ॥

प०--पिण्डिते रक्तेऽसृजि सङ्घटिते प्रस्थानं स्यात् भवेद्योग्यमिति वाक्यशेषः ॥ ५७ ॥

हे०----प्रच्छानस्थस्य विषयांतरमाह---प्रच्छानमिति ॥ ५७ ॥

**अवगाढे जलौकसः ॥ ५८ ॥**

स०--अवगाढे रक्ते जलौकसः स्युः ॥ ५८ ॥

प०--तथाऽवगाढेऽन्तर्निगूढे रक्ते जलौकसो रक्तनिर्हरणोपायः स्यात् ॥ ५८ ॥

हे०--जलौकसां विषयान्तरमाह--अवगाढ इति ५८॥

**त्वक्स्थेऽलाबुघटीशृंगम् ॥ ५९ ॥**

स०--त्वक्स्थ उत्ताने रक्तेऽलाबुघटीशृंगाणि स्युः ॥ ५९ ॥

प०--त्वक्स्थे पुनरुद्धरेद्रक्तमलाबुघटीशृङ्गमुपायभूतं स्यात् ॥ ५९ ॥

हे०--अवगाढे गभीरे अलाब्वादीनां विषयांतरमाह--त्वक्स्थ इति ॥ ५९ ॥

**शिरैव व्यापकेऽसृजि ॥ ६० ॥**

स०--सर्वशरीरव्यापके रक्ते शिरैव । शिरायां मतविकल्पो नास्त्येवेत्येवशब्दार्थः ॥ ६० ॥

प०--व्यापके सकलदेहप्रविसृते शिरैवोपायः ६०

हे०--शिराव्यधस्य नियतत्वमाह--शिरैवेति ॥ ६० ॥

**वातादिधाम वा शृंगजलौकोऽलाबुभिः क्रमात् ॥**

स०--अथवा वातादिस्थानस्थितं रक्तं यथाक्रमं शृंगादिभिर्हरेत् ॥ ६१ ॥

प०--वातादयो दोषा धामावस्थानान्तरं यस्य रक्तस्य तद्वातादिधाम । तद्रक्तं क्रमाद्यथासंख्येन क्रमादिभिरसृङ्निर्हरणोपायैर्निर्हरेत् । तेन वातधामरक्तं पित्तधाम जलौकोभिः श्लेष्मधामालाबुना निर्हरेत् ॥ ६१ ॥

हे०--शृङ्गादीनां विषयान्तराण्याह--वातादीति ६१॥

**स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ॥**
**सतोदकंडूशोफस्तं सर्पिषोष्णेन सेचयेत् ६२ ॥**

स०--स्रुतरक्तस्य नरस्य शीतलैः प्रलेपादिभिस्तोदकंडूयुतः शोफो वा स्यात् । तं सर्पिषोष्णेन सेचयेत् । तं तादृशं शोफं घृतेनोष्णेन सेचयेदिति ॥ ६२ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां षड्विंशोऽध्यायः ॥ २६ ॥

प०--स्रुतं निर्गतमसृग् रक्तं यस्य तस्य स्रुतासृजः पुंसः शीतैः प्रदेहाद्यैरालेपपरिसेकप्रभृतिभिर्यो वातकोपतः वायुप्रकोपात् शोफः स्याद्भवेत् तं शोफं सर्पिषा घृतेनोष्णेन सेचयेत् । सह तोदकण्डूभ्यां यो वर्तते शोफस्तं तथाविधं सिञ्चेदिति भद्रम् ॥ ६२ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने षड्विंशोऽध्यायः ॥ २६ ॥

हे०--स्रुतरक्तस्य शीतोपचारातिशये दोषमाह--स्रुतासृज इति । उक्तदोषे प्रतीकारमाह---तमिति । संग्रहे तु सर्वासां च परं प्रमाणमष्टादशांगुलानि । तत्र चतुष्पंचषडंगुलानृजु योजयेत् । गजवाजिष्वपराः ताः सुकुमारास्तनुत्वचोऽल्पाशिरस्का बृहदधरकायाश्च स्त्रियो विपरीताः पुमांसार्द्धचंद्राकृतिपुरोवृत्ताश्च । तत्र बहुदोषेषु चिरोत्थितेषु च्यामयेषु पुमांसो योजयितव्याः । स्त्रियो विपरीतेषु जलौकसश्चार्द्रचर्माद्युपायैर्गृहीत्वा सुरभिपंकग-

र्मेण नवे घटे स्थापयेत् । शृङ्गाटककसेरुकशालूकशैवाल- मृणालवल्लूरमृत्स्नापुष्करबीजचूर्णं स्वादुशीतं स्वस्थं च तोयमन्नपानार्थे ताभ्यो दद्यात् । लालादिकोथपरीहारार्थ- मेव च त्र्यहात्त्र्यहात्पूर्वमन्नपानमपनीयान्यद्दद्यात् । पञ्चाहाच्च ाद्विध एव घटांतरे ताः सञ्चारयेदिति ॥ ६२ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने शस्त्रप्रकरणं नाम सामस्त्येन निरूपितम् ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

अनंतराऽतीताध्याये श्रृंगादीन् लोहितावसेचनोपा- ानुक्त्वा प्रच्छानेनैकदेशस्थेत्यादिना वाक्येन तेषां विषयो र्शितः। सिराव्यधस्य तु बहुवक्तव्यत्वात्पृथगध्यायो युक्त याह—

**थाऽतःसिराव्यधविधिमध्यायं व्याख्यास्यामः**

**स०**—सरत्याभी रक्तमिति सिरास्तासां व्यधस्तस्य धिस्तमध्यायं व्याख्यास्यामः । शेषं पूर्ववत् ॥ १ ॥

**प०**—अस्यारम्भेऽयं सम्बन्धः । असृग्व्यापि- राव्यधे हरेदिति प्रागुक्तमतोऽस्यारम्भः । व्य- ं व्यधः शिराणां व्यधः शिराव्यधः । तस्य धिरितिकर्तव्यता तमध्यायं व्याख्यास्यामः॥१॥

**हे०**—शिराव्यधविधिमध्यायं व्याख्यातुं प्रतिजानीते- ाति । तत्र संग्रहे तु बहवो हि रक्तावसेचनोपायाः भिहिताः तेषामन्येषां च विरेकादीनामुपक्रमाणां ाध्येष्वामयेषु शिराव्यधः प्रधानम् । अमुना हि ते ाः शोषमायांति केदारसेतुभेदेन शल्यादय इव तत्र ' शिराव्यधश्चिकित्सार्धं सम्पूर्णं वा चिकित्सितम् । तन्त्रे स्मृतो यद्वद्बस्तिःकायचिकित्सितम्॥ यथा रक्त- ष्ठानं विकाराणां विकारिणाम् । अन्यं न हि तथा दूष्य ं प्रथमं ततः॥''तत्राम्बु शारीरमाहारसारभूतं रसाख्य- कृतमविकृतेन तेजसा रंजितं रक्तमाहुरिति ॥ १ ॥

**ं लवणं किंचिदशीतोष्णमसंहतम् ।**
**द्गोपहेमाविशशलोहितलोहितम् ।**
**हेतं प्रभवेच्छुद्धं तनोस्तेनैव च स्थितिः २ ॥**

**स०**—लोहितं मधुरगुणं तथा किंचिल्लवणं तथाऽ- ष्णम् । नञ्शीषदर्थे । ईषच्छीतमीषदुष्णमसंहतं द्रवं शुद्धं स्यात् । संप्रति वर्णेन शुद्धलोहितलक्षणमाह। पद्मेत्यादि । इंद्रगोपः मृगनक्षत्रोत्पन्नः ।कीटकविशेषः । हेम कनकम् । अविर्मेषः शशस्तयोर्लोहितशब्देन रक्तवाचिना संबंधः । पद्मादीनां द्वंद्वः पद्मेंद्रगोपहेमाविश- शलोहितमिव लोहितं रक्तवर्णं यद्रक्तं तच्छुद्धं स्यात् । तच्च तनोः शरीरस्य प्रभव उत्पत्तिहेतुः । तेनैव रक्तेन च तनोः स्थितिः प्रबंधाविच्छेदलक्षणा । अनेकदृष्टां- तोपादानं च शुद्धरक्तस्याऽनेकवर्णदर्शनात् ॥ २ ॥

**प०**—शुद्धरक्तं मधुररसं तथा किञ्चिदीषल्लवणं तथा अशीतोष्णमशीतं नात्युष्णं साधारणं नृसिं- हरूपवत् उभयगुणस्वभावं सौम्याग्नेयप्रकृत्या । ततः असंहतं द्रवं रक्तं पद्मादिवर्णवर्णम् । पद्मं कमलम् । इन्द्रगोपः खद्योतः । हेम सुवर्णम् । अविरुरभ्रः । शशो तेनैव नाम्ना प्रसिद्धः मृग- विशेषः । अविश्च शशश्चाविशशम् । तस्य लोहितं रक्तं तद्वल्लोहितं वर्णतः । यल्लोहितं रक्तं तदेव लोहितं, प्रभवः तनोः शरीरस्य । प्रभवत्यस्मा- दिति प्रभवः । तेनैव लोहितेन तनोः स्थितिः स्यात् । अवस्थानं स्थितिः । तेन शरीरस्यानु- वर्तनं सम्पद्यते इति ॥ २ ॥

**हे०**—शुद्धरक्तस्य लक्षणमाह—मधुरमिति । असंहतं शुद्धरक्तस्यारोग्यहेतुत्वमाह—तनोरिति । संग्रहे तु तथा दूष्यं दोषमिति केचित् । उभयात्मकमन्ये । तच्चैवंविध- मेव विधिवदाहारविहाराभ्यासाद्विशुद्धं बलवर्णसुखायुषां योनिरिति ॥ २ ॥

**तत्पित्तश्लेष्मलैः प्रायो दूष्यते ॥ ३ ॥**

**स०**—तच्च रक्तं बाहुल्येन पित्तश्लेष्मलैर्दूष्यते । पित्तलैः क्षारोष्णतीक्ष्णादिभिः । श्लेष्मलैर्माषतिलादिभिः। तथा पुराकृताद्दैवादपि । शरत्कालस्वभावात्कदाचिद्वा- तलैर्दूष्यत इति प्रायोग्रहणम् ॥ ३ ॥

**प०**—तल्लोहितं रक्तं प्रायो भूयसा श्लेष्मलैराहा- रविहारौषधैर्दूष्यते दुष्टतां नीयते । प्रायोग्रहणात् कदाचिद्वातलैरपि दूष्यते । पित्तश्लेष्मलैरित्यत्र संघा- तमिति गृहीतैः पित्तलैः पित्तश्लेष्मलैरिति ॥ ३ ॥

**हे०**—रक्तस्य दुष्टिकारणमाह—तत्पित्तश्लेष्मलैरिति३॥

कुरुते ततः ।
विसर्पविद्रधिप्लीहगुल्माऽग्निसदनज्वरान् ॥
मुखनेत्रशिरोरोगमदतृड्लवणास्यताः ।
कुष्ठवाताऽस्रपित्तास्रकट्वम्लोद्गीरणभ्रमान् ॥
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रांताश्च ये गदाः।
सम्यक्साध्या न सिध्यंति ते हि रक्तप्रकोपजाः ४

स०—ततो दूषणात्कारणाद्विसर्पादीन् भ्रमांतान्कुरुते । तथा शीतोष्णादिभिरुपक्रांताश्च ये गदाः सम्यक्चिकित्सिताः साध्याः अपि रोगा ये न सिध्यंति ते च रक्तप्रकोपजाः । न केवलं विसर्पादय इति चार्थः । आदिशब्देन स्तंभवेदनादिपरिग्रहः ॥ ४ ॥

प०—ततोऽनन्तरं दुष्टं रक्तं विसर्पादीन् विकारान् कुरुते । अग्निसदनमग्निसादः । मुखादीनां रोगाणां यच्छब्देन सम्बन्धः। वातास्रं वातशोणितं रक्तास्रं रक्तपित्तम् । शीतोष्णैः स्निग्धरूक्षैः गुरुलघुभिर्मन्दतीक्ष्णैरुपक्रमैः सम्यङ्निवर्तितैर्यथाशास्त्रं प्रयुक्तैः वातश्लेष्मव्याधिलक्षणाभासाः साध्याः साध्यलक्षणोपेतत्वात् साधयितुं शक्या न सिध्यन्ति नोपशमं यान्ति ते च रक्तप्रकोपजा इति बोद्धव्याः । न केवलं विसर्पादयः पूर्वं निर्दिष्टाः ॥ ४ ॥

हे०—दुष्टरक्तस्य कार्यमाह—कुरुत इति । दुष्टरक्तस्य कार्यसामान्यलक्षणमाह—शीतोष्णेति । चकारद्वयकरणादुक्तेष्वनुक्तेषु चेदं लक्षणं ज्ञेयम् ॥ ४ ॥

तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम्॥५॥

स०—तेषु विसर्पादिषु रोगेषु रक्तमुल्बणं स्रावयितुं सिरां व्यधयेत् । अदंतत्वादत्र वृद्धेरभावः ॥ ५ ॥

प०—तेषु विसर्पादिषु रक्तमुद्रिक्तमुल्बणं स्रावयितुं रक्तनिर्हरणाय शिरां व्यधयेत् ॥ ५ ॥

हे०—दुष्टरक्तकार्यस्य प्रतीकारमाह—तेष्विति ॥ ५ ॥

न तूनषोडशाऽतीतसप्तत्यब्दस्रुतासृजाम्।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥
गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम्।
अतीसारोदरच्छर्दिपांडुसर्वांगशोफिनाम् ॥
स्नेहपीते प्रयुक्तेषु तथा पंचसु कर्मसु ।
नायंत्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम्
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ६

स०—ऊनषोडशवर्षादीनां सिरां न व्यधयेत् । स्नेहपीते पीतस्नेह इत्यर्थः । आहिताग्न्यादित्वात् परनिपातः । तथा पंचसु वमनादिषु कर्मसु विहितेषु सत्सु सिरां न व्यधयेत् । तथाऽयंत्रितामबद्धां सिरां न व्यधयेत् । न तिर्यङ् न चानुत्थितां नातिशीते नात्युष्णे नातिवाते न च मेघोदये सिरां व्यधयेत् । आत्ययिकाद्रोहिणीविषादिकादन्यत्र न व्यधयेत् । आत्ययिके तु रोगे शीतोष्णवृष्टीनां यथायथं प्रतीकारं विधाय सिरां मोक्षयेदेव ॥ ६ ॥

प०—ऊनाः षोडश अब्दा वर्षा येषामूनषोडशः । अतीताः सप्तत्यब्दा येषां तेऽतीतसप्तत्यब्दाः । स्रुतमसृक् पूर्वं शस्त्राभिघातादिना येषां ते स्रुतासृजः । तेषां शिरां न विध्येत् । तथाऽस्निग्धानामस्वेदितानामत्यर्थं स्वेदितानामनिलरोगिणां तथा गर्भिण्याः सूतिकायाः अजीर्णिनो रक्तपित्तिनां श्वासिनां कासिनां च तथातीसारिणामुदरिणां छर्दितानां पाण्डुरोगिणां सर्वाङ्गशोफिनां च स्नेहः पीतो यने तस्मिन् पुंसि तथा पञ्चसु कर्मसु तत्कालप्रणीतेषु वमनविरेचननिरूहणानुवासनशिरोविरेचनाख्येषु अयन्त्रयित्वा शिरां न विध्येत् । तथा तिर्यक् कृत्वा तथाऽनुच्छ्रितां नो शिरां विध्येत् । तथाऽतिशीतोष्णवाताभ्रेषु दिनेषु आत्ययिकं शिराव्यधसाध्यं व्याधिं वर्जयित्वा । नैष विरोधः आत्ययिके व्याधौ ॥ ६ ॥

हे०—ऊनषोडशाब्दादीनां शिराव्यधं निषेधति—न तूनेति । पञ्चकर्मसु वमनविरेचननिरूहानुवासननस्येषु वमनादौ स्नेहपाने यावत्तत्कृतदोषक्षोभनिवृत्तिस्तावन्निषेधः । अयंत्रितामकृतवक्ष्यमाणयंत्रणां, तिर्यक्तिर्यग्गताम्, अनुत्थिताम् अप्रकटां, संग्रहे तु तत्र स्नेहपीतादिषु सम्यग्विद्धा अपि शिरा न स्रवंत्यतिस्रवंति वा सम्यक् स्निग्धस्विन्नस्य पुनर्द्रवीभूता दोषाः शेषाः शोणितमनुप्रविष्टाः सम्यक् प्रच्यवन्ते न त्वेष निषेधो विषसंसृष्टोपसर्गात्ययिकव्याधिष्विति ॥ ६ ॥

शिरोनेत्रविकारेषु ललाटयां मोक्षयेत्सिराम् ।
अपांग्यामुपनास्यां[1] वा ॥ ७ ॥

[1] अपाङ्गया उपनास्या वा इति पाठः ।

स०—शिरोनयनविकारेषु ललाटस्थां सिरां मोक्षयेत् । ललाटे भवा ललाट्या । शरीरावयवाद्यत् । एवमपाङ्ग्या-पांगे भवां नासिकासमीपे भवां वा ॥ ७ ॥

प०—ललाटे भवा ललाटस्था एवमपाङ्ग्या नासासमीपोद्भवा उपनास्या भवेत् । ताः सर्वाः शिराः शिरोविकारेषु नेत्रविकारेषु च मोक्षयेत् मुञ्चेत् ॥ ७ ॥

हे०—शिरोरोगे नेत्ररोगे च वेध्यां शिरामाह—शिरोनेत्रविकारेष्विति । ललाटे भवा ललाटया "शरीरावयवाद्यत्" इति यत् । एवमपांग्या उपनास्याः कनीनिकाभवाः ॥ ७ ॥

**कर्णरोगेषु कर्णजाम् ॥ ८ ॥**

स०—कर्णामयेषु कर्णजां कर्णसमीपभवां सिरां विध्येत् ॥ ८ ॥

प०—कर्णव्याधिषु कर्णसमीपस्थां शिरां मुञ्चेत् ८

हे०—कर्णरोगेषु शिरा आह—कर्णरोगेष्विति ॥ ८ ॥

**नासारोगेषु नासाग्रे स्थिताम् ॥ ९ ॥**

स०—नासामयेषु नासाग्रे स्थितां विध्येत् ॥ ९ ॥

प०—नासारोगेषु नासाव्याधिषु नासाग्रस्थितां नासाप्रान्तस्थितां शिरां विध्येत् ॥ ९ ॥

हे०—नासारोगेषु शिरा आह—नासारोगेष्विति ॥ ९ ॥

**नासाललाटयोः । पीनसे ॥ १० ॥**

स०—पीनसे प्रतिश्याये नासाललाटयोः स्थितां सिरां विध्येत् ॥ १० ॥

प०—पीनसे प्रतिश्याये कदाचिन्नासास्थां कदाचिल्ललाटस्थां कदाचिदुभयस्थितामपि शिरां विध्येत् ॥ १० ॥

हे०—पीनसे शिरा आह—नासेति ॥ १० ॥

**मुखरोगेषु जिह्वौष्ठहनुतालुगाः ॥ ११ ॥**

स०—मुखरोगेषु जिह्वादिगाः सिरा विध्येत् ११ ॥

प०—मुखरोगेषु मुखविकारेषु जिह्वाश्रितास्तथौष्ठगास्तथा हनुगास्तालुगा वा तत्रस्थाः शिरा विध्येत् ॥ ११ ॥

हे०—मुखरोगेषु शिरा आह—मुखरोगेष्विति

**जत्रूर्ध्वं ग्रंथिषु ग्रीवाकर्णशंखशिरःश्रिताः ।**

स०—जत्रूर्ध्वं [illegible] ग्रीवाद्याश्रिताः सिरा विध्येत् ॥ १२ ॥

प०—जत्रुण ऊर्ध्वं ये ग्रन्थयस्तेषु ग्रन्थिषु [illegible] श्रिताः शङ्खाश्रिताः शिरआश्रिताः शिरां विध्[illegible]

हे०—जत्रूर्ध्वग्रन्थिषु शिरा आह—जत्रूर्ध्वमिति

**उरोऽपांगललाटस्था उन्मादे ॥ १३ ॥**

स०—उन्मादे उरःस्था अपांगस्था ललाटस्था विध्येत् ॥ १३ ॥

प०—उन्मादव्याधावुरस्था ललाटस्थाश्च विध्येत् ॥ १३ ॥

हे०—उन्मादे शिरा आह—उरोऽपांगेति ॥ १[illegible]

**ऽपस्मृतौ । हनुसंधौ समस्ते वा शिरा भ्रूमध्यगामिनी ॥**

स०—अपस्मारे हनुसंधौ स्थितां सिरां वि[illegible] समस्ते सर्वस्मिन् वा हनौ सिरां विध्येत् । भ्रूमध्यगामिनी भ्रूमध्यस्थां वाऽपस्मृतौ [illegible] वाशब्दोऽत्रानुक्तस्य योगः ॥ १४ ॥

प०—अपस्मृतावपस्मारे हनुसन्धिमध्यगाः विध्येत् । समस्ते वास्मिन् शिराव्यधस्य प्राङ्निर्दिष्टे सकलशिरोनेत्रादिके भ्रूमध्यग[illegible] या शिरा तां विध्येत् । भ्रुवोर्मध्यं भ्रूमध्यं गन्तुं शीलं यासां तास्तथाविधाः ॥ १४ ॥

हे०—अपस्मारे शिरा आह—अपस्मृताविति । शिरोरोगादिषु सामान्यतः शिरा आह—समस्त इति

**विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनांतरे १[illegible]**

स०—विद्रधौ पार्श्वशूले च पार्श्वस्थाः कक्ष[illegible]नांतरस्थाश्च सिरा विध्येत् ॥ १५ ॥

प०—विद्रधौ विकारे तथा पार्श्वशूले पा[illegible]क्षास्तनान्तरस्थाः शिरा व्यधयेत् ॥ १५ ॥

हे०—विद्रधिपार्श्वशूलयोः शिरा आह—विद्रधाविति ॥ १५ ॥

**तृतीयकेंऽसयोर्मध्ये ॥ १६ ॥**

स०—तृतीयके ज्वरेंऽसयोर्मध्ये स्कंधसंधौ स्थितां सिरां विध्येत् ॥ १६ ॥

प०—तृतीयके ज्वरेंऽसयोरुभयोर्मध्येऽन्तरे कण्ठसन्धिशिरामध्यगां मुञ्चेत् ॥ १६ ॥

हे०—तृतीयकज्वरे शिरा आह—तृतीयक इति ॥१६॥

**स्कंधस्याधश्चतुर्थके ॥ १७ ॥**

स०—चतुर्थके ज्वरे स्कंधस्याधोगतां सिरां विध्येत् ॥ १७ ॥

प०—चतुर्थके ज्वरे स्कन्धस्याधःस्थितानामन्यतरपार्श्वाश्रयाः शिरा विध्येत् ॥ १७ ॥

हे०—चतुर्थकज्वरे शिरा आह—स्कन्धस्येति ॥ १७॥

**प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यंगुले स्थिताम्।**

स०—प्रवाहिकायां शूलयुक्तायां श्रोणितः कट्या द्व्यंगुले स्थितां सिरां विध्येत् ॥ १८ ॥

प०—प्रवाहिकायामतीसारे उपद्रवभूतायां विसूच्यपरसंज्ञायां सशूलायां श्रोण्याः समन्ताद्द्व्यङ्गुले स्थितां शिरां मोक्षयेत् ॥ १८ ॥

हे०—सशूलप्रवाहिकायां शिरा आह-प्रवाहेति ॥१८॥

**शुक्रमेढ्रामये मेढ्रे ॥ १९ ॥**

स०—शुक्ररोगे मेढ्ररोगे च मेढ्रस्थितां सिरां विध्येत् ॥ १९ ॥

प०—शुक्रामये शुक्रव्यापादि मेढ्रामये निवृत्तोपदंशादिके मेढ्रे लिङ्गे स्थितां शिरां व्यधयेत् ॥ १९ ॥

हे०—शुक्ररोगे मेढ्ररोगे चाह-शुक्र इति ॥ १९ ॥

**ऊरुगां गलगंडयोः ॥ २० ॥**

स०—गलगंडयोश्चोभयोरूरुस्थां सिरां विध्येत् २०

प०—गलगण्डयोरुत्पन्ने व्याधौ ऊरुमूलसंस्थितां शिरां विध्येत् ॥ २० ॥

हे०—गलगण्डगण्डमालयोः शिरा आह—ऊरुगामिति । द्विवचनसामर्थ्याद्गण्डमालाग्रहणम् ॥ २० ॥

**गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरंगुले २१ ॥**

स०—गृध्रस्यां जानुनोऽधस्ताच्चतुरंगुल ऊर्ध्वं वा जानुनश्चतुरंगुले स्थितां सिरां विध्येत् ॥ २१ ॥

प०—गृध्रस्यां वातव्याधौ जानुनोः जानुसन्धेरधस्तात् अध ऊर्ध्वमुपरि वा चतुरङ्गुले शिरां व्यधयेत् ॥ २१ ॥

हे०—गृध्रस्यां शिरा आह—गृध्रस्यामिति ॥ २१ ॥

**इंद्रबस्तेरधोऽपच्यां द्व्यंगुले ॥ २२ ॥**

स०—अपचीसंज्ञे रोग इंद्रबस्तेरधो द्व्यंगुले सिरां विध्येत् । इंद्रबस्तिर्जंघांतरे वक्ष्यमाणः ॥ २२ ॥

प०—अपच्यां गण्डमालायामिंद्रबस्तेर्वक्ष्यमाणादधस्तात् द्व्यङ्गुले शिरां मोक्षयेत् ॥ २२ ॥

हे०—अपच्यां शिरा आह—इन्द्रबस्तेरिति । इन्द्रबस्तिर्जंघामध्ये मर्म ॥ २२ ॥

**चतुरंगुले । ऊर्ध्वं गुल्फस्य सक्थ्यर्तौ तथा क्रोष्टुकशीर्षके २३**

स०—सक्थिपीडायां गुल्फस्योर्ध्वं चतुरंगुले विध्येत्। ऊरुपर्वगवातरोगविशेष गुल्फस्योर्ध्वं चतुरंगुले विध्येत्।

प०—सक्थ्यर्तौ सक्थिमूले सक्थिपीडायां तथा क्रोष्टुकशीर्षके वातव्याधौ गुल्फस्योपरि चतुरङ्गुले शिरां विध्येत् ॥ २३ ॥

हे०—सक्थिशूले क्रोष्टुकशीर्षके च शिरा आह—चतुरंगुल इति ॥ २३ ॥

**पाददाहे खुडे हर्षे विपाद्यां वातकंटके । चिप्पे च द्व्यंगुले विध्येदुपरि क्षिप्रमर्मणः २४॥**

स०—पाददाहादिषु क्षिप्रमर्मण उपरि द्व्यंगुले विध्येत् ॥ २४ ॥

प०—पाददाहे वातव्याधौ खुडे वातशोणिते वातहर्षे विपाद्यां विपादिकायां वातकण्टके वातव्याधौ चिप्पेऽङ्गुलिरोगे क्षतरोगापरपर्याये एतेषु पादरोगेषु क्षिप्रमर्माणि उपरिष्टाद् द्व्यङ्गुले शिरां विध्येत् ॥ २४ ॥

हे०—पाददाहादिषु षट्सु शिरा आह—पाददाह इति । हर्षे पादहर्षे । चिप्पे नखरोगे क्षिप्रमंगुष्ठांगुलिमध्ये मर्म संग्रहे तु एतेनेतरसक्थिबाहू च व्याख्यातौ । विशे-

यस्तु वामबाह्वाभ्यंतरतो बाहुमध्ये प्लीहोदरे एवमेव च दक्षिणबाहौ यकृदाख्ये तथा कासश्वासयोरप्यादिशं-तीति ॥ २४ ॥

**गृध्रस्यामिव विश्वाच्याम् ॥ २५॥**

स०--विश्वाच्यां गृध्रस्यामिव सिरां विध्येत् । गृध्रस्यां जानुनोऽधस्तादिति ॥ २५ ॥

प०--शिरां विध्येत् गृध्रस्यामिव जानुनोऽधस्ता-च्चतुरङ्गुले ॥ २५ ॥

हे०--विश्वाच्यां शिरा आह--गृध्रस्यामिति । संग्रहे तु बाहुशोषावबाहुकयोरप्येक इति ॥ २५ ॥

**यथोक्तानामदर्शने ।**
**मर्महीने यथासन्ने देशेऽन्यां व्यधयेत् सिराम् २६**

स०--यथोक्तानां सिराणामदर्शने सति मर्मवर्जिते यथासन्ने स्थाने व्याधिवशादपरां विध्येत् ॥२६॥

प०--यथोक्तानां शिराणामदृश्यमानानामासा-मदर्शनेऽदृश्यत्वेऽतिप्रवृद्धेन व्याधिनाऽऽतुरस्य त्व-रायां समुपजातायां मर्महीने मर्मरहिते यथासन्न-देशे यो यो व्याधिरासन्नो देशस्तस्मिन् व्यध-येत् । अपरा अन्या उक्ताऽनुक्ता अपि शिरा व्यधयेत् ॥ २६ ॥

हे०--यथोक्तशिराणामदर्शने शिरांतरमाह--यथोक्ता-नामिति ॥ २६ ॥

**अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ।**
**कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजितः ॥**
**अग्नितापातपस्विन्नो जानूच्चासनसंस्थितः ।**
**मृदुपट्टात्तकेशांतो जानुस्थापितकूर्परः ॥**
**मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ।**
**दंतप्रपीडनोत्कासगंडाध्मानानि चाचरेत् २७॥**

स०--अथेत्यानंतर्ये । स्निग्धा तनुर्यस्य स स्निग्धतनुः । तथा सज्जानि प्रगुणान्युपकरणानि वस्त्रपीडाऽनपादकस्नेहगैरिकादीनि यस्य स सज्जो-पकरणः । तथा बली पुष्टः । तथा कृतं स्वस्त्ययनं बलिमंगलहोमादिकं यस्य स कृतस्व-स्त्ययनः । तथा स्निग्धरसयुक्तेनाऽन्नेन प्रतिभोजितः । तथाऽग्नितापश्चातपश्च ताभ्यां स्विन्नः । तथा जानु-तुल्यमुच्चमासनं तत्र संस्थितः समुपविष्टः । तथा मृदुना सुसूक्ष्मेण वस्त्रपट्टेनात्तो गृहीतो बद्धः केशांतो यस्य स एवम् । तथा जानुनि स्थापितं कूर्परं येन स एवम् । तथा मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्येऽतिशयेन पीडयेत् । तथा दंतप्रपीडनाद्याचरेत् ॥ २७ ॥

प०--अथशब्दो मङ्गलार्थो विज्ञेयः । स्निग्धा तनु-र्यस्य पुंसः स स्निग्धतनुः । सज्जानि संनि-हितानि सर्वाणि समस्तानि शिराव्यधचिकीर्षाका-लयोग्यानि उपकरणानि यस्य । तथा बली यः स प्राणो न दुर्बलः । कृतस्वस्त्ययनश्च ब्राह्मण-प्रयुक्ताभिराशीर्भिस्तथा स्निग्धेन मांसरसेन सहान्नं प्रतिभोजितः । वमनादेः कर्मणामङ्गत्वेन पूर्वं पश्चाद्वा यद्भोजनं भुज्यते तत्प्रतिभोजनशब्दवा-च्यम् । तथाग्नितापार्कतापाभ्यां स्विन्नः । तथा जानुवदुच्छ्रिते आसने स्थितः । तस्य मृदुना पट्टेन वस्त्रखण्डेनात्तो गृहीतः बद्धः केशान्तो यस्य । तथा जानुनोः स्थापिते निहिते कूर्परे येन स तथाविधमुष्टिभ्यामात्मीयाभ्यां वस्त्रगर्भाभ्यां मन्ये द्वे ग्रीवाश्रिते मर्मणी गाढं दृढं कृत्वातुरो यथास्वं निपीडयेत् । तथा दन्तानां निपीडनमुक्तम् । उत्कसनमूर्ध्वकसनम् । गण्डयोराध्मानं पूरणं चाचरेत् ॥ २७ ॥

हे०--शिराव्यधविधिमाह--अथेति । अल्पं स्निग्धं रसान्नं स्निग्धरसान्नप्रतिभुक् "सुप्रातिना मात्रार्थे" इत्यव्य-यीभावः । संग्रहे तु व्याधिबलसात्म्याद्यपेक्ष्य स्निग्धं जांगलरसं यवागूं वा पाययित्वा मुहूर्तमात्रमाश्वासितं पूर्वाह्णेऽपराह्णे वेति । कंठोर्ध्वशिराणां यन्त्रणमाह--मृदुप-ट्टात्तेति । पट्टो वस्त्रादिखंडम् ॥ २७ ॥

**पृष्ठतो यंत्रयेच्चैनं वस्त्रमावेष्टयन्नरः ।**
**कंधरायां परिक्षिप्य न्यस्यांतर्वामतर्जनीम् ।**
**एषोऽतर्मुखवर्जानां सिराणां यंत्रणे विधिः२८॥**

स०--एनं चातुरं पृष्ठदेशे वसनमावेष्टयन्नरो यंत्र-येत् । कथम् । कंधरायां ग्रीवायां वस्त्रं परिक्षिप्य तथाऽतर्मध्ये वामतर्जनीं न्यस्य । सिराणां यंत्रण एष विधिरेतद्विधानम् । किंभूतानाम् । अंतर्मुखवर्जा-नाम् ॥ २८ ॥

प०--एवमातुरः पुरुषः पृष्ठतो यन्त्रायतवस्त्रमा-वेष्टयन् परिवर्तयन् कन्धरायां कृकाटिकायां परि-

य परितः समन्ताद्दाक्षिप्य ग्रीवायामन्तर्वस्त्रं राया मध्ये वामहस्तप्रदेशिन्यौ न्यस्य क्षिप्त्वा ानबाधयमानो यन्त्रयेदेनम्। एष यो यन्त्रावि-र्दिष्टः स बहिर्मुखस्थितानां व्यधने नत्वन्तर्मुख-ानाम्। अन्तर्मुखस्थितानां व्यधने विधिरभ्यु-वेदग्रामजिह्वस्य ॥ २८ ॥

०—पुरतः स्थितो नरः वस्त्रमावेष्टयन् वस्त्रचलनं कन्धरायां परिक्षिप्य कन्धरां वेष्टयित्वा वामतर्जनीं र्तुः अन्तर्मुखनजानां मुखान्तर्गताशिरावर्जिता- ॥ २८ ॥

मध्यमयाऽङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया। येत् ॥ २९ ॥

प०—ततो यन्त्रणादनन्तरं वैद्योऽङ्गुष्ठविमुक्तया वाम-जया मध्यमयाङ्गुल्या ताडयेत् ॥ २९ ॥

०—ततो यन्त्रणादनन्तरं वैद्यो मध्यमया-ल्या अङ्गुष्ठावष्टब्धया विमुक्तया शिरां येत् ॥ २९ ॥

०—शिरोत्थापनविधिमाह—तत इति ॥ २९ ॥

उत्थितां ज्ञात्वा स्पर्शाङ्गुष्ठप्रपीडनैः।
यां लक्षयेन्मध्ये वामहस्तगृहीतया।
द्देशे सुनिष्कंपं सिरां तद्वच्च मोक्षयेत्॥३०॥

०—स्पर्शेन वाऽङ्गुष्ठपीडनैर्वोत्थितां ज्ञात्वा ऊर्ध्व-। सिरायां मध्ये न्यस्य फलोद्देशे सुनिष्कंपं वाम-गृहीतया कुठार्या सिरां लक्षयेत्। तद्वच्च मोक्षयेत्। लक्षयेत्तथेत्यर्थः ॥ ३० ॥

०—तदुत्थितां सस्पन्दनां स्पर्शात् स्पर्शनेन ाऽभिलक्ष्याथवाङ्गुष्ठपीडनैरुत्थितां ज्ञात्वा अ-ं कुठार्या शस्त्रेण शिरां मध्यप्रदेशे लक्षयेत् येत्। वामहस्तेन गृहीतया ऊर्ध्वदण्डया कुठा-लोद्देशे अवयवे सुनिष्कम्पं कृत्वा तद्वत्तेन तुल्यं मध्यमाङ्गुल्याऽङ्गुष्ठविमुक्तया शिरां क्षयेत् ॥ ३० ॥

०—शिरालक्षीकरणविधिमाह—उत्थितामिति। तां स्पन्दमानां स्पर्शेन ज्ञात्वा गंभीरां त्वङ्गुष्ठपीडनेन फलोद्देशे वामेन हस्तेन सुनिष्कंपं गृहीतया कुठार्या लक्षयेत्। शिरामोक्षणविधिमाह—तद्वदिति ॥३० ॥

अत्र " ततः " इति पाठः।

ताडयन् पीडयेच्चैनां विध्येद्व्रीहिमुखेन तु ३१

स०—व्रीहिमुखेन पुनस्ताडयन् विध्यंस्तथाऽङ्गुष्ठा-दिना पीडयेत्। एनां कुठारिकाविषयजां सिरां विध्येत्। ननु कुठारिकाविषये कथं व्रीहिवक्त्रस्य प्रयोगः। यतो-ऽपवादविषयं परिहृत्योत्सर्गः प्रवर्तते इति न्यायः। व्रीहि-वक्त्रस्यैव सामान्येन प्रयोगोऽनुज्ञातः। तथाचाह। व्रीहिवक्त्रं प्रयोज्यं वा तत्सिरोदरयोर्व्यध इति। कुठार्याः पुनर्विशेषोऽभिहितः। तयोर्ध्वदंडया विध्येदुपर्यस्थ्नां स्थितां सिरामिति। तस्मादयुक्तमेतत्। अत्रोच्यते ज्ञापकम्। कुठारिकाविषये व्रीहिवक्त्रस्य प्रयोगो न्याय्य एव। यदयमाचार्यो वक्ष्यति। मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकमिति। अनेन हि वचनेन ग्रंथकार इदं प्रत्यपादयत्। बहुमांसे शरीरावयवे व्रीहिमुखं व्रीहि-मात्रं निक्षेप्यम्। अन्यत्र त्वाशयानुरोधेन व्रीहिवक्त्रस्य प्रयोगः कार्य इति। अनेनैवाऽभिप्रायेण शास्त्रकृत प्रमाणपरिमाणाभ्यां संख्यायाश्चाऽपि विषये मात्रच् वक्तव्य इत्यनेन मात्रच् कृतः। अन्यथा तु स्पष्टं कृत्वा व्रीहिप्रमाणं व्रीह्यास्यं मांसले निक्षिपेद्व्यध इति पाठं कुर्यात्। तस्मादुक्तो व्रीहिमुखस्य कुठारिकाविषयेऽपि प्रयोग इति ॥ ३१ ॥

प०—अङ्गुष्ठोदरेण वा पीडयेत्। शिरां विमोक्षयेत् ॥ ३१ ॥

हे०—एनां कुठारिकामंगुष्ठगृहीतया मध्यमांगुल्या ताडयन्नंगुष्ठोदरेण वा पीडयन् शिरां मोक्षयेत् ॥३१ ॥

अंगुष्ठेनोन्नमय्याग्रे नासिकामुपनासिकाम्॥३२॥

स०—अग्रेऽग्रदेशे नासिकामंगुष्ठेनोन्नमय्योपनासि-कासन्नदेशस्थां सिरां विध्येत् ॥ ३२ ॥

प०—उपनासिकां नासासमीपस्थां शिरां व्रीहि-मुखेन शस्त्रेण विकाराङ्गुष्ठेन नासिकाग्रमुन्नम-य्याथ नासिकाग्रं नासिकान्तमुन्नमय्योत्थाप्य शिरां विध्येत् ॥ ३२ ॥

हे०—उपनासिकाया व्यधनमाह—अङ्गुष्ठेति॥३२॥

अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ३३॥

स०—आभिमुख्येनोन्नतोपरि तालुदेशे नीता तथा विशेषेण दंतैर्दष्टा अग्रे जिह्वाऽग्रजिह्वा येनासावभ्युन्न-

तविदष्टाग्रजिह्वस्तस्याधः प्रकृतत्वाज्जिह्वाया एवाधस्तात्त-दाश्रयां जिह्वाधःस्थां सिरां विध्येत् । तदित्यनेन जिह्वाधः परामृश्यते । जिह्वाध आश्रयो यस्याः सिरा-यास्ताम् ॥ ३३ ॥

प०–अभिमुखेनोन्नमितमुपरि तालुदेशे वितत्तं दष्टं विशेषेण दष्टं दन्तैरग्रं जिह्वाया येन तस्यो-न्नमितविदष्टजिह्वाग्रस्याधो जिह्वायास्तदाश्रयां जिह्वा-श्रयां शिरां विध्येत् ॥ ३३ ॥

हे०–जिह्वाधःशिराव्यधनमाह- अभ्युन्नतेति ॥ ३३ ॥

**यंत्रयेत्स्तनयोरूर्ध्वं ग्रीवाश्रितशिराव्यधे ॥ ३४॥**

स०–ग्रीवाश्रितानां सिराणां व्यधो ग्रीवाश्रितसि-राव्यधस्तस्मिन्स्तनयोरूर्ध्वं यंत्रयेद्वाससा वेष्टयेत् ॥ ३४॥

प०–यन्त्रयेदिति । स्तनयोरूर्ध्वमुपरि नरं यन्त्रयेत् वस्त्रेण वेष्टयेत् ग्रीवाश्रितशिरा विध्येत् ॥ ३४ ॥

हे०–ग्रीवाशिराणां यन्त्रणमाह–यन्त्रयेदिति ॥ ३४ ॥

**पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ।**
**कुक्षेरारभ्य मृदिते विध्येद्बद्धोर्ध्वपट्टके ॥ ३५॥**

स०–पाषाणगर्भौ हस्तौ यस्य तस्य नरस्य भुजे जानुस्थे जानुष्वेव स्थिते प्रसृते प्रसारिते । भुज इति वचनमतंत्रम् । द्वावपि हि भुजौ गृह्येते । कुक्षेरारभ्य यावद्ग्रीवा तावन्मृदिते मर्दिते । कस्मिन् । ग्रीवा-श्रितसिराव्यधार्हेऽगे । यथा बद्ध ऊर्ध्वं पट्टको यस्मिं-स्तस्मिन् विध्येत् । प्रकृतत्वात्सिराम् ॥ ३५ ॥

प०-ग्रीवाशिरासु व्यधननिमित्तं पाषाणगर्भहस्तस्य पाषाणगर्भौ हस्तौ यस्य तथाविधस्य जानुस्थे बाहौ प्रसृते प्रसारिते अनाकुञ्चिते शिरां विध्येत् । तथा कुक्षेरारभ्य मृदिते मर्दिते तस्मिन् भुजे बद्ध ऊर्ध्वं पट्टको यस्य तस्मिन् तथाविधे शिरां विध्येत् ॥ ३५ ॥

हे०–भुजशिराणां यन्त्रणमाह—पाषाणगर्भेति ३५॥

**विध्येद्धस्तशिरां बाहावनाकुंचितकूर्परे ।**
**बद्ध्वा सुखोपविष्टस्य मुष्टिमंगुष्ठगर्भिणीम् ।**
**ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरंगुले ॥३६॥**

स०–हस्तसिरां विध्येत् । कथम् । कुञ्चितकूर्परे । अनाकुंचितः प्रसारितः कू बाहोस्तस्मिन् । तथा सुखोपविष्टस्य सुखा तथा मुष्टिं बद्ध्वा । किंभूताम् । अंगुष्ठेन गा ष्ठगर्भिणीम् । गूढांगुष्ठां मुष्टिं बद्ध्वेत्यर्थः । स्थानादुपरि चतुरंगुलपरिमाणे स्थाने पट्टिक विध्येत् ॥ ३६ ॥

प०–हस्तशिरां विध्येत । कथम । बा ऽनाकुञ्चितकर्परे मुष्टिं बद्ध्वाऽङ्गुष्ठगर्भिणं ऽङ्गुष्ठं कृत्वाऽङ्गुलिभिस्तथा सुखोपविष्ट तथा व्यधनीयदेशस्योपरि चतुरङ्गुलैः प्रोतं बद्ध्वा हस्तशिरां विध्येत ॥ ३६ ॥

हे०–हस्तशिराणां यन्त्रणविधिमाह–विध्येदि

**विध्येदालंबमानस्य बाहुभ्यां पार्श्वयोः सि**

स०–बाहुभ्यामालंबमानस्याऽवलंब्य वस्तु भ्यामासज्जतः पार्श्वयोः सिरां विध्येत् ॥ ३७

हे०–पार्श्वशिराणां यन्त्रणमाह–विध्येदिति ।

**प्रहृष्टे मेहने ॥ ३८ ॥**

स०– प्रहृष्टे स्तब्धे मेढ्रे तदाश्रितां सिरां वि

प०–लिङ्गे प्रहृष्टे उन्नमिते मध्यशिरां वि

हे०–मेढ्रशिराणां यन्त्रणमाह–प्रहृष्ट इति ।

**जंघासिरां जानुन्यकुंचिते ॥**

स०– जानुन्यकुंचिते स्पष्टे स्थिते सति जंघा विध्येत् ॥ ३९ ॥

प०–जङ्घाशिरां विध्येत स्पष्टं जानुनि प्रसारिते सति ॥ ३९ ॥

हे०–जंघाशिराणां यन्त्रणमाह—जङ्घाशिरामि

**पादे तु सुस्थितेऽधस्ताज्जानुसंधेर्निपीडिते**
**गाढं कराभ्यामागुल्फं चरणे तस्य चापरे**
**द्वितीये कुंचिते किंचिदारूढे हस्तवत्ततः ।**
**बद्ध्वा विध्येत्सिराम् ॥ ४० ॥**

स०–सुखं कृत्वा सुस्थितदेशे स्थिते पादे पादसिरां विध्येत् । तथा जानुसंधेरधस्तादागुल्फं

यावत् कराभ्यां गाढं कृत्वा पीडिते सति तस्य चरणस्योपर्युपरिष्टाद् द्वितीये चरण ईषत्संकुचिते। तथा आरूढे तत्काले सति ततो हस्तवद्वेध्यस्थानादुपरि चतुरंगुले पट्टकं बद्ध्वा सिरां विध्येत् ॥ ४० ॥

प०-पादशिरां विध्येत् । पादे सुस्थिते स्थापिते सति जानुसन्धेरधस्तात् कराभ्यां गाढमत्यर्थं कृत्वानिपीडिते चरणे पादेऽङ्गुल्यां यावत् तस्य पादस्योपरि पृष्ठे द्वितीये चरणे पादे कुञ्चिते किञ्चित्सङ्कोचिते किञ्चिदारूढे ईषत्स्थापिते हस्तवद्बद्ध्वा वेध्यप्रदेशस्योपरि चतुरङ्गुले पूर्ववत् पट्टिकां बद्ध्वा शिरां विध्येत् ॥ ४० ॥

हे०-पादशिराणां यंत्रणमाह-**पाद** इति। हस्तवद्वेध्यप्रदेशादूर्ध्वं चतुरंगुले पट्टिकां बद्ध्वा ॥ ४० ॥

**इत्थमनुक्तेष्वपि कल्पयेत् ।**
**तेषु तेषु प्रदेशेषु तत्तद्यंत्रमुपायवित् ॥ ४१ ॥**

स०-इत्थमनेन प्रकारेण यंत्रलक्षणोद्देशेनानुक्तमपि यंत्र तत्तद्देशे माहात्म्यात् क्रियासौकर्यार्थं तेषु तेषु शरीरावयवेषु स्वबुद्ध्या तत्तद्यंत्र यथायोगं कल्पयेदुपायज्ञो वैद्यः ॥ ४१ ॥

प०-इत्थमनेन प्रकारेण ग्रन्थानुक्तेष्वपि तेषु प्रदेशेषु तत्तदनुक्तमपि बुद्ध्या कल्पयेत् यन्त्रमुपायविद्वैद्यः ॥ ४१ ॥

हे०-अनुक्तशिराणां यंत्रणमाह-**इत्थमिति** ॥ ४१ ॥

**मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।**
**यवार्धमस्थ्नामुपरि सिरां विध्यन् कुठारिकाम् ॥**

स०-मांसले शरीरावयवे व्रीहिमुखं शस्त्रं व्रीहिप्रमाणं निक्षिपेत् । अस्थ्नामुपरि यवार्धमात्रं कुठारिकां निक्षिपेत् । किं कुर्वन् । सिरां विध्यन् ॥ ४२ ॥

प०-मांसले व्रीह्यवकाशे व्रीह्यास्यं शस्त्रं व्रीहिमात्रकं व्रीहिप्रमाणं शिरां विध्यन् वैद्यो निक्षिपेत् । अस्थ्नामुपरि यवार्धं यथार्धप्रमाणं शिरां विध्यन् शस्त्रमाशु पातयेत् ॥ ४२ ॥

हे०-व्रीहिमुखस्य निखननमाह-**मांसल** इति । कुठारिकाया निखननमाह-**यवार्धमिति** ॥ ४२ ॥

**सम्यग्विद्धे स्रवेद्धारां यंत्रे मुक्ते तु न स्रवेत् ४**

स०-सम्यग्विद्धे सति धारां स्रवेत् । यंत्रे च मु सति न स्रवेत् ॥ ४३ ॥

प०-सम्यग्विद्धे वेधे कृते सति धारां स्रवेन् तथा यन्त्रे मुक्ते सति न स्रवेत् रक्तस्य व्यध हार्यम् । तथाच सङ्ग्रहे एकप्रकाभिहता धारा स्रवेदेकमुहूर्तं रुद्ध्वा तिष्ठेच्च सा सम्यक् विद्धे विदुः ॥ ४३ ॥

हे०-सम्यग्विद्धलक्षणमाह-**सम्यग्विद्ध** इति॥४३

**अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनैः ।**
**सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्यते ॥ ४४**

स०-अल्पं विद्धा सती सिरा स्तोकं कालं वहे दुर्विद्धाऽसम्यग्विद्धा तु सिरा सशब्दं स्रवेत । दुः कृच्छ्रेण धार्यते ॥ ४४ ॥

प०-दुर्विद्धा शिराऽल्पकालं वहति धारया च रक्तं वहति । तैलचूर्णितैः प्रयुक्तैः शिरामुखे अतिविद्धा शिरा शब्दं कृत्वा धारया रक्तं स्रवेत रक्तं दुःखं कृत्वा धार्यते बध्यते ॥ ४४ ॥

हे०-दुर्विद्धालक्षणमाह-**अल्पकालमिति** । चूर्णनैः तैलतुषारासेचेन । अतिविद्धालक्षणमाह-**सशब्दमिति** ॥ ४४ ॥

**भीमूर्छायंत्रशैथिल्यकुंठशस्त्रातितृप्तयः ।**
**क्षामत्ववेगितास्वेदा रक्तस्याऽस्रुतिहेतवः ४**

" सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते । शुद्धं विजानीयात्सम्यग्विस्रावितं च यत् ॥ " इदानीं सम्यग्यस्य सुविशुद्धस्य चैकेनैव वाक्येन लक्षणं वक्तुमाह- **स गित्यादि** । गत्वा निःसृत्य यदा सम्यग्रक्तं रक्तवर्णं भवति तदा शुद्धं विजानीयात्, सम्यग्विस्रावितपक्षे त्वर्थः । **सम्यग्गत्वेति** । सम्यक् प्रवर्तनं कृत्वा, यदा रुधिरं स्वयमेवावतिष्ठते अवस्थितिं करोति, तदा सम्यस्रावितं च तद्रक्तं विजानीयात् । चकारेणैतल्लक्षणद्वयं ल अन्ये तु सम्यग्गत्वेत्यादिश्लोकस्य व्याख्यानमन्यथा सार्धश्लोकेन व्याख्यानयन्ति, " नचातिवेगं नावेगं गत्वा विनिःसृतम् । विहाय दुष्टतां स्वेन रूपेण तिष्ठते ॥ प्रयत्नमनपेक्ष्यासृक् तदा शुद्धं विनिर्दिशेत् ". **निबन्धसंग्रहे ।**

स०–भीमूर्छादयो रक्तस्याऽस्रावहेतवः। भीर्भ-यम्। मूर्छा मोहस्तमसीव प्रवेशः। यंत्रशैथिल्यमगाढं कृत्वा यंत्रपीडनम्। तथा कुंठं भग्नं शस्त्रम्। तथाऽतितृप्तिरतिसौहित्यम्। क्षामत्वं निर्वलता। वेगिता संजातवेगत्वम्। अस्वेदः स्वेदायोगः। यतश्चैते रुधिर-स्रावनिहेतवोऽतो रक्तस्रुतावेते परिहार्याः॥ ४५॥

प०–सम्यग्विद्धानामपि शिराणां भीमूर्च्छा-द्यो रक्तस्यास्रुतौ हेतवः अवहनकारणानि। भीर्भ-यम्। मूर्च्छा मोहः तमसीव प्रवेशः। यन्त्र-शैथिल्यं न गाढं कृत्वा यन्त्रपीडनम्। कुण्ठं भग्नं शस्त्रम्। अतितृप्तिरतिसौहित्यम्। क्षामत्वं क्षामता। वेगिता सञ्जातवेगत्वम्। अस्वेदः दुःस्वि-न्नता॥ ४५॥

हे०–रक्तावरोधकारणान्याह–भीमूर्छेति। वेगिता वेगत्वादिः, अस्वेदो सम्यक्स्वेदः॥ ४५॥

**सम्यगस्रे स्रवति वेल्लव्योषनिशानतैः।**
**गारधूमलवणतैलैर्दिह्याच्छिरामुखम्॥४६॥**

स०–असम्यगस्रे स्रवति वेल्लादिभिः सिरावदनं प्रलेपयेत्॥ ४६॥

प०–असम्यगस्रे असम्यक् कृत्वा अस्रे रक्ते स्रवति निर्गच्छति सति वेल्लादिभिः शिरामुखं लिम्पेत्। एवं साधु वहति। वेल्लं विडङ्गम्। व्योषं त्र्यूषणम्। निशा हरिद्रा। नतं तगरम्। अगारधूमो गृहधूमः। लवणं सैन्धवम्। तैलं तिलोद्भवम्॥ ४६॥

हे०–सम्यक्स्रावार्थमौषधमाह–असम्यगस्र इति ४६

**सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च॥४७॥**

स०–सम्यक्प्रवृत्ते रक्ते सति सिरामुखं कोष्णाभ्यां तैललवणाभ्यां दिह्यात् लेपयेत्॥ ४७॥

प०–सम्यक्प्रवृत्ते रक्ते कोष्णेन तैलेन लवणयुतेन शिरां लिम्पेत्॥ ४७॥

हे०–सम्यक्स्रावनिर्वाहार्थमौषधमाह–सम्यक्प्रवृत्त इत्यादिरसानुपपद्यते॥ ४७॥

**स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ४८॥**

स०–यथा रागपीतिका मिश्रीभूतात् कुसुंभादग्रे पूर्वं पीतिका स्रवति तथा दुष्टादुष्टरक्तादेकलोलीभूतादग्रे पूर्वं दुष्टास्रं स्रवति॥ ४८॥

प०–दुष्टादुष्टरक्तादेव लोलीभूतादग्रे प्रथमं दुष्टास्रं दुष्टशोणितं स्रवति निर्याति। यथा रागपीतिकामिश्रीभूतात् कुसुम्भादग्रे पीतिका स्रवति॥४८॥

हे०–स्वभावाद् दुष्टास्रमेवाग्रे शिराः स्रवन्तीत्याह–अग्र इति॥ ४८॥

अग्रग्रहणात्पश्चाददुष्टमपि रक्तमवश्यं स्रवतीत्याशंक्येदमाह–

**सम्यक्स्रुत्य स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत्।**

स०–यथावत्प्रस्रुत्य स्वयं यत्नेन विना यत्तिष्ठेन्न स्रवेत् शुद्धं तदिति नाहरेन्न स्रावयेत्। जीवितहेतुत्वात्॥ ४९॥

प०–सम्यक् स्रुत्वा प्रस्रुत्य रक्तं स्वयं तिष्ठेत् न वहेत्। शुद्धं तदेवं ज्ञात्वा नाहरेत् न स्रावयेत् प्राणायतनत्वाद्रक्तस्य॥ ४९॥

हे०–सम्यक्स्रुत्वा यत्स्वयं स्थितं रक्तं तच्छुद्धत्वान्नाहरेदित्याह–सम्यक्स्रुत्येति॥ ४९॥

**यंत्रं विमुच्य मूर्छायां वीजिते व्यजनैः पुनः।**
**स्रावयेन्मूर्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ५०॥**

मूर्छायां सत्यां यंत्रं विमुच्य व्यजनैर्वीजिते समाश्वस्ते नरे सति पुनरस्रं स्रावयेत्। पुनर्मूर्छति त्वातुरेऽशुद्धमपि रक्तं तस्मिन्नहनि न स्रावयेत्। अपरेद्युस्त्र्यहेऽपि वा स्रावयेत्॥ ५०॥

प०–यस्य स्रवति रक्ते मूर्च्छा जायते तस्यां समुपजातायां तस्य विमुच्य यन्त्रं व्यजनैर्वीजिते व्यजनवायुताना मूर्च्छामुपशम्य पुनः रक्तं स्रावयेत्। रक्तं पुनर्भूयो मूर्छति सति पुंस्यपरेद्युरन्यस्मिन् त्र्यहे वा गते रक्तं स्रावयेत्॥ ५०॥

हे०–मूर्छायां प्रतीकारमाह–यन्त्रमिति। पुनर्मूर्छायां तदहर्न स्रावयेत्॥ ५०॥

**वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ५१**

स०–वातात् श्यावादिलक्षणं रक्तं स्यात्॥५१॥

प०—वाताच्छ्यावारुणादियुक्तं सम्भवति । श्यावं श्यावबर्णम् । अरुणं लोहितवर्णम् । रूक्षमस्निग्धम् । वेगस्रावि वेगेन निर्याति । अच्छं तनु फेनिलम् ॥ ५१ ॥

हे०—वातदुष्टरक्तस्य लक्षणमाह—वातादिति ॥५१ ॥

**पित्तात्पीतासितं विस्रमस्कंद्यौष्ण्यात्सचंद्रकम् ।**

स०—पित्तात् पीतादिलक्षणमस्रं स्यात् । अस्कंदत्स्त्यानमुष्णत्वात्सचंद्रकं च ॥ ५२ ॥

प०—पित्तात् पतासितमसृक् पीतं कृष्णं वा । विस्रं विगन्धम् । उष्णोदकमस्कन्दि न स्त्यानतां याति । सचान्द्रिकं मयूरपिच्छवर्णम् ॥ ५२ ॥

हे०—पित्तदुष्टरक्तस्य लक्षणमाह—पित्तादिति । औष्ण्यादस्कंदि घनीभावरहितम् ॥ ५२ ॥

**कफात् स्निग्धमसृक्पांडु तंतुमत्पिच्छिलं घनम् ॥**

स०—कफात् स्निग्धादिलक्षणमसृक् स्यात् ॥ ५३ ॥

प०—कफादसृक् स्निग्धं,पाण्डु पाण्डुवर्णं,तन्तुमत् तन्तुयुक्तम् । पिच्छिलं विशदविपरीतम् । घनं सांद्रम् ॥ ५३ ॥

हे०—कफदुष्टरक्तस्य लक्षणमाह—कफादिति ॥५३॥

**संसृष्टलिंगं संसर्गात् ॥ ५४ ॥**

स०—संसर्गाद्दोषाणां संसृष्टलिंगं रक्तं स्यात् ५४॥

प०—संसर्गाद्दोषद्वयात् संसृष्टलिङ्गं मिश्रलक्षणमसृक् भवति । द्विदोषलिङ्गमिति यावत् ॥ ५४ ॥

हे०—द्वन्द्वदुष्टरक्तस्य लक्षणमाह—संसृष्टलिंगमिति ॥ ५४ ॥

**त्रिदोषं मलिनाविलम् ॥ ५५ ॥**

स०—त्रिदोषं रक्तं मलिनं कलुषं तथाऽऽविलं घनं च । एतच्च दोषत्रयसंसर्गलक्षणादधिकं लक्षणं मंतव्यम् । नचैतावदेव त्रिदोषलक्षणं मंतव्यम् ॥५५॥

प०—दोषत्रयसंसृष्टं यद्रक्तं तन्मलिनमनिर्मलं तथाऽऽविलं कलुषं भवति ॥ ५५ ॥

हे०—त्रिदोषदुष्टरक्तस्य लक्षणमाह—त्रिदोषमिति । मलिनं नीलम् । आविलं कलुषम् । संग्रहे तु कषायरसं लोहगन्धि शीतं च रक्तं च वातात् । गृहधूमांजनोदककृष्णं हरितं मत्स्यगंधिकटुत्वान्मक्षिकानिष्टं गोमूत्राभं च पित्तात् । कोविदारपुष्पगैरिकोदकपांडुशीतं स्कंदि व्रणद्वारावसादिलवणरसं वसागंधि च कफात् । कांस्यनीलं दुर्गंधि च सन्निपातादिति ॥ ५५ ॥

**अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात्स्रावयेत्परम् ।**

स०—अशुद्धमस्रं बलिनोऽपि किं पुनरबलिनः प्रस्थात्परमधिकं न स्रावयेत् ॥ ५६ ॥

प०—बलिनः पुंसः अशुद्धौ सत्यां प्रस्थादधिकमस्रं रक्तं न स्रावयेत् न हरेत् ॥ ५६ ॥

हे०—स्रावप्रमाणमाह—अशुद्धाविति । किं पुनः शुद्धौ बलिनोऽपि किंपुनरबलस्य प्रस्थोऽर्द्धत्रयोदशपलः ५६

कस्मादित्याह—

**अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः ॥**

स०—अतिस्रावे हि रक्तस्य मृत्युर्भवेत् अथवा वातरोगाश्च कृच्छ्राः स्युः ॥ ५७ ॥

प०—यस्मादतिस्रुतौ अत्यर्थनिर्हरणेन रक्तस्य मृत्युर्मरणं स्याद्भवेत् । अथवा दारुणकृच्छ्रा असाध्याश्चलामया वातरोगाः स्युः ॥ ५७ ॥

**तत्राऽभ्यंगरसक्षीररक्तपानानि भेषजम् ॥ ५८ ॥**

स०—तत्र रक्तातिस्रुतावभ्यंगादीनि भेषजम् ५८

प०—तत्रातिस्रुतौ रक्तस्याभ्यङ्गो घृतादिभिर्भेषजं सक्षीरपानं तथा हरिणाजोरभ्रादीनां शिरां बद्ध्वा रुधिरपानं भेषजमत्र ॥ ५८ ॥

हे०—अतिस्रावे भेषजमाह—तत्रेति ॥ ५८ ॥

**स्रुते रक्ते शनैर्यंत्रमपनीय हिमांबुना ।**
**प्रक्षाल्य तैलप्लोतार्क्तं बंधनीयं सिरामुखम् ॥५९॥**

स०—स्रुते रक्ते सति यंत्रं शनैर्विमुच्य मंदं मंदमपनीय सिरामुखं शीतोदकेन प्रक्षाल्य तैलप्लोतार्क्तं सद्बंधनीयम् ॥ ५९ ॥

प०—स्रुते रक्ते निर्गते शोणिते शनैर्मन्दं कृत्वा यन्त्रमपनीय निवार्य हिमाम्बुना शीतपानीयेन प्रक्षाल्य रक्तमपनीय शिरामुखं तैलप्लोतार्क्तं तैलयुक्तेन प्लोतेनावगृहीतं कृत्वा पश्चाद्बन्धनीयं बन्धेन योजनीयम् ॥ ५९ ॥

हे०–स्रुतरक्तस्यानंतरकृत्यमाह—स्रुत इति । प्रोक्तं चन्द्रनादिकम् ॥ ५९ ॥

**अशुद्धं स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ॥ ६० ॥**

स०–अशुद्धं वातादिदुष्टरुधिरलक्षणाद्दुष्टं ज्ञात्वा भूयः पुनः स्रावयेत् । कदा सायमपराह्णे तस्मिन् दिवसे । अथवाऽपरेऽह्नि द्वितीये दिवसे ॥ ६० ॥

प०–अशुद्धौ सत्यां रक्तस्य भूयः पुनरपि सायमपराह्णे स्रावयेत् । अपरे वाह्नि द्वितीयस्मिन् दिवसे स्रावयेत् ॥ ६० ॥

हे०–प्रथमस्रावेणासम्यक्शुद्धौ पुनः स्रावकालमाह–अशुद्धमिति ॥ ६० ॥

**स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम् ॥ ६१ ॥**

स०–अथवा स्नेहोपस्कृतो भावितो देहो यस्य तथाविधस्य भृशं दूषितमतिशयेन दुष्टं रक्तं पक्षादूर्ध्वं पुनः स्रावयेत् । एवमशुद्धं रक्तं यथायोगं सायमह्न्यपरे पक्षादूर्ध्वं वा प्रस्थपरिमाणमेव स्रावयेन्न ततोऽधिकमिति रक्तस्रुतौ ब्रूमः । प्रस्थपरिमाणं च तंत्रांतरे गदितम् । वमने च विरेके च रक्तातीसारयोरपि । सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिण इति ॥ ६१ ॥

प०–स्नेहेनोपस्कृतस्य देहस्य संस्कृतशरीरस्य पुंसः भृशदूषितमत्यर्थं दुष्टं रक्तं पक्षादूर्ध्वमनन्तरं पुनः स्रावयेत् ॥ ६१ ॥

हे०–भृशदूषितं तु पुनः स्नेहयित्वा पक्षात्स्रावयेत् ॥ ६१ ॥

किंचिच्छेषं दुष्टरक्तं स्थापयेदुत सर्वं स्रावयेदिति संशयापनोदार्थमिदमाह–

**किंचिद्धि शेषे दुष्टास्रे नैव रोगोऽतिवर्तते ।**
**सशेषमप्यतो धार्यं न चातिस्रुतिमाचरेत् ॥ ६२ ॥**

स०–यस्मात्किंचिच्छेषे दुष्टे रक्ते नैव रोगो दुष्टरक्तोद्भवो व्याधिरतिवर्तते क्रियापथमतिक्रम्य मार्गांतरमसौ नासादयति । अतो दुष्टमपि रक्तं सशेषं धार्यम् । न दुष्टरक्तस्याऽतिस्रुतिमाचरेत् प्राणायतनत्वात् । सुश्रुतोऽप्यध्यगीष्ट–रक्तं सशेषदोषं तु कुर्यादपि विचक्षणः । नचातिप्रस्रुतं कुर्याच्छेषं संशमनैर्जयेदिति ॥ ६२ ॥

प०–हि यस्मादर्थे । यस्मात् किञ्चिच्छेषे दुष्टास्रे नैव रोगो दुष्टरक्तोद्भवो व्याधिरतिवर्तते । क्रियापथमतिक्रम्य मार्गान्तरमसौ नासादयत्यतो दुष्टमपि रक्तं सशेषं न स्यात् स्रुतिमाचरेत् । तेनैः तदपि स्रुतं न कुर्यात् । प्राणायतनत्वात् । तथाच सुश्रुतः । "रक्तं सशेषदोषं तु कुर्यादपि विचक्षणः नचातिप्रस्रुतं कुर्याच्छेषं संशमनैर्जयेत् ॥ सशेषदुष्टरुधिरे न व्याधिरभिवर्तते । तस्मात्सशेषं स्थातव्यं न हि कुर्यादतिक्रियाम्" ॥ ६२ ॥

हे०–दुष्टेऽप्यनेनैव क्रमेण स्रुतिः कार्या न त्वतिस्रुतिरित्याह—किञ्चिदिति । अतिवर्तते बाधते ॥ ६२ ॥

अथ किंचिच्छेषं रक्तमुपेक्षणीयमुत प्रतिक्रिया कापि कार्येत्याह–

**हरेच्छृंगादिभिः शेषम् ॥ ६३ ॥**

स०–स्रुतशेषं दुष्टरक्तं शृंगतुंबघटिकादिभिर्हरेन्न तु सिरया ॥ ६३ ॥

प०–स्रुतशेषं दुष्टं रुधिरं हरेत् स्रावयेत् । शृङ्गादिभिः शृङ्गतुम्बजलौकप्रभृतिभिः ॥ ६३ ॥

हे०–शिराव्यधेऽतिस्रुतिशंकायां शृङ्गादिभिर्हरेदित्याह–हरेदिति ॥ ६३ ॥

**प्रसादमथवा नयेत् ।**
**शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः ॥**
**दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ॥ ६४ ॥**

स०–अथवा शीतोपचारेण पित्तरक्तक्रियया शुद्ध्या वमनविरेचनादिरूपया विशोषणेन लंघनरूपेण तद् दुष्टं रक्तमनुद्रिक्तमेव प्रसादयेत्कलुषतां परित्यज्य तस्य प्रसन्नत्वमभ्युपपादयेन्न तु केवलं स्रुतशेषं रुधिरं शीतोपचारेण प्रसादयेत् । यावदनुद्रिक्तमप्रवृद्धं दुष्टं रुधिरमेवमनेनैव शीतोपचारादिना प्रसादं नयेन्न तु तन्निर्हरणे सिराव्यधादिना यतनीयमनुद्रिक्तरक्तनिर्हरणस्य सापायत्वात् ॥ ६४ ॥

१ "अशुद्धौ" इति पाठः ।

प०–अथवा शीतोपचारेण शीतप्रसेकप्रदेहादिना पित्तास्रक्रियया रक्तपित्तचिकित्सया स्निग्धमधुरानुपानेन भेषजादिकया शुद्ध्या वमनविरेकरूपया विशोषणैरुपवासैः प्रसादं नयेत प्रस्कन्नत्वमापादयेत् । दुष्टरक्तमनुद्रिक्तमेव प्रसादयेत् । अनुद्रिक्तमप्रवृद्धं दुष्टरुधिरमेवमेव शीतोपचारादिना प्रसादमानयेत् । न तद्रक्तनिर्हरणोपायैः शिराव्यधादिभिर्निर्हरेत् ॥ ६४ ॥

हे०–शृङ्गादिभिरप्यतिस्रुतिशंकायां शमयेदित्याह–प्रसादमिति । पित्तास्रक्रिया रक्तपित्तचिकित्सा । अकृतशिराव्यधस्याप्येतदेव रक्तप्रसादनमित्याह–दुष्टं रक्तमिति । अनुद्रिक्तम् उद्रेकाभावात्स्रावायोग्यम् ॥ ६४ ॥

**रक्ते त्वतिष्ठति क्षिप्रं स्तंभनीमाचरेत्क्रियाम् ६५॥**

स०–रक्ते त्वतिष्ठति स्थितिमलभमाने त्वरितमेव स्तंभनीं क्रियां वक्ष्यमाणां कुर्यात् रक्तस्य प्राणायतनत्वात् ॥ ६५ ॥

प०–अतिष्ठति रक्ते सति स्थितिमलभमाने क्षिप्रं शीघ्रं स्तम्भनीं क्रियां स्तम्भनजननीं चिकित्सामाचरेत् कुर्यात् ॥ ६५ ॥

हे०–अतिस्रावे स्तम्भनमाह–रक्त इति ॥ ६५ ॥

तदेतत्स्तंभनविशेषमाह–

**रोध्रप्रियंगुपत्तंगमाषयष्ट्याह्वगैरिकैः ।**
**मृत्कपालांजनक्षौममषीक्षीरित्वगंकुरैः ॥**
**विचूर्णयेद् व्रणमुखं पद्मकादिहिमं पिबेत् ।**
**तामेव वा सिरां विध्येद्व्यधात्तस्मादनंतरम् ।**
**सिरामुखं च त्वरितं दहेत्तप्तशलाकया ॥ ६६ ॥**

स०–रोध्रादिभिः सिराव्रणमुखं विचूर्णयेत् । पद्मकादिहिमं शीतकषायं पिबेत् । तामेव प्राग्विद्धां सिरां तस्मात् प्राग्व्यधादनंतरमव्यवहितं विध्येत् । अथवा सिराद्वारं क्षिप्रं कृत्वाऽग्निनोपतप्तया शलाकया दहेत् ॥ ६६ ॥

प०–रोध्रादिभिश्चूर्णीकृतैः व्रणमुखं विचूर्णयेत् । पद्मकादिगणहिमं शीतं कषायं पिबेत् । स्तम्भनाय । रोध्रः पट्टिकारोध्रः । प्रियंगुर्गन्धप्रियंगुः । पतङ्गः पट्टरङ्गः । माषाः शिम्बिधान्यम् । यष्ट्याह्वं मधुयष्टी । अञ्जनं रसाञ्जनम् । क्षीरिवृक्षाणां वटादीनां त्वचोऽङ्कुरादिश्च । शिरामुखं वा त्वरितं दहेत् । तच्छलाकया तामेव वा शिरां प्राग्विद्धां तस्मात्तत: प्राक्व्यधादनन्तरमव्यवहितं विध्येत् । सर्वथात्रावतिष्ठमाने शिराद्वारं त्वरितं कृत्वा अग्निना प्रतप्तया शलाकया दहेत् संकोचयितुं शिराम् ॥ ६६ ।

हे०–स्तम्भनविशेषमाह–रोध्रप्रियंग्विति । मृत्कपाल खर्परं, क्षौममषी वस्त्रभस्म विचूर्णयेत् चूर्णं विकिरेत् पद्मकादिहिमं पद्मकादिगणस्य शीतकषायं, संग्रहे तु अतिष्ठति तु रक्ते शिरामुखं धातुचूर्णैरवचूर्ण्याङ्गुल्यग्रेण पीडयेत् शाल्मल्युपोदकापिण्डं पिच्छां वा व्रणमुखे दत्त्वा गाढं बध्नीयात् । मधूच्छिष्टप्रलिप्तं वा पट्टकं शीताम्बुना व सिञ्चेत् । शीतमधुरकषायान्नपानैः सेकप्रदेहप्रवातवेश्म भिर्वा स्कंदनायोपचरेत् । पद्मकादिक्वाथं शर्करामधुरं क्षीरमिक्षुरसमेणहरिणाजोरभ्रमहिषवराहाणामन्यत मस्य वा सिरां विद्ध्वा रुधिरमामं घृतभृष्टं वा पा दद्यात् । तेनैव वा दर्भपादमृदितेनानुवासयेत् । स्निग्धैः यूषरसैर्भोजयेत् । सर्वथा चानवतिष्ठमाने पाचनाय क्षा दद्यात् । न च क्षणमप्युपेक्षेत । क्षीणरक्तस्य हि वायुर्म र्माण्युपगृह्य मूर्छासंज्ञानाशशिरःकंपभ्रममन्यास्तंभापतानक हनुभ्रंशहिध्मापाण्डुत्वबाधिर्यधातुक्षयाक्षेपकादीन्करोति म रणं वा । "प्राणाः प्राणभृतां रक्तं तत्क्षयात्क्षीयते नरः वर्द्धते वानिलस्तस्माद्युक्त्या बृंहणमाचरेत् ॥" दुर्व्यधाति व्यधकुट्टिततिर्यग्व्यधादेर्व्यधदोषो द्रवापदो याः स्युस्त यथास्वं साधयेदिति ॥ ६६ ॥

रक्तस्य स्रवणादनंतरं यद्विधेयं तदाह–

**उन्मार्गगा यंत्रनिपीडनेन**
**स्वस्थानमायांति पुनर्न यावत् ।**
**दोषाः प्रदुष्टा रुधिरं प्रपन्ना-**
**स्तावद्धिताहारविहारभाक्स्यात् ॥६७**

स०–यंत्रनिपीडनेनोन्मार्गगाः स्वमार्गमुत्सृ मार्गांतरसमाश्रयणेनोत्पथं प्रतिपन्ना दोषाः किंभूताः । प्रदुष्टाः । तथाविधं रक्तं प्राप्ताः पुनर्या त्स्वाश्रयं न प्रतिपद्यंते तावद्धिताहारविहारभाक् स्यात् तावाहारविहारौ भजेत् । भजो ण्विरिति ण्विः इंद्रवज्रा वृत्तम् ॥ ६७ ॥

प०--रक्तनिर्पीडनेन दोषा वातपित्तश्लेष्माणो [illegible] उन्मार्गगाः स्वमार्गमुल्लंघ्य मार्गान्तरसमाश्रये- [illegible]न्यथा रुधिरं प्रतिपन्नास्ते पुनः यावत् स्वस्थानं नायान्ति न प्रतिपद्यन्ते तावद्धिताहारविहारो भवेत्। कायवाङ्मनसां चेष्टाविहार इति संज्ञिताः ॥ ६७ ॥

हे०--स्रुतरक्तस्य पथ्यनियमकालावधिमाह--उन्मार्ग- गेति ॥ ६७ ॥

नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितास्र-
मग्निर्विशेषादिति रक्षणीयः ॥ ६८ ॥

स०--रक्ते स्राविते़ऽन्नपानं नात्युष्णशीतं हितम् । अत्युष्णं ह्यन्नपानं रक्तं प्रदूषयेत् । अतिशीतं त्वग्निं [illegible]सादयेत् । तथा लघु स्वभावतो मात्रादिना च । दीप- [illegible] संस्कारादिना । कुत एवमन्नपानं हितमित्याह । [illegible]स्मात्तस्मिन् काले शरीरमनवस्थितं चलितवृत्ति [illegible] यस्य शरीरस्य तदेवंभूतं भवति । तत्राऽसृक् [illegible]रीरस्याऽऽधारो रक्तस्य च पित्तं पित्तस्य च वह्निः । [illegible]था च वक्ष्यति । पित्तं वह्निरिति । तस्माद्विशेषेण [illegible] [illegible] वह्निर्नात्युष्णशीतादिनाऽऽहारविहारेण [illegible]क्षितव्यः ॥ ६८ ॥

प०--रक्तेऽपनीते निर्हृते स्राविते़ऽन्नपानं नात्यु- [illegible]ं नातिशीतं हितम् । अत्युष्णं ह्यन्नपानं रक्तं प्रदु- [illegible]येत् । शीतं त्वग्निं सादयेत् । तथा लघु सर्वथा [illegible]भावसंस्कारमात्रादिभिः तथा दीपनीयमग्निस- [illegible]क्षणं यस्मात्तस्मिन् काले शरीरमनवस्थितं रक्तं [illegible]लितवृत्तिशोणितं स्यात् । तच्च पित्तस्याश्रयः । तं च वह्निरतोऽस्मात्कारणात् विशेषात्कारणा- [illegible]तरेण प्रकारेण रक्षणीयः पालनीयः ॥ ६८ ॥

हे०--पथ्यमाह--नात्युष्णशीतमिति । उक्ते पथ्ये [illegible]माह--तदा शरीरमिति ।इति अतो हेतोः ॥६८॥

[illegible]सिराव्यधस्य पुरुषस्य लक्षणमंतरेणोन्मार्गगा- [illegible]ां दोषाणां स्वस्थानप्रतिपत्तौ कालो नावगम्यते । [illegible] निर्हृतदुष्टरक्तः पुरुषो लक्षणं विना ज्ञायत इति [illegible] परिज्ञानार्थमाह--

प्रसन्नवर्णेंद्रियमिंद्रियार्था-
निच्छंतमव्याहतपक्तृवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं
विशुद्धरक्तं पुरुषं वदंति ॥ ६९ ॥

स०--वर्णश्चेंद्रियाणि च वर्णेन्द्रियाणि प्रसन्नानि वर्णेन्द्रियाणि यस्य तं प्रसन्नवर्णेन्द्रियम् । तथेंद्रियार्थान् शब्दादीन् स्वभावाभिप्रेतानिच्छंतमभिलषंतम् । तथा पक्तुर्वेगः सामर्थ्यम् । अव्याहतोऽनभिभूतः पक्तृवेगो यस्य तमव्याहतपक्तृवेगमविनष्टपचनवेगम् । तथा सुखान्वितमारोग्ययुक्तं प्रकृतिमापन्नम् । पुष्टिबलाभ्यां युक्तम् । एवंविधं विशुद्धरक्तं पुरुषं वदन्तीति शरीरस्य लक्षणमुक्तम् । मधुरं लवणमित्यादिना तु रक्तस्यैव विशुद्धिलक्षणमभिहितमिति । उपजातिर्वृत्तम् ॥६९॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां सप्तविंशोऽध्यायः ॥ २७ ॥

प०--पुरुषमेवंविधं विशुद्धरक्तं मुनयो वदन्ति कथयन्ति । वर्णश्चेन्द्रियाणि च तानि प्रसन्नानि निर्मलानि यस्य तं तथाविधम् । तथेन्द्रियार्थान् शब्दादीन् स्वभावाभिप्रेतान् इच्छन्तमभिलषन्तम् । पक्तृशब्देन जाठरोऽग्निरुच्यते । शक्तिः सामर्थ्यम् । अव्याहतोऽनभिभूतः पक्तृवेगो यस्य तं तथाभूतम् । तथा सुखान्वितमारोग्यान्वित- प्रकृतियुक्तम् । तथा पुष्टिर्बलं च पुष्टिबलं तेनो- पपन्नं युक्तम् । एवं पुरुषं विशुद्धरक्तं वदन्तीति शरीरलक्षणमुक्तम् । मधुरं लवणमित्यादिना तु रक्तस्यैव विशुद्धिलक्षणमभिहितम्।इति भद्रम्॥६९॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने शिराव्यधविध्यध्यायः सप्तविंशः ॥२७॥

हे०--विशुद्धरक्तस्य लक्षणमाह--प्रसन्नवर्णेति । पक्ता अग्निः वेगो विण्मूत्रादिप्रवृत्तिः ॥ ६९ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने शिराव्यधप्रकरणं सामस्त्येन निरूपितम् ॥ २७ ॥

# अष्टाविंशोऽध्यायः ।



शिराव्यधविधेरनंतरं शल्याहरणविधिरारभ्यते—

**अथाऽतः शल्याहरणविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

स०—यतः सिराव्यधाऽध्याये शल्यरूपस्य रक्तस्य सकलकायव्यापिनः सिराव्यधोपायेन निर्हरणमुक्तमिदानीं प्रादेशिकस्य लोहादेः शल्यस्य प्रतिदेशस्थितस्य लक्षणं निर्हरणोपायादिश्चाऽस्मिन्नध्याये शल्याहरणविधौ निर्दिश्यत इत्याह ॥ १ ॥

प०—अस्यारम्भे प्रयोजनम् । दुष्टं रक्तं शल्यभूतं ततस्तस्य निर्हरणमुक्तं शिराव्यधोपायेन ॥१॥

हे०—शल्याहरणविधिमध्यायं व्याख्यातुं प्रतिजानीते-अथेति ॥ १ ॥

**वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पंचधा गतिः ॥२॥**

स०—वक्रादिभेदभिन्ना शल्यानां पंचप्रकारा गतिर्गमनम् । कदाचिच्छल्यानि वक्रं कृत्वा तिर्यग्वोर्ध्वं वाऽधो वा गच्छंति । कदाचिदृजु कृत्वा । एवमुभयथा तिर्यगूर्ध्वाधोभेदगमनाच्छल्यानां पंचधा गतिः ॥ २ ॥

प०—देहे शल्यस्य पुनर्निर्हरणमुच्यते । वक्रादिभेदभिन्ना पञ्चप्रकारा शल्यानां गतिर्निर्गमनम् । त्रिधा गतिः शल्यानामूर्ध्वमधस्तिर्यक् च । सा पुनः प्रत्येकमृजुवक्रभेदेन द्विधा ॥ २ ॥

हे०—शल्यगतिभेदानाह—वक्रर्ज्विति । । संग्रहे तु त्रिविधा गतिः शल्यानामूर्ध्वमधस्तिर्यक्च । सा पुनः प्रत्येकमृजुवक्रभेदेन द्विविधेति ॥ २ ॥

सशल्यः कथं वेद्य इत्याह—

**श्यामं शोफं रुजावंतं स्रवंतं शोणितं मुहुः ।**
**अभ्युद्गतं बुद्बुदवत्पिटिकोपचितं व्रणम् ।**
**मृदुमांसं विजानीयादंतःशल्यं समासतः ॥३॥**

स० -एवंविधं व्रणमंतःशल्यं विजानीयात् । समासतः संक्षेपेण श्यामं श्यामवर्णम् । तथा शोफं शोफान्वितम् । रुजावंतम् । तथा मुहुः शोणितं स्रवंतम् । तथाऽभ्युद्गतमाभिमुख्येनोच्छ्रितमुन्नतम् । तथा बुद्बुदे तुल्यं वर्तते बुद्बुदवत् । तथा पिटिकैरुपचितं व्याप्तं तथा मृदुमांसं कोमलमांसम् ॥ ३ ॥

प०—पिटिकोपचितं पिटिकाभिरुपचितम् । मृदुमांसमकठिनपिशितम् । अन्तःशल्यं जानीय लक्षयेत् । समासतः संक्षेपतः ॥ ३ ॥

हे०—अन्तःशल्यस्य लक्षणमाह—श्याममिति ॥ ३

इति सामान्येनांतःस्थितस्य शल्यस्य लक्षणमुक्तं त्वगादिगतस्य लक्षणमाह—

**विशेषात्त्वग्गते शल्ये विवर्णः कठिनायतः । शोफो भवति ॥ ४ ॥**

स०—सामान्यलक्षणं पूर्वोक्तमेतःशल्यस्य सं विद्यते । विशेषेण पुनस्त्वग्गते शल्ये शोफो विवर्णस्तः कठिनो दीर्घश्च स्यात् ॥ ४ ॥

प०—विशेषादत्यर्थं त्वग्गते त्वक्स्थे शल्ये विवर्णः शोफो भवति । तथा कठिनः काठिन्ययुक्तः । आयतो दीर्घः ॥ ४ ॥

हे०—त्वग्गतशल्यस्य लक्षणमाह—विशेषादिति विशेषादिति वचनात्सामान्यलक्षणमप्यत्र ज्ञेयम् ॥ ४

**मांसस्थे चोषः शोफो विवर्धते । पीडनाक्षमता पाकः शल्यमार्गो न रोहति ॥ ५**

स०—मांसगते शल्ये चोषः स्यात् । सर्वांगीणस्तं त्रोऽरतिमान् दाहश्चोष उच्यते । तथा शोफो विवर्धते तथा पीडनस्याऽक्षमत्वं पाकश्च । शल्यमार्गश्च रोहं याति ॥ ५ ॥

प०—शोफश्चातिविवृद्धिं याति ॥ ५ ॥

हे०—मांसगतस्य लक्षणमाह—मांसस्थ इति । चो आचूषणेनेव व्यथा ॥ ५ ॥

**पेश्यंतरगते मांसप्राप्तवच्छ्वयथुं विना ॥ ६ ।**

स०—पेशीमध्यगते मांसगतेन तुल्यं लक्षणं श्वयथुं वर्जयित्वा । मांसावयवविशेषो दीर्घत्वाकृतिः पेशीत्युच्यते ॥ ६ ॥

प०—पेश्यन्तरगते मांसप्राप्तवत् लक्षणं भवति श्वयथुं विना श्वयथुं वर्जयित्वा । पञ्च पेशीशतानि वक्ष्यति । शरीरे पेशीशब्देन कठिनो मांसावयवविशेषो दीर्घत्वाकृतिर्भण्यते ॥ ६ ॥

हे०—पेशीगतस्य लक्षणमाह—पेश्यन्तरगत इति६॥

**आक्षेपः स्नायुजालस्य संरंभस्तंभवेदनाः ।**
**स्नायुगे दुर्हरं चैतत् ॥ ७ ॥**

स०—स्नायुगे शल्ये स्नायुजालस्याऽऽक्षेपाद्याः स्युः। आक्षेप आकर्षणम् । संरंभः क्षोभः । स्तंभः स्तब्धता । वेदना शूलम् । तच्च स्नायुगं शल्यं दुःखेन निर्हर्तुं शक्यते ॥ ७ ॥

प०—स्नायुगे शल्ये स्नायुजालस्याक्षेपणं भवति । तथा संरम्भः क्षोभश्चोग्रा रुक् । स्तम्भः स्तब्धता । वेदना रुक् । एतच्छल्यं दुःखेन निर्हर्तुं शक्यते ७॥

हे०—स्नावगतस्य लक्षणमाह—आक्षेप इति । एतत्स्नावगतमन्येभ्यो दुर्हरं च ॥ ७ ॥

**सिराध्मानं सिराश्रिते ॥ ८ ॥**

स०—सिराश्रिते शल्ये सिराणामानाहः स्यात्॥८॥

प०—शिरागते शल्ये शिराणामाध्मानमापूरः स्यात् ॥ ८ ॥

हे०—शिरागतस्य लक्षणमाह—शिराध्मानमिति । आध्मानं शिराणां वायुपूर्णत्वम् ॥ ८ ॥

**स्वकर्मगुणहानिः स्यात्स्रोतसां स्रोतसि स्थिते९**

स०—स्रोतोगते शल्ये स्रोतसां स्वकर्मगुणयोर्हानिः स्यात् । यथा कंठस्रोतसि स्थिते शल्ये पानाभ्यवहरणस्य रोधो जायते । गुणोऽपि यस्तस्याऽप्रदुष्टत्वादिलक्षणः तस्य हीयत इति । एवमन्येषां स्वकर्मगुणहानिर्ज्ञेया । अवाक्त्वं चेति योज्यम् ॥ ९ ॥

प०—स्रोतोगते शल्ये स्रोतसो स्वकर्मगुणयोर्हानिः स्याद्भवेत् । स्रोतसां त्रयोदशानां प्राणसलिलांभोऽन्नवाहिनां स्वे कर्मणि तथा गुणे उपघातः स्यात् ॥ ९ ॥

हे०—स्रोतोगतस्य लक्षणमाह—स्वकर्मेति । स्वकर्म प्राणानां यथावद्वहनं, स्वगुणो मार्दवादिः ॥ ९ ॥

**धमनिस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत् ।**
**निर्याति शब्दवान् स्याच्च हल्लासः सांगवेदनः ।**

स०—धमनिस्थे शल्ये वायुर्लोहितं सफेनं प्रेरयेत् तथा सशब्दो मरुन्निर्याति । हल्लासश्चांगपीडायुक्तः स्यात् ॥ १० ॥

प०—धमनीस्थे शल्येऽनिलो वायुः रक्तमन्तःस्थितं फेनिलमुदीरयेत् । स चानिलो व्रणान्निर्याति गच्छति सति शब्दवान् सशब्दः तथा हल्लासः स्यात् अङ्गपीडायुक्तः ॥ १० ॥

हे०—धमनीगतशल्यलक्षणमाह—धमनीस्थ इति १०॥

**संघर्षो बलवानस्थिसंधिप्राप्तेऽस्थिपूर्णता ११ ॥**

स०—अस्थिसंधिप्राप्ते शल्ये बलवान् संघर्षः क्षोभः स्यात् । तथाऽस्थिपूर्णता च जायते ॥ ११ ॥

प०—अस्थिसन्धिगते शल्येऽस्थिपूर्णता तथा बलवान् संघर्षः संरम्भः संक्षोभः ॥ ११ ॥

हे०—अस्थिसन्धिगतशल्यलक्षणमाह—संघर्ष इति । बलवान्संघर्षः दुःसहसंघट्टनम् ॥ ११ ॥

**नैकरूपा रुजोऽस्थिस्थे शोफः ॥ १२ ॥**

स०—अस्थिस्थे शल्येऽनेकाकारा नानाविधा रुजो भग्नरुग्णमृदितपीडितावनुन्नप्रायाः स्युः शोफश्च ॥१२॥

प०—अस्थिगते शल्ये नैकरूपा विविधा रुजा वेदनाः । उग्रमृदितमथितवर्तितपीडितावनुन्नप्राया भवन्ति तथा शोफश्च ॥ १२ ॥

हे०—अस्थिगतस्य लक्षणमाह—नैकरूपा इति १२॥

**तद्वच्च संधिगे ।**
**चेष्टानिवृत्तिश्च भवेत् ॥ १३ ॥**

स०—संधिगते शल्ये तद्वदेवाऽस्थिस्थशल्येन तुल्यं लक्षणं संधिस्थशल्याक्रांतावयवस्य । तथा चेष्टाया व्यापारस्य निवृत्तिरुपरमश्च स्यात् । पूर्वमस्थिसंधिगतस्य शल्यस्य लक्षणमुक्तम् । अधुनाऽनस्थिशरीरसंधिगतशल्यस्य लक्षणम् । अन्यो हि शरीरसंधिः । तथा च राजयक्ष्मनिदाने वक्ष्यति । शरीरसंधीनाविश्येति ॥ १३ ॥

प०—सन्धिगते शल्ये तद्वदस्थिवल्लक्षणं भवति । तथा चेष्टानिवृत्तिः क्रियोपरोधः । व्यापारोपरम इति यावत् ॥ १३ ॥

हे०—सन्धिगतस्य लक्षणमाह—तद्वदिति ॥ १३ ॥

**आटोपः कोष्ठसंश्रिते ।**
**आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने ।**
**विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥१४॥**

स०—कोष्ठमुदरमाश्रिते शल्य आटोपः क्षोभस्तथाऽऽनाहो जठराध्मानम् । तथा व्रणमुखेऽन्नशकृन्मूत्रदर्शनं स्यात् । मर्मस्थं शल्यं मर्मविद्धोपलक्षणैर्विद्यात् । मर्मविद्धस्य च लक्षणं संग्रहे कथितम् । यथा । देहप्रसुप्तिर्गुरुता संमोहः शीतकामता । स्वेदो मूर्च्छा वमिः श्वासो मर्मविद्धस्य लक्षणमिति ॥ १४ ॥

प०—कोष्ठगते शल्ये आटोपः अन्त्रकूजनं गुडगुडाशब्दः स्यात् । आनाह उदराध्मानम् । तथाऽन्नशकृन्मूत्रदर्शनं शल्यव्रणमुखे भवति । मर्मगतं शल्यं मर्मविद्धवल्लक्षणैर्विद्याज्जानीयात् । मर्मविभागे शरीरे मर्मविद्धस्य यानि लक्षणान्युक्तानि तैश्चिह्नैर्लक्षयेत् ॥ १४ ॥

हे०—कोष्ठगतस्य लक्षणमाह—**आटोप** इति । मर्मगतस्य लक्षणमाह—**विद्या**दिति।उपलक्षणं त्वत्र विद्धेऽजस्रमसृक्स्राव इत्यादिना शारीरके वक्ष्यते ॥ १४॥

**यथास्वं च परिस्रावैस्त्वगादिषु विभावयेत् १५॥**

स०—न केवलं सामान्यलक्षणेन जठराध्मानादिना तथा त्वगादिस्थशल्यविशेषलक्षणेन त्वगादिस्थं शल्यं लक्षयेत् यावद्यथास्वं परिस्रावैस्तथारूपैर्विभावयेत् ॥ १५ ॥

प०—त्वगादिषु सन्धिगतपर्यन्तेषु न केवलं पूर्वोक्तैः लक्षणैः शल्यानि लक्षयेत् । यावद्यथायथं चोपदिष्टैः परिस्रावैः शल्यान्युपलक्षयेत् ॥१५॥

हे०—त्वग्गतादीनां स्रावतो लक्षणमाह—**यथास्व**मिति। यत्र यदाश्रितं द्रवं तत्र तत्स्रवति । यथा त्वग्गते लसीकाशिरादिगते रक्तम् अस्थिगते मज्जेत्यादि ॥ १५ ॥

**रुह्यते शुद्धदेहानामनुलोमस्थितं तु तत् ॥१६॥**

स०—तत्प्राङ्निर्दिष्टं शल्यं रुह्यते रोहं याति । किंभूतानां पुंसाम् । वमनविरेचनादिभिः शुद्धदेहानाम्। रुह्यत इति कर्मकर्तरीति केचित् । तच्च न युक्तम् । यतः कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति। न कर्मस्थभावकानां न च कर्तृस्थक्रियाणामित्युक्तम् । रुहिश्च कर्तृस्थक्रियः।तस्माद्रोहतीति रुट्। रुडिवाचरतीति क्वन्तोऽयम् । रूढाभासो ह्ययं न तु सम्यग्रूढः । तथाच वक्ष्यति । दोषकोपेत्यादि । तस्मादस्य रूढाभासत्वादेषा व्युत्पत्तिर्युक्ता ॥ १६ ॥

प०—शुद्धदेहानां नराणां तच्छल्यमनुलोमसंनिविष्टं रुह्यते रोहति ॥ १६ ॥

हे०—अन्तःशल्योऽपि स्वगुणेनैव रूढव्रणो भवतीत्याह—**रुह्यत** इति । रुह्यते स्वयमेव कर्मकर्तर्यात्मनेपदं तच्छल्यं शल्येन शल्यक्षतं लक्ष्यते तस्यैव रोपणार्हत्वात् ॥ १६ ॥

**दोषकोपाऽभिघातादिक्षोभाद्भूयोऽपि बाधते १७**

स०—यतस्तच्छल्यमसम्यग्रूढत्वाद् भूयोऽपि बाधते। प्राक्कृतबाधमपि पीडां जनयति । कुतो हेतोरित्याह । दोषकोपश्चाऽभिघातश्च तावादी येषां कर्मणां धावनलंघनादिशीलानां त एवं तैः क्षोभः संरम्भस्तस्माद्दोषकोपक्षोभादभिघातादिक्षोभाद्बाधते ॥ १७॥

प०—रूढमपि भूयः पुनरपि दोषप्रकोपाभिघाते व्यायामक्षोभैश्च प्रचलितं बाधते प्रकोपमायाति ॥ १७ ॥

हे०—अन्तःशल्यं रूढमपि पुनर्बाधत इत्याह—**दोषकोपे**ति। अथ नष्टशल्यज्ञानोपायः ॥ १७ ॥

त्वगादिनष्टे शल्ये मिथ्यारूढत्वाददृश्यतां प्राप्ते सति परिज्ञानार्थमिदमाह—

**त्वङ्नष्टे यत्र तत्र स्युरभ्यंगस्वेदमर्दनैः ।**
**रागरुग्दाहसंरंभा यत्र चाज्यं विलीयते ।**
**आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत् ।**

स०—तत्र तेषु त्वङ्नष्टादिषु शल्येषु मध्येषु त्वङ्नष्टं यत्र प्रदेशे स्यात्तत्स्थानेऽभ्यंगादिभिर्लौहित्यशूलदाहक्षोभाः स्युः। यत्र वा स्थाने घृतं स्त्यानं योजितं विली-

यंत तत्स्थानं शल्यवत् सत्यं वदेत् । अथवा लेपश्चंद-नादिना दत्तो यत्राश्वेव शुष्यति तत्स्थानं त्वग्देशं शल्य-वज्जानीयात् ॥ १८ ॥

प०–त्वचि शल्ये नष्टेऽदर्शनं प्राप्ते यत्र यस्मि-ञ्छरीरप्रदेशेऽभ्यङ्गादिभिस्त्वचि प्रयुक्तैः रागरुग्दा-हसंरम्भलौहित्यवेदनादाहक्षोभाः स्युः भवेयुः । तत्स्थानं शल्यवज्जानीयात् । तत्र चाज्यं घृतं स्त्यानं शीतं निहितं विलीयते यत्र वा लेप आशु शुष्याति तत्र शल्यमादिशेत् ॥ १८ ॥

हे०–तत्र त्वङ्नष्टस्योपायमाह–त्वङ्नष्ट इति ॥१८॥

**मांसप्रनष्टं संशुद्धया कर्शनाच्छ्लथतां गतम् ।**
**क्षोभाद्रागादिभिः शल्यं लक्षयेत् ॥ १९ ॥**

स०–मांसप्रनष्टमदृश्यतां प्राप्तं संशुद्धया वमनविरे-चनादिकया यत्कर्शनं कृशत्वं तस्मात् श्लथतां शिथि-लत्वं प्राप्तं क्षोभादनेकप्रकाराद्वेदनारूपात्तथा रागादिभि-र्लक्षयेत् ॥ १९ ॥

प०–मांसप्रनष्टमदृश्यतां प्राप्तं संशुद्धया वमन-विरेचनादिरूपया सेवितया यत् कर्शितं स्यात् । कर्शनाच्छ्लथतां गतं शिथिलीभूतं क्षोभात्संरम्भा-द्रागादिभिः रागरुग्दाहसंरम्भैः तत्र शल्यं लक्षयेत्१९

हे०–मांसनष्टस्योपायमाह–मांसप्रेति । शोधनेन कर्शने जाते शिथिलस्य शल्यस्य क्षोभाद्रागादयस्तत्र शल्यं पेश्यादिषु त्रिषु ॥ १९ ॥

**तद्वदेव च ।**
**पेश्यस्थिसंधिकोष्ठेषु ॥ २० ॥**

स०–तेन मांसप्रनष्टेन तुल्यं वर्तते । यथा शुद्धया कर्शनात् श्लथतां गतं क्षोभाद्रागादिभिर्लक्षये-दिति ॥ २० ॥

प०–तेन मांसप्रनष्टेन तुल्यं तद्वत् यथा संशुद्धया कृशतां गतं क्षोभाद्रागादिभिः पेश्यादिस्थं शल्यं लक्षयेत् ॥ २० ॥

हे०–नष्टस्योपायमाह–तद्वदिति ॥ २० ॥

**नष्टमस्थिषु लक्षयेत् ।**
**अस्थ्नामभ्यंजनस्वेदबंधपीडनमर्दनैः ।**
**प्रसारणाकुंचनतः संधिनष्टं तथाऽस्थिवत्॥२१॥**

स०–अस्थिषु नष्टं शल्यमस्थ्नामभ्यंजनस्वे[दबंध]पीडनमर्दनैः प्रसारणाऽऽकुंचनतो लक्षयेत् । शल्यमस्थिनष्टवल्लक्षयेत् ॥ २१ ॥

प०–अस्थि अदृश्यतां गतं शल्यमस्थ्न[ामभ्य]ञ्जनादिभिरुत्पन्नैः शल्यं लक्षयेत् । स[न्धौ] शल्ये प्रसारणाकुञ्चनाभ्यामुपचयः संरम्भ[ं] मवगच्छेत् । तथाऽस्थिवत् अभ्यञ्जनस्वेदन[बन्ध]पीडनमर्दनैरुपचरन् संरम्भादिं जानीयात् ॥

हे०–अस्थिनष्टस्योपायमाह–अस्थिष्विति । द्रागादिभिरित्यनुवर्तते । संधिनष्टस्योपायमाह–प्रसा[रणेति ।] अस्थिवत् अभ्यञ्जनादिभिश्च ॥ २१ ॥

**नष्टे स्नायुशिरास्रोतोधमनीष्वसमे पथि ।**
**अश्वयुक्तं रथं खंडचक्रमारोप्य रोगिणम् ।**
**शीघ्रं नयेत्ततस्तस्य संरंभाच्छल्यमादिशेत् ॥**

स०–स्नायुशिरास्रोतोधमनीषु नष्टं शल[्ये] पथि विषमे मार्गे रथमारोप्य रोगिणं शल्यवंतं नयेदाश्वेव देशांतरं प्रापयेत् । किंभूतं रथम् । चक्रं यस्य स खंडचक्रस्तं खंडचक्रम् । ततस्तस्य संरंभात् क्षोभाच्छल्यमादिशेल्लक्षयेत् ॥ २२ ॥

प०–स्नाय्वादिषु नष्टे शल्येऽदर्शनं गते पथि विषमेऽध्वनि निम्नोन्नते मार्गे रथखण्डच[क्रम]श्वैर्युक्तमारोप्यातुरं शीघ्रं नयेत् आश्वेव वा[...] देशान्तरं प्रापयेत् । ततस्तस्य संरम्भाद्रागादि[भिः] शल्यमादिशेत् ॥ २२ ॥

हे०–स्नाय्वादिषु चतुर्षु नष्टस्योपायमाह–नष्ट इ[ति ।] असमे पथि उच्चनीचे मार्गे ॥ २२ ॥

**मर्मनष्टं पृथङ्नोक्तं तेषां मांसादिसंश्रयात् ॥२[३॥]**

स०–मर्मनष्टं शल्यं पृथङ्नाभिहितम् । [...] तेषां मर्मणां मांसादौ एव प्राङ्निर्दिष्टौ यतः संश्र[यात्] न तु पृथङ्मर्माणि विद्यन्ते । तथा च संग्रहे । म[र्म]प्रनष्टेऽप्यनन्यभावान्मांसादिभ्यो मर्मणामुक्तं परीक्ष[णं] भवतीति ॥ २३ ॥

प०–मर्मनष्टं मर्मस्वदृश्यतां यातं शल्यं पृथ[ङ्]ङ्नोक्तम् । निर्दिष्टमनन्यभावान्मांसादिभ्यस्ते[...]

मर्मणां मांसादय एव प्राङ्निर्दिष्टाः । संश्रय आश्रयः । न पृथङ्मांसादिभ्यो मर्माणि विद्यन्ते ॥२३॥

हे०—मर्मनष्टस्योपायानुक्तौ हेतुमाह—मर्मनष्टमिति । तेषां मर्मणां मांसादिगतत्वात् मांसादिनष्टकथनेनैवोक्तत्वात् ॥ २३ ॥

एवं विशेषेण नष्टशल्यलक्षणमुक्त्वा सामान्येन नष्टशल्यं लक्षयितुमाह—

**सामान्येन सशल्यं तु क्षोभिण्या क्रियया सरुक् ।**

स०—सामान्येन सशल्यं तु क्षोभिण्या क्रियया संरंभोत्पादकेन कर्मणा श्वसनप्राणायामादिकेन यत्सरुक्स्थानं तत्सशल्यं जानीयात् ॥ २४ ॥

प०—सामान्येन सामान्यलक्षणेनामुना सशल्यं शरीरप्रदेशं विद्यमानान्तःशल्यं क्षोभिण्या क्रिययोच्छ्रितहस्तिस्कन्धाश्वद्रुमारोहणहतयानलंघनप्लवनधनुर्व्यायामैः जृम्भोद्गारकासक्षवथुश्वसनहसनप्राणायामैः सरुग्वेदनायुक्तः स्यात् तत्र शल्यमादिशेत् ॥ २४ ॥

हे०—नष्टस्य सामान्यलक्षणमाह—सामान्येति ॥२४॥

**वृत्तं पृथु चतुष्कोणं त्रिपुटं च समासतः ।**
**अदृश्यशल्यसंस्थानं व्रणाकृत्या विभावयेत्२५॥**

स०—वृत्तं वर्तुलम् । पृथु पार्श्वाभ्यां यत्परिच्छिद्यते । चतुष्कोणं चतुरस्रम् । त्रिपुटं त्र्यस्रम् । समासतः संक्षेपेणाऽदृश्यस्यानुपलब्धस्य शल्यस्य संस्थानमाकृतिं व्रणाकृत्या व्रणसंस्थानेन विभावयेद्विद्यात् ॥ २५ ॥

प०—वृत्तं वर्तुलं पृथु पार्श्वापरपार्श्वाभ्यां यत्परिच्छिद्यते । चतुष्कोणं चतुरस्रम् । त्रिपुटं त्र्यस्रम् । समासतः संक्षेपतः अदृश्यं संस्थानमाकृतिं व्रणाकृत्या व्रणस्थानेन विभावयेल्लक्षयेत् ॥ २५ ॥

हे०—अदृश्यस्य शल्यस्याकृतिर्व्रणाकृत्या ज्ञेयेत्याह—वृत्तमिति । वृत्तं कोणरहितं, पृथु द्विकोणं, त्रिपुटं त्रिकोणं संस्थानमाकृतिः ॥ २५ ॥

अधुनैषामाकर्षणोपायं निरूपयन्नाह—

**तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ॥२६॥**

स०—तेषामदृश्यानां शल्यानामाकर्षणोपायौ द्वौ प्रतिलोमानुलोमकौ । प्रतिलोमः शरीरांतःप्रवेशविपर्ययः । अनुलोमः शरीरांतःप्रवेशानुगतः ॥ २६ ॥

प०—तेषां सर्वशल्यानां महतामाहरणे द्वावेवोपायौ प्रतिलोमोऽनुलोमश्च ॥ २६ ॥

हे०—शल्याहरणोपायभेदानाह—तेषामिति। यत्र लोमप्रतिकूलमाहरणं स प्रतिलोमः, यत्रानुकूलं सोऽनुलोमः२६

प्रतिलोमानुलोमयोर्विनिर्हरणविषयमाह—

**अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ॥ २७ ॥**

स०—तयोः प्रतिलोमानुलोमयोर्विपर्ययस्तद्विपर्ययस्तस्माद्विपर्ययादर्वाचीनपराचीने निर्हरेत् । प्रतिलोमेऽर्वाचीनमानयेदनुलोमे पराचीनमानयेदित्यर्थः ॥२७॥

प०—तयोर्विपर्ययस्तद्विपर्ययः । तस्मादर्वाचीनपराचीने शल्ये द्वे निर्हरेत् । तेन प्रतिलोममर्वाचीनमानयेदनुलोमं पराचीनम् । अर्वाचीनमधोगतशल्यम् । पराचीनमूर्ध्वगतं शल्यम् ।एवं परस्परप्रतीकारे तयोर्निर्हरणं कार्यम् ॥ २७ ॥

हे०—तयोर्विषयमाह—अर्वाचीनेति । अर्वाचीनमधोगतं तद्विपर्ययादूर्ध्वं निर्हरेत् । पराचीनमूर्ध्वगतं तद्विपर्ययादधो निर्हरेत् । ऊर्ध्वनिर्हरणं प्रतिलोमम्, अधोऽनुलोमम् । उक्तं च संग्रहे प्रतिलोममर्वाचीनमानयेत्, अनुलोमं पराचीनमिति ॥ २७ ॥

**सुखाहार्यं यतश्छित्त्वा ततस्तिर्यग्गतं हरेत् २८॥**

स०—तिर्यग्गतं शल्यं यतो यस्माद्देहदेशाच्छित्त्वा विलुठ्य सुखाहार्यं संपद्यते सुखेनाहर्तुं शक्यते ततस्तस्माद्देहदेशाच्छित्त्वोद्धरेत्। छित्त्वेत्यत्र यद्यपि कर्म किंचिन्न निर्दिष्टं तथाऽपि त्वङ्मांसादीनां योग्यत्वात्तेषामेव कर्मत्वं बोध्यम् । मांसादि छित्त्वोद्धरेदित्यर्थः ॥२८॥

प०—तिर्यग्गतं शल्यं यतो यस्माद्देहदेशाच्छित्त्वा विलुप्य सुखाहार्यं सम्पद्यते सुखेनाहर्तुं शक्यते ततस्तस्माद्देहदेशात् छित्त्वा मांसादीन् समुद्धरेत् ॥२८॥

हे०—तिर्यग्गतं त्ववस्थाभेदेनोभयोर्विषय इत्याह—सुखाहार्यमिति । तिर्यग्गतं येनोपायेन सुखाहार्यं तेन हरेत् । प्रवेशपार्श्वादन्येन पार्श्वेन यदा सुखाहार्यं तदा छित्त्वा शस्त्रेण द्वारं कृत्वा हरेत् ॥ २८ ॥

**शल्यं न निर्घात्यमुरःकक्षावंक्षणपार्श्वगम् ।**
**प्रतिलोममनुत्तुंडं छेद्यं पृथुमुखं च यत् ॥२९॥**

स०—शल्यमुरोगतमुरःस्थं कक्षास्थं वंक्षणस्थं पार्श्वस्थं न निर्घात्यं तन्न निर्घातनीयम् । तथा प्रतिलोममननुलोमगतं तथानुत्तुंडं बाह्ये बुद्बुदवच्चोन्नतं तथा छेद्यं शल्यं न निर्घात्यमहार्यम् । तथा पृथुमुखं विस्तीर्णाननं च न निर्घातनीयम् ॥ २९ ॥

प०—शल्यमुरोगतं वक्षःस्थं तथा कक्षास्थं पार्श्वगं प्रत्यङ्गान्तरस्थं न निर्घात्यं न निर्हरेत् । तथा प्रतिलोमं नानुलोमगतं तथानुत्तुण्डं बाह्ये बुद्बुदवच्चोन्नतं छेद्यं छेदनीयमुखं तथा पृथुमुखं विस्तीर्णास्यं न निर्हरेत् ॥ २९ ॥

हे०—उरोगतादिषु [illegible] निर्घातनं निषेधति— शल्यमिति । प्रतिलोममनुलोमगतम् [illegible] छेद्यं छेदनार्हम् ॥ २९ ॥

न च सर्वमेव शल्यमाहरणीयमित्याह

**नैवाहरेद्विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥ ३० ॥**

स०—विशल्यं हन्तीति विशल्यघ्नम् । तावज्जीवति यावत्सशल्यः । शल्यापाये तु म्रियते तन्नाहरेत् । विशल्यस्य प्राणहरत्वात् । एतत्स्वरूपं च मर्मविभागे स्पष्टं कृत्वा वक्ष्यते । नष्टं नेति नाशब्दश्चार्थे । नष्टमदृश्यतां प्राप्तं च निरुपद्रवं तन्निमित्तरोगरहितं नाहरेत् । प्रत्यवायसंभवात् ॥ ३० ॥

प०—विशल्यं हन्तीति विशल्यघ्नं मर्मघातिघ्नं मर्मत्रयप्रतिघ्नं नष्टं वा अदर्शनप्राप्तं निरुपद्रवं शोफवेदनापाकरहितं शल्यं निर्हरेत् ॥ ३० ॥

हे०—अनाहरणीयं शल्यमाह—नैवाहरेदिति । विशल्यघ्नम् उत्क्षेपः स्थपनी त्रीणि विशल्यघ्नानीत्युक्तं कर्मसु स्थितम् ॥ ३० ॥

**अथाऽऽहरेत्करप्राप्यं करेणैव ॥ ३१ ॥**

स०—करप्राप्यं हस्तप्राप्यं शल्यं करेणैवाऽऽहरेत्नापरेण कंकमुखादिना ॥ ३१ ॥

प०—अथेति मङ्गलार्थं । करप्राप्यं करेणैव हस्तेनैवाहरेत् आकर्षेत् ॥ ३१ ॥

हे०—[illegible]—अथेति ॥ ३१ ॥

इतरत्पुनः

**दृश्यं सिंहाहिमकरद्वार्भिककर्कटकाननैः ॥ ३२ ॥**

स०—इतरत्करप्राप्यं तु [illegible] दृश्यं सिंहमुखादिभिर्यन्त्रैराहरेत् ॥ ३२ ॥

प०—इतरत् पुनः यत् करप्राप्यं न भवति दृश्यं च तच्छल्यं सिंहाद्याननैः सिंहमुखादिभिराहरेत् ॥ ३२ ॥

हे०—सिंहमुखादि[illegible] शल्यमाह—इतरदिति । [illegible] ॥ ३२ ॥

**अदृश्यं व्रणसंस्थानाद्ग्रहीतुं शक्यते यतः ।**
**कंकभृंगाह्वकुररशरारीवायसाननैः ॥ ३३ ॥**

स०—अदृश्यं पुनः शल्यं व्रणस्य संस्थानात् [illegible] कंकमुखादिभिर्ग्रहीतुं शक्यते [illegible] हरेत् । [illegible] ॥ ३३ ॥

प०—अदृश्यं शल्यं व्रणसंस्थानात् व्रणाकृतेः यतो यस्मात्शरीरप्रदेशात् ग्रहीतुं शक्यते तस्मात् शरीरप्रदेशात् कङ्कादिमुखैर्यन्त्रैरपहरेत् ॥ ३३ ॥

हे०—कंकमुखादि[illegible] शल्यमाह—अदृश्यमिति । [illegible] ॥ ३३ ॥

**संदंशाभ्यां त्वगादिस्थम् ॥ ३४ ॥**

स०—त्वगादिस्थं शल्यं संदंशाभ्यां निर्हरेत् । आदिग्रहणात् [illegible] मांसादीनां ग्रहणम् ॥ ३४ ॥

प०—त्वगादिस्थं शल्यं संदंशयन्त्राभ्यां [illegible] माहरेत् । आदिग्रहणेन मांसादीनां परिग्रहः ॥ ३४ ॥

हे०—संदंशा[illegible] शल्यमाह—सन्दंशाभ्यामिति । [illegible] ॥ ३४ ॥

**तालाभ्यां शुषिरं हरेत् ॥ ३५ ॥**

स०—शुषिरं यच्छल्यं त्वगादिस्थं तत्ताल [illegible] हरेत् संदंशाभ्याम् ॥ ३५ ॥

प०—शुषिरं यच्छल्यं त्वगादिस्थं तत्तालयन्त्राभ्यामाहरेत् ॥ ३५ ॥

हे०—[illegible] शल्यमाह—तालाभ्यामिति । शुषिरं [illegible] ॥ ३५ ॥

**शुषिरस्थं तु नलकैः ॥ ३६ ॥**

स०—शुषिरस्थं पुनः शल्यं नलकैर्नाडीयंत्रैराकर्षेत् ॥ ३६ ॥

प०—सुषिरप्रदेशस्थं शल्यं नलकैर्नाडीयन्त्रैर्हरेत् ॥ ३६ ॥

हे०—नाडीयंत्राहार्यं शल्यमाह—सुषिरस्थामिति ३६॥

**शेषं शेषैर्यथायथम् ॥ ३७ ॥**

स०—शेषं शल्यं शेषैर्यंत्रैर्यथायोगमाहरेत् ॥ ३७॥

प०—शेषं शल्यं यदशक्यं शेषैर्यन्त्रैरिहानुगतैरिहानुक्तैः शिलादिभिर्हरेत् । यथायथं यथास्वम् । यत्र यद्योग्यं तेन तदाहरणं कुर्यात् ॥ ३७ ॥

हे०—शेषयंत्राहार्यं शल्यमाह—शेषमिति ॥ ३७ ॥

**शस्त्रेण वा विशस्यादौ ततो निर्लोहितं व्रणम्।**
**कृत्वा घृतेन संस्वेद्य बद्धाऽऽचारिकमादिशेत्॥**

स०—शस्त्रेण वा पूर्वं विशस्य मांसादींश्छित्वा ततोऽनंतरमपनीतरक्तं व्रणं विधाय सर्पिषा स्वेदयित्वा वस्त्रपट्टादिना सर्पिर्मधु बद्धा आचारिकं स्नेहविध्युक्तमुष्णोदकोपचारी स्यादित्यादिकमादिशेत् कथयेत् ॥ ३८ ॥

प०—तथाप्यशक्यमाहर्तुं शल्यं शस्त्रेण पूर्वं विशस्य मांसादीन् छित्वाऽनन्तरमाहरेत् । ततोऽनन्तरं निर्हृतशल्यं शरीरदेशं निर्लोहितं कृत्वा घृतेन व्रणं संस्वेद्य स्वेदयित्वा बद्ध्वाऽनन्तरमाचारिकं स्नेहोक्तमाचारविधिमादिशेत् । उपदिशेत्कथयेत् ३८

हे०—विशस्य विदार्य निर्लोहितं स्रुतरक्तम् आचारिकमाहारविहारादिनियमम् ॥ ३८ ॥

**सिरास्नायुविलग्नं तु चालयित्वा शलाकया ३९**

स०—सिरास्नायुविलग्नं पुनः शल्यं शलाकया चालयित्वा शिथिलीकृत्याहरेत् ॥ ३९ ॥

प०—शिरास्नायुविलग्नं शल्यं शलाकया अग्रेण चालयित्वाऽभिमोच्याहरेत् ॥ ३९ ॥

हे०—शिरास्नायुविलग्नमिति ॥ ३९ ॥

**हृदये संस्थितं शल्यं त्रासितस्य हिमांबुना ।**
**ततः स्थानांतरं प्राप्तमाहरेत्तद्यथायथम्॥ ४०**

स०—हृदये यदाश्रितं शल्यं तच्छीतजलेन त्रासि[illegible] स्थानांतरगतं ज्ञात्वा यथायथं यथास्वं विशिष्ट[illegible] निर्हरेत् ॥ ४० ॥

प०—शीतजलेन तत्रासनात् स्थानान्तरम[illegible] स्थानं प्राप्तं गतं ज्ञात्वाहरेत् । यथायथं यथ[illegible] योग्यैरिति यावत् ॥ ४० ॥

हे०—हृदयलग्नस्य शल्यस्योपायमाह—हृदय [illegible] यथायथं स्थानानुरूपेण यंत्रेण ॥ ४० ॥

**यथामार्गं दुराकर्षमन्यतोऽप्येवमाहरेत् ॥४**

स०—अन्यतोऽप्यन्यदेशस्थमपि शल्यं दुर[illegible] दुःखेनाकृष्टुं शक्यते तत्स्वमार्गं नयेत् तदेवमेवाहरे[illegible] यथा हृदयस्थं शल्यं स्थानांतरं प्राप्तं निर्हार्य[illegible] यथामार्गं मार्गानतिक्रमेणान्यदेशस्थमपि शल्यमा[illegible]र्णीयम् ॥ ४१ ॥

प०—यथामार्गं येन मार्गेण प्रविष्टं तच्च[illegible] दुराकर्षं दुराहारमन्यतोऽप्येवमनवरुद्धमार्गं[illegible]यित्वाऽऽहरेत् ॥ ४१ ॥

हे०—यथामार्गं मार्गानुरूपेण शोधनेन दुराकर्षं यादाकृष्टुमशक्यं हृदयोपायमन्यत्रातिदिशति-अ[illegible] इति ॥ ४१ ॥

**अस्थिदष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरे[illegible]**

स०—अस्थिदष्टेऽस्थ्नि दष्टे स्पष्टे सति शल्[illegible] बलवंतं पद्भ्यां पीडयित्वा आक्रम्य तच्छल्यं विनि[illegible] अस्थिनष्ट इति वा पाठः ॥ ४२ ॥

प०—अस्थि दृष्टं येन शल्येन तस्मिन्नरं शल्यवन्तं पद्भ्यां पादाभ्यां पीडयित्वाऽऽक्रम्य [illegible]ल्यं यन्त्रेण निर्हरेत् अपकर्षेत् ॥ ४२ ॥

हे०—अस्थिमग्नस्योपायमाह—अस्थिदृष्ट इति ।

**इत्यशक्ये सुबलिभिः सुगृहीतस्य किंकरैः**

स०—इत्यशक्येऽनेनाऽपि प्रकारेणाकृष्टु[illegible] शल्ये किंकरैर्भृत्यैर्महाबलैः सुगृहीतस्य सुष्ठ[illegible] नरस्य शल्यं वैद्यः कंकमुखादिना निर्हरेत् ॥ ४[illegible]

प०—इत्यनेन प्रकारेणाशक्ये शल्ये आकृष्ट मुबलिभिर्बलवद्भिः सुगृहीतस्य सुष्ठु बद्धस्य पुंसः किङ्करैराज्ञाकारिभिर्भृत्यैराकर्षेत् यन्त्रेण ग्राहयित्वा ॥ ४३ ॥

हे०—पूर्वोपायाशक्यस्योपायांतरमाह—इत्यशक्य इति । सुगृहीतस्य सुशल्ये अंगे सम्यक् धृतस्य ॥ ४३ ॥

**तथाऽप्यशक्ये वारंगं वक्रीकृत्य धनुर्ज्यया । सुबद्धं वक्रकटके बध्नीयात्सुसमाहितः ॥ सुसंयतस्य पंचांग्या वाजिनः कशयाऽथ तम् । ताडयेदिति मूर्धानं वेगेनोन्नमयन् यथा ॥ उद्धरेच्छल्यम् ॥ ४४ ॥**

स०—तथाप्यशक्य एवमपि शल्य आहर्तुमशक्ये वारंगं शस्त्रादिमयस्य शल्यस्य शिखाकारं तद्वक्रीकृत्य कुटिलतां प्रापय्य ततो धनुर्ज्यया स्नाय्वादिमय्या सुबद्धं कृत्वाऽनंतरं वाजिनोऽश्वस्य वक्रकटके बध्नीयाद्वैद्यः । किंभूतः । सुसमाहितस्तद्गतमनाः । किंभूतस्य वाजिनः । सुसंयतस्य सुष्ठु शोभनं कृत्वा बद्धस्य । कथं सुसंयतस्य । पंचांग्या पंचानामंगानां चतुर्णां पादानां मुखसहितानां समाहारः पंचांगी बंधविशेषस्तया पंचांग्या बद्धस्यानंतरं वाजिनं कशया चर्मवध्र्या इत्येवं ताडयेत् । यथा स वाजी मूर्धानमुन्नमयन्नुत्क्षिपन् वेगेन बलेनाऽऽक्रांत्या शल्यमुद्धरेत् ॥ ४४ ॥

प०—तथाप्याहर्तुमशक्ये शल्ये वारङ्गं शल्यवृन्तं वक्रीकृत्य प्रयुज्य कुटिलतां नीत्वा धनुर्ज्यया धनुर्गुणेन एकतो बद्धमन्यतो वाजिनोऽश्वस्य वक्त्रकटके बध्नीयात् वैद्यः सुसमाहितो यत्नपरः । सुसंयतस्याचपलस्य पञ्चाङ्ग्या बद्धस्य पञ्चानामङ्गानां समाहारः पञ्चाङ्गी बन्धविशेषः तया सुसंयतस्य बद्धस्यानन्तरं वाजिनं कशया ताडयेत् हन्यात् । यथोन्नमय्य मूर्द्धानं वेगेन बलेन संरम्भेणाक्रान्त्या तच्छल्यमुद्धरेदाहरेत् ॥ ४४ ॥

हे०—एवमप्यशक्यस्योपायमाह—तथापीति । वारंगः शल्यमस्तके शिखाकारोऽवयवः, पंचांगी चतुर्षु चरणेषु मुखे च बन्धविशेषः। तं वाजिनम् इति शब्दस्तथार्थे । शिर उत्क्षिप्य वेगेन यथा शल्यमुद्धरेत् तथा ताडयेत् ॥ ४४ ॥

**एवं वा शाखायां कल्पयेत्तरोः ॥४५॥**

स०—अथवैवमनेन प्रकारेण वारंगं वक्रतां नीत्वा धनुर्ज्यया सुबद्धं संपाद्य सुसमाहितो भिषग्वृक्षस्य शाखामानमय्य धनुर्ज्यया सुबद्धं तस्यां बध्नीयाच्छल्याकर्षणार्थम् । अत्र च या शाखा किंकरहस्तादिमुक्तमात्रोर्ध्वमुन्नमय्य मनाक् शल्यमुद्धरति तादृशी कल्पनीया ॥ ४५ ॥

प०—एवमनेन प्रकारेण शाखायां कल्पयेत् वृक्षस्य रूढ्या धनुर्ज्यया पूर्ववद्बद्ध्वा वारङ्गमेकतोऽन्यतो वृक्षशाखां शल्यमुद्धरेत् ॥ ४५ ॥

हे०—पूर्वोपायासंभवे उपायांतरमाह—एवमिति॥४५॥

**बद्ध्वा दुर्बलवारंगं कुशाभिः शल्यमाहरेत् ४६ ॥**

स०—दुर्बलं तनु वारंगं यस्य शल्यस्य तच्छल्यं कुशाभिर्वंशादिकंबिकाभिर्बद्ध्वा शल्यमाहरेत् ॥ ४६ ॥

प०—दुर्बलं तनु स्वल्पं वारङ्गं यस्य शल्यस्य तद्दुर्बलवारङ्गं शल्यं कुशाभिश्चाभिर्वंशादिकम्बिकाभिर्बद्ध्वाऽऽहरेदाकर्षेत् ॥ ४६ ॥

हे०—दुर्बलवारंगस्योपायमाह—बद्ध्वेति।कुशाभिःकंबिकाभिः ॥ ४६ ॥

**श्वयथुग्रस्तवारंगं शोफमुत्पीड्य युक्तितः॥४७॥**

स०—श्वयथुना ग्रस्तमाच्छादितं वारंगं यस्य शल्यस्य तच्छल्यमाहरेत् । कथम् । युक्तितो यथा युज्यते तथा शोफमुत्पीड्योर्ध्वं पीडयित्वा ॥ ४७ ॥

प०—श्वयथुना ग्रस्तः छादितो वारङ्गो यस्य तच्छल्यं युक्तितः श्वयथुमुत्पीड्याहरेत् ॥ ४७ ॥

हे०—शोफग्रस्तवारंगस्योपायमाह—श्वयथ्विति ४७॥

**मुद्गराहतया नाड्या निर्घात्योत्तुंडितं हरेत् ।**

स०—उत्तुंडितं शल्यं बुद्बुदवदभिमुखीभूतं नाड्या निर्घात्य चालयित्वा हरेत्। किंभूतया । मुद्गरेणाहतया मुद्गरग्रहणमुपलक्षणार्थम् । पाषाणादिभिरप्याहतयोत्तुंडितमाहरेदिति वेद्यम् ॥ ४८ ॥

प०—शल्यमुत्तुण्डितं नाड्या यन्त्रेण मुद्गरेणाहतया निर्घातितयाऽऽहरेत् ॥ ४८ ॥

हे०—शोफोत्पीडनेन वारंगमुद्धाख्य उत्तुंडितस्योपायमाह—मुद्गरेति ॥ ४८ ॥

**तैरेव चाऽऽनयेन्मार्गममार्गोत्तुंडितं तु यत् ४९ ॥**

स०—तैरेव मुद्गरादिभिराहतैरमार्गेणोत्तुंडितममार्गोत्तुंडितं मार्गमानयेत् प्रापयेत् ॥ ४९ ॥

प०—तैरेव मुद्गरेणैव विचाल्य शल्यं मार्गमानयेत्। पश्चाद्यथामार्गं नीत्वा हरेत् ॥ ४९ ॥

हे०—तेनैव नाडीं विना मुद्गरेणैव निर्घात्य आमार्गोत्तुंडितस्योपायमाह—नयेदिति। तत्तु श य मार्गं नयेत्। मार्गनयनपूर्वकमाहरेत् ॥ ४९ ॥

**मृदित्वा कर्णिनां कर्णं नाड्यास्येन निगृह्य वा।**

स०—कर्णः कर्णौ वा विद्येते येषां ते कर्णिनो भल्लादयस्तेषां कर्णं मृदित्वा भक्त्वा शल्यं निर्हरेत्। अथवा नाड्यास्येन नाडीमुखेन निगृह्य निर्हरेत्। नाडी पंचमुखच्छिद्रेत्येवमादिग्रंथनिर्दिष्टैर्नाडीयंत्रैर्निर्हरेदित्यर्थः ॥ ५० ॥

प०—कर्णिनां कर्णवतां शल्यानां मृदित्वा संक्षुभ्य शिथिलतां नीत्वा शल्यं नाड्यास्येन नाडयिन्त्रेण यथास्वं वंशादिना निगृह्यावष्टभ्य निर्हरेत् ॥ ५० ॥

हे०—निर्घातनेनैव कर्णयुक्तस्योपायमाह—मृदित्वेति। निर्गमप्रतिबंधकः शल्यावयवः कर्णकारत्वात्कर्णः तं मृदित्वा संक्षोदनेन शिथिलीकृत्य अथवा नाड्यास्येन नाडीयंत्रमुखेन निगृह्य निष्पीडनेनैकीकृत्य ॥ ५० ॥

**अयस्कांतेन निष्कर्णं विवृतास्यमृजुस्थितम् ५१॥**

स०—अयस्कांतेन लोहाकर्षकमणिविशेषेण निष्कर्णं शल्यं तथा विवृतमुखम् ऋजु स्पष्टं कृत्वाऽवस्थितं निर्हरेत् ॥ ५१ ॥

प०—निष्कर्णमकर्णं वा शल्यं विवृतास्यमनल्पव्रणमुखमृजुस्थितमनुलोमगतमयस्कान्तेन मणिविशेषेणाहरेत् ॥ ५१ ॥

हे०—निष्कर्णस्योपायमाह—अयस्कांतेनेति। अयस्कांतो लोहाकर्षणपाषाणः। विवृतास्यमृजुस्थितमिति। निष्कर्णस्य विशेषणम् ॥ ५१ ॥

**पक्वाशयगतं शल्यं विरेकेण विनिर्हरेत् ॥ ५२ ॥**

स०—पक्वाशये स्थितं शल्यं विरेचनैर्विशेषेण निर्हरेत् ॥ ५२ ॥

प०—पक्वाधाने स्थितं शल्यभूतमन्नादि विरेकेण निर्हरेत् ॥ ५२ ॥

हे०—पक्वाशयगतस्योपायमाह-पक्वाशयगतमिति ५२

**दुष्टवातविषस्तन्यरक्ततोयादिचूषणैः ॥ ५३ ॥**

स०—दुष्टवातादीनि चूषणैर्निर्हरेत्। चूषणैरिति बहुवचननिर्देशाच्छृंगादिभिरिति बोध्यम् ॥ ५३ ॥

हे०—दुष्टवातादीनामुपायमाह—दुष्टवातेति। चूषणैः शृंगादिभिः ॥ ५३ ॥

**कंठस्रोतोगते शल्ये सूत्रं कंठे प्रवेशयेत्।**
**बिसेनात्ते ततः शल्ये बिसं सूत्रं समं हरेत् ॥५४॥**

स०—कंठस्रोतःस्थे शल्ये सूत्रं कार्पासादिजं बिसेन कंठे प्रवेशयेत्। बिससंलग्नं सूत्रं कृत्वा शल्यनिर्हरणाय प्रवेशयेदित्यर्थः। आत्ते गृहीते शल्ये बिससंलग्नेऽनंतरं शल्यं बिससूत्रं समं तुल्यकालमाहरेत् ॥५४॥

प०—कण्ठस्रोतोगते तत्रस्थे शल्ये सूत्रं कार्पासादिमयं कण्ठे प्रवेशयेत्। बिसासक्तं विलग्नं बिसेन सह सूत्रं कृत्वा ततोऽनन्तरमात्ते गृहीते बिसेन शल्यं बिससूत्रेण समं तुल्यकालमाहरेत् ॥ ५४ ॥

हे०—कंठगतस्योपायमाह—कंठस्रोत इति। बिसेन मृणालेन आत्ते गृहीते ॥ ५४ ॥

**नाड्याऽग्नितापितां क्षिप्त्वा शलाकामप्स्थिरीकृताम्।**

**आनयेज्जातुषं कंठात् ॥ ५५ ॥**

स०—जातुषे शल्ये कंठस्रोतःप्रविष्टे तज्जातुषं शल्यं कंठादानयेत्। कथमित्याह। शलाकां कंठे क्षिप्त्वा। कथम्। नाड्या नाडीयंत्रेण प्रक्षिप्य कंठदाहपरिहरणार्थम्। कीदृशीं शलाकाम्। अद्भिः स्थिरीकृतां निर्वापणद्वारेण। तां तथाविधां शलाकां कृत्वा नाड्यैव जातुषं शल्यं कंठादानयेदाकर्षयेत्। जातुषमित्यत्र त्रपुजतुनोः षुगित्यण् षुगागमश्च ॥ ५५ ॥

प०—कण्ठस्रोतःप्रविष्टं जतुमयं शल्यं कण्ठादानयेदाक्षिपेत् । नाडया नाडीयन्त्रेण शलाकामग्नितापितां प्रक्षिप्य कण्ठदाहपरिहारार्थमथ तां गृहीतशल्यामप्स्थिरीकृतां शीताभिरद्भिः परिषिच्य स्थिरीभूतामाहरेत् ॥ ५५ ॥

हे०—जातुषस्योपायमाह—**नाडयाग्नीति** । अग्नितापितां शलाकां नाड्या कंठे क्षिप्त्वा ततोऽप्स्थिरीकृतामपां पानेन स्थिरीकृतां शल्यसंलग्नां कृत्वा जातुषं लाक्षामयं शल्यं कंठादानयेत् ॥ ५५ ॥

**जतुदिग्धामजातुषम् ॥ ५६ ॥**

स०—अजातुषं दारुवेण्वादिमयं शल्यं कंठस्रोतःस्थितं जतुदिग्धां लाक्षालिप्तां शलाकामग्नितापितां नाड्या क्षिप्त्वा पूर्ववदपहरेत् । जतुदिग्धामित्युपलक्षणार्थम् । सिक्थादिदिग्धामपि । यथा शलाकया हर्तुं प्रयुज्यते तथा कृत्वेति वेद्यम् ॥ ५६ ॥

प०—जतुदिग्धं जातुषमजातुषं शल्यमेवं प्रतप्तां जतुप्रतप्तां शलाकां नाडयां कृत्वा स्थिरीभूतामानयेत् ॥ ५६ ॥

हे०—अजातुषस्योपायमाह-**जतुदिग्धामिति**। जतुदिग्धां लाक्षालिप्तां शलाकां पूर्ववच्छल्यसंलग्नां कृत्वा जातुषादन्यच्छल्यमाहरेत् ॥ ५६ ॥

**केशोंदुकेन पीतेन द्रवैः कंटकमाक्षिपेत् ।**
**सहसा सूत्रबद्धेन वमतः ॥ ५७ ॥**

स०—कंटकं मत्स्यादिकमांससंगेन भुक्तं कंठस्रोतसि स्थितं द्रवैः पानीयादिभिः सह पीतेन । केशोंदुकेनाऽऽक्षिपेत् । केशानां समूहः केशोंदुकं तेन । किंभूतेन केशोंदुकेन । सूत्रबद्धेन सूत्रग्रथितेन । वमतो वमनमाचरतः । कंटकमेकदेशसक्तसूत्रं सहसैवाऽऽक्षिपेत् । एवं च वमनद्रव्यसंस्कृतैर्द्रवैः केशोंदुकं पातव्यमित्यवतिष्ठते ॥ ५७ ॥

प०—केशानां समूहः पिण्डः केशोन्दुकस्तेन पीतेन द्रवैः पानीयादिभिः कण्टकं वातकण्टकमन्यद्वारा त्वगस्थिशल्यं कण्ठस्रोतःस्थितमाक्षिपेत् आकर्षेत् सहसैव । तेन सूत्रबद्धेन सतावृतैः पीतेन वमतश्च पुंसः ॥ ५७ ॥

हे०—मत्स्यादिकंटकस्योपायमाह—**केशोंदुकेनेति** सूत्रबद्धेन केशोंदुकेन केशपुंजेन द्रवैः सह पीतेन वम सहसा कंटकमाहरेत् ॥ ५७ ॥

**तेन चेतरत् ॥ ५८ ॥**

स०—तेन कंटकेनेतरत् केशोंदुकं प्रमादपी माहरेत् । क्षतकंठश्च त्रिफलां मधुघृतसितोपेतामनुव लिह्यात् । सुश्रुते चोक्तम् । अस्थिशल्यमन्यद्वा ति कंठासक्तमवेक्ष्य केशोंदुकं दृढैकसूत्रबद्धं द्रवभक्तोपहि पाययेदाकंठाच्च पूर्णकोष्ठं वामयेद्वमतश्च शल्यैकदे सक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत् । मृदुना वा दं धावनकूर्चकेनापहरेत् प्रणुदेद्वेति ॥ ५८ ॥

हे०—केशोंदुकस्योपायमाह—**तेनेति** । तेन कंटकेन द्र सह पीतेन इतरत्केशोंदुकमाहरेत् ॥ ५८ ॥

**अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत् ५९**

स०—मुखनासागतं शल्यं मुखनासाभ्यामाकृ मशक्यमाहर्तुं यन्न शक्यते तत्परतो नुदेत्प्रकृतत्वान् खात् परतो नासायाश्च परतः । तस्माद्येन केनचिदुप येन कोष्ठं नयेदिति गम्यते ॥ ५९ ॥

प०—मुखनासाभ्यामाहर्तुमाक्रष्टुं यन्न शक्य तत्परतो नुदेत् प्रेरयेत् । अन्तं नयेदित्यर्थः ॥५९

हे०—ऊर्ध्वमाहर्तुमशक्यस्योपायमाह—**अशक्यमिति** परतो नुदेत्कोष्ठं नयेत् ॥ ५९ ॥

**अप्पानस्कंधघाताभ्यां ग्रासशल्यं प्रवेशयेत् ६**

स०—ग्रासः शल्यमिव ग्रासशल्यं कंठासक्तमंत कोष्ठांतं नयेत् । कथम् । अपां पानमप्पानं तेन तथा स्कंधघातेन । स्कंधस्य मुष्ट्यादिना हननं स्कंध घातः ॥ ६० ॥

प०—शल्यकार्यकरणात् कण्ठासक्तो ग्रासः कवल तथाविधं ग्रासशल्यमन्तःकोष्ठाख्यमम्बुपानेन तथ स्कन्धस्य मुष्टिघातेन प्रवेशयेत् ॥ ६० ॥

हे०—ग्रासशल्यस्योपायमाह—**अप्पानेति** । अप्पान मुदकपानम् ॥ ६० ॥

**सूक्ष्माक्षिव्रणशल्यानि क्षौमवालजलैर्हरेत्॥६१॥**

स०—अक्षिणी च व्रणश्च तत्र शल्यान्यक्षिव्रणशल्यानि सूक्ष्माणि च तान्यक्षिव्रणशल्यानि च सूक्ष्माक्षिव्रणशल्यानि तानि क्षौमादिभिर्निर्हरेत्। योग्यतावशात् कदाचित् क्षौमेन कौशेयेन कदाचिद्वालेन कदाचिज्जलेन च निर्हरेत्॥ ६१ ॥

प०—सूक्ष्माण्यक्षिव्रणशल्यानि क्षौमादिभिस्त्रिभिर्निर्हरेत् अपानयेत्। क्षौमं दुकूलम्। वालाः केशाः ॥ ६१ ॥

हे०—सूक्ष्माणामक्षिगतानां व्रणगतानां चोपायमाह—सूक्ष्माक्षीति ॥ ६१ ॥

नदीतडागादिपतितस्याऽकस्मान्नरस्यावश्यं यज्जलमंतरे प्रविशेत्तज्जलं शल्यवदंतःस्थितं निर्हार्यमिति तदुपायं दर्शयितुमाह—

**अपां पूर्णं विधुनुयादवाक्शिरसमायतम्।**
**वामयेद्वाऽऽमुखं भस्मराशौ वा निखनेन्नरम्॥६२॥**

स०—अपां पूर्णं नरं विधुनुयात्। किंभूतम्। अवाक्शिरसमवागधः शिरो मूर्धा यस्य तम्। तथा आयतं दीर्घं कृत्वा। तथा तं नरं वामयेद्वैद्यः। अथवा आमुखं मुखं यावद्भस्मराशौ न्यसेत्। तथोक्तम्। उदकपूर्णस्य चक्राद्यारोपणेनोदकनिःसारः कार्य इति॥६२॥

प०—अपां पूर्णं नरं विधुनुयात् विधुन्वीत। अवाक्शिरसमवाक् अधः शिरो यस्य तं तथाभूतं यथायतं दीर्घं कृत्वा तं वामयेत्। वा पर इत्यर्थे। अथवा भस्मराशौ निखनेदामुखमामुखात्प्रक्षिपेत्॥ ६२ ॥

हे०—सर्वांगगतस्योदकशल्यस्योपायमाह--अपां पूर्णमिति। विधुनुयात्कम्पयेत् वामयेच्च वमनद्रव्यैः। अथवा मुखपर्यंतं भस्मराशौ निखनेत्॥ ६२ ॥

**कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी।**
**क्षिपेदधोमुखं कर्णं हन्याद्वा चूषयेत वा॥६३॥**

स०—कर्णेऽम्बुना पूर्णे सति तैलवारिणी क्षिपेत्। किं कृत्वा। हस्तेन मथित्वा विलोड्य। तथाऽधोमुखं कर्णं हन्याद्वा। अथवा चूषयेच्छृंगादिभिः॥ ६३ ॥

प०—जलपूर्णे कर्णे तैलवारिणी क्षिपेत्। हस्तेन मथित्वा विलोड्यैकतामापाद्य। तथाऽधोमुखं कर्णं पार्श्वावनतं कृत्वा हस्तेन हन्यात्। ताडयेद्वा चूषयेदिति॥ ६३ ॥

हे०—कर्णगतस्योदकशल्यस्योपायमाह-कर्णेऽम्बुपूर्णे। आचूषयेत् शृंगादिभिः॥ ६३ ॥

**कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना।**
**शुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः॥६४॥**

स०—कीटे पिपीलिकाशतपद्यादौ स्रोतःस्थिते तोदगौरववेदनादिभिरनुमिते कर्णं लवणाम्बुना पूरयेत्। अथवा शुक्तेन पूरयेत्। किंभूतेन। सुखोष्णेन। मृते पुनस्तस्मिन् कीटे क्लेदहरो विधिः कार्यः॥ ६४ ॥

प०—कीटे शतपद्यादौ कर्णस्रोतःप्रविष्टे कर्णं लवणाम्बुना पूरयेत्। शुक्तेन वा पूरयेत्। सुखोष्णेन तथा लवणाम्बुनापि सुखोष्णेन पूरयेत्। तत्रैव मृते कीटके क्लेदहरो विधिः कार्यः। कर्णस्रावो रक्तपूतिवाहोक्तश्च॥ ६४ ॥

हे०—कर्णगतस्य कीटशल्यस्योपायमाह—कीटे इति। लवणाम्बुना लवणयुक्तेनांबुना॥ ६४ ॥

**जातुषं हेमरूप्यादिधातुजं च चिरस्थितम्।**
**ऊष्मणा प्रायशः शल्यं देहजेन विलीयते॥६५॥**

स०—जातुषादिशल्यं देहजेनोष्मणा चिरं स्थितं प्रायशो विलीयते॥ ६५ ॥

प०—हेमरूप्यादिधातुजं शल्यं चिरस्थितं प्रायशो बाहुल्येन विलीयते विलीनं सम्पद्यते॥ ६५ ॥

हे०—जातुषादिशल्यं देहोष्मणेन विलीयत इत्याह—जातुषमिति। विलीयते विनश्यति॥ ६५ ॥

**मृद्वेणुदारुशृंगास्थिदंतवालोपलानि च।**
**शल्यानि न विशीर्यंते शरीरे मृन्मयानि वा॥**
**विषाणवेण्वयस्तालदारुशल्यं चिरादपि।**
**प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी॥६६**

स०—मृद्वेणुदार्वादिशल्यं देहोष्मणा न विलीयते। उपलशब्दस्य नपुंसकत्वं चिन्त्यम्। विषाणादिशल्यं प्रायो देहजेनोष्मणा न विलीयते। अपि

निर्भुज्यते पृथग्भवति । चिरादपि न पच्यते । कुत इत्याह । तदस्माद्विषाणादिशल्यं शीघ्रमेव पलासृजी पचति । अतो मांसरक्तपाकाद्देहजेन चोष्मणा प्रायो निर्भुज्यते ॥ ६६ ॥

प०—मृद्वेणुदार्वादीनि शल्यानि देहजेनोष्मणा न विलीयन्ते न विलयं यान्ति । विषाणशल्यं वेणुशल्यमयश्शल्यं चिरस्थितं प्रायशो बाहुल्येन देहजेनोष्मणा निर्भुज्यते कुटिलतां नीयते । तद्विषाणादिमयं शल्यं पलासृजी मांसरक्ते पचति पाकं नयति ॥ ६६ ॥

हे०—मृदादिशल्यं देहोष्मणा न विलीयत इत्याह—विषाणेति । एतेन मृदादिशल्यं चिराद्विलीयत इत्युक्तं भवति । विषाणवेण्वोरुभयत्रोपादानं विलयनाविलयनदर्शनार्थम् । विलयनाभावे हेतुमाह—प्राय इति । निर्भुज्यते वक्रीभवति तत् अविलयनं शल्यं कुटिलीभावकृतेन क्षोभेण यो मांसरक्तपाकस्तेन बहिरेव निर्याति नतु विलीयत इत्यर्थः । प्रायोग्रहणं सूचितं हेतुं विनाप्यविलयनं दर्शयेत् ॥ ६६ ॥

**शल्यं मांसावगाढं च स देशो न विदह्यते ।**
**ततस्तं मर्दनस्वेदशुद्धिकर्षणबृंहणैः ॥**
**तीक्ष्णोपनाहपानान्नघनशस्त्रपदांकनैः ।**
**पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः ॥ ६७॥**

स०—मांसावगाढे मांसांतर्निगूढे शल्ये सति यदि स देशो न विदह्यते पच्यते । यत्र तु तिष्ठति शल्यं ततस्तं मर्दनेन स्वेदेन वा कदाचित् शुद्ध्या वमनादिकया कदाचित्कर्षणेन कदाचिद्बृंहणेन कदाचित्तीक्ष्णोपनाहेन कदाचित्तीक्ष्णान्नपानेन । तीक्ष्णशब्दस्य प्रत्येकं संबंधः । कदाचिद्घनशस्त्रपदांकनैः । शस्त्रस्य पदानि । घनानि संहतानि च तानि शस्त्रपदानि च तेषामंकनं लक्षणं तैः मर्दनादिभिरेकेन द्वाभ्यां सर्वैर्वा यथाक्रमं पूर्वं शल्यं पाचयित्वा ततः पाटनैर्व्रणभेदनैर्हरेत् ॥ ६७ ॥

प०—मांसावगूढे मांसनिगूढे शल्ये स चेच्छरीरावयवो न विदह्यते न पच्यते तत्र तिष्ठति शल्यं मर्दनादिभिरुपायैः पाचयित्वा शल्यमाहरेत् । मर्दनेन हस्तोन्मथितेन तथा स्वेदनोपनाहादिना शु[illegible] वमनविरेचनादिकया कर्शनेन कार्श्योत्पा[illegible] लङ्घनादिना बृंहणेन बृहत्त्वकारिणा मांसाद्यु[illegible] गक्रमेण तीक्ष्णोपनाहेन तीक्ष्णद्रव्यबन्धनेन पानेनान्नेन च तीक्ष्णेन। शस्त्रस्य पदानि शस्त्रप[illegible] घनानि संनिहितानि तेषामङ्कनं लक्षणं तैर्म[illegible] दिभिः पूर्वशल्यं पाचयित्वा पाटनेनान्वेषणेन [illegible]नेन चाहरेत् ॥ ६७ ॥

हे०—विदाहोपायमाह—शल्य इति ॥ ६७ ॥

**शल्यप्रदेशयंत्राणामवेक्ष्य बहुरूपताम् ।**
**तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथाऽऽहरे[त्]**

स०—शल्यानि धातुविषाणवेण्वादिजानि । [प्रदे]शास्त्वङ्मांसादयः । यंत्राणि स्वस्तिकादीनि । तेषां रूपतामवेक्ष्य नानाकारतां ज्ञात्वा तैस्तैरुपायैरु[क्ता]नुक्तैर्विज्ञानसाधनैः कारणैर्मतिमान् भिषक् जानी[यात्] शल्यं तथाऽऽकर्षेदिति । संग्रहे चोक्तम् । व्रणे [illegible] प्रांतेषु नातिस्पर्शासहिष्णुषु । अल्पे शोफे च तापे निःशल्यमिति निर्दिशेदिति शल्याहरणविधिः ॥६[८॥]

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामष्टाविंशोऽध्यायः ॥ २८ ॥

प०—शल्यानि विषाणखण्डादीनि । प्रदेशा[स्त्व]ङ्मांसादयः । यन्त्राणि स्वस्तिकयन्त्रादीनि । बहुरूपतामवेक्ष्य ज्ञात्वा तैस्तैरुपायैरुक्तानुक्तैर्विज्ञ[ान]साधनहेतुभिर्मतिमान् बुद्धिमान् शल्यं विद्याज्[जा]नीयात् । तथाऽऽहरेदाकर्षेत्तैस्तैरुपायैरिति भद्रम्[्]।

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने शल्याहरणविधिरष्टाविंशोऽध्यायः ॥ २८ ॥

हे०—शल्ये अनुकूलसंग्रहार्थमुपायमाह—शल्यप्र[दे]शेति ॥ ६८ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने शल्योद्धृतिप्रक[रणं] सामस्त्येन निरूपितम् ॥ २८ ॥

# एकोनत्रिंशोऽध्यायः।

अस्मादनंतरं शस्त्रकर्मविध्यध्यायः प्रस्तूयते। यतोऽनंतरातीतेऽध्याये शस्त्रेण वा विशस्यादावित्युक्तमतस्तस्यैव शस्त्रकर्मणो विधानं वक्तुं युक्तमित्याह–

**अथाऽतः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः॥**

स०–शस्त्रस्य कर्म शस्त्रकर्म शस्त्रावधारणाय क्रिया तस्य विधिरितिकर्तव्यता शस्त्रकर्मविधिस्तम्। शेषं पूर्ववत्॥ १॥

प०–अस्यारम्भेऽयं सम्बन्धः। शस्त्रेण विकर्षणं कृत्वा किञ्चिच्छल्यमाहरणीयमित्यतोऽस्यारम्भः। शस्त्रस्य कर्म शस्त्रकर्म शस्त्रावचारणा क्रिया तस्य विधिरितिकर्तव्यता तमध्यायं व्याख्यास्यामः॥१॥

हे०–शस्त्रकर्मविधिमध्यायं व्याख्यातुं प्रतिजानीते-अथेति॥ १॥

–अथ ग्रंथारंभे निर्देष्टुं युक्तस्याऽपि शस्त्रविधेः पश्चाद्वचयं शस्त्रकर्मविधिस्ततः शस्त्रकर्मग्रंथ एवाऽऽदौ निर्देष्टुं युक्तः प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरमित्यादि न तु व्रणः संजायते प्राय इत्यादि तत्रोच्यते। शस्त्रकर्मविधेः पूर्वं विषयो निर्देष्टुं युक्तो यः शस्त्रकर्मविधेरुपाय इत्यस्यैव पूर्वमुपन्यासो युक्त इत्याह–

**व्रणः संजायते प्रायः पाकाच्छ्वयथुपूर्वकात्।**
**तमेवोपचरेत्तस्माद्रक्षन्पाकं प्रयत्नतः।**
**सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः॥ २॥**

स०–प्रायो व्रणः पाकात्संजायते। किंभूतात्। श्वयथुः पूर्वो यस्य पाकस्य स श्वयथुपूर्वकस्तस्मात्। श्वयथुपाकमंतरेणाऽपि शस्त्राद्यभिघाताद्व्रणो जायत इति प्रायोग्रहणम्। यस्माच्छ्वयथुपूर्वकात्पाकाद् व्रणः संजायतेऽतस्तमेव श्वयथुमुपचरेदुपक्रमेत्। किं कुर्वन्। पाकं प्रयत्नेन रक्षन्। कथम्। सुशीतलेपादिभिः। सुशीताभ्यां स्पर्शतो वीर्यतश्च लेपसेकाभ्यां तथाऽस्रमोक्षणेन तथा संशोधनेन वमनेन विरेचनेन वा। आदिग्रहणात्कषायपानघृतपानादीनां ग्रहणम्॥ २॥

प०–प्रायो भूयिष्ठं कृत्वा पाकाद्व्रणो जायते। श्वयथुपूर्वकात् श्वयथुः पूर्वं यस्य पाकस्य तस्मात्तथाविधात् पाकाद् व्रणो जायते। ततस्तमेव श्वयथुमेवोपचरेत् उपक्रमेत्। पाकं रक्षन् यथा पाकोऽस्य श्वयथोर्न जायते प्रयत्नतो नावहेलया च प्रयतो भूत्वा। कथं शीतैर्लेपैश्चन्दनादिभिः कृतैस्तथा सेकैः परिसेकैः शीतैरेव तथास्रमोक्षणेन रुधिरनिर्हरणेन संशोधनैर्वमनविरेचनादिभिः यथा समुपलक्ष्य वातादीन् पाकभयादुपचरेत्॥ २॥

हे०–शस्त्रकर्मविषयस्य व्रणस्योत्पत्तिमाह–व्रण इति। व्रणस्योत्पत्तिप्रतिबन्धमाह–तमेवेति। तमेव श्वयथुमेव शस्त्रकर्मणि भेषजविधाने भेषजासाध्ये शस्त्रकर्म विधातव्यमिति ज्ञापनार्थम्। उक्तं हि संग्रहे द्विविधेऽपि हि व्याधावुपायापेक्षे निजे आगंतौ वा भेषजविषयमतीते शस्त्रकर्म प्रयुज्यत इति॥ २॥

तस्य च शोफस्याऽऽमपच्यमानपाकाख्या अवस्थास्तिस्रो भवंतीत्याह–

**शोफोऽल्पोऽल्पोष्णरुक्सामः सवर्णः कठिनः स्थिरः॥ ३॥**

स०–आमो यः शोफः सः प्रमाणतोऽल्पस्तथाऽल्पोष्णस्तथाऽल्परुगल्पशूलस्तथा सवर्णस्त्वक्समानवर्णस्तथा कठिनो न मृदुः पक्ववत्तथा स्थिरो न पक्ववच्चलः। स आमः साम इति सोऽचि लोपे चेत्पादपूरणमिति सुलोपः॥ ३॥

प०–आमशोफोऽल्पो भवति। तथाल्पोष्माऽल्पसंतापस्तथाऽल्परुक् अल्पपीडः। सवर्णस्त्वक्समानवर्णः। कठिनो न मृदुः स्थिरोऽचलः॥३॥

हे०–अपक्वस्य श्वयथोर्लक्षणमाह–शोफ इति आम अपक्वः, ऊष्मा औष्ण्यं, रुक् शूलं, स्थिरः शनैर्वर्धमानः॥ ३॥

**पच्यमानो विवर्णस्तु रागी बस्तिरिवाततः।**
**स्फुटतीव सनिस्तोदः सांगमर्दविजृंभिकः॥**
**संरंभारुचिदाहोषातृड्ज्वरानिद्रतान्वितः।**
**स्त्यानं विष्यंदयत्याज्यं व्रणवत्स्पर्शनासहः ४।**

स०-सशोफः पच्यमानो विवर्णो न त्वक्समानवर्णः। तथा रागी लोहितवर्णः। तथा बस्तिरिवाततस्तब्धो वातपूर्णदृतिवत्। छागादीनां मूत्राधारो बस्तिरित्युच्यते। तथा स्फुटतीव सनिस्तोदः सह निस्तोदेन वर्तते सनिस्तोदः। नियतप्रबंधप्रवृत्ता रुङ् निस्तोदो भेदो विच्छिन्ना तु शूलमित्युच्यते। सांगेत्यादि। अंगानां मर्दः क्षोभः सहांगमर्दविजृंभिकाभ्यां वर्तते सांगमर्दविजृंभिकः। तथा संरंभादिभिर्युतः। अन्वितशब्देन प्रत्येकं संरंभादीनां संबंधः। संरंभो वाग्विषयातीतानां स्वसंवेद्यानामनेकरूपाणां ... पीडनविघट्टनच्छेदनदंशनादीनां रुजां प्रादुर्भावः। सर्वांगीणस्तीव्रो दाहः। अरतिमान् दाह उषा उच्यते। तथा न पच्यमानो घृतं स्त्यानमुपयुक्तं विलीनयति। तथा स्पर्शनं न सहते व्रणवत् ॥ ४ ॥

प०-पच्यमानः शोफो विवर्णो न त्वचः समानवर्णः। तथा रागी लोहितवर्णः। बस्तिरिवाततः स्तब्धो वातपूर्णदृतिवत्। तथा स्फुटतीव ताम्यत इव। सनिस्तोदः सूचीभिस्तुद्यत इव। प्रतोदभेदेन तुल्या रुक् निस्तोदः। तथा सहाङ्गमर्देन विजृम्भिकया च वर्तते। अङ्गाद्वा मर्दः अङ्गमर्दः क्षोभ इव तथा संरम्भादिभिर्युक्तः। अन्वितशब्दः प्रत्येकमभिसम्बध्यते। संरम्भो वाग्विषयातीतानां स्वसंवेद्यानां वेदनानामनेकरूपाणां प्रादुर्भावः। अरुचिरन्नानभिनन्दिता। दाहः सर्वाङ्गीणस्तीव्रो दाहः। स एवारतिमान् उषा उच्यते। तृट् पिपासा। उन्निद्रता निद्राविनाशः। एतैरन्वितो भवति। तथाऽऽज्यं घृतं स्त्यानं विष्यन्दयति विलीनं करोति। व्रणवत्स्पर्शनं न सहते ॥ ४ ॥

हे०-पच्यमानस्य शोफस्य लक्षणमाह—पच्यमान इति। विवर्णस्त्वग्वर्णविपरीतवर्णः। रागी रंजितशक्तिमान् स्वरूपं वर्णांतरं नयतीत्यर्थः। स्फुटति विश्लिष्टावयवत्वं भजति। संरंभो झटिति वृद्धिः ॥ ४ ॥

**पक्वेऽल्पवेगता म्लानिः पांडुता वलिसंभवः।**
**नामोऽन्तेषून्नतिर्मध्ये कंडूशोफादिमार्दवम्।**
**स्पृष्टे पूयस्य संचारो भवेद्बस्ताविवांभसः ॥५॥**

स०-पक्वे सत्यल्पवेगता भवति न तु संरंभः तथा म्लानिर्म्लानत्वम्। तथा पांडुत्वम्। वली चोद्भवः। तथांऽतेषु पर्यंतेषु नामो निम्नत्वं मध्ये उन्नतिः। नामोऽन्तेष्वित्युक्त्यैव मध्य उन्नतत्वं लब्धमेव पुनरुन्नतित्वग्रहणं त्वतिशयार्थम्। तेनोत्तुंग गम्यते। तथा कंड्वादिमृदुत्वं स्यात्। तथा स्पृष्टे तस्मिन् सति पूयस्य संचारो भवति। बस्तेरंतःस्थितस्य यथांऽभसः संचारः ॥ ५ ॥

प०-पक्वे तस्मिन् श्वयथावल्पवेगिता वेगित्वे संरम्भादर्शनम्। तथा म्लानिः प्रम्लानता। तथा पाण्डुता पाण्डुवर्णत्वम्। बलिसम्भवो बलिः तथा नामोऽन्तेषु पर्यन्तेषु नामो निम्नत्वम्। मध्ये मध्यप्रदेशे उन्नतिरुन्नतता उच्चैस्त्वम्। तथा कण्डूशोफादीनां मार्दवमल्पता। स्पृष्टे पूयस्य सञ्चारो भवेद्बस्ताविवाम्भस उदकस्य भवति ॥५॥

हे०-पक्वस्य शोफस्य लक्षणमाह—पक्व इति। अल्पवेगता उपद्रवाल्पत्वं, कंडूशोफादयो लक्षणानि उपद्रवास्त्वंगमर्दादयः ॥ ५ ॥

**शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात्।**
**रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः ॥**

स०-अनिलं विना शूलं न भवति। पित्तमंतरेण दाहो न स्यात्। कफोदयाद्विना शोफो न स्यात्। शोफः कफादिति वक्तव्य उदयग्रहणं विशेषद्योतनार्थम्। रक्ताद्दते रक्तं विना रागस्य लौहित्यस्य संभवो न। तेन कफाधिकैः सर्वैर्दोषैः शोणितसहितैः श्वयथोः पाकः स्यादिति गम्यते ॥ ६ ॥

प०-अनिलादृते वातं विना तस्मिन् पाके शूलस्योत्पत्तिः। पित्तादृते पित्तं विना न दाहस्य जन्म। कफोदयादृते कफोदयं विना शोफस्य प्रादुर्भावः। रक्तादृते रक्तं विना रागस्य लौहित्यस्यासम्भवः। अतोऽस्माद्धेतोर्दोषैर्वातपित्तश्लेष्मरक्तशोणितसहितैः श्वयथुः स्यात् ॥ ६

हे०-रक्तदोषत्रयकार्यत्वं पाकस्याह—शूलमिति ॥६॥

**पाकेऽतिवृत्ते सुषिरस्तनुस्त्वग्दोषभक्षितः।**
**वलीभिराचितः श्यावः शीर्यमाणतनूरुहः ॥७**

स०—पाके चातिवृत्तेऽतिक्रांते सुषिरोऽतस्थः शोफदेशः संपद्यते । तथा तनुस्त्वगस्मिन् स तनुत्वक् । तथा दोषभक्षितः । दोषशब्देनेह पूय उच्यते । तेन भक्षितत्वात्सुषिरत्वं तनुत्वक्त्वं चाऽस्य । तथा वलीभिराचितो व्याप्तः । तथा श्यामवर्णः । तथा शीर्यमाणतनूरुहः पतद्रोमा ॥ ७ ॥

प०—पाकेऽतिवृत्तेऽतिक्रान्ते शोफः शुषिरः शून्यः सम्पद्यते । तथा तनुत्वक् तन्वी त्वक् यस्मिन्नसौ तनुत्वक् । दोषभक्षितः पूयखादितोऽतएव शुषिरतनुत्वक्त्वम् । वलीभिस्त्वक्सङ्कोचैराचितो व्याप्तः। श्यावः कृष्णवर्णः । तथा शीर्यमाणानि तनूरुहाणि रोमाणि यस्याः ॥ ७ ॥

हे०--अतिपक्वस्य शोफस्य लक्षणमाह--पाक इति । अतिवृत्ते प्रमाणमतिक्रांते सुषिरः शून्योदरः, तनुत्वक् विरलत्वक्, दोषभक्षितः पूयभक्षितमांसादिः, तनूरुहं रोम ॥ ७ ॥

**कफजेषु तु शोफेषु गंभीरं पाकमेत्यसृक् ।**
**पक्वलिंगं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ॥**
**त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ।**
**रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ॥८॥**

स०—यद्यपि त्रिभिरेव दोषैः शोणितान्वितैः पाको जायते तथाऽपि कफजेष्वित्युक्तेरधिकतरकफेष्विति गम्यते । कफजेष्विति बहुवचननिर्देशाद्देहदेशबहुत्वार्थेषु देहदेशेषु कफो जायते तेषु कफजेषु शोफेषु गंभीरं दुर्लक्ष्यमतिशयेनांतर्निगूढत्वादसृक् पाकमेति । अत एव पक्वलिंगं पक्वलक्षणमस्पष्टं दुर्लक्ष्यं स्यात् । यत्र शीतगुणयोगाच्छीतश्चासौ शोफश्च तस्य भावः शीतशोफता । तथा त्वक्समानवर्णत्वम् । तथा रुजः स्तोकत्वम् । तथा घनस्पर्शत्वं निबिडस्पर्शता स्यादश्मवत् । हस्तादिना स्पृष्टे पाषाणतुल्यः स्पर्श उपलभ्यते । तं तथाभूतं श्वयथुपाकं रक्तपाकमित्येवं प्राज्ञो धीमान् ब्रूयान्न तु शोफं पक्वमिति कथयेत् । कथम् । मुक्तसंशयः शोणितपाको नाऽत्र शोफ इत्येवं वदेदित्यर्थः ॥ ८ ॥

प०—कफजेत्यादि । कफजेषु पुनः शोफेषु गम्भीरगतित्वाद्दुर्लक्ष्यपाकमसृग्रक्तमित्यागच्छति । पक्वलिङ्गं पक्वलक्षणं तत्रास्पष्टं दुर्लक्ष्यं भवति । यत्र यस्मिन् शीतशोफता शीतस्पर्शश्वयथुत्वम् । तथा त्वक्सावर्ण्यं त्वक्समानवर्णता । रुजोऽल्पत्वं वेदनाल्पता । घनस्पर्शता भवेदश्मवत्तं तथाभूतं रक्तपाकमित्येवं ब्रूयात् कथयेत् न तत्र मोहं गच्छेत्प्राज्ञः । कोविदो बुद्धिमान् मुक्तसंशयोऽपगतसंशयः ॥ ८ ॥

हे०--रक्तपाकस्य लक्षणमाह---कफजेष्विति । गंभीरं यदसृक् पाकमेति न मांसं ततस्तस्मादुक्तं पक्वलिंगं स्पष्टं नोत्पद्यते, तेन यत्र शीतशोफत्वादि तं रक्तपाकं ब्रूयात् ॥ ८ ॥

**अल्पसत्त्वेऽबले बाले पाके चाऽत्यर्थमुद्धते ।**
**दारणं मर्मसंध्यादिस्थिते चाऽन्यत्र पाटनम् ९**

स०—अल्पसत्त्वे सति तथा दुर्बले तथा बाले एतेषु जाते श्वयथौ तथा पाकादात्यर्थमुद्धतेऽतिक्रांते च श्वयथौ दारणं कार्यं व्रणप्रतिषिधदृष्टैर्दारणद्रव्यैः यथा गुग्गुल्वतसिगोदंतस्वर्णक्षीरीकपोतविट् । क्षारौषधानि क्षाराश्च पक्वशोफविदारणमिति न केवलमल्पसत्त्व इत्यादिके श्वयथौ दारणं कार्यं यावन्मर्मसंध्यादिस्थितेऽपि । पाटनं शस्त्रेण । अन्यत्रेति दारणविषयानिर्दिष्टे स्थाने शस्त्रेण पाटनं कार्यम् ॥ ९ ॥

प०—अल्पसत्त्वे स्तोकचित्ते नरे सति तथाऽबले दुर्बले शस्त्राक्षमे हीनबले पुंसि तथा बाले ऊनषोडशवर्षे पाकादात्यर्थमुद्धतेऽतिक्रान्ते तथा मर्मसन्ध्यादिस्थितेश्च यथा तीक्ष्णोष्णद्रव्यैर्दारणं कुर्वीत। तथाचोत्तरतन्त्रे निर्दिष्टम्—“ गुग्गुल्वतसिगोदन्तस्वर्णक्षीरीकपोतविट् । क्षारौषधानि क्षाराश्च पक्वशोफविदारणम् ” इति । अन्यत्रेतरस्मिन् पाटनमथ शस्त्रेण कार्यमिति वाक्यशेषः ॥ ९ ॥

हे०--अथ पाटनम् । तत्र दारणपाटनयोर्विषयभेदमाह—अल्पसत्त्व इति । सत्त्वं मानसं बलं, पाके चात्यर्थमुद्धते अतिपक्वे शोफे मर्मसंध्यादिष्वनवचार्यं शस्त्रेष्वंगेषु स्थिते च दारणम्, अन्यत्र पाटनम् । दारणं क्षारादिना द्वारकरणं, पाटनं शस्त्रेण ॥ ९ ॥

आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः।
रुजोऽतिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः १०॥

स०-आमस्य शोफस्य शस्त्रेण छेदे सति सिरास्नायुव्यापदो भवंति। तथाऽसृजोऽतिस्रावः स्यात्। तथा रुजाया अतिवृद्धिस्तथा विदरणं विसर्पो वा क्षतोत्थः स्यात्॥ १०॥

प०-आमच्छेदे आमपाटने सति शिरास्नाय्वां व्यापदो विघातस्तथाऽसृजो लोहितस्यातिप्रवृत्तिः। रुजोऽतिवृद्धिर्वेदनानामभिवर्धनम्। दरणं त्वगादीनामवदारणम्। क्षतोद्भवो वा विसर्पः स्यात्॥१०॥

हे०-शिरानाशादिदोषादामो न च्छेद्य इत्यर्थः १०॥

तिष्ठन्नंतः पुनः पूयः सिरास्नाय्वसृगामिषाम्।
विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः ॥११॥

स०-अंतरंतरे तु पूयस्तिष्ठन् सन् सिरादीन् दहति। कः कमिव। अनलस्तृणोलपमिव ॥११॥

प०-पाकेऽतिक्रान्तेऽप्रपाटिते च शोफे पूयोऽन्तस्तिष्ठन् विवृद्धः सन् शिरादीन् दहति। यथाऽनलोऽभिवृद्धस्तृणोलपं दहति॥ ११॥

हे०-पक्वस्य छेदने दोषमाह-तिष्ठन्निति। तृणोलपं तृणगुल्मम्॥ ११॥

यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते।
श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ॥१२॥

स०-यः पुरुषोऽज्ञानान्मोहादामं छिनत्ति। योऽपि पक्वमुपेक्षते न पाटयति। तौ नरौ श्वपचतुल्यावातुरव्यापादनात्। तद्व्यापादनं तु कुतो विधत्त इत्याह। अनिश्चितकारिणावसमीक्ष्यविधायिनौ यतः॥ १२॥

प०-यो वैद्यः आमं शोफं छिनत्ति विदारयति अज्ञानादवोधान्मोहात्। यश्चापरो वैद्यः पक्वं शोफमुपेक्षते तत्रोपेक्षां कुरुते अज्ञानादेव तौ द्वावपि श्वपचवद्विज्ञेयौ अनिश्चितकारिणौ अनिरूपितकरणशीलौ॥ १२॥

हे०-आमपक्वलक्षणानभिज्ञं निंदति-यश्छिनत्तीति॥ १२॥

प्राक्शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम्।
पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाक्षमः।
न मूर्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते॥१३॥

स०-शस्त्रकर्मणः प्राक् पूर्वमातुरमिष्टमन्नं यद् त्र[illegible]ऽपथ्यमपि तद्बलाधानार्थं भोजयेत्। तथा यो वेद[illegible]क्षमः शस्त्रव्यथामसहिष्णुस्तमातुरं मद्योचितं ती[illegible]तीव्रमदं मद्यं पाययेत्। एवं सति यस्स्यात्तदाह-मूर्छत्यन्नसंयोगादन्नोपयोगान्न मुह्यति। तीक्ष्णमद्यपान्मत्तः सन् शस्त्रं न्यस्तमंगे न बुध्यते। न चेतयते तत्कदर्थनया न कंपत इत्यर्थः॥ १३॥

प०-शस्त्रकर्मणः प्राक् पूर्वं नैव तावच्छस्त्र[illegible] क्रियते यावत्प्रथममातुरं रोगिणमन्नमाहारमिष्ट[illegible]भिप्रेतं बललाभार्थं भोजयेत्। तथा पानपं [illegible] मद्यं पाययेत् तीक्ष्णं न मृदु। यो वेदनाक्षमः शस्त्रव्यथामसहिष्णुरातुरः संयोगादन्नश्लेषान्न मूर्छां न मोहं याति। तीक्ष्णमद्यपानान्मत्तः शस्त्रं न्यस्तमङ्गेषु न बुध्यते तत्कदर्थनक्षम एव॥ १३॥

हे०-शस्त्रकर्मणः पूर्वं भोजनमाह-प्राक्शस्त्रकर्म इति। तीक्ष्णमद्यपानमाह-पानपमिति। यो वेदनाक्ष[illegible] शस्त्रव्यथां सोढुमशक्तो मद्यपः तस्य मद्यपानम्, अन्यर भोजनमेव॥ १३॥

अन्यत्र मूढगर्भाश्मसुखरोगोदरातुरात् ॥१४

स०-अश्मशब्देनाश्मरी गृह्यते। मूढगर्भादिभि आतुरस्तं वर्जयित्वेष्टभोजनं मद्यपानं च कारयितव्यम्॥ १४॥

प०-अन्यत्रशब्दो वर्जनार्थे। मूढगर्भादिभिर[illegible]तुरं वर्जयित्वा। मूढगर्भो मृतगर्भः। अश्मशब्देनाश्मर्युपलक्ष्यते। मुखरोगा आस्यविकाराः। उद[illegible]रजठरविकारः॥ १४॥

हे०-मूढकर्मादौ भोजने मद्यपाने निषेधति-अन्यत्रेति॥ १४॥

१ अत्र "तृणोपलम्" "तृणोच्चयम्" इति पाठभेदौ वर्तेते।

**अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ।**
**संमुखो यंत्रयित्वाऽऽशु न्यस्येन्मर्मादि वर्जयन् ॥**
**अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ।**
**सकृदेवाऽऽहरेत्तच्च ॥ १५ ॥**

स०—अथशब्देन मंगलवाचिना संग्रहोक्तमर्थं सूचयति।यथा सुमुहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्रं प्रणतेष्टदेवतमित्यादि आहृतं ढौकितं समीपानीतमुपकरणं तत्कालयोग्यं यंत्रशस्त्राग्निजांबवौष्टपिचुप्लोतस्नेहनमधुकल्कादिकं यस्य तमातुरं प्राङ्मुखं पूर्वाभिमुखं वैद्यः संमुखः प्रत्यङ्मुखो यंत्रयित्वा शस्त्रमाशु न विलंबितं न्यस्येन्निक्षिपेत् । मर्मादि वर्जयन् मर्मसिरासंध्यादीन् परिहरन् । तथाऽनुलोमं कृत्वा न प्रातिलोम्येन । किंभूतं शस्त्रम् । सुनिशितमतितीक्ष्णम् । तच्च शस्त्रमापूयदर्शनादाहरेन्न त्वधिकं तत्रैव स्थाप्यम्। तच्च सकृदेव न बहून् वारान्न्यस्येत् ॥ १९ ॥

प०—अथेति मङ्गलार्थे । आहृतमानीतं तत्कालयोग्यमुपकरणं यस्य । यंत्रशब्दात् क्षारजाम्बवौष्ठपिचुप्लोतपत्रसूत्रचर्मपट्टमधुस्नेहकषायकल्कसेकोदककुम्भशीतोष्णोदककटाहव्यञ्जनादिव्रणोपयोगिसर्वोपकरणमातुरं प्राङ्मुखं सम्मुखो वैद्यो यन्त्रयित्वा शस्त्रमाशु शीघ्रमेव न्यस्येत् निक्षिपेत् । मर्मादि वर्जयन् मर्मशिरास्नायुसन्ध्यस्थिधमनीं परिहरन् अनुलोमं कृत्वा शस्त्रं सुनिशितं तीक्ष्णमापूयदर्शनात् पूयदर्शनं यावत् सकृदेव एकवारमाहरेत् आकर्षेत् ॥ १५ ॥

हे०—शस्त्रकर्मविधिमाह—अथेति । संग्रहे तु अथोपहृतयन्त्रशस्त्रक्षाराग्निजाम्बवोष्ठपिचुप्लोतपट्टसूत्रचर्मपट्टमधुस्नेहकषायलेपकल्कसेकोदकुम्भशीतोष्णोदककटाहव्यजनादिव्रणोपयोगिसर्वोपकरणमास्तृतशयनीयमुपस्थितस्थिरस्नेहबलवदवलंबकपुरुषमिष्टेऽहनि शुभे मुहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्रं प्रणतेष्टदेवतामुक्तवन्तमातुरं प्राङ्मुखमुपवेश्य संवेश्य वा यंत्रयित्वा प्रत्यङ्मुखो वैद्यो मर्मशिरास्नायुसंध्यस्थधमनीं परिहरन् अनुलोमं शस्त्रं निदध्यादिति । निखातशस्त्रस्याहरणाविधिमाह—सकृदेवेति । सकृदेकवारमाहरेन्नांतरांतरा मुञ्चेदित्यर्थः ॥ १५ ॥

**पाके तु सुमहत्यपि ।**
**पाटयेद् द्व्यंगुलं सम्यग्द्व्यंगुलत्र्यंगुलांतरम् ।**
**एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ।**
**अंगुलीनालवालैर्वा यथादेशं यथाशयम् ॥**
**यतो गतां गतिं विद्यादुत्संगो यत्र यत्र च**
**तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ।**
**आयतं च विशालं च यथ दोषो न तिष्ठति ॥१६**

स०—पाके तु सुमहत्यपि पाटयेत् द्व्यंगुलं द्व्यंगुलपरिमाणं व्रणं सम्यक्कुर्यान्नाधिकम् । द्व्यंगुलेत्या अंगुलद्वयमथवाऽङ्गुलत्रयमंतरीकृत्य पुनरन्यं व्रणं कुर्या त्वासन्नम् । तथैषिण्या सम्यगेषित्वा परितः समंत त्सुनिरूपितं सुपर्यालोचितम् । न केवलमेषिण्या य वदंगुल्या नालेन पद्मोत्पलादिजेन वालैर्वा वराहा संबंधिभिरन्वेष्य यथादेशं यथाशयं व्रणं कुर्यात् तं च प्रदेशं दर्शयितुमाह—यतो यस्मिन्प्रदे गतां दूरयातां गतिं नाडीं जानीयात्तस्मि प्रदेशे व्रणं कुर्यात् । यत्र यत्र श्वयथुप्रं उत्संगमुन्नतिं विद्यात्तत्र तत्र प्रदेशे व्रणं कुर्या किंभूतं व्रणम् । सुष्ठु विभक्तौ पार्श्वापरपार्श्वादिविभ यस्य तं तथाविधम् । तथा निराशयम् । न वि आशयः पूयादेर्दोषस्य स्थानं यस्य तथाभूतं निरा कुर्यात् तथाऽऽयतं दीर्घम् । तथा विशालं विस्त कुर्यात् । एवं कृते सति दोषः पूयाख्यो न तिष्ठति संस्थानं लभते ॥ १६ ॥

प०—सुमहत्पाके द्व्यङ्गुलं शस्त्रपदमुक्तं त्र्यङ्गु लान्तरं चातिसमीक्ष्य त्र्यङ्गुलं पाटयेत् । द्व ङ्गुलं परिमाणप्रमाणं कुर्यात् । द्व्यङ्गुलं त्वव त्र्यङ्गुलं वा पुनरन्यत्रणं कुर्यात् । एषिण्या प सम्यगेषित्वा सुनिरूपितं सुनिश्चितं कृत्वा । अ अङ्गुल्यादिभिरेषित्वा यथादेशं शरीरदेशानतिक्र तथा यथाशयमाशयानतिक्रमेण विवृते प्रदेशे व प्रदेशिन्येषित्वा नातिविवृते गम्भीरमांसले चैषि विपरीते शिरीषादिनालेनातिसंवृतसुकरवालैरेष त्वा व्रणं कुर्यात्।यतो यस्मात् शरीरप्रदेशात् य शरीरप्रदेशे गतां दूरयातां गतिं नाडीं विद्या नीयात् तस्मिन् प्रदेशे व्रणं कुर्यात् । यत्र यत्र

श्वयथुप्रदेशे उत्सङ्ग उन्नतिर्दृश्यते तत्र तत्र शरीरप्रदेशे व्रणं कुर्यात् । सुविभक्तः पार्श्वादिविभागो यस्य सम्यक् जायतेऽसौ सुविभक्तः तं तथाभूतं तथा निराशयं न विद्यते आशयः पूयादिदोषस्य स्थानं यस्य तम् । तथाऽऽयतं दीर्घं विशालं विस्तीर्णमेवंलक्षणे व्रणे सति दोषः पूयाख्यो न तिष्ठति न स्थितिं बध्नाति ॥ १६ ॥

हे०—पाटनप्रमाणमाह—पाक इति । व्रणपाटनं द्व्यङ्गुलं त्र्यङ्गुलं वान्तरं कार्यम्।पाटनस्थानमाह-एषितेति। एषिण्या विभाग उक्तः। संग्रहे विवृते प्रदेशे नामप्रदेशेष्वेषिता नातिवृत्तं गंभीरं मांसलं चैषिण्या विपरीतं करीरादिनालेन अतिसंवृते शूकरवालेनेति । देशः शरीरावयवः, आशयो व्रणसंस्थानं, गतिर्नाडीव्रणः, उत्सङ्गः पूयस्खलनस्थानं, विभक्तो मांसादिदोषरहितः, आयत उत्सङ्गः ॥ १६ ॥

**शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथुः ।**
**असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥१७॥**

स०—वैद्यस्य शस्त्रकर्मणि पाटनादौ शौर्यं वीर्यं शस्यते। तथा आशुक्रिया चतुरहस्तता। तथा तीक्ष्णं शस्त्रम्। तथा स्वेदश्च वेपथुश्च न विद्यमानौ तौ यस्य स एवम्। स्वेदाभावः वेपाभावश्चेत्यर्थः । असंमोहस्तत्कालोचितकार्यकरणे सम्यक्प्रवृत्तिः । ननु शौर्यं वैद्यस्य शस्यत इत्युक्त्यैव स्वेदकंपाभावः प्रत्यपादि । तथा च स्वेदवेपथू भीरोरेव संभवतो न शूरस्येत्यनर्थकमस्वेदवेपथुरिति । अत्राचक्ष्महे । सत्यमेतौ भीरुगुणौ किंतूष्णकालवशात् प्रकृतिवशाद्वा यस्य स्वेदो वेपथुश्च भवतस्तत्परिहारार्थमेतदुक्तम् । सस्वेदस्य हि वैद्यस्य शस्त्रकर्म कर्तुमुद्यतस्य शस्त्रग्रहणमेव न तथा संपद्यते तद्वत्सकंपस्यापि । तस्मात्तत्परिहारो युक्तः ॥ १७ ॥

प०—शौर्यादिकं शस्त्रकर्मणि क्रियमाणे वैद्यस्य शस्यते इष्यते । शौर्यं शूरता धैर्यम् । आशुक्रिया चतुरहस्तता शीघ्रं शस्त्रकर्मकरणम् । तीक्ष्णं शस्त्रं सुनिशितं सुधारम् । स्वेदो देहादुदकम् । स्पर्शान् वेपथुः कम्पः । संमोहो वैचित्त्यम् ॥ १७ ॥

हे०—पाटनविधावनुक्तमाह—तिर्यगिति ॥ १८ ॥

**तिर्यक्छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ।**
**कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवङ्क्षणे ॥ १८ ॥**

स०—ललाटादिदेशेषु तिर्यक्छेदः कार्यः । दन्तवेष्टको दन्तपिण्डिका दन्ताधार उच्यते ॥ १८ ॥

प०—तिर्यक् छिन्द्यात् छेदं कुर्यात् । दन्तवेष्टो दन्तपिण्डिका दन्ताधार उच्यते । जत्रुर्ग्रीवा । गलः कण्ठः । वङ्क्षणमूरुमूलम् ॥ १८ ॥

हे०—[illegible]—तिर्यगिति ॥ १९

**अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् १९**

स०—अन्यत्र प्रदेशे तिर्यक्छेदनात् सिराणां स्नायूनां च व्यापत्तिः स्यात् ॥ १९ ॥

प०—अन्यत्राभिमत प्रदेशे तिर्यक्छेदनात् सिराणां स्नाय्वां च विपाटनमपकारो भवति ॥ १९ ॥

हे०—[illegible]

**शस्त्रेऽवचारिते वाग्भिः शीताभिश्च रोगिणम् ।**
**आश्वास्य परितोऽङ्गुल्या परिपीड्य व्रणं ततः ।**
**क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ।**
**गुग्गुल्वगुरुसिद्धार्थहिङ्गुसर्जरसान्वितैः ।**
**धूपयेत्पटुषड्ग्रन्थानिम्बपत्रघृतप्लुतैः ॥ २० ॥**

स०—[illegible] ॥ २० ॥

प०—शस्त्रेऽवचारितेऽनन्तरं रोगिणमातुरमाश्वास्य वाग्भिस्तत्कालोचिताभिर्मधुराभिर्गिरिः परिपीड्य [illegible] नादिदानानन्तरं परितः समन्तात् अङ्गुल्या परि-

पीडय पीडयित्वा पूयादिदोषपरिहाराय ततोऽनन्तरं कषायेण यथायोगं यथादोषमुचितेन क्षालयित्वा प्रक्षाल्यानन्तरं प्लोतेन कार्पासादिमयेन वस्त्रेण चापनीय जलाक्ततां व्रणादपसार्यानन्तरं धूपयेत् । गुग्गुल्वादिभिर्धूपैर्निम्बपत्रान्तैर्घृतप्लुतैर्बहुलैरिति ॥ २० ॥

हे०—पाटनानन्तरं कर्तव्यमाह—शस्त्र इति । सर्जरसो रसालः, षड्ग्रंथा वचा ॥ २० ॥

**तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ।**
**दिग्धां वर्तिं ततो दद्यात्तैरेवाऽऽच्छादयेच्च तम्॥**

स०—ततोऽनंतरं वर्तिं कार्पासादिमयीं व्रणांतः प्रवेशयेद्वैद्यः । किंभूताम् । दिग्धाम् । कैः तिलकल्काज्यमधुभिः । वातव्रणे तिलपिष्टदिग्धां पित्तव्रणे घृतदिग्धां कफव्रणे मधुदिग्धाम् । केचित्तु सर्वैरेव तैर्युगपद्दिग्धामित्याहुः । नच केवलं तिलादिभिर्यावद्यथास्वं यद्यस्य दोषस्य स्वं भेषजं तेन च दिग्धाम् । तैरेव तिलकल्कादिभिर्व्रणांतःप्रविष्टां तां वर्तिमाच्छादयेत्स्थगयेत् ॥ २१ ॥

प०—ततोऽनन्तरं व्रणे वृत्तिविकेशिकापरसंज्ञां सूक्ष्मां कार्पासादिवस्त्रमयीं व्रणान्तःप्रवेशयोग्यां दद्यात् । दिग्धामनुलिप्तां यथादोषमौषधकल्केन तथा तिलकल्काज्यमधुभिस्तैरेव तिलकल्कादिभिस्तां वर्तिं व्रणान्तःप्रविष्टां छादयेत् पूरयेत् । न केवलं तैस्तं छादयेद्यावत् ॥ २१ ॥

हे०—यथास्वं यस्मिन् व्रणे यद्भेषजमुक्तं तेन चशब्दः समुच्चये । दिग्धां लिप्तां तैर्वर्तिलेपौषधैः तं व्रणम् ॥२१॥

**घृताक्तैः सक्तुभिश्चोर्ध्वम् ॥ २२ ॥**

स०-ऊर्ध्वं तदुपरिष्टाद्घृतयुक्तैःसक्तुभिराच्छादयेत्। संग्रहे चोक्तम् । नातिभृष्टयवसक्तुभिर्घृताक्तैर्भोजनांतेऽम्भसा दक्षिणांगुलिभिः सुमृदितैरवच्छाद्येति॥ २२ ॥

प०—घृताक्तैर्मिश्रितैर्भोजनान्तेऽम्भसा दक्षिणाङ्गुलीभिः सुमृदितैः सक्तुभिरछादयेत् ॥ २२ ॥

हे०—ऊर्ध्वं पूर्वलेपस्य घृताक्तसक्तुलेपः । संग्रहे तु नातिभृष्टयवसक्तुभिर्घृताक्तैर्भोजनान्तेऽअम्भसा दक्षिणांगुलिभिः सुमृदितैरिति ॥ २२ ॥

**घनां कवलिकां ततः ।**
**निधाय युक्त्या बध्नीयात्पट्टेन सुसमाहितम् ।**
**पार्श्वे सव्येऽपसव्ये वा नाऽधस्तान्नैव चोपरि२३**

स०—ततो व्रणांतःप्रविष्टवर्तिच्छादनानंतरं कवलिकां बहुवस्त्रखंडपुटनिर्वर्तितां निधाय संस्थाप्य पट्टेन निविडवस्त्रखंडेन प्रकृतत्वाद् व्रणं बध्नीयात् । कथम् । युक्त्या दोषकालानुगुणया । अत एव संग्रहे जगाद । वातश्लेष्मोद्भवांस्तत्र द्विस्त्रिर्वा वेष्टयेद्व्रणान् । सकृदेव परिक्षिप्य पित्तरक्ताभिघातजान् । तथोक्तम् । शस्त्रक्षतरुजायां तु प्रततायां यष्टीमधुकसर्पिषोष्णेन व्रणं सिंचेत् । उदकुंभादपो गृहीत्वा प्रोक्षन् परित इति । कथं बध्नीयात्। सुसमाहितं कृत्वा च न हेलया। वामपार्श्वे दक्षिणपार्श्वे वाऽधस्तान्न न बध्नीयान्नैव चोपर्यूर्ध्वं बध्नीयात् ॥ २३ ॥

प०—ऊर्ध्वं घनां कवलिकां बहुवस्त्रपुटवर्तितां निधाय स्थापयित्वा दत्वा युक्त्यादीन वीक्ष्य पट्टेन दृढेन वस्त्रेण खण्डेन मृदुना व्रणं बध्नीयात्। सुसमाहितं कृत्वा नाविद्धसमं कुचितं मृदुं पट्टं निवेश्य पार्श्वे मध्ये वामपार्श्वे अपसव्ये दक्षिणे पार्श्वेनाधस्ताद्व्रणस्य बध्नीयात ॥ २३ ॥

हे०—कवलिकां वस्त्रखण्डमयीं पालीं पट्टेन घनवस्त्रखंडेन सुसमाहितं सुष्ठु सन्निविष्टं यथा भवति तथा पार्श्वे बध्नीयात् ग्रंथिं बध्नीयात् । संग्रहे—"वातश्लेष्मोद्भवांस्तत्र द्विस्त्रिर्वा वेष्टयेद्व्रणान् । सकृदेव परिक्षिप्य पित्तरक्ताभिघातजान् ॥" शस्त्रक्षतरुजायां तु प्रततायां तु यष्टिमधुकसर्पिषोष्णेन व्रणं सिंचेत् इति ॥ २३ ॥

**शुचिसूक्ष्मदृढाः पट्टाः कवल्यः सविकेशिकाः ।**
**धूपिता मृदवः श्लक्ष्णा निर्वलीका व्रणे हिताः॥**

स०—तथा शुचयः सूक्ष्मसूत्रा दृढाश्च पट्टा हिताः । तथा कवलिकाः सविकेशिकाश्च व्रणे हिताः । किंभूताः। धूपितास्तथा मृदवस्तथा श्लक्ष्णास्तथा वलीरहिताः ॥ २४ ॥

प०—पट्टाः कवल्यः विकेशिकाश्च शुचयः शुद्धाः सूक्ष्मास्तनवः दृढा अभङ्गुरास्तथा धूपिता गुग्गुल्वादिभिः । मृदवः कोमलाः श्लक्ष्णा अपरुषाः

ग्रन्थिरहिताः निर्वलीका वलीभिर्वर्जिताः व्रणे हिता भवन्ति ॥ २४ ॥

हे०-पट्टकवलिकां विकेशिकानां विशेषमाह—शुचि सूक्ष्मेति । विकेशिका वर्तिः ॥ २४ ॥

**कुर्वीताऽनंतरं तस्य रक्षां रक्षोनिषिद्धये ।**
**बलिं चोपहरेत्तेभ्यः ॥ २५ ॥**

स०-अनंतरं रोगिणः कृतशस्त्रकर्मणो व्रणे रक्षां कुर्यात् । किमर्थम् । रक्षोनिषिद्धये पिशिताशनराक्षसादिनिषेधाय । तेभ्यश्च रक्षोभ्यो बलिमुपहरेद्द्यात् ॥ २५ ॥

प०-तस्य कृतशस्त्रस्य कर्मणोऽनन्तरं रक्षां कुर्वीत । रक्षोनिषिद्धये रक्षोऽभिभवननिषेधार्थं तेभ्यो रक्षोभ्यो बलिमुपहारं यथायोग्यमुपहरेत दद्यात् ॥ २५ ॥

हे०-रक्षामाह-कुर्वीतेति । उदकुम्भाचापो गृहीत्वा प्रोक्षयेत् परितो यावकार्थपर्णसपर्यादिभिरस्य रक्षां कुर्यादिति । बलिमाह-बलिमिति ॥ २५ ॥

**सदा मूर्ध्नाऽवधारयेत् ।**
**लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।**
**वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि २६**

स०-सर्वकालं चौषधीर्मूर्ध्ना धारयेत् । ता एवाह लक्ष्मीमित्यादि । लक्ष्मीं पद्मचारिणीम् । गुहां पृश्निपर्णीम् । अतिगुहां शालिपर्णीम् । जटिलां मांसीम् । ब्रह्मचारिणीं ब्रह्मयष्टिकाम् । वचामुग्रगंधाम् । छत्रां शतपुष्पाम् । अतिच्छत्रां विषाणिकाम् ॥ २६ ॥

प०-सदा सर्वकालमौषधीरिमा मूर्ध्ना शिरसा धारयेत् । लक्ष्मीः शमी । गुहा पृश्निपर्णी । अतिगुहा शालिपर्णी । जटिला मांसी । ब्रह्मचारिणी ब्रह्मयष्टिका । छत्रा शतपुष्पिका । अतिच्छत्रा विषाणिका । दूर्वा शाद्वलम् । सिद्धार्थकाः सर्षपाः॥२६॥

हे०-औषधीविधारणमाह-सदेति । लक्ष्मीं शमीं, गुहेति । गुहे-शालिपर्णीपृश्निपर्ण्यौ, जटिलां मांसीं, ब्रह्मचारिणीं ब्राह्मीं, छत्रातिछत्रे शतपुष्पद्वयम् ॥ २६॥

**ततः स्नेहदिनेहोक्तं तस्याचारं समादिशेत् २७॥**

स०-ततोऽनंतरं तस्य व्रणिन आचारमादिशेत् कतमम् । स्नेहदिनेहोक्तम् स्नेहस्य दिनं स्नेहदिनं स्नेहपानोपलक्षितमहस्तत्रेहा चेष्टा तस्यामुक्तं स्नेहपानविध्युपदिष्टमुष्णोदकोपचारी स्यादित्यादिकम् ॥ २७ ।

प०-ततोऽनन्तरं तस्य व्रणिनः आचारमादिशेत् कथयेत् । स्नेहदिनेहोक्तं स्नेहपानविध्युक्तमुष्णोदकोपचारादिलक्षणदिनेनोक्तं दिनचर्याध्यायोक्तम् ॥ २७ ॥

हे०-आहारविहारनियममाह-तत इति। स्नेहदिनेहोक्तं स्नेहपानविधिदिनचर्योक्तम् ॥ २७ ॥

**दिवास्वप्नो व्रणे कंडूरागरुक्शोफपूयकृत् २८॥**

स०-दिवास्वप्नो व्रणे कंड्वादिकृत् । तस्माद् व्रणिनाऽहःस्वप्नो न सेव्यः ॥ २८ ॥

प०-दिवास्वप्नो व्रणे कण्डूरागरुक्शोफपूयान् करोति ॥ २८॥

हे०-दिवास्वप्नं विशेषतो निषेधति-दिवास्वप्न इति ॥ २८ ॥

**स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलितस्रुते ।**
**शुक्रे व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥**

स०-स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैः पूर्वं स्वस्थानाच्चलितं पश्चात्स्रुतं तस्मिंश्चलितस्रुते शुक्रे सत्यसंसर्गेऽपि तासामसंबंधेऽपि मैथुनमंतरेणाऽपि व्यवायजान्मैथुनोत्थान् दोषानवाप्नुयात् । तस्मात्स्त्रीस्मरणसंस्पर्शदर्शनादि वर्जनीयमित्यर्थः ॥ २९ ॥

प०-असंसर्गेऽपि स्त्रीभिः स्त्रीणां स्मृत्यादिनैव शुक्रस्य चलितस्रुतत्वादेव व्यवायजान् मैथुनोद्भवान् रोगान् प्राप्नुयात् । पूर्वं स्थानाच्चलितं पश्चात् स्रुतं तस्मिन् तथाभूते शुक्रे सति व्यवायजान् दोषान् संसर्गे सम्बन्धेऽपि तासां मिथुनभावं विना तज्जान् दोषान् अवाप्नुयात् ॥ २९ ॥

हे०-स्त्रीसङ्गं निषेधति-स्त्रीणामिति ॥ २९ ॥

**भोजनं तु यथासात्म्यं यवगोधूमषष्टिकाः ।**
**मसूरमुद्गतुवरीजीवंतीसुनिषण्णकाः ॥**

**बालमूलकवार्ताकतंडुलीयकवास्तुकम् ।**
**कारवेल्लककर्कोटपटोलकटुकाफलम् ॥**
**सैंधवं दाडिमं धात्री घृतं तप्तहिमं जलम् ।**
**जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ।**
**भुंजानो जांगलैर्मांसैः शीघ्रं व्रणमपोहति ३०॥**

स०—भोजनं तु यथासात्म्यं यद्यस्य सात्म्यं यवादि । तथा जीवंत्यादिशाकं च तथा सैंधवादिकम् । पुराणशालिभक्तं स्निग्धं सस्नेहं तथाऽल्पं जांगलैर्मांसैः सह भुंजान उष्णोदकोत्तरं यथा भवत्येवं व्रणी शीघ्रं व्रणमपोहति ॥ ३० ॥

प०—आतुरो यथासात्म्यं भोजनं भुञ्जानः शीघ्रमाशु व्रणमपोहत्युत्तरति त्यजति स्वस्थो भवतीत्यर्थः । यवादयोऽन्नार्थं, मसूरमुद्गादयो यूषार्थं, तुवर्याढकीजीवन्तीसुनिषण्णकादि शाकार्थं, दाडिमामलकसैन्धवलवणं संस्काराय, तप्तं हिमं जलं क्वथितं तोयं पानीयम् । जीर्णशाल्योदनं समतीतशालिभक्तम् ॥ ३० ॥

हे०—भोजनमाह—भोजनमिति । कटुकाफलं कटुरोहिणीफलम् । भोजनविशेषमाह—जीर्णशाल्योदनमिति ॥ ३० ॥

**अशितं मात्रया काले पथ्यं याति जरां सुखम्।**
**अजीर्णे त्वनिलादीनां विभ्रमो बलवान् भवेत्।**
**ततः शोफरुजापाकदाहानाहानवाप्नुयात् ३१॥**

स०—मात्रया काले भुक्तं पथ्यं सुखेन जरां याति। तस्मात् पथ्यं मात्रया काले भोक्तव्यम्। अजीर्णे तु कथंचिन्न कार्यम्। यतोऽजीर्णाद्वातादीनां बलवान् विभ्रमः क्षोभः स्यात् । तस्मात्क्षोभाच्छोफादीन् प्राप्नुयात् ॥ ३१ ॥

प०—सम्यगशितं भुक्तं मात्रया योग्यया काले यथोचिते पथ्यं हितं जरां पाकं च करोति । अजीर्णादिपरिणताहारादनिलादीनां दोषाणां विभ्रमः क्षोभो बलवान् प्रकृष्टशक्तिर्भवेत् स्यात् । ततो विभ्रमाच्छोफादीनाप्नुयादातुरः ॥ ३१ ॥

हे०—विषमाशनं सममशनं च निषेधति—अशितमिति । अध्यशनं निषेधति—अजीर्ण इति ॥ ३१ ॥

**नवधान्यं तिलान्माषान्मद्यं मांसं त्वजांगलम् ।**
**क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥**
**यच्चाऽन्यदपि विष्टंभि विदाहि गुरु शीतलम् ।**
**वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत्॥३२॥**

स०—नवधान्यादि त्यजेत्। यतोऽयं नवधान्यादिवर्गो व्रणिनः सर्वान् दोषान् करोति । संग्रहे चोक्तम् । नवधान्यं विष्टंभि माषकलायकुलत्थनिष्पावशिंबीशीतांबुमद्येक्षुक्षीरपिष्टतिलविकृतिशुष्कशाकपिशितहरितकाम्ललवणकटुकक्षारानूपामिषाणि वर्जयेदिति । शीतलं शीतांब्वादि ॥ ३२ ॥

प०—अयं नवधान्यादिवर्गोऽनन्तरोक्तो व्रणिनः पुंसः सर्वदोषकृत् त्रिदोषकारी भूरिदोषक्लेदादिकारी वा भवति ॥ ३२ ॥

हे०—नवधान्यादिवर्गमाह-नवधान्यमिति । संग्रहे तु नवधान्यं माषकलायकुलत्थनिष्पावशिंबीशीतांबुमद्येक्षुक्षीरपिष्टतिलविकृतिशुष्कशाकपिशितहरितकाम्ललवणकटुकक्षारामिषाणि वर्जयेदिति नवधान्यादेरपथ्यत्वमाह वर्ग इति ३२

**मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद्व्रणम् ।**

स०—मद्यं तीक्ष्णोष्णादिगुणं द्राग्व्रणं व्यापादयेत् । तस्मान्मद्यमीदृशं वर्ज्यं नापरम् । तथा च तंत्रांतरे । सस्नेहं मधुरप्रायं नातितीक्ष्णमकर्कशम् तनु यत्सुखपेयं च मार्द्वीकेषु तदुत्तममित्युक्तम् । तस्मान्मार्द्वीकादिप्रायं रोध्रासवादिकं वा यन्मद्यं तत्सात्म्यत्वात्किंचित्पेयमेव ॥ ३३ ॥

प०—नवधान्यादिवर्गे मद्यस्य वर्जनीयत्वे यन्मद्यं पुनर्निर्दिशति तदतिशयज्ञापनार्थं मद्यस्य । नवधान्यादीनि व्रणं व्यापादयन्ति अभ्यवहृतानि, मद्यं पुनस्तीक्ष्णोष्णरूक्षाम्लत्वात् तत्स्वभावादाश्वेव यथा व्रणं व्यापादयेत्तथैवान्यानि धान्यानि।अथवा विशिष्टमेव मद्यं तीक्ष्णोष्णरूक्षाम्लं यत्तदेवाशु व्यापादयेत् व्रणं नत्वन्यत्सस्नेहादिगुणयुक्तम् । तथाच तन्त्रान्तरे-" सस्नेहं मधुरं प्रायं नातितीक्ष्णमकर्कशम् । तनु यत् सुखपेयं च मार्द्वीकेषु तदुत्तमम् " इति पठति तस्मान्मद्यं सात्म्याय प्राणिने सस्ने

ह्रादिगुणयुक्तं तत्कदाचित् किञ्चिद्दत्तं न तथा न व्रणस्यापत्तये सम्पद्यते यथैतत्तीक्ष्णोष्णादिगुणयुक्तमिति ज्ञापनार्थम् ॥ ३३ ॥

हे०—मद्यस्य ततोऽपथ्यत्वमाह—मद्यमिति ॥ ३३ ॥

**वालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ।**
**न तुदन्न च कंडूयेच्चेष्टमानश्च पालयेत् ॥**
**स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः।**
**आशावान्व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ३४**

स०—वालोशीरैश्चैनं व्रणं वीजयेत् । न चैनं परिघट्टयेत् । तथा न व्यथयेत् । नापि कंडूयेत् । व्यापारं च कुर्वन् व्रणिनं पालयेद्रक्षेत् । तथा स्निग्धादीनां कथाश्चित्तप्रिया आकर्णयन् रोगमुक्तये विहिताशोऽह्नाय व्रणमपोहति ॥ ३४ ॥

प०—वालैरुशीरैश्चैनं व्रणं वीजयेत् नचैनं व्रणं परिघट्टयेत् घर्षयेत् । न तुदेन्न ताडयेत् तथा न कण्डूयेन्नखादिभिः । चेष्टमानः व्यापारं कुर्वन् क्रियासु व्रणं पालयेत् रक्षेत् । स्निग्धवृद्धानां द्विजातीनां ब्राह्मणानां मनःप्रियाः कथाः शृण्वन् व्याधिमोक्षाय चाशावान् क्षिप्रं शीघ्रं व्रणमपोहति ॥३४॥

हे०—व्रणशुश्रूषणमाह—वालोशीरैरिति । वालैश्चामरैः उशीरैर्वीरणव्यजनैः ॥ ३४ ॥

**तृतीयेऽह्नि पुनः कुर्याद्व्रणकर्म च पूर्ववत् ।**
**प्रक्षालनादि दिवसे द्वितीये नाचरेत्तथा ।**
**तीव्रव्यथो विग्रथितश्चिरात्संरोहति व्रणः॥३५॥**

स०—तृतीये दिवसे पुनरपि प्रक्षालनादि कर्म पूर्ववत् पूर्वेण व्रणकर्मणा तुल्यं कुर्यात् । द्वितीये तु दिवसे प्रक्षालनादि नाचरेत् किमित्याह—तथा तेन प्रकारेण व्रणस्तीव्रव्यथः संपद्यते । तथा विग्रथितः स प्रदेशो बहुभिर्ग्रंथिभिर्युक्तः स्यात् । तथा चिराच्चिरेण संरोहं याति रूढः संपद्यते ॥ ३५ ॥

प०—पूर्वेण व्रणकर्मणा तुल्यं पूर्ववत् तृतीये दिवसे पुनः व्रणकर्मप्रक्षालनं कुर्यात् । पूर्वोक्तेन यथानिर्दिष्टेन व्रणक्रियां कुर्यात् । द्वितीये दिवसे मोक्षणात् प्रक्षालनादिकर्माचरणाच्च व्रणः तीव्रव्यथः तीव्ररुक् सम्पद्यते । तथा विग्रथितो बहुभिर्ग्रन्थिभिर्युक्तः चिराच्चिरेण कालेन संरोहति रूढः सम्पद्यते ॥ ३५ ॥

हे०—तृतीये दिवसे प्रक्षालनमाह—तृतीयेऽह्नीति तृतीये दिवसे प्रक्षालनादिकं निषेधति—दिवस इति निषेधातिक्रमे दोषमाह—तथेति । विग्रथितो विषमसंस्थानः ॥ ३५ ॥

**स्निग्धां रूक्षां श्लथां गाढां दुर्न्यस्तां च विकेशिकाम्**
**व्रणे न दद्यात्कल्कं च ॥ ३६ ॥**

स०—व्रणे वणाख्ये आधारे स्निग्धादिगुणयुक्त विकेशिकां व्रणांतःप्रवेशयोग्यां वर्तिं न दद्यात् । श्लथ शिथिलां गाढां निबिडां दुर्न्यस्तां विषमन्यस्ताम् अत्र चातिशब्दोऽर्थवशाद्गम्यमानो बोध्यत एव । संग्रहे स्पष्टं कृत्वोवाच । अतिस्नेहात्क्लेद इति । कल्कमप्यतिस्निग्धादिगुणयुक्तं व्रणे न योजयेत् । पिष्टमौषधं द्रवाप्लुतं कल्क इत्युच्यते ॥ ३६ ॥

प०—विषमन्यस्तां व्रणेन दद्यात् । तथा कल्कमौषधमतिस्निग्धमतिरूक्षमतिश्लथमतिगाढमतिश्लक्ष्णं दुर्न्यस्तं वा न दद्यात् ॥ ३६ ॥

हे०—स्निग्धादिविकेशिकां कल्कं च निषेधति—स्निग्धामिति ॥ ३६ ॥

किमिति स्निग्धादिगुणयुक्तां विकेशिकां कल्कं वा न दद्यादित्याह—

**स्नेहात्क्लेदो विवर्धते ॥ ३७ ॥**

स०—यतः स्नेहात् क्लेदवृद्धिः ॥ ३७ ॥

प०—स्नेहादतिस्नेहाद्व्रणस्य क्लेदो विवर्धते ३७॥

हे०—निषेधातिक्रमे दोषमाह—स्नेहादिति ॥ ३७ ॥

**मांसच्छेदोऽतिरुग्रौक्ष्याद्दरणं शोणितागमः ।**
**श्लथातिगाढदुर्न्यासैर्व्रणवर्त्मावघर्षणम् ॥ ३८ ॥**

स०—अतिरूक्षत्वाच्च मांसच्छेदोऽतिव्यथा दरणम् । तथा विशेषाद्रक्तस्रावश्च । श्लथादिगुणयुक्तेन च व्रणमार्गस्याऽवघर्षणं स्यात् ॥ ३८ ॥

प०—तीक्ष्यान्मांसच्छेदो भवेत । तथाऽतिरुक् निर्वेदना व्रणं स्फुटनं त्वचः, शोणितागमो नस्य प्रादुर्भावो भवति । अक्षतया अविगाढतया न्यासेन न विकेशिकौषधकल्कयोर्व्रणेषु वत्मीवर्णमवाप्नर्पणं सम्पद्यते ॥ ३८ ॥

हे०—तीक्ष्णावाधारो दोषाः ॥ ३८ ॥

विकेशिका व्रणे कस्मादीयत इत्याह—

**पूतिमांसं सोत्संगं सगतिं पूयगर्भिणम् ।**
**णं विशोधयेच्छीघ्रं स्थिता ह्यंतर्विकेशिका ॥**

स०—विकेशिका व्रणांतरे स्थिता पूत्यादियुक्तं णं विशोधयेदतस्तस्माद् व्रणेऽसौ योज्या । उत्संग गतिः । पूयादिभक्षितमांसादिप्रदेशः शून्यो देहस्य तरुच्यते । पूयश्चासौ गर्भश्च स विद्यते यस्य स गर्भी तम् ॥ ३९ ॥

प०—सह पूतिना मांसेन वर्तते इति सपूतिमांव्रणः । तथा सहोत्सङ्गेनोन्नत्या वर्तते इति सोङ्गः पूयक्षतमांसादिप्रदेशः शून्यो देहस्य दूरं तो गतिशब्दवाच्यः । पूयो गर्भ यस्यास्त्यसौ यगर्भी तथाविधं विकेशिकान्तः तथा शीघ्रमाश्वेव धयति यस्मादतः सा व्रणे योज्या ॥ ३९ ॥

हे०—विकेशिकाया गुणमाह—सपूतिमांसमिति ३९॥

**व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।**
**भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ४० ॥**

स० व्यम्लं विदग्धम् अपक्वं व्रणं पक्वमितिज्ञानापाटितम् तथाविधैः स्वयमुपाचनैरन्नपानैस्तथाविधैश्चोनाहैः सालवणकिण्वादिकल्पितैरुपाचरेत् । न च सर्वेनातिविरोधिभिरुपाचरेदित्याह । नातीत्यादि । न व्रणाविरोधीनि नितिश्रयमुपाचनान्यम्लकटुकतीक्ष्णोष्णलणप्रायाणि द्रव्याणि तथैवंप्रायाणि भोजनानि तैरुपनाहैरपि तु किंचित् व्रणविरोधीनि यानि तैरुचिरपक्वमेदिनि बोध्यम् । नातिशब्दप्रयोगात् ॥४० ॥

प०—व्यम्लं शोफं पक्वापक्वस्यं ज्ञातं पक्वापक्वलक्षणनामविमृश्य कदाचिच्छस्त्रेण पाटितं शोफं पाचनैः सम्यगुपाचरेत उपक्रमेन । लवणाम्लकटुरूक्षोष्णप्रायैर्लेपादौ प्रयुक्तैस्तथा भोजनैराहारैः पाचनैरेव तथोपनाहैः सालवणाभिधानैस्तैश्च व्रणादतिविरोधिभिः । किञ्चिद्व्रणविरोधिभिरौषधैरुपाचरेदेव पाचनार्थम् ॥ ४० ॥

हे०—अपक्वपाटने चिकित्सामाह—व्यम्लं तु पाटितमिति । व्यम्लं विदग्धं तत्र हि रक्तं विगताम्लरसं भवति इति पाटनाविधिः ॥ ४० ॥

**सद्यः सद्योव्रणान् सीव्येद्विवृतानभिघातजान् ।**
**मेदोजाँल्लिखितान्ग्रंथीन्ह्रस्वाःपालीश्च कर्णयोः॥**
**शिरोऽक्षिकूटनासौष्ठगंडकर्णोरुबाहुषु ।**
**ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ।**
**गंभीरेषु प्रदेशेषु मांसलेष्वचलेषु च ॥ ४१ ॥**

स०—सद्योव्रणानभिघातजान विस्तीर्णमुखान् सद्यस्तत्क्षणादेव सीव्येत् । संकुचितवदनास्तु ते न सीव्याः। अभिघाताजन्म येषां ते । सद्योव्रणानित्यभिघातजेष्वपि चिरकालस्थितेषु नायं विधिरिति द्योतयति । मेदोजान् ग्रंथीनालिख्य सूच्या सीव्येत् ॥ ४१ ॥

प०—सद्यस्तत्क्षणादेव सद्योव्रणान् अभिघातजान् शस्त्राद्यभिघातोत्थान् विवृतान् विस्तीर्णास्तथा मेदोजान मेदःसमुत्थान् भिन्नलिखितान् ग्रन्थींस्तथा कर्णयोः ह्रस्वा अल्पाः पालीः सीव्येत् । शिरोऽक्षिकूटादिषु स्थितान् सीव्येत् । शिरसि अक्षकूटयोर्नासायामोष्ठयोः कपालयोः कर्णयोरूर्वोर्बाह्वोर्ग्रीवादिषु तथा गम्भीरेषु प्रदेशेषु प्रभूतमांसेषु अचलेषु स्थानेषु व्रणान् सीव्येत् ॥ ४१ ॥

हे०—अथ सीवनविधिः। तत्र सीवनस्य विषयमाह—सद्य इति । सद्यः व्रणार्तिदिने, सद्योव्रणान् शोफपाकादिपूर्वरूपरहितान् तेषामभिघातजत्वाद्यभिचारेष्वपि तदुपात्तदोषसंसर्गव्युदासार्थम् । लिखितान् लेखनोद्धृतमेदसः कर्णपालीश्च लिखिताः लेखनोद्धृतह्रस्वत्वहेतुदुष्टावयवाः शिरःप्रभृतयो ये गम्भीरा मांसला अचलाश्च प्रदेशास्तेषु स्थितान् व्रणान् ॥ ४१ ॥

**न तु वंक्षणकक्षादावल्पमांसचले व्रणान् ।**
**वायुनिर्वाहिणः शल्यगर्भान्क्षारविषाग्निजान् ॥**

प०--व्रणो निःशोणितः यः तं व्रणं किञ्चिदेवा-लेख्य शस्त्रेण क्षतयित्वा सञ्जातरुधिरमुपजात-णितं सीव्येत् । यस्मादस्य व्रणस्य सन्धानं श्लेषकं शोणितमेव ॥ ४५ ॥

हे०--शुष्कं व्रणमार्द्रं कृत्वा सीव्येदित्याह--व्रण इति । :शोणिता ओष्ठा बन्धनीयप्रदेशा यस्य स तथा । न सीवनविधिः ॥ ४५ ॥

**धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च ।**

म०--बध्यते व्रण एभिरिति बंधनान्याविकाजिना-नि तेषु व्रणेषु देशकालसात्म्यादीन् वीक्ष्य निरूप्य थायोगमाविकादान्यतमं युञ्ज्यात् ॥ ४६ ॥

प०--बध्यन्ते एभिरिति बन्धनानि तानि देशा-न् वीक्ष्य बुद्ध्या युञ्जीत ॥ ४६ ॥

हे०--तत्र बन्धनसाधनान्याह--बन्धनानीति ॥ ४६॥

तेषां च बंधनानां स्वरूपमाह--

**माविकाजिनकौशेयमुष्णं क्षौमं तु शीतलम् ।**
**शीतोष्णं तूलसंतानकार्पासस्नायुवल्कजम् ॥**
**ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ।**
**भंगे च युंज्यात्फलकं चर्मवल्ककुशादि च ४७॥**

स०--आविरेवाविकस्तस्येदमाविकम् । अवेः क इति कस्तस्येदमित्यण् । अजिनं चर्म । कोशात्संभूतं कौशेयम् । कोशाड्ढञिति ढञ् । आविकादिकं बंध-नत्रयमुष्णवीर्यम् । क्षौमं तु बंधनं शीतलं शीतवीर्यम्। तूलसंतानादिजं शीतोष्णमुभयस्वभावम् । तूलं शाल्म-ल्यादिजं तस्य संतानः संततिः सूत्ररूपता तेन निष्पादि-तम् । मेदःकफाधिके व्रणे ताम्रादीनि लेखनार्थं युंज्यात्। भंगे इत्यादि । न केवलं ताम्रादीनि मेदःकफाधिके व्रणे युंज्याद्यावच्छब्दात्तानि भंगेऽपि युंज्यात् । न च केवलं भंगे ताम्रादीनि युंज्याद्यावत्फलकादि च युंज्यात्। कुशशब्देन वंशादिकमिहोच्यते ॥ ४७ ॥

प०--अवेरिदमाविकं कम्बलम् । आजिनं चर्म । कौशेयं पत्रोर्णमेतद्बन्धनत्रयमुष्णवीर्यं, क्षौमं दुकूलं, शीतलं शीतवीर्यम् । तूलसन्तानादिजं शीतोष्ण-मुभयस्वभावं, कार्पाससंस्नावजन्यं वल्कजं बन्धनं कार्पाससदृशं वृक्षेभ्यो यदुत्पद्यते तत्तूलशब्द-वाच्यम् । तस्य सन्तानं सन्ततेः सूत्ररूपतया निष्पादितं कार्पासं वस्त्रं स्नावजं स्नावबृहल्लकलज-मशनाश्मान्तकमूर्वातसीप्रभृतीनां वल्कलैर्मृदुत्व-ग्भिः कृतम् । मेदःकफादिके व्रणे बन्धनानि ताम्रा-यस्त्रपुसीसानि योजयेत् । भङ्गेऽस्थिभङ्गे बन्ध-नानि फलकादीनि युञ्जीत । फलकः काष्ठमयो वलयाकारचर्मोजिनं वल्कं च वल्कत्वक्कुशावंशा-दिकंबिका नतु दर्भाः ॥ ४७ ॥

हे०--सन्तानं तंतुः, फलकं काष्ठपट्टिका, कुशा वेणुद-लम् ॥ ४७ ॥

अधुना बंधप्रकारान्निर्दिशति--

**स्वनामानुगताकारा बंधास्तु दश पंच च ।**
**कोशस्वस्तिकमुत्तोलीचीनदामानुवेल्लितम् ॥**
**खट्वाविबंधस्थगिकावितानोत्संगगोफणाः ।**
**यमकं मंडलाख्यं च पंचांगी चेति योजयेत् ।**
**यो यत्र सुनिविष्टः स्यात्तं तेषां तत्र बुद्धिमान् ।**

---

१ तत्र कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्, दाम संबाधेऽङ्गे, सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्, अनु-वेल्लितं तु शाखासु, ग्रीवामेढ्योः प्रतोलीं, वृत्तेऽङ्गे मण्डलम्, अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकां, यमलव्रणयोर्यमकं, हनु-शङ्खगण्डेषु खट्वाम्, अपाङ्गयोश्चीनं, पृष्ठोदरोरःसु विबन्धं, मूर्धनि वितानं, चिबुकनासौष्ठांसबस्तिषु गोफणां, जत्रुण ऊर्ध्वं पञ्चाङ्गीमिति, यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात् इति **सुश्रुतः**। बन्धविषयमाह--**तत्रे**त्यादि । तत्रेति चतुर्दशबन्धेषु मध्ये । पर्वशब्दोऽङ्गुष्ठाङ्गुलिभिः सह संबध्यते । दाम संबाधेऽङ्गे संकटेऽङ्गे । संधिकूर्चकभ्रूस्तनान्त-रेति क्षिप्रमर्मोपरिष्टादुभयतः कूर्चकः, पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रमिति मर्म, भ्रूस्तनान्तरमित्यन्तरशब्दः प्रत्येकं संबध्यते, तलमिह हस्तपादतलम्, अनुवेल्लितं तु शाखास्विति शाखासु सक्थिबाहुषु । बाहुपार्श्वोदरोरुपृष्ठादिकम् वृत्तमङ्गम् । अङ्गु-ष्ठाङ्गुलिमेढ्राग्रेष्विति अग्रशब्दोऽत्राङ्गुष्ठादिभिः सह प्रत्येकं संबध्यते । हनुशङ्खगण्डेष्विति हनुर्मुखसंधिः, शङ्खो भ्रूक र्णयोरन्तरं, गण्डो मल्लः, अपाङ्गयोश्चीनमिति अपाङ्गयोर्नेत्रा न्तरप्रदेशयोः । हृदयोर्ध्वं स्तनयोर्मध्यो ग्रीवामूलादधस्तादुरः मूर्धा मस्तकम् । चिबुकनासौष्ठांसबस्तिषु गोफणामिति चिबु कमोष्ठाधो मांसास्थिपिण्डिका, अंसो बाहुशिरः, बस्तिर्मूत्रा शयः । उक्तं देशनियमं प्रयोजनवशेन व्यभिचारयन्नाह--**यं** वेत्यादि । सुनिविष्टः शोभनाकारः । इति **निबन्धसंग्रहे**

स०—वंक्षणादिस्थितानां व्रणानां गंभीरादिप्रवेशत्वात्सीवनं प्राप्तं तन्निषिध्यते । मांसलेषु स्थिरेषु च व्रणान् सीव्येदित्युक्त्यैवाऽल्पमांसे चले स्थाने व्रणान्न सीव्येदित्यर्थे लब्धेऽल्पमांसांश्चलांश्च व्रणान्न सीव्येदिति वचनमतिशयार्थम् । जातुचिदभिघातजान्विवृतानप्येवंविधान् व्रणान्न सीव्येदिति गमयति । तथा वायुं निर्वहंति निःश्वसंति तान् वायुनिर्वाहिणो न सीव्येत् । तथा शल्यं गर्भे येषां तान् शल्यगर्भांस्तथा क्षारविषाग्निभ्यो जातान् व्रणान्न सीव्येत् ॥ ४२ ॥

प०—वङ्क्षणादौ शरीरावयवे स्थितान् व्रणान् न सीव्येत् । तथा अल्पमांसप्रदेशे अबले शरीरे स्थितान् व्रणान् न सीव्येत् । तथा वायुनिर्वाहिणो व्रणान् तथा शल्यगर्भानन्तःशल्यान् क्षारविषाग्निजान् तत्कृतान् सीव्येत् ॥ ४२ ॥

हे०—सीवनाविषयमाह—नत्विति । वायुनिर्वाहिणः वायुनिर्गमद्वारभूतान् ॥ ४२ ॥

सीवनात्पूर्वं यत्क्रियते तद्दर्शयति—

**सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ।**
**प्रलंबि मांसं विच्छिन्नं निवेश्य स्वनिवेशने ॥**
**संध्यस्थ्यवस्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ।**
**सीव्येन्न दूरे नासन्ने गृह्णन्नाऽल्पं न वा बहु॥४३॥**

स०-स्थानाच्चलितमस्थ्यपनीय निरस्य तथा शुष्करक्तं तृणानि रोमाणि चाऽपास्य तथा शस्त्रादिना प्रकर्षेण लंबि व्रणे यद्विद्यते मांसं तत्स्वनिवेशन आत्मीये स्थाने निवेश्य संस्थाप्य संध्यस्थि स्वे स्थाने संस्थाप्य स्थिते रक्तेऽस्रवद्रूपत्वं प्राप्ते सति व्रणं सीव्येत् । केन । स्नाय्वादिना तथा वल्कलैः । वल्कलान्यश्मंतकादित्वगुद्भवानि तैः कथं सीव्येत् । न दूरे न विप्रकृष्टे न चासन्ने नाऽतिनिकटे गृह्णन्नाल्पं व्रणांशं नच बहु गृह्णन् ॥ ४३ ॥

प०—चलं प्रस्थानात्प्रचलितमस्थ्याद्यपोह्यापास्य हस्तादिना तथा प्रलम्बि यन्मांसं विच्छिन्नं शस्त्रादिना ततस्तन्निवेशने आत्मीये स्थाने निवेश्य स्थापयित्वा तथा सन्ध्यस्थि स्वस्थाने संस्थाप्य स्थिते रक्ते रुद्धे स्रोतसि यथार्हं स्नाय्वा स्नायुना सूत्रेण कार्पासादिमयेन तथा वल्कलैरसनाश्मन्तकमूर्वातसीनां त्वचा सीव्येत् । व्रणान् दूरे विप्रकृष्टे सीव्येत् । तथा नासन्ने निकटे सीव्येत् । गृह्णन्नल्पं स्तोकं व्रणप्रदेशं तथा बहु गृह्णन्न सीव्येत् ॥ ४३ ॥

हे०—सीवनस्य विधिमाह—सीव्येदिति । चलं यदस्थि शुष्कं यदसृक् तदपनीय तृणानि रोमाणि च सन्धिगतमस्थि च स्वनिवेशने निवेश्य स्थिते स्रावान्निवृत्ते वल्कलविशेष उक्तः संग्रहे “ शणाश्मंतकमूर्वातसीनां वा वल्कलैरिति ।” तथा सीवनाविकल्पास्तु समासेन चत्वारः । गोफणिकातुन्नसेवनीवेल्लितकं राजग्रंथिबन्धनं तेषां नामभिरेवाकृतिविभागः प्रहारवशाच्चोपयोगः ४३॥

**सांत्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रुतैः ।**
**अंजनक्षौमजमषीफलिनीशल्लकीफलैः ।**
**सरोध्रमधुकैर्दिग्धे युंज्याद्बंधादि पूर्ववत्॥४४॥**

स०—ततः सीवनादनंतरमातुरं सांत्वयित्वा समाश्वास्य शीतांबुस्पर्शव्यजनादिभिरनंतरमुक्तैर्लिप्ते व्रणे सति । कैः । अंजनादिभिः । किंभूतैः । मधुघृताभ्यां द्रुतैरालोडितैः । पूर्ववद्बंधादि युंज्यात् । तृतीयान्ताद्वतिः । पूर्वोद्दिष्टेन कर्मणा तुल्यं कषायक्षालनादि कवलिकादिकं च योजयेदित्यर्थः ॥ ४४ ॥

प०—ततोऽनन्तरं सीवनात्परतः आतुरं सान्त्वयित्वा समाश्वास्यानन्तरं व्रणे दिग्धे लेपिते अञ्जनादिभिर्घृतमधुद्रवैर्मधुघृतयुक्तैरनन्तरं बन्धनादिभिः बन्धनकषायप्रक्षालनधूमादिभिः पूर्ववत् युञ्ज्यात् योजयेत् । पूर्वेण तुल्यं पूर्ववत् ॥ ४४ ॥

हे०—सीवनानन्तरं कर्तव्यमाह—सान्त्वयित्वेति । अञ्जनं स्रोतोऽञ्जनं, फलिनी प्रियंगुः, पूर्ववत् पाटनवत् ॥ ४४ ॥

**व्रणो निःशोणितौष्ठो यः किंचिदेवावलिख्य तम् ।**
**संजातरुधिरं सीव्येत्संधानं ह्यस्य शोणितम् ॥**

स०—अविद्यमानशोणितौष्ठो यः स्यात्तमेवंभूतं व्रणं किंचिदेवेषन्मात्रमेव शस्त्रेणावलिख्य ततः संजातरुधिरं संतं सीव्येन्न त्वेवमेव । यस्मादस्य व्रणस्य संधानं शोणितमेव ॥ ४५ ॥

प०—व्रणो निःशोणितः यः तं व्रणं किञ्चिद्वावलिख्य शस्त्रेण क्षतयित्वा सञ्जातरुधिरमुपजातशोणितं सीव्येत् । यस्मादस्य व्रणस्य सन्धानं संश्लेषकं शोणितमेव ॥ ४५ ॥

हे०—शुष्कं व्रणमार्द्रं कृत्वा सीव्येदित्याह—व्रण इति । निःशोणिता ओष्ठा व्रणसीमप्रदेशा यस्य स तथा । इति सीवनविधिः ॥ ४५ ॥

बंधनानि तु देशादीन् वीक्ष्य युंजीत तेषु च ।

सु०—बध्यते व्रण एभिरिति बंधनान्याविकाजिनादीनि तेषु व्रणेषु देशकालसात्म्यादीन् वीक्ष्य निरूप्य यथायोगमाविकाद्यन्यतमं युञ्ज्यात् ॥ ४६ ॥

प०—बध्यन्ते एभिरिति बन्धनानि तानि देशादीन् वीक्ष्य बुद्ध्या युञ्जीत ॥ ४६ ॥

हे०—तत्र बन्धनसाधनान्याह—बन्धनानीति ॥ ४६॥

तेषां च बंधनानां स्वरूपमाह-

आविकाजिनकौशेयमुष्णं क्षौमं तु शीतलम् ।
शीतोष्णं तूलसंतानकार्पासस्नायुवल्कजम् ॥
ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ।
भंगे च युंज्यात्फलकं चर्मवल्ककुशादि च ४७॥

सु०—अविर्मेषस्तस्येदमाविकम् । अवेः क इति कस्तस्येदमित्यण् । अजिनं चर्म । कोशात्संभूतं कौशेयम् । कोशाद्ढञिति ढञ् । आविकादिकं बंधनत्रयमुष्णवीर्यम् । क्षौमं तु बंधनं शीतलं शीतवीर्यम्। तूलसंतानादिजं शीतोष्णमुभयस्वभावम् । तूलं शाल्मल्यादिजं तस्य संतानः संततिः सूत्ररूपता तेन निष्पादितम् । मेदःकफाधिके व्रणे ताम्रादीनि बन्धनार्थं युंज्यात्। भंगे इत्यादि । न केवलं ताम्रादीनि मेदःकफाधिके व्रणे युंज्यात्फलकादीनि भंगेऽपि युंज्यात् । न च केवलं भंगे ताम्रादीनि युंज्यात्फलकादि च युंज्यात्। कुशाशब्देन वंशादिकंबिकोच्यते ॥ ४७ ॥

प०—अविरिदमाविकं कम्बलम् । अजिनं चर्म । कौशेयं पट्टांशकमेतद्बन्धनत्रयमुष्णवीर्यं, क्षौमं दुकूलं, शीतलं शीतवीर्यम् । तूलसन्तानादिजं शीतोष्णमुभयस्वभावं, कार्पासस्नाय्वादिजन्यं वल्कजं बन्धनं कार्पाससदृशं वृक्षेभ्यो यदुत्पद्यते तत्तूलशब्दवाच्यम् । तस्य सन्तानं सन्ततेः सूत्ररूपतया निष्पादितं कार्पासं वस्त्रं स्नावजं स्नावद्वल्कलजमश्मन्तकाश्मान्तकमूर्वातसीप्रभृतीनां वल्कलैर्मृदुत्वग्भिः कृतम् । मेदःकफादिके व्रणे बन्धनानि ताम्रायस्त्रपुसीसानि योजयेत् । भङ्गेऽस्थिभङ्गे बन्धनानि फलकादीनि युञ्जीत । फलकः काष्ठमयो वलयाकारश्चर्माजिनं वल्कं च वल्कत्वक्कुशावंशादिकंबिका न तु दर्भाः ॥ ४७ ॥

हे०—सन्तानं ततुः, फलकं काष्ठपट्टिका, कुशा वेणुदलम् ॥ ४७ ॥

अधुना बंधप्रकारान्निर्दिशति—

स्वनामानुगताकारा बंधास्तु दश पंच च ।
कोशस्वस्तिकमुत्तोलीचीनदामानुवेल्लितम् ॥
खट्वाविबंधस्थगिकावितानोत्संगगोफणाः ।
यमकं मंडलाख्यं च पंचांगी चेति योजयेत् ।
यो यत्र सुनिविष्टः स्यात्तं तेषां तत्र बुद्धिमान्।

१ तत्र कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्, दाम संबाधेऽङ्गे, सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्, अनुवेल्लितं तु शाखासु, ग्रीवामेढ्रयोः प्रतोलीं, वृत्तेऽङ्गे मण्डलम्, अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकां, यमलव्रणयोर्यमकं, हनुशङ्खगण्डेषु खट्वाम्, अपाङ्गयोश्चीनं, पृष्ठोदरोरःसु विबन्धं, मूर्धनि वितानं, चिबुकनासौष्ठांसबस्तिषु गोफणां, जत्रुण ऊर्ध्वं पञ्चाङ्गीमिति, यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात् इति सुश्रुतः। बन्धविषयमाह—तत्रेत्यादि । तत्रेति चतुर्दशबन्धेषु मध्ये । पर्वशब्दोऽङ्गुष्ठाङ्गुलिभिः सह संबध्यते । दाम संबाधेऽङ्गे संकटेऽङ्गे । संधिकूर्चकभ्रूस्तनान्तरेति क्षिप्रमर्मोपरिष्टादुभयतः कूर्चकः, पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रमिति मर्म, भ्रूस्तनान्तरमित्यन्तरशब्दः प्रत्येकं संबध्यते, तलमिह हस्तपादतलम्, अनुवेल्लितं तु शाखास्विति शाखासु सक्थिबाहुषु । बाहुपार्श्वोदरोरःपृष्ठादिकम् वृत्तमङ्गम् । अङ्गुष्ठाङ्गुलिमेढ्राग्रेष्विति अग्रशब्दोऽङ्गुष्ठादिभिः सह प्रत्येकं संबध्यते । हनुशङ्खगण्डेष्विति हनुर्मुखसंधिः, शङ्खो भ्रूकर्णयोरन्तरं, गण्डो मल्लः, अपाङ्गयोश्चीनमिति अपाङ्गयोर्नेत्रान्तप्रदेशयोः । हृदयोर्ध्वं स्तनयोर्मध्यो ग्रीवामूलादधस्तादुरः। मूर्धा मस्तकम् । चिबुकनासौष्ठांसबस्तिषु गोफणामिति चिबुकमोष्ठाधो मांसास्थिपिण्डिका, अंसो बाहुशिरः, बस्तिर्मूत्राशयः । उक्तं देशनियमं प्रयोजनवशेन व्यभिचारयन्नाह—यो वेत्यादि । सुनिविष्टः शोभनाकारः । इति **निबन्धसंग्रहे** ।

स०—स्वं च तन्नाम च स्वनाम तेनानुगतोऽनुबद्ध आकारः संस्थानविशेषो येषां ते पंचदश बंधा वक्ष्यमाणाः । तुशब्दोऽवधारणार्थः । पंचदशैवेति न न्यूनाः । कोशादयः पंचांग्यंतास्तेषां बंधानां मध्ये यो बंधविशेषो यत्र यस्मिन्देहदेशे सुनिविष्टो भवेत्तं बंधं कोशादिकं तत्र तस्मिन्देशे योजयेत् । तत्र कोशोऽगुलीपर्वसु चर्मादिकृतः । स्वस्तिकं संधिकूर्चभ्रूस्तनांतरकक्षाक्षिकपोलकर्णेषु । मुत्तोली ग्रीवामेढ्रयोः । चीनमपांगयोः । दाम संधिवंक्षणादौ । अनुवेल्लितं शाखासु । खट्वा हनुसंधिगंडेषु । विबंधमुदरोरुपृष्ठेषु । स्थगिकांगुष्ठांगुलीमेढ्रांत्रमूत्रवृद्धिषु । वितानं मूर्धादौ पृथुलांगे । उत्संगमंगविशेषे लंबिनि बाह्वादौ । गोफणः नासौष्ठचिबुकसक्थिषु । यमकं यमलव्रणयोः । मंडलं वृत्तेऽगे। पंचांगी जत्रूर्ध्वमिति योजना कार्या ॥ ४८ ॥

प०—स्वनाम्नाऽनुगतो ज्ञातः आकारः संस्थानविशेषो येषां ते तथाविधा दश पञ्च च बन्धाः कोशस्वस्तिकादयः पञ्चांग्यन्तास्तान् बन्धान् विनियोजयेत् । तत्र कोशोऽङ्गुलिपर्वसु योज्यः । स च केशाकारो महादेवादौ दृश्यते । स्वस्तिकः स्वस्तिकाकृतिश्चतुरस्रः सन्धिकूर्चभ्रूस्तनान्तरकक्षाकपोलकर्णेषु योज्यः । मुत्तोली—तृणादिविरचितः फलाद्याधार इवसा कृकाटिकामेढ्रयोर्योज्या कपालकाबन्धवत् । चीनः—स्तोकविस्तीर्णायता पट्टिका सा चापाङ्गयोर्योज्या । दाम—दामाकृतिबन्धसम्बन्धेऽङ्गे योज्यम् । अनुवेल्लितं—यद्दीर्घं कृत्वा वेष्टनं तच्च शाखासु योज्यम् । खट्वा-चतुर्बाहुपट्टकं तच्च हनुशङ्खगण्डेषु योज्यम् । विबन्धो—विशेषेण सम्बन्धः स चोदरोरुपृष्ठेषु योज्यः । स्थगिका—ताम्बूलकोश इव सा चाङ्गुष्ठाङ्गुलिमेढ्राग्रमूत्रवृद्धिषु योज्या । वितानमिव वितानं यच्चोपर्यर्कतापनिवारणार्थं परिदीयते तच्च मूर्धादौ पृथुलाङ्गे योज्यम् । उत्सङ्गमवकादौ कण्ठावलम्बनं तच्च विलम्बिशरीरावयवे योज्यम् । गोफणः—कृषीवलानां पक्षिनिवारणाय वोप्येत्पाषाणधारणं, तच्च नासौष्ठचिबुकसक्थिषु योज्यम् । पञ्चाङ्गी यस्मिन्बन्धे चत्वारो बाहव एका चोर्ध्वपथिका सा च जत्रूर्ध्वं प्रयोज्या। तेषां बन्धानां मध्ये यो बन्धविशेषो यत्र यस्मिन् देहदेशे सुनिविष्टो भवेत्तं बन्धं कोशादिकं तत्र तस्मिन् देशे योजयेत् कुर्वीत बध्नीयात् ॥ ४८ ॥

हे०—बन्धानाह—स्वनामेति । संग्रहे तु तत्र कोशमंगुलिषु पर्वसु विदध्यात् । दाम संबाधे, उत्संगं विलंबिनि, स्वस्तिकं सन्धिकूर्चभ्रूस्तनांतरकक्षाक्षकर्णकपोलकर्णेषु, अनुवेल्लितं शाखासु, मुत्तोलीं ग्रीवामेढ्रयोः, मंडलं वृत्तेऽगे, स्थगिकामंगुष्ठांगुलिमेढ्राग्रमूत्रवृद्धिषु, यमकं यमलव्रणयोः, खट्वां हनुशंखगण्डेषु, चीनमपांगांसयोः, विबन्धमुदरोरुपृष्ठेषु, वितानं मूर्धादौ पृथुलांगे, गोष्फणं नासौष्ठचिबुकसक्थिषु, पञ्चाङ्गीं जत्रूर्ध्वं, न तु व्रणस्योपरि कुर्याद्ग्रंथिं न वा बाधकरो यथा स्यात् । "बन्धस्त्विष्टोऽनिले दुष्टे दृष्टे भग्नव्रणेषु च । तत्रात्ययो द्विधा बन्धः सव्यदक्षिणभेदतः ॥ त्रिविधस्त्वेव सर्वत्र गाढश्लथसमत्वतः । कफवाते घनो गाढः पित्ते रक्ते तनुश्लथः॥ वातापित्ते समो बन्धः कफपित्तव्रणेषु च" ॥ ४८ ॥

संप्रत्येषां बंधानां गाढशिथिलादिबंधत्वं देशाद्यनुरोधान्निरूपयति—

**बध्नीयाद्गाढमूरुस्फिक्कक्षावंक्षणमूर्धसु ॥ ४९ ॥**

स०—ऊरुस्फिगादिषु देशेषु गाढं बध्नीयान्न तु श्लथम् ॥ ४९ ॥

प०—ऊरुस्फिगादिषु शरीरदेशेषु गाढं बध्नीयान्नतु बन्धनशिथिलम् ॥ ४९ ॥

हे०—प्रदेशविशेषेण बन्धविशेषमाह—बध्नीयादिति । ऊर्वादिषु गाढम् ॥ ४९ ॥

**शाखावदनकर्णोरःपृष्ठपार्श्वगलोदरे ।**
**समं मेहनमुष्के च ॥ ५० ॥**

स०—शाखावदनादिषु समं बध्नीयात्। चशब्दान्मेहने मुष्कयोश्च सममेव ॥ ५० ॥

प०—शाखादिके शरीरदेशे समं बन्धनं बध्नीयात् । तथा मेहने लिङ्गे मुष्कयोर्वृषणयोश्च समं बन्धं योजयेत् ॥ ५० ॥

हे०—शाखादिषु समम् ॥ ५० ॥

**नेत्रे संधिषु च श्लथम् ॥ ५१ ॥**

स०—नेत्रे नयने तथा संधिषु शिथिलं बध्नीयात् ॥ ५१ ॥

प०—नेत्र नयने तथा सन्धिषु शिथिलं बन्धं [illegible]जयेत ॥ ५१ ॥

हे०—नेत्रादौ श्लथम् ॥ ५१ ॥

**[illegible]यच्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ।**
**[illegible]ढमेव समस्थाने भृशं गाढं तदाश्रये ॥५२॥**

स०—यत्र शिथिलस्थाने शिथिलो बंध उपदिष्टस्तत्र [illegible]ाने यौ व्रणौ वातश्लेष्मोद्भवौ तौ समं कृत्वा बध्नी-[illegible] गाढं न शिथिलम् । यत्र स्थाने समो बंध उप-[illegible]ष्टस्तत्र स्थाने वातश्लेष्मोद्भवौ व्रणौ गाढमेव बध्नी-[illegible]त् । भृशमित्यादि तदित्यनेन गाढाशयः परामृश्यते। [illegible]ढबंधोद्दिष्टे स्थाने वातश्लेष्मोद्भवौ व्रणौ भृशं सुतरां [illegible]ढं बध्नीयात् ॥ ५२ ॥

प०—शिथिले स्थानेऽक्ष्णोः सम्बन्धिनि सम्ब-[illegible]षु च वातश्लेष्मोद्भवौ व्रणौ समं बध्नीयात् । [illegible]मस्थाने तु शाखादौ वातश्लेष्मोद्भवौ व्रणौ गाढ-[illegible]व बध्नीयात् । तदाशये गाढस्थाने ऊरुस्फिगादौ [illegible]तश्लेष्मोद्भवौ व्रणौ ॥ ५२ ॥

**[illegible]ते वसंते च तथा मोक्षणीयौ त्र्यहात्त्र्यहात्॥**

स०—तौ वातश्लेष्मोद्भवौ व्रणौ शीते हेमंतशि-[illegible]राख्ये काले वसंते च त्र्यहात्त्र्यहात्त्रिदिनमंतरीकृत्य [illegible]क्षणीयौ मोक्षितव्यौ इत्यर्थः ॥ ५३ ॥

प०—शीतकाले हेमन्ते शिशिराख्ये तथा वसन्ते [illegible]हादनन्तरं मोक्षयेत् मुञ्चेत् ॥ ५३ ॥

हे०—[illegible]मोक्षणम् ॥ ५३ ॥

**[illegible]त्तरक्तोत्थयोर्बंधो गाढस्थाने समो मतः ।**
**[illegible]मस्थाने श्लथो नैव शिथिलस्याशये तथा ॥५४॥**

स०—पित्तरक्तोत्थयोर्गाढबंधस्थाने समो बंधो मतो शिथिलः । समस्थाने समो बंधो यत्रोपदिष्टः [illegible]वदनादौ तत्रस्थयोः पित्तरक्तोत्थयोर्व्रणयोः [illegible]शिथिलो बंधः कार्यः । शिथिलस्य बंधस्याऽऽशये यत्र [illegible]शिथिलो बंधः कार्य इत्युक्तं तत्रनैव बंधः कार्य इत्येव-[illegible]मोऽवधारणार्थः कृतः ॥ ५४ ॥

प०—पित्तरक्तोत्थयोर्व्रणयोर्नैव बन्धः कार्यः॥५४॥

**सायंप्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते॥५५॥**

स०—तयोः पित्तरक्तोत्थयोः सायं प्रातर्द्वौ कालौ मोक्ष इष्यते । ग्रीष्मे शरदि चाऽन्यदोषोत्थव्रणस्याऽपि सायंप्रातर्मोक्ष इष्यते ॥ ५५ ॥

प०—तयोः पित्तरक्तोत्थयोर्व्रणयोः सायं प्रातः द्वौ कालौ मोक्षौ ग्रीष्म इष्यते शरदि शरत्काले ॥५५॥

हे०—सायंप्रातर्मोक्षणं च सर्वर्तुषु प्राप्तस्यैकाहांतरमो-क्षस्यर्तुविशेषेणापवादः ॥ ५५ ॥

ननु बंधेन विना व्रणो धार्य इत्याह—

**अबद्धो दंशमशकशीतवातादिपीडितः ।**
**दुष्टीभवेच्चिरं चाऽत्र न तिष्ठेत्स्नेहभेषजम् ।**
**कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम्॥५६**

स०—अबद्धो व्रणो दंशादिभिः पीडितो व्यथित-स्तथा आदिशब्दाद्रजोधूमादिभिर्व्यथितोऽदुष्टोऽपि व्रणो दुष्टीभवति । अत्र च व्रणे बंधमंतरेण व्रणघ्नः स्नेह उपयोजितो भेषजं वा योजितं चिरं न तिष्ठेत् । बंधं च विना सम्यगुपचर्यमाणोऽपि व्रणः कष्टेन शुद्धिं याति रूढिं च कृच्छ्रेण याति । रूढोऽपि सन्विवर्णतां याति न शरीरवर्णतामित्यबंधनाद्दोषाः ॥ ५६ ॥

प०—अबद्धोऽबध्यमानो व्रणो दंशादिभिः पीडितः तत्सम्पर्काद्विविधोपद्रवो भवेत् दुष्टतामुपैति । तथाऽत्र व्रणे बन्धं विना स्नेहो दत्तश्चिरं चिरकालं न तिष्ठति । भेषजमपि दत्तमचिरात् शुष्यति पतति वा । तथा सम्यगुपक्रान्तो व्रणः कृच्छ्रेण शुद्धिं याति रूढं वा कृच्छ्रेण याति । तदा रूढोऽपि कदा-चिद्विवर्णतां वैवर्ण्यं याति गच्छति ॥ ५६ ॥

हे०—बंधाकरणे दोषमाह—अबद्ध इति ॥ ५६ ॥

इदानीं बंधनाद् गुणानाह—

**बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ।**
**छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रणः ।**
**उत्थानशयनाद्यासु सर्वेहासु न पीड्यते॥५७॥**

स०—सुखधारणं । बद्ध एव व्रणो बंधनमाहात्म्या-च्चूर्णितोऽस्थिसमाश्रितो व्रणस्तथा भग्नोऽस्थिसमाश्रित एव व्रणस्तथा विश्लिष्टः संधिस्थानादन्यस्थानगतो व्रणो नेत्रादिस्तथा पाटितः सर्वदेशस्थितोऽपि तथा छिन्नस्नायुसिरोऽप्याशु व्रणः सुखं सम्यग्रोहति तथो-त्थानशयनाद्यासु सर्वास्वीहासु चेष्टासु न पीडयेन्न व्यथ-येत् ॥ ५७ ॥

प०—चूर्णितः पिष्टो बद्धोऽथवा भग्नो विश्लिष्टः स्थानाच्च्युतः पाटितो विदारितः छिन्नस्नायुशिरो व्रणः सुखं कृत्वा आशु शीघ्रं संरोहति रूढिमायाति । तथा सर्वेहासु सर्वासु चेष्टासु उत्थानशयनादिरूपासु न पीड्यते ॥ ५७ ॥

**उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ।**
**समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ५८**

स०—ऊर्ध्वं वृत्तौ वर्तुलावोष्ठौ यस्य स उद्वृत्तौष्ठो न समः । तथा समुत्सन्नः समंतादुत्सन्न उन्नतो यो व्रणो न समः । तथा विषम उद्वृत्तौष्ठसमुत्स-न्नाभ्यां व्यतिरिक्तो विषमसंस्थानः । तथा कठिनो यो व्रणो न मृदुः । तथाऽतिरुग्यो व्रणः । स सर्व उद्वृत्तौष्ठादिपंचप्रकारोऽपि बंधमाहात्म्यादशुभरूपतां हित्वा व्रणः शीघ्रं शुद्धिं याति रोहति । ननूद्वृत्तौष्ठ-समुत्सन्नावपि विषमशब्देनैव ग्रहीष्येते किमेताभ्यामु-पात्ताभ्याम् । अस्त्येवैतत् किंत्वनयोः पृथङ्निर्देशेना-ऽतिदुश्चिकित्स्यतरत्वं गमयति ॥ ५८ ॥

प०—ऊर्ध्वं वृत्तौ वर्तुलावोष्ठौ यस्य तथाविधः तथा समन्तादुत्सन्न उन्नतो व्रणस्तथा विषमो निम्नो नवः कठिनो न मृदुस्तथातिरुक् वेदनायुक्तस्तथा-विधो व्रणः समो मृदुररुक् स्यात् । तथा शीघ्रं शुध्यति शुद्धिमायाति । रोहतीति रोहं याति ॥ ५८ ॥

हे०—उद्वृत्तः ऊर्ध्वं चलितः ओष्ठप्रांतो यस्य सः, समु-त्सन्नो विवृद्धमांसः, विषमः किंचिदुच्चः क्वचिन्नीचः । स त्रिधापि समो भवति । तद्दोषत्यागात्कठिनो मृदुर्भवति । अतिरुक् रुजाहीनो भवति, अशुद्धः शुध्यति, अरूढो रोहति ॥ ५८ ॥

**स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ।**
**प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ॥**
**अजीर्णतरुणाच्छिद्रैः समंतात्सुनिवेशितैः ।**
**धौतैरकर्कशैः क्षीरिभूर्जार्जुनकदंबजैः ॥ ५९**

स०—स्थिराणां व्रणादीनां दीर्घकालानुबं[धिनां] तथाऽल्पमांसानामनुपचितपललानामत एव हेतोस्[तु] रौक्ष्यादनुपरोहतां रूढिमगच्छतामौषधं कल्कस्नेहा[दि] यदुपयुज्यते तत्पत्रैः क्षीरिभूर्जार्जुनकदंबजैः प्रच्छ[ाद्यं] स्थगितव्यं यथादोषं दोषानतिक्रमेण ऋत्वनतिक्र[मेण] च तद्वशाद्यथायोगम् । यथा वातव्रणे शीत[काले] स्निग्धोष्णैः पित्तव्रणे घर्मकाले शीतस्वभावैः कफ[व्रणे] उष्णकाले रूक्षोष्णप्रायैः । एवं साधारणेऽपि व[्रणे] मिश्रदोषे च कल्पनीयम् । किंभूतैः पत्रैः । अजी[र्णा]न्यजर्जराणि तरुणानि प्रत्यग्राण्यच्छिद्राणि छिद्र[रहि]तानि तैरजीर्णतरुणाच्छिद्रैः । तथा समंतात्सुनि[वे]शितैः । तथा धौतैर्जलादिना निर्मलीकृतैः । त[थाऽ]ऽकर्कशैरकठिनैः ॥ ५९ ॥

प०—स्थिराणां व्रणानां दीर्घकालानुषङ्गवता[मल्]पमांसानां क्षीणमांसानां रौक्ष्यात्कारणादनुपरोह[तां] रूढिमप्राप्नुवतां यदेषामौषधं कल्कस्नेहादिभेष[जं] व्रणोपशमाय युज्यते अवचार्यते तत्पत्रैः क्षीर[िवृ]क्षादिजैः प्रच्छाद्यं यथादोषं दोषानुरूपैः दोषा[न]तिक्रमेण दोषयोग्यतावशेन तथा यथर्तु ऋत्वन[ति]क्रमेण ऋत्वनुरूपैः पत्रैर्यथायथं योग्यैः वातव्र[णे] शीतकाले स्निग्धोष्णैः पित्तव्रणे तथोष्णकाले शी[त]स्वभावैः श्लेष्मणि उष्णकाले रूक्षोष्णप्रायैरनया दिशाऽन्यत्रापि योज्यम् । अजीर्णैर्जर्जरैः तरु[णैः] प्रत्यग्रैरच्छिद्रैः छिद्ररहितैः तथा समन्तात् सर्वत[ः] सुनिवेशितैः शोभनं कृत्वा स्थापितैः धौतैर्निर्मलैः प्रक्षालितैः अकर्कशैरकठिनैः ॥ ५९ ॥

हे०—व्रणविशेषैर्लेपस्य पत्राच्छादनमाह—स्थिराणा[मि]मिति । यथादोषं शीते दोषे उष्णैः,उष्णे शीतैःएवं यथ[र्तु] अजीर्णैः तरुणैर्वृद्धत्वबालत्वरहितैः क्षीरिणोऽश्वत्थादयः५[९]

**कुष्ठिनामग्निदग्धानां पिटिकामधुमेहिनाम् ।**
**कर्णिकाश्चोंदुरुविषे क्षारदग्धा विषान्विताः ॥**

न मांसपाके च बध्नीयाद्गुदपाके च दारुणे।
शीर्यमाणाः सरुग्दाहाः शोफावस्थाविसर्पिणः॥

स०—कुष्ठवादीनां ये व्रणास्ते न बंधनीयाः । तथोन्दुरुविषे याः कर्णिकाः कोठरूपास्ताश्च न बध्नीयात् । तथा क्षारदग्धा ये व्रणास्ते न बंधनीयाः । तथा मांसपाके व्रणास्तथा दारुणे च गुदपाके व्रणास्ते न बंधनीयाः । मांसपाक इति मांसस्य पचि सुश्रु-तोक्तिस्त्वलोपः । तथा शीर्यमाणाः शदनावस्थां भज-मानाः । तथा सरुग्दाहास्तथा शोफावस्था अनेकावस्था भजंतोऽपि ये शोफावस्थावस्थितास्तथा विसर्पिणो विसर्पावस्थास्थिता ये व्रणास्ते च न बंधनीयाः ॥ ६० ॥

प०—कुष्ठिनां नराणां ये व्रणास्ते न बन्धनीयाः न बन्धयितव्यास्तथा मधुमेहिनां पुंसां पिटिका न बन्धयितव्याः। उन्दुरुविषे मूषकविषे याः पिटिकास्ता न बन्धनीयाः। तथा क्षारदग्धा व्रणा विषान्विता विषयुक्ता व्रणास्तथा मांसपाके व्रणा गुदपाके चातिदारुणा ये व्रणास्तथा शीर्यमाणाः सदनावस्थां भजमानाः सरुग्दाहाश्च शोफावस्थाश्च तथा विसर्पिणो ये व्रणास्ते सर्वे न बन्धनीयाः ॥ ६० ॥

हे०—व्रणविशेषे बंधनं निषेधति—कुष्ठिनामिति । ते च व्रणास्त्रयोदश । तत्र मधुमेहिनां पिटिकाः । उन्दुरुविषे कर्णिकाः । मूषकविषोत्थपद्मकर्णिकाकारमांसवृद्धयः, विसर्पि इत्यन्तः ॥ ६० ॥

इदानीं सकृमीणां व्रणानां चिकित्सामाह—

अरक्षया व्रणे यस्मिन् माक्षिका निक्षिपेत्कृमीन्।
ते भक्षयंतः कुर्वंति रुजाशोफास्रसंस्रवान्॥ ६१॥

स०—अरक्षयाऽपालनेन यस्मिन् व्रणे मक्षिका कृमीन्निक्षिपेत् । ते तत्रस्थाः कृमयो व्रणं भक्षयंतो रुजादीन् कुर्वंति ॥ ६१ ॥

प०—अरक्षया अपालनेन यस्मिन् व्रणे मक्षिका कृमीन्निक्षिपेत । कृमयः तत्रस्थाः व्रणं भक्षयन्तः अन्तः रुजादीन् कुर्वन्ति जनयन्ति ॥ ६१ ॥

हे०—व्रणकृमिप्रतीकारमाह—अरक्षयेति ॥ ६१ ॥

सुरसादिं प्रयुंजीत तत्र धावनपूरणे।
सप्तपर्णकरंजार्कनिंबराजादनत्वचः॥
गोमूत्रकल्कितो लेपः सेकः क्षारांबुना हि
प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्ह

स०—तत्र तस्मिन् व्रणे सुरसादिगणं धावने च तन्निमित्तं प्रयुंजीत । धावनं च पूरणं च तस्ि तथा तस्मिन्व्रणे सप्तपर्णादीनां त्वचो गोमूत्रकवि पिष्टलेपो हितः । तथा क्षारांबुना सेको हित अथवा मांसपेश्या व्रणं प्रच्छाद्य पिधाय तान् ह नाशु निर्हरेत् ॥ ६२ ॥

प०—तत्र व्रणे कृमियुक्ते व्रणे सुरसावि धावने प्रक्षालने पूरणे तदाच्छादने तन्निमित्तं ञ्जीत । सप्तपर्णादीनां त्वचो गोमूत्रकल्किताः व्रणे तस्मिन् लेपः प्रयोज्यः । तथा सेकः परि तस्मिन् व्रणे क्षाराम्बुना क्षारनिश्चोततो येन शस्तः । तं व्रणं मांसपेश्या प्रच्छाद्य छादयि व्रणप्रमाणसंस्थानमांसपिण्डेन स्थगयित्वा कृमीं शीघ्रमेव निर्हरेत् अपनयेत् ॥ ६२ ॥

हे०—व्रणे कृमीणामौषधमाह—सुरसादीति । सु दिगणक्वाथेन धावनं, चूर्णेन पूरणं, राजादनः राज मांसपेश्या मांसगर्भया पेश्या तान् कृमीन् मांसले पेशीप्रविष्टान् ॥ ६२ ॥

न चैनं त्वरमाणोऽन्तः सदोषमुपरोहयेत्।
सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः॥६

स०—नचैनं व्रणमंतः सदोषं त्वरमाणो वैद्य रोहयेत् । कस्मादित्याह । स इत्यादि । यतो य स्सोऽन्तःस्थितदोषो व्रणो रूढोऽपि भूयः पुनस्त नाऽप्यपचारेण विकृतिं याति ॥ ६३ ॥

प०—नचैनं व्रणमन्तः सदोषं पूयाद्याक्रान्तं माणो वैद्य उपरोहयेत् रूढं कुर्यात् । रोपण यस्मात्सोऽन्तःस्थिताद्दोषो व्रणे रूढो पुनः विकुरुते विकृतिं याति । विकार सम्पद्यते ॥ ६३ ॥

हे०—अशुद्धस्य रोपणं निषेधति—न चैनमिति

**रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ।**
**हर्षं क्रोधं भयं वापि यावदास्थैर्यसंभवात् ।**
**आदरेणानुवर्त्योऽयं मासान्षट् सप्त वा विधिः ॥**

स०–रूढेऽपि सत्यजीर्णादीन् विवर्जयेत् । अयमजीर्णव्यायामादिपरिवर्जनलक्षणो विधिः षट् सप्त वा मासानादरेण रक्षणीयः॥ ६४ ॥

प०–रूढेऽपि व्रणे अजीर्णव्यवायादीन् परिहार्यान् आतुरो विवर्जयेत् परिहरेत् । अजीर्णवर्जनादिपरिहार्योऽयं विधिरादरेणानुवर्त्यं प्रयत्नेनानुष्ठेयः मासान् षट् सप्त वा ॥ ६४ ॥

हे०–रूढव्रणस्य सप्तमासावधिमाह–रूढ इति । आदिशब्दात् क्रोधशोकभयादयः ॥ ६४ ॥

**उत्पद्यमानासु च तासु तासु**
**वार्तासु दोषादिबलानुसारी ।**
**तैस्तैरुपायैः प्रयतश्चिकित्से-**
**दालोचयन् विस्तरमुत्तरोक्तम् ॥ ६५ ॥**

स०–तासु तासु वार्तास्ववस्थास्वनिर्दिष्टस्वरूपाभिधानासूत्पद्यमानासु जायमानासु तैस्तैरुक्तैरुपायैः साधनैश्चिकित्सेद्वैद्यः । यथा मक्षिकाभिः कृमिनिक्षेपात्कृमिप्राबल्ये जाते चिकित्सा विहिता । किंभूतो वैद्यः । दोषादिबलानुसारी दोषादीनां बलं दोषादिबलम् । आदिग्रहणाद्देशकालादयो गृह्यंते । तदनुसरत्येवंविधो यो वैद्यः । तथा प्रयतो यत्नपरः । तथोत्तर उत्तरतंत्रे व्रणभंगविधान उक्तं निर्दिष्टं विस्तरमालोचयन् निरूपयन्न तु यदृच्छयेति भावः । इंद्रवज्रा वृत्तम् ॥ ६५ ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

प०–उत्पद्यमानासु जायमानासु तासु तासु वार्तासु अनिर्दिष्टरूपाभिधानासु । दोषादिबलानुसारी वैद्यः तैस्तैरुपायैः साधनैश्चिकित्सितैः प्रयत्नपरश्चिकित्सेत् । आलोचयन् विकल्पान् विस्तरमुत्तरतन्त्रमाश्रित्योक्तं बुद्ध्या परामृश्य चिकित्सेन्न यदृच्छयेति भद्रम् ॥ ६५ ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

हे०–अनुक्तं स्वयमूहनीयमित्याह–उत्पद्यमानास्विति। वार्तासु अवस्थासु उत्तरोक्तमुत्तरस्थानोक्तम् ॥ ६५ ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने शस्त्रकर्मप्रकरणं सामस्त्येन निरूपितम् ॥ २९ ॥

## त्रिंशोऽध्यायः ।



अतोऽनंतरं क्षाराग्निकर्मविधिरारभ्यते यथैव हि शस्त्रेण पाटनादीनि कृत्वा तत्साध्य आमय उपक्रम्यते तथैव क्षाराग्निभ्यामित्याह–

**अथाऽतः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

स०–क्षारश्चाऽग्निश्च क्षाराग्नी तयोः कर्म क्षाराग्निकर्म तस्य विधिः । शेषं पूर्ववत् । क्षारस्य बाह्याभ्यंतरोपयोगित्वेन पूर्वमुपन्यासः ॥ १ ॥

प०–अस्यारम्भेऽयं सम्बन्धः । यथाशस्त्रच्छेदनभेदनादीनि कर्माणि करोति तथैवाग्निक्षारौ स्वविषयप्रयुक्तौ कुरुतः ॥ १ ॥

हे०–क्षाराग्निकर्मविधिमध्यायं व्याख्यातुं प्रतिजानीते अथेति । तत्रादौ क्षारकर्मविधिः ॥ १ ॥

**सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।**
**छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥**
**दुःखावचार्यशस्त्रेषु तेन सिद्धिमयात्सु च ।**
**अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ॥२**

स०–सर्वाणि च तानि शस्त्राण्यनुशस्त्राणि च तानि तेषां सर्वशस्त्रानुशस्त्राणां मध्ये क्षारः श्रेष्ठो ज्यायान् कुतोऽस्य श्रेष्ठतेत्याह–

यद्यस्माद्बहूनि छेद्यभेद्यादीनि कर्माण्यसौ करोति। आदिशब्देन लेखनपाटनादिपरिग्रहः । विषमेष्वपि देहदेशेषु । दुःखावचार्यशस्त्रेषु नासार्शोऽर्बुदादिषु । दुःखेनावचारयितुं शक्यं शस्त्रं येषु तेषु । अपिशब्दात्समेषु देहेषु युज्यते । तेन च शस्त्रेण सिद्धिमयात्स्वसिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु । किंभूतेष्वतिकृच्छ्रेष्वतिदुःखसाध्येषु । दुष्टव्रणेषु रोगेष्वसौ क्षारो युज्यते योग्यः संपद्यते ततोऽपि हेतोः क्षारः श्रेष्ठः । यच्चेति । यस्माच्च क्षारः पानविषयेऽपि युज्यते शरीरांतःस्थितरोगशांत्यै । अपिशब्दाद्बाह्येऽपि बाह्यरोगस्थितिशांत्यै लेपे स युज्यते ॥ २ ॥

प०-शस्त्राणि मण्डलाग्राणि अनुशस्त्राणि जलौकःप्रभृतीनि तेषां मध्ये क्षारः श्रेष्ठो ज्यायान्।कुतोऽस्य श्रेष्ठता । यस्माद्बहूनि कर्माणि छेद्यभेद्यादीनि कुरुते विषमेषु सम्बन्धानवकाशजेषु दुःखावचारणीयशस्त्रेषु नासार्बुदादिषु तेन शस्त्रेण सिद्धिमयात्सु न सिद्ध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु तथातिकृच्छ्रेषु रोगेषु शूलानाहाश्मरीशर्करादिषु यद्यस्मात् पानेऽपि युज्यते ॥ २ ॥

हे०-तत्र क्षारप्रशंसा सर्वशस्त्रेति । संग्रहे तु क्षारो हि नानौषधिसमवायनिर्वृतेः स सर्वरसाधिष्ठानं, कटुलवणरसभूयिष्ठस्तीक्ष्णो दहनः पाचनोऽवदारणो विलेपनः शोधनारोपणः क्रम्याममेदोविषापहः सर्वशस्त्रानुशस्त्राणां च वरिष्ठेन भेदेन पाटनलेखनकरणात् । यतः संबाधावकाशजेषु दुःखावचारणीयशस्त्रेषु नासार्शोऽर्बुदादिषु शस्त्रेण चासिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु प्रयुज्यते स द्विधा बाह्यांतःपरिमार्जनभेदेन ॥ २ ॥

अधुना क्षारस्य पेयलेपविषयविभागं दर्शयति-

**स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु ॥३॥**

स०-स क्षारः अर्शःसु विषये पेयः । तथाऽग्निसादे तथाऽश्मर्यां गुल्मादिषु च । आदिग्रहणादानाहशूलादिषु च ॥ ३ ॥

प०-सः क्षारः पेयः पातव्योऽर्शस्सु तथाऽग्निसादेऽश्मर्यां गुल्मे तथोदरे ॥ ३ ॥

हे०-अंतःपरिमार्जनस्य विषयमाह-स पेय इति । संग्रहे तु स यथा स्वप्नमेवोपदेक्ष्यते ॥ ३ ॥

**योज्यः साक्षान्मषश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ।**
**भगंदरार्बुदग्रंथिदुष्टनाडीव्रणादिषु ॥ ४ ॥**

स०-स क्षारो योज्यः साक्षाल्लेपनेन मषादिषु । आदिग्रहणाच्चर्मकीलालवर्त्मतिलकादिपरिग्रहः ॥ ४ ॥

प०-स क्षारो योज्यः साक्षाद्बहिः प्रमार्जनेनालेपेन मषश्वित्रादिषु आदिग्रहणादन्येष्वनुक्तेषु तत्साध्येषु रोगेषु ॥ ४ ॥

हे०-बहिः परिमार्जनस्य विषयमाह-योज्य इति॥४॥

**न तूभयोऽपि योक्तव्यः पित्ते रक्ते बलेऽबले ।**
**ज्वरेऽतिसारे हृन्मूर्धरोगे पांड्वामयेऽरुचौ ॥**
**तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ।**
**भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु ॥**
**अजीर्णेऽन्ने शिशौ वृद्धे धमनीसंधिमर्मसु ।**
**तरुणास्थिसिरास्नायुसेवनीगलनाभिषु ॥**
**देशेऽल्पमांसे वृषणमेढ्रस्रोतोनखांतरे ।**
**वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने ॥ ५ ॥**

---

१ **सुश्रुत**स्तु-अथ नैते क्षारकृत्याः-तद्यथा-दुर्बलबालस्थविरभीरुसर्वाङ्गशून्योदरिरक्तपित्तिगर्भिण्यृतुमतीप्रवृद्ध,-ज्वरिप्रमेहिरूक्षक्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीबापवृत्तोद्वृत्तफलयोनयः ॥

अत्र **निबन्धकारः**-अतः क्षारस्य द्विविधस्यापि ये प्रतिषेधस्तानाह-अथ नैते क्षारकृत्या इति । एषु च यथायोग केषुचित् प्रतिसारणीयक्षारनिषेधः, केषुचित् पानीयनिषेधः केषुचिदुभयनिषेधः । सर्वाङ्गशूनोदरीति सर्वाङ्गशूनो च उदरतस्यैव क्षारनिषेधः, क्षत उरःक्षतस्तेन क्षीणः, तृष्णामूर्च्छोपद्रु इति उपद्रुतशब्दस्तृष्णामूर्च्छाभ्यां सह प्रत्येकं संबध्यते, क्लीब क्षीणशुक्रः, अशुक्रस्य पुनः क्षाराधिकार एव नास्ति, उद्वृत्तापवृत्तफलयोनय इति उद्वृत्तापवृत्तशब्दौ फलयोनिभ्यां स प्रत्येकं संबध्येते, फलमण्डं, योनिर्गर्भाशयः, उद्वृत्तफल स्थानादूर्ध्वगताण्डः, अपवृत्तफलः स्थानात् स्रस्ताण्डः, उद्वृत्त योनिः, स्थानादूर्ध्वगतयोनिः, अपवृत्तयोनिः स्थानात् स्र योनिः, अन्ये तु फलयोनिशब्देन समुदितेन गर्भाशयमा क्षते, तत्रायमर्थः-उद्वृत्तफलयोनिः स्थानादूर्ध्वगतगर्भाश अपवृत्तफलयोनिः स्थानात्स्रस्तगर्भाशयेत्यर्थः । अपरे तु फ शब्दं रजसि वर्तयन्ति, कुतः गर्भस्य फलसाधनत्वात्, यस्य योनेः सकाशात् फलं रज उद्वृत्तमूर्ध्वगतम्, अपवृत्तम गतं सा उद्वृत्तापवृत्तफलयोनिः ॥

स०—पानलेपनभेदेन द्विविधोऽपि क्षारः पित्तादौ न योक्तव्यः । बले बलवति । अबले बलहीने । ज्वरे । अतिसारे । हृद्रोगे । मूर्धरोगे । पांड्वामये पांडुरोगे । अरुच्यावरोचके । कृतसंशुद्धौ कृतवमनविरेके । श्वयथौ सर्वगात्रगे सर्वांगोच्छूने । तथा भीरौ । गर्भिण्याम् । ऋतुमत्याम् । प्रोद्वृत्तफलयोनिर्वक्ष्यमाणा उत्तरतंत्रे गुह्यरोगज्ञाने । प्रकर्षेणोद्वृत्तं फलं रजोरूपं यस्या योनेः सा प्रोद्वृत्तफलयोनिः । रज एव फलं गर्भाख्यफलसाधनोपायत्वात् । प्रोद्वृत्तफलयोनेर्लक्षणमुक्तं यथा—वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः । स फेनिलं रजः कृच्छ्रादुदावृत्तं विमुंचति । इयं व्यापदुदावृत्तेत्यादि । शिशौ बाले । वृद्धे गतवयसि । तथा धमन्यादिषु शरीरदेशेषु । देशेऽल्पमांसे स्वल्पपिशिते । तथा वृषणादिषु शरीरदेशेषु । तथाक्ष्णोर्नेत्रयोर्वर्त्मरोगं वर्जयित्वाऽन्यत्र क्षारो न प्रयोज्यः । वर्त्मरोगे तु क्षारो योज्य एव । शीतवर्षोष्णदुर्दिने न च योज्यः । शीतवर्षोष्णाहानि हेमंतशिशिरप्रावृड्ग्रीष्माः । दुर्दिनं मेघाद्याकुलदिवसम् । एषु क्षारो न योज्यः ॥ ५ ॥

प०—उभयोऽपि क्षारो बहिःपरिमार्जने न योज्यः । पानालेपनयोर्न देयः । पित्ते पित्तविकारे रक्ते रक्तविकारे चले वायौ वातरोगे तथाऽबले दुर्बले आतुरे अतिसारे तथा हृद्रोगे पाण्ड्वामये पाण्डुरोगे अरुच्यावरोचकातुरे कृतसंशुद्धौ कृतवमनविरेके च तथा श्वयथौ सर्वगात्रगे सर्वाङ्गोच्छूने तथा भीरुगर्भिण्यामृतुमत्याम् । प्रोद्वृत्तफलयोनिषु वक्ष्यमाणोत्तरतन्त्रे गुह्यरोगविज्ञानीये शिशौ बाले वृद्धे गतवयसि तथा धमन्यादिषु शरीरदेशेषु नाभ्यन्तेषु देशेषु अल्पमांसे स्वल्पपिशिते तथा वृषणादिषु तथाक्ष्णोर्नेत्रयोः वर्त्मरोगादृते वर्त्मरोगं वर्जयित्वाऽन्यत्र क्षारो योज्यः । वर्त्मरोगेषु तु क्षारो योज्य एव । तथा शीतोष्णवर्षादुर्दिने नच योज्यः ॥ ५ ॥

हे०—द्वयोरपि क्षारयोर्निषेधमाह-नत्विति । चले वाते, अबले दुर्बले, प्रोद्वृत्ता संस्थानविपर्ययं प्राप्ता फलयोनिर्गर्भाशयो यस्याः सा तथा । तरुणास्थि नासाद्यस्थि ॥ ५ ॥

अधुना क्षारक्रियामाह—

**कालमुष्ककशम्याककदलीपारिभद्रकान् ।**
**अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान्[1] ॥**
**इंद्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ।**
**काकजंघामपामार्गमग्निमंथाग्नितिल्वकान् ॥**
**सार्द्रान् समूलशाखादीन् खंडशःपरिकल्पितान् ।**
**कोशातकीश्चतस्रश्च शूकनालं यवस्य च ॥**
**निवाते निचयीकृत्य पृथक्तानि शिलातले ।**
**प्रक्षिप्य मुष्ककचये सुधाश्मनि च दीपयेत् ॥**
**ततस्तिलानां कुंतालैर्दग्ध्वाऽग्नौ विगते पृथक् ।**
**कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः ॥**
**मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ।**
**गालयेदर्धभारेण महता वाससा च तत् ॥**
**यावत्पिच्छलरक्ताच्छस्तीक्ष्णोजातस्तदा च तम् ।**
**गृहीत्वा क्षारनिष्यंदं पचेल्लौह्यां विघट्टयन् ॥**
**पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ।**
**शुक्तिक्षारपंकशंखनाभीश्चाऽऽयसभाजने ॥**
**कृत्वाऽग्निवर्णान्बहुशः क्षारोत्थे कुडवोन्मिते ।**
**निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ॥**
**श्लक्ष्णं शकृद्दक्षशिखिगृध्रकंककपोतजम् ।**
**चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च ॥**
**परितः सुतरां चाऽतो दर्व्या तमवघट्टयेत् ।**
**सबाष्पैश्च यदोत्तिष्ठेद्बुद्बुदैर्लेहवद्घनः ॥**
**अवतार्य ततः शीतो यवराशावयोमये ।**
**स्थाप्योऽयं मध्यमः क्षारो ॥ ६ ॥**

स०—कालमुष्कको मोक्षः । अश्वकर्णः कुशिकः । महावृक्षः स्नुही । आस्फोतो गिरिकर्णिका । वृक्षको नंदीवृक्षः । इंद्रवृक्षः कुटजः । पूतीकः पूतीकरंजः । नक्तमालः

१ अत्र बले बलवतीत्यरुणदत्तव्याख्यानं चिन्त्यम्, **हेमाद्रिपदार्थचन्द्रिकयोः** "बले" इत्यस्य स्थाने "चले" इति पाठदर्शनात् ।

१ वृक्षको नन्दीवृक्षः, इन्द्रवृक्षः । कुटजः, **इत्यरुणदत्तः** । परञ्च वृक्षकः कुटजः, इन्द्रवृक्षोऽर्जुनः, इति **हेमाद्रिणा**—यदुक्तं तत्सत्यम्, यौगिकत्वात् ।

क्षिपेत् । श्लक्ष्णपिष्टं कृत्वा । दक्षः कुक्कुटः । शिखी मयूरः । गृध्रः श्येनः । कङ्ककपोतकौ पक्षिणौ । चतुष्पदां पक्षिणां पित्तं तथा अलं हरितालं, मनोह्वा मनःशिला, लवणानि सैन्धवानि परितः सुतरां चातो दर्व्या तदवघट्टयेत् । प्रतीवापादनन्तरं परितः समन्तात् दर्व्या खजेन तत्क्षारनिष्यन्दमवघट्टयेत् । यदा यस्मिन् काले स क्षारनिष्यन्दः सबाष्पैर्बुद्बुदैरुत्तिष्ठेत् सान्द्रतया च घनः सन् लेहेन तुल्यो दर्वीप्रलेपः स्यात्तदा तस्मिन् कालेऽवतार्यायोमये घटे शान्ते यवराशौ निधापयेत् निक्षिपेत् सुगुप्ते स्थापयेत् । अयं मध्यमः क्षारः ॥ ६ ॥

हे०—बहिःपरिमार्जनस्य दहनविधिमाह—कालमुष्ककेति । संग्रहे तु अथ बहिःपरिमार्जनस्त्रिविधो मध्यो मृदुस्तीक्ष्णश्च तस्य पाकविधिः । शरदि शुचिरुपोषितः शुक्लवासाः प्रशस्तेऽहनि प्रशस्तप्रदेशजातं मध्यवयसमनुपहतं महांतं कालं पुष्कलं सुरापललसुमनोऽक्षतादिभिश्चतुर्दिशं बलिं दत्त्वा प्रदक्षिणं चाभ्यर्च्यैनमधिवासयेत् । "दैवतेभ्यो नमस्तेभ्यो निवसंतीहऽये श्रिताः । गंतुमर्हंति ये कुद्धस्त्यक्त्वेमं वा समर्पयन् ॥ भेषजार्थं ग्रहीष्यामि सर्वप्राणभृतामिमम् । वृक्षं न लोभान्न क्रोधाद् ब्राह्मणार्थं विशेषतः " इति । अथापरेद्युस्तत्र यद्यन्द्रुक्तं वैकृतं वा किंचिन्न पश्येत्ततो युगमात्रमारूढे सवितरि ब्राह्मणान्वाचयित्वा तं पादपं पूर्वाग्रमुत्तराग्रं वा पातयेत् एवं च पारिभद्रकादिषु । कालमुष्ककः—कृष्णो मोक्षकः, महावृक्षकः—स्नुही, आस्फोतः—कोविदारः, वृक्षजः—कुटजः, इंद्रवृक्षोऽर्जुनः, परिकल्पितान् छिन्नान्, चतस्रः क्ष्वेडो धामागवः पटोली देवदाली चेति । निचयीकृत्य पुंजीकृत्य, पृथक् प्रत्येकं तेषु पुंजेषु मध्ये यः कालमुष्कपुंजः तत्र सुधाश्मानि प्रक्षिपेत् । सुधाप्रसादादिधवलीकरणद्रव्यं तेभ्यो दग्धेभ्यो जायते तानि सुधाश्मानि ततः सर्वान् पुंजांस्तिलानां कुंतलैर्दीपयेत् । समूलनालः शुष्कतिलः कुन्तलं दीपनं वह्निना प्रज्वालनम् । गालनविधिमाह—दग्ध्वेति । दग्ध्वा भस्मीकृत्य अग्नौ विगते शान्ते सति सुधाश्मनां भस्म पृथक्कृत्वा इतरद्द्रव्यभस्मनो द्रोणं मुष्ककभस्मना उत्तरं सम्पादतां नीतं शम्याकादीनां समानां चत्वार आढकाः । मुष्ककस्यैक आढक इत्यर्थः । जलस्यार्धभारो मूत्रस्यार्द्धभार इत्युभयोर्भारेणालोड्य महता वस्त्रेण गालयेत् । पुनः पुनस्तेनैव परिस्रावेणालोड्य यावत्पिच्छिलो रक्तः अच्छस्तीक्ष्णश्च परिस्रावो भवति । पाकविधिमाह—तदेति । तदा तं क्षारनिष्यन्दे गृहीत्वा क्षारं पक्त्व लौह्यां लोहपात्रे पचेत् । ता या मुष्ककभस्मनः पृथक् कृतास्ताः क्षीरपका पङ्किका शंखनाभिः शंखस्यावर्त बहुशः बहून् वारान् त्रीणि तापनानि त्रीणि निर्वापणानित्यर्थः । पेषणस्य क्षारोदकस्य मानोक्त्या पेष्यमानमनुक्तमपि कल्प्यम्, दक्षादीनां पक्षिणां शकृत्पुरीषं चतुष्पदां पक्षिणां च पित्तम्, अलं हरितालं, दक्षविष्ठादिकं श्लक्ष्णं चूर्णं कृत्वा निक्षिपेत् । आवापानंतरं सुत परितो दर्व्याऽविघट्टयेत् । लेहवद्घनः लेह इव सांद्र अयोमये लोहपात्रे विनिक्षिप्य यवराशिमध्ये स्थाप्यः अ मध्यमक्षारो मृदुतीक्ष्णयोर्वक्ष्यमाणत्वात् ॥ ६ ॥

**न तु पिष्ट्वा क्षिपेन्मृदौ**
**निर्वाप्यापनयेत् ॥ ७ ॥**

स०—मृदौ क्षारे सुधादीनि निर्वाप्य तस्मि न्निष्यंदे प्रक्षिप्यैवापनयेद्विसर्जयेन्न तु पिष्ट्वा विनिक्षि पेत् ॥ ७ ॥

प०—**न मृदौ नापि तीक्ष्णे निर्वाप्यावपनं कुर नतु पिष्ट्वा निक्षिपेत् ॥ ७ ॥**

हे०—मृदुतीक्ष्णक्षारे विशेषमाह—**न तु पिष्ट्वेति** मृदौ क्षारे मध्यमवत्सर्वं आवपेत् । विशेषता निर्वाप्य पनयेन्नतु पिष्ट्वा क्षिपेत् । निर्वापणद्रव्यमेव क्षिपेदित्यर्थ दक्षविष्ठादिकं च क्षिपेत् ॥ ७ ॥

**तीक्ष्णे पूर्ववत् प्रतिवापनम् ॥**
**तथा लांगलिकादंतिचित्रकातिविषावचाः ।**
**स्वर्जिकाकनकक्षीरिहिंगुपूतीकपल्लवाः ॥**
**तालपत्री बिडं चेति सप्तरात्रात्परं तु सः ।**
**योज्यः ॥ ८ ॥**

स०—तीक्ष्णे क्षारे पूर्ववन्मध्यमक्षारतुल्यं प्रतिवा निर्वाप्य पिष्ट्वा विनिक्षिपेदिति । नचैतावदेव प्रतिवापनमित्याह । तथेत्यादि लांगलिकादीनि वि पर्यंतानि च तत्र प्रतिवापं विनिक्षिपेत् । सप्तरात्रात मनंतरं स क्षारो योज्यः ॥ ८ ॥

प०—मध्यमक्षारतुल्यरूपं प्रतीवापं निर्वाप्य लाङ्गलिकादीनि बिडपर्यन्तानि श्लक्ष्णानि

क्षिपेत् । पूतीकपल्लवाः पूतीकप्रवालाः । स त्रिविधोऽपि क्षारः सप्तरात्रात् परमूर्ध्वं योज्यः प्रयोक्तव्यः ॥ ८ ॥

हे०—तीक्ष्णोऽपि सर्वं मध्यमवत् लांगलिकाद्यावापोऽधिकं पूतीकपल्लवाः करञ्जपत्राणि । कालपत्री मुशली स त्रिविधोऽपि क्षारः सप्तरात्रात्परं योज्यः । सप्तरात्रं यवराशौ स्थाप्य इत्यर्थः ॥ ८ ॥

इति क्षारत्रैविध्यमुक्त्वा विषयं निर्दिदिक्षुराह—

**तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥९॥**

स०—तीक्ष्णः क्षारो वातश्लेष्ममेदःसमुत्थेष्वर्बुदादिषु योज्यः । महत्स्वेव योज्यः । मध्येषु क्षारांतरविधानम् । आदिग्रहणादन्येष्वपि तत्साध्येषु रोगेष्वयं क्षारो योज्यः ॥ ९ ॥

प०—तीक्ष्णः क्षारोऽर्बुदादिषु अनिलश्लेष्ममेदोजेषु योज्यः ॥ ९ ॥

हे०—क्षारत्रयं विषयत्रयमाह—तीक्ष्ण इति । तत्र कफवातमेदोजेषु क्षारसाध्येषु तीक्ष्णेषु तीक्ष्णो योज्यः ॥९॥

**मध्येष्वेव च मध्यः ॥ १० ॥**

स०—एष्वेवाऽनिलकफमेदोजेषु विकारेष्वर्बुदादिषु मध्येषु नोत्कृष्टेषु नाऽपि हीनेषु मध्यः क्षारो योज्यः ॥ १० ॥

प०—मध्येष्वेव च मध्यः मध्यमः क्षारः । एष्वेवार्बुदादिषु मध्येषु नातिप्रवृद्धेषु योज्यः ॥ १० ॥

हे०—एष्वेव मध्येषु मध्यमः ॥ १० ॥

**अन्यः पित्तास्रगुदजन्मसु ॥ ११ ॥**

स०—अन्यो मृदुः क्षारः पित्तरक्तसमुत्थेष्वर्शःसु योज्यो न तीक्ष्णमध्यौ क्षारौ ॥ ११ ॥

प०—अन्यो मृदुः क्षारः गुदजेष्वर्शःसु पित्तरक्तसमुत्थेषु प्रयोज्यः ॥ ११ ॥

हे०—पित्तास्रजन्मसु क्षारसाध्येषु मृदुः । तथा गुदजन्मस्वर्शःसु पक्वान्यपि ॥ ११ ॥

**बलार्थं क्षीणपानीये क्षारांबु पुनरावपेत् ॥१२॥**



स०—तस्मिन् क्षारे क्षीणपानीये घनीभूते क्षारे बलाधानार्थं पुनर्भूयः क्षारांबु क्षारविविस्रुतं जलमावपेद्दद्यात् ॥ १२ ॥

प०—तस्मिन् क्षारे क्षीणपानीये घनीभूते सति बलार्थं शक्त्युपबृंहणाय क्षाराम्बु क्षारनिश्च्योतजलं पुनरावपेत् भूयः क्षिपेत् ॥ १२ ॥

हे०—क्षीणपानीये क्षारे अन्यत्क्षारांबु निक्षिपेत् १२ ॥

अधुना क्षारगुणानाह—

**नातितीक्ष्णो मृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत् ॥१३॥**

स०—क्षारे नातितीक्ष्णादयो दश गुणा भवंति । शीघ्रं गच्छति प्रसरत्याशु व्याप्नोतीति शीघ्रगः । शिखरी शिखरमुपरिष्टात्पीटिकोत्थानं तद्वान् । सुखेन कांजिकादिना निर्वाप्यते शीतीक्रियते सुखनिर्वाप्यः । विष्यंदोऽस्यास्तीति विष्यंदी स्रुतिमान् न विष्यंदी न स्रुतिमान् । न चातिरुक् न चार्तिमान् । नातितीक्ष्णादयो दश गुणा यस्य स दशगुणः क्षारः । संग्रहे चाऽस्य दशैव दोषा गदिताः । तद्यथा । अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलो विसर्पी हीनौषधो हीनपाकश्चेति । शस्त्रे यत्कर्म छेदनपाटनलेखनादि तथा तेजसो वह्नेरपि यत्कर्म तत्साध्यव्याध्युपशमलक्षणं तत्करोति ॥ १३ ॥

प०—क्षारे नातितीक्ष्णादयो दश गुणा भवन्ति । नात्यर्थतीक्ष्णः नातिमृदुः वारितः नातिश्लक्ष्णः मसृणः नातिपिच्छिलः सान्द्रक्षारः तथा शीघ्रं गच्छति प्रसरति आशु प्राप्नोति शीघ्रगः । शिखरी उपरि पीठाकारवान् । सितः श्वेतः । सुखेन काञ्जिकादिना निर्वाप्यते शीतीक्रियते सुखनिर्वापणीयः सुखनिर्वाप्यः । विष्यन्दोऽस्यास्तीति विष्यन्दी न स्रुतियुक्तः । नचातिरुक् नचातिपीडायुक्तः । शस्त्रतेजसोरपि कर्मकृत् शस्त्रस्य यत्कर्म छेदनपाटनलेखनादि तत्करोति । तथा तेजसो वह्नेरपि यत्कर्म तत्साध्यव्याधिप्रशमनरूपं तदपि करोति ॥ १३ ॥

हे०—क्षारगुणानाह—नातितीक्ष्णो मृदुरिति । शीघ्रगः शीघ्रव्यापी, सितः श्वेतः, शिखरं चिरसंस्थस्य द्रव्यस्योपरि पिटिका तद्वान् शिखरी, सुखेन निर्वाप्यः शीततां नेयः न विष्यन्दी क्लेदं नोत्पादयति, यच्छस्त्रेणाग्निना च कार्यं तत्क्षारः करोति ॥ १३ ॥

अधुना त्वंतरानुभवद्वारेण क्षारस्य गुणान्निर्दिशति—

**आचूषन्निव संरंभाद्गात्रमापीडयन्निव ।**
**सर्वतोऽनुसरन् दोषानुन्मूलयति मूलतः ।**
**कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति॥१४॥**

स०—संरंभात्क्षोभाद्गात्रमाचूषन्निव तथाऽऽपीडयन्निव तथा सर्वतः सर्वस्मिन्ननुसरन् गच्छन् दोषान् शस्त्रसाध्यान् मूलत उन्मूलयत्युद्धरति । तथा कर्म स्वीयं दाहादिकं कृत्वा गतरुजः पुरुषस्य स्वयमेव यत्नं विनैवोपशाम्यति ॥ १४ ॥

प०—संरम्भात् क्षोभात् क्षणनात् गात्रमाचूषन्निव तथा पीडयन्निव सर्वतः सर्वस्मिन् अनुसरन् गच्छन् दोषांस्तत्साध्यान्मूलतो मूलादुन्मूलयति उद्धरति स्वकीयशक्त्या । तथा कर्मापि दाहादिकं कृत्वा गतरुजो निवृत्तपीडः स्वयमेवात्मनैवोपशाम्यति ॥ १४ ॥

हे०—आचूषन् अन्तर्गतं रसमाकर्षयन् आपीडयन् संकोचयन् संरम्भाद्वेगेन । संग्रहे तु दश क्षारगुणा दशैव च दोषाः । तद्यथा—अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलोऽतिविसर्पी हीनौषधो हीनपाकश्चेतीति । अथ **क्षारप्रयोगविधिः** । तत्र संग्रहे तत्र क्षारकर्मण्युपहरेत् पिचुवर्तिशलाकादर्व्यंजलिकघृतमधुशुक्तसुवीरकमस्तुक्षारोदकशीतप्रदेहशयनासनादीनि । अथ क्षारार्हस्योपविष्टस्य संविष्टस्य वा परिचारकोपगृहीतस्येति ॥ १४ ॥

**क्षारसाध्ये गदे छिन्ने लिखिते स्राविते ऽथवा ।**
**क्षारं शलाकया दत्त्वा प्लोतप्रावृतदेहया ।**
**मात्राशतमुपेक्षेत ॥ १५ ॥**

स०—क्षारसाध्ये व्याधावर्शोऽर्बुदादौ छिन्ने द्विधाकृते लिखिते शस्त्रेण विघृष्टे स्राविते प्रच्छाद्य निर्हृतशोणिते कर्मणि कृते क्षारो योज्यो नाकृते क्लेदादाविति क्षारस्य विषयो दर्शितः । क्षारं शलाकया दत्त्वा मात्राशतमुपेक्षेत न कांजिकादिना निर्वापणं कार्यमित्यर्थः । किंभूतया शलाकया । प्लोतेन चैलखंडेन प्रावृतः स्थगितो देहः परिग्रहो यस्याः ॥ १५ ॥

प०—क्षारसाध्ये गदे व्याधौ छिन्ने द्विधा कृते लिखिते शस्त्रेण विघृष्टे स्राविते प्रच्छाद्य निर्हृतशोणिते प्लोतप्रावितदेहया वस्त्रखण्डगुण्ठितशलाकया क्षारं दत्त्वा निपात्य ततो मात्राशतमुपेक्षेत ॥ १५ ॥

हे०—प्रयोगमाह—क्षारसाध्य इति ॥ १५ ॥

**तत्रार्शः स्वावृताननम् ।**
**हस्तेन यंत्रं कुर्वीत ॥ १६ ॥**

स०—तत्र क्षारसाध्येष्वर्शःसु क्षारपातं कृत्वा मात्राशतं यावत्तावद्धस्तेन यंत्रमावृताननं छादितमुखं कुर्यात् ॥ १६ ॥

प०—तत्र क्षारसाध्येष्वर्शस्सु क्षारं दत्त्वा स्वहस्तेनावृताननं पिहितमुखं यन्त्रं कुर्वीत मात्राशतमेव धारयेत् ॥ १६ ॥

हे०—अर्शःसु विशेषमाह—तत्रार्शःस्विति । हस्तेनावृताननं पाणिना मुखे पिहितम् ॥ १६ ॥

**वर्त्मरोगेषु वर्त्मनी ।**
**निर्भुज्य पिचुनाच्छाद्य कृष्णभागं विनिक्षिपेत्।**
**पद्मपत्रतनुः क्षारलेपो घ्राणार्बुदेषु च ॥ १७ ॥**

स०—क्षारसाध्येषु वर्त्मरोगेषु वर्त्मनी निर्भुज्य कुटिलीकृत्य ततः क्षारस्पर्शपरिहाराय पिचुना कार्पासादिमयेन कृष्णभागं तारकप्रदेशमाच्छाद्य क्षारं विनिक्षिपेत् । तत्र च पद्मपत्रप्रमाणः क्षारलेपो देयो न गुदार्शःस्विव घनः । पद्मपत्रतनुरित्युपमानानि सामान्यवचनैरिति समासः । घ्राणार्बुदेषु च पद्मपत्रतनु क्षारलेपः ॥ १७ ॥

प०—वर्त्मरोगेषु वर्त्मव्याधिषु वर्त्मनी निर्भुज्य कुटिलीकृत्य परिवर्त्य पिचुना कार्पासादिमयेन कृष्णभागं तारकप्रदेशं प्रच्छाद्य क्षारं विनिक्षिपेत् घ्राणार्बुदेषु पद्मपत्रतनुः पद्मप्रमाणः क्षारलेपो देयः न तु घनः ॥ १७ ॥

हे०—वर्त्मरोगेषु विशेषमाह—वर्त्मरोगेष्विति । वर्त्मनी निर्भुज्य पिचुनाऽऽच्छाद्य कृष्णभागं विनिक्षिपेत् । घ्राणार्बुदेषु विशेषमाह—घ्राणार्बुदेष्विति ॥ १७ ॥

कथं तत्र लेपो देयस्तत्राह—

**प्रत्यादित्यं निषण्णस्य समुन्नम्याग्रनासिकाम् ।**
**मात्रा विधार्याः पंचाशत् ॥ १८ ॥**

स०—घ्राणजेष्वर्बुदेषु प्रत्यादित्यं रविसंमुखं निषण्णस्य संस्थितस्य तथाऽग्रे नासिकाऽग्रनासिका तामुन्नम्योत्क्षिप्य । कियंतं कालं लेपो धार्य इत्याह । मात्राः पंचाशद्विधार्याः । वर्त्मसु चाल्पतरा मात्राः । स्थानस्य सुकुमारत्वात् ॥ १८ ॥

प०—घ्राणजेष्वर्बुदेषु प्रत्यादित्यमादित्याभिमुखं निषण्णस्योपविष्टस्य तस्य अग्रनासिकां समुन्नम्योन्नमय्य पञ्चाशन्मात्राः क्षारलेपो विधेयः ॥ १८ ॥

हे०—अग्रनासिकां नासाग्रम् ॥ १८ ॥

**तद्वदर्शसि कर्णजे ॥ १९ ॥**

स०—कर्णजेऽर्शसि तद्वत्तेन घ्राणार्बुदेन तुल्यं स एव पद्मपत्रतनुः क्षारलेपस्ता एव पंचाशन्मात्रा धार्याः १९

प०—कर्णजेऽर्शसि तद्वत्पञ्चाशन्मात्रा धार्यः क्षारलेपो विधेयः ॥ १९ ॥

हे०—कर्णार्शःसु विशेषमाह—तद्वदर्शसीति । तद्वन्नासार्बुदवत् ॥ १९ ॥

**क्षारं प्रमार्जनेनानु परिमृज्याऽवगम्य च ।**
**सुदग्धं घृतमध्वक्तं तत्पयोमस्तुकांजिकैः ।**
**निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् २०॥**

स०—अनु पश्चात् क्षारलेपदाननियमितात्कालादनंतरं क्षारं प्रमार्जनेन चैलादिना परिमृज्य शोधयित्वा सुदग्धं क्षारस्थानमर्शोऽर्बुदाद्यधिष्ठानमवगम्य सम्यग्दाहलक्षणेन ज्ञात्वा तत्क्षारदग्धस्थानं घृतमधुलेपितं कृत्वा पयःप्रभृतिभिः साज्यैः सघृतैर्लेपयेत् ॥ २० ॥

प०—अनु पश्चात् क्षारं प्रमार्जनेन शलाकया व्रणं परिमृज्य शोधयित्वा सुदग्धं परिगम्य बुद्ध्वा घृतमध्वक्तं सर्पिर्मधुप्रयुक्तं पयोमस्तुकाञ्जिकेन निर्वापयेत् तत्र शैत्यमुत्पादयेत् ॥ २० ॥

हे०—क्षारप्रयोगानन्तरं क्रियामाह—क्षारमिति । सुदग्धमवगम्य सम्यग्दग्धं ज्ञात्वा पयोमस्तुकांजिकानां विकल्पः ॥ २० ॥

**अभिष्यंदीनि भोज्यानि भोज्यानि क्लेदनाय च ।**

स०—अभिष्यंदीनि क्लतिकफक्लेष्मकारीणि भोज्यान्यन्नपानानि माषदध्यादीनि भोज्यानि भक्षयितव्यानि । किमर्थम् । क्लेदनाय क्षारदग्धस्थानविशरणाय । यतः क्षारदग्धं क्लिन्नं सच्छीर्यते ॥ २१ ॥

प०—अभिष्यन्दीनि क्लेदकर्तॄणि भोज्यान्नपानानि अवश्यं भोज्यानि क्लेदनाय क्लेदनार्थम् २१

**यदि च स्थिरमूलत्वात्क्षारदग्धं न शीर्यते ।**
**धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः ।**
**तिलकल्कः समधुको घृताक्तो व्रणरोपणः २२॥**

स०—यदि च क्षारदग्धमभिष्यंदिभिर्भोज्यैरुपयुक्तैः स्थिरमूलत्वाद्दृढमूलत्वाद्रोगाधिष्ठानं न शीर्यते ततो धान्याम्लस्य बीजमवयवविशेषस्तेन तथा मधुकतिलाभ्यामालेपयेत् । तिलकल्को मधुयष्टियुक्तो घृतान्वितो व्रणस्य रोपणः ॥ २२ ॥

प०—रोगवित् स्थानं लेपयेत् प्रदिह्यात् । धान्याम्लस्य काञ्जिकस्य बीजमवयवोऽधोभागाश्रितः सुराजगल इव तस्य बीजसंज्ञा । तिलकल्को द्रवपिष्टः तिलः समधुको मधुयष्ट्या युक्तो घृतान्वितः व्रणे क्षारक्षते रोपणः स्यात् ॥ २२ ॥

हे०—सुदग्धेऽप्यशीर्णे कृत्यमाह—यदीति । धान्याम्लबीजं तलस्थितं कांजिकद्रव्यम् । संग्रहे तु सुवर्णक्षीरीयुक्तैर्वा त्रिवृद्विडंगसारवान्द्भिर्वा तिलैरालेपयेत् । मालतीदूर्वाकोटनिंवास्फोतपटोलीकरवीरपत्रक्वाथो वा व्रणप्रक्षालनम् । एषामेव च कल्ककाथे सिद्धं सर्पिस्तैलं वा रोपणं नागपुष्पमञ्जिष्ठाचन्दनतिलपर्णिकासु वा यथाव्याधि दोषं च व्रणवदुपक्रमेतेति ॥ २२ ॥

**पक्वजंब्वसितं सन्नं सम्यग्दग्धम् ॥ २३ ॥**

स०—पक्वजंबूफलवदसितं कृष्णं तथा सन्नं निम्नं सम्यग्दग्धं स्थानं विद्यात् ॥ २३ ॥

प०—पक्वं जम्बूसितफलवदसितं पक्वजाम्बवसङ्काशं सन्निभं सम्यग्दग्धं भवति ॥ २३ ॥

यस्मादम्लः शीतः स्पर्शेन । तेन चाम्लेन क्षार उपसंहितो युक्त आश्वेव कटुकलवणभूयिष्ठतां त्यक्त्वा स्वादुतां याति । तदाम्रहणमतिशयेनाम्लैर्निर्वापयेत् देशसात्म्यानुरोधात्कदाचित्क्षीरादिभिरपीति गमयति । इति क्षारविधिः ॥ ३० ॥

प०—यथाम्लं स्पर्शतः शीतं तेनाम्लेनोपसंहितः क्षारयुक्तः सन् आशु शीघ्रं कटुलवणभूयिष्ठतां त्यक्त्वा स्वादुतां माधुर्यं याति गच्छति । तस्मादम्लैः काञ्जिकादिभिर्निर्वापयेत्तराम् । संश्रयेदतिशयेन मधुरः पयःप्रभृतिभिः । तथाच सङ्ग्रहे । "क्षारोऽम्लरससंयोगे मधुरीभवति क्षणात्" इति ३०

हे०—अतिदग्धे प्रतीकारमाह—विशेषादिति । विशेषग्रहणात्पूर्वोक्तवन्निर्वापणम्, उक्तं च संग्रहे—तमतिवृत्तमाशु पूर्वोक्तैरेव निर्वापणैः पुनः पुनर्निर्वापयेत् । अतश्च दाह्यमतिप्रमाणं न सकृदेव दहेदिति । तथा "ज्वरातिसारतृण्मोहमूर्छाह्वद्वेदनार्तिभिः । कक्षं दहत्यग्निरिव शरीरं क्षारविभ्रमः ॥ पाययेतातियोगेऽत्र तं शीघ्रं सघृतं दधि। सगुडं वा दधिसरं तैलं वा ससितोपलम् ॥ धात्रीफलकपित्थाम्लदाडिमस्वरसे घृतम् । द्विगुणे साधितं पानसेकैः क्षारातिरुग्घरम् ॥ दाडिमामलकाम्रातकपित्थकरमर्दकान् । आम्राच्च मातुलुंगाच्च रसं मृद्वग्निना पचेत् ॥ ततोऽतिवृत्तक्षाराय दद्यान्मात्रां यथाबलम् । क्षारो निवर्तते तेन प्रसादं त्वक्च गच्छति ॥ शोणितातिप्रवृत्तौ च बाह्यांतः शिशिरो विधिः " इति ॥ इति **क्षारविधिः** ॥ ३० ॥

अग्निकर्मविधिमाह—

**अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसंभवात् ।**
**भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ३१ ॥**

स०—क्षारादप्यग्नेः प्रशस्यतरत्वम् । कुतः । तेनाग्निना दग्धानां रोगाणामर्शःप्रभृतीनामसंभवात् । भूयोऽग्निदग्धो रोगः प्ररोहं न याति । मूलादुन्मूलनादित्यर्थः। भेषजक्षारशस्त्रैश्च ये रोगा न शांतास्तेषां प्रसाधनाज्ज्वलनो ज्यायान् ॥ ३१ ॥

प०—क्षारादप्यग्निः श्रेष्ठो ज्यायान् गरीयान् । तद्दग्धानां रोगाणामर्शःप्रभृतीनामसम्भवात् पुनरनुत्पत्तेः । तथा भेषजादिभिरसिद्धानां व्याधीनां प्रसाधनात्तस्मादसिद्धेः ॥ ३१ ॥

हे०—अथाग्निकर्मविधिः तत्राग्निप्रशंसामाह—अग्निरिति ॥ ३१ ॥

**त्वचि मांसे सिरास्नायुसंध्यस्थिषु स युज्यते ॥ ३२ ॥**

स०—सोऽग्निदाहस्त्वगादिषु युज्यते ॥ ३२ ॥

प०—स चाग्निस्त्वगादिषु दाहाय योज्यते ॥ ३२ ॥

हे०—अग्निभेदान् षडाह—त्वचीति ॥ ३२ ॥

**मषांगम्लानिमूर्धार्तिमंथकीलतिलादिषु ।**
**त्वग्दाहो वर्तिगोदंतसूर्यकांतशरादिभिः ॥ ३३ ॥**

स०—तत्र मषादिषु रोगेषु त्वग्दाहः कार्यो वर्त्यादिभिः । वर्तिः पिचुवर्तिः । आदिग्रहणादन्येष्वपि क्षुद्ररोगाध्यायोक्तेषु त्वग्दाहो योज्यः । शरादिभिरित्यादिग्रहणादन्यैरपि देशांतरप्रसिद्धैस्त्वग्दाहः कार्यः ॥ ३३ ॥

प०—तत्र त्वग्दाहो मषादिषु गोदन्तादिभिर्योज्यः । तिलकास्तिलकालकान् मषान् तानिव चोन्नतान् मषेभ्यश्चोन्नततरांश्चर्मकीलान् सितासितानित्येतदुत्तरतन्त्राल्लक्षयेत् ॥ ३३ ॥

हे०—त्वग्दाहविषयमाह—मषांगेति । संग्रहे तु सरुक्स्तब्धप्रम्लायदंगाभिष्यंदाधिमंथशिरोभ्रूशंखललाटरुजार्दितेषु यथास्वमभिष्यंदादिषु तु भ्रूशंखललाटदेशेष्विति । त्वग्दाहसाधनान्याह—वर्तिगोदंतेति । वर्तिर्गुग्गुल्वादिकृता, गोदंतो गवां दंतः, सूर्यकांतः स्फटिकः, आदिशब्दात्पिप्पल्यजाशकृच्छलाकादयः ॥ ३३ ॥

**अर्शोभगंदरग्रंथिनाडीदुष्टव्रणादिषु ।**
**मांसदाहो मधुस्नेहजांबवोष्ठगुडादिभिः ॥ ३४ ॥**

स०—अर्शःप्रभृतिषु रोगेषु मधुस्नेहादिभिर्मांसदाहः कार्यः । आदिग्रहणेनार्बुदगंडमालादयो गृह्यंते । तत्र कदाचिन्मधुना कदाचित्पृथक्स्नेहैः कदाचिज्जांबवोष्ठेन। जांबवोष्ठः शलाकाविशेषो यंत्रविधावुक्तो येन क्षारो दीयते कदाचिद्गुडेन कदाचिदेवंप्रायेणान्येनापि देशविशेषप्रसिद्धेन ॥ ३४ ॥

(१) तत्र रोगाधिष्ठानभेदेनाग्निकर्म चतुर्द्धा भिद्यते । तद्यथा-वलयबिंदुरेखाप्रतिसारणानि दहनविशेषाः इति **सुश्रुतः** ।

"व्याधिप्रदेशवशाद्वलयार्द्धचंद्रस्वस्तिकाष्टापदबिंदुरेखाप्रतिसारणविकल्पैः" । इति **वृद्धवा०** ।

प०–अर्शःप्रभृतिषु मधुस्नेहादिभिर्मांसदाहः । स्नेहा घृतादयः । जाम्बवौष्ठं यन्त्रम् । एतैः पृथक् पृथक् दाहकार्यम् ॥ ३४ ॥

हे०–मांसदाहविषयमाह–अर्श इति । आदिशब्दाद- र्बुदगंडगंडमालाश्लीपदांत्रवृद्ध्यवगाढपृथुलसीकव्रणादयः । मांसदाहसाधनान्याह–मधुस्नेहेति । आदिशब्दात् सूची- शलाकामधूच्छिष्टताम्रायोरूप्यकांस्यादयः ॥ ३४ ॥

**श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु । सिरादिदाहस्तैरेव ॥ ३५ ॥**

स०–तैरेव श्लिष्टवर्त्मादिषु सिरादाहः कार्यः। तैरेव मधुस्नेहादिभिः ॥ ३५ ॥

हे०–शिरादिदाहविषयमाह–श्लिष्टवर्त्मनीति । आदिशब्दाच्छिरास्नायुसंध्यस्थिच्छेददंतनाड्युपपक्ष्मकलगं- णादयः । शिरादाहसाधनान्याह–तैरेवेति । तैर्मांस- दाहोक्तैः ॥ ३५ ॥

**न दहेत्क्षारवारितान् । अंतःशल्यासृजो भिन्नकोष्ठान्भूरिव्रणातुरान्॥**

स०–क्षारवारितान्न दहेत् । न केवलं येषु क्षारो वारितस्तान् दहेद्यावदंतःशल्यं तथांतर्लोहितं येषां तान् ॥ ३६ ॥

हे०–अग्निदाहं निषेधति–न दहेदिति । अंतःशल्या अंतरसृजश्च । संग्रहे तु उष्णे च काले आत्ययिके तु धातौ कृतोष्णप्रतीकारस्य पिच्छिलमन्नमाशितवतोऽग्निकर्म कुर्या- दिति । तथा–अथ दाहार्हमातुरं कृतस्वस्त्ययनमुपहृतं सर्वोपकरणं प्राक्शिरःसंविष्टमासावलंबितं कृत्वा वैद्यो निर्धूमबृहत्स्थिरदीप्तखादिरबादराग्रंगारैरयोघटनप्रकारेण भस्त्रानिलाध्मातैर्व्यजनेन चोर्ध्वनिर्गच्छज्जालतया आपादि- तापाद्यमानभासुराग्निवर्णैर्जाम्बवौष्ठादिभिर्व्याधिप्रदेशवशाद्दल- यार्धचंद्रस्वस्तिकाष्टापदबिंदुरेखाप्रतिसारणविकल्पैर्मुहुर्मुहुर्हि- तोपहिताभिर्वाग्भिरद्भिश्चातुरमाश्वासयन् दहेदसम्यग्दाह- लिंगोत्पत्तेः । उच्छूनसुषिरप्रदेशलूनदंतनाडीसुर्कुंतुदुष्टव्रणेषु तु स्नेहमधूच्छिष्टगुडैः पूरयित्वा दहेदिति ॥ ३६ ॥

**सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत्॥३७॥**

स०–सुदग्धमग्निना रोगाधिष्ठानं ज्ञात्वा घृतमधु- भ्यामभ्यक्तं कृत्वा स्निग्धशीतैर्मधुयष्टिशालिमूलादिभिः प्रलेपयेत् ॥ ३७ ॥

हे०–दाहानंतरं कृत्यमाह–सुदग्धमिति ॥ ३७ ॥

**तस्य लिंगं स्थिते रक्ते शब्दवल्लसिकान्वितम् । पक्वतालकपोताभं सुरोहं नातिवेदनम् ॥३८॥**

स०–तस्येत्यनेन सुदग्धं स्थानं परामृश्यते । तस्य सुदग्धस्य स्थानस्य लिंगं लक्षणं स्थिते रक्ते दह्यमानाव- स्थाप्रवृत्तासृजि निवृत्ते सति शब्दवद्बुद्बुदशब्दवत् स्थानं भवेत् । तथा लसिकान्वितम् । लसिका कुशशस्त्रा- दिविक्षते प्रथमं या दृश्यते जललवाकृतिः । तथा पक्व- तालसदृशम् । सुखेन रोहति सुरोहम् । तथा नातिवे- दनं नातितीव्ररुक् ॥ ३८ ॥

हे०–सुदग्धलक्षणमाह-तस्येति । तालं तालफलं, कपोतः पक्षी, संग्रहे तु सशब्दमिति मांसदग्धे कृष्णोन्नतव्रणत्वं स्थिते च रक्ते सलसीका स्रुतिः शिरादग्धे कृष्णारुणकर्कश- स्थिरव्रणतास्नाय्वादिदग्धे इति ॥ ३८ ॥

**प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ३९ ॥**

स०–दुर्दग्धात्यर्थदग्धयोः प्रमाददग्धेन तुल्यं सर्वं लक्षणं बोध्यम् ॥ ३९ ॥

हे०–दुर्दग्धातिदग्धयोर्लक्षणमाह–प्रमाददग्धव- दिति ॥ ३९ ॥

नच लक्षणमंतरेणैतत्सम्यग्ज्ञायत इति तल्लक्षणार्थं भेदांतरदर्शनार्थमाह–

**चतुर्धा तत्तु तुत्थेन सह ॥ ४० ॥**

स०–तत्प्रमाददग्धं चतुष्प्रकारम् । कथम् । तुत्थेन तुत्थदग्धलक्षणेन सह । अविमृश्यदग्धं हि कदा- चित्सम्यग्दग्धलक्षणं कदाचिद्दुर्दग्धलक्षणं कदाचिदति- दग्धलक्षणं कदाचिच्च तुत्थदग्धलक्षणं स्यात् ॥ ४० ॥

प०–भेदान्तरदर्शनार्थमाह–तत्प्रमाददग्धं चतु- ष्प्रकारम् । कथं तुत्थेन तु दग्धलक्षणेन सह । अविमृश्य दग्धं हि कदाचित्सम्यक् दग्धलक्षणं कदाचिद्दुर्दग्धलक्षणं कदाचिच्च तुत्थदग्धलक्षणं स्यात् ॥ ४० ॥

हे०–प्रमाददग्धभेदानाह–चतुर्धेति।तुत्थं दुर्दग्धमति- दग्धं सुदग्धं चेति ॥ ४० ॥

तुत्थस्य लक्षणम् ।

**त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ४१**

स०—तुत्थस्य तुत्थदग्धस्य लक्षणमिति कार्ये कारणमुक्तम् । त्वगित्यादि त्वग्विवर्णा सत्यत्यर्थमुष्यते रुज्यते नच स्फोटानां समुद्भूतिरिति तुत्थदग्धस्थानस्य लक्षणम् । यत्किंचिन्मात्रमेवाग्निना स्पृष्टं तत्तुत्थदग्धमित्युच्यते ४१

प०—तुत्थस्य तुत्थदग्धलक्षणमिति कार्ये कारणोपचारादेवमुक्तम् । त्वग्विवर्णा सत्यत्यर्थमुष्यते रुज्यते नच स्फोटानां समुत्पत्तिरिति । तुत्थदग्धस्थानस्य लक्षणं यत्किञ्चिन्मात्रमेवाग्निना स्पृष्टं तत्तुत्थदग्धमित्युच्यते मुष्टमिति सुश्रुतस्य ॥ ४१ ॥

हे०—चतुर्था तुत्थलक्षणमाह—तुत्थस्येति ॥ ४१ ॥

**सस्फोटदाहतीव्रोषं दुर्दग्धम् ॥ ४२ ॥**

स०—यत्र प्रदेशे स्फोटानामुद्भवो दाहयुक्ता तीव्रा उषा जायते तद्दुर्दग्धं रोगाधिष्ठानं विद्यात् ॥ ४२ ॥

प०—यत्र प्रदेशे स्फोटोद्भवः दाहयुक्ता तीव्रोषा जायते तद्दुर्दग्धं रोगाधिष्ठानं विद्यात् ॥ ४२ ॥

हे०—दुर्दग्धलक्षणमाह—सस्फोटेति । ऊषासर्षपलिप्तस्येव व्यथा ॥ ४२ ॥

अतिदाहतः ।

**मांसलंबनसंकोचदाहधूपनवेदनाः ।**
**सिरादिनाशस्तृण्मूर्छाव्रणगांभीर्यमृत्यवः ४३॥**

स०—अतिदाहाद्रोगाधिष्ठानस्य मांसलंबनादयः स्युः । संकोचः सिरादीनाम् । धूपनं धूमनिर्गमनमिव भवनम् । वेदना रुजा । सिरादीनां नाशो व्यापद् । व्रणगांभीर्यं गंभीरव्रणता । मृत्युर्मरणं च । सम्यग्दग्धलिंगं तूक्तमेव तस्य लिंगं स्थिते रक्त इत्यादिना तस्मात्तत्पुनर्न निर्दिष्टम् ॥ ४३ ॥

प०—अतिदाहाद्रोगाधिष्ठानस्य मांसलम्बनादयः स्युः । सम्यग्दग्धलिङ्गं तूक्तमेव । तस्य लिङ्गं स्थिते रक्त इत्यादिना तस्मात्तत्पुनर्निर्दिष्टम् ॥ ४३ ॥

हे०—अतिदग्धलक्षणमाह—अतिदाहत इति । धूपनं धूमायनं सुदग्धस्य लक्षणमुक्तं प्राक् संग्रहे तु स्नेहदाहस्तु कष्टतरो भवति स हि स्नेहस्य सूक्ष्ममार्गानुसारित्वाद्दूरमनुप्राविशतीति ॥ ४३ ॥

अधुना चतुर्विधस्याऽस्य चिकित्सितमाह—

**तुत्थस्याऽग्निप्रतपनं कार्यमुष्णं च भेषजम् ।**
**स्त्यानेऽस्रे वेदनात्यर्थं विलीने मंदता रुजः ४४॥**

स०—तुत्थदग्धस्याऽग्निना प्रतपनं कार्यम् । तथोष्णं भेषजमौषधम् । रक्तस्य विलयनार्थमेतत् । यतो हि तुत्थदग्धे त्ववश्यं स्त्यानमसृग्भवतीति युक्त्या प्रतिपादयन्नाह—लोहिते स्त्याने सत्यतिशयेन रुग्भवति विलीने रक्ते पीडाया मंदता मंदत्वं भवति । अतो हि तुत्थदग्धेऽग्निप्रतपनं योज्यम् ॥ ४४ ॥

प०—अधुना चतुर्विधस्यास्य चिकित्सितमाह—तुत्थदग्धस्याग्निना प्रतपनं कार्यम् । तथोष्णं भेषजमौषधम् । रक्तस्य विलयनार्थमेतत् । यतो हि तुत्थदग्धेऽवश्यं स्त्यानमसृग्भवतीति युक्त्या प्रतिपादयन्नाह-लोहिते स्त्याने सत्यतिशयेन रुग्भवति। विलीने रक्ते पीडाया मन्दत्वं भवति । अतो हि तुत्थदग्धेऽग्निप्रतपनं योज्यम् ॥ ४४ ॥

हे०—तुत्थस्यौषधमाह—तुत्थस्येति । संग्रहे तु—" स्त्याने रक्ते हिमैर्नोष्मा निष्क्रामति यतो बहिः । वेदना वर्द्धते तेन रुधिरं च विदह्यते ॥ उष्णं निष्क्रामयन्कुर्याद् ष्माणं मंदतां रुजः " इति ॥ ४४ ॥

**दुर्दग्धे शीतमुष्णं च युंज्यादादौ ततो हिमम् ४५**

स०—शीतमुष्णं च पर्यायेणौषधं तत्रादौ प्रथ भेषजं युंज्यात् ॥ ४५ ॥

प०—दुर्दग्धे शीतमुष्णं पर्यायेणौषधम् । तत्रा प्रथमं हिमं भेषजं युञ्ज्यात् ॥ ४५ ॥

हे०—दुर्दग्धस्यौषधमाह—दुर्दग्ध इति ॥ ४५ ॥

**सम्यग्दग्धे तुगाक्षीरिप्लक्षचंदनगैरिकैः ।**
**लिंपेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ४६**

स०—सम्यग्दग्धे तवक्षीर्यादिभिर्लेपयेत् । किंभूतैः साज्यामृतैर्घृतगुडूचीयुक्तैः । आदावित्यत्राऽपि योज्यम् आदौ तैर्लेपयेदूर्ध्वमनंतरं पित्तविद्रधिवत् क्रिया कार्य शेषः ॥ ४६ ॥

प०—सम्यग्दग्धे तवक्षीर्यादिभिर्लेपयेत् किंभूतैः । साज्यामृतैः घृतगुडूचीयुक्तैः । आदौ

त्यत्रापि योज्यम् । आदावेवैतैर्लेपयेत् ऊर्ध्वमनन्तरं पित्तविद्रधिवत् क्रिया कार्येति शेषः ॥४६॥

हे०—सम्यग्दग्धौषधमाह—सम्यग्दग्ध इति ॥ ४६ ॥

**अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत् ॥४७॥**

स०—अतिदग्धे द्रुतं शीघ्रमेव सर्वं बहिरंतश्च भेषजं पित्तविसर्प इव कुर्यात् ॥ ४७ ॥

प०—अतिदग्धे द्रुतं शीघ्रमेव सर्वं बहिरन्तश्च भेषजं पित्तविसर्प इव कुर्यात् ॥ ४७ ॥

हे०—अतिदग्धस्यौषधमाह—अतिदग्ध इति । द्रुतं शीघ्रम् ॥ ४७ ॥

**स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥४८॥**

स०—स्नेहदग्धेऽतितरां रूक्षं योजयेत् । भृशतरं रूक्षं चाऽत्र भेषजं तत्र तु योजयेत् । तुशब्दान्न केवलं भृशतरग्रहणाच्च बाहुल्येन रूक्षं प्रलेपादि तत्र योजयेत् किंतु देहदेशादिसात्म्यवशात्स्निग्धमपि यथावस्थं यथावद्योजयेत् ॥ ४८ ॥

प०—स्नेहदग्धेऽतितरां रूक्षं योजयेत् भृशतरग्रहणाच्च बाहुल्येन रूक्षम् । देहदेशादिसात्म्यवशात् स्निग्धमपि यथावस्थं यथावद्योजयेत् ॥४८॥

हे०—स्नेहदग्धस्यौषधमाह—स्नेहदग्ध इति । भृशतरमत्यर्थं तु शब्दान्न केवलं भृशतरं रूक्षं प्रलेपादिपूर्वोक्तमपि यथावस्थं योजयेत् ॥ ४८ ॥

**समाप्यते स्थानमिदं हृदयस्य रहस्यवत् ॥४९॥**

स०—वक्तव्यं यद्वस्तु तस्य सर्वस्यैवोक्तत्वादिदं स्थानं समाप्यते निष्पाद्यते । किंभूतं स्थानम् । रहस्यवत् रहस्यमत्यर्थं गुह्यरूपं तदस्याऽस्ति तद्रहस्यवत् । कस्य स्थानम् । हृदयस्य । हृदयमिव हृदयम् । हृदयशब्देनाष्टांगहृदयमुपलक्ष्यते यथा सत्यभामा भामेति ४९

प०—वक्तव्यं यद्वस्तु तस्य सर्वस्योक्तत्वादिदं स्थानं समाप्यते निष्पाद्यते । किंभूतं स्थानम् । रहस्यवत् । रहस्यमत्यर्थं गुह्यरूपं तदस्यास्तीति तद्रहस्यवत् । कस्य स्थानं हृदयस्य । हृदयशब्देनाष्टाङ्गहृदयमुपलक्ष्यते । यथा सत्यभामा भामेति ॥ ४९ ॥

हे०—सूत्रस्थानमुपसंहरति—समाप्यत इति ॥ ४९ ॥

कुत एतत्स्थानं रहस्यवदित्याह—

**अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यंते हि सर्वतः ५०**

**इति वैद्यपतिसिंहगुप्तसूनुवाग्भटविरचितायामष्टांगहृदयसंहितायां प्रथमं सूत्रस्थानं संपूर्णम् ।**

स०—यस्मादत्र स्थानेऽर्थाः सूत्रिताः सूचिताः सूचनमात्रेणोक्ताः । किंभूताः । सूक्ष्मास्तीक्ष्णतरमतिगम्याधिगम्याः यतस्ते एवार्थाः सर्वस्मिस्तंत्रे प्रतन्यंते विस्तार्यंते । अस्मादिदं स्थानं तंत्रसंबंधिनामन्यस्थानानां रहस्यवदित्युक्तमिति ॥ ५० ॥

इति श्रीमृगांकदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांगहृदयटीकायां सर्वांगसुंदराख्यायां क्षाराग्निकर्मविधिस्त्रिंशत्तमोऽध्यायः ॥ ३० ॥

प०—कुत एतत्स्थानं रहस्यवदित्याह—अत्रेति । यस्मादत्र स्थानेऽर्थाः सूत्रिताः सूचिताः । किंभूताः सूक्ष्मास्तीक्ष्णतरमतिसमधिगम्याः । यतः अस्मिंस्तन्त्रे प्रतन्यन्ते विस्तार्यन्ते तस्मादिदं स्थानं तत्र सम्बन्धिनामन्यस्थानानां रहस्यवदित्युक्तं भवति ॥ ५० ॥

इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकायामष्टाङ्गहृदयटीकायां सूत्रस्थाने त्रिंशोऽध्यायः ॥ ३० ॥

हे०—कस्मादेतद्रहस्यवदित्यत आह—अत्रार्था इति ५०

इति हेमाद्रिटीकायामायुर्वेदरसायने क्षाराग्निप्रकरणं तु सामस्त्येन निरूपितम् ॥ ३० ॥

## समाप्तमिदं सूत्रस्थानम् ।